# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

THE ASIATIC SOCIETY OF BENGAL.

New Series, No. [illegible]



# मीमांसादर्शनम् ॥

श्रीशबरस्वामिकृतभाष्यसहितम् ॥

# THE MÍMÁṀSÁ DARŚANA,

WITH THE COMMENTARY OF ŚAVARA SWÁMIN.

EDITED BY

PAṆḌITA MAHEŚACHANDRA NYÁYARATNA.

Fasciculus X.



CALCUTTA:

PRINTED BY BISHOP'S COLLEGE PRESS.

1870.

BIBLIOTHECA INDICA;

# A COLLECTION OF ORIENTAL WORKS,

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

**ASIATIC SOCIETY OF BENGAL.**

## SANSKRIT WORKS COMPLETE.

*Old Series, Nos* 1 *to* 221, *demi* 8vo.

| | Rs. | As. |
|---|---|---|
| The first two Lectures of the Sanhitá of the Rig Veda. Edited by Dr. E. Röer, Nos. 1 to 4. .. .. .. .. | 2 | 8 |
| Uttara Naishadha Charita, by Śrí Harsha, with Commentary. Edited by Dr. E. Röer. Complete in 12 Fasciculi. Nos. 39, 40, 42, 45, 46, 52, 67, 72, 87, 90, 120, and 124, .. .. | 7 | 8 |
| Chaitanya Chandrodaya Nátaka, by Kavikarnapura Edited by Bábu Rájendralála Mitra. Complete in 3 Fasciculi, Nos. 47, 48 and 80, | 1 | 14 |
| Vásavadattá, by Subandhu, with its commentary entitled Darpana. Edited by Professor F. E. Hall, M.A. Complete in 3 Fasciculi, Nos. 116, 130 and 148, .. .. .. .. | 1 | 14 |
| The Márkandeya Purána. Edited by the Rev. K. M. Banerjea. Complete in 7 Fasciculi, Nos. 114, 127, 140, 163, 169, 177 and 183, .. | 4 | 6 |
| Vedánta Sutras or Aphorisms of the Vedánta, with the commentary of Sánkara and the Gloss of Ánanda Giri. Edited by Pandit Rámanarayana Vidyáratna. 2 to 13 Fasciculi, Nos. 89, 173, 174, 178, 184, 186, 194, 195, 198, 199, 200 and 201, .. .. | 7 | 8 |
| The Elements of Polity, by Kámandaki. Edited by Rajendralála Mitra. Complete in 3 Fasciculi, Nos. 19, 179 and 206, .. .. .. | 1 | 14 |

*New Series, Nos*, 1 *to* 173, *demi* 8vo.

| | Rs. | As. |
|---|---|---|
| The Śrauta Śutra of Ásvaláyana, with the Commentary of Gárgya Náráyana. Edited by Pandita Rámanáráyna Vidyáratna. Complete in 10 Fassiculi, Nos. 55, 61, 66, 69, 71, 80, 84, 86, 90 and 93, | 6 | 4 |
| The Śankara Vijaya of Anantánanda Giri. Edited by Pandit Jayanáráyana Tarkapanchánana, in 3 Fasciculi, Nos, 46, 137 and 138, | 1 | 14 |
| Vaiśeshika Darśana, with the Commentaries of Śankara Misra, &c. Edited by Pandita Jayanáráyana Tarkapanchánána. Completed in 5 Fasciculi, Nos. 4, 5, 6, 8 and 10, .. .. .. .. .. | 3 | 2 |
| The Nyáya Darśana of Gotama, with the Commentary of Vátsyáyana Edited by Pandita Jayanáráyana Tarkapanchánana. Complete in 3 Fasciculi, Nos, 56, 67 and 70 .. .. .. .. .. | 1 | 14 |
| The Daśa-Rúpa, with Dhanika's Commentary. Edited by Professor F. E. Hall, D .C. L. Complete in 3 Fasciculi, Nos. 21, 24 and 82, | 1 | 14 |
| The Aphorisms of Sándilya, with the Commentary of Svapneśvara. Edited by J. R. Ballantyne, LL. D. Complete in one Fasciculus No. 11, .. .. .. .. | 0 | 10 |
| The Nárada Pancharátra. Edited by the Rev. K. M. Banerjea. Complete in 4 Fasciculi, Nos 17. 95, 34 and 75, .. .. | 2 | 8 |
| The Kaushitaki-Bráhmana-Upanishad with commentary, and a translation by E. B. Cowell, M. A. Complete in 2 Fasciculi Nos. 19 and 20, .. .. .. .. .. .. | 1 | 4 |
| The Kávyádarśá of Śrí Dandin. Edited with a Commentary by Pandita Premachandra Tarkabágísá. Complete in 5 Fasciculi, Nos. 30, 33, 38, 39 and 41, .. .. .. .. .. | 3 | 2 |
| The Maitri Upanishad with Commentary. Edited by E. B. Cowell, M. A, Published 3 Fasciculi, Nos. 35 and 40, .. .. | 1 | 4 |
| The Sánkhya Sára of Vijnána Bhikson. Edited by Dr. F. E. Hall, 1 Fasciculus, No. 83,.. .. .. .. .. | 0 | 10 |
| The Brihat Sanhitá of Varáha-Mihira. Edited by Dr. H. Kern. Complete in 7 Fasciculi, Nos. 51, 54, 59, 63, 68, 72 and 73, .. | 4 | 6 |

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY

THE ASIATIC SOCIETY OF BENGAL.

NEW SERIES, NOS. 44, 85, 95, 101, 115, 142, 154, 174, 208, 209, 240, 315, 368, 388, 435, 470, 510, 541, AND 605.

---

# THE MÍMÁNSÁ DARS'ANA.

ONE OF THE SIX SYSTEMS OF HINDU PHILOSOPHY, OR AN EXPOSITION OF THE CEREMONIAL RITES OF THE VEDAS BY JAIMINI WITH THE COMMENTARY S'AVARA SVÁMÍN.




EDITED BY

MAHÁMAHOPÁDHYÁYA
MAHES'ACHANDRA NYÁYARATNA, C. I. E.

MEMBER OF THE ASIATIC SOCIETY OF BENGAL, FOREIGN MEMBER OF THE HUNGARIAN ACADEMY OF SCIENCE, &C. &C.

CALCUTTA:

PRINTED BY G. H. ROUSE, BAPTIST MISSION PRESS.

1889.

# मीमांसा-दर्शनस्य उत्तरषट्के

## सप्तमस्य अध्यायस्य प्रथमः पादः॥

अथ प्रयाजादि—धर्म्माणामपूर्व्वप्रयुक्तताधिकरणम्॥

सू· श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात्॥१॥ (सि०)॥

भा· पूर्व्वेण अध्यायषट्केन प्रत्यक्षविहितधर्मणां कर्मणां दर्श-पूर्णमासादीनाम् इतिकर्त्तव्यता चिन्तिता, उत्तरेण इदानीम् अविहितेतिकर्त्तव्यताकेषु ऐन्द्राग्नादिषु चिन्तयितुमिष्यते। तत्र यदि दर्शपूर्णमासादीनां प्रकरणे ये विहिता धर्माः, ते सर्व्वकर्मसु विहिता भवन्ति, ततस्तैरेव धर्मैरैन्द्राग्नादयोऽपि धर्मवन्त उक्ताः, तथा कर्त्तव्याश्च—इति, न अर्थं उत्तरेण षट्केन। अथ ये यस्य प्रकरणे उच्यन्ते, ते तस्यैव उक्ताः भवन्ति, ततोऽधर्मकाणि ऐन्द्राग्नादीनि। तेषु चिन्ता भवति,—किम् एषां धर्माः सन्ति, उत न?—इति; यदा च सन्ति; तदा के? कियन्तो वा? कथं च अनुष्ठातव्याः?—इति, तदर्थम् उत्तरः षट्कः प्रवर्त्तनीयः।

तत्र सप्तमेन तावत् सन्ति धर्माः—इत्युच्यते। अष्टमेन च इमे अस्य—इति। इत्थं प्रयोक्तव्याः—इति नवमेन। दशमैका-दशद्वादशैरेतावन्तः प्रयोक्तव्याः, न अतोऽधिकाः—इति।

तत्र इदं विचार्यते, किं यजिप्रयुक्ता एते धर्माः, कथं यजि-र्गुणवान्—स्यात्?—इत्येवमर्थमाम्नायन्ते, आहोस्वित् अपूर्व्व-प्रयुक्ताः?—कथम् अपूर्व्वं स्यात्?—इति। यदि यजिप्रयुक्ताः,

भा. ततः सर्वार्थाः; अथ अपूर्वप्रयुक्ताः, ततो यथाप्रकरणं व्यवतिष्ठन्ते। किं पुनरत्र युक्तम्?—अपूर्वप्रयुक्ताः—इति, अपूर्वं हि फलवत्, अफलो यजिः, फलवति च प्रयासो विधीयमानोऽर्थवान् भवति। तस्मात् अपूर्वप्रयुक्ता धर्माः अतः परमाचार्यस्य सूत्रोपन्यासः,—"श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात्"—इति, मुख्यानि अपूर्वाणि, तानि हि फलवत्त्वात् प्रधानानि, प्रधाने च मुख्यशब्दः; तेषां भेद उक्तः शब्दान्तरादिभिर्हेतुभिः। तस्मिन् 'मुख्यभेदे' सति 'यथाधिकारं भावः स्यात्'—'शेषाणां', ये यस्य अपूर्वस्य अधिकारे (प्रकरणे) शिष्यन्ते, ते तस्यैव भवेयुः, 'श्रुतिप्रमाणत्वात्', अयमस्य अपूर्वस्य शेषः, अयम् अस्य—इत्यत्र श्रुतिरेव प्रमाणं क्रमते; न प्रत्यक्षादीनामन्यतमत्; श्रुत्या च ये यस्य प्रकरणे श्रूयन्ते, ते तस्यैव भवितुमर्हन्ति, न चान्यस्योक्तोऽर्थोऽन्यस्य भवति, न हि यद्देवदत्तस्य ग्रामाच्छादनादिकं, तद्यज्ञदत्तस्य भवति; तस्मात् यथाप्रकरणं व्यवस्था धर्माणाम्॥

सू. उत्पत्त्यर्थाविभागाद्वा सत्ववदैकधर्म्यं स्यात्॥ २॥ (पू॰)॥

भा. अथ 'वा', न एतत् एवं,—यथाप्रकरणं धर्माणां व्यवस्था—इति; कथं तर्हि?—'ऐकधर्म्यं स्यात्'—इति, समानधर्मता,—सर्वे धर्माः सर्वार्थाः। कुतः?। 'उत्पत्त्यर्थाविभागात्', 'उत्पत्तिः'—इति यजिं ब्रूमः, अपूर्वस्य उत्पादनात्, 'अर्थः'—इति अपूर्वं ब्रूमः, यजिप्रयोजनत्वात्, तयोः अविभागः; सर्वाणि अपूर्वाणि यजिमन्ति, यजिसंयोगेन धर्माः शिष्यन्ते,—'यजेत'—इत्युक्ता उक्ताः, ते यजौ* न सम्भवन्ति, तस्य अफलत्वात्,

---

* यदि यजौ इति क॰ सं॰ द्वितीय पुस्तके समीचीनः पाठः॥

भा. तत्र असम्भवन्तः तत्सम्बद्धेषु अपूर्व्वेषु विज्ञायन्ते; स च यजि-सम्बन्धः सर्वेषाम् अपूर्व्वाणां तुल्यः। तस्मात् सर्वार्था भवन्ति, 'सत्वधर्मवत्',—यथा सत्वधर्माः, 'गौर्न पदा स्प्रष्टव्यः'—इति गोत्वसम्बन्धेन श्रूयमाणाः तत्र असम्भवन्तः तत्सम्बद्धेषु पिण्डेषु विज्ञायन्ते, तस्य च गोत्वसम्बन्धस्य अविशेषात् सर्वगवीषु शुक्ल-नील-कपिल-कपोतिकासु भवन्ति; एवम् इहापि।

'उच्यते,—विषम उपन्यासः, तत्र गोसामान्यसम्बन्धेन धर्मा विधीयन्ते,—'गौर्न पदा स्प्रष्टव्यः'—इति, इह पुनर्यजिविशेष-सम्बन्धेन धर्मा विधीयन्ते,—'दर्शपूर्णमासाभ्यां यजेत'—इति, 'ज्योतिष्टोमेन यजेत'—इति, विशिष्टयजिसम्बद्ध एव अपूर्व्वं भवितुमर्हन्ति न सर्वत्र'—इति। तत्र ब्रूमः,—'दर्शपूर्णमासाभ्यां यजेत'—इत्यत्र न शक्यन्ते यागविशेषे धर्मा विधातुम्। किं-कारणम्?। यदा यजौ धर्मा विधीयन्ते, तदा यजिरनूद्यते,—यजेत इत्थम्—इति, यदि यजिर्विधीयेत, न धर्मैः सम्बध्येत, न हि द्वयोर्विधीयमानयोः परस्परेण सम्बन्धो भवति, अनुवादश्च सन् अविशेषात् सर्वयागानुवादः। तस्मात् सर्वार्था धर्माः।

'ननु दर्शपूर्णमासशब्दो विशेषको भविष्यति'। न दर्शपूर्ण-मासशब्दः शक्नोति यागं विशेष्टुम्; अयं हि विधिर्वा स्यात् अनुवादो वा, यदा अनुवादः, तदा धर्मसम्बन्धार्थः, स च धर्मसम्बन्धो यागानुवादेनैव तयोः सिद्धः।

'ननु निवृत्तिकरो भविष्यति,—दर्शपूर्णमासौ एव इत्थं कुर्यात् न अन्यान्—इति'। नैवं शक्यं, यत्कारणं, न तस्य अन्यनिवृत्तिः अर्थः। 'ननु परिसङ्ख्यया करिष्यति'। न अत्र परिसङ्ख्या युज्यते, यदि अन्येन वाक्येन यागमात्रे धर्मप्रसङ्गः कृतः स्यात्, तत एतत् पुनर्वचनं परिसङ्ख्यां कुर्यात्, अथ पुनः असति प्रसङ्गे अनेनैव प्रसक्तो अनेनैव निवृत्तिः—इत्यतिभारः एकस्यैव वाक्यस्य भवति।

भा. 'एवं तर्हि, न अत्र यजेत—इति शब्दो धर्मविधिभिः सम्बध्यते,—यजेत इत्थमिति, केन तर्हि?—दर्शपूर्णमासशब्देन, प्रत्यक्षो हि तेन अस्य संयोगः,—'दर्शपूर्णमासाभ्यां यजेत'—इति, परक्षो धर्मविधिभिः। 'कः तदा वाक्यार्थः?'। दर्शपूर्णमासौ कुर्यात्—इति'। नैवं शक्यम्, एवं सति धर्मा असम्बद्धाः पारिप्लवा भवन्ति। कथं कृत्वा?। येयमाख्यातिकी विभक्तिः 'यजेत'—इति, सा दर्शपूर्णमासयोः कर्त्तव्यतां विदधाति, तत्र कथं यागमात्रेण यागविशेषेण वा धर्मसम्बन्धः स्यात्, विधायिका विभक्तिर्नास्ति—इत्यसम्बद्धा धर्मा भवन्ति।

'नैष दोषः, न वयं वाक्येन धर्माणां सम्बन्धं करिष्यामः, केन तर्हि?—प्रकरणेन। कथम्?। कर्त्तव्यतायां चोदितायाम् इतिकर्त्तव्यताकाङ्क्षा भवति,—कथं कुर्यात्?—इति'। प्रकरणेन धर्माः सम्बध्यन्ते—इत्थं कुर्यात्'—इति, नैवं शक्यं, यदा हि दर्शपूर्णमासौ कर्तव्यतया चोद्यते, तदा इतिकर्त्तव्यताकाङ्क्षा एव नास्ति, प्रज्ञातेतिकर्त्तव्यतत्वात् तयोः, असत्याञ्च इतिकर्त्तव्यताकाङ्क्षायां प्रकरणमेव नास्ति, एवं हि उक्तम्,—असंयुक्तं प्रकरणात् इतिकर्त्तव्यतार्थित्वात्—इति।

'एवं तर्हि, नैव अत्र यागे धर्म्मा विधीयन्ते, नापि दर्शपूर्णमासयोः कर्त्तव्यता उच्यते, किन्तर्हि?—'दर्शपूर्णमासाभ्यां यजेत'—इति पदद्वयेन विशिष्टं यागमनूद्यात्र धर्मा विधीयन्ते, दर्शपूर्णमासाभ्यां यजेत इत्थम्—इति'। एवमपि दर्शपूर्णमासाभ्याम्—इत्यनुवादो न युज्यते, तृतीयार्थस्य अप्रसिद्धत्वात्, पूर्ववान् अनुवादो भवति, अपूर्वश्च तृतीयार्थः, स अवश्यं विधातव्यः, तस्मिंश्च विधीयमानेऽन्यदेवासम्बद्धमापद्यते,—दर्शपूर्णमासौ यजेः करणम्—इति। तस्मात् स एव प्रथमः पक्षोऽस्तु,—यागानुवादेन धर्माणां विधिः—इति।

'ननु तत्रापि 'दर्शपूर्णमासाभ्याम्'—इत्येतन्न सम्बध्यते'।

भा. ननु सम्भंत्स्यते, कालवचनः सन् प्राथिको नित्यानुवादो भविष्यति, प्रायेण यागानां दर्शपूर्णमासकालत्वात्; तृतीया च कालस्य अर्थकृतं गुणभावमाचोचय उपपद्यते, तथा चेत् सर्वे धर्माः सर्वार्थाः भवन्ति ॥

सू. चोदनाशेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन्* उत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥ (उ०) ॥

भा. कर्मचोदनायाः शेषभूतो धर्मसमाम्नायः— (एकदेशभूतः— इत्यर्थः), दर्शपूर्णमासाभ्यां यजेत, अनया अग्न्याधानादिकया इतिकर्त्तव्यतया—इति। तस्यां चोदनायां यजेर्गुणभावः श्रूयते, दर्शपूर्णमासशब्दो यजिवचनः, करणभावोऽत्र यजेः श्रूयते,— दर्शपूर्णमासाख्येन यागसमुदायेन अन्यत् कुर्यात्—इति, यत् तत अन्यत्, तत् कर्त्तव्यतया चोद्यते, न यजिः, अपूर्वं च तत्। 'ननु फलम् अत्र वाक्ये श्रूयते,—'स्वर्गकामो यजेत'—इति, तत् कर्त्तव्यं स्यात्'। सत्यं श्रूयते, न तु तत् यजिना क्रियते, विनष्टे यज्ञे तद्भवति, अपूर्वं तु तेन क्रियते; तस्मात् तस्य कर्त्तव्यता उच्यते, यस्य कर्त्तव्यता, तत् इतिकर्त्तव्यतया सम्बध्यते। तस्मात् अपूर्वार्था धर्माः, तेषां च अपूर्वाणां भेदः; अतः 'तद्भेदात्' यथाप्रकरणं व्यवतिष्ठन्ते धर्माः—इति।

'अथैतस्मिन् पक्षे कथं दर्शपूर्णमासशब्देन यागो विशेष्यते?'। उच्यते, नैव अत्र यागो विशेष्यते, किन्तर्हि?—अपूर्वभावनैव उभयपदविशिष्टा उच्यते, यथा 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति'—इति। 'विषम उपन्यासः, तत्र हि अन्यत् द्रव्यम्, अन्यो गुणः, तेन तत्र उभयविशेषणत्वं युज्यते, इह पुनर्यागः एव तौ दर्शपूर्णमासौ, तेन इह उभयविशेषणत्वं

---

* तद्भेदाद्व्यवतिष्ठेरन् इति कं० सं० द्वितीय-पुस्तक-पाठः।

भा. न युज्यते'। उच्यते,—इहापि 'यजेत'—इति सामान्यं, दर्श-पूर्णमासौ—इति विशेषः, अन्यच्च सामान्यमन्यो विशेषः।

'एवमपि श्रुत्या सामान्येन भावना, वाक्यात् विशेषेण,* न चैतत् युगपद्भवति'†—इति। एवं तर्हि, नैव अत्र श्रुत्यर्थः परिगृह्यते, किन्तर्हि?—वाक्यार्थः। किंकारणम्?। श्रुत्यर्थे परिगृह्यमाणे दर्शपूर्णमासशब्दोऽनर्थको भवति, यजतिश्च अनुवादः, यजत्यात्मकत्वात् दर्शपूर्णमासयोः, यजतिसामानाधिकरण्याच्च दर्शपूर्णमासशब्दस्य॥

सू. सत्त्वे लक्षणसंयोगात्सार्व्वत्रिकं प्रतीयेत॥ ४॥ (आ० नि०)॥

भा. यत्तु 'सत्त्ववत्'—इति, अत्र गवाकृतौ धर्मः श्रूयते, आकृतेः पदार्थत्वात्, न च तत्र सम्भवति, अतोऽसौ आकृति : उद्दिश्य? पिण्ड-लक्षणार्था विज्ञायते, यथा गङ्गायां गावः—इति। तत्र सामर्थ्यं, सर्वपिण्डानामविशिष्टम्—इति, सर्वपिण्डेषु विहितं भवति। तस्मात् तत् 'सार्वत्रिकं प्रतीयेत',—इह तु यजेर्गुण-भावेन श्रवणात् नैव यजौ धर्माः श्रूयन्ते, किं तर्हि?—अपूर्वः—इत्येवम् अपदिष्टो हेतुः। तस्मात् अनुपन्यासः 'सत्त्ववत्'—इति॥

सू. अविभागात्तु नैवं स्यात्॥ ५॥ (आ०)॥

भा. अथ तुशब्दः पक्षव्यावृत्तौ‡। नैतदेवम्,—अपूर्वप्रयुक्ता धर्माः

---

* श्रुत्या सामान्यस्य भावना, वाक्याद्विशेषस्य इति का० श्री० पु० पाठः।

† अत्र "अयुक्तोऽयं ग्रन्थः, उपश्लेषलक्षणया श्रुत्या धातुना सम्बन्धः, तृतीयया तादर्थ्येन दर्शपूर्णमासयोः" इत्यादिना, "यतो भावयेद्यागेन करणेन दर्शपूर्णमाससंज्ञकेनेति दर्शपूर्णमासाभ्यामिति फलेनोपसंहृतं भाष्यकारेण" इत्यन्तेन ग्रन्थसन्दर्भेण वार्त्तिक-कारोऽन्यथा व्यर्थम् चकार।

‡ अयञ्च पाठः का० श्री० एवं वा० सो० पुस्तके नास्ति।

भा.—इति, यजिप्रयुक्ता एव। कुतः?। 'अविभागात्', यजिना अविभागो धर्माणां, प्रत्यक्षं केचित् द्रव्ये श्रूयन्ते, केचित् देवतायां, केचिन्मन्त्रेषु, एष च यजिः, यत्, द्रव्यं देवताम् उद्दिश्य* मन्त्रेण त्यज्यते, स एव प्रत्यक्षो यजिना सम्बन्धो धर्माणाम्, अपूर्व्वेण त्वानुमानिकः; फलेऽपि यजेः प्रत्यक्षश्रुतो गुणभावः, 'स्वर्गकामो यजेत'—इति, आनुमानिकोऽपूर्व्वेण, अनुमानाच्च प्रत्यक्षं बलीयः; तस्मात् यज्यर्थाः धर्माः। 'ननु यजिर्भङ्गित्वात् कालान्तरे फलं दातुम् असमर्थः, तत्र कृता धर्मा असमर्था एव भवति—इत्युक्तम्'। अत्र स्थितस्य न्यायस्य आक्षेपेण प्रत्यवस्थानं क्रियते, तैलपानवत् एतद्भविष्यति, यथा तैलपानं घृतपानं वा भङ्गित्वेऽपि सति कालान्तरे मेधास्मृतिबलपुष्ट्यादीनि फलानि करोति, एवं यजिरपि करिष्यति, किम् नः अदृष्टाश्रुतेन अपूर्व्वेण कल्पितेन—इति ॥

सू. द्व्यर्थत्वं च विप्रतिषिद्धम् ॥ ६ ॥ (यु॰) ॥

भा. एवं च सति सर्वे धर्माः सर्वार्था भवन्ति, तथा च ऐन्द्राग्नादिषु प्रयाजादयः सन्ति, तत्र सौर्य्ये कर्मणि प्रयाजानां दर्शनम् उपपद्यते, 'प्रयाजे प्रयाजे कृष्णलं जुहोति'—इति; इतरथा प्रयाजाश्च विधातव्याः, प्रयाजेषु च कृष्णलहोमः, तथा च द्व्यर्थं तत् स्यात्, 'द्व्यर्थत्वं च विप्रतिषिद्धम्'। तस्मात् यजिप्रयुक्ता धर्माः—इति ॥

सू. उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात्ततश्च कर्म्मभेदः स्यात् ॥ ७ ॥ (आ॰ नि॰) ॥

भा. नैतदेवं, यजिप्रयुक्ता धर्माः—इति, 'चोदनायां प्रवृत्तिः

---

* 'उपदिश्य' इति पा॰ सो॰ पु॰ पाठः।

भा. स्यात्', चोदनेत्यपूर्वं ब्रूमः,—चोदनार्थत्वात् (अपूर्व्वार्थत्वात्) अपूर्वप्रयुक्ता धर्माः, 'फलवत्त्वात्'—इत्युक्तो हेतुः। यत्तु, प्रत्यक्षो यजिसम्बन्धो धर्माणाम्—इति, अत्र ब्रूमः,—'उत्पत्तौ विध्यभावात्', उत्पत्तिः—इति यजिं ब्रूमः; 'उत्पत्तौ' यजौ नास्ति विधिः, यज्ञ्यर्था धर्माः—इति, केवलं यजौ श्रूयन्ते, क्रियन्ते च, नैतावता तदर्था भवन्ति; यथा, वाससि रागः श्रूयते,—'वासो रञ्जयति'—इति, वाससि च क्रियते, न चासौ तदर्थः, स्वार्थः पुरुषार्थो वा भवति; एवम् इहापि, यजौ श्रूयमाणाः क्रियमाणाश्च अपूर्व्वार्था भवेयुः, अर्थवत्त्वाय। 'ततश्च कर्मभेदः स्यात्', यतोऽपूर्व्वार्थाः—इति। यत्तु, यजेः प्रत्यक्षं, फले गुणभावः—इति; न ह्यत्वा अपूर्व्वं, भवति—इति, प्राणालिको विज्ञायते, प्रणाड्यापि च येन क्रियते, तत् कारणं भवति, यथा, गोमयैः पचति, तुषपक्वा भवन्ति—इति। यत्तु, तैलपानवत् यजितः फलं भवति—इति। अत्र ब्रूमः,—तैलपानस्यापि न कालान्तरे फलं भवति, धातुसाम्यं तस्य फलं, तच्च तत्कालमेव, यच्च फलं बलपुष्ट्यादि, तत् सम्यगाहारपरिणामाद्भवति। तस्मात् विषमः उपन्यासः॥

सू. यदि वाप्यभिधानवत्सामान्यात्सर्व्वधर्म्मः स्यात्॥ ॥ ८ ॥ (आ०)॥

भा. 'यदि' अपि अपूर्व्वं प्रयोजकं धर्माणां, तथापि 'सर्वधर्मः स्यात्' स स पदार्थः, 'अभिधानवत् सामान्यात्', 'अभिधानं तावदेतेषां समानम्, अपूर्वम्—इत्यभिधानवत् धर्मेणापि अस्य समानेन भवितव्यं, वाह्लीकवत्; यथा, वाह्लीकोऽतिथिरागतः, यवाग्रमस्मै प्रक्रियताम्—इत्युक्ते, यो यो वाह्लीकस्तस्य तस्य यवाग्रं क्रियते। यथा वा, 'अक्ष्यामये मुद्गौदनो भोक्तव्यः, उदरामये पयः*

* चविपयः पातव्यमिति कं० सं० द्वितीय-पुस्तके एवं का० सं० पुस्तके च पाठः।

भा. पातव्यम्—इति, सर्वत्र च हि अन्यामये मुद्गौदनो भुज्यते, उदरामयेऽपि पयः* पीयते; एवम् इहापि एकस्य अपूर्व्वस्य ये धर्माः श्रुतास्ते सर्व्वापूर्व्वाणां भवितुमर्हन्ति। अपि च, अचल-पराशरा नाम ब्राह्मणः, तेषां परिचरेषु स्मृतिरूपं ब्राह्मणं भवति,—'ये दर्शपूर्णमासयोर्धर्माः, ते सर्व्वेष्टीनामग्नीषोमीयस्य च'—इत्यारभ्य, 'यावत्सर्व्वाः प्रकृतिविकृतयोऽनुक्रान्ताः'—इति; तच्च अनुक्रमणमेतमेव न्यायं सूचयति। तस्मात् अपूर्व्वप्रयुक्तत्वेऽपि सर्व्वे धर्माः सर्व्वार्थाः—इति॥

सू. अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु पूर्व्ववत्त्वात्प्रयोगस्य कर्म्मणः शब्दभाव्यत्वाद्विभागाच्छेषाणामप्रवृत्तिः स्यात्॥ ९॥ (आ॰ नि॰)॥

भा. उपवर्णनापरिहारस्तावत् उच्यते। यदुक्तं, वाह्लीकवत्—इति, अत्र ब्रूमः,—'अर्थस्य त्वविभक्तत्वात्, तथा स्यात् अभिधानेषु', अर्थो वाह्लीकत्वं, तद्देशसम्बन्धः, सोऽविभक्तः, सर्व्ववाह्लीकेषु अनुगतः—इत्यर्थः; तन्निमित्तश्च प्रीतिविशेषो न पुरुषनिमित्तः। कथं ज्ञायते?। 'पूर्व्ववत्त्वात् प्रयोगस्य', पूर्व्ववान् अत्र प्रयोगः, बहुशो वाह्लीकाश्च अवाह्लीकाश्च भोजिताः, तत्र अन्वयव्यतिरेकाभ्यां ज्ञातमेतत्,—देशनिमित्तेयं यवाग्रप्रियता, न पुरुषनिमित्ता। तस्मात् 'तथा स्यात्' वाह्लीकादिषु 'अभिधानेषु'; अथ इह 'कर्म्मणः' शब्दभाव्यत्वं, न अन्यतः शक्यमेतत् ज्ञातुम्,—कस्य अपूर्व्वस्य धर्माः?—इति, शब्देन च व्यवस्थिता विज्ञाता धर्माः, अपूर्व्वाणां च विभागः, अतः 'शेषाणाम्' अन्यत्र विहितानाम् अन्यत्र 'अप्रवृत्तिः स्यात्'॥

---

* विष्वपय इति का॰ सं॰ पु॰ पाठः। लविपय इति तु कं॰ सं॰ पु॰ पाठः।

सू. स्मृतिरिति चेत् ॥ १० ॥ (आ०) ॥

भा. अथ यदुक्तं,—स्मृतिः—इति, तस्य कः परिहारः ? ॥

सू. न, पूर्व्ववत्त्वात् ॥ ११ ॥ (आ० नि०) ॥

भा. पूर्व्ववती ह्येयं स्मृतिः, चोदकं धर्मग्राहकं वक्ष्यति,—'विभक्तो वा प्रज्ञातिवत्'—इति, तेन प्रापितानां धर्माणाम् अयम् अनुवादः, एतन्न्यायपूर्व्विका, न अप्राप्तानां विधायिका, यत्कारणं, व्यवस्था धर्माणामेतेन न्यायेन भवति ॥

सू. अर्थस्य शब्दभाव्यत्वात्प्रकरणनिबन्धनाच्छब्दादेवान्यत्र भावः स्यात् ॥ १२ ॥ (उप०) ॥

भा. इदं निगमनसूत्रम्। निगमनं च प्रतिज्ञाया हेतोश्च पुनर्वचनं; तदिदम् उच्यते, यस्मात् एवं, तस्मात् 'अर्थस्य' अग्न्याधानादेः 'शब्दभाव्यत्वात्', प्रतिप्रकरणं च 'निबन्धनात्' 'शब्दात् एव अन्यत्र भावः स्यात्', यथा,—'गन्धर्वाप्सरसो वा, एतमुन्मादयन्ति, यः उन्माद्यत्येता वै गन्धर्वाप्सरसो यद्राष्ट्रभृतं, तस्मै स्वाहा ताभ्यः स्वाहेति जुहोति'—इति अग्निप्रकरणे उत्पन्नानां राष्ट्रभृताम् अन्यत्र उपदेशः,—'एतेषां राष्ट्रभृतो जुहोत्यभ्यातानान् जुहोति'—इति ; असत्येतस्मिन् वचने यथाधिकारं व्यवतिष्ठेरन् धर्माः—इति। एवं च सति अधर्मकाणि ऐन्द्राग्नादीनि ; तदर्थम् उत्तरोऽध्यायषट्कः प्रारब्धव्यः—इति।

तत्र सप्तमेन तावत् ऐन्द्राग्नादीनां कर्मणां धर्माः सन्ति—इत्युच्यते, ते चातिदेशेन—इति। अतिदेशो नाम ये परत्र विहिता धर्माः, तमतीत्य अन्यत्र तेषां देशः, यथा, देवदत्तस्य भोजनविधिं कृत्वा,—शालिसूपमांसापूपैर्देवदत्तो भोजयितव्यः

भा.—इति, तमेव विधिं यज्ञदत्तेऽतिदिशति,—इयदत्तवत् यज्ञदत्तो भोजयितव्यः—इति। श्लोकमपि उदाहरन्ति,—

'प्रकृतात् कर्मणो यस्मात्, तत्समानेषु कर्मसु।

धर्मप्रदेशो येन स्यात्, सोऽतिदेशः—इति स्थितिः'—इति, स च नाम्ना वचनेन वा, तत्र नाम त्रिविधम् अतिदेशकं,—कर्मनाम, संस्कारनाम, यौगिकम्—इति। वचनं पुनर्द्विविधं,—प्रत्यक्षश्रुतम्, आनुमानिकं च। तयोरानुमानिकम् उपरिष्टात् वक्ष्यते, प्रत्यक्षश्रुतं तु इदानीमेव चिन्त्यते॥ (७।१।१अ०)॥

अस्ति इषुनामैकाहः, अपरः श्येनः; तौ द्वावप्याभिचारिकौ, तत्र इषौ कांश्चित् धर्मान् विधाय आह,—'समानमितरच्छ्येनेन'—इति, एतच्चिन्त्यते,—किम् अयम् अनुवादः, विधिः?—इति; यदि विधिः, ततोऽतिदेशः, श्येनधर्मान् इषौ अतिदिशति। अथ अनुवादः, ततो न—इति। तत्र किं प्राप्तम्?। तत् सूत्रणैव उपक्रम्यते,—

समानमितरच्छ्येनेनेतिश्रुत्या इषौ श्येनीयविशेषधर्मातिदेशाधिकरणम्॥

सू. समाने पूर्ब्बवत्त्वादुत्पन्नाधिकारः स्यात्॥ १३॥ (पू०)॥

भा. 'समानम् इतरत् श्येनेन'—इति, अत्र 'उत्पन्नाधिकारः स्यात्', अनुवादः—इत्यर्थः। कुतः?। 'पूर्ब्बवत्त्वात्',—अयमिषुः पूर्ब्बवान्, ज्योतिष्टोमपूर्ब्बकः, ज्यौतिष्टोमिको*ऽत्र विधक्तः—इत्यर्थः। अत्र चोदकेन उत्पन्ना ज्यौतिष्टोमिका धर्माः सन्ति, श्येनोऽपि ज्योतिष्टोमपूर्ब्बकः, तत्रापि ते सन्ति; ये इषौ श्येने

---

* आ० सो० एवं कं० सं० द्वितीय-पुस्तके ज्योतिष्टोमिक इति पाठः। एवं परत्रापि प्रायः सर्ब्बत्र। किन्तु तस्मिन्नेव पुस्तके कस्मिंश्चित् कस्मिंश्चित् स्थाने ज्यौतिष्टोमिका-नामित्येव पाठोऽस्ति।

भा. च समाना भवन्ति, तान् अधिकृत्य अयं वादो युज्यते। तस्मात् उत्पन्नाधिकारत्वात् अनुवादः।

किञ्च 'इतरवत्'—इति च अभावे न उपपद्यते, इतरशब्दस्य असन्निहितेऽनुपपन्नः, सन्निहित एव भवति, यथा, इतरः प्रावारो दीयताम्, इतरः कम्बलो दीयताम्—इति सन्निहितो दीयते, न प्रावारमात्रं कम्बलमात्रं वा। ज्यौतिष्टोमिकाश्च सन्निहिताः; तस्मात् तेषां वादः। तेषां च इदमनुवादः, विहिता हि ते चोदकेन—इति॥

सू. श्येनस्येति चेत्॥ १४॥ (पू० आ०)॥

भा. 'इति चेत्' पश्यसि,—'ज्यौतिष्टोमिकानामनुवादः'—इति, नैवं, श्येनस्य वैशेषिकाणां लोहितोष्णीषादीनां धर्माणां विधिः। कुतः?। श्येनग्रहणसामर्थ्यात्, एवं श्येनग्रहणम् अर्थवत् भविष्यति, धर्मान् विशेषयत्; इतरथा अनर्थकं स्यात्, सर्वेषां हि एकाहाहीनसत्राणां ते समानाः, तत्र यावत् उक्तं स्यात्,—समानम् इतरत्—इति तावदेव,—समानम् इतरत् श्येनेन —इति॥

सू. नासन्निधानात्॥ १५॥ (पू० आ० नि०)॥

भा. 'न' अयं श्येनवैशेषिकाणां वादो युज्यते। कस्मात्?। 'असन्निधानात्', अयम् इतरशब्दः सन्निहिते भवति, न च श्येनशब्देन वैशेषिका इमौ सन्निहिताः। यत्तु, श्येनशब्दो वैशेषिको भवति—इति, विधिपक्षे अवैशेषिकत्वं दोषः स्यात्, अनुवादपक्षे तु नैव कश्चित् विधीयते, किं विशेषयिष्यति? ज्यौतिष्टोमिकास्तु सर्वसाधारणाः सन्तः श्येनस्यापि भवन्ति—इत्यनुवादो युज्यते। तस्मात् ज्यौतिष्टोमिकानामेव अनुवादः॥

सू. अपि वा यद्यपूर्व्वत्वादितरदधिकार्थे ज्यौतिष्टोमिका-
द्विधेस्तद्वाचकं समानं स्यात् ॥ १६ ॥ (सि०) ॥

भा. 'अपि वा'—इति पक्षान्तरपरिग्रहे। विधिरयं श्येनवैशेषिकाणां, ज्यौतिष्टोमिकानाम् अनुवादः। कुतः?। 'अपूर्व्वत्वात्', एवम् अपूर्व्वम् अर्थं विधास्यति, तथा प्रवृत्तिविशेषकरो भविष्यति। अनुवादः सन् अप्रवृत्तिविशेषकरोऽनर्थकः स्यात्। 'ननु इतरशब्दोऽयं सन्निहिते भवति'। उच्यते,—'इतरदधिकार्थे', 'समानम् इतरत्, समानमधिकम्—इत्यर्थः।

'ननु सन्निहितवचनोऽयं न अधिकार्थः'—इति। उच्यते, न केवलम् अयं सन्निहितवचन एव पूर्व्वोक्तवद्भवम् असन्निहितमपि ब्रूते, अवशिष्टं च; यदा हि बहूनि अनुक्रम्य इतरशब्दः प्रयुज्यते,—देवदत्ताय कम्बलो दीयतां, विष्णुमित्राय कौशेयं, यज्ञदत्ताय क्षौमम्, इतरस्मै चाय—इति, तदा वस्त्रमेव प्रदीयते, न हिरण्यं रजतं वा, इह ज्यौतिष्टोमिकेभ्योऽधिकान्* धर्मान् अनुक्रम्य इतरशब्दः प्रयुक्तः, तेन अन्यान्यधिकानेव वक्तुमर्हति, तथा अधिकवचनो भवति।

अथ ज्यौतिष्टोमिकान् ब्रूते, तथा सन्निहितवचनः, तत्र अवश्यम् अन्यतरत् हेयं; यदि अधिकार्थतां हित्वा सन्निहितार्थता आश्रीयते, अनुवादमात्रम् अनर्थकं भवति, श्येनशब्दस्य अविवक्षितार्थः। अथ सन्निहितार्थतां हित्वा अधिकार्थता गृह्यते, न कश्चिद्दोषो भवति। तस्मात् सूत्रकार आह, 'इतरत् अधिकार्थे'—इति। अतो 'ज्यौतिष्टोमिकाद्विधेः' अधिकाः श्येनवैशेषिका ये, ते इह अतिदिश्यन्ते, 'तद्वाचकं

---

* "शोधितोऽक्षीषादीन्" इति कं० सं० द्वितीय पु० पाठः।

भा. समानं स्यात्, समानशब्दः स्यात्—इत्यर्थः। भवति ह्येन-शब्दस्य विवक्षितः॥ (७।१।२ अ०)॥

चातुर्मास्यानां* वैश्वदेवे आग्नेयादीनि हवींषि सार्थवाद-वाक्यैर्विहितानि, धर्माश्च तेषाम् उक्ताः, वरुणप्रघासेषु केवलानि हवींषि आम्नाय, यद्वैश्वदेविकानां ब्राह्मणं, तत्तेषाम् अति-दिश्यते,—'एतद्ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानि इत-राणि'—इति। तत्र किम् अर्थवादमात्रस्य अयम् अतिदेशः, उत सार्थवादकस्य सविधिकस्य काण्डस्य?—इति। कथं पुन-रर्थवादमात्रस्य अतिदेशो भवति?। यथा, पञ्चाकुलायप्रति-मास्य इष्टाः—इति। के पुनर्विधयः, के अर्थवादाः?। 'त्रेधा सन्नद्धं बर्हिर्भवति, त्रेधा सन्नद्ध इध्मः, नव प्रयाजा नव अनु-याजाः'—इत्येवमादयो विधयः। 'वार्त्रघ्नानि वा एतानि हवींषि'—इत्यर्थवादाः। तत्र इदम् उच्यते,—

एतद्ब्राह्मणानीत्यादिना पञ्चहविःषु सार्थवादविध्यतिदेशाधिकरणम्॥

सू. पञ्चसञ्चरेष्वर्थवादातिदेशः सन्निधानात्॥ १७॥ (पू०)॥

भा. 'पञ्चतानि हवींषि संवत्सरं सञ्चरन्ति'—इति पञ्चसञ्चराणि—इत्युच्यन्ते, तेषु 'पञ्चसञ्चरेषु' अर्थवादमात्रस्य 'अतिदेशः'—इति। कुतः?। 'सन्निधानात्' हविषां सन्निहिता अर्थवादाः, विधिभिः एकवाक्यसम्बद्धत्वात्, न धर्मविधयः। किम् अतः?। अत एतद्भवति, 'यत् पूर्व्वेषां ब्राह्मणम्'—इति व्यपदेशो युज्यते,

---

* अत्र "चातुर्मास्येषु वैश्वदेव-वरुणप्रघास-शाकमेध-शुनासीरीय-नामकानि चत्वारि पर्व्वाणि, तत्र वैश्वदेवेऽष्टौ हवींषि विहितानि,—'आग्नेयमष्टाकपालं निर्व्वपति, सौम्यं चरुं, सावित्रं द्वादशकपालं, वैश्वदेवीमामिक्षां, द्यावापृथिव्यमेककपालम्' इति। तेषां हविषां ब्राह्मणेऽर्थवाद आम्नातः, 'वार्त्रघ्नानि वा एतानि हवींषि' इति, अङ्गविधयोऽपि तत्रा-म्नाताः, 'त्रेधा सन्नद्धं बर्हिर्भवति त्रेधा सन्नद्ध इध्मः नव प्रयाजाः इज्यन्ते, नवानुयाजाः' इति" इति न्यायमाला अनुसन्धेया॥

भा. तर्हि तेषां ब्राह्मणं, येन विधीयन्ते, कोऽन्यो हविषां ब्राह्मणस्य च सम्बन्धोऽन्यच विधेयविधायकभावात्? अर्थवादैश्च एतानि विधीयन्ते, न धर्मविधिभिः, धर्मविधिभिस्तु यानि विधीयन्ते, न तानि हवींषि। तस्मात् अर्थवादानाम् अतिदेशो न धर्मविधीनाम्। अपि च वषट्प्रधानेषु अपि केचित् वैश्वदेविका धर्मा विधीयन्ते, यथा 'अग्निं मन्थन्ति प्रसवो भवन्ति'—इति, तेषाम् अतिदेशेन विहितानां पुनराम्नानम् अनर्थकं स्यात्, यदि विधयोऽतिदिश्येरन्। तस्मात् अर्थवादातिदेशः—इति॥

सू. सर्व्वस्य वैकशब्द्यात्॥ १८॥ (सि०)॥

भा. नैतदेवम्, अर्थवादमात्रस्य अतिदेशः—इति, सविधिकस्य सार्थवादकस्य काण्डस्य अतिदेशः—इति। कुतः?। 'ऐकशब्द्यात्', समानशब्दत्वात्—इत्यर्थः, समानोऽयं 'ब्राह्मणम्'—इति शब्दो विधीनाम् अर्थवादानां च, स यथा अर्थवादान् गृह्णाति, एवं विधीनपि गृह्णाति चेत्, तानप्यतिदिशति। यत्तु, विधीनां हविर्भिः सम्बन्धो नास्ति—इति; विधेयविधायकसम्बन्धो नास्ति, उपकारलक्षणः सम्बन्धो भविष्यति। कः उपकारः?। यदेषाम् अङ्गानि विदधाति। अस्ति चेत् सम्बन्धः, ब्राह्मणशब्दश्रुत्या सर्वातिदेशो न्याय्यः—इति॥

सू. लिङ्गदर्शनाच्च॥ १९॥ (यु०)॥

भा. लिङ्गं च विधीनाम् अतिदेशं दर्शयति। किं लिङ्गम्?। 'वषट्प्रधानेषु पिंशङ्गाकृतयो वाजिनो* यजन्तगाकृतीनां सम्पत्त्यै पिंशत्त्वाय'—इति वषट्प्रधाने पिंशतमाकृतीर्दर्शयति, यदि विधयो न अतिदिश्येरन्, ता न स्युः। तस्मात् अतिदिश्यन्ते॥

---

* वाजिने इति श्या० सो० पु० पाठः॥

सू. विहिताम्नानान्नेति चेत् ॥ २० ॥ (आ०) ॥

भा. 'विहिताम्नानात्'—इति यदुक्तं,* तस्य कः परिहारः? (आभासान्तं सूत्रम्) ॥

सू. नेतरार्थत्वात् ॥ २१ ॥ (आ० नि०) ॥

भा. अत्र उच्यते,—विध्यतिदेशेऽपि सति न अग्निमन्थनादीनाम् आम्नानम् अनर्थकम्, इतरस्य हविषोऽर्थेन भविष्यति, दक्षिणवैहारिकस्य माषत्याः। तस्मात् नैतत् ज्ञापकं, विधीनाम् अनतिदेशस्य भविष्यति ॥ (७।१।३ अ०) ॥

---

एतद्ब्राह्मण इत्यनेन एककपालैन्द्राग्नयोः सार्थवादविध्यतिदेशाधिकरणम् ॥

सू. एककपालैन्द्राग्नौ च तद्वत् ॥ २२ ॥

भा. वैश्वदेवे एककपाल आम्नातः,—'द्यावापृथिवी य एककपालः' इति, वरुणप्रघासेष्वपि, 'काय एककपालः'—इति; तत्र अपरः, 'ऐन्द्राग्नो द्वादशकपालो मारुत्यामिक्षा'—इति, तथा साकमेधेष्वपि एककपालैन्द्राग्नौ आम्नातौ, 'ऐन्द्राग्न एकादशकपाल इन्द्राय वृत्रघ्ने चरुः वैश्वकर्मण एककपालः'—इति। तत्र इदम् आम्नातम्, 'एतद्ब्राह्मण ऐन्द्राग्नः, एतद्ब्राह्मण एककपालो, यद्ब्राह्मण इतर इतरश्च'—इति। तत्र इदम् उच्यते,—'एककपालैन्द्राग्नौ च तद्वत्', यद्वत् पञ्चसञ्चराणि,—अत्रापि सविधिकस्य सार्थवादकस्य काण्डस्य अतिदेशः, तेनैव न्यायेन —इति प्रासिद्धवमेतत् उत्तरचिन्तार्थम् ॥ (७।१।५ अ०) ॥

---

* आ० सो० पुस्तके, का० सं० पुस्तके च केवलं 'इति यदुक्तम्' इत्येतावान् पाठः।

साकमेधे वारुणप्राघासिकैककपालातिदेशाधिकरणम् ॥

सू. एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्व्व-होमापरिवृत्तिदर्शनादवभृथे च सकृद्द्व्यवदानस्य वचनात् ॥ २३ ॥

भा. साकमेधे श्रूयते,—'एतद्ब्राह्मण एककपालः'—इति। तत्र चिन्त्यते,—वैश्वदेविकस्य एककपालस्य इदं ग्रहणम्, उत वारुणप्राघासिकस्य*?—इति। किं प्राप्तम्?—वैश्वदेविकस्य—इति ब्रूमः। किंकारणम्?। तस्य विहिता धर्माः, 'अलङ्कृत्य अभिपूर्य उपांशु यष्टव्यः, आविः पृष्ठः कार्यः'—इत्येवमादयः; वारुणप्राघासिकस्त्वधर्मकः, यस्य विहिता धर्माः, तत्र एतत् युज्यते वक्तुम्,—तद्वत् इदं कर्त्तव्यम्—इति। तस्मात् वैश्वदेविकस्य ग्रहणम्।

'ननु ऐन्द्राग्नसमुच्चारणात् एककपालोऽपि वारुणप्राघासिक एव स्यात्'। न, अवश्यमेकपर्वणोरेव समुच्चारणेन भवितव्यं, नानापर्वणोरपि समुच्चारणम् अविरुद्धम्। तस्मात् वैश्वदेविकस्य ग्रहणम्।

इति प्राप्ते उच्यते,—वारुणप्राघासिकस्य एककपालस्य ग्रहणम्—इति। कुतः?। ततः 'एककपालानां वैश्वदेविकः प्रकृतिः'। कथं ज्ञायते?। 'आग्रयणे सर्व्वहोमापरिवृत्तिदर्शनात्', आग्रयणे द्यावापृथिवीयस्य एककपालस्य सर्व्वहोमम् अपर्य्यावृत्तिं च दर्शयति,—'यत् सर्व्वहुतं करोति, सा त्वेका परिचर्या. हुतो हुतः पर्य्यावर्त्तते, सा द्वितीया, आज्यस्यैव द्यावापृथिव्यौ यजेत' —इति, आज्ययागविधिपरे वाक्ये एककपालस्य सर्व्वहोमम् अपर्य्यावृत्तिं च प्राप्तां दर्शयति, एतस्मात् दर्शनात् 'अवभृथे च

* 'वारुणप्रघासिकस्य' इति आ० सो० पु० पाठः; एवं परत्र। कं० सं० द्वितीय-पुस्तके च क्वचित् वारुणप्राघासिक इति, क्वचित्तु, वारुणप्रघासिक इत्युभयविध एव पाठः।

भा. सकृद् द्व्यवदानस्य वचनात्', अवभृथे च अवधारणं भवति,—इदमेव एककपालस्य द्विरवद्यति—इति, तेन ज्ञायते, नूनम् अन्यत्र न द्विरवदानम्—इति, तच्चैतत् सर्वं वैश्वदेविके एककपाले विहितं। तस्मात् एककपालानां वैश्वदेविकः प्रकृतिः। किम् अतः?। साकमेधिकेऽप्येककपाले वैश्वदेविका धर्मा: प्राप्ताः, तेषाम् अतिदेशोऽनर्थकः, वारुणप्राघासिकस्य ये धर्मा: वैशेषिका अप्राप्ताः, तेषाम् अतिदेशोऽर्थवान्। तस्मात् वारुणप्राघासिकस्य एककपालस्य इदं ग्रहणम्—इति। 'उच्यते, लिङ्गमेतत्, कुतः प्राप्तिः?'—इति। प्राप्तिम् उत्तरत्र वक्ष्यामः, 'स्वरसामैककपालामिक्षं च'—इत्यत्र। के पुनः ते धर्मा: ?। 'हिरण्मयस्य: स्रुवः अमोमय्यो वा'—इत्येवमादयः॥ (७। १। ६ अ०)॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्याध्यायस्य प्रथमः पादः॥

## सप्तमस्य अध्यायस्य द्वितीयः पादः॥



### अथ रथन्तरादिशब्दस्य गानविशेषार्थताधिकरणम्॥

**सू.** साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम्॥ १॥ (१म पू॰)॥

**भा.** इदं श्रूयते,—'रथन्तरम् उत्तरयोर्गायति, कवतीषु रथन्तरं गायति'—इत्येवमादीनि समाम्नायन्ते। तत्र चिन्ता,* किम् इह अतिदिश्यते?—इति। 'ननु यत् रथन्तरादिभिः शब्दै-रुच्यते, तदतिदिश्यते'। बाढं. तदेव तु न ज्ञायते, किम् एभिः शब्दैः उच्यते—इति। 'ननु सिद्धमेतत्,—'गीतिषु सामाख्या' (२।१।३६ सू॰)—इति'। तथा सिद्धस्य आक्षेपः करिष्यते, स एव तु निर्णयो भविष्यति। 'यदि स एव निर्णयः, किमर्थः आक्षेपः?'। दार्ढ्यार्थः, स्थूणानिखननवत्। तत्र किं प्राप्तम्?—तदुच्यते, सस्तोभस्वरकालाभ्यासविकारायां हिङ्कारप्रणव-प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनवत्यामृचि गीतौ सामशब्दो-ऽभियुक्तैः उपचर्यते, तस्मात् संशयः। 'उच्यते, ननु गीतौ सत्यां भावात् गानाख्यस्य संस्कारकर्मणो वाचका एते शब्दाः—इत्युक्तं, तदेवेदम् उक्तमाक्षिप्यते'। न इमे संस्कारस्य वाचकाः। किङ्कारणम्?। अकर्मकाले प्रयोगात्, अकर्मकाले साम प्रयुज्यते, न च संस्कारकर्माणि प्रोक्षणावक्षेपणपर्यग्नि-करणादीनि अकर्मकाले प्रयुज्यन्ते, प्रयोजनाभावात्; अथ नु

---

* "कया नश्चित्र इत्याद्यास्तिस्र ऋचः कवत्यः, तासु वामदेव्यं सामाध्ययनतः प्राप्तं तद्बाधितुं रथन्तरं साम तास्वतिदिश्यते, तत्रातिदेशस्य स्वरूपं निश्चेतुं रथन्तरशब्दार्थश्चिन्त्यते' इति न्यायमालाऽत्रानुसन्धेया।

भा. मत्वा एते, ततोऽन्यत्र ‘स्वाध्यायोऽध्येतव्यः’—इति नियमात् अकर्मकाले प्रयोगो युज्यते। तस्मात् ऋचां नामानि।

किञ्च, संज्ञाभेदात्, संज्ञाभेदश्च भवति,—रथन्तरं बृहत्—इत्येवमादिः, स एकत्वात् संस्कारकर्मणः, अनर्थकः, एकेनैव हि तदा पर्याप्तं, यथा गीतिः—इति। अथ ऋचां नामानि, ततः तासां भेदात् संज्ञापृथक्त्वं युक्तम्।

अपि च, यदि गानं रथन्तरं, गानं च बृहत्, इदं रथन्तरम् इदं बृहदिति पृथक्त्वेन संज्ञानिवेशो नोपपद्यते, ऋङ्नामत्वे तूपपद्यते।

किञ्च, विकारपृथक्त्वात्तु,—प्रतिसाम च विकारपृथक्त्वात्, प्रतिसाम च विकारपृथक्त्वं दृश्यते, तत् एकत्वात् गानस्य, अनुपपन्नं; संस्कारभेदे हि विकारपृथक्त्वं दृष्टं; तत् यथा, अवहन्तेः तण्डुलीभावः, पिषेश्चूर्णनं, न तु एकस्य तण्डुलीभावश्चूर्णनं च। अथ ऋङ्नामानि एतानि, तत ऋचां भेदाद्विकारपृथक्त्वं युज्यते। तस्मात् ऋङ्नामानि—इति। तत उत्तरं पठति,—“साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम्” —इति, ‘साम्नोऽभिधानशब्देन’ ‘यथाशिष्टं’ ‘प्रवृत्तिः स्यात्’, यच्छिष्टं प्रवक्तृभिः शिष्येभ्यः। किञ्च शिष्टम्?। स्तोभादिविशिष्टा ऋक् साम, सा प्रवर्त्तत। किङ्कारणम्?। तस्या रथन्तरादि नामधेयम्—इति॥

सू. शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिः स्यात् पृथग्भावात् क्रियाया ह्यभिसम्बन्धः॥ २॥ (१म पू॰ नि॰)॥

भा. तुशब्दः पक्षनिवृत्तौ,—न तु एवं स्यात्, ऋचः प्रवृत्तिः—इति। कथम्?। इह ‘कवतीषु रथन्तरं गायति’—इति कवतीनां वा कार्येण अभिवत्योऽतिदिश्येरन्, कवतीनां वा उपरि

भा. आधाराधेयभावेन? तच कार्यं तावत् अतिदेशो न घटते। कुतः?। 'शब्दैः' 'अर्थविधित्वात्',—शब्दानाम् अर्थविधानं कार्यं, न च, 'कवतीषु रथन्तरं गायति'—इति कवतीभिर्योऽर्थोऽभिधीयते, तमभिवत्यः शक्नुवन्ति वक्तुम्; तस्मात् न कार्यातिदेशः। आधेयत्वेऽपि न सम्भवति, 'पृथगभावात्', न हि शब्दः शब्दे समवैति, पृथगेवावतिष्ठते,—'अभित्वा', 'कया नः'*—इति, 'क्रियाया हि' (गानक्रियायाः) शब्देन 'अभिसम्बन्धो' भवेत्, न शब्दस्य। तस्मात् आधेयत्वेनापि न अतिदेशः, अतो नायमृचः प्रदेशः—इति ॥

सू. स्वार्थं वा स्यात्प्रयोजनं क्रियायास्तदङ्गभावेनोपदिश्येरन् ॥ ३ ॥ (२य पू०) ॥

भा. 'स्वार्थं वा' प्रवर्त्तमाना अभिवत्यः कवतीनामङ्गभावेन 'उपदिश्येरन्'। 'कथं पुनः 'कवतीषु गायति'—इत्यङ्गभावः शक्य उपदेष्टुम्?। शक्यो. यथा, 'येन कर्मणेर्त्सेत्तत्र जयान् जुहुयात्'—इति। 'किं पुनः प्रयोजनं कवतीनामभिवत्यो निर्वर्त्तयन्तीति?'। उच्यते, प्रयोजनम् अदृष्टं कल्प्यम्। कुतः?। 'क्रियायाः', यस्मात् क्रिया श्रूयते,—'कवतीषु रथन्तरं गायति'—इति, यथा प्रयाजादीनां प्रयोजनं क्रियायाः ॥

उच्यते. अयमेव अस्मिन् पक्षे दोषः, यत् प्रयोजनं क्रियायाः कल्पयितव्यम्। तस्मात् अयमपि पक्षो दुःश्लिष्टः ॥

सू. शब्दमात्रमिति चेत् ॥ ४ ॥ (३य पू०) ॥

भा. 'इति चेत्' पश्यसि,—कवत्यङ्गभावेन अभिवतीनाम् उपदेशो दुःश्लिष्टः—इति, तेन तर्हि 'शब्दमात्रं' प्रदिश्यतां,†—रथ-

* अभित्वा शूर नो नुम इत्येका ऋक्; 'कया नश्चित्रः' इत्यपरा।

† न मासां मासामिति ब्रूयात् सजमित्येव ब्रूयादितिवत् कवतीः पठेति वक्तव्ये रथन्तरं पठेति वक्तव्यमिति भाव इति सा० सो० पुस्तके टीका।

भा. न्तरशब्दं कवतीषु प्रयुञ्जीत, कवतीः रथन्तरशब्देन अभिलपेत् —इति। किङ्कारणम्?। शब्दे उच्चरिते, तत्र तावत् मुख्या प्रतिपत्तिः; शब्दे कार्यस्य असम्भवात्, अर्थे कार्यं विज्ञायते, यथा गामानय—इति, इह तु शब्दे एव कार्यं सम्भवति, न अर्थे; अतोऽत्र शब्दं विज्ञास्यामः॥

सू. नौत्पत्तिकत्वात्॥ ५॥ (३य पू० नि०)॥

भा. पूर्व्वस्मात् एष वादः पापीयान्। कस्मात्?। 'औत्पत्तिकत्वात्', औत्पत्तिको हि नामिनाम्नोः सम्बन्धः, यः शब्दो यस्मिन् अर्थे औत्पत्तिकेन सम्बन्धेन प्रसिद्धः, न, स ततोऽन्यं प्रत्याययितुं शक्नोति, न हि गोशब्देन अश्वोऽभिधातुम् शक्यते॥

सू. शास्त्रञ्चैवमनर्थकं स्यात्॥ ६॥ (यु०)॥

भा. 'एवं' च सति अतिदेशशास्त्रम् 'अनर्थकं स्यात्', अशक्यार्थत्वात्। तस्मात् न शब्दस्यापि प्रदेशो युक्तः*। वृत्तिकारस्तु मेने, गानशास्त्रम् औक्थिक्यम् अनर्थकं स्यात्—इति, तस्य अभिप्रायः,—सत्याङ्गतौ नैतावान् प्रयासः शिष्टानाम् अफलोऽभ्युपगन्तुम् न्याय्यः†—इति॥

सू. स्वरस्येति चेत्॥ ७॥ (४र्थ पू०)॥

भा. 'इति चेत्' पश्यसि,—नाम्नोऽतिदेशोऽयुक्तः—इति, तेन

---

* शास्त्रेणाप्यत्यन्तमवाचका न विनियोक्तुं शक्याः, सकृच्छब्दस्तु वाचक एव निदर्श्यते इति दृष्टान्तवैषम्यमिति व्या० सो० पुस्तके टीका।

† कवतीषु रथन्तरं गायतीत्यस्य शब्दमात्रविधित्वे ऊहग्रन्थे उक्थ्यस्तोत्रसम्बन्धि यत् कवतीषु रथन्तरगानं, तद्रूपं शास्त्रं निर्मूलत्वादप्रमाणं स्यादित्यर्थः सूत्रस्येत्युपवर्षं आह। ननु पौरुषेयत्वात् भवत्वप्रामाण्यमूहग्रन्थस्येति वृत्तिकृद्व्याख्यानमयुक्तमित्य शङ्क्य समाधत्ते, सत्यामिति। शिष्टपरिगृहीतत्वान्न प्रामाण्यं युक्तमिति भाव इति व्या० सो० पुस्तके टीका।

भा. तर्हि, स्वरस्य अतिदेशो भवतु, स्वरः सामशब्देन लोकेऽभिधीयते,—सुसामा देवदत्तः—इति, सुस्वरो देवदत्तः—इति; स्वरो घोषो नादः—इति समानार्थाः, स सामशब्देन उच्यते, साम च रथन्तरम्। तस्मात् तस्य अतिदेशः॥

सू. नार्थाभावाच्छ्रुतेरसम्बन्धः ॥ ८ ॥ (४र्थ पू० नि०) ॥

भा. नैतदेवं,—स्वरस्यातिदेशः—इति। कुतः?। 'अर्थाभावात्', अर्थस्य अभावात्, अर्थस्य अभिवतीस्वरस्य कवतीषु अभावात्। 'ननु असन्नेव असौ अतिदेशेन भाव्यते'। उच्यते, भावयितुमपि न शक्यते, न हि अभिवत्यक्षराणाम् अभिव्यञ्जको नादः कवतीषु भावयितुम् शक्यः; यदि भाव्येत, न कवत्यो भवेयुः, स चेत् भाव्यते, न भूतः, 'कवतीषु रथन्तरं गायति'—इत्येतस्याः 'श्रुतेः' पदान्तरेणाभिसम्बन्धो न स्यात्। तस्मात् न स्वरस्यातिदेशः॥

सू. स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥ ९ ॥ (५म पू०) ॥

भा. तुशब्दः पक्षान्तरपरिग्रहे। यद्यभिवतीस्वरस्य कवतीषु प्रदेशो नोपपद्यते, अनुवादो भवतु, 'कवतीषु रथन्तरं गायति'—इति। कथम्?। तदुच्यते, इह 'कवतीषु रथन्तरं गायति'—इत्यस्य वाक्यस्य द्वे वचनव्यक्ती भवतः,—कवतीषु यत् रथन्तरं, तत् गायति—इत्येका, रथन्तरं यत्, तत् कवतीषु गायति—इत्यपरा; तयोरेषा द्वितीया,—रथन्तरं यत्तत् कवतीषु गायति—इति, सा स्वरस्य सामत्वे न सम्भवति—इत्युक्तं, न हि अभिवतीस्वरः कवतीषु समावेशयितुं शक्यः—इति, पूर्वा तु सम्भवति,—कवतीषु यत् रथन्तरम्, तत् गायति—इति।

'ननु सापि न सम्भवति, न हि कवतीषु रथन्तरम् अस्ति'।

अतः परम् उच्यते,—'स्वरस्तूत्पत्तिषु स्यात्', स्वरस्त्वभिवतीस्वरः, कवतीनाम् 'उत्पत्तिषु' उच्चारणेषु 'स्यात्'। कथम्?। 'मात्रावर्णाविभक्तत्वात्', बह्वो मात्रावर्णास्त्वाभिवतीनां कवतीनां च अविभक्ता अभिवतीष्वपि विद्यन्ते, कवतीष्वपि; सोऽसावभिवतीस्वरः कवतीषु साधारणवर्णसमवेतो विद्यते, तस्य अनुवादोऽयं घटते, 'कवतीषु रथन्तरं गायति'—इति। तस्मात् स्वरस्य अनुवादः॥

सू. लिङ्गदर्शनाच्च ॥ १० ॥ (यु०)॥

भा. लिङ्गं च दृश्यते, एतस्मिन् अर्थे; अस्ति रथन्तरम् उत्तरयोः—इति। किं तल्लिङ्गं भवति?। एवम् आह, 'रथन्तरम् उत्तरयोः न पश्यामि—इति विश्वामित्रः तपस्तेपे, इन्द्रत् उत्तरयोः न पश्यामि—इति वसिष्ठः'—इति; यच्च विद्यमानं न दृश्यते, तद्दर्शनाय यत्नः क्रियते, यथा घटं न पश्यामि—इति प्रदीपं करोति, न शशविषाणं न पश्यामि—इति। तस्मात् अस्ति उत्तरयोः रथन्तरं इन्द्रश्च; तयोः अनुवादः—इति॥

सू. अश्रुतेस्तु विकारस्योत्तरासु, यथाश्रुति ॥ ११ ॥ (५म पू० नि०)॥

भा. तुशब्दः पक्षं व्यावर्त्तयति,—नैतदेवं, 'स्वरस्य अनुवादः'—इति। कुतः?। एवं सति 'उत्तरासु' विकारो न कश्चित् श्रुतो भवति, तदा उत्तरा यथाश्रुताः प्रयोक्तव्याः, यथा स्वाध्यायकाले श्रुताः; तत्र 'रथन्तरम् उत्तरयोर्गायति'—इत्येतत् अनुवादमात्रम् अप्रवृत्तिविशेषकरम् अनर्थकमेवापद्यत। अतो न स्वरस्य अनुवादो युक्तः॥

सू· शब्दानाञ्चासामञ्जस्यम् ॥ १२ ॥ (यु० एवं ६ष्ठ पू०) ॥

भा· रथन्तरादीनां च सामशब्दानाम् 'असामञ्जस्यं' स्यात्,— 'रथन्तरम् उत्तरयोः, बृहत् उत्तरयोः'—इति। कथम्?। तदुच्यते,—अयं रथन्तरशब्दो बृहच्छब्दो वा स्वरस्य सामशब्दत्वे स्वरसमुदाये आनुपूर्व्या व्यवस्थिते स्वरविशेषे प्रयुक्तः, स एकदेशे भिन्नानुपूर्व्ये वा असमञ्जसो भवति ; तस्मात् नैतत् युक्तं, स्वरस्य सामशब्दः, तस्य चानुवादः—इति।

'अथ आह,—एवं भवता सर्व्वे पन्था निरुद्धाः, ततः किम् अप्रवृत्तिरेव?'—इति। उच्यते, ऋच एव प्रदेशो भवतु। 'ननु उक्तं, न शक्या ऋच ऋगन्तरे प्रदेष्टुम्—इति'। बाढं, देशलक्षणा भविष्यति, 'कवतीषु रथन्तरं गायति'—इत्युच्यते, न च शक्यते कवतीषु रथन्तरं गातुम्, तत्र देशलक्षणा भवति,—कवतीदेशे —इति, यथा, 'अग्नौ तिष्ठति, कूपे तिष्ठति'—इति। धर्मलक्षणा वा स्यात्, रथन्तरधर्मा वा कवतीषु रथन्तरशब्देन अतिदिश्यन्ते,—यथा, रथन्तरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेत्—इत्येवमादयः, यथा आचार्ये प्रोषिते, आचार्यानी भवताम् आचार्यः—इति, आचार्यशुश्रूषा आचार्यान्याम् अतिदिश्यते ॥

सू· अपि तु कर्म्मशब्दः स्याद्भावोऽर्थः प्रसिद्धग्रहणत्वाद्विकारो ह्यविशिष्टोऽन्यैः ॥ १३ ॥ (सि०) ॥

भा· 'अपि तु' नैवं स्यात्,—ऋचः सामशब्दः, तस्याश्च प्रदेशः— इति, तथा देशलक्षणा धर्मलक्षणा वा आश्रयणीया, अगतिश्चैषा, यल्लक्षणापरिग्रहः। किन्तर्हि?—'कर्मशब्दः स्यात्', रथन्तरादिगीनाञ्चास्य संस्कारकर्मणो वाचकः। कुतः?। उक्तः न्यायो 'गीतिषु सामाख्या' (२।१।३६ सू०)—इत्यत्र, तत्र गीति-

भा. विशिष्टायाम् ऋचि एष शब्दो दृष्टः, न च अगृहीतविशेषणा विशेष्ये बुद्धिः उत्पद्यते। तस्मात् विशेषणं तावत् अभिधीयते, विशेषणप्रत्ययाच्च सहचरिते विशिष्टे प्रत्ययः; अतो नास्ति ऋचः शब्देन संस्पर्शः—इति, तेनैव न्यायेन गीतिनामधेयम्—इति ब्रूमः।

किञ्च, 'प्रसिद्धग्रहणत्वात्', अयं च 'गायति'—इति शब्दो गानक्रियायां प्रसिद्धः। का पुनरसौ?। शब्दस्य उच्चारणविशेषः,—गायति गानं करोति—इति, तद्ग्रहणश्च रथन्तरादिशब्दः, तद्वचनः—इत्यर्थः, तेन समुच्चारणात् द्वितीयामासप्ताश्च; यथा, 'आसारितकं गायति'—इति, 'वर्धमाकं गायति'—इति।

'ननु शब्दवचनेनापि समुच्चारणं भवति, 'गाथां गायति, ऋचं गायति'—इति'। सत्यं, विपरिणम्य तु शब्दं, गानेन ऋचं संस्करोति—इति, यथानिपतितेन अर्थेन न सम्बध्यते गानं करोति ऋचम्—इति। तस्मात् गीतिवचनः।

इतश्च गीतिवचनः। कुतः?। 'विकारो हि अविशिष्टोऽन्यैः', विकारश्च अत्र ऋगक्षरस्य दृश्यते, ह्रस्वानामक्षराणां दीर्घता, दीर्घाणां च ह्रस्वत्वं, विवृतानां संवृतत्वं, संवृतानां विवृतत्वं, सोऽविशिष्टोऽन्यैः संस्कारकर्मभिः, यथा अवहन्तिना व्रीहीणाम् तण्डुलीभावः, पिंषिणा तण्डुलानां पिष्टीभावः। तस्मात् शब्दानां संस्कारो गानाख्यः रथन्तरादिभिः शब्दैः उच्यते, तस्य अयं प्रदेशः, 'रथन्तरम् उत्तरयोर्गायति'—इत्येवमादिः॥

सू. अद्रव्यञ्चापि दृश्यते॥ १४॥ (यु०)॥

भा. 'अपि' 'च' 'अद्रव्यं' साम दृश्यते, द्रव्यशब्दश्छन्दोगैः ऋचि आचरितः, 'अद्रव्यम् अनृचम्'—इत्यर्थः। अनृचं साम दृश्यते, —'प्रजापतेर्हृदयम् अनृचं गायति'—इति, प्रजापतिहृदयं

भा. नाम साम, तत् अनृचि उत्पन्नं, यदि ऋचि सामशब्दः, कथं प्रजापतिहृदयम् अनृचं स्यात्! अथ गीतेः सामशब्दः, ततो विनापि ऋचा गीतिर्भवति। तच एतत् उपपद्यते, 'प्रजापते-र्हृदयम् अनृचं गायति'—इति। तस्मात् अपि गीतिः साम। 'ननु उक्तं,—संस्कारकर्मत्वेऽनर्थकोऽकर्मकाले प्रयोगः—इति'। तच ब्रूमः,

सू. तस्य च क्रिया ग्रहणार्था, नानार्थेषु विरूपित्वादर्थो ह्यासामलौकिको विधानात्॥ १५॥ (आ॰ नि॰ १)॥

भा. 'तस्य' 'क्रिया' अकर्मकाले 'ग्रहणार्था' शिक्षितुम् अभ्यसितुम् च, 'नानार्थेषु' नानाभूतेषु अर्थेषु (भिन्नेषु—इत्यर्थः) 'विरूपि-त्वात्', आश्रयभेदात् विविधरूपं तद्गानं भवति, तत् प्रत्यृचं शिक्षितव्यम् अभ्यसितव्यं च, प्रयोगप्राग्भावाय, भूमिरथिकवत्, तत् यथा, भूमिरथिको भूमौ रथमालिख्य योग्यां करोति, सा तस्य योग्या प्रयोगकाले सौकर्यम् उत्पादयति। 'अर्थो हि आसां' रथन्तरादिसंज्ञानां न लौकिके व्यवहारे सिद्धः, यथा अवहननादीनाम्। कुतः?। 'विधानात्' विधीयते हि असौ शिष्योपाध्यायसम्बन्धेन,—एवंरूपं 'रथन्तरं भवति'—इति; न लौकिको विज्ञायते। तस्मात् न परिचोदनैषा,—'अकर्मकाले प्रयोगात्'—इति॥

अथ यदुक्तं,—'संज्ञापृथक्त्वात्'—इति। तच उच्यते,—

सू. तस्मिन्संज्ञाविशेषाः स्युर्विकारपृथक्त्वात्॥ १६॥ (आ॰ नि॰ २)॥

भा. 'तस्मिन्' एकस्मिन् अपि गानाख्ये संस्कारे 'संज्ञाविशेषाः' भवेयुः। कुतः?। 'विकारपृथक्त्वात्' तुल्येऽपि गाने* विशेषो

* आनत्वे इति का॰ श्री॰ पु॰ पाठः।

भा. भवति, गानविशेषाच्च संज्ञापृथक्त्वम्, यथा, 'आवारितकं, वर्धमानकम्'—इति, अन्यथालक्षणा आवारितकगीतिः, अन्यथालक्षणा वर्धमानकगीतिः, एवम् इहापि अन्यथालक्षणा रथन्तरगीतिः, अन्यथालक्षणा बृहद्गीतिः। तस्मात् संज्ञापृथक्त्वम् ॥

सू. योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते ॥ १७ ॥ (यु० १) ॥

भा. योनिश्चासौ शस्या च, योनिशस्या, 'योनिशस्याश्च' ऋचः 'तुल्यवत् इतराभिः' अयोनिशस्याभिः 'विधीयन्ते',—'याज्याः शंसति, शिपिविष्टवतीः शंसति, रथन्तरस्य योनिमनुशंसति, बृहतो योनिमनुशंसति'—इति। का तत्र तुल्यता?। शंसतिशब्देनाभिधानम्; इह एतौ स्तौतिशंसतिशब्दौ समानेऽपि स्तुत्यर्थत्वे व्यवस्थितविषयौ; प्रगीतेषु मन्त्रवाक्येषु स्तौतिशब्दः, अप्रगीतेषु शंसतिशब्दः, यथा, 'प्र उ गं शंसति, निष्केवल्यं शंसति'—इति, 'आज्यैः स्तुवते, पृष्ठैः स्तुवते'—इति। अतः शंसतिशब्देन विधानात् अप्रगीताम् ऋचं रथन्तरस्य योनिं दर्शयति, यदि च गीतिः रथन्तरं, ततः तस्य अप्रगीता ऋग् योनिः, अन्यथाऽयं व्यपदेशो नोपपद्यते,—'रथन्तरस्य योनिम्' —इति। तस्मात् 'गीतिषु सामाख्या' ॥

सू. अयोनौ चापि दृश्यते अतथायोनि ॥ १८ ॥ (यु० २) ॥

भा. 'अयोनौ च' साम क्रियते, 'स्थाल्यां सन्नवधीयते—इत्याकर्ण्य तत् बृहत् गायत्रीषु क्रियतेऽपि चैनां वजति, न च अस्यां सम्भवति' —इति, बृहतो बृहती योनिः, तस्य गायत्रीषु प्राप्तिर्नास्ति,

* 'अथ तु' इति क० सं० द्वितीय-पुस्तके पाठः।

यदि ऋचः सामशब्दः; अथ नु* गीतेः, ततः सा वृहद्गीति-
भा. गायत्रीषु वचनात् प्राप्ता, तस्या अयम् अनुवादो घटते, 'यत्
वृहत् गायत्रीषु क्रियते'—इति। 'अतथायोनि' च साम दर्श-
यति, यादृशी यस्य योनिः, ततोऽन्यादृशे, 'यो वै विच्छन्दसि
सामोहति, स ऋचं संमृणाति, साम वा विलिशति*, साम
संमृणाति, ऋचं विलिशति'—इति यतरत् वर्षीयः,† तस्य
विलेशः, यतरत् वर्षीयः, तस्य संशरः, तच्च गीतौ एव साम्नि
युज्यते, न ऋचि, ऊहतिशब्दश्च गीतावेव समर्थः, न ऋचि,
ऋक् चेत्, सैव यथाम्नायं पठ्यते, तत्र नास्त्यूहप्रसङ्गः। तस्मात्
अपि गीतौ सामशब्दः॥

सू. ऐकार्थ्ये नास्ति वैरूप्यमितिचेत्॥ १९ ॥ (आ०)॥

भा. यदुक्तम्,—तस्य क्रिया ग्रहणार्था—इति। तत्र परिचोद्यते,
'ऐकार्थ्ये नास्ति वैरूप्यम्—इति', रथन्तरगीतेः वृहद्गीतिः
अर्थान्तरं, तेन रथन्तरगीतौ गृहीतायां वृहद्गीतिः अगृहीता
भवति—इति युक्तो रथन्तरे गृहीते वृहतः शिक्षार्थम् अकर्म-
काले प्रयोगः, रथन्तरगीतेस्त्वेक एव अर्थः; तस्य योन्यां प्रयोगे
शिक्षिते पुनरुत्तरासु न शिक्षितव्यं, तासु अकर्मकाले प्रयोगः
संस्कारकर्मत्वे न युक्तो भवति; तस्मात् न संस्कारस्य सामशब्दः
—इति स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति॥

सू. स्यादर्थान्तरेष्वनिष्पत्तेर्यथा पाके॥ २० ॥
(आ० नि०)॥

भा. 'स्यात्' वैरूप्यम्। कुतः एतत्?। 'अर्थान्तरेषु अनिष्पत्तेः',
ऋगन्तरेषु आश्रयभेदात्, 'यथा पाके', यथा एक एव अयमर्थः

* विलिषति का० सं० पु० पाठः।
† खवीय इति का० सं० पु० पाठः। ह्रसीय इति च क० सं० द्वितीय-पुस्तके पाठः।

पाको नाम, तस्य अर्थान्तरे वैरूप्यं भवति, अन्यथालक्षण ओदनस्य पाकः, अन्यथालक्षणो गुडस्य, येन ओदनपाको गृहीतः, न असौ अशिक्षित्वा गुडं पक्तुम् जानाति। तस्मात् तस्याध्यकर्मकाले प्रयोग उपपद्यते ॥

सू. शब्दानाञ्च सामञ्जस्यम् ॥ २१ ॥ (यु०) ॥

भा. एवं च सामशब्दानामृक्शब्दानां च 'सामञ्जस्यं' भवति, 'कवतीषु रथन्तरं गायति'—इति कवतीशब्दः ऋच एव वक्ष्यति, रथन्तरशब्दश्च साम, इतरथा कवतीशब्दे वा दोषलक्षणा स्यात्, रथन्तरशब्दे वा धर्मलक्षणा। तस्मात् गीतौ सामशब्दः—इति॥ (७।२।१ अ०)॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्याध्यायस्य द्वितीयः पादः॥

## सप्तमस्य अध्यायस्य तृतीयः पादः॥

अग्निहोत्रादिनाम्ना धर्म्मातिदेशाधिकरणम्॥

सू. उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्॥ १॥ (सि०)॥

भा. नाम्ना धर्म्मप्रदेशं वक्ष्यामः—इत्यादौ प्रतिज्ञातं, सोऽयम् उच्यते। कुण्डपायिनामयने श्रूयते,—'मासमग्निहोत्रं जुहोति'—इति; तत्र एतत् समधिगतं, नैयमिकादग्निहोत्रात् कर्म्मान्तरमेतत्—इति। अधुना अग्निहोत्रशब्दश्चिन्त्यते,—कथम् अयं प्रयुक्तः?—इति, तदर्थमारभ्यते,—'उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्'—इति, उक्तम् आदौ,—'क्रियाभिधानं', कर्म्मनामधेयम्, अग्निहोत्रशब्दः—इति, "तत्प्रख्यं च अन्यशास्त्रम्" (१।४।४ सू०)—इत्यत्र; तस्य 'अन्यत्र' 'श्रुतौ' कौण्डपायिनामयनीये जुहोतौ 'विधिप्रदेशः स्यात्', धर्म्मप्रदेशः, नैयमिकस्य* अग्निहोत्रस्य ये धर्म्माः, तेऽस्मिन् अनेन नाम्नाऽतिदिश्येरन्। किङ्कारणम्?। उच्यते,—परशब्दोऽयं परत्र दृष्टः, परशब्दस्य परत्र दृष्टौ तद्भावो गम्यते, स यत्र विज्ञातो भवति, तत्रानूद्यते, यथा, सिंहो देवदत्तः—इति। यत्र अविज्ञातः, तत्र विधीयते, यथा, अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम्—इति। इह च अविज्ञातोऽस्य जुहोतेः अग्निहोत्रवद्भावः, तस्मात् स विधीयते,—'मासमग्निहोत्रं जुहोति'—इति अग्निहोत्रवत् जुहोति—इति। 'कथं पुनरसति वतिप्रत्यये

* 'नैय्यमिकस्य' इति का० सो० पु० पाठः। एवं परत्रापि। क० सं० पुस्तके च क्वचित् नैयमिकेति, क्वचिच्च नैय्यमिकेति।

भा. वत्यर्थः शक्योऽवगन्तुम्?'—इति। उच्यते,—साहचर्य्यात्, अग्निहोत्रशब्दोऽयं कर्म्मणा सम्बद्धः, तत्सहचरितहोमनादिधर्म्मवत्तां लक्षणया शक्नोति गमयितुम्, शक्नोति चेत् गमयितुम्, प्रदेष्टुम् अपि शक्नोति, एवमन्तरेणापि वर्तिं, वत्यर्थः शक्योऽवगन्तुम्—इति॥

सू. अपूर्व्वे वापि भागित्वात्॥ २॥ (पू०)॥

भा. 'वा अपि'—इति विपर्य्यासेन प्रयुक्ते, अपि वा—इत्यर्थः। अपि वा 'अपूर्व्वे' एते उभे अपि कर्म्मणी स्यातां, न कौण्डपायिनामयनीयो जुहोतिर्नैयमिकपूर्व्वः, साधारणं च नामधेयम् उभयोः। कुतः?। 'भागित्वात्', अयमपि जुहोतिर्भागी एतस्य नामधेयस्य, यथैव तत्र 'अग्निहोत्रं जुहोति'—इति समुच्चारणम्, एवम् इहापि, तत्र तुल्ये समुच्चारणे तस्यैव एतत् नामधेयं, न अस्य—इत्यत्र विशेषहेतुर्नास्ति। तस्मात् उभयोः साधारणं नाम—इति, नास्ति धर्म्मप्रदेशः॥

नैतत् युक्तं कुतः?

सू. नाम्नस्त्वौत्पत्तिकत्वात्॥ ३॥ (उ०)॥

भा. औत्पत्तिको हि नामिनाम्नोः सम्बन्धः,—यन्नाम यस्मिन् अर्थे औत्पत्तिकेन सम्बन्धेन प्रसिद्धं, तस्मिन् एव सदा विज्ञेयं, न अन्यत्र च, तथा अव्यवस्थायां शब्दार्थे विश्वासो न स्यात्। उक्तम्, 'अन्यायश्च अनेकार्थत्वम्'—इति, यदा च नोभयार्थः, तदा नैयमिकं तावत् आह, तस्मादृश्यविधानार्थं च इतरत्रापि प्रयोग उपपद्यते—इति नास्ति इतराभिधानत्वे हेतुः; तस्मात् विधिप्रदेशः स्यात्॥

'अत्र आह, कस्मात् पुनः तन्नामधेयम् इदम् इह प्रयुक्तम्—इत्युच्यते, न पुनः एतन्नामधेयं तत्र—इति?'। तत आह,—

सू. प्रत्यक्षाद्गुणसंयोगात् क्रियाभिधानं स्यात्तदभावे-ऽप्रसिद्धं स्यात् ॥ ४ ॥ (आ० नि०) ॥

भा. नैयमिकेऽग्निहोत्रे प्रत्यक्षो गुणसंयोगः, प्रत्यक्षविहिता धर्माः सन्ति. 'इत्थं दोग्धि इत्थं श्रपयति, चतुरुन्नयति, खादिरी अग्निहोत्रहवणिर्भवति, इत्थं जुहोति', एवं 'प्रत्यक्षाद्गुणसंयोगात्', नैयमिकस्य तत् नामधेयम् इह प्रयुज्यमानं, दोहनादि—'क्रियाभिधानं स्यात्', धर्मप्रदेशकम्—इत्यर्थः। अस्य पुनः जुहोतेर्न केचित् धर्माः सन्ति, 'तदभावे' (तेषां धर्माणामभावे) 'अप्रसिद्धं स्यात्' न प्रज्ञायेत,—किमर्थम् अयम् अग्निहोत्र-शब्दः इह प्रयुक्तः?—इति।

एवं वा,—प्रत्यक्षो गुणसंयोगो,—नैयमिकस्य द्रव्यदेवता-संयोगः,—'दध्ना जुहोति, पयसा जुहोति, अग्नये च प्रजापतये च सायं जुहोति' इति। एतस्मात् 'प्रत्यक्षाद्गुणसंयोगात् क्रियाभिधानं स्यात्', कर्मनामधेयं, इत्थंरूपो जुहोतिः अग्नि होत्राख्यः—इति। अथ इतरजुहोतेः रूपं नास्ति, 'तदभावे-ऽप्रसिद्धं स्यात्', न ज्ञायेत,—कीदृशं तदग्निहोत्रम्?—इति।

'ननु मासोऽस्य रूपं भविष्यति'। न, मासः कर्माङ्गं, कर्तृधर्मः सः। अपि च, अग्निहोत्रं तु मासे विधीयते, न मासेन अग्निहोत्रं रूप्यते। तस्मात् नैयमिकस्य एतन्नामधेयम्, इतरच्च तदतिदेशः—इति॥ (७।३।१ अ०) ॥

'किम् एष एव उत्सर्गः,—सर्वं कर्मनाम, अन्यत्र श्रूयमाणं धर्माणां ग्राहकम्?'—इति। एवं खलु प्राप्तम्। एवं प्राप्ते इदम् आरभ्यते,—

प्रायणीयेतिनाम्ना धर्म्मानतिदेशाधिकरणम् ॥

सू. अपि वा सत्रकर्म्मणि गुणार्थैषा श्रुतिः स्यात् ॥ ५ ॥ (सू०) ॥

भा. गवामयने श्रूयते,—'वैश्वानरो ज्योतिष्टोमः, प्रायणीयम् अहर्भवति'—इति। अस्ति तु द्वादशाहे प्रथमम् अहः प्रायणीयं नाम, 'प्रायणीयोऽतिरात्रे'—इति ; तयोर्नानात्वं तेनैव न्यायेन सिद्धं, "प्रकरणान्तरे प्रयोजनान्यत्वम्" (२।३।२४ सू०)—इति ; तत्र अयं प्रायणीयशब्दः परत्रापि श्रूयमाणो न धर्म्माणां ग्राहकः, किन्तर्हि ?—'गुणार्थैषा श्रुतिः'। कथम्?। लक्षणया नामधेयं धर्म्माणां ग्राहकम् उक्तम्, असति च श्रुत्यर्थे लक्षणार्थो ग्राह्यः, इह तु श्रुत्यर्थः एव सम्भवति, गुणार्थः एष शब्दः, गुणेन क्रियायोगेन, तस्मिन् कर्म्मणि श्रुत्यैव प्रयुज्यते, प्रयन्ति अनेन—इति प्रायणीयं,—प्रवर्त्ततेऽनेन सत्रम्—इति। वाक्यशेषश्च अस्य, एतमेवार्थम् आह, 'ज्योतिरेव पुरस्तात् दधाति'—इति, येन ज्योतिः प्रायणीयं भवति, तेन ज्योतिः पुरस्तात् क्रियते—इत्यर्थो, 'ज्योतिरेव पुरस्तात् दधाति'—इति। तस्मात् न धर्म्मातिदेशः ॥ (७।३।२ अ०)॥

---

सर्व्वपृष्ठशब्देन षट्पृष्ठानामतिदेशाधिकरणम् ॥

सू. विश्वजिति सर्व्वपृष्ठे तत्पूर्व्वकत्वात् ज्योतिष्टोमिकानि पृष्ठानि अस्ति च पृष्ठशब्दः ॥ ६ ॥ (पू०) ॥

भा. 'विश्वजित् सर्वपृष्ठो भवति'—इति श्रूयते। तत्र विचार्यते, किम् अयम् अनुवादः, विधिः ?—इति। किं प्राप्तम् ?—अनुवादः—इति। कुतः ?। यो हि असर्वपृष्ठः, तस्य सर्वपृष्ठता विधेया, यस्तु सर्वपृष्ठ एव, तस्य तया किं विहितया ? अयं च

भा. सर्वपृष्ठ एव। कथम्?। 'तत्पूर्वकत्वात्' (ज्योतिष्टोमपूर्वकत्वात्), 'ज्यौतिष्टोमिकानि' स्तोत्राणि अत्र प्राप्यन्ते, तेषु माहेन्द्रस्तोत्रादीनि चत्वारि सन्ति, तानि सर्वाणि अस्य, तैरयं सर्वपृष्ठो भवति। 'ननु न तानि पृष्ठानि'। उच्यते,—'अस्ति च पृष्ठशब्दः',—तेषु अस्ति पृष्ठशब्दः, '[illegible]मानि पृष्ठानि'—इति। तस्मात् अनुवादः॥

सू. षडहाद्वा तत्र हि चोदनाः॥ ७॥ (सि०)॥

भा. न अयम् अनुवादः। किं तर्हि?—विधिः; अनुवादोऽप्रवृत्तिविशेषकरोऽनर्थकः स्यात्। अपि च ज्योतिष्टोमे न पृष्ठषड्त्वम् अस्ति, यस्य अयम् अनुवादः स्यात्; षडहे तु तत्रास्ति, 'तत्र हि चोदनाः',—पृष्ठानां रथन्तरं पृष्ठं भवति'—इत्येवमाद्याः। तस्मात् षाडहिकानामतिदेशको विधिः—इति॥

सू. लिङ्गाच्च॥ ८॥ (यु०)

भा. लिङ्गं चैतमर्थं दर्शयति,—'पवमाने रथन्तरं करोत्यार्भवे बृहत्, मध्ये इतराणि, वैरूपं होतुः साम, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिनः, शाक्वरमच्छावाकस्य'—इति विनिवेशपरे वाक्ये षाडहिकानि पृष्ठानि* दर्शयति॥

सू. उत्पन्नाधिकारो ज्योतिष्टोमः॥ ९॥ (आ० नि०)॥

भा. अथ यदुक्तम्,—'अस्ति च पृष्ठशब्दः'—इति। तत्र ब्रूमः,—न तु एष औत्पत्तिकः पृष्ठशब्दः, उत्पन्नानां स्तोत्राणाम् असौ अधिकारः,—यान्येतानि पृष्ठानि—इति, ज्ञाते च तेषां पृष्ठत्वे, तत् उपपद्यते, न च, तत्र ज्ञातं। कथं तर्हि अयम् अनुवादः?।

---

* "षडहे प्रतिदिनमेकैकं पृष्ठं विहितं, तानि च पृष्ठानि षट्,—रथन्तर-बृहद्-वैरूप-वैराज-शाक्वर-रैवत-समभि-निष्पाद्यानि" इति न्यायमाला।

भा. लिङ्गसमवायात्, एवं तत्र पृष्ठं माहेन्द्रस्तोत्रम्—इति, षाड्‌हिकानां पुनः पृष्ठत्वं ज्ञातं। कथं?। तत्र हि चोदनेत्युक्तं, तेषां वादे, श्रौतः पृष्ठशब्दस्य अर्थः परिगृह्यीतो भवति, इतरथा लाक्षणिकः। तस्मात् षाड्‌हिकानां प्रदेशः—इति॥

सू. द्वयोर्विधिरिति चेत्॥१०॥ (आ०)॥

भा. 'इति चेत्' पश्यसि,—षाड्‌हिकानां पृष्ठानां विधिः—इति, नैतत् युक्तम्। किङ्कारणम्?। द्विकर एवं सर्वपृष्ठशब्दः अभ्युपगम्यते,—पृष्ठानि च विदधाति, तेषां च सर्वत्वम्। 'अस्तु, को दोषः?। असम्भवः—इत्याह,—यदि पृष्ठशब्दः पृष्ठानि विदधाति, सर्वशब्देन न शक्यते विशेषयितुम्; अथ अनुवदति, तथा शक्यते; पृष्ठानि त्वविहितानि भवन्ति, तेषु असत्सु कस्य इदं सर्वत्वं विधीयते, उभयक्रियायास्तु असम्भवः।

अथ अत्र, बृहद्रथन्तरयोर्विकल्पेन प्राप्तयोः सामस्त्यं केवलं विधीयते,—(सर्वपृष्ठो भवति)—इति; उभे अपि बृहद्रथन्तरे भवतः, नैकम्—इति; ततोऽयं दोषो न भवति। तस्मात् द्वयोरधिकारः॥

सू. न व्यर्थत्वात्सर्वशब्दस्य॥११॥ (आ० नि०)॥

भा. नैवमेतत्। कुतः?। 'व्यर्थत्वात् सर्वशब्दस्य', एवं सति सः शब्दो व्यर्थो भवति (अर्थशून्यः), अयं हि बहुविषयो द्वयोर्न युज्यते; षाड्‌हिकानां तु विधाने न एष दोषः। 'ननु च तत्रापि द्विकरः शब्दो भविष्यति'। उच्यते, न भविष्यति, सर्वत्वं केवलं पृष्ठानां विधास्यति, न पृष्ठानि। 'ननु उक्तं, पृष्ठेषु असत्सु कस्य इदं सर्वत्वं विधीयते?'—इति। उच्यते,—पृष्ठानां सर्वत्वं हि विहितं, तत् सम्पादयितव्यं, न च पृष्ठानि अकुर्वता, तत् सम्पादयितुम् शक्यते, तत्र अर्थात् पृष्ठानि करिष्यति, एवं न

भा. इत्यर्थः शब्दो भविष्यति, सर्वशब्दस्य सामर्थ्यतः। तस्मात् पाशुबन्धिकानाम् अतिदेशः—इति॥ (७। २। ३ अ॰)॥

---

अवभृथनाम्ना सौमिकधर्मातिदेशाधिकरणम्॥

सू. तथावभृथः सोमात्॥ १२॥ (सि॰)॥

भा. वरुणप्रघासेषु श्रूयते,—'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति'—इति। तत्र सन्देहः,—किं दार्शपूर्णमासिके अपां प्रक्षेपके तुषनिष्कासं* विधीयते, उत सौमिकादवभृथात् धर्मातिदेशः? —इति। किं युक्तं?—दार्शपूर्णमासिके गुणविधिः, एवं सन्निहित-प्रत्ययोऽनुगृह्यते, सन्निहितो हि असौ चोदकेन प्रापितः। 'ननु न असौ अवभृथः'। उच्यते,—अस्ति तत्र अवभृथशब्दः—इति, 'एष वै दर्शपूर्णमासयोरवभृथः'—इति। एवं प्राप्ते इदम् आह, 'तथा अवभृथः सोमात्', यथा पशुबन्धात् पृष्ठानाम् अतिदेशः, एवं सौमिकात् अवभृथात् इह धर्मातिदेशः। कुतः?। अभिहितो न्यायः,—"उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्" (७। ३। १ सू॰)—इति॥

सू. प्रकृतेरिति चेत्॥ १३॥ (आ॰)॥

भा. अथ यदुक्तं,—दार्शपौर्णमासिके अवभृथे गुणविधिर्भवतु—इति, तस्य कः परिहारः? इत्याशङ्कार्थं सूत्रम्॥

सू. न भक्तित्वात्॥ १४॥ (आ॰ नि॰)॥

भा. नैतत् युक्तम्। कुतः?। यतो नास्ति दर्शपूर्णमासयोः अवभृथः। 'ननु, 'एष वै दर्शपूर्णमासयोरवभृथः'—इति श्रूयते'।

---

* निष्कास पात्रिकाया लेपः। "प्राच्यां दिशि देवा ऋत्विजो मार्जयन्ताम् इत्यादिमन्त्रैर्दर्शपूर्णमासयोर्दिक्षु सर्वासु याप उपसिच्यन्ते, सोऽयं अपांसेकः" इति माधवः।

भा. सत्यं ब्रूषते,—न तु एवम् अवभृथत्वम् अस्य भवति। कथम्?। उच्यते,—'एष वै दर्शपूर्णमासयोरवभृथः'—इत्येतस्य वाक्यस्य द्वयी वचनशक्तिः, निर्ज्ञातावभृथत्वस्य पदार्थस्य वा दर्शपूर्णमाससम्बन्धः उच्यते, (यथा देवदत्तो यज्ञदत्तस्य पुत्रः—इति निर्ज्ञातपुत्रत्वस्य देवदत्तस्य यज्ञदत्तसम्बन्धः उच्यते, निर्ज्ञातसम्बन्धस्य वा अनिर्ज्ञातावभृथत्वस्य अवभृथत्वं (यथा, अयम् आम्नो यज्ञदत्तस्य पुत्रः—इति, निर्ज्ञातयज्ञदत्तसम्बन्धस्य आम्नस्य पुत्रत्वम् उच्यते) ; तदस्य अपां व्युत्सेकस्य दर्शपूर्णमाससम्बन्धः प्रकरणात् निर्ज्ञातः, न अवभृथत्वम्; अतोऽस्य अवभृथत्वम् उच्यते, न च अयम् अवभृथः।

'ननु अयम् अप्यवभृथो भवतु'। नैतत् युक्तं, अन्यायो हि अनेकार्थत्वम्। कथं तर्हि शब्दप्रयोगः?। सादृश्यात्। किं सादृश्यम्?। अप्सु सम्बन्धः, स एव भक्त्या प्रशंसावादः अपां व्युत्सेकस्य,—अवभृथः इवायम्—इति, यथा आम्ने पुत्रवादः। तस्मात् नास्ति दर्शपूर्णमासयोरवभृथः। अतो नात्र गुणविधिः॥

सू. लिङ्ग-दर्शनाच्च ॥ १५ ॥ (यु० २) ॥

भा. लिङ्गं चैतम् अर्थं दर्शयति। किं लिङ्गं भवति?। एवम् आह, 'नापुर्दा जुहोति, न साम गायति, न वा गमनमर्च जपति'—इति, सौमिकावभृथधर्माणां प्रतिषेधं ब्रुवन् तद्धर्मप्राप्तिं दर्शयति। तस्मात् सौमिकात् अवभृथात् धर्मप्रदेशः—इति॥ (७।३।४ अ०) ॥

---

वारुणप्राघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ॥

सू. द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात्पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ १६ ॥

भा. वारुणप्राघासिकोऽवभृथः, सौमिकात् अवभृथात् धर्माणां ग्राहकः—इत्युक्तं; तत्र इदं चिन्त्यते,—किं पुरोडाशद्रव्यकः असौ, उत तुषनिष्कासद्रव्यकः?—इति। किं प्राप्तम्?—पुरोडाश-द्रव्यकः—इति। कुतः?। नाम्ना पुरोडाशः प्राप्यते। 'ननु प्रत्यक्षश्रुतं तुषनिष्कासम्'। सत्यं प्रत्यक्षश्रुतं, न तु शक्यते विधातुम्; अवभृथः अत्र विधीयते,—'अवभृथं यन्ति'—इति, यदि तुषनिष्कासमपरं विधीयेत, ततो वाक्यम्भिद्येत,—'अवभृथं यन्ति', तत्र तुषनिष्कासेन—इति। तुषनिष्कासश्रवणम् इदानीं किमर्थम्?। अनर्थकं, सम्बन्धाभावात्।

एवं प्राप्ते ब्रूमः,—'द्रव्यादेशे तद्द्रव्यः',—द्रव्यादेशः एतस्मिन्, 'तुषनिष्कासेन अवभृथं यन्ति'—इति, 'तद्द्रव्यः' स्यात्, तुष-निष्कासद्रव्यः। कुतः?। 'श्रुतिसंयोगात्,' तुषनिष्कासं प्रत्यक्ष-श्रुतं, पुरोडाशस्तु आनुमानिकः, अतिदेशेन प्राप्यते।

'ननु पुरोडाशोऽपि प्रत्यक्षश्रुतो नाम्ना'। यद्यपि प्रत्यक्ष-श्रुतः, सामान्येन तु प्राप्यते, तुषनिष्कासं तु विशेषेण; बाध्यते च सामान्यं विशेषेण। अपि च लक्षणया पुरोडाशो गम्यते, श्रुत्या तुषनिष्कासं, श्रुतिलक्षणयोश्च श्रुतिर्न्याय्या; तस्मात् तुषनिष्कासद्रव्यकः—इति। अथ यदुक्तं,—न सम्बध्यतेऽवभृथेन तुषनिष्कासं, वाक्यभेदप्रसङ्गादिति, तत्र ब्रूमः,—यद्यवभृथं विहाय तुषनिष्कासं विधीयते, ततो वाक्यभेदः स्यात्। तुष-निष्कासद्रव्यकोऽपूर्व्वः अवभृथश्चोद्यते, तथा, सगुणकर्मविधानम् अविरुद्धम्, अविधीयमाने च तुषनिष्कासे तद्ग्रहणम् अनर्थकमेव स्यात्। तस्मात् तुषनिष्कासद्रव्यकः। 'पुरोडाशस्त्वनादेशे

भा. तत्प्रकृतित्वात्', यदि च मत्यवमुतं न दृष्टं स्यात्, ततः पुरो-ळाशस्तुषप्रकृतित्वात् स्यात्, अत्र तु मत्यवमुतं तुषनिष्कासं, तस्मान्न पुरोळाशः (७ । ३ । ५ अ०) ॥

वैष्णवशब्दादातिथ्ये धर्मातिदेशाधिकरणम् ॥

आतिथ्ये श्रूयते,—'वैष्णवो नवकपालो भवति'—इति, तथा राजसूये, 'पूर्णस्मिंस्त्रिसंयुक्ते वैष्णवस्त्रिकपालः'—इति। तत्र विचारः,—योऽयं त्रिसंयुक्ते वैष्णवस्त्रिकपालः—इति वैष्णवशब्दः, अयम् आतिथ्यधर्माणां ग्राहकः, न?—इति। किं युक्तम्?। ग्राहकः,—इति। कुतः?। विहितधर्मके कर्मणि दृष्टः शब्दोऽन्यस्मिन् अविहिते श्रूयमाणो ग्राहकः—इत्युक्तम्, "उक्तं क्रियाभिधानम्" (७ । ३ । १)—इति। तत्र अयमपि विहित-धर्मकः आतिथ्ये दृष्टः, इदानीम् अविहितधर्मके त्रिसंयुक्ते दृश्यते। तस्मात् धर्माणां ग्राहकः—इति। एवं प्राप्ते ब्रूमः,—

सू. गुणविधिस्तु न गृह्णीयात्समत्वात् ॥ १७ ॥

भा. गुणविधिरयम्, आतिथ्यस्य गुणं विष्णुदेवतासंयोगं वि-दधाति, स एव धर्मान् ग्रहीतुम् न शक्नोति। कुतः?। 'समत्वात्', समो हि अयम् आतिथ्ये त्रिसंयुक्ते च, यथा तत्र विष्णुं देवतां विदधाति—एवम् अत्रापि; श्रुत्यर्थासम्भवाच्च लक्षणया धर्माणां ग्राहकः कल्प्यते, इह च मत्यवश्रुत्यर्थः एव संभवति देवता-विधिः। तस्मात् न अयं ग्राहकः—इति ॥ (७ । ३ । ६ अ०) ॥

---

निर्मन्थ्यादिशब्दे धर्मातिदेशाधिकरणम् ॥

सू. निर्मन्थ्यादिषु चैवम् ॥ १८ ॥

भा. पशौ अग्नीषोमीये धर्मवान् निर्मन्थ्योऽग्निः आम्नातः,—'साक्षा

भा. वै देवाः'—इत्यारभ्य अग्नौ श्रूयते, 'निर्मन्थ्येनेष्टकाः पचन्ति'—इति ; तथा, दर्शपूर्णमासयोः बर्हिराज्ये धर्मवती, पशौ श्रूयते, 'बर्हिषा यूपावटम् अवस्तृणाति'—इति, 'आज्येन यूपम् अनक्ति'—इति । तत्र सन्देहः,—किं निर्मन्थ्यादयः शब्दाः धर्माणां ग्राहकाः, न ?—इति । तत्र अधिकरणातिदेशः क्रियते,—'निर्मन्थ्यादिषु चैवम्', यथा वैष्णवशब्दे ; अत्रापि अयं यौगिको* निर्मन्थ्यशब्दः, सद्योनिर्मथितमग्निम् आह । तथा† 'बर्हिः' 'आज्यम्'—इति द्रव्यशब्दौ । ते चयोऽपि स्वार्थं विधाय कृतार्थौ भवन्ति, धर्मान् ग्रहीतुम्, न शक्नुवन्ति । तस्मात् न ग्राहकाः ॥ (७।३।७ अ०)॥

'द्वयोः प्रणयन्ति' इत्यनेन सौमिकधर्माणामतिदेशाधिकरणम् ॥

भा. चातुर्मास्येषु श्रूयते,—'द्वयोः प्रणयन्ति, तस्मात् द्वाभ्यामेति'—इति । अस्ति तु सोमे प्रणयनं धर्मवत्, तथा दर्शपूर्णमासयोः अधर्मकम् । तत्र सन्देहः,—किं सौमिकमेतत् प्रणयनं, उत दार्शपौर्णमासिकम्?—इति । तत्र सूत्रेणैव उपक्रमः,—

सू. प्रणयनन्तु सौमिकमवाच्यं हीतरत् ॥ १९ ॥ (पू०) ॥

भा. 'सौमिकम्' एतत् 'प्रणयनम्' । किङ्कारणम्? । 'अवाच्यं हि इतरत्' (दार्शपौर्णमासिकं), चोदकेन प्राप्तत्वात् । 'कथम् पुनरयं प्रणयतिशब्दः, प्रणयनमात्रवचनः सन् सौमिकं प्रणयनविशेषं शक्नोति वक्तुम्?' । लक्षणयेति ब्रूमः, तीर्थशब्दवत्, तत् यथा, तीर्थशब्दः, तीर्थमात्रवचनः सन् तीर्थविशेषं धर्मसाधनं कदाचित् ब्रूते,—तीर्थयात्रां गतः'—इति ॥

---

* 'वैदिको' इति का० सं० पु० पाठः ।
† तथा च इति आ० सो० पु० पाठः ।

F

सू. उत्तरवेदिप्रतिषेधश्च तद्वत् ॥ २० ॥ (यु०) ॥

भा. 'न वैश्वदेवे उत्तरवेदिम् उपवपन्ति* न शुनासीरीये'—इति, प्राप्तिपूर्व्वो हि प्रतिषेधो भवति, सौमिके च प्रणयने उत्तरवेदिर्न दार्शपौर्णमासिके ॥

सू. प्राकृतं वाऽनामत्वात् ॥ २१ ॥ (सि०) ॥

भा. 'प्राकृतं वा' एतत् प्रणयनं, दार्शपौर्णमासिकं। कुतः?। 'अनामत्वात्'—प्रणयनशब्दः, सौमिकस्य प्रणयनस्य न नामधेयं, नैतत् तस्य वाचकम्—इत्यर्थः; यदि अयं तस्य वाचकः स्यात्, ततः तदिह ब्रूयात्, इदं तु पदार्थनामधेयं, पदार्थस्य प्राङ्नयनस्य वाचकं, तदिह शक्नोति अग्नेः प्राचीनं नयनं वक्तुम्, तच्च इह अस्त्येव। तस्मात् तस्य वाचकः, एवं सन्निहितप्रत्ययो न बाधितो भवति।

अथ यदुक्तं,—तीर्थशब्दवत् भविष्यति—इति। अत्र ब्रूमः,—तीर्थशब्दोऽपि तीर्थमात्रमेव ब्रूते, तीर्थयात्रां गतः— इति तु उक्ता कानिचित्तीर्थानि अनुक्रान्तानि, यतोऽसौ तद्विशिष्टार्थो विज्ञायते, यत्र तु केवलः प्रयुज्यते, तत्र तीर्थमात्रमेव ब्रूते, यथा, तीर्थे स्नाति. तीर्थमेव हि समानानां भवति—इति। अपि च सम्भवति श्रुत्यर्थे, लक्षणार्थोऽन्याय्यः; सम्भवति च अत्र श्रुत्यर्थः। तस्मात् न लक्षणार्थो न्याय्यः—इति ।

सू. परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥ २२ ॥ (आ० नि०) ॥

भा. 'तत्र आह,—यदुक्तम् 'अवाचंग हि इतरत्'—इति, तस्य कः

---

* 'उपकिरन्ति' इति आ० सो० पु० पाठः। 'उपयन्ति' इति न्यायमालायां पाठः।

भा. परिहारः?'। उच्यते, 'परिसङ्ख्यार्थं' वा स्यात्,—'द्वयोः प्रणयन्ति', न चतुर्ष्विति, 'गुणार्थम्' अर्थवादार्थं 'वा' 'तस्मात् द्वाभ्यामेति'—इति। तत्र परिसङ्ख्यायां तावत् त्रयो दोषाः, गुणोऽपि न कश्चित् विधीयते, परिशेषात् अर्थवादार्थम्। 'ननु अर्थवादोऽपि निष्प्रयोजनः, प्रणयनस्य प्राप्तत्वात्'। अर्थवादस्य प्रयोजनम्, उत्तरस्मिन् अधिकरणे वक्ष्यामः, "मध्यमयोर्वा गत्यर्थवादात्"—इति॥ (७।२।८ अ०)॥

---

'द्वयोः प्रणयन्ति' इत्यनेन मध्यमयोर्द्वयोः प्रणयनाधिकरणम्॥

सू. प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात्॥ २३॥ (पू०)॥

भा. 'द्वयोः प्रणयन्ति'—इति श्रूयते। तत्र सन्देहः,—कतरयोर्द्वयोः?—इति। अनियमे प्राप्ते, उच्यते,—'प्रथमोत्तमयोः प्रणयनम्'। कुतः?। 'उत्तरवेदिप्रतिषेधात्', तत्र उत्तरवेदिः प्रतिषिध्यते, 'न वैश्वदेवे उत्तरवेदिम् उपवपन्ति'—इति, 'न शुनासीरीये'—इति। अस्मिन् प्रणयने उत्तरवेद्यामग्निनिधानं विहितम्; अतो यत्र प्रणयनं, तत्र उत्तरवेदिप्राप्तिः, प्राप्तौ च सत्यां प्रतिषेधः, प्रथमोत्तरयोश्च असौ; तस्मात् तयोः प्रणयनम्—इति॥

सू. मध्यमयोर्वा गत्यर्थवादात्॥ २४॥ (सि०)॥

भा. 'मध्यमयोर्वा' पर्वणोः प्रणयनम्। कुतः?। 'गत्यर्थवादात्', गत्यर्थवादेनैतत् द्वयोः प्रणयनमुच्यते, 'तस्मात् द्वाभ्यामेति'—इति। 'अवसंस्तृते वा एते पर्वणी, 'ऊरू वा एतौ यज्ञस्य, यत् वरुणप्रघासाश्च साकमेधाश्च'—इति, ऊरू च गमनसाधने, तत्रैवं स्तुतिसम्बन्धो विज्ञायते,—ऊरू यज्ञस्य, वरुणप्रघासाश्च साक-

भा. मेधास्येति, तयोर्द्वयोः प्रणयन्ति ; तस्मात् द्वाभ्यां अवभ्यां यज्ञः समाप्तिं याति ; प्रणयनेन हि तौ बलवन्तौ भवतः, अङ्गभूयस्त्वात् इति,—एतत् तदर्थवादस्य प्रयोजनम्।

अथ यदुक्तं,—'उत्तरवेदिप्रतिषेधात्'—इति ; तत्र ब्रूमः,—

सू. औत्तरवेदिको नारभ्यवादप्रतिषेधः ॥ २५ ॥

(आ० नि०) ॥

भा. अनारभ्य कञ्चित् पर्वविशेषं, चातुर्मास्येषु उत्तरवेदिः आम्नाता, 'उपाच वपन्ति' इति ; तस्य अनारभ्य—विधेरयं प्रतिषेधः। 'ननु वरुणप्रघासानां गुणवाक्यप्राप्तौ एव अयं तेषामेव 'अत्र' इति वादः स्यात्'। नैतदेवं, प्रकरणात् चातुर्मास्यानामेव, यदि वरुणप्रघासानां वादः स्यात्, तत्र प्रतिषेधे त्रीण्यपि पर्वाणि उत्कीर्त्तयेत्। 'अथोच्येत, द्वयोः पर्वणोर्वादो भवतु'—इति। अत्र ब्रूमः, न द्वयोः पर्वणोः प्रकरणं, चातुर्मास्यानां वा प्रकरणं, वरुणप्रघासानां वा ; वरुणप्रघासानां द्वयोः प्रकरणे पर्वणोरुत्कीर्तनं प्रतिषेधे न स्यात्* ; तस्मात् चातुर्मास्यानामेव वादः। 'ननु एवमपि अर्थवादेनैतत् ज्ञातं, —मध्यमयोः प्रणयनम्—इति, किमर्थं प्राप्तस्य प्रणयनस्य पुनः-श्रवणम्?'—इति। अत्र प्रयोजनं नोक्तं, असति प्रयोजने-ऽन्यस्मिन्, परिसङ्ख्यार्थमेव भवति, तत्र दोषा उक्ताः ; तस्मात् गुणार्थमेवैतच्छ्रवणम्। 'ननु नास्ति कश्चित् गुणः?'। उच्यते, गुणः श्रूयते,—उत्तरवेद्यामग्निनिधानम् ; तस्मात् तदर्था पुनः-श्रुतिः॥ (७ । ३ । ९ अ०) ॥

* "प्रतिषेधे न समर्थं स्यात्" इति आ० सो० पु० पाठः।

स्वरसामादिशब्देन धर्मातिदेशाधिकरणम् ॥

सू. स्वरसामैककपालामिक्षञ्च लिङ्गदर्शनात् ॥ २६ ॥ (सि०) ॥

भा. गवामयने श्रूयते,—'अभितो दिवाकीर्त्त्यमह्नस्त्रयः स्वरसामानो भवन्ति'*—इति; तेषां विशेषधर्मा आम्नाताः, यथा, 'सप्तदशा भवन्ति, सन्ततयाऽतियाह्या गृह्यन्ते'—इत्येवमादयः; पुनः अन्यत्र श्रूयते, 'पृष्ठ्यः षडहो द्वौ स्वरसामानौ'—इति। तथा, वैश्वदेवे श्रूयते, 'द्यावापृथिव्य एककपालः'—इति; तत्र आम्नाता विशेषधर्माः,—सर्वहुतं जुहोत्यपर्यावर्तयन् जुहोति' —इति; पुनः अपरत्र; 'काय एककपालः'—इति; तत्रैव श्रूयते, 'वैश्वदेव्यामिक्षा'—इति; तत्रापि विशेषधर्माः केचित् आम्नाताः; पुनः अन्यत्र, 'मैत्रावरुणी आमिक्षा'—इति। तत्र सन्देहः,—किं स्वरसामशब्दोऽन्यत्र श्रूयमाणो गवामयनिकेभ्यः स्वरसामभ्यो धर्माणां ग्राहकः, उत न?—इति; एवम्, एककपालामिक्षाशब्दावपि।

तत्र गुणविधिस्तु न गृह्णीयात्, समत्वादित्यग्रहणे प्राप्ते, इदम् उच्यते,—'स्वरसामैककपालामिक्षञ्च' धर्माणां ग्राहकम्। किंकारणम्?। 'लिङ्गदर्शनात्', लिङ्गं तत्र तादृशं दृश्यते, येन ज्ञायते, सर्वे एते धर्माणां ग्राहका इति। स्वरसामसु तावत् 'पृष्ठ्यः षडहो द्वौ स्वरसमानौ' इत्युक्त्वा आह, तत्र यत्तृतीयं सप्तदशमहस्तत् चतुर्विंशस्य स्थाममभिपर्याहरन्ति, स उत्तराणां स्तोमानामव्यवायाय त्रयाणां च सप्तदशानां अनूचीनतायाः'—

---

* "गवामयने द्वयोर्मासषट्कयोर्मध्ये वर्त्तमानं विषवन्नामकं प्रधानभूतमेकमहर्विद्यते, तच्च दिवाकीर्त्त्यं, तस्मात् प्राचीनास्त्रयः स्वरसामनामका अहर्विशेषाः, तथा उपरिष्टादपि त्रयः स्वरसामनामानस्तदेतदभिप्रेत्य श्रूयते, "अभितो दिवाकीर्त्त्यम्" इति व्याख्याता ऽस्यानुसन्धेया।

भा. इति, यद्येतौ खरसामानौ, गवामायनिकानां धर्माणां ग्राहकौ, तत्रैतावपि* सप्तदशौ, तथाऽन्य त्रयः सप्तदशा अनूचीना भवन्ति, तत्र एतद्वचनं युज्यते,—'त्रयाणां सप्तदशानां अनूचीनतायाः' —इति।

तथा आग्रयणे, द्यावापृथिव्यमेककपालं विधाय आह, 'यत् सर्वहुतं करोति, सा तु एका परिचर्या, हुतो हुतः पर्यावर्तते सा द्वितीया, आज्यस्यैव द्यावापृथिव्यौ यजेत' इति आज्य-विधिपरे वाक्ये सर्वहोमम् अपर्यावृत्तिञ्च वैश्वदेविकौ धर्मौ प्राप्तौ दर्शयति।

तथा मैत्रावरुण्याम् आमिक्षायां 'न वाजिनेन प्रचरन्ति'— इति वाजिनेज्यां वैश्वदेविकं धर्मं प्रतिषेधंस्ततो धर्मप्राप्तिं दर्शयति। एतेभ्यो लिङ्गेभ्य एतत् ज्ञायते,—यथास्वं धर्माणां ग्राहकाः—इति। प्रतिपत्त्यर्थकर्म्म वाजिनेज्यां स्विष्टकृत्तुल्यां मत्वा एतदुक्तम्। 'आह, लिङ्गं अपदिष्टं, कुतः प्राप्तिः'?—इति। उच्यते, लक्षणया प्राप्तिर्लिङ्गात्तु लक्षणापरिग्रहः॥

सू. चोदनासामान्याद्वा॥ २७॥ (हे०)॥

भा. खरसामत्वसामान्यात्, एककपालत्वसामान्यात्, आमिक्षा-सामान्याद्वा ; यस्य लिङ्गम्, अर्थसंयोगात्--इत्यनेन प्राप्तिः— इति॥ (७।३।१०)॥

वासो ददातीत्यादै वास—आदिशब्दानामाकृतिनिमित्तताधिकरणम्॥

भा. क्वचित् श्रूयते,—'वासो ददाति, अनो ददाति'—इति। तत्र विचार्यते, किं, वाससः, अनसश्च क्रिया प्राप्यते, उत न?— इति। तत्र आह, एवं तावत् नः परीक्ष्यं किं, कर्मनिमित्तावेतौ

---

* 'तत एतावपि' इति का० श्री० पु० पाठः॥

भा. शब्दौ, उत आकृतिनिमित्तौ?—इति; यदि कर्मनिमित्तौ, ततः प्राप्यते; अथाकृतिनिमित्तौ, ततो न?—इति। किं तावत् प्राप्तम्?—कर्मनिमित्तौ—इति। कुतः?। कर्मागमे तद्दर्शनात्, यदा तस्मिन् द्रव्ये दारुणि सूत्रे वा दारुकारेण तन्तुवायेन वा कर्म कृतं भवति, तदैतौ शब्दौ प्रवर्तेते, न प्राक्, अतो विज्ञायते, कर्मनिमित्तौ—इति। यदा कर्मनिमित्तौ, तदेतदारभ्यते,—

सू. कर्मजे कर्म्म यूपवत् ॥ २८ ॥ (पू०) ॥

भा. 'कर्मजे' एतस्मिन् वास—आदौ द्रव्ये श्रूयमाणे, 'कर्म' प्राप्यते। कथम्?। 'यूपवत्', यथा यूपशब्दो जोषणादिक्रियानिमित्तः, स यत्र श्रूयते, तत्र जोषणाद्याः क्रियाः प्राप्यन्ते, एवम् इहापि—इति ॥

सू. रूपं वाऽशेषभूतत्वात् ॥ २९ ॥ (सि०) ॥

भा अत्र उच्यते, नैतौ कर्मनिमित्तौ। किंकारणम्?। ये नैमित्तिकाः शब्दाः, ते निमित्तमुपलभ्य प्रयुज्यन्ते, यथा दण्डो छत्री —इति; इमौ तु अनुपलभ्य क्रियाम्, आकृतिमात्रे प्रयुज्येते; तस्मात् न एतौ क्रियानिमित्तौ'—इति। अत्र उच्यते,—'आकृत्या क्रियाम् अनुमाय ततः शब्दं प्रयुङ्क्ते'—इति। अत्र ब्रूमः,—प्रत्यक्षाम् निमित्ततां गम्यमानाम् उत्सृज्य, अदृष्टायां क्रियायां निमित्तत्वकल्पनायां हेतुर्नास्ति—इति। यत्तूक्तं, क्रियोत्तरकालं प्रवृत्तिदर्शनात्—इति; अत्र ब्रूमः, प्राक् क्रियाया आकृतिरनभिव्यक्ता, सा क्रियया अभिव्यज्यते, यतः क्रियोत्तरकालं शब्दप्रयोगः, तस्मात् आकृतिनिमित्तौ, यद्येवं, तदा सिद्ध—'रूपं' देयम्*। कुतः?। 'अशेषभूतत्वात्',—नात्र क्रिया

---

* सिद्धं रूपं देयमिति कं० सं० द्वितीय पुस्तके पाठः।

भा. शेषभूता, क्रियावाचिनः शब्दस्याभावात्, यूपे तु प्रत्यक्षविहिता जोषणाद्याः क्रियाः, तस्मात् यूपवत्—इति अतुल्योपन्यासः॥ (७।३।११ अ०)॥

---

गर्गत्रिरात्रे लौकिकेऽग्नौ उपनिधानाधिकरणम्॥

सू. विप्रये लौकिकः स्यात् सर्वार्थत्वात्॥ ३०॥ (सि०)॥

भा. गर्गत्रिरात्रे आज्यदोहानि सामानि प्रकृत्य श्रूयते,—'अग्निमुपनिधाय स्तुवते'—इति। तत्र विशयः,—किं, लौकिकोऽग्निः उपनिधेयः, उत वैदिकः?—इति। किं प्राप्तम्?—वैदिकः—इति। कुतः?। सर्वकर्मार्थं उत्पन्नोऽसौ, यानि अहं कर्माणि करिष्ये येष्वास्मि अधिकृतः—इति, अतो वैदिक उपनिधेयः—इति। एवं प्राप्ते उच्यते,—"विप्रये लौकिकः स्यात् सर्वार्थत्वात्",—एतस्मिन्विप्रये लौकिकं वैदिकम्?—इति, 'लौकिकः स्यात्'। अथ यदुक्तं, वैदिकं सर्वकर्मार्थमुत्पन्नं, तस्मात् तदुपनिधेयम्—इति। अत्र ब्रूमः,—

सू. न वैदिकमर्थनिर्देशात्॥ ३१॥ (पू० नि०)॥

भा. 'न वैदिकम्' अग्निद्रव्यं शास्त्रेणोत्पादितं, तस्य शास्त्रेणैव कार्यं निर्दिष्टं,—'यदाहवनीये जुहोति' इत्यारभ्य; तस्मिन् सर्वार्थे कल्प्यमाने निर्देशोऽनर्थकः स्यात्; तस्मात् लौकिकोऽग्निः, उपनिधेयः। सर्वार्थत्वञ्चैषां स्वे स्वे कार्य्ये वर्त्तमानानां भविष्यति; एवमुभयम् अविरुद्धं,—सर्वार्थत्वं निर्देशश्च—इति। अथ धैष्ण्या अग्नयः कस्मात् न उपनिधीयन्ते?। अत्र उच्यते,—

सू. तथोत्पत्तिरितरेषां समत्वात्॥ ३२॥ (आ० नि० ॥

भा. 'इतरेषाम्' अपि अग्नीनां धैष्ण्यानां 'तथोत्पत्तिः' न सर्वार्थं

भा. —इत्यर्थः। कुतः?। 'समत्वात्', एतेऽपि इतरैरग्निभिः समाः, एतेषामपि निर्दिष्टं कार्थं, 'प्रागासीनो धिष्ण्यान् व्याघार-यति'—इति। अतस्ते नोपनिषेधाः—इति॥ (७।२। १२ अ०)॥

---

'उपशयो यूपो भवति' इत्यादौ यूपशब्दस्य संस्काराप्रयोजकताधिकरणम्॥

सू. संस्कृतं स्यात् तच्छब्दत्वात्॥ ३३॥ (पू०)॥

भा. एकादशिन्यां श्रूयते,—'उपशयो* यूपो भवति'—इति। तत्र सन्देहः,—किम्, एतदुपशयद्रव्यं संस्कृतं, ओषणादयः संस्काराः अत्र कर्त्तव्याः, उत न?—इति। किं युक्तं?—'संस्कृतं स्यात्'; —कर्त्तव्या अत्र ओषणादयः संस्काराः। कुतः?। 'तच्छब्दत्वात्', अयं यूपशब्दः संस्कारनिमित्तः, स एषोऽसत्सु संस्कारेषु नोप-पद्यते; तस्मात्ते कार्य्याः—इति॥

सू. भक्त्या वाऽयज्ञशेषत्वाद्गुणानामभिधानत्वात्॥ ३४॥ (सि०)॥

भा. न वा कर्त्तव्याः। कुतः?। 'अयज्ञशेषत्वात्', एते संस्कारा अस्मिन् काष्ठे क्रियन्ते, एतेन द्वारेण, यजतिना सम्भंत्स्यन्ते, —इत्थं संस्कृते काष्ठे नियुक्तेन पशुना यजिः क्रियमाणोऽपूर्व्वं निर्वर्त्तयति। अस्मिंश्च उपशये न पशुर्नियुज्यते, तत्र कृताः संस्कारा अनर्थकाः स्युः। 'ननु वचनसामर्थ्यात् अदृष्टार्थां भविष्यन्ति'। उच्यते, न अत्र वचनं,—यूपः कर्त्तव्यः—इति, वर्त्तमानापदेशोऽयम्। 'ननु वर्त्तमानापदेशोऽपि न घटते, संस्काराणामभावे'। उच्यते, 'भक्त्या' भविष्यति, यथा, 'यज-

---

* "एकादशानां यूपानां समूह एकादशिनी, तत्र दक्षिणतोऽवस्थापित एकादशो यूप उपशयः" इति न्यायमाला॥



Digitized by Google

भा. मानो वै यूपः'—इति। 'आह, तत्र वाक्यात्, इह पुनः कथम्?—इति'। उच्यते, 'गुणानाम् अभिधानत्वात्', यूप-गुणानां (यूपसंस्काराणाम्) 'अभिधानत्वात्'—यूपसंस्काराः तत्र केचित् अर्थप्राप्ताः छेदनादयः तूष्णीकृताः* सन्ति, तैरयम् अभिधीयते,—यूपः—इति अयूपः सन्; यथा स्नाता कन्या अनलङ्कृता मालागुणेनापि अलङ्कृता—इति, एवम् एक-देशेनापि संस्काराणां, 'संस्कृतः'—इति स्तुत्याऽभिधीयते॥ (७।३।१३ अ०)॥

'पृष्ठैरुपतिष्ठन्ते' इत्यादौ पृष्ठशब्दस्य कर्मवाचिताऽधिकरणम्॥

अग्नौ श्रूयते, 'पृष्ठैरुपतिष्ठन्ते'—इति। तत्र चिन्त्यते, किं पृष्ठधर्माः कर्त्तव्याः, उत न?—इति। के पुनस्ते?। सामान्य-धर्मा हिङ्कारादयः, विशेषधर्माः,—'रथन्तरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेद् बृहति समुद्रम्'—इत्येवमादयः। किं तावत् प्राप्तम्?—तत आह,—एतत् तावत् नः परीक्ष्यं, किम् अयं पृष्ठशब्दः कर्मणो वाचकः, उत द्रव्यस्य?—इति। 'ननु सिद्ध-मेतत् कर्मनामधेयं पृष्ठशब्दः—इति, "यस्मिन् गुणोपदेशः प्रधानतोऽभिसम्बन्धः" (१।४।२ सू०)—इत्यत्र'। तास्वेव चोदनासु एतदुक्तं,—सप्तदशानि पृष्ठानि, वैरूपं पृष्ठं, वैराजं पृष्ठम्—इति। इदानीं, 'पृष्ठैरुपतिष्ठन्ते'—इत्यस्यां चिन्त्यते। किं पुनरत्र युक्तम्?। तत आह,—

सू. कर्मणः पृष्ठशब्दः स्यात् तथाभूतोपदेशात्॥ ३५॥ (पू०)॥

भा. 'कर्मणः पृष्ठशब्दः स्यात्'। कुतः?। 'तथाभूतोपदेशात्',—

---

* तूष्णीभूता इति का० क्री० पु० पाठः।

भा. तथाभूतः सन् उपदेशः, अथ* अयं पृष्ठशब्दः कर्मनाम अधिगतः, तथाभूतोऽयमपि। किम् अस्य तथात्वम्?। पृष्ठशब्दसामान्यं, पृष्ठशब्दस्तत्र कर्मवचनोऽधिगतः, स एव अयं; तस्मात् इहापि तद्वचन एव अवगन्तव्यः, विशेषाभावात्। यदि अन्यार्थः कल्प्येत, एकः शब्दोऽनेकार्थः स्यात्। तत्र को दोषः?। शब्दे उच्चरिते संशयः स्यात्, न अर्थप्रत्ययः, तत्र व्यवहारो न सिध्येत्, व्यवहारार्थश्च शब्दप्रयोगः, कारणान्तरं च प्रकरणाद्यपेक्ष्यम्, एकार्थत्वे तु निरपेक्षोऽर्थप्रत्ययः। तस्मात् अनेकार्थत्वम् अन्याय्यं, तस्मात् कर्मनाम पृष्ठशब्दः। यदा कर्मनाम, तदा यदि तावत् तानि कर्माणि इह उपदिश्यन्ते, तत्र उत्पत्तिरेषाम् अनर्थिका। अथ मा भूत् एष दोषः—इत्येतत् उपस्थानं तत्र विधीयते, तत इदं प्रकरणं बाध्येत। तस्मात् सादृश्यविधिरयम्,—'पृष्ठैः उपतिष्ठन्ते',—पृष्ठसदृशैः कर्मभिः उपतिष्ठन्ते—इति, तत्सादृश्यं च धर्मैर्भवति। तस्मात् कर्तव्या धर्माः—इति॥

सू. अभिधानोपदेशाद्वा विप्रतिषेधाद्द्रव्येषु पृष्ठशब्दः स्यात्॥ ३६॥ (सि०)॥

भा. न चैतदेवं,—'कर्मणः पृष्ठशब्दः'—इति, किन्तर्हि?—'द्रव्येषु पृष्ठशब्दः स्यात्', ऋग्द्रव्येषु 'अभित्वा शूर नो नुमः'—इत्येवमादीनाम् ऋचां वाचकः। कुतः?। 'अभिधानोपदेशात्' अभिधानोपदेशोऽयं 'पृष्ठैरुपतिष्ठन्ते'—इति, पृष्ठैः अभिदधाति—इत्यर्थः। 'कथम् पुनः अयम् उपस्थानवचनोऽभिधानार्थः शक्यो विज्ञातुम्?'। उच्यते, उपपदविशेषात्, मन्त्रकरणे उपतिष्ठतेः आत्मनेपदं भवति†, मन्त्रस्तु अभिधानस्य करणं, न उप-

---

* यथा इति का० शो० पु० पाठः।
† "उपान्मन्त्रकरणे—(१।३।२५)" इति पाणिनिसूत्रम्।

मा. स्थानस्य ; उपस्थानं शरीरेण क्रियते, मनसा वा ; तस्मात् अभिधानार्थः। स एष विप्रतिषेधः ; यदि पृष्ठशब्दः कर्मसु कल्प्यते, आत्मनेपदं बाध्यते, न हि तदा मन्त्रः करणं भवति ; अथ आत्मनेपदम् अनुरुध्यते, उपस्थानविप्रतिषेधः, तदा अभिधानार्थता आपतति, तत्र आत्मनेपदानुरोधो न्याय्यः, पृष्ठशब्दो हि लक्षणया पृष्ठसाधनं मन्त्रं ब्रुवन् अर्थवान् भवति, आत्मनेपदं तु मन्त्रकरणेनैव उपपद्यते। अतः पृष्ठसाधनेषु मन्त्रेषु पृष्ठशब्दः।

'आह, नैतत् युक्तं, उपस्थानार्थता हि श्रुत्या उपतिष्ठतेः, आत्मनेपदाल्लिङ्गात् अभिधानार्थता, न च लिङ्गेन श्रुतिर्बाधितव्या'। उच्यते, नैव अत्र श्रुतिर्बाध्यते, स्वार्थमेवोपतिष्ठतिराह समीपस्थानं, तत्तु अभिधानाय, अभिधानं निर्वर्त्तयितुम् अग्निसमीपे तिष्ठेत्—इति तिष्ठतिराह आत्मनेपदात् ; ततोऽविरोधः।

'आह, एवम् अप्यभिधानस्य मन्त्रः करणं, न उपतिष्ठतेः, तत्र असम्बन्धः एव उपस्थानस्य मन्त्रेण। तथा, "पृष्ठैः उपतिष्ठन्ते"—इतिसमुच्चारणम् अनर्थकं स्यात्'। उच्यते, अभिधानमभिनिर्वर्त्तयन् मन्त्र उपस्थानस्य करणं भवति, यत अस्य प्रयोजनं निर्वर्त्तयति ; न हि निष्प्रयोजनम् अनुष्ठीयते, तस्मात् मन्त्रेषु एव पृष्ठशब्दः, मन्त्रेषु चेत्, नास्ति धर्माणां प्राप्तिर्न हि मन्त्राणां धर्माः, अधर्मकाले—इति॥ (७।४।१४ अ०)॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्याध्यायस्य तृतीयः पादः॥

## सप्तमस्य अध्यायस्य चतुर्थः पादः॥



### अथ सौर्य्ये चरौ इतिकर्त्तव्यतावत्त्वाधिकरणम्॥

सू. इतिकर्त्तव्यताविधेर्यजतेः पूर्ब्बवत्त्वम्॥ १॥

भा. अनारभ्य किञ्चिच्छ्रूयते, "सौर्य्यं चरुं निर्व्वपेत् ब्रह्मवर्चसकामः"—इति। तत्र एषोऽर्थः समधिगतः,—यागोऽयं चोद्यते—इति,—"यजतिस्तु द्रव्यफलभोक्तृसंयोगात् एषां कर्मसम्बन्धात्" (२। ३। १४ सू०)—इति। तथा इदमपि उक्तं,—'कर्मफलयोः सम्बन्धे कर्म गुणतः, फलं प्रधानतः'—इति, "प्रत्यर्थं चाभिसंयोगात् कर्मतो हि अभिसम्बन्धः, तस्मात् कर्मोपदेशः स्यात्" (६। १। २ सू०)—इति। इदमपि चोक्तं, यजिः अपूर्ब्बं साधयति, ततश्च अपूर्ब्बात् कालान्तरे फलं भवति—इति,—"चोदना पुनरारम्भः" (२। १। ५ सू०)—इत्यत्र, एवमेतस्मिन् सति, "सौर्य्यं चरुं निर्व्वपेत् ब्रह्मवर्चसकामः"—इत्यत्र सौर्य्ययागेन अपूर्ब्बं कृत्वा ब्रह्मवर्चसं साधयेत् ब्रह्मवर्चसकामः—इत्येवं विज्ञायते।

'आह, यत्र तृतीयायुक्तो यजिः, तत्र युक्तो गुणभावाभ्युपगमः, यथा, 'ज्योतिष्टोमेन स्वर्गकामो यजेत'—इति ; इह तु असत्यां तृतीयायां कथं तृतीयार्थो गम्यते?'—इति। उच्यते,—किम् अत्र तृतीयानिर्द्दिष्टेन यजिना कार्य्यं? यदा स्वभावसिद्धः कर्मणां फलं प्रति गुणभावः, यद्यपि असौ श्रुतः, तथापि अकिञ्चित्कर एव, गतार्थत्वात्, तथा, यद्यपि द्वितीया श्रुतिः, (यथा 'अग्निहोत्रं जुहुयात्'—इति), तथापि विभक्तिव्यत्ययो वा ईप्सिततमस्य वा अविवक्षा कामं वा आनर्थक्यं स्यात् ; न तु कथञ्चित् अपि कर्मणः प्रति गुणभावः शक्योऽपक्रोतुम्। तस्मात् यागेन अपूर्ब्बसाधनम् अत्र उच्यते, तत्र यागो विज्ञायते,

भा. लौकिकोऽसौ पदार्थः, तेन तु कथम् अपूर्वं साध्यते—इत्येतत् न विज्ञायते, इह तु यागेन अपूर्वं साधयेत्—इत्येतावदेवोक्तम्। कथम् साधयेदितीतिकर्त्तव्यता न उक्ता, येषां च अर्थानां ज्ञायत एव इतिकर्त्तव्यता, तेषां कर्त्तव्यत्वमात्रम् उपदिश्यते, यथा ओदनं पचेदिति, येषां तु न ज्ञायते, ते सह इति-कर्त्तव्यतया एव उपदिश्यन्ते, यथा दर्शपूर्णमासौ; एवं चेत् नूनं ज्ञायते, यागेन अपूर्व्वनिर्वृत्तौ इतिकर्त्तव्यता यस्मात् उक्ता, तस्मात् न्यूनम् अत्रास्ति—इति।

'आह, यद्यस्ति लोके, ततो ज्ञायेत एव, अथ नास्त्येव, कथं शक्या ज्ञातुम्?'—इति। उच्यते,—बाढमस्ति लौकिकी वैदिकी च, लौकिकी तावत् पार्वणस्थालीपाकादिषु, वैदिकी दर्शपूर्ण-मासादिषु; यदि तत्पूर्व्वा एताश्चोदनाः तदपेक्षाः सौर्य्ययागेन अपूर्वं साधयेत् यथाज्ञातया इतिकर्तव्यतया—इति, ततो युक्तः इतिकर्त्तव्यताया अविधिः। न च विधीयते, अत इतिकर्त्तव्य-ताया अविधेः 'यजतेः पूर्व्ववत्त्वं', विहितेतिकर्त्तव्यताकत्वम्*—इति।

'अथ ये आहुः,—यजेत यागं कुर्य्यात्—इति, जुहुयात् होमं कुर्य्यात्—इति, तेषां, किं नैव धर्माकाङ्क्षा भवति?'। भवति —इति ब्रूमः,—यद्यपि, अज्ञातेतिकर्त्तव्यतो यजिद्रव्यं देवतां प्रत्युत्सृज्यते—इति, तथापि, यदा फलार्थः क्रियते, तदा धर्मान् आकाङ्क्षति, न हि अधर्मकात् फलं भवति। कथं ज्ञायते?। यो हि अमेध्यं द्रव्यम् उच्छिष्टः शयानो वा प्रौढ़पादो वामेन हस्तेन, वा पादेन, यथाकथञ्चित् देवतायै उत्सृजति, तस्य फलं न भवति—इति शिष्टाः स्मरन्ति। यस्तु मेध्यं द्रव्यं शुचौ देशे प्रयतः प्राङ्मुखो दक्षिणेन हस्तेन समाहितमना

* न अविहितेतिकर्त्तव्यताकत्वमिति आ० सो० पु० पाठः॥

भा. मन्त्रवत् नियमवच्च देवतायै उत्सृजति, तस्य फलं भवति—इति आरभन्ते। तस्मात् यावान् यजतिः फलायाम्नायते, स सर्वान् धर्मान् आकाङ्क्षति, अतः तेषाम् अप्यस्ति धर्माकाङ्क्षा; सत्याम् आकाङ्क्षायां, सन्निहितैर्धर्मैः, अविप्रतिषिद्धः सम्बन्धः प्राप्तौ, विप्राप्तौ त्वानुमानिकैः॥ (७।४।१ अ०)॥

---

सौर्य्ये चरौ वैदिकेतिकर्त्तव्यताधिकरणम्॥

सू. स लौकिकः स्याद्दृष्टप्रवृत्तित्वात्॥ २॥ (पू०)॥

भा. अधुनैवं चिन्त्यते,—किम् अनियमः,—लौकिकी वैदिकी वा इतिकर्त्तव्यता, उत लौकिकी एव, आहोस्वित् वैदिकी?—इति। अत्र विशेषाभावात् अनियमे प्राप्ते, उच्यते,—'स लौकिकः स्यात्', 'स' खलु कर्त्तव्यतोपायः 'लौकिकः स्यात्'। कुतः?। 'दृष्टप्रवृत्तित्वात्', दृष्टा हि अस्य, तत्र तत्र प्रवृत्तिः, यथा पार्वणस्थालीपाके अष्टकाचरौ आग्रहायणीयकर्मणि,—इत्येवं यत्र यत्र यागेन अपूर्वं साध्यते, तत्र तत्र अस्य प्रवृत्तिर्दृष्टा। अतः अन्वयात् विज्ञायते,—यागस्य अपूर्वं साधयतः अयम् उपायः—इति, अयञ्चापि यागः; तस्मात् अस्यापि स एव अभ्युपायः॥

सू. वचनात्तु ततोऽन्यत्वम्॥ ३॥ (आ० नि०)॥

भा. आह,—किम् एष एव उत्सर्गः,—सर्वत्र लौकिकी इति-कर्त्तव्यता?—इति। एवं खलु प्राप्तम्; एवं प्राप्ते ब्रूमः,—'वचनात्तु ततोऽन्यत्वम्'—इति। यत्र प्रत्यक्षं वचनं वैदिक्याः, तत्र न लौकिकी स्यात्, वचनसामर्थ्यात् वैदिकी एव स्यात्, यथा उपसत्सु, गृहमेधीये च॥

सू. लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् ॥ ४ ॥ (सि०) ॥

भा. 'लिङ्गेन वा' इतिकर्त्तव्यता 'नियम्येत'। कतरा?। यस्या लिङ्गं, वैदिक्यास्तु लिङ्गं, तस्मात् वैदिकी। किं पुनर्लिङ्गम्?। सौर्ये तावच्चरौ श्रूयते,—'प्रयाजे कृष्णलं जुहोति'—इति, तथा ऐन्द्रबार्हस्पते, 'अर्द्धं बर्हिषो लुनाति, अर्द्धं न, सर्यन्दितम् अर्द्धं वेद्याङ्करोत्यर्द्धं न'—इति। तथा 'पितृयज्ञेन होतारं वृणीते न आर्षेयम्'—इति; एतैर्लिङ्गैर्ज्ञायते वैदिकी इतिकर्त्तव्यता—इति। कथम्?। 'तद्गुणत्वात्', एते हि प्रयाजादयो वैदिकस्य अपूर्वस्य गुणाः, यदि च तदीयेतिकर्त्तव्यता प्रवर्त्तिता, तत एतेषु कर्मसु एते सन्ति, तत्र एतानि वचनानि उपपद्यन्ते,—'प्रयाजे प्रयाजे कृष्णलं जुहोति'—इत्येवमादीनि। तस्मात् वैदिकी इतिकर्त्तव्यता नियम्येत ॥

सू. अपि वाऽन्यायपूर्व्वत्वाद्यत्र नित्यानुवादवचनानि स्युः ॥ ५ ॥ (आ० १) ॥

भा. 'अपि वा' नैवं स्यात्,—वैदिकी इतिकर्त्तव्यता—इति, यत्कारणम् एतैर्लिङ्गैर्न शक्यते वैदिकी नियन्तुम्। कुतः?। 'अन्यायपूर्व्वत्वात्', न्यायपूर्व्वकं हि वचनं तत्साधकं भवति, न चैतानि न्यायपूर्व्वाणि; न हि वैदिक्याः प्रवृत्तिर्युक्ता, निबद्धा हि सा प्रकरणादिभिः कारणैर्दर्शपूर्णमासादिषु। 'कथं तर्हि एतानि लिङ्गानि?'। उच्यते,—'यत्र नित्यानुवादवचनानि स्युः'; इह 'तावत् अर्द्धं बर्हिषो लुनाति अर्द्धं न'—इति, बर्हिः यत्रैव भविष्यति, यत्कारणं, सतो बर्हिष उच्यते, न च इहास्ति बर्हिः। 'न होतारं वृणीते न आर्षेयम्'—इति नित्यानुवादो भविष्यति।

भा. 'ननु नित्यानुवादः सन् अनर्थको भवति'। किं क्रियतां, यस्य अर्थो नास्ति; 'प्रयाजे प्रयाजे कृष्णलं जुहोति'—इतिवचनं प्रयाजानां भविष्यति। 'कथं पुनरत्र प्रयाजाश्च कृष्णलहोमश्च* शक्यो वक्तुम्, भिद्यते हि तथा वाक्यम्'। एवं तर्हि न प्रयाजान् वक्ष्यति, प्रयाजे कृष्णलहोमं विधास्यति; न च असत्सु प्रयाजेषु कृष्णलहोमः शक्यते कर्त्तुम्, इत्यर्थात् प्रायाजान् करिष्यति। तस्मात् न लिङ्गेन वैदिक्याः नियमः, यथोक्तेन न्यायेन लौकिकी इतिकर्त्तव्यता†—इति॥

सू. मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात्॥ ६॥ (आ० २)॥

भा. तत्र आह,—'अथ कस्मात् नोभे अपि इतिकर्त्तव्यते सह प्रवर्त्तेते?—इति। किमेवं भविष्यति?। एवं तुल्यापेक्षा कर्मणाम् अन्यतरतो न बाधिता भवति'। उच्यते, सह-प्रवृत्तौ, एकया चेत् कर्म निरपेक्षं कृतं, द्वितीयस्याः प्रवृत्तिर्विप्रतिषिद्धा, अतो 'मिथः' प्रवृत्तेः 'विप्रतिषेधात्' 'यथार्थकल्पना स्यात्', एकस्याः प्रवृत्तिः स्यात्—इत्यर्थः। 'कथम् एकस्याः प्रवृत्ते-र्धर्माणां यथार्थकल्पना भवति?'। ये धर्मा येषु कार्येषु प्रकृतौ उत्पन्नाः, ते इहापि तेषु एव भवन्ति, इतरथा द्वितीयस्या धर्माः अयथार्थाः भवेयुः पूर्व्वैर्धर्मैः, तेषां कार्याणां निर्वर्त्तित-त्वात्, एवम् एकस्याः प्रवृत्तेः यथार्थकल्पना भवति, अतो 'यथार्थकल्पना स्यात्'—इत्यनेन एकस्याः प्रवृत्तिः—इत्युक्तं भवेत्, एकस्याः प्रवृत्तौ यथोक्तेनैव न्यायेन लौकिक्याः प्रवृत्तिः—इति॥

---

* कृष्णलाख्य शक्या इति का० श्री० पु० पाठः।

† लौकिक्येव इति का० पु० पाठः।

सू. भागित्वात्तु नियम्येत गुणानामभिधानत्वात्सम्बन्धादभिधानवत् यथा धेनुः किशोरेण ॥ ७ ॥ (आ० नि०) ॥

भा. तुशब्दः पक्षनिवृत्तौ। न तु एवं स्यात्,—लौकिकी इतिकर्त्तव्यता—इति; किन्तर्हि वैदिकी नियम्येत। कुतः?। 'भागित्वात्', वैदिकी अपि भागिनी प्रवृत्तिः, साऽपि हि अपूर्व्वस्य इतिकर्त्तव्यता, समाने च भागित्वे उभयोः, वैदिकी एव स्यात्, 'गुणानामभिधानत्वात्', गुणा एते प्रयाजादयः सौर्य्यादिषु दृश्यमाना अभिधायका भवन्ति एतस्य अर्थस्य, यथा वैदिकी अत्र इतिकर्त्तव्यता—इति बोधका भवन्ति—इत्यर्थः।

कस्मात्?। 'सम्बन्धात्', एते हि तया इतिकर्त्तव्यतया सम्बद्धाः, अतः साहचर्य्यात् तां गमयन्ति। 'अभिधानवत्', यथा कौण्डपायिनानयने 'अग्निहोत्रम्'—इत्यभिधानं कर्मणो वाचकं, तत् कर्म सहचरितान् धर्मान् आनयति, तेषु असत्सु एतदभिधानम् इह न युज्यते—इति तेषां धर्माणाम् तत्र भावो विज्ञायते; एवम् इहापि प्रयाजादीनां दर्शनम् असत्यां वैदिक्यां न युज्यते—इति, तस्या अपि इह भावो विज्ञास्यते। 'ननु असति न्याये लिङ्गम् अकारणम्'। सत्यमेवम्, उक्तस्तु न्यायो 'भागित्वात्'—इति। यत्तु दृष्टप्रवृत्तिर्लौकिकी—इति; तत्र ब्रूमः, यद्यपि दृष्टप्रवृत्तिः स्यात्, तथापि वैदिकी एव 'नियम्येत'। कथम्?। 'यथा धेनुः किशोरेण', तत् यथा, 'कृष्णकिशोरा धेनुः'—इति, यद्यपि धेनुशब्दो गोधेन्वां दृष्टप्रवृत्तिः, तथापि अभिधानसामान्यात् अश्वधेन्वामपि भागी—इति किशोरेण लिङ्गेन अश्वधेन्वां विज्ञायते; एवम् इहापि यद्यपि लौकिकी दृष्टप्रवृत्तिः, तथापि इतिकर्त्तव्यतासामान्येन भागित्वात् लिङ्गेन वैदिकी विज्ञेया॥

सू. उत्पत्तीनां समत्वाद्वा यथाधिकारं भावः स्यात् ॥ ८ ॥ (२य आ० १) ॥

भा. अथ 'वा' नैव लिङ्गेन नियमः—इति। कुतः?। 'उत्पत्तीनां समत्वात्', धर्माणां प्रयाजादीनाम् उत्पत्तयः समाः, सर्वेषाम् आग्नेयाद्यङ्गभावेन, न परस्पराङ्गत्वेन। किम् अतः?। यदि प्रयाजादीनामनुयाजादयोऽङ्गानि स्युः, ततो यत्र प्रधानं, तत्र अङ्गानि—इति प्रयाजदर्शनेन अनुयाजादयोऽनुमीयेरन्, यदा तु समप्रधाना एते, तदा प्रयाजदर्शनेन कामं प्रयाजा अनुमीयेरन्, प्रयाजधर्मा वा, न तु अनुयाजादयः। तस्मात् लिङ्गम् अनियामकम्। यत्तु,—'अभिधानवत्'—इति; अत्र ब्रूमः,—युक्तं तत्र, तत्र हि परशब्दः परत्र प्रयुक्तः सन् धर्मान् अतिदिशति—इत्युक्तम्।

अपि च, विधिरसौ,—अग्निहोत्रवद्धोतव्यम्—इति, अयं पुनः अनुवादः; तेन अत्र प्रयाजादीनामेव नास्ति प्राप्तिः, कुतः अनुयाजादीनाम्? तस्मात् विषमः उपन्यासः,—'अभिधानवत्' —इति। अतो 'यथाधिकारं भावः स्यात्', ये धर्मा यस्य अपूर्वस्य अधिकारे आम्नाताः, ते तत्र एव भवेयुः।

'एवं तर्हि, 'सौर्यं चरुम् निर्वपेत्'—इत्यनेन आख्यातेन प्रधानस्य विधानोत्पत्तिः, शेषाणां च वचनं भवतु। कथङ्कृत्वा?। न अनङ्गं प्रधानम् उपक्रमाणं कस्मैचित् प्रयोजनाय कल्पते —इति, तेन च प्रापितानामङ्गानाम् एतेभ्यो लिङ्गेभ्यो विशेषावधारणं भविष्यति'। तत्र इदम् उच्यते,—

सू. उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन् ॥ ९ ॥ (आ० २) ॥

भा. 'एकस्मिन्' शब्दे प्रधानस्य उत्पत्तिः, अङ्गानां च वचनं न

भा. सम्भवति। किङ्कारणम्?। उत्पन्नं हि प्रधानमङ्गान् अपेक्षते, अपेक्षया च तानि गृह्यन्ते। तस्मात् नैतत् अपि युक्तम्। यदि च 'निर्वपेत्'—इत्यनेन शब्देनाङ्गान्यपि विधीयेरन्, ततः तेषाम् अपि फलसम्बन्धः स्यात्, तथा अङ्गत्वमेव व्याहन्येत। ततोऽयम् अपि वादो न घटते। तस्मात् यथोक्तो लौकिक एव अभ्युपायः॥

सू. विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्त्तेत तथा हि लिङ्गदर्शनम्॥ १०॥ (आ० नि०)॥

भा. 'विध्यन्तो वा' सौर्य्यादिकायां 'चोदनायां प्रवर्त्तेत' न धर्मा लौकिकाः। कः पुनरयं विध्यन्तो नाम?। विधेरन्तो विध्यन्तः। अथ विधिः कः?। यत् वाक्यम् उपलभ्य, पुरुषः कस्मिंश्चित् अर्थे प्रवर्त्तते, कुतश्चित् वा निवर्त्तते स विधिः; विधीयते हि अनेन अर्थः; यथा लोके, 'देवदत्त गामभ्याज शुक्लाम्'—इति, तस्य अभ्याजेति आदिः, इतरोऽन्तः; वेदेऽपि 'दर्शपूर्णमासाभ्यां यजेत'—इति विध्यादिः, विध्यन्तोऽपि प्रधानविधिवर्जितं कृत्स्नं पौरोडाशिकं ब्राह्मणं, तेन समेतोऽयं विध्यादिर्विशिष्टापूर्व-निर्वृत्तिं प्रति पुरुषं प्रवर्त्तयति, तस्मात् सोऽस्यान्तः। तथा, 'सोमेन यजेत'—इति विध्यादिः; सौमिकम् अपि ब्राह्मणं विध्यन्तः; एष विध्यन्तो नाम। एतेषु च सौर्य्यादिषु विध्यादि-रस्ति, विध्यन्तो नास्ति, एतेषु अपि स विध्यन्तः कल्प्येत। कथङ्कृत्वा?। अपरिपूर्णं यत् वाक्यं, तत् अध्याहारेण वा पूर्य्येत, व्यवहितकल्पनया वा, तत्र अध्याहारात् व्यवहितकल्पना ज्यायसी, अध्याहारे हि अश्रुतः कल्प्येत, इतरत्र श्रुतेन सम्बन्धः। तस्मात् व्यवहितो ब्राह्मणावयवोऽस्य परिपूरकः कल्प्यते, यथा, 'वसन्ताय कपिञ्जलानालभते, ग्रीष्माय कल-विङ्कानालभते'—इति, तेन वैदिकी इतिकर्त्तव्यता प्राप्यते।

भा. 'यदि तत् ब्राह्मणम् अस्यान्तः कल्प्यते, तच न भवति; तदे-तन्मयूरनृत्तमापद्यते। तत् यथा, मयूरस्य नृत्यतोऽन्यदपाव्रियतेऽन्यत् संव्रियते, एवम् इहापि इदं संव्रियते तदपाव्रियते'। नैष दोषः,—प्रत्यक्षः तस्य तत्र भावः, इह पुनः आनुमानिकः, न च आनुमानिकं प्रत्यक्षं बाधते। 'इह तर्हि न प्राप्नोति, प्रत्यक्षविरोधात्'। स्यात् एवं, यदि विरोधः स्यात्, न तु अस्ति विरोधः, तत्रापि भविष्यति, इहापि, तदेतत् उक्तं,—'विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्त्तेत'—इति।

'उच्यते, प्रकृतिवत्—इति किम् आह, अष्टमे प्रकृतिनियमं करिष्यति,—इयमस्य प्रकृतिः—इति'। तदुच्यते, विध्यन्तो वा प्रकृतेरिव प्रवर्त्तेत, या या तस्य कर्मणः प्रकृतिः—इति; यस्य आग्नेयः प्रकृतिः, तस्य आग्नेयादेव, यस्य अग्नीषोमीयः, तस्य अग्नीषोमीयात्—इत्येवं सर्वत्र।

'अथ कस्मात् न लौकिको विध्यन्तः कल्प्यते?'। उच्यते, लौकिकस्य विधेरभावात्, विध्यन्त एव नास्ति, कुतः तत्-कल्पना?—इति। 'आह, लौकिकी इतिकर्त्तव्यता प्राप्यताम्, किं विध्यन्तकल्पनया?'—इति। उच्यते, वैदिकी हि अत्र इतिकर्त्तव्यता न लौकिकी। कस्मात्?। 'तथा हि लिङ्गदर्शनं', प्रयाजादि समर्थितं भवति॥

सू. लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात्॥ ११॥
(३य आ०)॥

भा. यदि लिङ्गात् वैदिकोऽभ्युपायो भवति, तेन तर्हि 'अलिङ्गे लौकिकं स्यात्, यत्र कर्मणि किञ्चिल्लिङ्गं नास्ति, तत्र लौकिकं स्यात् विधानं, यथा, 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्, यस्य सजातावीयुः'—इति॥

सू. लिङ्गस्य पूर्व्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत यथा स्थालीपुलाकेन ॥ १२ ॥ (आ० नि०,) ॥

भा. अत्र उच्यते,—स्यात् एवं, यदि लिङ्गहेतुको वैदिक उपायः स्यात्; न तु असौ लिङ्गहेतुकः। किंहेतुकस्तु?। विध्यन्तहेतुकः, विध्यन्तोऽपि न्यायपूर्व्वः, स च न्यायः तुल्यः सर्वेषां कर्मणां वैष्टतानां लिङ्गवतां च। कुतः?। 'चोदनाशब्दसामान्यात्', कर्मचोदानायां शब्दः समानः, सर्व्वत्र विध्यादिरस्ति न विध्यन्तः, तुल्यस्य अपेक्षया अन्यत्र श्रुतेन विध्यन्तेन सम्बन्धः, तदेतत् न्यायपूर्व्वकं लिङ्गमेकत्रापि दृश्यमानं, तुल्यन्यायानाम् सर्व्वेषां धर्मवत्तां ज्ञापयति। यथा स्थाल्यां तुल्यपाकानां पुलाकानां एकम् उपमृद्य अन्येषाम् अपि सिद्धतां जानाति, तुल्यो हेतुः अस्य च अन्येषां च सिद्धत्वस्य—इति। तस्मात् सर्व्वत्र वैदिकी इतिकर्त्तव्यता।

अथ यदुक्तं, दृष्टप्रवृत्तिर्लौकिकी इतिकर्तव्यता—इति। अत्र ब्रूमः,—सामान्यतोदृष्टमेतत् उपदिश्यते, सामान्यतोदृष्टं च यत् अव्यभिचारि, तत् प्रमाणं, सव्यभिचारं च एतत्, दृष्टा हि गणयागादयो अनेवमितिकर्तव्यताकाः। तस्मात् दृष्टप्रवृत्तित्वात्—इत्यहेतुः।

यत्तु वैदिक्या भागित्वात् तत्पूर्व्वकाणि लिङ्गानि भविष्यन्ति —इति; अत्र ब्रूमः,—भागित्वस्य अपूर्व्वेतिकर्तव्यताकत्वं किल हेतुः, तद्भावस्य तस्याः शब्दपूर्वः,—शब्देन च दर्शपूर्णमासयोः असौ विज्ञायते, न सर्व्वत्र—इति; तस्मात् न भागित्वम्। अतो विध्यन्तेनैव इतिकर्तव्यता प्राप्यते, न अन्यथा। 'अथ कस्मात् एतानि वैष्टतानि वाक्यानि न्यूनान्येव न अनुमन्यन्ते, किम् एभिः पूरितैः?'। न्यूनानि अनर्थकानि भवन्ति। भवन्तु को

भा. दोषः?। शिष्टैः एषां सम्परिग्रहो न युज्यते। 'प्रमादात् भविष्यति'—इति। नास्त्यक्षरे भाषायां वा प्रमादः, कुतः एतावति ग्रन्थे भविष्यति?। कथम्?। "तुल्यं च साम्प्रदायिकम्" (१।२।८ सू०)—इत्युक्तम्। व्यामोहोऽपि विदुषां युगसहस्राणि बहूनि न अनुवर्त्तेत, युज्यते च एषाम् अपेक्षया पूरणम्; तस्मात् ऊनानि न अनुमन्यन्ते। अतो वैदिकी इतिकर्त्तव्यता—इति सिद्धम्॥ (७।४।२ अ०)॥

---

गवामयने ऐकाहिकेतिकर्त्तव्यतानुष्ठानाधिकरणम्॥

सू. द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात्तदाख्यं स्यादेकाहवत्॥ १३॥ (पू०)॥

भा. 'प्रजाकामा गवामयनमुपेयुः'—इति सत्रं विधाय आम्नायते, 'ज्योतिर्गौरायुः'—इति, गवामयने द्वादशाहिको विध्यन्तः—इति वक्ष्यति, 'गणेषु द्वादशाहस्य'—इति। तत्र चोदकेन द्वादशाहिका धर्माः प्राप्यन्ते, एकाहानामपि यथास्वं नामभिः प्रातिस्विकाः; ये तत्र द्वादशाहिका ऐकाहिकैः अविरुद्धाः, ते यथाप्राप्तं क्रियन्ते; विरुद्धेषु संशयः,—किं द्वादशाहिको धर्मः कर्तव्यः, उत ऐकाहिकः?—इति। किं प्राप्तम्?—तत्र सूत्रेणैव उपक्रमः, 'द्वादशाहिकम् अहर्गणे तत्प्रकृतित्वात्', द्वादशाहप्रकृतित्वात् विध्यन्तेनैव प्राप्यन्ते।

'ननु एवं नामधेयं बाध्यते'। न बाधिष्यते नामधेयं ज्योतिरादि, 'अधिकागमात्' भविष्यति, ये ज्यौतिष्टौमिकेभ्योऽधिकाः स्तोत्रशस्त्रविकाराः, तदागमात्, 'एकाहवत्', यथा तस्मिन् एव ज्योतिषि एकाहे ज्योतिःशब्दोऽधिकागमात् भवति, सत्सु ज्यौतिष्टौमिकेषु ज्योतिष्टोमेऽभावात्, अधिकधर्मार्थोऽयं शब्दः,

भा. न च अधिकानां द्वादशाहिकैर्विरोधोऽस्ति। तस्मात् द्वादशाहिकं धर्मजातं विरुद्धं कर्तव्यम्—इति।

'अधिकागमात् तदाख्यं स्यात् एकाहवत्'—इत्येतस्य अपरा व्याख्या,—ये द्वादशाहे अधिका ऐकाहिकेभ्यः, केचित् धर्माः उच्यन्ते. 'अभिप्लवोऽन्यहं भवति, गोरिवीतम् अन्वहं भवति'—इति, तेषाम् अधिकानामागमात् 'तदाख्यं स्यात्', एतत् द्वादशाहिकम् अहर्ज्योतिराख्यम् आयुराख्यं वा। कथम्?। 'एकाहवत्', यथा तस्मिन् एव एकाहे अयं ज्योतिरादिशब्दो ज्यौतिष्टौमिकेभ्योऽधिकेषु वैशेषिकेषु धर्मेषु आगतेषु भवति, एवम् इहापि अधिकागमसामान्यात् गौणो भविष्यति, यथा षाड़हिकानां पृष्ठानां भावात् एकाहो विश्वजित् षड़हः—इत्युक्तं, 'तमेकाहं, षड़हः—इत्याचक्षते'—इति। एवम् इहापि; गौणश्चेत् न प्रापकः। तस्मात् नास्ति नामधेयात् धर्मप्राप्तिः—इति॥

सू. लिङ्गाच्च॥ १४॥ (यु०)॥

भा. 'लिङ्गाच्च' एतत् पश्यते,—यथा द्वादशाहिकं कर्तव्यम्—इति। किं लिङ्गं भवति?। 'द्वाभ्यां लोमावद्यति द्वाभ्यां त्वचं द्वाभ्यामसृग् द्वाभ्यां मांसम्'—इति। एवं षड़हिकान् अनुक्रम्याह, 'यत् द्वादशोपसदो भवन्ति, आत्मानमेताभिरवदयते'—इति द्वादशाहिकं धर्मं द्वादशोपसत्त्वं दर्शयति, तत् उपपद्यते, यदि द्वादशाहिकं धर्मजातं विरोधि कर्तव्यम्, इतरथा च ऐकाहिकं षडुपसत्त्वं स्यात्। तस्मात् पश्यामः,—द्वादशाहिकं कर्तव्यम्—इति। तथा इदम् अपरं लिङ्गं, 'यस्य अतिरिक्तम् एकादशिन्यामालभेरन् न प्रियं भ्रातृव्यम् अतिरिच्येत, अथ यत् द्वौ द्वौ पशू समस्येयुः, कनीय आयुः कुर्वीरन् यद्येते ब्राह्मणवन्तः पशव आलभ्यन्ते न अप्रियं भ्रातृव्यमत्यतिरिच्यते

भा. न कनीय आयुः कुर्वीत'—इति, एकाहश्चिन्त्यां विहारं द्वादशाहिकं धर्मं दर्शयति। कथम्?। विहारे सति अतिरेकः पशूनाम् आपद्यते, अतिरेकभयाच्च द्वयोर्द्वयोः समासः, एकाहधर्मप्राप्तौ विहारो न स्यात्, तत्र एतद्दर्शनं न युज्यते। तस्मात् द्वादशाहिकं कार्य्यम्॥

सू. न वा क्रत्वभिधानादधिकानामशब्दत्वम्॥ १५॥ (सि०)॥

भा. 'न वा' द्वादशाहिकं कार्य्यं, किन्तर्हि एकाहिकम्। किंकारणम्?। चोदकेन द्वादशाहिकं प्राप्नोति, नामधेयेन ऐकाहिकं, नामधेयं च चोदकात् बलीयः। कुतः?। प्रत्यक्षत्वात्, प्रत्यक्षं नामधेयं, चोदकं त्वानुमानिकम्। 'ननु विध्यन्तोऽपि प्रत्यक्षः'। सत्यं, प्रज्ञातौ प्रत्यक्षो विध्यन्तः, विज्ञातौ त्वानुमानिकः, नामधेयं पुनर्विज्ञातावपि प्रत्यक्षं, प्रत्यक्षं च अनुमानाद्बलीयः, तस्मात् ऐकाहिकं कार्य्यम्।

'ननु, अधिकार्थं नामधेयम्—इत्युक्तम्'। अत्र उच्यते,—'अधिकानाम् अशब्दत्वम्',—अधिकानां शब्दो नास्ति; इमे ज्योतिरादयः शब्दाः कर्मनामधेयानि—इत्युक्तम्,—"अपि वा नामधेयं स्यात् यदुत्पत्तावपूर्व्वमविधायकत्वात् (१।४।२ सू०)" —इति। यत्तु, "अधिकागमात् तदाख्यं स्यात्"—इति; तत्र ब्रूमः—वचनात् अधिकागमो न नामधेयेन। यत्तु,—तेषु असत्सु शब्दस्य अभावात्—इति, नैते कदाचिदायुरादिषु न सन्ति, कथम् तेषाम् अभावे शब्दस्य अभावो दृष्टः?। यत्तु, ज्योतिष्टोमे नास्ति ज्योतिरादिः शब्दः—इति, कर्मान्तरत्वात्, ज्योतिष्टोमे आयुरादिः शब्दो नास्ति, न धर्माभावात्। तस्मात् ऐकाहिकं विबद्धं धर्मजातं कर्त्तव्यम्—इति, "अधिकागमात् तदाख्यं स्यात्, एकाहवत्"—इत्येतस्य द्वितीयव्याख्यापरिहारः,—गौणः सन्न-

भा. वाङ्मात्रम् अनर्थकं स्यात्। तस्मात् पूर्व्वोक्तेन न्यायेन नामधेयं धर्माणां प्रापकम्—इति ॥

सू. लिङ्गं सङ्घातधर्म्मः स्यात्तदर्थापत्तेर्द्रव्यवत् ॥ १६ ॥
(पू॰ लि॰ नि॰ पू॰) ॥

भा. अथ यल्लिङ्गम् उपदिष्टं,—द्वादशोपसत्त्वदर्शनं, तस्य परिहारः उच्यते,—'लिङ्गं सङ्घातधर्मः स्यात्', लिङ्गमेतत् सङ्घातधर्मः स्यात्, द्वादशाहः अहःसङ्घातः, स फलाय चोद्यते, 'द्वादशाहमृद्धिकामा उपेयुः'—इति, गवामयनमपि अहःसङ्घातान्तरं, तस्मिन् एव कार्य्ये फलसिद्धौ विधीयते, तस्य तत्कार्य्यापत्त्या द्वादशाहधर्मान् गृह्णाति, न चोदकेन, 'द्रव्यवत्', यथा द्रव्ये व्रीहौ धर्माः श्रुतास्ते* तत्कार्य्यापन्नेषु प्रतिनिधिभूतेषु प्राप्यन्ते, न चोदकेन, तद्वत् ॥

सू. न वार्थधर्म्मत्वात् सङ्घातस्य गुणत्वात् ॥ १७ ॥
(पू॰ लि॰ नि॰ उ॰ १) ॥

भा. नैतत् युक्तम्। कुतः?। 'अर्थधर्मत्वात्', अपूर्व्वधर्मत्वात्—इत्यर्थः। अपूर्व्वधर्मो द्वादशोपसत्त्वं, न सङ्घातधर्मः। कस्मात्?। 'सङ्घातस्य गुणत्वात्', अहानि अत्र प्रधानानि, 'द्वादशाहेन'—इति द्वादशत्वं तेषां गुणः, विशेषणम्—इत्यर्थः। विशिष्ये एव कार्थं प्रतीयते, न विशेषणे, यथा,—राजपुरुष आनीयताम्—इत्युक्ते पुरुष आनीयते, न राजा, यथा च, मृष्टं भुङ्क्ते देवदत्तः—इत्युक्ते न शाकं सूपो वा प्रतीयते, यदेव प्रधानं तत् प्रतीयते। किम् अतः?। अतोऽहानि फलवन्ति, न सङ्घातः; फलवतश्च धर्माः। तस्मात् न द्वादशोपसत्त्वं सङ्घातधर्मः; एवं

---

* तेन इति का॰ सं॰ पु॰ पाठः।

भा. चेत् न गवामयने कार्य्यापत्तितः धर्म्माः प्राप्यन्ते। अतो-ऽपरिहारोऽयम् ॥

सू. अर्थापत्तेर्द्रव्येषु धर्म्मलाभः स्यात् ॥ १८ ॥
(पू० लि० नि० उ० २) ॥

भा. यत् उक्तम्,—द्रव्यवत्—इति, युक्तं द्रव्येषु, तत्र हि व्रीहि-कार्य्यापन्ना नीवाराः कार्य्यापत्तितः तद्धर्मान् लभन्ते; इह पुनर्द्वादशोपसत्त्वं नैव सङ्घातधर्मः—इत्यपदिष्टो हेतुः। तस्मात् अदृष्टान्तो—द्रव्यवत्—इति। आह, कथन्तर्हि इदं लिङ्ग-दर्शनम्?। अत्र उच्यते,—

सू. प्रवृत्त्या नियतस्य लिङ्गदर्शनम् ॥ १९ ॥
(पू० लि० नि० १) ॥

भा. गवामयने द्वादशाहिकं प्रथमम् अहः, प्रायणीयोऽतिरात्रः, तस्य धर्मो द्वादशोपसत्त्वं, तदुपादाने मुख्यस्य अनुग्रहः, षडुप-सत्त्वोपादाने जघन्यानां ज्योतिरादीनां, मुख्यस्य प्राप्तकालम् अनुग्रहम् अतिक्रमितुम्, किञ्चित् कार्य्यं* नास्ति। अतः तदनु-ग्रहार्थं द्वादशोपसत्त्वं भवति, तथा मुख्यया 'प्रवृत्त्या नियतस्य' एतद्दर्शनं, न चोदकप्राप्तगा, यस्मात् चोदको नामधेयादबलः। वक्ष्यति च, "विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम्", "मुख्यं वाऽपूर्ब्बचोदनात् लोकवत्"†—इति।

अथ यत् द्वितीयं लिङ्गदर्शनम् उक्तम्, एकादशिन्यां विहार-दर्शनम्; तत्र उच्यते,—

* कारणमिति का० सं० पु० पाठः।

† अत्र "गवामयने द्वादशाहिकं प्रथममहः" इत्यादिः, मुख्यं वा अपूर्वचोदनात् लोक-वत्" इत्येवमन्तोऽप्युक्तोऽयं ग्रन्थः" इत्यादिना वार्त्तिककारेणात्र दोषो निरटङ्कि।

सू. विहारदर्शनं विशिष्टस्यानारभ्यवादानां प्रकृत्यर्थ-
त्वात् ॥ २० ॥ (पू° लि° नि° २) ॥

भा. अनारभ्य एकादशिन्यां विहारः श्रुतः, 'तदादिमभवाः पशवः स्युः', तथा 'तानेवानूचीनान् अहरहरालभेरन्, आग्नेय-मेव प्रथमेऽहनि आलभेरन्, सारस्वतीं मेषीं द्वितीये, सौम्यं बभ्रुं तृतीये, वारुणमन्ततः, अथ पुनः पर्यावर्त्तेषु आग्नेयमेव प्रथमे-ऽहन्यालभेरन्, सारस्वतीं मेषीं द्वितीये, सौम्यं बभ्रुं तृतीये, वारुणमन्ततः'—इति, तत् 'अनारभ्यवादानां प्रकृत्यर्थत्वात्' ज्योतिष्टोमं प्रविष्टं, तत्र अह्नां बहुत्वस्याभावात् असम्भवात् अपरां प्रकृतिं द्वादशाहमागतं, तत्रापि पुनर्ज्योतिरादीनां 'पर्य्यावर्त्तेषु'—इत्येतत् न युज्यते—इति तृतीयां प्रकृतिं गवा-मयने प्रविष्टम्, एवमागतस्य एतद्दर्शनम्—इति ॥ (७।४।३ अ०) ॥

इति श्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये सप्तमस्याध्यायस्य चतुर्थः पादः ॥ समाप्तोऽयं सप्तमोऽध्यायः ॥

अथ प्रतिज्ञाधिकरणम् ॥

सू. अथ विशेषलक्षणम् ॥ १ ॥

भा. एवं तावत् सप्तमेन अध्यायेन, सामान्यतः अतिदेशलक्षणम् उक्तम्,—अविहितधर्मकेषु ऐन्द्राग्न्यादिषु कर्मसु विहितधर्मकेभ्यो दर्शपूर्णमासादिभ्यो धर्मा अतिदिश्यन्ते—इति। तत्र चिन्ता भवति,—किम् एकस्मिन् कर्मणि सर्वकर्मसु धर्मातिदेशः, उत, एकस्मात्?*—इति। अविशेषात् सर्वेभ्यः—इति प्राप्तम्। 'एकेन तु निराकाङ्क्षीकृते कर्मणि द्वितीयधर्मप्राप्तौ किञ्चित् कारणं नास्ति'। सत्यं, तदेव तु न ज्ञायते,—कस्मिन् कस्य?—इति, तदर्थं विशेषलक्षणं वक्तव्यम्,—अस्मिन् अस्य—इति। तदिदम् अध्यायादौ प्रतिज्ञायते, "अथ विशेषलक्षणम्"—इति। 'अथ' इदानीन्तनात् सामान्यातिदेशलक्षणात् अनन्तरं, 'विशेषलक्षणं' वक्ष्यामः। तदुच्यमानं यथाकालं बोद्धव्यम्—इति॥ (८।१।१ अ०)॥

---

विशेषकर्मणो धर्मातिदेशाधिकरणम् ॥

भा. तदेतत् सङ्क्षेपेण एव उच्यते,—

सू. यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥ (सि०)॥

भा. 'यस्य' वैदिकस्य विध्यन्तस्य 'लिङ्गं' किञ्चित्, शब्दगतम्

---

* अत्र "एकस्मिन् कर्मणि ये धर्मा समाम्नायन्ते, ते सर्वकर्मस्वतिदिश्यन्ते, उताहो न एकस्मात् सर्वकर्मस्वतिदेशः?" इति वार्त्तिककृता व्याख्या व्यकारि। "किमेकस्मिन् कर्मणि सर्वकर्मभ्यो धर्मातिदेशः, उत, एकस्मादिति" भा० सो० पु० पाठस्तु समीचीनः।

भा. अर्थगतं वा, वैकृत्यां कर्मचोदनायां, तद्गुणवाक्ये वा दृश्यते, तत्र स* विध्यन्तः स्यात्। कुतः?। 'अर्थसंयोगात्', तस्य अर्थस्य (लिङ्गस्य) तेन विध्यन्तविशेषणेन संयोगोऽनुभूतपूर्व्वः, संयोगिनोश्च अन्यतरो दृश्यमान उत्तरमदृश्यमानमपि अनुमानात् बुद्धौ सन्निधापयति, 'अभिधानवत्', यथा 'अग्निहोत्रम्'—इत्यभिधानं कौण्डपायिने श्रूयमाणं नैयमिकाग्निहोत्रधर्मान् बुद्धौ सन्निधापयति। किम् अतोऽत्र?। एतदतो भवति,—अपूर्व्वं यत् वाक्यं, तत्पूरणसमर्थेन अवयवेन बुद्धौ सन्निहितेन एकवाक्यतां याति, यथा 'दर्शपूर्णमासाभ्यां यजेत' —इति विध्यादिः कथम्?—इति विध्यन्तापेक्षः, अग्न्यन्वाधानादिविधानकाण्डेन, पाठात् बुद्धौ सन्निहितेन एकवाक्यतां याति, —'दर्शपूर्णमासाभ्यां यजेत इत्थम्'—इति; एवं विध्यन्तापेक्षो यो वैकृतो विध्यादिः, सोऽपि वैदिकेन विध्यन्तेन अनुमानात् बुद्धौ सन्निहितेन एकवाक्यतां यास्यति, यथा, 'सौर्य्यं चरुम् निर्वपेत् ब्रह्मवर्चसकामः'—इति। तत्र† कथम्?—इतिविध्यन्तापेक्षायाम् अनेकविध्यन्तसन्निपाते असाधारणेन निर्वपति-शब्देन दार्शपौर्णमासिकविध्यन्तसंयोगिना लिङ्गेन तदीयो विध्यन्तः प्रसज्यते; तत्रापि आग्नेयाद्यनेकापूर्व्वविध्यन्तप्रसङ्गे, एकदेवतात्वेन वा ओषधिना वाऽसाधारणेन लिङ्गेन आग्नेयविध्यन्तो नियम्यते। तदेतदेवं विज्ञायते,—सौर्य्यं चरुम् निर्वपेत् आग्नेयवत्, आग्नावैष्णवम् एकादशकपालं निर्वपेत् अग्नीषोमीयवत्, सर्व्वत्र एवम्; प्रतिपदाख्याने तु गौरवं परिहरद्भिर्ष्टिकारैः सर्व्वसामान्यः शब्दः परिगृहीतः 'प्रकृतिवत्' —इति। एवं, यत्र सूक्ष्ममपि किञ्चित् सामान्यं,—शब्दो

---

* 'तस्य' इति आ० पु० पाठस्तु सम्यक्।

† 'अथ' इति कं० सं० पु० पाठः।

भा. वा अर्थो वा हविर्देवतादि तद्गुणा वा रूपादयो उपलभ्येरन्, तत्र तद्योगो विध्यन्तः कल्प्यः। तदेतत् सङ्क्षेपेण अत्रैव सर्वम् उक्तं, शिष्यहितार्थमुत्तरः प्रपञ्चः। श्लोकमप्युदाहरन्ति,—

'वितीर्य हि महज्ज्ञानमृषिः संक्षिप्य चाब्रवीत्।
इष्टं हि विदुषां लोके समास-व्यासधारणम्'॥

इति॥ (८।१।२ अ०)॥

---

सोमे ऐष्टिकधर्मातिदेशाधिकरणम्॥

सू. प्रवृत्तित्वादिष्टेः सोमे प्रवृत्तिः स्यात्॥ ३॥ (पू०)॥

भा. 'ज्योतिष्टोमेन स्वर्गकामो यजेत'—इति श्रूयते; तत्र विध्यन्तं प्रति चिन्ता,—कुतः अस्मिन् विध्यन्तः स्यात्?—इति। तत् उच्यते, "प्रवृत्तित्वात् इष्टेः सोमे प्रवृत्तिः स्यात्", दार्शपौर्णमासिको विध्यन्तः सोमे स्यात्। कुतः?। 'प्रवृत्तित्वात्', दीक्षणीयादिषु इष्टिषु दार्शपौर्णमासिको विध्यन्तः प्रवृत्तः, दीक्षणीयायाम् आतिथ्यायां प्रायणीयायां पशौ च, तदनन्तरं सोमः, तत्रापि स एव प्रवृत्त्या विज्ञायते, यथा, देवदत्तो भोजयितव्यः, विष्णुमित्रो भोजयितव्यः, माठरः* कौण्डिन्यो भारद्वाजः—इत्युत्तरेष्वपि 'भोजयितव्यः'—इति प्रवृत्त्या अनुबध्यते। तस्मात् ऐष्टिकः सोमे विध्यन्तः॥

सू. लिङ्गदर्शनाच्च॥ ४॥ (यु० १)॥

भा. 'तस्यैकव्रतं प्रयाजानुयाजाः'†—इति च ऐष्टिका धर्माः सोमे दृश्यन्ते। तस्मात् च अस्मिन् ऐष्टिको विध्यन्तः॥

---

* 'पठरः' इति का० सं० पु० पाठः।

† 'एकव्रतं प्रयाजा' इति क० सं० एवं का० सं० पु० पाठः।

सू. कृत्स्नविधानाद्वाऽपूर्ब्बत्वम् ॥ ५ ॥ (सि०) ॥

भा. 'अपूर्ब्बत्वम्' एव हि सोमे, स न कुतश्चित् धर्मान् गृह्णाति। कुतः?। 'कृत्स्नविधानात्', "इतिकर्त्तव्यताविधेर्यजतेः पूर्ब्ब-वत्त्वम्" (७।४।१ सू०) उक्तं, विहितेतिकर्त्तव्यतश्च अयं। तस्मात् अपूर्ब्बः* ॥

सू. स्रुगभिघारणाभावस्य च नित्यानुवादात् ॥ ६ ॥ (यु०) ॥

भा. स्रुगभिघारणस्य च अभावानुवादः सोमे भवति,—'घृतं वै देवावज्रं कृत्वा सोममघ्नन् स्रुचौ बाहू, तस्मात् स्रुचि सोम-हविर्नासाद्यते, न सोममाज्येनाभिघारयन्ति'—इति, तत् उप-पद्यते, यदि अपूर्ब्बः सोमः, अथ दर्शपूर्णमासप्रकृतिः स्यात्, आज्येनाभिघार्य स्रुग्भ्यां ह्रियेत, तत्र एतद्दर्शनं न उपपद्यते, तस्मात् अपूर्ब्बः ॥

सू. विधिरिति चेत् ॥ ७ ॥ (आ०) ॥

भा. 'इति चेत्' पश्यसि,—स्रुगभिघारणाभावानुवाददर्शनात् अपूर्ब्बः सोमः—इति। अथ कस्मात् दर्शपूर्णमासप्रकृतित्वेन प्राप्तस्य स्रुगभिघारणस्य प्रतिषेधकोऽयं विधिः न भवति?—इति स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ॥

सू. न वाक्यशेषत्वात् ॥ ८ ॥ (आ० नि०) ॥

भा. 'न' अयं विधिः। कस्मात्?। 'वाक्यशेषत्वात्' अन्योऽत्र विधिराम्नातः; तत् आह,—'अंशुरंशुस्ते देव सोमाप्याय-ताम्'—इति, तस्य वाक्यशेषोऽयम्। कथम् ज्ञायते?। तेन

* "अत्र सूत्रं भाष्यद्वयमयुक्तम्, न ज्ञायते कियत्याऽपीतिकर्त्तव्यतया निराकाङ्क्षी-भवतीति" इत्यादिना वार्त्तिककृता सूत्रं भाष्यद्वयमेव दुष्टतया निरटङ्कि ।

भा. वाक्याकाङ्क्षितत्वात्, 'अवधिपुर्वा एतत् सोमं यदभिषुण्वन्ति, यदस्य शुचो वाङ्ग कुर्वन्ति, यथाव्यमन्तिकमकार्षुः, यदाह,— अंशुरंशुस्ते देव सोमाप्यायताम्—इति, यदेवास्याहातुः अुर-मश्नुरस्तदाप्याययन्ति'—इति। यदि अयमपि विधिः स्यात्, वाक्यम्भिद्येत, तस्मात् न विधिः ॥

सू. श्रङ्कते चानुपोषणात् ॥ ९ ॥ (यु०) ॥

भा. सोमे 'श्रङ्कते',—'यदनुपोष्य प्रयायादग्रीवबद्धमेनं अमुष्मिन् लोके नेनीयेरन्'—इति; दार्शपौर्णमासिके विधान्ते सति, नियतम् उपोषणं स्यात्, तदा अनुपोषणाश्रङ्का न युज्यते। तस्मात् अपूर्व्वः ॥

सू. दर्शनमैष्टिकानां स्यात् ॥ १० ॥ (आ० नि०) ॥

भा. यच प्रयाजानुयाजानां दर्शनं, लिङ्गत्वेन उपदिष्टं,—'तस्य एकव्रतं प्रयाजानुयाजाः'—इति, तत् दीक्षणीयादीनां सोमाङ्ग-भूतानां कर्म्मणां ये प्रयाजानुयाजाः, तेषां समुच्चयवचनम्। किङ्कारणम्?। सोमस्य अपूर्व्वत्वात्, तेषां च तावतां, तत्र भावात्; अङ्गाङ्गमपि च तस्य—इति शक्यते वक्तुम्; यथा वाजपेयस्य यूपः—इति। तस्मात् अपूर्व्वः सोमः ॥ (८।१। २ अ०)॥

---

ऐन्द्राग्नादौ ऐष्टिकधर्म्मातिदेशाधिकरणम् ॥

सू. इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् ॥ ११ ॥

भा. इदम उदाहरणम्,—'ऐन्द्राग्नमेकादशकपालं निर्वपत् प्रजा-कामः'—इत्येवमाद्याः। तत्र सन्देहः,—किं दार्शपौर्णमासिको वा सौमिको वा विधान्तः, उत दार्शपौर्णमासिक एव?—इति।

J

भा. किं प्राप्तम्?—अनियमः। दर्शपूर्णमासयोरपि विध्यन्तोऽस्ति सोमेऽपि; इमाश्च इष्टयो विध्यन्तापेक्षाः, एकेन च विध्यन्तेन भवितव्यम्—इत्युक्तम्, न च गृह्यतेऽन्यतरनियमे विशेषः। तस्मात् अनियमः।

एवं प्राप्ते उच्यते,—'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः', हेतुर्नोक्तः प्रज्ञातः—इति। कः पुनरसौ?। चोदनायां प्रकृतिलिङ्गसंयोगः। किं पुनः तत् प्रकृतिलिङ्गम्?। तद्धितेन देवतोपदेशः, कपालवत्ता, निर्वपतिशब्दश्च,—'ऐन्द्राग्नमेकादशकपालं निर्वपेत्'—इति; इतरत्रापि तथैव 'ऐन्द्राग्नो द्वादशकपालः'—इति, निर्वपतिरपि 'अग्निहोत्रहवण्या हवींषि निर्वपति'—इति, प्रकृतिलिङ्गेन च विध्यन्तविशेष उक्तः,—"यस्य लिङ्गमर्थसंयोगात्" (८।१।२ सू०)—इति। तस्मात् दार्शपौर्णमासिकस्तासु विध्यन्तः; तच्च दर्शयति, 'प्रयाजे प्रयाजे कृष्णलं जुहोति' —इति; अलिङ्गास्वपि स्थालीपुलाकवत् सिद्धिः॥ (८।१। ४ अ०)॥

---

अग्नीषोमीयपशौ दार्शपौर्णमासिकधर्मातिदेशाधिकरणम्॥

सू. पशौ च लिङ्गदर्शनात्॥ १२॥

भा. पशौ अग्नीषोमीये चिन्त्यते,—किं दार्शपौर्णमासिको विध्यन्तः उत, सौमिकः?—इति। किं प्राप्तम्?—तथैव पूर्वपक्षः। तत्र उत्तरमभिधीयते,—'पशौ च लिङ्गदर्शनात्', पशौ च दार्शपौर्णमासिक एव विध्यन्तः। कुतः?। 'लिङ्गदर्शनात्',—'एकादश प्रयाजान् एकादशानुयाजान्'—इति, तथा 'सौवमाघार्य जुह्वा पशुमनक्ति'—इति। 'ननु लिङ्गम् अपदिष्टम्, कुतः प्राप्तिः?'। चोदनासामान्यात्। किं सामान्यम्?। व्यक्तचोदनत्वम्। का व्यक्तिः?। द्रव्यदेवतावत्ता, 'अग्नीषोमीयं पशुम्'—इति,

भा. इतरत् 'ऐन्द्रं पयः'—इति ; अध्वरचोदनस्तु सोमः ॥ (८।१।५ अ०) ॥

---

सवनीयादिपशौ अग्नीषोमीयधर्म्मातिदेशाधिकरणम् ॥

सू. दैक्षस्य चेतरेषु ॥ १३ ॥

भा. इह पशुबन्धा उदाहरणम्,—सवनीयो निरूढः पशुः, सौम्यादयश्च ; तेषु, किं दार्शपौर्णमासिको विधन्तः, उत दैक्षस्य ?—इति । 'दैक्षः'—इति अग्नीषोमीय उच्यते, दीक्षा-सम्बन्धात् । किं प्राप्तम् ?—यथोक्तेन न्यायेन दार्शपौर्णमासिकः —इति । तथा प्राप्ते उच्यते, "दैक्षस्य च इतरेषु" पशुषु सवनीयादिषु अग्नीषोमीयस्य विधन्तः, आलभतिचोदनासामान्यात्, पशुत्वचोदनासामान्याच्च ; तच्च दर्शयति,—'वपया प्रातःसवने चरन्ति, पुरोडाशेन मध्यन्दिनेऽङ्गैस्तृतीयसवने'—इति वपापुरो-डाशाङ्गप्रचारं दर्शयति ; भेदेन च, तथा क्वचित्, 'औदुम्बरो यूपो भवति'—इति यूपं दर्शयति । तस्मात् अग्नीषोमीयः पशूनां प्रकृतिः ॥ (८।१।६ अ०) ॥

---

ऐकादशिनपशौ सवनधर्म्मातिदेशाधिकरणम् ॥

सू. ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् ॥ १४ ॥

भा. ऐकादशिनाः पशवः उदाहरणम्,—'कृष्णग्रीवः आग्नेयः'—इत्यारभ्य आम्नाताः ; 'अन्येषां च आग्नेयेन वापयति, मिथुनं सारस्वत्या करोति, प्रजनयति सौम्येन'—इति । तेषु सन्देहः,—किम् अग्नीषोमीयविधन्तः, उत सवनीयविधन्तः ?—इति । किं प्राप्तम् ?—पूर्व्वोक्तेन न्यायेन अग्नीषोमीयस्य ।

इति प्राप्ते उच्यते,—'ऐकादशिनेषु सौत्यस्य', 'सौत्यः'—

भा. इति तुल्याकाशत्वात् सवनीयमाहुः, तदीयो विधान्त ऐकादशिनेषु। कुतः?। 'द्वैरशन्यस्य दर्शनात्', 'अग्निष्ठा द्वे द्वे रशने आदाय ताभ्यां रशनाभ्याम् एकैकं यूपं परिव्ययति'—इति, अग्नीषोमीयप्रकृतित्वे ऐकैकरशन्यं स्यात्।

'अथ वचनमिदं कस्मात् न भवति?'। अग्निष्ठा द्वे द्वे रशने आदायेत्येतत् अत्र विधीयते, यदि रशनाद्वित्वमपि विधीयते, तदा वाक्यम्भिद्यते, तस्मात् तदनूद्यते। 'ननु लिङ्गमपदिष्टं, कुतः प्राप्तिः?'। उच्यते, समाने पशुत्वे तुल्याकाशता वैशेषिकं लिङ्गं, ततः प्राप्तिः॥ (८।१।७ अ०)॥

---

पशुगणेषु ऐकादशिनधर्मातिदेशाधिकरणम्॥

सू. तत्प्रवृत्तिर्गणेषु स्यात् प्रतिपशु यूपदर्शनात्॥ १५॥

भा. इह पशुगणा उदाहरणम्,—'वसन्ते ललामांस्त्रीन् ऋषभानालभते', तथा 'मैत्रं श्वेतमालभेत, वारुणं कृष्णं, अपां च ओषधीनां च सन्धौ अन्नकामः'—इति। तत्र विचार्यते,—किम् अग्नीषोमीयस्य विधान्तः, उत ऐकादशिनानाम्?—इति। यथोक्तेन न्यायेन अग्नीषोमीयस्य।

एवं प्राप्ते उच्यते,—'तत्प्रवृत्तिर्गणेषु स्यात्', तेषाम् ऐकादशिनानां प्रवृत्तिः पशुगणेषु स्यात्। कुतः?। 'प्रतिपशु यूपदर्शनात्', 'यत् त्रिषु यूपेषु आलभेत बहिर्द्धाऽस्मात् इन्द्रियं वीर्यं दध्यात्, भ्रातृव्यम् अस्य जनयेदेकयूप आलभेत'—इति यूपत्रित्वं प्रतिषिध्य, एकं यूपं सौत्रामण्यां विदधाति; तदुपपद्यते, यदि ऐकादशिनविधान्तः, तत्र हि प्रतिपशु यूपाः; अग्नीषोमीयप्रकृतित्वे एक एव यूपः स्यात्, तत्र एतन्नोपपद्यते। तस्मात् ऐकादशिनानां विधान्तः पशुगणेषु॥ (८।१।८ अ०)॥

---

अव्यक्तयजतौ सौमिकधर्मातिदेशाधिकरणम् ॥

सू. अव्यक्तासु तु सोमस्य ॥ १६ ॥

भा. इदं श्रूयते,—'अभिजिता यजेत'—इति एवञ्जातीयका यजतयः, तेषु विध्यन्तचिन्ता,—किमेषु सौमिको विध्यन्तः, उत दार्शपौर्णमासिकः?—इति। अविशेषात् अनियमे प्राप्ते, उच्यते,—"अव्यक्तासु तु सोमस्य"। का अव्यक्तता?। द्रव्यदेवतस्य अभावः, द्रव्यदेवतेन हि यागोऽभिव्यज्यते, एतास्वाद्रव्यदेवतास्वोदनाः,—'अभिजिता यजेत'—इति, एतासु अव्यक्तासु सौमिको विध्यन्तः स्यात्। कुतः?। अव्यक्तसामान्यात्, सोमोऽप्यव्यक्तचोदनः,—'ज्योतिष्टोमेन यजेत'—इति। 'ननु सोमेन यजेत'—इत्येषा व्यक्तचोदना। तथापि देवताया अभावात् अव्यक्तता, तथा च 'कुणाशेन यजेत'—इति अव्यक्तचोदिते, दीक्षणीयादीनि सोमाङ्गानि दर्शयति, 'दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा, चतुर्विंशतिमानं प्रायणीयायाम्'—इति। तस्मात् तासु सौमिको विध्यन्तः॥ (८।१।९ अ०)॥

---

अहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥

सू. गणेषु द्वादशाहस्य ॥ १७ ॥

भा. इह अहर्गणा उदाहरणम्,—द्विरात्रादयः शतरात्रपर्यन्ताः। तेषु सन्देहः,—किं ज्यौतिष्टौमिको विध्यन्तः, उत द्वादशाहिकः? —इति। पूर्वेण न्यायेन सौमिके प्राप्ते उच्यते, 'गणेषु' द्वादशाहिको विध्यन्तः—इति। कुतः?। 'चोदनासामान्यात्', 'द्वादशाहेन यजेत, द्विरात्रेण यजेत'—इति; अहःशब्दोऽपि अहोरात्रवचनः, रात्रिशब्दोऽपि, एतच्छब्दगतं लिङ्गम्। अर्थगतम् अपि गणत्वं, गणः एव सङ्घातधर्मैर्गणम् अनुग्रहीतुम्

भा. समर्थो न एकाहः। 'द्वाभ्यां लोमावद्यति द्वाभ्यां मांसम्'—इति च एतदारभ्य द्वादशोपसत्त्वं द्वादशाहिकं धर्मं गवामयने दर्शयति। तस्मात् अहर्गणानां द्वादशाहः प्रकृतिः॥ (८।१।१० अ०)॥

---

संवत्सरसत्रेषु गवामयनिकधर्मातिदेशाधिकरणम्॥

सू. गव्यस्य च तदादिषु॥ १८॥

भा. इह संवत्सरसत्राणि उदाहरणम्,—आदित्यानामयनप्रभृतीनि; तेषु चिन्ता,—किं द्वादशाहिको विधन्तः, उत गवामयनिकः?—इति। पूर्वोक्तेन न्यायेन द्वादशाहिके प्राप्तेऽभिधीयते,—"गव्यस्य च तदादिषु", 'गव्यम्'—इति, गवामयनं ब्रूमः, गोसम्बन्धात्, 'गावो वा एतत् सत्रमासत'—इति; तस्य विधन्तः, तदादिषु संवत्सरसत्रेषु स्यात्। कुतः?। संवत्सरसामान्यात्, 'पत्नय उपगायन्ति'—इति च महाव्रतिकं धर्मं संवत्सरसत्रे दर्शयति; 'ऋत्विज उपगायन्ति'—इति च सहस्रसंवत्सरे॥ (८।१।११ अ०)॥

---

निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम्॥

सू. निकायिनाञ्च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात्॥ १९॥

भा. 'निकायः'—इति सङ्घातः औत्तराधर्य्येणावस्थित उच्यते, स एषां, ते निकायिनः, यथा साद्यस्काः साह्नस्काः, तेषां पूर्वस्य केचित् धर्माः आम्नाताः, उत्तरे तु अधर्मकाः; तत्र चिन्त्यते,—किं ज्योतिष्टोमस्य विधन्तः, उत प्रथमस्य निकायिनः?—इति। प्रत्यक्षचोदनत्वात् ज्योतिष्टोमस्य।

इति प्राप्ते उच्यते,—"निकायिनां च पूर्वस्य उत्तरेषु प्रवृत्तिः

भा. स्यात्" । कुतः ?। निकायित्वसामान्यात्, साहस्राणां साहस्र-सामान्यात्, साद्यस्कानां साद्यस्कधर्मसामान्यात्. एवं सर्वत्र पूर्वस्मिन् च साहस्रे सहस्रं दक्षिणाम् आम्नाय उत्तरस्मिन् दर्शयति, 'यावत् अस्य साहस्रस्य उत्तरा गौः समाहिता भवति, तावत् अस्मात् लोकात् असौ लोकः'—इति, तथा पूर्वस्मिन् साद्यस्के 'सांवत्सिरसंवत्सरः सोमक्रयणः स्पर्द्धमानानाम्'—इत्याम्नाये उत्तरस्मिन् अपि तमेव दर्शयति, 'यो गौः सोमक्रयणी व्याहृत्ता हि एषां स्पर्द्धिता'—इति। तस्मात् पूर्वस्य उत्तरेषु धर्माः॥ (८।१।१२ अ०)॥

---

फलादीनामनतिदेशाधिकरणम् ।

सू. कर्म्मणस्त्वप्रवृत्तित्वात् फल-नियम-कर्तृ-समुदायस्यानन्वयस्तद्बन्धनत्वात् ॥ २० ॥ (सि०) ॥

भा. इह फल-नियम-कर्तृ-समुदाया उदाहरणम्; फलं स्वर्गः, नियमो यावज्जीविकोऽभ्यासः, कर्त्ता स्वर्गकामः, समुदायो दर्श-पूर्णमासौ—इति। तत्र चिन्त्यते,—किं फल-नियम-कर्तृ-समुदायानां सौर्य्यादिषु प्रवृत्तिः, न?—इति। किं प्राप्तम्?—"इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात्" (८।१।११ सू०)—इत्यनेन न्यायेन प्रवृत्तिः—इति प्राप्तम्। तथा प्राप्ते उच्यते,—'फल नियम-कर्तृ-समुदायस्य' अप्रवृत्तिः। कुतः?। 'कर्मणः' 'अप्रवृत्तित्वात्', 'तद्बन्धनत्वात्' च फलादीनां, कर्म तावत् न प्रवर्त्तते। किं कारणम्?। विध्यन्तेन धर्माः प्रवर्त्तन्ते, न च कर्म विध्यन्तविहितं, विध्यादिविहितं तत्। तस्मात् न प्रवर्त्तते, तस्याप्रवृत्तित्वात् 'फल-नियम-कर्तृ-समुदायस्य' 'अनन्वयः' अ-प्रवृत्तिः—इत्यर्थः। कुतः?। 'तद्बन्धनत्वात्', फलं तावत्, 'दर्शपूर्णमासाभ्यां यजेत'—इति, दर्शपूर्णमाससंयुक्तं श्रुतं, तत्

भा. यत्र दर्शपूर्णमासौ, तत्र भवितुमर्हति, न च सौर्य्यादिषु तौ स्तः, अतः स्वर्गस्यापि तत्राभावः। एवं नियमोऽपि कर्मबन्धनः, 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत'—इति, स दर्शपूर्णमासाभावे कथं स्यात्। तथा कर्ता कर्मबन्धनः, 'दर्शपूर्णमासाभ्यां स्वर्गकामः'—इति, सोऽपि कथं तयोरसतोः स्यात्। समुदायोऽप्याग्नेयादीनां, तानि सौर्य्यादिषु न सन्तीति तत्समुदायः कथं तत्र भवेत्। तस्मात् तेषाम् अप्रवृत्तिः॥

सू. प्रवृत्तौ चापि तादर्थ्यात्॥ २१॥ (यु०)॥

भा. अपि च धर्माणां प्रवृत्तिः कर्मार्था, कर्मण उपकर्तुम्, न च फलादीनि कर्मण उपकुर्वन्ति, फलं तावत् पुरुषस्य उपकरोति, न कर्मणः, उक्तं हि "फलं च पुरुषार्थत्वात्" (३।१।५ सू०)—इति। नियमोऽपि न कर्मधर्मः, कर्तृधर्मोऽसावित्युक्तं, "कर्तुर्वा श्रुतिसंयोगात्" (२।४।२ सू०)—इति। तथा कर्ता स्वर्गकामो न कर्मार्थः, कर्म स्वर्गकामार्थं, न हि स्वर्गकामः कर्मण उपदिश्यते, 'स्वर्गकामो यजेत'—इति, किन्तर्हि, कर्म स्वर्गकामस्य उपदिश्यते,—'स्वर्गकामो यजेत', नान्यत् कुर्यात्—इति। तथा समुदायो न कर्मार्थः, फलार्थोऽसौ, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'—इति। एवम् एतेषां कर्मणोऽनुपकारकत्वात्, प्रवृत्तिः अनर्थिका स्यात्। तस्मात् न प्रवर्त्तेरन्॥

सू. अश्रुतित्वाच्च॥ २२॥ (आ० नि०)॥

भा. अथाह, 'यदि दर्शपूर्णमाससंयोगात् फलादीनामप्रवृत्तिः, प्रयाजादीनामपि तत्सम्बन्धात् अप्रवृत्तिः प्राप्ता, तान्यपि हि तत्संयुक्तानि'—इति। उच्यते,—यद्यपि तानि दर्शपूर्णमासयोः श्रुतानि, विध्यन्तेन तु सौर्य्यादिष्वपि अतिदिष्टानि; फलादीनि तु न विध्यन्तेन अतिदिश्यन्ते, तेषां यदि प्रत्यक्षा प्रवर्त्तिका श्रुतिः

भा. स्यात्, ततः प्रवर्त्तेरन्, न च प्रयावस्ति। तस्मात् अश्रुतित्वात् न प्रवर्त्तन्ते ॥ (८।१।१३ अ०) ॥

---

गुणकामानां गोदोहनादीनामनतिदेशाधिकरणम्।

सू. गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात् ॥ २३ ॥ (पू०) ॥

भा. इह गुणकामा उदाहरणम्,—'गोदोहनेन प्रणयेत् पशुकामस्य', 'उपांशु गायता नरः'—इति, 'ग्रामकामाय प्रतिपदं कुर्यात्'—इत्येवमादयः। तत्र विचार्य्यते, किं गुणकामानां वैकृतेषु प्रवृत्तिः, उत न?—इति। ततः सूत्रेणैव उपक्रमः, "गुणकामेषु आश्रितत्वात्, प्रवृत्तिः स्यात्", 'प्रवृत्तिः' गुणकामानाम्। कुतः?। 'आश्रितत्वात्', गोदोहनं प्रणयनाश्रितं, 'गोदोहनेन प्रणयेत्'—इति। तत्र प्रणयनं प्रवर्त्तते, आश्रये च प्रवर्त्तमाने तदाश्रितमपि प्रवर्त्तते; यथा पटे आकृष्यमाणे तदाश्रितं चित्रमप्याकृष्यते, यथा च चमसः प्रवर्त्तते, यथा च 'खादिरं वीर्य्यकामाय यूपं कुर्य्यात्'—इति, एवं गोदोहनम् अपि प्रवर्त्तेत; गोदोहने च प्रवर्त्तमाने तदाश्रितः कामोऽपि प्रवर्त्तितुमर्हति। तस्मात् गुणकामानाम् प्रवृत्तिः ॥

सू. निवृत्तिर्वा कर्म्मभेदात् ॥ २४ ॥ (सि०) ॥

भा. 'निवृत्तिर्वा' गुणकामानाम् अप्रवृत्तिः। कुतः?। 'कर्म्मभेदात्', कार्य्यभेदात्—इत्यर्थः। अन्यत् कार्य्यं गोदोहनस्य, अन्यत् चमसस्य, चमसः क्रत्वर्थो, गोदोहनं तु पुरुषार्थः; तदुक्तम्, "यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात्" (४।१।२ सू०)—इत्यत्र; अक्रत्वर्थः, किमर्थं प्रवर्त्तेत? क्रतूपकाराय हि तस्य प्रवृत्तिः; एवं प्रतिपदः। तस्मात् न प्रवर्त्तेरन् गुणकामाः ॥

भा. यत्तु उपन्यस्तं,—'यथा खादिरं वीर्य्यकामाय यूपं कुर्य्यात्'—इत्यत्र प्रवृत्तिरेवम् अत्रापि—इति, तत्र ब्रूमः,—

सू. अपि वाऽतद्विकारत्वात् क्रत्वर्थत्वात्प्रवृत्तिः स्यात् ॥ २५ ॥ (पू० यु० नि०) ॥

भा. 'अपि वा', एवंविधेषु 'प्रवृत्तिः स्यात्'। कुतः?। 'अतद्विकारत्वात्',—न खादिरः क्रत्वर्थविकारः, अयम् अपि क्रत्वर्थ एव, तदुक्तम्. "एकस्य तु उभयत्वे संयोगपृथक्त्वम्" (४।३।५ सू०)—इति, क्रत्वर्थश्चेत् पलाशवत् प्रवर्त्तेत, तस्मिंश्च प्रवर्त्तमाने तदाश्रितः कामोऽपि प्रवर्त्तते, खादिरेण हि स सिध्यति, स च खादिरोऽस्ति, तस्मात् कामं साधयिष्यति॥ (८।१।१४ अ०)॥

---

सौर्य्ये चरावभिमर्शनद्वयस्य विकल्पाधिकरणम् ।

सू. एककर्म्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ २६ ॥

भा. 'सौर्य्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः'—इति श्रूयते; अस्ति तु प्रकृतावभिमर्शनद्वयं, 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्राऽमावास्याम्'—इति, तत् इह चोदकेन प्राप्यते। तत्र संशयः,—किं सौर्य्यो यदा पौर्णमास्यां प्रयुज्यते, तदा चतुर्होत्राऽभिमृष्टव्यः; यदाऽमावास्यायां, तदा पञ्चहोत्रा; उत उभयत्र विकल्पः,—चतुर्होत्रा वा पञ्चहोत्रा वा?—इति। किं प्राप्तम्?—व्यवस्था—इति। कुतः?। चोदकानुग्रहात् प्रकृतौ व्यवस्था कृता, इहापि चोदको व्यवस्थां प्रापयति।

एवं प्राप्ते उच्यते,—एकस्मिन् कर्मणि अत्र सौर्य्यविकल्पः। कुतः?। 'अविभागो हि चोदनैकत्वात्', एकैषा चोदना,—'सौर्य्यं चरुम् निर्वपेत् ब्रह्मवर्चसकामः'—इति, तत्र अविभागो

भा. भवतु, उभावपि अभिमर्शने प्राप्येते, तयोरेकार्थत्वात् समुच्चयो न सम्भवति, तस्मात् विकल्पः। यत्तु,—प्रकृतौ व्यवस्था—इति; न असौ कालकृता, किं तर्हि समुदायकृता, न च, सौर्ये तौ समुदायौ स्तः।

'यद्येवम् अभिमर्शनमेव तर्हि न प्राप्नोति, तयोः समुदाययो-रभावात्'—इति। अत्र उच्यते, न प्राप्नोति, यदि समुदाययोः अभिमर्शनम् उच्येत, तयोस्त्वनभिलक्ष्यत्वात्, समुदायिनां तदुच्यते लक्षणया, समुदायिविकारश्च सौर्य्यः। तस्मात् तथापि चोदकः प्रापयति तत् ॥ (८।१।१५ अ०) ॥

---

सौर्य्ये चरावाग्नेयधर्म्मातिदेशाधिकरणम्।

सू. लिङ्गसाधारण्याद्विकल्पः स्यात् ॥ २७ ॥ (पू०) ॥

भा. सौर्य्ये कर्मणि दार्शपौर्णमासिको विध्यन्तः—इत्युक्तम्,—"इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः" (८।१।११ सू०)—इति, सन्ति तु तत्र कर्माणि आग्नेयादीनि। तत्र विचारः,—किं यस्य-कस्यचित् दार्शपौर्णमासिकस्य कर्मणः सौर्य्ये विध्यन्तः, उत आग्नेयस्य?—इति। किं प्राप्तम्?—'विकल्पः'। कुतः?। 'लिङ्ग-साधारण्यात्', सौर्य्ये दार्शपौर्णमासिकविध्यन्तप्राप्तौ यल्लिङ्गम् उपदिष्टं, 'प्रयाजे-प्रयाजे कृष्णलं जुहोति'--इति, तत् साधारणं सर्वेषां विध्यन्ते सम्भवति; न च समुच्चयः, तस्मात् विकल्पः॥

सू. ऐकार्थ्याद्वा नियम्येत पूर्ब्बवत्त्वात् विकारो हि ॥ २८ ॥ (सि०) ॥

भा. आग्नेयस्य विध्यन्तो 'नियम्येत'। कुतः?। 'ऐकार्थ्यात्', एक-देवतत्वात्—इत्यर्थः, आग्नेय एकदेवत्यः, सौर्य्योऽपि; तेनैक-देवतत्वेन लिङ्गेन आग्नेयविध्यन्तो नियम्येत, 'पूर्ब्बवत्वात्',—

भा. पूर्ववानयं सौर्य्यः, पूर्वञ्च अभिहितं विध्यन्तम् अपेक्षते, 'विकारो हि',—विकृतिः एषा, सर्वास्तु विकृतयः पूर्ववत्यः, चोदनावाक्यानामसमाप्तत्वात्; तच्च लिङ्गेन विध्यन्तनियमो भवति—इत्युक्तम्; अस्ति च एकदेवतत्वं लिङ्गं; तेन आग्नेयविध्यन्तः॥

सू. अश्रुतित्वान्नेति चेत्॥ २९ ॥ (आ०)॥

भा. अथ आह,—'स्यात् एतदेवं, यदि अनेकत्वं श्रूयते, न तु श्रूयते। कथम्?। तद्धितेन अयं निर्देशः,—'सौर्य्यम्'—इति, तथा, 'आग्नेयम्'—इति; तच्च वचनव्यक्तिर्न ज्ञायते, किं सूर्य्यो देवता अस्य, उत सूर्य्यौ च सूर्य्याश्च—इति, तथा आग्नेयेऽपि॥

सू. स्यात् लिङ्गभावात्॥ ३०॥ (आ० नि०)॥

भा. 'स्यात्' व्यवस्थितिः एकत्वस्य। कुतः?। 'लिङ्गभावात्',—लिङ्गम् अत्रास्ति। किम्?। वाक्यशेषे एकत्वं श्रूयते, सौर्य्ये तावत् 'अमुमेव आदित्यं स्वेन भागधेयेन उपधावति, स एवैनं ब्रह्मवर्चसङ्गमयति'—इति। आग्नेयेऽपि, 'अङ्गिरसो वा इत उत्तमाः स्वर्गमायंस्ते यज्ञवास्त्वभ्यायंस्ते पुरोडाशं कूर्म्मं भूत्वा प्रसर्पन्तमपश्यंस्तमब्रुवन् इन्द्राय म्रियस्व बृहस्पतये म्रियस्व विश्वेभ्यो देवेभ्यो म्रियस्वेति, स तानाह न म्रिये, तमब्रुवन् अग्नये म्रियस्वेति, सोऽब्रवीत्, म्रियेऽहं, यदाग्नेयोऽष्टाकपालोऽमावास्यायां पूर्णमास्यां चाच्युतो भवति अग्निमेव स्वेन भागधेयेन समर्द्धयति'—इति।

सू. तथा चान्यार्थदर्शनम्॥ ३१ ॥ (नि०)॥

भा. अनुवाक्यायाम् एकत्वश्रवणं, 'अग्निर्मूर्द्धा दिवः'—इत्याग्नेये, 'उदुत्यञ्जातवेदसम्'—इति सौर्य्ये। 'ननु पुनरुक्तं एतल्लिङ्गद्वयोपदर्शनम्'—इति। तदुच्यते। नैतत् पुनरुक्तं, एकमत्र

भा. चोदनागतम्, एकं मन्त्रगतं ; चोदनागतं प्रापकं, मन्त्रगतं प्राप्तस्य द्योतकम्—इति ॥ (८।१।१६ अ०)॥

---

हविर्देवतयोः सन्निपाते हविःसामान्यस्य बलीयस्त्वाधिकरणम् ॥

सू. विप्रतिपत्तौ हविषा नियम्येत कर्म्मणस्तदुपाख्यत्वात् ॥ ३२ ॥ (सि०) ॥

भा. इदं श्रूयते,—'ऐन्द्रमेकादशकपालं निर्वपेत्'—इति, 'आग्नेयं पयः'—इति। तत्र सन्देहः,—किं देवतासामान्यात् ऐन्द्रपुरोडाशसान्नाय्यस्य विधान्तः, आग्नेये च पयसि औषधस्य, देवतासामान्यं बलवत्तरम्; अथ हविःसामान्यात् उत्तरत्र सान्नाय्यस्य, पूर्व्वत्र औषधस्य, हविःसामान्यं बलीयः?—इति।

किं प्राप्तम्?—उच्यते, देवतासामान्यं बलीयः—इति। कुतः?। मुख्यत्वात्, मुख्यनियमिता देवता,—'ऐन्द्रम्' 'आग्नेयम्'—इति; जघन्यनियमितं हविः; तयोर्विरोधे मुख्यानुग्रहो न्याय्यः, मुख्यस्य अविरुद्धप्रवृत्तित्वात्, जघन्यस्य तु मुख्येन विरुद्धा प्रवृत्तिः। तस्मात् देवतासामान्यं बलीयः।

इति प्राप्ते ब्रूमः,—'विप्रतिपत्तौ हविषा नियम्येत', विप्रतिपत्तौ एतस्यां हविर्देवतयोः, हविषा विधान्तो नियम्येत। कुतः?। 'कर्मणस्तदुपाख्यत्वात्', कर्म देवतां प्रति द्रव्यस्य उत्सर्गः, स च हविःषु उपाख्यायते, उपलभ्यते—इत्यर्थः। हविः त्यज्यमानं दृश्यते। किमतः?। अतो हविः कर्मणः प्रत्यासन्नं, प्रत्यासत्तिश्च लिङ्गम्। 'ननु देवतापि यागेन सम्बद्धा, न तया विना, यागो भवति'। उच्यते, सत्यं सम्बद्धा, आरादुपकारिणी तु सा, नासौ त्यज्यते, तस्मात् बहिरङ्गम्। अतो हविःसामान्यं बलीयः॥

सू. तेन च कर्म्मसंयोगात् ॥ ३३ ॥ (यु॰) ॥

भा. 'तेन च हविषा संयुज्य कर्म चोद्यते, 'ऐन्द्रम्', 'आग्नेयम्'—इति हविःप्रधानः शब्दः। किमतः?। अतो हविरेव बुद्धौ सन्निहितं, तल्लिङ्गं भवति; यथा धूमो बुद्धिविषयतामापन्नो-ऽग्नेर्लिङ्गं, न विद्यमानः॥

'ननु देवताऽपि अत्र श्रूयते,—'ऐन्द्रम्', 'आग्नेयम्—इति'। उच्यते,—

सू. गुणत्वेन देवताश्रुतिः ॥ ३४ ॥ (आ॰ नि॰) ॥

भा. विशेषणत्वेन देवता श्रूयते, हविर्विशेष्यत्वेन, विशेष्यं च बुद्धौ सन्निहितं भवति, न विशेषणं, तद्विशेष्यं विशेष्य निवर्त्तते। कथं ज्ञायते?। विशेष्यानुबन्धसंयोगात्, यथा, 'राजपुरुषः पूज्यः'—इत्युक्ते पुरुषः पूज्यो गम्यते, न राजा; एवम् इहापि 'ऐन्द्रं पयः'—इत्युक्ते हविः बुद्धौ सन्निधीयते, न देवता; यच्च बुद्धौ सन्निहितं, तल्लिङ्गम्—इत्युक्तम्। तस्मात् हविःसामान्यं बलीयः; अतः ऐन्द्रे पुरोडाशे आग्नेयस्य विधन्तः, आग्नेये च पयसि साान्नाय्यस्य—इति॥

"गुणत्वेन देवताश्रुतिः"—इत्येतस्य सूत्रस्य अपरा व्याख्या;—इदं पदोत्तरं सूत्रं;—'यदुक्तं हविःसामान्यं बलीयः—इति, नैतत् युक्तं, देवतासामान्यं बलीयः'—इति। कुतः?। सर्वोऽयं प्रयासो देवताराधनार्थं एव, साऽस्य प्रसन्ना फलं ददाति। एवं श्रूयते,—'तृप्त एवैनम् इन्द्रः प्रजया पशुभिस्तर्पयति'—इति, यश्चेन्द्रस्य प्रसादनोपायः—इति ज्ञातः, पुनरपि इन्द्रे प्रसा-दयितव्ये स एवास्थेयो भवति, तस्मात् देवतासामान्यं बलीयः' —इति।

अत्र ब्रूमः,—स्यात् एतदेवं, यदि देवतातः फलं स्यात्,

भा. यागात्तु फलं, 'स्वर्गकामो यजेत'—इति श्रूयते। यत्तु, 'तृप्त एवैनम् इन्द्रः'—इति, तत्र इदम् उच्यते, "गुणत्वेन देवता-श्रुतिः", यागे गुणभूता देवता, तस्या दातृत्वं स्तुत्या उच्यते, यथा, 'अमात्येन मे ग्रामो दत्तः', 'सेनापतिना मे ग्रामो दत्तः' —इति, न च अमात्यः सेनापतिर्वा ग्रामस्य प्रभवति, राजैव प्रभवति, इतरस्मिन् गुणभूते स्तुत्या दातृत्ववादः। तस्मात् यथोक्तेनैव न्यायेन हविःसामान्यमेव बलीयः—इति॥ (८। १। १७ अ०)॥

---

प्रतहिरण्यलाभयोर्हिरण्ये औषधधर्मातिदेशाधिकरणम्॥

सू. हिरण्यमाज्यधर्म्मं तेजस्त्वात्॥ ३५॥ (पू०)॥

भा. 'प्राजापत्यं घृते* चरुम् निर्वपेत्, शतकृष्णलमायुःकामः'—इति श्रूयते। तत् 'हिरण्यमाज्यधर्मं स्यात्', उपांशुयाज-विधानः तत्र भवेत्। कुतः?। 'तेजस्त्वसामान्यात्', तेजस्त्वं सामान्यं, हिरण्यम् अश्मनां तेजः, आज्यमपि गवां सारः—इत्यर्थः। अथ वा हिरण्यमपि तेजस्वित्वात् उज्ज्वलम्, आज्य-मपि स्निग्धत्वात् उज्ज्वलमेव। तस्मात् सामान्यात् उपांशु-याजधर्मा शतकृष्णलस्य॥

सू. धर्म्मानुग्रहाच्च॥ ३६॥ (यु०)॥

भा. हिरण्ये च बहवः आज्यधर्माः अनुगृह्यन्ते अवेक्षणादयः, औषधधर्म्मास्तु हीयेरन् अवहननादयः। तस्मात् अपि आज्य-धर्म्माः॥

---

* घृतेन इति मा० सो० पु० पाठः।

सू. औषधं वा विशदत्वात् ॥ ३७ ॥ (सि०) ॥

भा. अथ वा औषधस्य हिरण्ये विधानतः। कुतः?। 'विशदत्वात्', हिरण्यमपि विशदं, औषधमपि विशदम्। कः पुनरनयोः सामान्ययोर्विशेषः?। न खलु कश्चित्, किन्तु विशदत्वस्य कारणद्वयम् उपोद्बलकं, तेजस्वितायास्तद्धर्मानुमन्त्र एकः ॥

सू. चरुशब्दाच्च ॥ ३८ ॥ (यु० १) ॥

भा. चरुशब्दश्च अत्र भवति,—'प्राजापत्यं चरुम्'—इति। चरु-शब्दश्च औषधस्य वक्ता, तत् बलवत् औषधस्य लिङ्गम् ॥

सू. तस्मिंश्च श्रपणश्रुते ॥ ३९ ॥ (यु० २) ॥

भा. 'तस्मिंश्च' आज्ये श्रपणं श्रूयते,—'घृते श्रपयति'—इति। किमतः?। अत एतद्भवति,—औषधविधानेन श्रपणं प्राप्यते; तत्र केवलम् आज्यं विधायिष्यते, आज्यविधाने तु श्रपणं आज्यं च विधीयेयातां, तथा वाक्यम्भिद्येत।

"तस्मिंश्च श्रपणश्रुतेः"—इत्येतस्य अपरा व्याख्या;—अथ आह,—'साक्षादेवेहाज्यं श्रूयते, तस्मात् तस्य विधानतः'—इति। ततः उत्तरम् इदं, "तस्मिंश्च श्रपणश्रुतेः", दार्शपौर्ण-मासिकं श्रपणं 'तस्मिंश्च' आज्ये श्रूयते, गुणगतं तत्सामान्यं, हविर्गतं तु वैशद्यं, चरुशब्दश्च; तस्मात् ते बलवती ॥ (८। १। १८ अ०) ॥

मधूदके उपांशुयाजीयाज्यधर्म्मातिदेशाधिकरणम् ॥

सू· मधूदके द्रवसामान्यात्पयोविकारः स्यात् ॥ ४० ॥ (पू०) ॥

भा· चित्रायाम् इष्टौ श्रूयते,—'दधि मधु घृतं* धाना उदकं तण्डुलाः, तत्संसृष्टं प्राजापत्यं भवति'—इति। तत्र, 'मधूदके' 'पयोविकारः स्यात्'। कुतः?। 'द्रवसामान्यात्', द्रवे च मधूदके, पयोऽपि द्रवम् ॥

सू· आज्यं वा वर्णसामान्यात् ॥ ४१ ॥ (सि०) ॥

भा· 'आज्यं वा' इमे विकुर्य्याताम्, उपांशुयाजस्य तयोर्विध्यन्तः स्यात्। कुतः?। 'वर्णसामान्यात्', समानवर्णे मधूदके आज्येन ॥

सू· धर्म्मानुग्रहाच्च ॥ ४२ ॥ (यु०) ॥

भा· आज्यधर्म्माश्च बहवः मधूदकयोः शक्याः कर्त्तुम् उत्पवनादयः, न तु पयोधर्म्मा दोहनादयः ॥

सू· पूर्व्वस्य चाविशिष्टत्वात् ॥ ४३ ॥

भा· यत्तु, पूर्व्वं कारणम् उक्तं,—द्रवत्वसामान्यं, तदविशिष्टं, आज्यमपि अग्निसंयोगात् द्रवीभवति। तस्मात् उपांशुयाजविध्यन्तः मधूदकयोः—इति ॥ (८।१।१९ अ०)।

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये अष्टमस्याध्यायस्य प्रथमः पादः ॥

---

* अत्र 'पयः' इति अधिकं का० श्री० पु० पाठः।

अष्टमस्य अध्यायस्य द्वितीयः पादः ॥



ऐष्टिक-सौत्रामण्योरैष्टिकधर्म्मातिदेशाधिकरणम् ॥

सू. वाजिने सोमपूर्व्वत्वं सौत्रामण्याञ्च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥ (पू०) ॥

भा. चातुर्मास्येषु वाजिनेज्या श्रुताः,—'वाजिभ्यो वाजिनम्'—इति, सौत्रामण्यां च सुरा ग्रहाः,—'आश्विनं ग्रहं गृह्णाति, सारस्वतम् ऐन्द्रम्'—इति। तत्र संशयः, किम् उभयोः सौमिको विध्यन्तः, उत दार्शपौर्णमासिकः?—इति। तदुच्यते, 'वाजिने' 'सौत्रामण्यां च ग्रहेषु' 'सोमपूर्व्वत्वं', सौमिको विध्यन्तः। कुतः?। 'ताच्छब्द्यात्' सोमशब्दत्वात्। सोमशब्दस्तत्र श्रूयते,—'सोमो वै वाजिनं सुरा सोमः'—इति, न तावत् वाजिनं सोमः, न सुरा; न च, तयोः सोमेन सादृश्यम् अस्ति; सादृश्याच्च परशब्दः परत्र प्रवर्त्तते। तस्मात् सादृश्यम् अत्र विधीयते, सादृश्यं च अत्र सोमधर्म्मत्वशातं शक्यं विधातुम्, न अन्यत्, स एष नाम्ना धर्म्मातिदेशो न विध्यन्तेन, यथा, कौण्डपायिनामयने अग्निहोत्रे ॥

सू. अनुवषट्काराच्च ॥ २ ॥ (यु० १) ॥

भा. अनुवषट्कारं च सोमधर्म्मं दर्शयति, 'वाजिनस्य अग्ने* वीहीत्यनुवषट्करोति, सुराया वीहीत्यनुवषट्करोति'—इति ॥

सू. समुपहूय भक्षणाच्च ॥ ३ ॥ (यु० २) ॥

भा. समुपहूय भक्षणं च सोमधर्म्मः, तच्च दृश्यते,—'शेषं समं वा विभज्य समुपहूय भक्षयन्ति'—इति ॥

---

* अग्ने इति का० श्री० पु० पाठः।

सू· क्रयण-श्रयण-पुरोरुगुपयाम-ग्रहणासादनवासोप-
नहनञ्च तद्वत् ॥ ४ ॥ (यु॰ ३) ॥

भा. क्रयकार्य्याँश्च सोमधर्म्मान् सुरायां दर्शयति,—'सीसेन क्रीणाति, क्लीबात् क्रय्या कुवलसक्तुभिराश्विनं क्रीणाति'—इति। 'एका पुरोरुक् एका याज्या, उपयामगृहीतोऽस्यच्छिद्राय त्वाऽच्छिद्रेणाश्विनं ग्रहं गृह्णाति, गृहीत्वा आसादयति चिरार्थं संहृता वसन्ति, क्षौमे वाससी उपनद्धानि तोक्मानि शष्पाणि भवन्ति'—इति, विधौ सति अनेकार्थानि वाक्यानि स्युः, क्रयादीन् सौमकार्य्यांश्च विदधति। तस्मात् उभयोः सौमिको विधन्तः॥

सू· हविषा वा नियम्येत तद्विकारत्वात् ॥ ५ ॥ (सि॰) ॥

भा. हविःसामान्येन 'वा', अत्र दार्शपौर्णमासिको विधन्तो 'नियम्येत'। कुतः?। 'तद्विकारत्वात्', दार्शपौर्णमासिकस्य हविषो विकारः सुरा-वाजिने, औषधविकृतिः सुरा, सान्नाय्यविकृतं वाजिनम् ॥

सू· प्रशंसा सोमशब्दः ॥ ६ ॥ (पू॰ यु॰ नि॰) ॥

भा. अथ यदुक्तं, 'ताच्छब्द्यात्'—इति। तत्र ब्रूमः,—प्रशंसार्थोऽयं सोमशब्दः, न विध्यर्थः, विधायकस्य अभावात्, 'सौमो वै वाजिनं, सुरा सोमः'—इति प्रशस्तफलवत्त्वात् सोमस्य, तद्भावेन सुरा-वाजिनयोः प्रशंसा, यथा, 'सिंहो देवदत्तः'—इति पुरुषस्य। तस्मात् नायं नाम्ना धर्मातिदेशः॥

सू· वचनानीतराणि ॥ ७ ॥ (पू॰ सि॰ नि॰) ॥

भा. इतराणि तु सीसक्रयादीनि वाचनिकानि, प्राप्तेरभावात्। अगत्या च वाक्यानाम् अनेकार्थता, सगुणकर्म्मविधानेन॥

सू. व्यपदेशश्च तद्वत् ॥ ८ ॥ (यु०) ॥

भा. 'अण्वैरेव दीक्षणीयामाप्नोति, तोक्मभिः प्रायणीयां, सिंह-सोमभिरातिथ्याम्'—इति, सोमविकारत्वे प्रत्यक्षमेव दीक्षणीयादीनि प्राप्नुयुः ; प्राप्तानाम् अण्वादिभिस्तदाप्तिवचनं नोपपद्यते ॥

सू. पशुपुरोडाशस्य च लिङ्गदर्शनम् ॥ ९ ॥ (लि०) ॥

भा. पशुपुरोडाशता च ग्रहाणां श्रूयते, नैतेषां पशूनां पुरोडाशा विद्यन्ते, ग्रहपुरोडाशा ह्येते पशवः—इति ; तत्र तावत् अत्र ग्रहाः पुरोडाशाः, ग्रहा एव ते, यदि तु पुरोडाशधर्म्मकाः, तत एतदुपपद्यते। तस्मात् पौरोडाशिकस्तेषु विध्यन्तः ॥ (८। २। १ अ०) ॥

---

पशौ साम्नाय्यधर्म्मातिदेशाधिकरणम् ।

सू. पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् ॥ १० ॥ (पू०) ॥

भा. अस्ति ज्योतिष्टोमे पशुः अग्नीषोमीयः, 'यो दीक्षितो, यत् अग्नीषोमीयं पशुमालभते'—इति। तत्र सन्देहः,—किं पशुः पुरोडाशविकारः, उत साम्नाय्यविकारः?—इति। किं प्राप्तम्? —'पशुः पुरोडाशविकारः स्यात्'। कुतः?। 'देवतासामान्यात्', अग्नीषोमीयः पशुः, पुरोडाशोऽपि तद्देवत्य एव ॥

सू. प्रोक्षणाच्च ॥ ११ ॥ (हे० १) ॥

भा. प्रोक्षणं पुरोडाशधर्म्मः पशौ दर्शयति,—'अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि—इति पशुं प्रोक्षति'—इति ॥

सू. पर्य्यग्निकरणाच्च ॥ १२ ॥ (हे० २) ॥

भा. पर्य्यग्निकरणम् अपि पुरोडाशधर्म्मः, तदपि पशौ दृश्यते,— 'आहवनीयात् उल्मुकेन पशुं पर्य्यग्निकरोति'—इति। तस्मात् पुरोडाशविकारः ॥

सू. सान्नाय्यं वा तत्प्रभवत्वात् ॥ १३ ॥ (सि०) ॥

भा. 'सान्नाय्यं वा' पशुर्विकुर्य्यात्, न पुरोडाशम्। कुतः?। 'तत्प्रभवत्वात्', पशुतः सान्नाय्यं प्रभवति, पशुश्च; तत् मिथः-प्रत्यासन्नं, प्रत्यासत्तिश्च लिङ्गं, हविःसामान्यं च देवतासामान्यात् बलीयः—इत्युक्तम् (८।१।१७ सू०) ॥

सू. तस्य च पात्रदर्शनात् ॥ १४ ॥ (यु०) ॥

भा. 'तस्य च' सान्नाय्यस्य यत् पात्रम् उखा, सा पशौ दृश्यते, 'यदि पशुमुखायां पचेत्'—इति॥ (८।२।२ सू०) ॥

---

पशौ पयोधर्म्मातिदेशाधिकरणम् ।

सू. दध्नः स्यान्मूर्त्तिसामान्यात् ॥ १५ ॥ (पू०) ॥

भा. सान्नाय्यविकारोऽपि 'दध्नः' विकारः 'स्यात्' पशुः, न पयसः। कुतः?। 'मूर्त्तिसामान्यात्', घनत्वं मूर्त्तिः ॥

सू. पयो वा कालसामान्यात् ॥ १६ ॥ (सि०) ॥

भा. 'पयो वा' पशुर्विकुर्य्यात्, न दधि; सद्यःकालः पशुः, पयोऽपि सद्यःकालम्। दधि तु द्व्यहकालं, पयोऽन्तरितं, तद्विप्रकृष्टम् ॥

सू. पश्चानन्तर्य्यात् ॥ १७ ॥ (यु० १) ॥

भा. पयोऽसु पयः अनन्तरं, तत्प्रत्यासन्नं, न दधि ॥

सू. द्रवत्वं चाविशिष्टम् ॥ १८ ॥ (यु० २) ॥

भा. द्रवत्वं मस्तुपयसोः समानं, मस्तुरपि द्रवति, पयोऽपि। तस्मात् पयोविकारः मस्तुः ॥ (८।२।३ अ०) ॥

---

आमिक्षायां पयोधर्मातिदेशाधिकरणम् ।

सू. आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ १९ ॥ (१म पू०) ॥

भा. वैश्वदेवी 'आमिक्षा' उभयोः दधिपयसोर्विकारः स्यात्, 'उभयभाव्यत्वात्', उभाभ्यां हि सा भाव्यते, तत्र न युज्यते विशेषोऽस्यैव, न इतरस्य—इति। तस्मात् उभयोः ॥

सू. एकं वा चोदनैकत्वात् ॥ २० ॥ (सि०) ॥

भा. 'एकं वा' विकुर्य्यात् दधि पयो वा, नोभे, 'चोदनैकत्वात्', एकैषा चोदना,—'वैश्वदेव्यामिक्षा'—इति, सा एकेन विधक्तेन निराकाङ्क्षीक्रियते; तस्मात् एकं विकुर्य्यात् ॥

यत्तु, न युज्यते विशेषः—इति; तत्र उच्यते,—

सू. दधिसङ्घातसामान्यात् ॥ २१ ॥ (२य पू०) ॥

भा. संहतं दधि, आमिक्षाऽपि संहता, पयो द्रवम्; एष विशेषः। तस्मात् दध्नो विकारः—इति ॥

सू. पयो वा तत्प्रधानत्वाल्लोकवत् दध्नस्तदर्थत्वात् ॥ २२ ॥ (सि०) ॥

भा. 'पयो वा' आमिक्षया विक्रियते, न दधि, पयःप्रधानत्वात्, अस्य च संसर्गस्य। किं प्राधान्यम् पयसः?। भूयस्त्वं, प्रभूतं तत्र पयः, अल्पं दधि। 'दध्नः' च 'तदर्थत्वात्', दधि च तत्र पयो घनीभावयितुम् उपादीयते; 'लोकवत्', लोकेऽपि पय एव घनीभावयितुम् दधि उपादीयते। कथम्?। दध्यभावे अन्येन अम्लेनापि काञ्जिकादिना क्रियते, तत्रापि च आमिक्षाशब्दो भवति, दधिनियमः अम्ले हि अदृष्टार्थः। तस्मात् पयः एव अम्लसंयोगेन घनीभूतम् आमिक्षा—इत्युच्यते। पयश्चेत् आमिक्षा, पयस एव विकारो न्याय्यः॥

सू. धर्म्मानुग्रहाच्च ॥ २३ ॥ (यु०) ॥

भा. सद्यःकालता धर्म्मः पयोविकारत्वेन अनुगृह्यते, वैश्वदेवस्य सद्यःकालत्वात्, दधिविकारत्वे बाध्येत। 'वैश्वदेवोऽपि द्व्यहकालः क्रियेत'। तथा तस्य धर्म्मो बाध्येत, सद्योभावं च दर्शयति,—'जुषन्तां युज्यं पयः'—इति, यदि दध्नो विकारः स्यात्, तथा द्व्यहकालभावे दातव्यं, न कथञ्चन पयः स्यात्; तत्र एतद्दर्शनं नोपपद्यते। तस्मात् पयोविकारश्च आमिक्षा, दध्नश्च अधर्म्मकत्वम्॥ (८।२।४ अ०)॥

---

द्वादशाहे सत्रारीनयोर्यथासंख्यया धर्म्मातिदेशाधिकरणम् ॥

सू. सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ २४ ॥ (पू०) ॥

भा. द्वादशाहेऽहर्गणः, प्रायणीयोऽतिरात्रः, पृष्ठ्यः षडहः, चय-

भा. च्छन्दोमा अविवाक्यम् अहः, उदयनीयोऽतिरात्रः'—इति, स उभयसंज्ञकः,—'सत्रमहीनश्च'। कथं ज्ञायते?। अभियुक्तानाम् उपदेशात्, एवं हि उपदिशन्ति, 'सत्रमहीनश्च द्वादशाहः'—इति, शब्दार्थाधिगमे च अभियुक्तोपदेशः प्रमाणम्। संज्ञा-व्यवस्थया च तस्य धर्म्माः आम्नाताः,—'एको द्वौ बहवोऽपि वा अहीनेन यजेरन्', 'तान् दीक्षिता याजयेयुः', 'गृहपतिसप्त-दशाः सयस्त्विजो ब्राह्मणाः सत्रम् उपेयुः'—इत्येवमादयः। धर्म्मभेदाच्च संज्ञाव्यवस्था, यथा, ब्राह्मणः, परिव्राट्, वानप्रस्थः—इति, तत् दशमेऽध्याये (६ पा०) वक्ष्यते,—"द्वादशाहस्य सत्र-त्वमासनोपायिचोदने यजमानबहुत्वे सत्रशब्दाभिसंयोगात् ॥ (५०* ॥) यजतिचोदनात् अहीनत्वं, स्वामिनां च अस्थितपरि-माणत्वात्"॥ (५१ ॥)—इति, स द्विरात्रादिषु अहर्गणेषु प्रवर्त्तते—इत्युक्तम्, "गणेषु द्वादशाहस्य" (८।१।१७ सू०)—इति।

तत्र सन्दिह्यते,—किम् उभयप्रकारोऽसौ विकृतौ प्रवर्त्तते, उत व्यवस्थया, क्वचित् अहीनभूतः, क्वचित् सत्रभूतः?—इति। किं प्राप्तम्?—'तस्य उभयथा प्रवृत्तिः' स्यात्, 'एककर्म्यात्',—उभयविधस्तत्र प्रवर्त्तेत। कुतः?। 'एककर्म्यात्', एकम् इदं कर्म्म उभयविधम्—इत्युक्तम्, न तस्य प्रवृत्तौ विशेषो गृह्यते, इह एवंविधः, इह न—इति; तस्मात् उभयविधः प्रवर्त्तेत। 'ननु एका चेद्विधा प्रवृत्ता, द्वितीयया कार्य्यं नास्ति'। एक-कर्म्यात् विकल्पो भविष्यति, यथा आग्नेयविकारेष्वभिमर्शनस्य॥

सू. अपि वा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात्, प्रकृत्या तुल्यशब्दत्वात्॥ २५ ॥ (सि०) ॥

भा. 'अपि वा' नैतदेवं,—सर्व्वत्र उभयथा प्रवृत्तिः—इति, यत्र

* एवमेव सर्व्वत्र पाठः। सूत्रग्रन्थे च, "द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमान-बहुत्वेन च सत्रशब्दाभिसंयोगात्" इति पाठः।

# शुद्धिपत्रम्* ॥

| पत्रे । | पङ्क्तौ । | अशुद्धम् । | शुद्धम् । |
|---|---|---|---|
| ४ | ६ | परक्षो | परोक्षो |
| ४ | ६ | पारिप्लवा | पारिप्लवा |
| ९ | ४ | ग्रारिवनः | आश्विनः |
| १२ | १९ | दृष्णौ | दृषौ |
| १४ | १६ | पचतानि | पचैतानि |
| १४ | २१ | शाकमेध | साकमेध |
| १६ | २० | (७ । १ । ५ अ०) | (७ । १ । ४ अ०) |
| १८ | ११ | ७ । १ । ६ अ०) | (७ । १ । ५ अ०) |
| १९ | १८ | प्रोक्षणावक्षेपण | प्रोक्षणावेक्षण |
| २१ | १४ | निर्वयन्ति | निर्वर्त्तयन्ति |
| २२ | २५ | प्रामाण्यं | अप्रामाण्यं |
| २६ | २४ | अचू | अचु |
| २४ | ६ | ऽतिरात्रे' | ऽतिरात्रः' |
| २५ | १६ | ग्राह्मणा | ब्राह्मणा |
| ४० | १६ | ग्रक्नोति | अश्नोति |
| ४५ | २० | समानौ | सामानौ |
| ४७ | ६ | तदेतद्दा | तद्दैतद्दा |
| ५८ | १२ | नयने | नयमे |
| ७२ | ६ | कूम | कुम |
| ८७ | ९ | चोषध | चौषध (एवं परत्र) |
| ९२ | २१ | चन्द्रास्त्वौषधीभ्यो | चन्द्रास्त्वोषधीभ्यः |

* तदेवात्र समशोधि, यच्छोधनमापातत एव न बुद्धावुदेष्यति, यत्र यत्तु मुद्रायन्त्रेषक-दोषादिनाऽघटि, यस्य च शोधनं स्फुटप्रतीयमानतया न आयाससाध्यं भविष्यति, तत्प्रदर्शनं निरर्थकमित्युपेक्षितम् । यथा

| पत्रे | पङ्क्तौ । | अशुद्धम् । | शुद्धम् । | अशुद्धिकारणम् । |
|---|---|---|---|---|
| १ | ११ | ऐन्द्राग्नीदोनि | ऐन्द्राग्नादीनि | ईक्षणदोषः |
| १० | १९ | ऐन्द्राग्नादीणि | ऐन्द्र ग्नादीनि | |
| ११ | १४ | सूत्रचैव | सूत्रेचैव | मुद्रायन्त्रदोषः |
| १६ | ६ | आत्मानम | आत्मानम् | |

| | Rs. | As. |
|---|---|---|
| Pali Grammar, on the basis of Kachchayano, by Francis Mason. Fasc. I, II, Nos. 123 and 124, .. .. .. .. .. .. | 1 | 4 |
| Gopála Tapini, No. 183, .. .. .. .. .. . .. | 0 | 10 |

SANSKRIT WORKS IN PROGRESS.

*Old Series, Nos. 1 to 221, demi, 8vo.*

| | | |
|---|---|---|
| The Lalita-Vistara, or Memoirs of the Life and Doctrines of Śákya Sinha Edited by Bábu Ráiendralála Mitra. Published 5 Fasciculi, Nos. 51, 73, 143, 144 and 145. .. .. .. .. | 3 | 2 |
| The Taittiríya Bráhmana of the Black Yajur Veda with the commentary of Sáyana. Edited by Bábu Rájendralála Mitra. Published 24 Fasciculi, Nos. 125, 126, 147, 150, 151, 152, 153, 154, 155, 175, 176, 188, 189, 190, 191, 192, 196, 197, 204, 210, 216, 220, 222 and 223, | 15 | 0 |
| Taittiriya Sanhitá. Edited by Dr. E. Röer and E. B. Cowell, M. A. Published 22 Fasciculi, Nos. 92, 117, 119, 122, 131, 133, 134, 137, 149, 157, 160, 161, 166, 171, 180, 185, 193, 202, 203, 218, 219 221, and 224, .. .. . . .. .. .. . | 14 | 6 |
| The Tandya Mahabrahmana with the Commentary of Sayana Acharya Edited by Ananda Chandra Vedantavagisa. Fasc. 11, .. .. | 7 | 8 |

*New Series, Nos. 1 to 173, demi 8vo.*

| | | |
|---|---|---|
| The Taittiriya Aranyaka of the Black Yajur Veda. Edited by Bábu Rájendralála Mitra. Published 9 Fasciculi, .. .. .. | 5 | 10 |
| The Grihya Sútra of Ásvaláyana, with the commentary of Gárgyanáráyana. Edited by Ánandachandra Vedántavágíśa. Published Fasciculi, Nos. 102, 132, 143 and 164, .. . .. . | 2 | 8 |
| The Mímánsá Darśana with the Commentary of Śavara Svámin. Edited by Pandita Maheśa-chandra Nyáyaratna. Published, 9Fasc. | 5 | 10 |
| The Latyayana Sutra 7 Fasciculi, .. .. .. .. .. | 4 | 6 |
| The Agni Puran 3 Fasciculi, .. .. .. .. .. . | 1 | 14 |

*English Translations from the Sanskrit, complete, demi 8vo.*

| | | |
|---|---|---|
| An English Translation of the Brihad Áranyaka Upanishad, and Commentary. By Dr. F. Röer, Complete in 3 Fasciculi, Nos. 27, 38 and 135, .. .. .. .. . .. .. | 1 | 14 |
| An English Translation of the Chhándogya Upanishad, by Bábu Rájendralála Mitra. Complete in 2 Fasciculi, Nos. 78 and 181, | 1 | 4 |
| An English Translation of the Taittiríya, Aittaréya, Swetáswatara, Kéna, Ísa, Katha, Mundaka and Mándukya Upanishads, from the Original Sanscrita, by Dr. E. Röer. Complete in 2 Fasciculi, Nos. 41 and 50, . .. .. .. . . .. .. | 1 | 4 |
| The Súrya-Siddhánta, translated by Pandit Bápú Deva Śástrí. Complete in 1 Fasciculus, New Series, No. 1, ... . .. | 0 | 10 |
| The Siddhánta Sirobmani, translated by the late Lancelot Wilkinson, Esq. C. S. and revised by Pandit Bápú Deva Śástrí. Complete in 2 Fasciculi, New Series, Nos. 13 and 28, ... • .. .. .. | 1 | 4 |
| A Translation of the Sánkhya Aphorisms of Kapila, by Dr. Ballantyne. Complete in 2 Fasciculi, Nos. 32 and 81, New Series, .. .. | 1 | 4 |

*English Translation from the Sanskrit, in progress.*

| | | |
|---|---|---|
| Sáhitya Darpana or Mirror of Composition, a treatise on Literary criticism by Visvanátha Kavirája. Translated into English by Bábu Pramadádása Mitra. Bublished 3 Fasciculi, Nos. 212, 213 and 217, | 1 | 14 |

*Arabic Works, complete, 4to.*

| | | |
|---|---|---|
| Dictionary of Technical Terms. Complete in 20 Fasciculi, Nos. 58, 65, 82, 88, 95, 100, 108, 109, 118, 129, 132, 155, 158, 159, 162, 165, 167, 170, 173 and 182 at 1-4 each, .. .. . . | 25 | 0 |
| Risála i Shamsyah, a Treatise on Logic in Arabic, with an English Translation, by Dr A. Sprenger, No. 76, .. .. .. | 1 | 4 |

*Arabic Works, complete, royal 8vo.*

| | | |
|---|---|---|
| Túsy's list of Shiyah Books, and Alam-ul Hodá's Noted on Shiyah Biography. Edited by Dr. A. Sprenger and Maulavi Abdul Haqq. Complete in 4 Fasciculi, being Nos. 60, 71, 91 and 107, at 12 as each, | 3 | 0 |

| | Rs. | As. |
|---|---|---|
| *Arabic Works, complete, demi* 8vo. | | |
| Arabic Bibliography. Edited by Dr. A. Sprenger, Fasciculus I. No. 21, | 0 | 10 |
| The Nukhbat-al Fikr-wa Nuzhat-al Nazr. Edited by Capt. W. N. Lees, LL. D. Complete in 1 Fasciculus, New Series, No 37, .. | 0 | 10 |
| The Conquest of Syria, commonly ascribed to Wáqidí. Edited with notes by Capt. W. N. Less, LL. D. Complete in two Vols. being Nos. 59, 66, 98, 102, 103, 164, 168 and 187, .. .. | 5 | 10 |
| Futúh-ul-Shám, an account of the Moslem Conquests in Syria by Mir Ismáil. Edited by Capt. W. N. Lees, LL. D. Complete in 4 Fasciculi, being Nos. 56, 62, 84 and 85, .. .. .. | 2 | 8 |
| The Magházi of Wáqidi. Edited by A. Von Kremer. Complete in 5 Fasciculi, Nos. 110, 112, 123, 121 and 139, . .. | 3 | 2 |
| Suyúty's Itqan, on the Exegetic Sciences of the Qorân. Complete in 10 Fasciculi, being Nos. 44, 49, 57, 68, 70, 74, 77, 81, 99 and 104, .. | 8 | 0 |
| *Arabic Works in progress, royal* 8vo. | | |
| Biographical Dictionary of Persons who knew Mohammad. Published 20 Fasciculi, Nos. 61, 69, 75, 83, 86, 93, 101, 106, 111, 123, 128, 136, 138, 205, 207, 208, 209, 211, 214 add 215 at 12 annas each, | 15 | 0 |
| *Persian Works, complete demi* 8vo. | | |
| Táríkhi Firuz-Sháhi of Zia-i Barni. Edited by Saiyid Ahmad Khan. Complete in 7 Fasciculi, Nos. 2, 3, 7, 9, 13, 15 and 23, .. .. | 4 | 6 |
| Táríkhi Baiháki of Mas'úd. Edited by the late W. H. Morley, Esq. Complete in 9 Fasciculi, Nos, 16, 18, 21, 22, 26, 27, 29, 31 and 36, | 5 | 10 |
| The Muntakhab-al-Tawáríkh. Edited by Aghá Ahmad'Alí. Complete in 15 Fasciculi, Vols. I, II, III, No. 57, 58, 62, 64, 65, 131, 135, 136, 139, 140, 145, 146, 152, 153 and 161, .. . | 9 | 6 |
| Wis o Ramín, an ancient Persian poem. Edited by Aghá Ahmad'Alí. Complete in 5 Fasciculi, New Series, 48, 49, 52, 53 and 76, .. | 3 | 2 |
| Tabaqát-i Násiri. Edited by Capt. W. N. Lees, LL. D. Complete in 5 Fasciculi, New Series, Nos. 42, 43, 45, 47 and 50 .. .. | 3 | 2 |
| The Alamgir Námah by Muhammed Kázim ibn i Muhammad Amín Munshi. Edited by Maulavis Lhádim Husain and Abdul-I Hai. Published 12 Fasciculi, Nos. 87, 89, 91, 92, 94, 98, 99, 102, 104, 106, 109 and 134, at 0-10, .. .. .. .. .. .. | 7 | 8 |
| The Pádisháh Nameh by 'Abd-al-Hamid Láhauri. Edited by Maulavis Kabir-ul-Din Ahmad and Abdul-Rahim. Complete in 18 Fasciculi, Nos. 96, 100, 105, 107, 108, 110, 111, 114, 116, 117, 118, 121, 125, 126, 127, 128, 129, 133, at 0-10, .. .. .. | 11 | 4 |
| Iqbálnámah-i-Jaháugíri of Mu'tamid Khan. Edited by Maulavis'Abd-ul Hai and Ahmad'Ali. Published 3 Fasciculi, New Series, Nos. 77, 71 and 79, .. .. .. .. .. .. .. | 1 | 14 |
| *Persian Works in Progress,* 4to. | | |
| Farhang-i-Rashidi. Edited by Maulavi Zulfa-qar Áli. Fasciculi 2,.. | 1 | 4 |
| The Ain-i-Akbari by Abul Fazl i Mubárik i Allámi. Edited by H. Blochmann, M. A. Published 12 Fasciculi,.. .. .. .. | 15 | 0 |
| Maásir-i-Alamgiri. Edited by Ágá Áhmad'Alí, published Fasc. I, II, | 1 | 4 |
| Mulakhabul Lubab 18 Fasciculi, .. .. .. .. .. .. | 11 | 4 |
| *Persian Works in Progress, royal* 8vo. | | |
| Sikandar Námah i Bahri by Nizámi. Edited by Dr. A. Sprenger, Ágá Muhammud Shustary and Aghá Ahmad'Alí. Publish 2 Fasciculi, | 2 | 0 |
| *English Translation from Persian Works in Progress.* | | |
| The Ain-i-Akbari of Abul Fázl i Mubarik i Allámi. By H. Blochmann, M. A. Published 4 Fasciculi with 16 plates, .. .. .. | 7 | 0 |

# BIBLIOTHECA INDICA:

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

## ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 240.



## मीमांसादर्शनम् ॥

श्रीशबरस्वामिकृतभाष्यसहितम् ॥

## THE MI'MA'MSA' DARS'ANA,

WITH THE COMMENTARY OF S'AVARA SWA'MIN,

EDITED BY

PANDITA MAHES'ACHANDRA NYA'YARATNA.

FASCICULUS XI.



CALCUTTA.

PRINTED AT THE GANES'A PRESS.

1871.

भा. यजतिः श्रूयते, तत्र अहीनभूतस्य प्रवृत्तिः, पारिशेष्यात्; यत्र आसनोपायिचोदना, तत्र सत्रभूतस्य। कस्मात्?। 'प्रकृत्या तुल्यशब्दत्वात्', प्रकृत्या हि विकृतिः तुल्यशब्दा भवति; तस्मात् चोदनासामान्यात् प्रकृतिनियमः; अहीनभूतस्य यजतिचोदनः,—'द्वादशाहेन प्रजाकामो यजेत'—इति। सत्रभूत आसनोपायिचोदनः,—'द्वादशाहम् ऋद्धिकामा उपेयुः, द्वादशाहम् ऋद्धिकामा उपासीरन्'—इति॥

सू. द्विरात्रादीनामैकादशरात्रादहीनत्वं यजतिचोदनात् ॥ २६ ॥ (आ॰ नि॰ १) ॥

भा. अथ आह,—'के पुनस्ते अहर्गणाः यजतिचोदनाः, येषु अहीनभूतः प्रवर्त्तते? के वा आसनोपायिचोदनाः, येषु सत्रभूतः?'—इति। तदुच्यते,—'द्विरात्रादीनाम् ऐकादशरात्रात् अहीनत्वम्', तत्र अहीनभूतः प्रवर्त्तते। तेषां यजतिशब्देन चोदनात्,—'द्विरात्रेण यजेत'—इति॥

सू. त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायिचोदनात् ॥ २७ ॥ (आ॰ नि॰ २) ॥

भा. 'त्रयोदशरात्रम् ऋद्धिकामा उपेयुश्चतुर्दशरात्रं प्रतिष्ठाकामा उपासीरन्'—इति समुद्रूत्वा आचष्टे।

एवं वा, यस्मात् यजतिचोदनोऽहीनः, तस्मात् द्विरात्रादीनामप्यहीनत्वम्, तेऽपि हि यजतिचोदनाः। यस्मात् आसनोपायिचोदनं सत्रं, तस्मात् त्रयोदशरात्रादीनि सत्राणि, तानि अपि तच्चोदनानि—इति॥

सू. लिङ्गाच्च ॥ २८ ॥ (यु॰) ॥

भा. 'अग्निष्टोमो वै प्रजापतिः स उत्तरानेकाहानसृजत तमेतं द्विरात्रद्वयोऽर्जन्ता अचुस्त्वम् अस्मान् मा हासीरिति, तदेषाम्

भा. अहीनत्वम्'—इति द्विरात्रादीनाम् अहीनत्वं दर्शयति ॥ (८। २। ५ अ०) ॥

---

पञ्चदशरात्रादिषु उभयधर्मातिदेशाधिकरणम् ॥

सू. अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २९ ॥ (पू०) ॥

भा. पञ्चदशरात्रं, कुण्डपायिनामयनं च उभावपि अहीनौ। कस्मात्?। 'अन्यतरतोऽतिरात्रत्वात्', उभावपि एतौ अन्यतरतोऽतिरात्रौ तेन अहीनौ—इति, पञ्चदशरात्रस्तावत्, 'त्रिवृत् अग्निष्टुदग्निष्टोमः त्रिरात्रो दशरात्र उदयनीयोऽतिरात्रः'*—इति; कुण्डपायिनामयनमपि, 'मासमग्निहोत्रं जुहोति'—इत्यारभ्य, यावत् 'दशरात्रो महाव्रतम् उदयनीयोऽतिरात्रः'—इति। यश्च अन्यतरतोऽतिरात्रः, स अहीनः। कथम् ज्ञायते?। 'तद्भूतेषु अहीनत्वस्य दर्शनात्',—'तद्भूतेषु' अन्यतरतोऽतिरात्रभूतेषु, 'अहीनत्वं' श्रूयते, 'यत् अन्यतरतोऽतिरात्रः, तेन अहीनः'—इति ॥

सू. अहीनवचनाच्च ॥ ३० ॥ (यु०) ॥

भा. 'अहीनः'—इति च अयम् पञ्चदशरात्रः प्रत्यक्षम् उक्तः, —'यदन्यतरतोऽतिरात्रः, तेन अहीनः'—इति। तस्मादपि अहीनः—इति ॥

सू. सत्रे वोपायिचोदनात् ॥ ३१ ॥ (सि०) ॥

भा. 'सत्रे वा' एते, न अहीनौ। कुतः?। 'उपायिचोदनात्',

---

* 'उदयनीयोऽतिरात्रः' इति क० ह० द्वितीय-पुस्तकपाठः।

भा.—'ये एव भूतिकामिनस्ते, ते एनं पञ्चदशरात्रम् उपेयुः', कुण्डपायिनामयनेऽपि, 'भूतिकामा उपेयुः'—इति। कः पुनरेतयोर्लिङ्गयोर्विशेषः?। चोदनागतमेकं, वाक्यान्तरगतम् अन्यच; 'चोदनागतं, यत् तदन्तरङ्गं भवति, बहिरङ्गम् इतरत्। अयम् च अपरो विशेषः,—अहीनलिङ्गेन च नित्येन अहीनस्य संस्तुतिर्नोपपद्यते, उपपत्त्या एतत् अहीनत्वम् उच्यते,—'यत् अन्यतरतोऽतिरात्रः, तेन अहीनः'—इति; सा यदि तावत् उपपत्तिः साधिका, ततोऽन्तरेणापि वचनं, सिद्धम् अहीनत्वम्; अथ न साधिका, उच्यमानमपि न सिध्यति। तस्मात् न एतत् वचनं, किन्तर्हि अनुवादोऽयं स्तुत्यर्थः; स्तुतिश्च, नित्येन अहीनलिङ्गेन अन्यतरतोऽतिरात्रत्वेन अहीनस्य नोपपद्यते, यत्कारणं, सर्व एव अहीनः अन्यतरतोऽतिरात्रः। सत्रस्य तु उपपद्यते, येन तावत् अयम् अन्यतरतोऽतिरात्रः, तेन अहीनः, आत्मना च सत्रम्, अत उभयात्मा विशिष्टोऽयम् अन्येभ्यः सत्रेभ्यः—इति॥

सू. सत्रलिङ्गञ्च दर्शयति॥ ३२॥ (यु०)॥

भा. सत्रलिङ्गं च कुण्डपायिनामयने दर्शयति,—'गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्यः'—इति, गृहपतिर्हि सत्रे आम्नातः,—'गृहपतिसप्तदशाः सत्रम् उपेयुः'—इति। सत्रे च तेनार्थः ऋत्विग्यान् याजमानान् कर्त्तुम्, अन्येषां याजमानानाम् व्यावृतत्वात्। तस्मात् सत्रे एवैते—इति॥ (८।२।६ अ०)॥

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये अष्टमस्याध्यायस्य द्वितीयः पादः॥

## अष्टमस्य अध्यायस्य तृतीयः पादः ॥

शुचिदेवते आग्नेयस्याग्नावैष्णवे च आग्नीषोमीयस्य धर्म्मातिदेशाधिकरणम् ॥

सू. हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥ (पू०) ॥

भा. इह हविर्गणा उदाहरणम्,—'आग्नावैष्णवम् एकादशकपालं निर्वपेत्, सारस्वतं चरुम्, बार्हस्पत्यं चरुम्, अग्नये पावकाय अग्नये शुचये'—इत्येवमादयः। तत्र चिन्त्यते, किं शुचिदेवतस्य अग्नीषोमीयविध्यन्तः, आग्नावैष्णवस्यापि आग्नेयविध्यन्तः, उत विपर्य्ययः?—इति। किं प्राप्तम्?—'हविर्गणे परम्' शुचिदेवतं, 'उत्तरस्य' अग्नीषोमीयस्य विकारः, पूर्व्वमपि आग्नावैष्णवं, पूर्व्वस्य आग्नेयस्य विकारः। कुतः?। 'देशसामान्यात्',—क्रमसामान्यात्—इत्यर्थः; इह शुचिदेवतो द्वितीयः, प्रकृतावपि अग्नीषोमीयो द्वितीयः, इतरत्रापि आग्नावैष्णवः प्रथमः, प्रकृतावपि आग्नेयः प्रथमः; देशसामान्येन लिङ्गेन परम् उत्तरस्य, पूर्व्वं पूर्व्वस्य विकारः ॥

सू. देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥ २ ॥ (सि०) ॥

भा. न वा देशनियमः स्यात्, किन्तर्हि?—'देवतया',—'देवतासामान्यात्'। कुतः?। शब्दवती देवता, 'आग्नावैष्णवम्', 'अग्नये शुचये'—इति। 'इतरस्य' देशस्य, 'अश्रुतित्वात्',—देशो न श्रूयते, किन्तर्हि प्रचयात् गम्यते। किम् अतः?। एतदतो भवति, देवताप्रत्ययः कर्म्मचोदनायाम् अनन्तरत्वात् मुख्यः, इतरस्तु पौर्व्वापर्य्यापेक्षया उत्पद्यते; तस्मात् जघन्यः। मुख्या-

भा. तुपहस्य न्याय्यः। अतः शुचिदेवत्ये आग्नेयस्य विधान्तः, आग्नावैष्णवे च आग्नीषोमीयस्य ॥ (८।३।१ अ०) ॥

---

अनकसप्तरात्रे त्रिवृत्त्वस्य द्वादशाहधर्मातिदेशाधिकरणम् ॥

सू. गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ ३ ॥ (पू०) ॥

भा. जनकसप्तरात्रे श्रूयते,—'चत्वारि त्रिवृन्ति अहानि भवन्ति'—इति, तथा अन्यच श्रूयते, 'नव त्रिवृन्ति अहानि भवन्ति'—इति। तत्र सन्देहः,—किं पार्ष्ठिकस्य प्रथमस्य अयमभ्यासः, उत नानाङ्गां द्वादशाहिकानाम् स्तोमविधिः?—इति। किं प्राप्तम्?—"गणचोदनायां यस्य लिङ्गं, तदावृत्तिः प्रतीयेताग्नेयवत्", 'गणचोदनायाम्' एवंविधायां 'यस्य लिङ्गं' पार्ष्ठिकस्य प्रथमस्य अह्नः त्रिवृत्त्वं, तस्य एव आवृत्तिः 'प्रतीयेत', चोदनासामान्यात्, 'आग्नेयवत्'; तत् यथा, 'अग्नये पावकाय, अग्नये शुचये—'इतिदेवतैक्यात् चोदनासामान्यात् आग्नेयस्य विधान्ताभ्यासः; एवम् इहापि ॥

सू. नानाहानि वा सङ्ख्यातत्वात् प्रवृत्तिलिङ्गेन चोदनात् ॥ ४ ॥ (सि०) ॥

भा. 'नानाहानि वा' (द्वादशाहिकानि) प्रवर्त्तेरन्, न पार्ष्ठिकं प्रथमम् अहः। कस्मात्?। 'सङ्ख्यातत्वात्', सङ्ख्यात एव उच्यते, 'चत्वारि त्रिवृन्ति अहानि'—इति; पृथक्त्वनिवेशिनी हि 'चत्वारि'—इति सङ्ख्या, पृथक्त्वेन अङ्गां भवति—इति; सन्ति च तत्र सप्तरात्रे चोदनया प्रवृत्तानि नानाहानि द्वादशाहिकानि चत्वारि, तानि अनूद्य त्रिवृत्त्वं विधातुम् शक्यते, न तु त्रिवृन्ति सन्ति अहानि अनूद्य, तत्र चतुःसङ्ख्या विधीयते ॥

## अष्टमस्य अध्यायस्य तृतीयः पादः ॥

शुचिदेवते आग्नेयस्याग्नावैष्णवे च आग्नीषोमीयस्य धर्मातिदेशाधिकरणम् ॥

सू॰ हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥ (पू॰) ॥

भा॰ इह हविर्गणा उदाहरणम्,—'आग्नावैष्णवम् एकादशकपालं निर्वपेत्, सारस्वतं चरुम्, बार्हस्पत्यं चरुम्, अग्नये पावकाय अग्नये शुचये'—इत्येवमादयः। तत्र चिन्त्यते, किं शुचिदेवतस्य अग्नीषोमीयविधान्तः, आग्नावैष्णवस्यापि आग्नेयविधान्तः, उत विपर्य्ययः?—इति। किं प्राप्तम्?—'हविर्गणे परम्' शुचिदेवतं, 'उत्तरस्य' अग्नीषोमीयस्य विकारः, पूर्व्वमपि आग्नावैष्णवं, पूर्व्वस्य आग्नेयस्य विकारः। कुतः?। 'देशसामान्यात्',—क्रमसामान्यात्—इत्यर्थः; इह शुचिदेवतो द्वितीयः, प्रकृतावपि अग्नीषोमीयो द्वितीयः, इतरत्रापि आग्नावैष्णवः प्रथमः, प्रकृतावपि आग्नेयः प्रथमः; देशसामान्येन लिङ्गेन परम् उत्तरस्य, पूर्व्वं पूर्व्वस्य विकारः ॥

सू॰ देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥ २ ॥ (सि॰) ॥

भा॰ न वा देशनियमः स्यात्, किन्तर्हि?—'देवतया',—'देवतासामान्यात्'। कुतः?। शब्दवती देवता, 'आग्नावैष्णवम्', 'अग्नये शुचये'—इति। 'इतरस्य' देशस्य, 'अश्रुतित्वात्',—देशो न श्रूयते, किन्तर्हि प्रचयात् गम्यते। किम् अतः?। एतद्दतो भवति, देवताप्रत्ययः कर्म्मचोदनायाम् अनन्तरत्वात् मु इतरस्तु पौर्व्वापर्य्यापेक्षया उत्पद्यते; तस्मात् जघन्यः। २

भा. नुपहस्य न्यायः । अतः शुचिदेवत्ये आग्नेयस्य विधन्तः, आग्ना-वैष्णवे च आग्नीषोमीयस्य ॥ (८।३।१ अ०) ॥

---

अनकसप्तराचे त्रिवृत्स्वरूपु द्वादशाहधर्मातिदेशाधिकरणम् ।

सू. गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ ३ ॥ (पू०) ॥

भा. अनकसप्तराचे श्रूयते,—'चत्वारि त्रिवृन्ति अहानि भवन्ति'—इति, तथा अन्यच श्रूयते, 'नव त्रिवृन्ति अहानि भवन्ति'—इति । तच सन्देहः,—किं पार्ष्ठिकस्य प्रथमस्य अयमभ्यासः, उत नानाङ्गां द्वादशाहिकानाम् स्तोमविधिः?—इति । किं प्राप्तम्?—"गणचोदनायां यस्य लिङ्गं, तदावृत्तिः प्रतीयेताग्नेयवत्", 'गणचोदनायाम्' एवंविधायां 'यस्य लिङ्गं' पार्ष्ठिकस्य प्रथमस्य अङ्गः त्रिवृत्त्वं, तस्य एव आवृत्तिः 'प्रतीयेत', चोदनासामान्यात्, 'आग्नेयवत्'; तत् यथा, 'अग्नये पावकाय, अग्नये शुचये—'इतिदेवतैक्यात् चोदनासामान्यात् आग्नेयस्य विधन्ताभ्यासः; एवम् इहापि ॥

सू. नानाहानि वा सङ्घातत्वात् प्रवृत्तिलिङ्गेन चोदनात् ॥ ४ ॥ (सि०) ॥

भा. 'नानाहानि वा' (द्वादशाहिकानि) प्रवर्त्तेरन्, न पार्ष्ठिकं प्रथमम् अहः । कस्मात्?। 'सङ्घातत्वात्', सङ्घात एष उच्यते, 'चत्वारि त्रिवृन्ति अहानि'—इति; पृथक्त्वनिवेशिनी हि 'चत्वारि'—इति सङ्ख्या, पृथक्त्वेन अङ्गां भवति—इति; सन्ति च तच स[illegible]चोदन[illegible]नि नानाहानि द्वादशाहिकानि [illegible] र्व विधातुम् शक्यते, न तु त्रिवृन्ति[illegible] ङ्ख्या विधीयते ॥

भा. यजतिः श्रूयते, तत्र अहीनभूतस्य प्रवृत्तिः, पारिशेष्यात्; यत्र आसनोपायिचोदना, तत्र सत्रभूतस्य। कस्मात्?। 'प्रकृत्या तुल्यशब्दत्वात्', प्रकृत्या हि विकृतिः तुल्यशब्दा भवति; तस्मात् चोदनासामान्यात् प्रकृतिनियमः; अहीनभूतस्य यजतिचोदनः,—'द्वादशाहेन प्रजाकामो यजेत'—इति। सत्रभूत आसनोपायिचोदनः,—'द्वादशाहम् ऋद्धिकामा उपेयुः, द्वादशाहम् ऋद्धिकामा उपासीरन्'—इति॥

सू. द्विरात्रादीनामैकादशरात्रादहीनत्वं यजतिचोदनात्॥ २६॥ (आ॰ नि॰ १)॥

भा. अथ आह,—'के पुनस्ते अहर्गणाः यजतिचोदनाः, येषु अहीनभूतः प्रवर्त्तते? के वा आसनोपायिचोदनाः, येषु सत्रभूतः?'—इति। तदुच्यते,—'द्विरात्रादीनाम् ऐकादशरात्रात् अहीनत्वम्', तत्र अहीनभूतः प्रवर्त्तते। तेषां यजतिशब्देन चोदनात्,—'द्विरात्रेण यजेत'—इति॥

सू. त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायिचोदनात्॥ २७॥ (आ॰ नि॰ २)॥

भा. 'त्रयोदशरात्रम् ऋद्धिकामा उपेयुश्चतुर्दशरात्रं प्रतिष्ठाकामा उपासीरन्'—इति उदाहृत्य आचष्टे।

एवं वा, यस्मात् यजतिचोदनोऽहीनः, तस्मात् द्विरात्रादीनामप्यहीनत्वम्, तेऽपि हि यजतिचोदनाः। यस्मात् आसनोपायिचोदनं सत्रं, तस्मात् त्रयोदशरात्रादीनि सत्राणि, तानि अपि तच्चोदनानि—इति॥

सू. लिङ्गाच्च॥ २८॥ (यु॰)॥

भा. 'अग्निष्टोमो वै प्रजापतिः स उत्तरानेकाहानसृजत तमेतं द्विरात्रद्वयोऽन्वर्णंसा अचुस्तम् अस्मान् मा हासीरिति, तदेषाम्

भा. अहीनत्वम्'—इति द्विरात्रादीनाम् अहीनत्वं दर्शयति ॥ (८। २। ५ अ०) ॥

---

पञ्चदशरात्रादिषु सत्रधर्मातिदेशाधिकरणम् ॥

सू. अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २९ ॥ (पू०) ॥

भा. पञ्चदशरात्रं, कुण्डपायिनामयनं च उभावपि अहीनौ। कस्मात्?। 'अन्यतरतोऽतिरात्रत्वात्', उभावपि एतौ अन्यतरतोऽतिरात्रौ तेन अहीनौ—इति, पञ्चदशरात्रस्तावत्, "त्रिवृत् अग्निष्टुदग्निष्टोमः त्रिरात्रो दशरात्र उदयनीयोऽतिरात्रः"*—इति; कुण्डपायिनामयनमपि, 'मासमग्निहोत्रं जुहुति'—इत्यारभ्य, यावत् 'दशरात्रो महाव्रतम् उदयनीयोऽतिरात्रः'—इति। यश्च अन्यतरतोऽतिरात्रः, स अहीनः। कथम् ज्ञायते?। 'तद्भूतेषु अहीनत्वस्य दर्शनात्',—'तद्भूतेषु' अन्यतरतोऽतिरात्रभूतेषु, 'अहीनत्वं' श्रूयते, 'यत् अन्यतरतोऽतिरात्रः, तेन अहीनः'—इति ॥

सू. अहीनवचनाच्च ॥ ३० ॥ (यु०) ॥

भा. 'अहीनः'—इति च अयम् पञ्चदशरात्रः प्रत्यक्षम् उक्तः,—'यदन्यतरतोऽतिरात्रः, तेन अहीनः'—इति। तस्मादपि अहीनः—इति ॥

सू. सत्रे वोपायिचोदनात् ॥ ३१ ॥ (सि०) ॥

भा. 'सत्रे वा' एते, न अहीनौ। कुतः?। 'उपायिचोदनात्',

---

* 'उदयनीयोऽतिरात्रः' इति क० सं० द्वितीय-पुस्तकपाठः।

भा.—'ये एव भूतिकामिच्छन्तः, ते एनं पञ्चदशरात्रम् उपेयुः', कुण्डपायिनामयनेऽपि, 'भूतिकामा उपेयुः'—इति। कः पुनरेतयोर्लिङ्गयोर्विशेषः?। चोदनागतमेकं, वाक्यान्तरगतम् अन्यच; 'चोदनागतं, यत् तदन्तरङ्गं भवति, बहिरङ्गम् इतरत्। अयम् च अपरो विशेषः,—अहीनलिङ्गेन च नित्येन अहीनस्य संस्तुतिर्नोपपद्यते, उपपत्त्या एतत् अहीनत्वम् उच्यते,—'यत् अन्यतरतोऽतिरात्रः, तेन अहीनः'—इति; सा यदि तावत् उपपत्तिः साधिका, ततोऽन्तरेणापि वचनं, सिद्धम् अहीनत्वम्; अथ न साधिका, उच्यमानमपि न सिध्यति। तस्मात् न एतत् वचनं, किन्तर्हि अनुवादोऽयं स्तुत्यर्थः; स्तुतिश्च, नित्येन अहीनलिङ्गेन अन्यतरतोऽतिरात्रत्वेन अहीनस्य नोपपद्यते, यत्कारणं, सर्व एव अहीनः अन्यतरतोऽतिरात्रः। सत्रस्य तु उपपद्यते, येन तावत् अयम् अन्यतरतोऽतिरात्रः, तेन अहीनः, आत्मना च सत्रम्, अत उभयात्मा विशिष्टोऽयम् अन्येभ्यः सत्रेभ्यः—इति॥

सू. सत्रलिङ्गञ्च दर्शयति॥ ३२॥ (यु०)॥

भा. सत्रलिङ्गं च कुण्डपायिनामयने दर्शयति,—'गृहपतिर्गृहपतिः सुब्रह्मण्यः सुब्रह्मण्यः'—इति, गृहपतिर्हि सत्रे आम्नातः,—'गृहपतिसप्तदशाः सत्रम् उपेयुः'—इति। सत्रे च तेनार्थः ऋत्विगर्थान् याजमानान् कर्त्तुम्, अन्येषां याजमानानाम् आहृतत्वात्। तस्मात् सत्रे एवैते—इति॥ (८।२।६ अ०)॥

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये अष्टमस्याध्यायस्य द्वितीयः पादः॥

## अष्टमस्य अध्यायस्य तृतीयः पादः ॥

शुचिदेवते चाग्नेयस्याग्नावैष्णवे च चाग्नीषोमीयस्य धर्मातिदेशाधिकरणम् ॥

सू. हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥ (पू॰) ॥

भा. इह हविर्गणा उदाहरणम्,—'आग्नावैष्णवम् एकादशकपालं निर्वपेत्, सारस्वतं चरुम्, बार्हस्पत्यं चरुम्, अग्नये पावकाय अग्नये शुचये'—इत्येवमादयः। तत्र चिन्त्यते, किं शुचिदेवतस्य अग्नीषोमीयविधान्तः, आग्नावैष्णवस्यापि आग्नेयविधान्तः, उत विपर्य्ययः?—इति। किं प्राप्तम्?—'हविर्गणे परम्' शुचिदेवतं, 'उत्तरस्य' अग्नीषोमीयस्य विकारः, पूर्व्वमपि आग्नावैष्णवं, पूर्व्वस्य आग्नेयस्य विकारः। कुतः?। 'देशसामान्यात्',—क्रमसामान्यात् —इत्यर्थः; इह शुचिदेवतो द्वितीयः, प्रकृतावपि अग्नीषोमीयो द्वितीयः, इतरत्रापि आग्नावैष्णवः प्रथमः, प्रकृतावपि आग्नेयः प्रथमः; देशसामान्येन लिङ्गेन परम् उत्तरस्य, पूर्व्वं पूर्व्वस्य विकारः॥

सू. देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥ २ ॥ (सि॰) ॥

भा. न वा देशनियमः स्यात्, किन्तर्हि?—'देवतया',—'देवतासामान्यात्'। कुतः?। शब्दवती देवता, 'आग्नावैष्णवम्', 'अग्नये शुचये'—इति। 'इतरस्य' देशस्य, 'अश्रुतित्वात्',—देशो न श्रूयते, किन्तर्हि प्रचयात् गम्यते। किम् अतः?। एतदतो भवति, देवताप्रत्ययः कर्म्मचोदनायाम् अनन्तरत्वात् मुख्यः, इतरस्तु पौर्व्वापर्य्यापेक्षया उत्पद्यते; तस्मात् जघन्यः। मुख्या-

भा. नुवाहस्य न्याय्यः। अतः शुचिदेवत्ये आग्नेयस्य विधान्तः, आग्नावैष्णवे च आग्नीषोमीयस्य ॥ (८।३।१ अ०) ॥

---

अनकसप्तरात्रे चिहत्स्वहःसु द्वादशाहधर्मातिदेशाधिकरणम् ।

सू. गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥ ३ ॥ (पू॰) ॥

भा. अनकसप्तरात्रे श्रूयते,—'चत्वारि चिहन्ति अहानि भवन्ति'—इति, तथा अन्यत्र श्रूयते, 'नव चिहन्ति अहानि भवन्ति'—इति। तत्र सन्देहः,—किं पार्ष्ठिकस्य प्रथमस्य अह्नः अभ्यासः, उत नानाह्नां द्वादशाहिकानाम् स्तोमविधिः?—इति। किं प्राप्तम्?—"गणचोदनायां यस्य लिङ्गं, तदावृत्तिः प्रतीयेताग्नेयवत्", 'गणचोदनायाम्' एवंविधायां 'यस्य लिङ्गं' पार्ष्ठिकस्य प्रथमस्य अह्नः चिहत्त्वं, तस्य एव आवृत्तिः 'प्रतीयेत', चोदनासामान्यात्, 'आग्नेयवत्'; तत् यथा, 'अग्नये पावकाय, अग्नये शुचये'—इतिदेवतैक्यात् चोदनासामान्यात् आग्नेयस्य विधान्ताभ्यासः; एवम् इहापि ॥

सू. नानाहानि वा सङ्ख्यातत्वात् प्रवृत्तिलिङ्गेन चोदनात् ॥ ४ ॥ (सि॰) ॥

भा. 'नानाहानि वा' (द्वादशाहिकानि) प्रवर्त्तेरन्, न पार्ष्ठिकं प्रथमम् अहः। कस्मात्?। 'सङ्ख्यातत्वात्', सङ्ख्यात एव उच्यते, 'चत्वारि चिहन्ति अहानि'—इति; पृथक्त्वनिवेशिनी हि 'चत्वारि'—इति सङ्ख्या, पृथक्त्वेन अह्नां भवति—इति; सन्ति च तत्र सप्तरात्रे चोदनया प्रवृत्तानि नानाहानि द्वादशाहिकानि चत्वारि, तानि अनूद्य चिहत्त्वं विधातुम् शक्यते, न तु चिहन्ति बहूनि अहानि अनूद्य, तत्र चतुःसङ्ख्या विधीयते ॥

सू. तथा चान्यार्थदर्शनम् ॥ ५ ॥ (यु०) ॥

भा. चत्वारि त्रिवृन्ति अहानि अग्निष्टोममुखानि—इति, येषाम् अग्निष्टोमः प्रथमः, इतरेऽनग्निष्टोमाः, ते एवमुक्ते प्रतीयन्ते, न ये सर्व्वे अग्निष्टोमाः, यथा, अयोमुखं पिण्डच्छेदनम्*—इत्युक्ते न सर्व्वायसं प्रतीयते। यदि च त्रिवृतोऽभ्यासः स्यात्, सर्व्वे अग्निष्टोमा भवेयुः, अग्निष्टोमो हि असौ। तस्मात् द्वादशाहिकानाम् चोदकप्राप्तानाम् अह्नां त्रिवृत्ता विधीयते। एवं नव त्रिवृन्ति अहानि भवन्ति—इति॥ (८।३।२ अ०)॥

---

षट्त्रिंशद्रात्रे षडहधर्म्मातिदेशाधिकरणम् ॥

सू. कालाभ्यासेऽपि बादरिः कर्म्मभेदात् ॥ ६ ॥ (पू०) ॥

भा. क्वचित् कर्म्मविशेषे श्रूयते,—'षडहा भवन्ति. चत्वारो भवन्ति, पञ्चाहा भवन्ति'। तत्र सन्देहः,—किं द्वादशाहिकानाम् अह्नां प्रवृत्तिः, उत षडहस्य?—इति। किं प्राप्तम्?—'कालाभ्यासेऽपि बादरिः', षडहकालाभ्यासेऽप्येतस्मिन् श्रूयमाणे 'बादरिः' आचार्य्यो द्वादशाहिकानाम् अह्नां प्रवृत्तिं मन्यते स्म। कुतः?। 'कर्म्मभेदात्', षडहशब्देन अत्र अहर्न्निर्मितानि षट्सौत्यानि कर्म्माणि उच्यन्ते, तेषां च षट्कानां भेदो गम्यते,—'चत्वारः षडहाः'—इति पृथक्त्वनिवेशात् सङ्ख्यायाः। यदि एकस्यैव कर्म्मषट्कस्य पाष्ठिकस्याभिप्लविकस्य वा अभ्यासः कल्प्येत, ततः, चतुःषडहाः—इति स्यात्; अथ पुनः 'चत्वारः षडहाः' —इत्युक्ते चतुर्विंशत्यहानि प्रतीयन्ते, सा अहःसङ्घातचोदना प्रकृतिलिङ्गत्वात् द्वादशाहिकीम् अहःप्रवृत्तिं गृह्णाति। तस्मात् नानाह्नां द्वादशाहिकानां प्रवृत्तिः॥

---

* 'अयोमुखपिण्डच्छेदनम्' इति क० सं० पु० पाठः।

सू. तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसङ्ख्यत्वात् ॥ ७ ॥ (सि०) ॥

भा. 'तदावृत्तिं',—षाष्ठिकस्य एव प्रज्ञातस्य षडहस्य आवृत्तिं 'जैमिनिः' आचार्य्यो मेने। कुतः?। 'अह्नाम् अप्रत्यक्षसङ्ख्यत्वात्'। चतुर्विंशतिः अह्नाम् अप्रत्यक्षा सङ्ख्या अनुमानात् गम्यते, तस्याश्च षडहचतुष्टयेनैव अनुमानं, तेन पूर्वं तावत् षडहचतुष्टयमेव प्रत्येति, तत् समाहृत्य चतुर्विंशतिसङ्ख्यां, यथा, पूर्वं धूमं प्रतिपद्यते, पश्चात् अग्निम्, यश्च धूमप्रत्ययेनैव कृतार्थो भवति, न असौ अग्निप्रत्ययमाद्रियते; इहापि षडहप्रत्ययात् एव तत्प्रवृत्तिः प्रसज्यते, तया च कृतार्थः किं चतुर्विंशतिसङ्ख्यया प्रतीतया करिष्यति?। तस्मात् षडहाभ्यासः।

अथ यदुक्तं,—'पृथक्त्वनिवेशिनी सङ्ख्या आवृत्तौ बाधेत'—इति। तत्र ब्रूमः,—'षडहः'—इति प्रज्ञातः षडहः सन्निहितो गम्यते, तस्य चतुःसङ्ख्यासम्बन्धः साक्षान्नास्ति—इत्यावृत्त्या भविष्यति, यथा, उपसदां प्रयाजानुयाजानां च। यस्यापि चतुर्विंशतिरात्रः 'चत्वारः षडहाः'—इत्येवं चोद्यते, तस्यापि दशरात्रे प्रवर्त्तमाने आवृत्त्यैव सङ्ख्यापूरणं, भिन्नानां षडहानामभावात्। यश्च उभयोर्दोषो न असौ एकं पक्षं निवर्त्तयति ॥ (८।१।२ अ०) ॥

---

संस्थागणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥

सू. संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥ ८ ॥ (पू०) ॥

भा. इह संस्थागणा उदाहरणम्,—'अग्निष्टोमः पञ्चोक्थ्यः, अता-

ग्निष्टोमं भवति, प्रतातिरात्रं भवति'*—इत्येवमादयः। अत्र चिन्त्यते, किं ज्योतिष्टोमस्य अयम् अभ्यासः, उत एवंसङ्ख्यानां संस्थाविशिष्टानाम् अन्नां वादः?—इति। किं प्राप्तम्?— 'संस्थागणेषु तदभ्यासः प्रतीयेत, तस्य एव प्राकृतस्य ज्योतिष्टोमस्य अयम् अभ्यासः। कुतः?। 'कृतलक्षणग्रहणात्', तस्य एतत् कृतं लक्षणं,—'अग्निष्टोमः उक्थ्यः षोडशी अतिरात्रः' —इति, तत्संयोगेन एताः संस्थाः उत्पन्नाः, स ताभिः शक्यते लक्षयितुम्, तञ्च लक्षयित्वा सङ्ख्यां केवलां विधास्यति, नानान्नां तु वादे संस्थां सङ्ख्या च उभयं—विधीयते,—उक्थ्या संस्था भवन्ति—इति, ते च पञ्च भवन्ति—इति, तथा वाक्यम्भिद्यते। तस्मात् ज्योतिष्टोमाभ्यासः॥

सू. अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात्॥ ९॥ (सि०)॥

भा. नैतदेवं,—ज्योतिष्टोमाभ्यासः—इति,—कथं तर्हि?—'प्रकृतिः तद्विशिष्टा स्यात्', द्वादशाहिकानि अहानि संस्थाविशिष्टानि स्युः। कस्मात्?। 'अधिकारात्', तानि अत्र चोदकेन अधिकृतानि, एवं चोदकानुग्रहो भविष्यति।

'ननु प्रत्यक्षविहितो ज्योतिष्टोमोऽग्निष्टोमादिभिः शब्दैः'। न —इत्याह। कथम्?। 'अभिधानस्य तन्निमित्तत्वात्',—अग्निष्टोमाभिधानं संस्थानिमित्तं, न ज्योतिष्टोमाभिधायकं, तत्संस्थं क्रतुम् वदितुम् शक्नोति, न ज्योतिष्टोममेव। यत्तु, अनेकार्थम्— इति; न अनेकार्थं भविष्यति; गणचोदनया प्राप्तानाम् अन्नां पञ्चानां संस्थामात्रं विधायिष्यते, 'प्रताग्निष्टोमम्'—इत्यपि समासः उभयविशेषणविशिष्टं गणम् आह, स एक एवार्थः,

---

* "प्रतोक्थ्यं भवति, प्रतातिरात्रं भवति, पञ्चाग्निष्टोमः, पञ्चोक्थ्यः" इत्येवं न्यायमालायां पाठः।

भा. यथा, 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति'—इति, पृथक्त्वनि-वेशिनी च एवं सङ्ख्या अनुगृहीता भविष्यति। तस्मात् द्वादशा-हिकानाम् नानाङ्गां वादः॥ (८।३।४ अ०)॥

---

अतोकथ्यादौ ज्योतिष्टोमात् स्तोत्रोपचयाधिकरणम्॥

सू. गणादुपचयस्तत्प्रकृतित्वात्॥ १०॥ (पू०)॥

भा. 'अतोक्थ्यं भवति अतातिरात्रं भवति'—इति श्रूयते। तत्र द्वादशाहिकानि अहानि भवन्ति, तानि च प्रायेणोक्थ्य-संस्थानि, 'द्वौ अग्निष्टोमौ अतोक्थ्यं भवति'—इत्युक्तेः अग्नि-ष्टोमयोः उक्थ्यस्तोत्रोपचयः प्राप्तः; 'अतातिरात्रं भवति'—इति सर्वेषु रात्रिपर्य्यायोपचयः। तत्र चिन्त्यते,—किं द्वादशाहा-दुपचयः कर्त्तव्यः, उत ज्योतिष्टोमात्?—इति। किं प्राप्तम्?—'गणात् उपचयः'। कुतः?। 'तत्प्रकृतित्वात्',—द्वादशाहप्रकृतयः एते अहर्गणास्तेषु द्वादशाहिको विध्यन्तः प्राप्यते, यदि द्वाद-शाहात् उपचयः, एवं चोदकानुग्रहो भविष्यति। तस्मात् गणात् उपचयः॥

सू. एकाहाद्वा तेषां समत्वात् स्यात्॥ ११॥ (सि०)॥

भा 'एकाहाद्वा' ज्योतिष्टोमात् उपचयः, न द्वादशाहात्। कस्मात्?। 'तेषां समत्वात्', द्वादशाहिकानाम् अह्नाम् इतरै-र्वैकृतैः समत्वं भवति,—तान्यपि अन्यतः संस्थाम् आकाङ्क्षन्ति, इमान्यपि; न च, भिक्षुका भिक्षुकात् आकाङ्क्षन्ति, सति अन्यस्मिन् प्रभवसमर्थे भिक्षुके?। किम् एतत् उक्तं भवति?। द्वादशाहे संस्थास्तोत्राणि अनाम्नातानि—इत्यतः यत्र आम्ना-तानि, ततः आकाङ्क्षन्ति; वैकृतेषु अहःसु तानि न आम्नातानि

भा. —इति, तस्मात् वैकृतान्यपि अङ्गानि, यत्र विहितानि ततः एव आकाङ्क्षितुमर्हन्ति, ज्योतिष्टोमे च तानि आम्नातानि ; तस्मात् ज्योतिष्टोमात् उपचयः॥ (८।३।५ अ०)॥

---

'गायत्रमेतदहर्भवति' इत्यादावुत्पत्तिगायत्रीणामागमाधिकरणम्॥

सू. गायत्रीषु प्राकृतीनामवच्छेदः प्रकृत्यधिकारात्* सङ्ख्यात्वादग्निष्टोमवद्व्यतिरेकात्तदाख्यत्वम्॥ १२॥ (पू०)॥

भा. उपचयश्चिन्तितः, अपचयः इदानीं चिन्त्यते। इदं श्रूयते, —'वाजपेयेन इष्ट्वा बृहस्पतिसवेन यजेत'—इति ; तत्र इदं समाम्नातं,—'गायत्रमेतत् अहर्भवति'—इति। अत्र विचार्य्यते, —किं प्राकृतीनाम् त्रिष्टुब्जगतीनाम् अक्षरावलोपं कृत्वा गायत्रं तदहः कर्त्तव्यम्, उत उत्पत्तिगायत्रीणाम् दाशतयीभ्य आगमं कृत्वा ?—इति। अत्र सूत्रेणैव उपक्रमः,—'गायत्रीषु प्राकृतीनाम् अवच्छेदः', 'गायत्रीषु' श्रूयमाणासु—'गायत्रमेतत् अहर्भवति'—इति, 'प्राकृतीनाम्' त्रिष्टुब्जगतीनाम् 'अवच्छेदः' (अक्षरावलोपः) कर्त्तव्यः। कुतः ?। 'प्रकृत्यधिकारात्', चोदकेन अत्र प्राकृत्यः त्रिष्टुब्जगत्यः प्राप्ताः अधिकृता विद्यन्ते, यदि अन्यासामृचाम् आगमः क्रियेत, प्राकृतः प्रत्ययो बाध्येत।

'ननु प्रत्यक्षश्रुताः गायत्र्यः, ताभिश्चोदकप्राप्ता इतरा बाधितव्याः'। न—इत्याह। कस्मात् ?। 'सङ्ख्यात्वात्',—अयं गायत्रीशब्दः सङ्ख्यावाचकः। कथं ज्ञायते ?। 'अव्यतिरेकात्' चतुर्विंशतिसङ्ख्याम् एष न व्यभिचरति, न क्वचित् चतुर्विंशति-

---

* प्रकृत्याऽभिकारात्' इति का० क्री० पु० पाठः।

भा. सङ्ख्यया विना दृष्टः, चतुर्विंशतिसङ्ख्याहीनासु त्रिष्टुब्जगतीषु न कदाचित् भवति। तस्मात् सङ्ख्याशब्दोऽयं, सङ्ख्याशब्दश्चेत् अक्षरावलोपः कर्त्तव्यः। 'अग्निष्टोमवत्', यथा, 'शताग्निष्टोमं भवति'—इत्युक्ते द्वादशाह्निकानाम् अह्नाम् उक्थ्यावलोपः क्रियते, एवम् इहापि॥

सू. तन्नित्यवच्च पृथक्सतीषु तद्वचनम्॥ १३॥ (यु०)॥

भा 'तन्नित्यवत्' सङ्ख्यामात्रं ब्रुवन्तं गायत्रीशब्दं मत्वा, 'पृथक्-सतीषु' (पृथग्भूतासु गायत्रीभ्यः) जगतीषु अगायत्रीषु 'तद्-वचनम्' भवति (गायत्रीवचनं भवति),—'ये हि द्वे गायत्र्यौ, सा एका जगती'—इति। यदि सङ्ख्यायां गायत्रीशब्दः, ततो 'जगत्यां द्वे चतुर्विंशतिसङ्ख्ये'—इत्येतद्वचनम् उपपद्यते; अथ ऋचः, ततो द्वे ऋचौ जगत्यां न स्तः—इति, एतद्वचनम अनुपपन्नं स्यात्! तस्मादपि सङ्ख्यायां गायत्रीशब्दः। तथा, इदम् अपरं च दर्शनं,—'तिस्रोऽनुष्टुभश्चतस्रो गायत्रीः करोति' —इति॥

सू. न विंशतौ दशेति चेत्॥ १४॥ (आ०)॥

भा. अथ कश्चित् ब्रूयात्,—'न विंशतौ' दशसङ्ख्याऽस्ति, न सङ्ख्या सङ्ख्यान्तरे वर्त्तते, गुणो हि सङ्ख्या, न च, गुणा गुणेषु वर्त्तन्ते; एवम् अष्टाचत्वारिंशत्सङ्ख्यायां चतुर्विंशतिसङ्ख्या नास्ति। तस्मात् सङ्ख्यार्थेऽपि गायत्रीशब्दे, 'एका जगती द्वे गायत्र्यौ' —इत्येतत् अनुपपन्नमेव। यश्च उभयोर्द्वाणो न असौ एकस्य वाचकः॥

सू. एकसङ्ख्यमेव स्यात्॥ १५॥ (आ० नि०)॥

भा. अत्र उच्यते,—न ब्रूमः,—सङ्ख्यायां सङ्ख्या वर्त्तते—इति,

भा. किन्तर्हि,—अष्टाचत्वारिंशत्सङ्ख्या-परिच्छिन्नेषु अक्षरेषु अव-यवभूते द्वे चतुर्विंशतिसङ्ख्ये, न तु द्वे ऋचौ—इति; न च, सङ्ख्या सङ्ख्यान्तरं निवर्त्तयति, यदि निवर्त्तयेत्, "एकसङ्ख्यमेव स्यात्", यस्य दश गावः, तस्य द्वौ पञ्चकौ गवाम्—इत्येतद्वचनं न स्यात्! भवति च तत्; तस्मात् न सङ्ख्या सङ्ख्यान्तरं निवर्त्तयति॥

एवं वा, "न विंशतौ दशेति चेत्" (१४ सू०),—यद्यपि सङ्ख्यायां गायत्रीशब्दः, एवमपि न अक्षरावलोपः कर्त्तव्यः। किङ्कारणम्?। विंशतौ दश विद्यन्ते। किमतः?। इदं तावदतः, येन विंशतिः उपात्ता, उपात्ताः तेन दश भवन्ति; एवं येन त्रिष्टुब्जगत्यः प्रयुक्ताः, प्रयुक्ताः तेन तदन्तर्गता गायत्र्यो भवन्ति। तस्मात् अविकारेण प्रयोगः, एवं चोदकानुग्रहश्च भवति, गायत्रं च अहः कृतं भवति॥ "एकसङ्ख्यमेव स्यात्",—अथ आह,—जगत्यां त्रिष्टुभि च उपात्तायां न गायत्र्य उपात्ताः भवन्ति। कथम्?। साधनं परिच्छिन्दती सङ्ख्या कर्म्मणि अङ्गीभवति, न जगत्याः त्रिष्टुभो वा अवयवः साधनं, किन्तर्हि त्रिष्टुब्जगत्यः।

'अथ उच्येत,—'गायत्रमेतत् अहर्भवति'—इतिवचनात् अवयवः एव अत्र साधनम्—इति, तथा सति अक्षरावलोपः एव प्राप्नोति, उत्तरस्य अवयवस्य अनङ्गत्वात्, न च, अनङ्गे अनुपादीयमाने चोदको बाध्यते; तस्मात् यद् उक्तं,—यद्यपि सङ्ख्यायां गायत्रीशब्दः, एवमपि अविकारेण प्रयोगः'—इति; एतत् अयुक्तम्; दर्शयति, न च उत्तरस्यां सङ्ख्यायाम् उपात्तायां पूर्व्वाः सङ्ख्या उपात्ता भवन्ति—इति, यदयम् एका च दश च शतं च सहस्रं च परार्द्धं च—इति सर्वसङ्ख्या अनुक्रामति, यदि च उत्तरस्यां सङ्ख्यायां उपात्तायां पूर्व्वाः सङ्ख्या उपात्ताः भवन्ति, "एकसङ्ख्यमेव स्यात्", एकैव अपरार्द्धसङ्ख्या भवेत्, सा

भा. हि सर्वाभ्य उत्तरा। यतस्तु एकाद्या अपि अनुक्रान्ताः, अतो विज्ञायते,—न उत्तरस्यां सङ्ख्यायां उपात्तायां पूर्व्वाः सङ्ख्या उपात्ताः भवन्ति—इति ॥

सू. गुणाद्वा द्रव्यशब्दः स्यादसर्व्वविषयत्वात् ॥ १६ ॥ (सि०) ॥

भा. नैतदेवं,—सङ्ख्यायां गायत्रीशब्दः—इति,—कथन्तर्हि ?—'गुणात्' 'द्रव्यशब्दः स्यात्',—चतुर्विंशत्यक्षरयुक्तस्य द्रव्यस्य वाचकः। कस्मात् ?। 'असर्व्वविषयत्वात्', यदि सङ्ख्याशब्दः स्यात्, सर्व्वस्मिन् चतुर्विंशतिसङ्ख्यासङ्ख्येये वर्त्तेत गोयूथादौ ! न च वर्त्तते, तस्मात् न सङ्ख्याशब्दः ॥

सू. गोत्ववच्च समन्वयः ॥ १७ ॥ (यु० १) ॥

भा. यथा, 'गौः'—इति सत्यपि गमननिमित्ते सामान्यद्रव्याभिधाने सास्नादिमत्येव 'समन्वयो' नान्यत्र—इति तद्वचन एव गोशब्दो विज्ञायते, एवम् अयमपि ऋग्वचनः एव विज्ञातुम् न्याय्यः ॥

सू. सङ्ख्यायाश्च शब्दवत्त्वात् ॥ १८ ॥ (यु० २) ॥

भा. चतुर्विंशतिसङ्ख्यावाचकः शब्दोऽस्ति,—'चतुर्विंशतिः'—इति, न, अस्य अपरेण गायत्रीशब्देन अर्थः, संज्ञाया व्यवहारार्थत्वात्, एकेन व्यवहारसिद्धेः ॥

सू. इतरस्याश्रुतित्वाच्च ॥ १९ ॥ (यु० ३) ॥

भा. 'इतरस्य' (ऋग्द्रव्यस्य) 'अश्रुतित्वात्' अशब्दत्वात्—इत्यर्थः। तस्यापि व्यवहारार्थेन संज्ञाशब्देन प्रयोजनं; तत्र अयं गायत्रीशब्दोऽर्थवान् भवति, सङ्ख्यायां निष्प्रयोजनः। तस्मात् अपि

भा. ऋक्छब्दो न्याय्यः। अतो गायत्रीणाम् ऋचामागमः कर्त्तव्यः —इति॥

सू. द्रव्यान्तरे निवेशादुक्थ्यलोपैर्विशिष्टं स्यात्॥ २०॥ (पू॰ यु॰ नि॰ १)॥

भा. यत् उपवर्णितम्,—अग्निष्टोमवत्—इति; तत्र ब्रूमः,—अग्निष्टोमशब्दस्य द्रव्यान्तरे कस्मिंश्चित् निवेशो नास्ति, यथा गायत्रीशब्दः ऋग्द्रव्ये, अयं हि केवलाग्निष्टोमान्ततां ब्रूते, न च, उक्थ्यलोपम् अन्तरेण, द्वादशाहिकानाम् अह्नां अग्निष्टोमान्तता भवति—इति अवश्यकार्य्यं उक्थ्यलोपः। अयं पुनः गायत्रीशब्दः ऋग्द्रव्यस्य वाचकः—इत्युक्तं। न च, अक्षरावलोपेन तत् ऋग्द्रव्यं प्राप्यते। तस्मात् विषमोऽयम् उपन्यासः——इति॥

सू. अशास्त्रलक्षणत्वाच्च॥ २१॥ (यु॰)॥

भा. अशास्त्रलक्षणानि च उक्थस्तोत्राणि शताग्निष्टोमे, तानि शास्त्रलक्षणया अग्निष्टोमान्ततया बाध्यन्ते; इह पुनर्विपरीतं, शास्त्रलक्षणा गायत्र्यः, आनुमानिक्यः त्रिष्टुब्जगत्यः, ता न शक्नुवन्ति गायत्रीं बाधितुम्॥

सू. उत्पत्तिनामधेयत्वात् भक्त्या पृथक्सतीषु स्यात्॥ २२॥ (पू॰ यु॰ नि॰ २)॥

भा. अथ यदुक्तं,—'सङ्ख्यायां गायत्रीशब्दो दृष्टः,—'ये हि द्वे गायत्र्यौ, सा एका जगती'—इति, तस्य कः परिहारः?'। उच्यते, औत्पत्तिकम् एतत् ऋचो नामधेयम्—इत्युक्तम्; अतः 'उत्पत्तिनामधेयत्वात्' योऽयं जगत्यवयवे चतुर्विंशत्यक्षरे पदसञ्चये प्रयोगः, स 'भक्त्या' विज्ञेयः, न हि, एकस्य शब्दस्य

भा. अनेकार्थता सत्यां गतौ न्याय्या। कथा पुनर्भक्त्या ?। परिमाणसामान्यात्,—यत् परिमाणं द्वयोर्गायत्र्योः, तत् एकस्या जगत्याः ; अत एतत् उक्तं,—‘ये हि द्वे गायत्र्यौ, सा एका जगती’—इति, यथा, यौ द्वौ कौरवौ स एको वाह्लीकः—इति।

एतच्च गायत्रीद्वयप्रशंसार्थं वचनम्। कथम् ?। इदं श्रूयते,—‘द्वाभ्यां गायत्रीभ्यां वैश्यस्य’—इति, तदेतत् अयुक्तम् इव उच्यते, जगत्या वैश्यस्य कार्य्यं, जागतो हि वैश्यः, तदेतत् द्वाभ्यां गायत्रीभ्यां क्रियते, जगत्यैव तत् कृतं भवति,—‘ये हि द्वे गायत्र्यौ सा एका जगती’— इति। तस्मात् अहेतुरयं सङ्ख्यार्थत्वे गायत्रीशब्दस्य॥

सू. वचनमिति चेत् ॥ २३ ॥ (आ०) ॥

भा. शक्यं तावत् तत्र एतत् वक्तुम्, यत्र अनुवादो गायत्रीशब्दः ; यत्र तु विधिः, तत्र कथं ? यथा, ‘तिस्रोऽनुष्टुभः, चतस्रो गायत्रीः करोति ?’—इति। कः पुनर्विधौ विशेषः ?। विधौ शब्दार्थेन व्यवहारो भवति, तिस्रोऽनुष्टुभः चतस्रो गायत्र्यो न शक्याः कर्त्तुम्, शक्यास्तु चतस्रस्तुर्विंशतयः। तस्मात् तत्र सङ्ख्याया गायत्रीशब्दः—इति।

अत्र ब्रूमः—

सू. यावदुक्तम् ॥ २४ ॥ (आ० नि०) ॥

भा. इहैव एकत्र सङ्ख्यार्थो न अन्यत्र, क्वचित् दर्शनात्। ‘आह,—यद्येवं न सङ्ख्यावचनः, कथम् इह सङ्ख्यार्थो जातः ?’—इति। उच्यते,—लक्षणयाऽपि विधानं भवति, यथा लोके, ‘अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम्’—इति, वेदेऽपि, ‘पृष्ठेरुपतिष्ठन्ते’—इति ; न च, तत्र सिंहशब्दः प्रतिकृतिवचनो दृष्टः—इति अन्यत्रापि प्रतिकृतिवचनो विज्ञायते, पृष्ठशब्दो

भा. वा मन्त्रवचनः, न च, लक्षणया प्रयोगेऽस्यार्थः परिच्छिद्यते, यत्कारणं, स्वार्थे एव वर्त्तमानः अर्थान्तरं लक्षयति, स्वार्थं अजहत् नैव लक्षयेत्। तस्मात् अयमपि अहेतुः॥

सू. अपूर्व्वे च विकल्पः स्याद्यदि सङ्ख्याविधा-नम्॥ २५॥ (यु०)॥

भा. 'अपूर्व्वे च' दर्शपूर्णमासकर्म्मणि 'विकल्पः स्यात्', 'यदि' सङ्ख्यायां गायत्रीशब्दः; तत्र हि श्रूयते,—'गायत्र्या परिदध्यात्' —इति; एवं श्रुते आजुहोतायाश्चतुर्विंशत्यक्षरस्य पदत्रयस्य च विकल्पः स्यात्! विकल्पे पक्षे आजुहोतायाः बाधः, स च अयुक्तः सत्यां गतौ। तस्मादपि नैतत् सङ्ख्याविधानम्॥

सू. ऋग्गुणत्वान्नेति चेत्॥ २६॥ (आ०)॥

भा. अत्र उच्यते,—न प्रकृतौ विकल्पो भविष्यति। कुतः?। 'ऋग्गुणत्वात्', ऋग्गुणो हि तत्र प्रयोगोऽङ्गीकृतः, ऋचः तस्य सामिधेन्य आम्नाताः, यदि अनृचा परिदधीत, ऋग्गुणत्वं बाधेत! तस्मात् तत्र आजुहोतयैव परिधास्यति, तथा सति गायत्र्या परिहितं भविष्यति; ऋग्गुणत्वं च उपगृहीतम्॥

सू. तथा पूर्व्ववति स्यात्॥ २७॥ आ० नि०)॥

भा. 'पूर्व्ववति' अपि बृहस्पतिसवे 'तथा' स्यात्', यथा, अपूर्व्वे; अत्रापि ऋग्गुणकः प्रयोगः अङ्गीकृतः चोदकेन, तत्रापि ऋक्षु उपादीयमानासु गायत्रं चैव अक्षः कृतं भवति; ऋग्गुणकत्वं च न बाधितम्। तस्मात् न अक्षरावलोपः॥

सू. गुणाविशेषश्च सर्व्वत्र॥ २८॥ (यु०)॥

भा. तुशब्दस्य स्थाने चशब्दः, दृष्टश्च तुशब्दस्य अर्थे चशब्दः,

भा. यथा, 'किं च इह भवति'—इति। गुणस्य चतुर्विंशतिसङ्ख्यायाः सर्वत्रावेशः, कृत्स्नायाम् आजुह्वोतायां, न अवयवे ; अतः तस्याम् उपादीयमानायाम् ऋग्गुणत्वं च उपगृहीतं भवति, सङ्ख्या च ; इहस्पतिसवे पुनः या ऋचः चोदकेन अर्क्कीशताः, तासाम् अवयवे चतुर्विंशतिसङ्ख्या निविष्टा, तस्मिन् उपादीयमाने ऋग्गुणत्वम् अनुपात्तं भवति, प्रकृतिगायत्रीषु तु उपात्तं भवति। तस्मात् न सङ्ख्याभिधाने गायत्रीशब्दे प्रकृतिगायत्रीणाम् आगमः प्राप्नोति ॥

अपर आह,—इदं तावदयं सङ्ख्यावादी प्रष्टव्यः,—कस्मात् अक्षरगतायामेव सङ्ख्यायां भवानवस्थितः, न पुनः अन्यसङ्ख्येय-गतायामपि,—अहगतायां चमसगतायां वा? यावताऽविशेषेण श्रुतं, 'गायत्रमेतत् अहर्भवति'—इति ; एवं सति सर्वत्र गुणावेशः प्राप्नोति ॥

सू. निष्पन्नग्रहणात् नेति चेत् ॥ २९ ॥ (आ०) ॥

भा. स 'चेत्' ब्रूयात्,—यत्र अयं निष्पन्नः,—गायत्रीशब्दः प्रसिद्धः—इत्यर्थः ; तस्य ग्रहणं न्याय्यम्, अयं च अक्षरगतायामेव सङ्ख्यायां प्रसिद्धो न सर्वत्र ; तस्मात् न सर्वसङ्ख्येयगतो गृह्यते—इति ; स वक्तव्यः,—

सू. तथेहापि स्यात् ॥ ३० ॥ (आ० नि०) ॥

भा. यथा अक्षरगतायामेव सङ्ख्यायां दृष्टो न अन्यत्र, एवम् ऋक्षु एव दृष्टो न अन्यस्मिन् चतुर्विंशत्यक्षरे गद्ये वा, यथा च अक्षरेषु एव दृष्टः—इति न अनक्षरे विज्ञायते ; एवम् ऋक्षु दृष्टः—इति नानृक्षु विज्ञातुम् न्याय्यः।

अत्र आह,—'यद्यपि अयम् ऋक्षु गायत्रीशब्दः, एवमपि अक्षरावलोपः कार्य्यः। किङ्कारणम्?। प्रकृत्युपबन्धनात्, चोद-

भा. केन अत्र प्राकृत्यः त्रिष्टुब्जगत्यः प्रापिताः, ता इमा नोज्झिता भविष्यन्ति। गायत्रीशब्दस्य सङ्ख्यासामान्यात् शक्नोति तदवयवान् वक्तुम्, एवम् उभौ विधी अनुगृहीतौ भविष्यतः—प्राकृतो वैकृतश्च'—इति। अत उत्तरं पठति,—

सू. यदि वाऽविशये नियमः प्रकृत्युपबन्धाच्छरेष्वपि प्रसिद्धः स्यात् ॥ ३१ ॥ (आ॰ नि॰) ॥

भा. 'यदि' 'अविशये' असंशयेऽपि गायत्रीषु विहितासु 'प्रकृत्युपबन्धनात्' अगायत्र्यां गायत्रीशब्दः कल्प्यते, 'शरेष्वपि' 'शरमयं बर्हिर्भवति'—इति कुशेषु शरशब्दः कल्पयितव्यः; कौशमेव बर्हिः कार्य्यं; वक्तव्यो वा विशेषः॥

सू. दृष्टः प्रयोग इति चेत् ॥ ३२ ॥ (आ॰) ॥

भा. अयम् विशेषो 'दृष्टः',—चतुर्विंशतिसङ्ख्यायाम् अक्षरगतायां गायत्रीशब्दस्य 'प्रयोगः',—'ये द्वे गायत्र्यौ सा एका जगती'—इति, तेन शक्यते कल्पयितुम्॥

सू. तथा शरेष्वपि ॥ ३३ ॥ (आ॰ नि॰) ॥

भा. शरशब्दस्यापि कुशेषु प्रयोगो दृश्यते,—'शरवणमेव इदं कुशवनम्'—इति ॥

सू. भक्त्येति चेत् ॥ ३४ ॥ (आ॰) ॥

भा. अत्र उच्यते,—स तत्र शरशब्दो भाक्तः प्रयुज्यते, दीर्घत्वात् पृथुपत्रत्वात् सादृश्यवादोऽसौ,—'शरवणमेव इदं कुशवनम्'—इति स्वार्थे वर्त्तमानः सादृश्यं गमयति, स्वार्थं जहत् कथं गमयेत्, तस्मात् शरेष्वेव तत्र शरशब्दस्य प्रयोगो न कुशेषु—इति ॥

सू. तथेतरस्मिन् ॥ ३५ ॥ (आ० नि०) ॥

भा. 'तथा इतरस्मिन्' अपि 'ये द्वे गायत्र्यौ सा एका जगती'—इति भाक्त एव गायत्रीशब्दः—इत्युक्तं, सोऽपि स्वार्थे एव वर्त्तमानः तत्सदृशं गमयति—इति ऋक्ष्वेव प्रयुक्तो न सङ्ख्यायां, तस्मात् न सङ्ख्यायां गायत्रीशब्दः। अतो न अक्षरावलोपः कर्त्तव्यः ॥

सू. अर्थस्य चासमाप्तत्वात् न तासामेकदेशे स्यात् ॥ ३६ ॥ (यु०) ॥

भा. अपि च त्रिष्टुब्जगतीनाम् 'एकदेशे' वाक्यमपरिसमाप्तं भवति, न च, अपरिसमाप्तेन वाक्येन अर्थः कश्चित् अभिधीयते, अर्थाभिधानार्थश्च मन्त्रप्रयोगः, तत्र मन्त्रप्रयोग एव अनर्थकः स्यात्। तस्मात् न तासां त्रिष्टुब्जगतीनाम् एकदेशे गायत्रीशब्दः स्यात्। तस्मात् उत्पत्तिगायत्रीणामेव दाशतयीभ्यः आगमः कर्त्तव्यः—इति ॥ (८।३।६ अ०) ॥

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये अष्टमस्य अध्यायस्य तृतीयः पादः समाप्तः ॥

## अष्टमस्य अध्यायस्य चतुर्थः पादः ॥

दर्विहोमशब्दस्य कर्म्मनामधेयताधिकरणम् ॥

सू. दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥

भा. 'यदेकया जुहुयात्, दर्विहोमं कुर्य्यात्'—इति श्रूयते। अस्मिन् दर्विहोमशब्दे भवति संशयः,—किं गुणविधिः, उत कर्म्मनामधेयम्?—इति। किं प्राप्तम्?—'दर्विहोमो यज्ञाभिधानं', कर्म्मनामधेयम्—इत्यर्थः। कुतः?। 'होमसंयोगात्', होमशब्दः अत्र श्रूयते, तत्प्रधानश्च अयं समासः, दर्विशब्दः उपसर्जनं, होमश्च कर्म्म। अथ वा 'जुहुयात्'—इति कर्म्म उच्यते, तेन समुचितो 'यदेकया जुहुयात्'—इति। तस्मात् कर्म्मनामधेयं स्थितं तावत्; ततः अर्थान्तरं प्रक्रियते॥ (८। ४। १ अ०)॥

---

दर्विहोमशब्दस्य लौकिकवैदिकोभयकर्म्मनामधेयताधिकरणम् ।

सू. स लौकिकानां स्यात् कर्तुस्तदाख्यत्वात् ॥ २॥ (पू०)॥

भा. यदा कर्म्मनामधेयं, तदा चिन्त्यते,—किं लौकिकानाम् स्मार्त्तानाम् कर्म्मणाम् अष्टकादीनाम् नामधेयं दर्विहोमशब्दः, उत सर्व्वेषाम् एव लौकिकानाम् वैदिकानाञ्च?—इति। किं प्राप्तम्?—'स लौकिकानाम् स्यात्', 'स' खलु दर्विहोमशब्दः, 'लौकिकानाम्' कर्म्मणाम् नामधेयं 'स्यात्'। कुतः?। 'कर्त्तुस्तदाख्यत्वात्', तेषां कर्त्ता, तेन दर्विहोमशब्देन समाख्यायते,—'शिनीनाम् दार्विहोमिको ब्राह्मणः, अम्बष्ठानाम् दार्विहोमिको ब्राह्मणः'—इति; यश्च यत् करोति स तेन आख्या-

भा. यते, यथा, लावकः, पावकः—इति; यदि च अष्टकादीनाम् नामधेयम् एतत्, ततस्तेषां कर्म्मणाम् कर्त्ता दार्विहोमिकसमाख्यामर्हति—इति। तस्मात् लौकिकानाम् नामधेयम्।

सू. सर्व्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥ (सि०) ॥

भा. 'सर्वेषां' लौकिकानाम् वैदिकानाञ्च नामधेयमेतत्, न लौकिकानामेव। कस्मात्?। 'दर्शनात् वास्तुहोमे', 'वास्तुहोमे' हि वैदिके दर्विहोमत्वं दर्शयति, 'यदेकया जुहुयात्, दर्विहोमं कुर्य्यात्, पुरोऽनुवाक्याम् अनूच्य याज्यया जुहोति सदेवतत्वाय' —इति।

'ननु विपरीतम् एतद्दर्शनं,—'यदेकया जुहुयात् दर्विहोमं कुर्य्यात्', अदर्विहोमं सन्तम्—इत्यापद्यते, यदि दर्विहोम एव असौ, ततः एकया द्वाभ्यां च हूयमानो दर्विहोमः एव भवति; तच्च एतद्दर्शनं नोपपद्यते,—'यदेकया जुहुयात् दर्विहोमं कुर्य्यात्'—इति।

अत्र उच्यते,—यदि लौकिकानाम् एव नामधेयं, न वैदिकानाम्, ततः एकयापि हूयमानोऽसौ नैव दर्विहोमो भवति, अलौकिकत्वात्, तच्च एतद्वचनं नोपपद्यते, 'यदेकया जुहुयात् दर्विहोमं कुर्य्यात्'—इति। तस्मात् ज्ञापकमेवेदं,—वैदिकानाम् दर्विहोमत्वे। 'एवमपि ज्ञापकम् उक्तम्, कुतः प्राप्तिः?'। उच्यते, होमशब्दस्य सामान्याभिधायित्वात् प्राप्तिः। तस्मात् लौकिकवैदिकानाम् नामधेयम् एतत् ॥ (८।४।२ अ०) ॥

---

दर्विहोमशब्दस्य होमनामधेयताधिकरणम् ॥

सू. जुहोतिचोदनानां वा तत्संयोगात् ॥ ४ ॥

भा. लौकिकानाम् वैदिकानाञ्च नामधेयं दर्विहोमशब्दः—इति

भा. स्थितम्। इदानीं चिन्त्यते,—किं यजतिचोदनानाम् जुहोति-चोदनानाञ्च सर्वेषां नामधेयम्, उत जुहोतिचोदनानाम् एव? —इति। अविशेषात् सर्वेषां—इति प्राप्ते उच्यते, जुहोतीनाम् नामधेयं, न यजतीनाम्। कुतः?। 'तत्संयोगात्', होमशब्द-संयोगात्, अयं होमशब्दः जुहोतेर्वाचकः, न यजतेः, यजतौ लक्षणया स्यात्। तस्मात् जुहोतिनामधेयम्॥ (८।४। ३ अ०)॥

---

दर्विहोमशब्दस्य गुणविधिपरत्वनिराकरणाधिकरणम्॥

सू. द्रव्योपदेशाद्वा गुणाभिधानं स्यात्॥ ५॥ (पू०)॥

भा. स्थितादुत्तरम् उच्यते,—यदुक्तं कर्म्मनामधेयं दर्विहोमः—इति; तन्न, किन्तर्हि?—'गुणाभिधानं स्यात्', गुणविधिः—इत्यर्थः। कुतः?। 'द्रव्योपदेशात्', द्रव्योपदेशोऽवगम्यते,—दर्व्या होमो दर्विहोमः—इति; एवम् एतौ दर्विहोमशब्दौ यथाप्रसिद्धिकल्पितौ भविष्यतः। तस्मात् गुणविधिः॥

सू. न लौकिकानामाचारग्रहणत्वाच्छब्दवतां चान्यार्थ-विधानात्॥ ६॥ (सि०)॥

भा. न अयं गुणविधिर्युज्यते। किङ्कारणम्?। 'लौकिकानां तावत् आचारगृहीता दर्विः 'त्वग्बिलया मूलदण्डया दर्व्या जुहोति'—इति, सा न विधातव्या, श्रौतानामपि अन्यानि होमार्थानि पात्राणि आम्नातानि, 'स्रुवेण जुहोति, चमसेन जुहोति'—इति, तैः सह दर्वेर्विकल्पः स्यात्, स च अन्याय्यः, यत्कारणं स्रुवादीनां विधायकः शब्दोऽस्ति, 'स्रुवेण जुहोति'—इति, न तु दर्वेः, तत्र हि आनुमानिको विधिशब्दः॥

सू. दर्शनाच्चान्यपात्रस्य ॥ ७ ॥ (यु०) ॥

भा. अन्यच्च पात्रं दर्विहोमे दृश्यते, 'भूतेभ्यस्त्वेत्यपूर्व्वां स्रुवमुद्गृह्णाति'*—इति। तस्मात् न गुणविधिः ॥

सू. तथाग्निहविषोः ॥ ८ ॥ (आ० नि०) ॥

भा. अथ उच्येत,—'अग्निहविषोः कार्य्ये दर्विर्भविष्यति, दर्व्यां होमो दर्विहोमो दर्व्वैर्वा होमो दर्विहोमः'—इति। तत्र ब्रूमः,—"तथाग्निहविषोः" अपि, यथा पात्रकार्य्ये दर्विर्न युज्यते, "तथा अग्निहविषोः" कार्य्येऽपि, तत्रापि आहवनीय आधारत्वेन विहितः,—'यत् आहवनीये जुहोति'—इति, अन्यच्च प्रदेयत्वेन पुरोडाशादि। तस्मात् अग्निहविषोरपि कार्य्ये न दर्व्वैर्निवेशः ॥

सू. उक्तश्चार्थसम्बन्धः ॥ ९ ॥ (यु०) ॥

भा. उक्तं च अस्माभिः अग्नेः कार्य्ये अन्यत् द्रव्यम् असमर्थं, दहनपचन-प्रकाशनकर्म्म अग्नेः, न च, एतत् कार्य्यम् अन्यत् द्रव्यं शक्नोति कर्तुम्—इति। तस्मात् न अग्निकार्य्ये दर्व्वेः उपदेशः। अतो न गुणविधिः, कर्म्मनामधेयमेव दर्विहोमशब्दः—इति ॥ (८ । ४ । ४ अ०†) ॥

दर्विहोमशब्दस्यापूर्व्वताधिकरणम् ॥

भा. दर्विहोमशब्दः कर्म्मनामधेयम्—इत्युक्तं, तत्र चिन्त्यते,—किम् अपूर्व्वाः दर्विहोमाः, उत कुतश्चिद्धर्म्मग्राहिणः?—इति।

---

* "भूतेभ्यस्त्वेत्यूर्द्ध्वां स्रुवमुद्गृह्णाति" इति का० श्री० पु० पाठः।

† क० सं० विद्यालयस्थ ६२२ संख्यक-मीमांसासूत्रग्रन्थे द्वितीयसूत्रादारभ्य एतत्सूत्रपर्य्यन्तमेकमधिकरणमित्युदलेखि।

भा. किं प्राप्तम्?—न अपूर्व्वाः—इति। कुतः?। इतिकर्त्तव्यताऽविधेः, अविहितेतिकर्त्तव्यताकं कर्म्म विहितेतिकर्त्तव्यताकात् धर्मान् गृह्णाति—इत्युक्तं, अविहितेतिकर्त्तव्यताकाश्चामी; तस्मात् पूर्व्ववन्तः—इति, यद्येतदेवं, तदा एतत् आपतति,—किंपूर्व्वाः? —इति। अत्र उच्यते,—

सू. तस्मिन्सोमः प्रवर्त्तेताव्यक्तत्वात्॥ १०॥ (पू०)॥

भा. 'तस्मिन्' खलु दर्विहोमे 'सोमः प्रवर्त्तेत', सौमिको विध्यन्तः स्यात्। कुतः?। 'अव्यक्तत्वात्', अव्यक्तचोदनः सोमः, अमी अपि च अव्यक्तचोदनाः 'भिक्षे जुहोति'—इति; अतः चोदना-सामान्यात् सौमिको विध्यन्तः—इति॥

सू. न वा स्वाहाकारेण संयोगाद्वषट्कारस्य च निर्द्देशात्तन्त्रे तेन विप्रतिषेधात्॥ ११॥ (सि०)॥

भा. वाशब्दः पक्षं व्यावर्त्तयति। न अत्र सौमिको विध्यन्तो न्याय्यः। किङ्कारणम्?। 'स्वाहाकारेण संयोगात्', स्वाहा-कारेण संयुक्ता दर्विहोमाः,—'पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा'—इति। किम् अतः?। 'वषट्कारस्य' 'निर्द्देशात्तन्त्रे' 'तेन' 'च' विप्रतिषेधः, तन्त्रे च सौमिके वषट्कारो निर्दिष्टः, तेन अस्य विप्रतिषेधः, उभयोः प्रदानार्थत्वात्; यदि सौमिको विध्यन्तः, ततो वषट्कारेण भवितव्यं, तत्र एतत् स्वाहाकाराम्नानम् अनर्थकं स्यात्; अथ विकल्पः क्रियते, तथापि उभयोः पक्षे बाधः; अथ त्वपूर्व्वा दर्विहोमाः, नैष विरोधो भविष्यति। तस्मात् अपूर्व्वाः॥

सू. शब्दान्तरत्वात्॥ १२॥ (हे० १)॥

भा. शब्दान्तरं च यजतिशब्दात् जुहोतिशब्दः, यजतिचोदनश्च

भा. सोमः, दर्विहोमाः पुनर्जुहोतिचोदनाः, चोदनासामान्येन च धर्मप्राप्तिरिष्यते; तस्मादपि अयुक्ता सौमिकी धर्मप्राप्तिः। 'ननु अव्यक्तत्वात् चोदनासामान्यम् उक्तम्'। अत्र उच्यते, —सामान्येऽव्यक्तत्वे, यजतिशब्दो विशेषलिङ्गं, तेन यजिमतीषु अयमस्तु धर्मनियमः, यथा समाने औषधगुणत्वे देवतैकत्वेन विशेषलिङ्गेन सौर्य्यकर्म्मणि आग्नेयविधन्तः—इति ॥

सू. लिङ्गदर्शनाच्च ॥ १३ ॥ (हे० २) ॥

भा. 'लिङ्गदर्शनाच्च' एतत् विज्ञायते, न अत्र सौमिको विधन्तः—इति, औदुम्बरीहोमे हि स्वाहाकारं विधाय आज्यविधिपरे वाक्ये दर्शयति,—'घृतेन द्यावापृथिवी आपृणेत्यन्तरा* कर्णा जुहोति। आ मूलात् अवस्रावयति। भूमिगते स्वाहा करोति' —इति। यदि अत्र सौमिको विधन्तः स्यात्, वषट्कारस्ततो† भवेत्, न स्वाहाकारः ॥

सू. उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं तच्चाविप्रतिषिद्धा पुनःप्रवृत्तिर्लिङ्गदर्शनात्पशुवत् ॥ १४ ॥ (आ०) ॥

भा. लिङ्गदर्शनस्य परिहारः उच्यते,—यदुक्तं,—औदुम्बरीहोमे लिङ्गवत् स्वाहाकारस्य दर्शनाच्च सौमिको विधन्तः—इति; अत्र ब्रूमः,—'उत्तरार्थस्तु स्वाहाकारो यथा साप्तदश्यं', तत् यथा, साप्तदश्यम् अनारभ्याधीतं—'सप्तदश सामिधेनीरन्वाह'—इति, अनारभ्यवादानाम् प्रकृत्यर्थत्वात् दर्शपूर्णमासावगतम् ततः प्राकरणिकेन पाञ्चदश्येन बाधितं सत् विकृत्यर्थं जातं, एवम् अयं स्वाहाकारः अनारभ्याधीतः,—'स्वाहाकारेण वषट्-

* 'आपृणेत्यन्तरा' इति क० सं० एवं आ० सो० पु० पाठः।
† 'वषट्कारस्ततः' इति आ० सो० पु० पाठः।

भा. कारेण वा देवेभ्यो हविः प्रदीयते'—इति, तेनैव न्यायेन प्रकृतिं निविविक्षुः सोमं दर्शपूर्णमासौ च, ततस्तथैव वषट्कारेण उपबद्धः, तद्वर्जम् अन्यानि प्रदानानि उपसंक्रामति ; 'तच अविप्रतिषिद्धा' सोम—'धर्म्मप्रवृत्तिः' 'पशुवत्,' तद्यथा, पशौ साप्तदश्ये श्रूयमाणे न दार्शपौर्णमासिकी तत्र प्रवृत्तिर्विप्रतिषिध्यते, वाचनिकत्वात् साप्तदशस्य, एवम् इहापि वाचनिकत्वात्, स्वाहाकारं प्रति 'लिङ्गदर्शनात्' न सौमिकधर्म्मप्रवृत्तिर्विप्रतिषिध्यते। 'पुनः'—शब्दस्तु अनर्थकः, यथा किं पुनरिदम् ? —इति ॥

सू. अनुत्तरार्थौ वाऽर्थवत्त्वादानर्थक्याद्धि प्राकृतस्योपरोधः स्यात् ॥ १५ ॥ (आ० नि०) ॥

भा. यदुक्तं,—उत्तरार्थः स्वाहाकारः—इति, तन्न। कुतः?। 'अनुत्तरार्थः' 'अर्थवत्त्वात्', प्रकृतौ एव अस्यार्थवत्त्वं, नारिष्टहोमेषु, पार्वणहोमयोस्तु 'पूर्णमासाय सुराधसे स्वाहा'—इति, अनर्थकत्वात् 'हि प्राकृतस्य उपरोधः स्यात्',—यदि प्राकृतौ अनर्थकः स्यात् स्वाहाकारः, ततः प्राकृतस्य वषट्कारस्य विकृतौ प्राप्तस्य अनारभ्यवादेन स्यात् 'उपरोधः', वषट्कारबाधः—इत्यर्थः, न त्वस्य आनर्थक्यम्, तस्मात् न उत्तरार्थः, न चेत् उत्तरार्थः, लिङ्गमेव एतत् भवति असोमपूर्वत्वे दर्विहोमानां, 'भूमिगते स्वाहा करोति'—इति ॥

सू. न प्रकृतावपीति चेत् ॥ १६ ॥ (आ०) ॥

भा. एवं 'चेत्' पश्यसि,—नारिष्टहोमेषु पार्वणहोमयोस्तु स्वाहाकारस्य निवेशः—इति,—प्रकृतौ अपि नारिष्टहोमादौ न अस्य निवेशो घटते, तथापि वषट्कार एव प्राप्नोति, स हि अविशेषेण दर्शपूर्णमासयोर्विहितः,—'द्व्यक्षरो वषट्कार एष वै

भा. प्रजापतिः सप्तदशो यज्ञे अन्वायत्ते'—इति। 'ननु स्वाहाकारोऽपि प्रत्यक्षं पठितः'। सत्यं पठितः, वषट्कारस्तु विहितः, अतश्चोदना—इति; 'न अस्य यज्ञो व्यथते प्रजापतौ यज्ञेन प्रतितिष्ठति'—इति स्वाहाकारं पाठेन प्राप्तं बाधते, पाठे हि आनुमानिको विधिः प्रत्यक्षेण विधिना बाध्यते, न चेत् तथापि निवेशः, उत्तरार्थः एव स्वाहाकारो भवति (विज्ञत्यर्थः) ॥

सू. उक्तं समवाये पारदौर्बल्यम् ॥ १७ ॥ (आ० नि०) ॥

भा. अत्र आह, नैतत् युक्तं, वषट्कारेण स्वाहाकारो बाध्यते—इति। कुतः?। यतः 'उक्तं' (३।३।१४ सू०) श्रुत्यादीनाम् 'समवाये' परस्य दुर्बलत्वं, इह च वाक्यप्रकरणयोः सन्निपातः, प्रकरणेन वषट्कारः प्राप्नोति, नारिष्टहोमेषु तन्मन्त्रपदैरेकवाक्यत्वात् स्वाहाकारः; वाक्यं च प्रकरणाद्बलीयः। 'ननु स्वाहाकारस्य उपरिष्टात् प्रदानार्थो वषट्कारः प्रयोक्ष्यते'। न खलु स्वाहाकारेण एव प्रदानं निर्वर्त्तितम्, कथम् अविहितः प्रदानार्थं स्वाहाकारः प्रदानार्थं निर्वर्त्तयिष्यति? विहितश्च कथम् स्वाहाकारेण वा वषट्कारेण वा देवेभ्यो हविः प्रदीयते? —इति।

'ननु उभयोः स्वाहाकारवषट्कारयोः प्रकृतावाम्नानात् अनारभ्य-वादस्य आनर्थक्यम्'। अत उच्यते, प्रदानार्थताम् अनयोर्विधास्यति। तस्मात् न सोमप्रकृतयो दर्विहोमाः ॥

सू. तच्चोदना वेष्टेः प्रवृत्तित्वात्तद्विधिः स्यात् ॥ १८ ॥ (पू० २) ॥

भा. वाशब्दः पक्षान्तरपरिग्रहे। 'तच्चोदना वा', तत्—इत्यनेन दर्विहोमाः प्रतिनिर्दिश्यन्ते; जुहोतिचोदना ये दर्शपूर्णमासयोः अङ्गकर्मविशेषाः, ते दर्विहोमेषु प्रवर्त्तेरन्। के पुनस्ते?।

भा. नारिष्टहोमाः। कस्मात् कारणात्?। ते हि प्रवृत्तधर्म्माणः*,—सर्व्वेष्टिषु सर्व्वपशुबन्धेषु प्रवर्त्तमाना दृष्टाः, यस्य च यो धर्म्मः प्रायेण दृष्टः, स तस्य अदृश्यमानोऽप्यनुमीयते, यथा यः परार्थान् प्रायेण करोति, अन्यस्मिन् अपि परार्थकरणे स एव सम्भाव्यते। तस्मात् तेषां प्रवृत्तिः॥

सू. शब्दसामर्थ्याच्च॥ १९॥ (हे० १)॥

भा. शब्दसामर्थ्यं च,—चोदनासामान्यं दर्विहोमानां,—नारिष्टहोमेऽपि हि जुहोतिचोदना;—'नारिष्टान् जुहोति, भिन्ने जुहोति'—इति, चोदनासामान्यात् धर्म्मप्राप्तिः॥

सू. लिङ्गदर्शनाच्च॥ २०॥ (हे० २)॥

भा. लिङ्गं चैतम् अर्थं दर्शयति, यथा नारिष्टहोमपूर्व्वत्वं दर्विहोमानाम्—इति। किं लिङ्गं भवति?। अग्निहोत्रे श्रूयते, 'यदि कीटोऽवपद्येतान्तःपरिधि निनयेत्'—इति, तथा अग्नौ श्रूयते, 'अन्तर्व्वेदि तिष्ठन् सावित्राणि जुहोति'—इति, परिधयो वेदिश्च अङ्गप्रधानार्थत्वात् नारिष्टहोमाङ्गं, यदि तेषां धर्म्माः प्रवर्त्तेरन्, तत एतद्दर्शनम् उपपद्यते। तस्मात् तेषां प्रवृत्तिः॥

सू. तच्चाभावस्य हेतुत्वात्, गुणार्थे स्याददर्शनम्॥ २१॥ (उ०)॥

भा. यदेतत् 'गुणार्थे' (नारिष्टहोमार्थे) दर्शनम् उपदिष्टं, नारिष्टहोमानां प्रवृत्तावित्यर्थः, 'अदर्शनं' तत्, असाधकम्—इत्यर्थः। कुतः?। 'तच्चाभावस्य हेतुत्वात्', त्र्यम्बकेषु 'अप्रतिष्ठिता वै त्र्यम्बकाः—इत्याहुः। नेध्मा बर्हिः संनह्यते, न प्रयाजा

---

* प्रवृत्तिधर्म्माणः इति का० श्री० पु० पाठः।

भा. इज्यन्ते, न अनुयाजा इज्यन्ते, न सामिधेनीः अन्वाह'—इति, अप्रतिष्ठितत्वं त्र्यम्बकाणां प्रतिज्ञाय तदुपपादनार्थम् इध्मादीनामभावो हेतुत्वेन उपदिश्यते; यदि च नारिष्टहोमाः प्रवर्त्तेरन्, ततोऽङ्गप्रधानार्थत्वात् इध्माबर्हिषोः सामिधेनीनां च त्र्यम्बकेषु भावः एव स्यात्। तत्र अयं तदभावो असत्वात् हेतुत्वेन न युज्यते। तस्मात् नारिष्टहोमानामप्रवृत्तिः॥

सू. विधिरिति चेत् ॥ २२ ॥ (आ०)॥

भा. 'इति चेत्' पश्यसि,—दर्शनमेतत्—इति, अथ कस्मात् विधिर्न भवति? नारिष्टहोमप्रवृत्तित्वात्, प्राप्तानाम् इध्मादीनां प्रतिषेधको विधिः सन् अपूर्व्वम् अर्थं विधास्यति। अनुवादोऽप्रवृत्तिविशेषकरः अनर्थकः स्यात्, स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति॥

सू. न वाक्यशेषत्वात्, गुणार्थे च समाधानं नानात्वेनोपपद्यते ॥ २३ ॥ (आ० नि०)॥

भा. 'न' अयं विधिर्युज्यते। किङ्कारणम्?। अन्योऽत्र विधिः आम्नातः,—'आदित्यं घृते चरुम् निर्वपेत्, पुनरेत्य गृहेषु'—इति, तस्य वाक्यशेषोऽयम्। कथं ज्ञायते?। तेन आकाङ्क्षितत्वात्। 'अप्रतिष्ठिता वै त्र्यम्बकाः'—इति दोषम् अनुकीर्त्य इदं श्रूयते, 'आदित्यं घृते चरुम् निर्वपेत्, पुनरेत्य गृहेषु'—इति, 'इयं वा अदितिः इयं प्रतिष्ठा यत् आदित्योऽस्यामेव प्रतितिष्ठति'—इति, तदेतत् तस्य दोषस्य परिहारार्थम्—इति विज्ञायते; अतः तेन सहैकवाक्यतां याति, तन्मध्ये च ये इध्माद्यभाववचनास्तेऽपि तच्छेषा एव समुच्चारणात् व्याख्याः, ते यदि विधयः कल्पेरन् पृथग्वाक्यानि भवेयुः, तत्र एकवाक्यरूपं बाधेत। व्यवहितकल्पना च स्यात्। न च एवां

भा. विधायकत्वम्, अनुवादस्वरूपत्वात्, तस्मात् न विधयः। 'अथ कोऽत्र विशेषः, यत् समाने लिङ्गत्वे अन्तःपरिधिदर्शनम् असाधकम् इतरत् साधकम्?'—इति। विशेषम् उपरिष्टात् वक्ष्यामः॥

सू. येषां वाऽपरयोर्होमस्तेषां स्यादविरोधात्॥ २४॥ (२य पू०)॥

भा. 'येषां वा', यागानाम् 'अपरयोः' अग्न्योः 'होमः', 'तेषां' प्रवृत्तिः स्यात्, पत्नीसंयाजानाम्—इत्यर्थः। कुतः?। 'अविरोधात्', तत्र विरोधो नास्ति, यो नारिष्टहोमानां प्रवृत्तौ उक्तः, तत्राभावस्य हेतुत्वात्—इति, तेषां हि इध्मा बर्हिः सामिधेन्यश्च नैवाङ्गं, तदभावदर्शनम् तत्र न विरुध्यते; प्रवृत्तिधर्म्मिणस्तेऽपि जुहोति-चोदनासु,—'सह पत्न्या जुहोति'—इति। तस्मात् तेषां प्रवृत्तिः॥

सू. तत्रौषधानि चोद्यन्ते, तानि स्थानेन गम्येरन्॥ २५॥ (२ उ०)॥

भा. नैतत् युक्तं। किङ्कारणम्?। यतः, 'तत्र औषधानि चोद्यन्ते' दर्विहोमे, यथा 'त्र्यम्बकेषु पुरोडाशः करम्भपात्राणि तण्डुलाः'—इत्येवमादीनि, 'तानि स्थानेन गम्येरन्', आज्यस्थानापत्त्या आज्यधर्माः* प्राप्येरन्, ते न शक्याः तत्र अनुष्ठातुम्, अनुष्ठीयमाना वा अकृतकार्य्याः स्युः, तत्र चोदको बाध्येत। तस्मात् न तेषां प्रवृत्तौ किञ्चित् प्रयोजनमस्ति, याज्यानुवाक्ये अपि मन्त्रान्तरेण निवर्त्यते, वषट्कारः स्वाहाकारेण॥

---

* 'आज्यस्थानापत्त्या आज्यधर्माः' इति आ० सो० पु० पाठः।

सू. लिङ्गाद्वा शेषहोमयोः ॥ २६ ॥ (३य पू०) ॥

भा. पिष्टलेप-फलीकरणहोमयोः 'वा' प्रवृत्तिः स्यात्। कुतः?। 'लिङ्गात्', औषधसामान्यात्, यच्च फलीसंयाजानां* प्रवृत्तौ दोष उक्तः,—धर्म्माणाम् आनर्थक्यं, तत् अत्र नास्ति। तत्र औषध-धर्म्मा निर्वपणादयः शक्याः कर्त्तुम्। तस्मात् तयोः प्रवृत्तिः —इति ॥

सू. प्रतिपत्तौ तु ते भवतस्तस्मादतद्विकारत्वम् ॥ २७ ॥ (३ उ०) ॥

भा. न 'तु' एतदेवम्। कुतः?। यतः प्रतिपत्तिकर्म्मणी एतौ होमौ. दर्विहोमाश्च प्रधानकर्म्माणि, तेषां दूरतो भेदः, सामान्यतश्च धर्म्मप्राप्तिः इष्यते। यच्च उक्तम्,—औषधधर्म्माः शक्याः तत्र कर्त्तुम्—इति, प्रतिपत्तित्वात् अप्रयोजकौ एव निर्वपणादीनां धर्म्माणाम्; अतः तत्प्रकृतित्वं तेनैव न्यायेन नोपपन्नं, नापि प्रयोजनवत्. तस्मात् एतदप्ययुक्तम्। एवं न कुतश्चिदपि दर्वि-होमानां धर्म्मप्राप्तिर्युज्यते। तस्मात् अपूर्व्वः ॥

सू. सन्निपाते विरोधिनामप्रवृत्तिः प्रतीयेत विध्युत्पत्ति-व्यवस्थानादर्थस्यापरिच्छेदत्वात् वचनादतिदेशः स्यात् ॥ २८ ॥ (आ० नि०) ॥

भा. अथ कस्मात् उभयपक्षसाधनानाम् अपि लिङ्गानाम् भावे अप्रवृत्तिः एव प्रतीयते, न पुनः प्रवृत्तिः?'—इति। उच्यते, 'सन्निपाते विरोधिनाम्' एतेषां लिङ्गानां प्रवृत्तिः प्रत्येतुम् न न्याय्या। कुतः?। 'विध्युत्पत्तिव्यवस्थानात्', विधीनाम्

* 'फलीसंयाजानाम्' इति आ० सो० पु० पाठः।

भा. उत्पत्तिः पाठः, स च व्यवस्थितः,—केचित् दर्शपूर्णमासयोः पठ्यन्ते, केचित् सोमे, तेषाम् 'अर्थस्य' अपरिणेयत्वं, यत्र पठिताः, ततोऽन्यत्र परिणीयमानेषु प्रकरणं बाध्यते। तस्मात् 'अप्रवृत्तिः प्रतायेत'।

तत्र आह,—'किम् एष एव उत्सर्गः सर्वत्र अप्राप्तिः?'—इति। एवं खलु प्राप्ते उच्यते, 'वचनादतिदेशः स्यात्', यथा राष्ट्रभृताम् उद्दाहुककर्मसु। असति एवंविधे वचनेऽपूर्वाः—इति। 'अथ ये लिङ्गे अपदिष्टे, 'यदि कीटोऽवपद्येत, अन्तःपरिधि निनयेत्, अन्तर्वेदि तिष्ठन् सावित्राणि जुहोति'—इति, तयोः कः समाधिः?'। उच्यते, अन्यायपूर्वत्वात् लक्षणया वादः स विज्ञायते,—अन्तःपरिधिदेशे अन्तर्वेदिदेशे—इति, परिधीनां वेदेश्च तत्राभावात्, यथा रजनी मे कण्डूयति, तिलको मे स्पन्दते*—इति, रागाभावे तिलकाभावे च तद्देशलक्षणया भवन्ति वक्तारः—इति॥ (८।४।४ अ०)॥

इति श्रीभट्टशवरस्वामिनः कृतौ मीमांसाभाष्ये अष्टमाध्यायस्य चतुर्थः पादः समाप्तः॥ समाप्तश्चायमष्टमोऽध्यायः॥

---

* स्पन्दते इति का० सो० पु० पाठः।

## नवमस्य अध्यायस्य प्रथमः पादः ॥

अग्निहोत्रादिचूक्तानां धर्म्माणामपूर्व्वप्रयुक्तत्वाधिकरणम्। (सर्व्वकामारदृयपर्णचिन्तनम्)॥

### सू. यज्ञकर्म्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कार-स्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥

भा. अष्टमेऽध्याये विशेषातिदेशलक्षणं वृत्तं, इदानीमूहलक्षणं वर्त्तयिष्यामः। त्रिविधस्तु ऊहः,—मन्त्र-साम-संस्कारविषयः, स इह प्राधान्येन वक्ष्यते, अन्यदपि किञ्चित् उपोद्घातेन प्रसङ्गेन च; आदितस्त्वयम् अर्थश्चिन्त्यते लक्षणविध्यर्थं; अग्निहोत्र-दर्शपूर्णमासौ ज्योतिष्टोमस्तु उदाहरणम्; तत्र पृथक् धर्म्माः समाम्नाताः। तेषु संशयः,—किं ते अपूर्व्वप्रयुक्ताः, उत यजि-प्रयुक्ताः?—इति; अपूर्व्वप्रयुक्तेषु सत्सु ऊहः सिध्यति, यजिप्रयुक्तेषु तु सङ्करो धर्म्माणाम्। कथमिव?। सर्व्वे हि ते यजतयः, यजतिसामान्ये यजतिशब्दवाच्ये धर्म्मा विधीयमानाः सर्व्वत्र भवितुमर्हन्ति, अपूर्व्वप्रयुक्तत्वे तु, तदीयविशेषे विधीयमाना अन्यस्मिन् अपि तदीयविशेषापन्ने भविष्यन्ति; तस्मात् तत्र ऊहः सिद्धो भवति।

'ननु एतत् सर्व्वं सप्तमे (१ अ०) विचारितं, निर्णीतं च'। उच्यते, पुनः तदेव स्मार्य्यते, उत्तरचिन्ताविवक्षया। अथ वा तत्र योऽर्थो न उक्तः, तद्विवक्षयेदमुच्यते। कस्तावसौ?। 'तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात्'—इति, एतेन च इह प्रयोजनम् ऊहं विवक्षतः, एवं हि स सिध्यति, तत्र एतत् न उक्तं,—नैतेन तत्र प्रयोजनम्—इति। तत्रत्या एतावती चिन्ता,—किं प्रति-प्रकरणं नियता धर्म्माः, उत सर्व्वे सर्व्वत्र?—इति, तत् अपूर्व्व-

भा. प्रयुक्तत्वे यजिप्रयुक्तत्वे च सिध्यति, न द्रव्यसंस्कारस्य अपूर्व्वार्थत्वे, तत्तु इह सिद्धम्, तच अपूर्व्वप्रयुक्तत्वसिद्धौ व्यवहारार्थम् अनूचितम् उपादीयते ; तस्मात् अपुनरुक्तम्।

द्वितीयवर्णकम् ॥

अथ वा, अन्यामेव चिन्ताम् इह वक्ष्यामः,—किं यजिनिमित्ता धर्म्माः अपूर्व्वप्रयुक्ताः, उत अपूर्व्वनिमित्ता अपूर्व्वप्रयुक्ताश्च?--इति। इदानीं तु यजिप्रयुक्ता अपूर्व्वप्रयुक्ता वा? —इति चिन्त्यते। किं तावत् प्राप्तम्?—यजिप्रयुक्ताः—इति। कुतः?। यजिशब्देन इतिकर्त्तव्यताया अभिसम्बन्धात्,—एवं यागं कुर्य्यात्, एवं यागेन कुर्य्यात्—इति।

एवं प्राप्ते ब्रूमः,—यजत्यर्थस्य यत् कार्य्यं, तत् प्रधानं, तद्धि कर्त्तव्यतया चोद्यते; यत्र कर्त्तव्यता, तत्रैवेतिकर्त्तव्यता। अथ यदुक्तं, यजतिशब्देनाभिसंयोगो धर्म्माणाम्—इति, तदुच्यते, 'तस्य द्रव्येषु' यजतौ च, यः 'संस्कारः', स 'तत्प्रयुक्तः' (अपूर्व्वप्रयुक्तः), 'तदर्थत्वात्' यजतेः, द्रव्याणां च तदीयत्वेन धर्म्मैरभिसम्बन्धः, न स्वेनात्मना, न हि धात्वर्थस्य च धर्म्माणां च परस्परेण आकाङ्क्षा विद्यते ; प्रत्ययार्थेन हि इतिकर्त्तव्यता आकाङ्क्ष्यते,—कर्त्तव्यं कथम्?—इति, न यजिः कीदृशः?—इति। तस्मात् यत् कर्त्तव्यं, तस्यैवेतिकर्त्तव्यतया सम्बन्धः, अपूर्व्वं च तत्। तस्मात् अपूर्व्वप्रयुक्ताः—इति।

तृतीयवर्णकम् ॥

एवं वा,—एतेषु एव उदाहरणेषु इति चिन्त्यते,—किं यजिनिमित्ता धर्म्मा अपूर्व्वप्रयुक्ताः, उत अपूर्व्वं प्रयोजकं निमित्तं च?—इति। किं प्राप्तम्?—यजिर्निमित्तम् अपूर्व्वं प्रयोजकम् --इति। कुतः?। नैकस्य प्रयोजकत्वं निमित्तभावश्च उपपद्यते, यदर्थं हि क्रियन्ते धर्म्माः, तत् प्रयोजकं; यस्मिन् सति क्रियन्ते, तन्निमित्तं, न च एकस्मिन् शब्दे अपूर्व्वार्थैते, अपूर्व्वं च भवन्ति

भा.—इति शक्यं वदितुम्, अन्या हि वचनव्यक्तिः अपूर्व्वार्थेषु, अन्या च अपूर्व्वे सति—इति, यजिनिमित्तत्वे तु शब्दोऽवकल्पते, —एवं यागेन कुर्य्यात्—इति, यागे सति अपूर्व्वस्य उपकारकाणि, असति अनुपकारकाणि अङ्गानि—इति। तस्मात् यजिर्निमित्तम्, अपूर्व्वं तु प्रयोजकम्—इति।

एवं प्राप्ते ब्रूमः,—'यज्ञकर्म्म प्रधानं',—यजतेः कार्य्यं, तद्धि फलवत् चोद्यते, तदीयेषु द्रव्येषु यजतौ च यः संस्कारः, सोऽपूर्व्वप्रयुक्तः, तदर्थास्ते—इति कृत्वा क्रियन्ते, न यज्यर्थेन तेषाम् अभिसम्बन्धः, प्रयोगवचनेनैते प्रत्ययार्थेन सम्बध्यन्ते, स हि साकाङ्क्षो न धात्वर्थः। तस्मात् अपूर्व्वप्रयुक्ता अपूर्व्वनिमित्ताश्च। यदुक्तं,—अपूर्व्वस्य प्रयोजकत्वं निमित्तभावश्च नोपपद्यते, वचनव्यक्तिभेदात्—इति, तत्र उच्यते, प्रयोजकत्वं वाचनिकम्, निमित्तभावश्च नैव वचनात् भविष्यति—इति, यद्धि येन प्रयुज्यते, भवति तत् तस्य निमित्तं, यथा, आरामपोषकस्य आरामो वेतनदाने प्रयोजको निमित्तं च, आरामे सति तस्मै वेतनं दीयते, वेतनसम्बन्धो भवति आरामं रक्षितुम्; तस्मात् धर्म्माणाम् अपूर्व्वमेव प्रयोजकं निमित्तं च—इति॥ (९।१।१ अ०)॥

---

प्रोक्षणस्यापूर्व्वप्रयुक्तताधिकरणम्। (वर्णकान्तरसहितम्)॥

सू. संस्कारे युज्यमानानां तादर्थ्यात्तत्प्रयुक्तं स्यात्॥ २॥ (पू०)॥

भा. दर्शपूर्णमासौ प्रति समामनन्ति,—'प्रोक्षिताभ्याम् उलूखलमुसलाभ्याम् अवहन्ति, प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टि'—इति। तत्र अयमर्थः सांशयिकः,—किं प्रोक्षणं हन्तिपिषिप्रयुक्तम्, उत अपूर्व्वप्रयुक्तम्?—इति। किं प्राप्तम्?—'संस्कारे' हन्ति-

भा. पिष्याक्षे प्रयुज्यमानस्य प्रोक्षणस्य तत्प्रयुक्तता 'स्यात्',—(संस्कारप्रयुक्तता), संस्कारौ हि हन्तिपिषी। कुतः एतत्प्रयुक्तता?—इति। 'तादर्थ्यात्',—यद्धि येन कर्त्तव्यं भवति, तत् तस्य प्रयोजकं, यदि अपूर्व्वम् अनेन क्रियते, ततोऽस्य अपूर्व्वं प्रयोजकं, यदि हन्तिपिषी, ततस्तौ प्रयोजकौ; प्रकरणाच्च अपूर्व्वं कर्त्तव्यं गम्यते, वाक्यात् हन्तिपिषी, वाक्यं च प्रकरणाद्बलीयः—इति।

'ननु हन्तिपिष्योः क्रियमाणम् अपूर्व्वार्थं भविष्यति, तत्र प्रकरणं च वाक्यं च उभयमपि अनुग्रहीष्यते'। उच्यते, न शक्यम् उभयम् अनुगृहीतुम्, न प्रकरणसमाम्नायमात्रेण प्रकरणवतोऽर्थेन समाम्नातम्—इति गम्यते, प्रकरणसमाम्नानात् प्रकृतेनैकवाक्यता भवति, ततः तादर्थ्यम् अवगम्यते, इह तु प्रत्यक्षाभ्यां हन्तिपिषिभ्यां प्रोक्षणस्य एकवाक्यता, सा प्रकृतेनैकवाक्यतां परोक्षां बाधेत, न च, द्वाभ्याम् अपि सहैकवाक्यता स्यात्, यदा एकेनैकवाक्यता, तदा तेन निराकाङ्क्षस्य न अन्येन अपि एकवाक्यता कल्प्यते। तस्मात् प्रकृतेन एकवाक्यत्वाभावात् न अपूर्व्वार्थं प्रोक्षणम्।

आह, 'ननु हन्तिपिषी अपूर्व्वार्थौ, तदर्थं प्रोक्षणं, तस्मात् अपूर्व्वस्य उपकारकम्'—इति। उच्यते,—भवति प्रणाड्या उपकारकं, न तु अपूर्व्वप्रयुक्तं, द्विविधं हि अङ्गं अङ्गस्य उपकारकं भवति,—किञ्चित् अपूर्व्वस्य एतदङ्गं विशिष्टम्—इत्यनेन कारणेन अङ्गेन सम्बध्यते, किञ्चित् अनपेक्ष्यैव अपूर्व्वसम्बन्धं, स्वरूपेण एव कारणेन सम्बध्यते, यत् अपूर्व्वसम्बन्धं कारणत्वेन उपादाय धर्म्मजातमङ्गविशेषेण सम्बध्यते, तत् अपूर्व्वप्रयुक्तं भवति; तादृशं च विकृतौ अर्थान्तरे तत्कार्य्यापन्ने जहितव्यं भवति, यत्र पुनः स्वरूपमङ्गस्य धर्म्मसम्बन्धे कारणं भवति, तत् स्वरूपप्रयुक्तं, तत्र यद्यपि तेन धर्म्मवता अपूर्व्वं साध्यते, तत्र साध्यमानम् अपूर्व्वं न धर्म्मस्य प्रयोगहेतुभूतं भवति, न तत् प्रयोजकं, तस्य स्वरूपं

भा. विद्यते—इति न धर्म्मः प्रयुज्यते। तत्र विद्यतौ अर्थान्तरे तद्रूपाभावात् ऊहो न अवकल्पते। एवं सति वाक्यानिर्णयः,—यदि वाक्यम् अपूर्व्वस्य कारणतां वदति, ततोऽपूर्व्वप्रयुक्तम्, अथ अङ्गस्य, ततोऽङ्गप्रयुक्तम्; तत्र उक्तप्रकरणात्* अपूर्व्वप्रयुक्तं स्यात्, वाक्यात्तु अङ्गप्रयुक्तता—इति। तस्मात् हन्तिपिषिप्रयुक्तं प्रोक्षणम्—इति। यत्र यत्र हन्तिपिषी प्रयुज्येते, तत्र तत्र एवं धर्म्मकौ भवतः—इति॥

सू. तेन त्वर्थेन यज्ञस्य संयोगात् धर्म्मसम्बन्धस्तस्माद्यज्ञ-प्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात्॥ ३॥ (सि॰)॥

भा. तुशब्दः पक्षं व्यावर्त्तयति,—न तु एतदस्ति,—हन्तिपिषिप्रयुक्तं प्रोक्षणम्—इति, 'तेन तु अर्थेन' हन्तिना पिषिणा वा; यस्मात् अपूर्व्वस्य संयोगः, तस्मात् तस्य प्रोक्षणसम्बन्धः,—अपूर्व्वसाधन-विशेषकारितः प्रोक्षणसंस्कारेण सम्बन्धः, न हन्तिपिषि-कारितः। कथम्?। निःप्रयोजनौ हन्तिपिषी, यदि तत्प्रयुक्तं प्रोक्षणं, तदपि निःप्रयोजनम्, अतो न तत्प्रयुक्तम्।

आह,—'अपूर्व्वस्य उपकारकौ हन्तिपिषी न निःप्रयजनौ'—इति। उच्यते,—न प्रोक्षणस्य अपूर्व्वस्य कश्चिदस्ति सम्बन्धः, यदि प्रोक्षणं न क्रियते, न, हन्तिपिषी अपूर्व्वस्य साधनभावं न गच्छतः, तस्मात् यद्यपि हन्तिपिषी अपूर्व्वस्य उपकारकौ, तथापि ताभ्यां सम्बध्यमानं प्रोक्षणम् अनर्थकमेव।

अथ उच्यते,—'यदर्थौ हन्तिपिषी उपादीयेते, तत् प्रोक्षण-सम्बद्धौ शक्नुतः कर्तुम्, नान्यथा'—इति। उच्यते,—न एव-ञ्जातीयकः शब्दोऽस्ति—इति। तत्र आह,—'अयमेव शब्दः एत-मर्थम् अभिवदति—इति। कथम्?। प्रोक्षिताभ्याम् अवहन्ति,

* उक्तं प्रकरणात् इति क॰ सं॰ पु॰ पाठः।

भा. प्रोक्षिताभ्यां पिनष्टि—इति यत् हन्तिपिषिभ्यां क्रियते, तत् प्रोक्षणसम्बद्धाभ्याम्—इति हन्तिपिषिकार्य्येण प्रोक्षणं सम्बध्यते, न ताभ्याम्'—इति। उच्यते,—नैतदेवं, यदि यत् हन्तिपिषिभ्यां क्रियते, तत् प्रोक्षणेन अभिसम्बध्यते, सम्बन्ध एव प्रोक्षणस्य न स्यात्, तत् हि ताभ्याम् अभिनिर्वर्त्त्यते, किम् अपरं, तत् प्रोक्षणम् अभिनिवर्त्तयेत्! 'अथ प्रोक्षिताभ्याम् अपूर्व्वं क्रियते—इति सम्बन्धः'। न तर्हि हन्तिना पिषिणा वा। 'अथ तत्सम्बन्धोऽपि उच्यते'—इति। अनेकसम्बन्धे वाक्यम्भिद्येत! तस्मात् हन्तिपिषिभ्यां प्रोक्षणं सम्बध्यमानम् अप्रयोजनम्—इति प्रकरणात् अपूर्व्वेण सम्बध्यते।

'ननु एवं हन्तिपिषिसम्बन्धो न अवकल्प्येत'। अवकल्पिष्यते—इति ब्रूमः। कथम्?। इह अवघातं प्रति यतमानस्य द्वयं निष्पद्यते,—अवहन्तिरूपं, तण्डुलनिर्वृत्तिश्च; प्रणाड्या च अपूर्व्वभावनाविशेषः, तण्डुलनिर्वृत्तिर्हि अपूर्व्वोपकारः, सोऽवहन्तिक्रियया चिकीर्षितः, तेन प्रोक्षणस्य सम्बन्धः, यद्यपि अवहन्तिरूपेण सम्बध्यमाने प्रोक्षणे श्रुत्या सम्बन्धो भवति; तथापि तत्र निष्प्रयोजनत्वात् लक्षणैव आश्रीयते, लक्षणा हि प्रत्यक्षा, सा अदृष्टकल्पनाया ज्यायसी। न च, अवहन्तिः आरादुपकारकोऽपूर्व्वं निष्पादयति, दृष्टम् उपकारं कुर्व्वन् अदृष्टेन सामर्थ्येन समीचीनं करोति—इति गम्यते, यद्यपि च निष्पादयेत्, तथापि उपकारेण असम्बध्यमानं* प्रोक्षणं केवलावहन्तिसम्बन्धेन अनर्थकम् एव स्यात्। अतोऽवहन्तिलक्षितेन उपकारविशेषेणास्य सम्बन्धः। तस्मात् अनवहन्तेरपि यः तत्कार्य्यापन्नः, तत्र प्रोक्षणं भवत्येव, यथा नखनिर्भिन्ने चरौ नखेषु। तस्मात् अपूर्व्वप्रयुक्तः एवञ्जातीयको धर्म्मः—इति॥

---

* सम्बध्यमानम् इति क० सं० पु० पाठः।

सर्वकामतरम्। (उच्चावचध्वनेः परमापूर्व्वप्रयुक्तताधिकरणम्)।

भा· एवं वा,—

अस्ति ज्योतिष्टोमः, तत्र इदं समाम्नायते,—'यावत्या वाचा कामयेत, तावत्या दीक्षणीयायाम् अनुब्रूयात्, मन्द्रं प्रायणीयायां मन्द्रतरम् आतिथ्यायाम् उपांशु उपसत्सु'—इति। तत्र अयम् अर्थः सांशयिकः,—किं परमापूर्व्वप्रयुक्ता एते धर्म्माः, उत दीक्षणीयाद्यपूर्व्वप्रयुक्ताः?—इति। किं प्राप्तम्?—परमापूर्व्वे—'संस्कारे' दीक्षणीयाद्यपूर्व्वे 'युज्यमानस्य' अस्य धर्म्मस्य परमापूर्व्वार्थत्वात् दीक्षणीयादीनां परमापूर्व्वार्थतैव स्यात्, परमापूर्व्वं हि फलवत्, यत् कर्त्तव्यतयाऽभिसम्बध्यते, तदेव धर्म्मैरभिसम्बध्यते, न अङ्गापूर्व्वं, निष्प्रयोजनं हि तत्—इति॥

सू· तेन त्वर्थेन यज्ञस्य संयोगाद्धर्म्मसम्बन्धस्तस्माद्यज्ञप्रयुक्तं स्यात् संस्कारस्य तदर्थत्वात्॥ ३॥ (सि०)॥

भा· 'तेन त्वर्थेन' दीक्षणीयादिना, यस्मात् परमापूर्व्वस्य सम्बन्धः, तस्मात् परमापूर्व्वम् एवञ्जातीयकेन धर्म्मेण धर्म्मवत्। तस्मात् अङ्गयज्ञप्रयुक्तम् एवञ्जातीयकं धर्म्मजातं, तथा श्रुतिः शब्दो भवति, इतरस्मिन् पक्षे लक्षणा स्यात्, न च प्रायणीयाद्यपूर्व्वं निष्प्रयोजनं, ज्योतिष्टोमस्य हि तत् उपकारकं, न च, तत् विना, एवञ्जातीयकेन धर्म्मेण प्रायणीयाद्यपूर्व्वं सिद्धम्, अवहन्ति-पिषिवत्।

यदुच्यते,—विनैव धर्म्मेण, तत् अपूर्व्वं भविष्यति—इति; तन्न। कुतः?। तदपि हि अपूर्व्वं, शब्दात् एव अवगम्यते,—अस्तीति, प्राक् शब्दात्, अन्येन प्रमाणेन उपसङ्क्रायते; एवञ्जातीयके च शब्दप्रमाणके यत् शब्दः आह, तत् अस्माकं प्रमाणं; शब्दश्च प्रायणीयाद्यपूर्व्वस्य उपकारकम् इमम् धर्म्मम् आह, न परमापूर्व्वस्य, वचनप्रामाण्यात्।

भा. एवञ्चापरमापूर्व्वनिष्पत्तेरजरम् अविनाशि च अत्र धर्म्मः प्रतिष्ठितो न परमापूर्व्वं संक्रमिष्यति, एवमपि प्रयोजनसमर्थः। तस्मात् एवञ्जातीयकं धर्म्मजातम् अङ्गापूर्व्वप्रयुक्तम् एव—इति।

'किं भवति प्रयोजनम् इतरस्मिन् इतरस्मिन् वा पक्षे?'—इति। उच्यते,—अश्वमेधे समाम्नायते,—'त्रैधातवीया दीक्षणीया भवति'—इति, यदि परमापूर्व्वप्रयुक्त एवञ्जातीयको धर्म्मः, ततः तस्य उपकारविशेषे निबद्धः—इति तत्कार्य्यापन्नायां त्रैधातव्यायां भविष्यति; अथ आग्नावैष्णवापूर्व्वप्रयुक्तः, ततो न इदम् आग्नावैष्णवापूर्व्वम्—इति तत्र त्रैधातव्यापूर्व्वं न तेन धर्म्मेण सम्भंत्स्यते—इति॥ (९।१।२ अ०)॥

---

फलदेवतासम्बद्धधर्म्माणामपूर्व्वप्रयुक्तताधिकरणम् ।

सू. फलदेवतयोश्च ॥ ४ ॥ (पू०)॥

भा. दर्शपूर्णमासौ स्तः,—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'—इति। तत्र फलसम्बद्धो धर्म्मो देवतासम्बद्धश्च श्रूयते,—फलसम्बद्धस्तावत्,—'अगन्म स्वः सं ज्योतिषा भूम'—इति, देवतासम्बद्धोऽपि,—'अग्नेरुज्जितिमनूज्जेषं सोमस्य उज्जितिमनूज्जेषम्' इत्यादिः। तत्र संशयः,—किं स्वर्गसम्बद्धस्य कर्म्मणः स्वर्ग एव प्रयोजकः, अग्न्यादिसम्बद्धस्य अग्न्यादय एव, उत उभयत्रापि अपूर्व्वं प्रयोजकम्?—इति। यद्येवं अभिसम्बन्धः क्रियते,—गताः स्मः स्वर्गं, अग्न्यादीनां च उज्जितिमनूज्जेषम्—इति, ततः स्वर्गाग्न्यादिप्रयुक्तः; अथ एवं क्रियते,—आगता दर्शपूर्णमासफलं, दर्शपूर्णमासदेवताश्च उज्जितिमनूज्जेषम्—इति, ततोऽपूर्व्वप्रयुक्तः। किं प्राप्तम्?—स्वर्गाग्न्यादिप्रयुक्तः—इति। कुतः?। मन्त्राम्नानसामर्थ्यात्,—यस्य मन्त्रो वाचकः, स इह वदितव्यः—इति गम्यते, श्रुत्या च स्वर्गाग्न्यादीनां

भा. वाचको मन्त्रः, लक्षणया दर्शपूर्णमासफलदेवतयोः, तस्मात् यत् फलदेवतम्—इति समधिगतं स्वर्गाग्न्यादि, तत्प्रयुक्तो धर्म्मः स्यात्—इति ॥

सू. न, चोदनातो हि तागुण्यम् ॥ ५ ॥ (उ०) ॥

भा. नैतदस्ति,—स्वर्गाग्न्यादिप्रयुक्तः—इति, 'चोदनातः' 'तागुण्यं' स्यात्,—यत् फलवच्चोद्यते, तदितिकर्त्तव्यतया अनुबध्यते, अपूर्व्वं च फलवत्, न स्वर्गाग्न्यादि, तदर्थं वचनं सत् अदृष्टार्थं कल्प्येत, लक्षणया च अपूर्व्वफलदेवतावचनेऽदृष्टोऽर्थः स्यात्, प्रोत्साहनात्। एतस्मिन् पक्षान्तरे दृष्टे सति न स्वर्गाग्न्यादिवचनस्य अपूर्व्वस्य कल्पना न्याय्या, अब्दार्थस्य च फलदेवतात्वेन संप्रतिपन्नत्वात् लक्षणा अदृष्टा। तस्मात् अपूर्व्वप्रयुक्त एवञ्जातीयको धर्म्मः—इति।

'किं भवति विचारस्य प्रयोजनम्?'। यथा पूर्व्वः पक्षः, सौर्य्ये कर्म्मणि अविकारेण मन्त्रः प्रयोक्तव्यः, यथा तर्हि सिद्धान्तः, ऊहेन 'अगन्म ब्रह्मवर्च्चसं सूर्य्यस्य उज्जितिमनूज्जेषम्'—इति फले पर्य्यवसितम्। देवतायाम् उत्तरा चिन्ता वर्त्तिष्यते ॥ (६। १। ३ अ०) ॥

---

धर्म्माणामदेवताप्रयुक्तत्वाधिकरणम् ॥

सू. देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ६ ॥ (पू०) ॥

भा. नैतदस्ति,—अग्न्यादयोऽप्रयोजकाः—इति, सर्व्वा देवताः सर्व्वेषां धर्म्माणां प्रयोजिकाः भवितुमर्हन्ति। कुतः?। 'भोजनस्य तदर्थत्वात्',—भोजनं हि इदं देवतायाः, यागो नाम, भोज्यं द्रव्यं

भा· देवतायै प्रदीयते, सा भोक्ष्यते—इति, देवतासम्प्रदानको हि अयं यागः श्रूयते, सम्प्रदानं च नाम कर्म्मणोऽपि ईप्सित-तमादभिप्रेततरम्; तस्मात् न गुणभूता देवता, देवतां प्रति गुणभूते द्रव्यकर्म्मणी। अपि च यागो नाम देवतापूजा, पूजा च पूजनीयं प्रति गुणभूता लोके दृश्यते, तदेतत् 'अतिथिवत्' द्रष्टव्यं, यथा यावत्किञ्चित् अतिथेः परिचरणं, सर्व्वं तत् अतिथि-प्रयुक्तम्, एवम् इदमपि—इति।

आह,—'ननु एवं ब्रुवता, विग्रहवती देवता भुङ्क्ते च—इत्यभ्युपगतं भवति'। उच्यते, बाढ़ं, विग्रहवती देवता भुङ्क्ते च। कुतः?। स्मृतेः, उपचारात्, अन्यार्थदर्शनाच,—एवं हि स्मरन्ति, विग्रहवती देवता—इति, स्मृतिश्च नः प्रमाणम्। तथा विग्रहवतीं देवताम् उपचरन्ति,—यमं दण्डहस्तमा-लिखन्ति, कथयन्ति च, तथा वरुणं पाशहस्तम्, इन्द्रं वज्रहस्तं; उपचारादपि स्मृतेर्द्रढ़िमानं कल्पयामः। तथा अन्यार्थवचनं, विग्रहवतीं देवतां दर्शयति,—'अगृभ्मा* ते दक्षिणम् इन्द्र हस्तम्'—इति, पुरुषविग्रहस्य हि दक्षिणः सव्यश्च हस्तो भवति। तथा, 'इमे चित् इन्द्र रोदसी अपारे यत् संगृभ्मा मघवन् काशिरित्ते'—इति, काशिर्मुष्टिः, सोऽपि पुरुषविग्रहस्य एव उपपद्यते। तथा, 'तुविग्रीवो वपोदरः सुबाहुरन्धसो मदे। इन्द्रो वृत्राणि जिघ्नते'—इति, ग्रीवा उदरं बाहू—इति पुरुषविग्रहदर्शनं भवति। तस्मात् विग्रहवती देवता—इति, भुङ्क्ते च। कथम् अवगम्यते?। स्मृतेः, उपचारात् अन्यार्थदर्शनाच, एवं स्मरन्ति,—भुङ्क्ते देवता—इति। तथा च एनाम् भुञ्जानाम् इव उपचरन्ति, यदस्यै विविधान् उपचारान् उपहरन्ति। तथा च अन्यार्थवचनं भुञ्जानाम्

* एवमेव सर्व्वत्र पाठः। का॰ क्रौ॰ पुस्तके तु जग्रभ्णा इति, जग्रभ्मा इति का॰ स॰ पु॰ पाठः

भा. देवतां गमयति,—'अद्धीन्द्र पिब च प्रस्थितस्य'—इति, तथा च, 'विश्वायसनानि जठरेषु धत्ते'—इति, 'एकया प्रति धा पिबत्साकं सरांसि त्रिंशतम्'—इति।

आह,—'न देवता भुङ्क्ते, यदि च भुञ्जीत देवतायै हविः प्रत्तं क्षीयेत'। उच्यते,—अमरसभोजिनी देवता मधुकरीवत् अवगम्यते। कथम्?। देवतायै हविः प्रत्तं नीरसं भवति, तस्मात् अमरसं भुङ्क्ते देवता—इति गम्यते॥

सू. आर्थपत्याच्च॥ ७॥ (यु॰)॥

भा. यदि कस्यचित् अर्थस्य ईशाना देवता उपचर्यमाणा च प्रसीदेत्, ततः तदाराधनार्थम् इयं देवतापूजा अभिनिर्वर्त्येत, न च एतदुभयम् अपि अस्ति—इति, तत् उच्यते, अर्थपतिर्देवता—इति। कथम् अवगम्यते?। स्मृतेः, उपचारात्, अन्यार्थदर्शनाच्च, एवं हि स्मरन्ति,—अर्थानाम् ईष्टे देवता—इति। तथा, देवग्रामो देवक्षेत्रम्—इत्युपचारस्तामेव स्मृतिं दृढयति। तथा अन्यार्थवचनम् ईशानां देवतां दर्शयति,—'इन्द्रो दिव इन्द्र ईशे पृथिव्यां इन्द्रो अपामिन्द्र इत् पर्वतानां, इन्द्रो वृधाम् इन्द्र इन्मेधिराणाम् इन्द्रः क्षेमे योगे हव्य इन्द्रः'—इति, तथा, 'ईशानम् अस्य जगतः स्व ईशम् ईशानम् इन्द्र तस्थुषे'—इति।

तथा, स्मृत्युपचाराभ्यां प्रसीदति—इत्युपगच्छामः,—एवं हि स्मरन्ति, प्रसीदति देवता—इति। तथा उपचरन्ति, प्रसन्नोऽस्य पशुपतिः, पुत्रोऽस्य जातः; प्रसन्नोऽस्य वैश्रवणो धनम् अनेन लब्धम्—इति। तथा अन्यार्थदर्शनं भवति,—'आहुतिभिरिव हुतादो देवान् प्रीणाति'—इति, 'तस्मै प्रीता इषमूर्जं नियच्छन्ति'—इति॥

सू. ततश्च तेन सम्बन्धः ॥ ८ ॥ (यु॰ २) ॥

भा. 'ततो' देवतायाः, 'तेन' फलेन 'सम्बन्धः' परिचरितुर्भवति, यो देवताम् इज्यया परिचरति, तं सा फलेन सम्बध्नाति। कथम्? एतत् अवगम्यते। स्मृत्युपचाराभ्यां, स्मरन्ति हि, देवता यष्टुः फलं ददाति—इति, तामेव उपचारेण स्मृतिं दृढ़यति, पशुपतिः अनेन उपचरितः, पुत्रोऽनेन लब्धः—इति। तथा, अन्यार्थदर्शनम् इममेव अर्थं दर्शयति,—'स इत् जनेन स विशा स जन्मना स पुत्रैर्वाजम्भरते धना नृभिः। देवानाम् यः पितरमा वि वासति श्रद्धामना हविषा ब्रह्मणस्पतिम्'—इति, तथा, 'तृप्त एवैनम् इन्द्रः प्रजया पशुभिः तर्पयति'—इति। तस्मात् हविर्द्दानेन गुणवचनैश्च देवता आराध्यते, सा प्रीता सती फलं प्रयच्छति, येन कर्म्मणा अग्निराराधितः, तस्य फलस्य ईष्टे, तत् कर्म्म प्रयच्छति, न तत् सूर्य्यः प्रदातुमर्हति, वचनादेतत् अवगम्यते,—कः किं प्रयच्छति—इति, यथा अग्नौ वचनं, न तत् सूर्य्ये ॥

सू. अपि वा शब्दपूर्ब्बत्वाद्यज्ञकर्म्म प्रधानं स्याद्गुणत्वे देवताश्रुतिः ॥ ९ ॥ (सि॰) ॥

भा. 'अपि वा'—इति पक्षो व्यावर्त्तते। न चैतदस्ति,—यदुक्तं देवता प्रयोजिका—इति, 'यज्ञकर्म्म प्रधानं स्यात्', यजतेर्जातम् अपूर्ब्बम्। कुतः?। 'शब्दपूर्ब्बत्वात्', यत् हि फलं ददाति, तत् प्रयोजकं, इदं फलं ददाति—इत्येतत् ज्ञानं शब्दपूर्ब्बकं न प्रत्यक्षादिभिः अवगम्यते; शब्दश्च यजतिवाच्यात् फलम् आह, न देवतायाः। कथम् अवगम्यते?। दर्शपूर्णमासयोः करणत्वेन निर्द्देशः,—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'—इति,

भा. तथा, 'ज्योतिष्टोमेन स्वर्गकामो यजेत'—इति, यजत्यर्थस्य हि स्वर्गकामेन समभिव्याहारो न देवतायाः।

'ननु द्रव्यदेवताश्रियं यजत्यर्थः'। सत्यमेवं, किन्तु 'गुणत्वे देवताश्रुतिः', द्रव्यदेवतं हि भूतं, भावयितव्यो यजत्यर्थः, भूत-भव्यसमुच्चारणे च भूतं भव्याय उपदिश्यते, तस्मात् न देवता प्रयोजिका।

अथ यदुक्तं,—कर्म्मण ईप्सितादभिप्रेततरम्—इति, न अस्य अभिप्रेतताम् अपक्रुमहे, तद्धितशब्देन चतुर्थ्या वा संयुक्तस्य देवतार्थस्य वाक्यात् अभिप्रेतता अवगम्यते, फलसंयोगस्तु वाक्यादेव यजत्यर्थस्य, तस्य च श्रुत्या करणता अवगम्यते, न देवतायाः। तत्र यद्यपि देवतार्थता यागस्य गम्यते, फलार्थ-तापि तेन न प्रतिषिध्यते; फलं च पुरुषार्थः, पुरुषार्था च नः प्रवृत्तिः, न च असौ देवतायाः, तस्मात् न देवताप्रयुक्ताः प्रवर्त्तिष्यामहे, या तु, सम्प्रदानस्य अभिप्रेतता सा फलवतो यजेः, साधनत्वे सति उपपद्यते।

यच्च,—यजिर्देवतापूजा सा पूज्यमानप्रधाना लोके लक्ष्यते—इति; न लोकवत् इह भवितव्यं, इह पूज्यमानपूजा प्रधानं, यत् हि फलवत्, तत् प्रयोजकं, तस्मात् यज्ञकर्म्म प्रयोजकम्। अपि च, एतस्मिन् पक्षे विग्रहवती देवता भुङ्क्ते च—इति अध्यवसनीयं भवति, न हि अविग्रहायै अभुञ्जानायै च दानं भोजनं वा सम्भवति—इति।

यच्च उक्तं, स्मृत्युपचारान्यार्थदर्शनैर्विग्रहवती, भुङ्क्ते च—इति; तन्न, स्मृतेर्मन्त्रार्थवादमूलत्वात्,—मन्त्रेभ्यश्च अर्थवादे-भ्यश्च स्मृतिमूलं विज्ञानम् उत्पद्यते—इति प्रत्यक्षम् अव-गम्यते, ते च मन्त्रार्थवादा नैवंपराः—इत्येतत् वक्ष्यामः।

आह, 'यदि नैवंपरा न तर्हि मन्त्रार्थवादमूलं तद्विज्ञानम्'—इति। उच्यते,—ये आलोचनमात्रेण मन्त्रार्थवादान् पश्यन्ति,

सू. ततश्च तेन सम्बन्धः ॥ ८ ॥ (यु० २) ॥

भा. 'ततो' देवतायाः, 'तेन' फलेन 'सम्बन्धः' परिचरितुर्भवति, यो देवताम् इज्यया परिचरति, तं सा फलेन सम्बध्नाति। कथम्? एतत् अवगम्यते। स्मृत्युपचाराभ्यां, स्मरन्ति हि, देवता यष्टुः फलं ददाति—इति, तामेव उपचारेण स्मृतिं दृढ़यति, पशुपतिः अनेन उपचरितः, पुत्रोऽनेन लब्धः—इति। तथा, अन्यार्थदर्शनम् इममेव अर्थं दर्शयति,—'स इत् जनेन स विशा स जन्मना स पुत्रैर्वाजम्भरते धना नृभिः। देवानाम् यः पितरमा वि वासति श्रद्धामना हविषा ब्रह्मणस्पतिम्'—इति, तथा, 'तृप्त एवैनम् इन्द्रः प्रजया पशुभिः तर्पयति'—इति। तस्मात् हविर्दानेन गुणवचनैश्च देवता आराध्यते, सा प्रीता सती फलं प्रयच्छति, येन कर्म्मणा अग्निराराधितः, तस्य फलस्य ईष्टे, तत् कर्त्तं प्रयच्छति, न तत् सूर्य्यः प्रदातुमर्हति, वचनादेतत् अवगम्यते,—कः किं प्रयच्छति—इति, यथा अग्नौ वचनं, न तत् सूर्य्ये ॥

सू. अपि वा शब्दपूर्व्वत्वाद्यज्ञकर्म्म प्रधानं स्याद्गुणत्वे देवताश्रुतिः ॥ ९ ॥ (सि०) ॥

भा. 'अपि वा'—इति पक्षो व्यावर्त्तते। न चैतदस्ति,—यदुक्तं देवता प्रयोजिका—इति, 'यज्ञकर्म्म प्रधानं स्यात्', यजतेर्जातम् अपूर्व्वम्। कुतः?। 'शब्दपूर्व्वत्वात्', यत् हि फलं ददाति, तत् प्रयोजकं, इदं फलं ददाति—इत्येतत् ज्ञानं शब्दपूर्व्वकं न प्रत्यक्षादिभिः अवगम्यते; शब्दश्च यजतिवाचयात् फलम् आह, न देवतायाः। कथम् अवगम्यते?। दर्शपूर्णमासयोः करणत्वेन निर्द्देशः,—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत'—इति,

भा. तथा, 'ज्योतिष्टोमेन स्वर्गकामो यजेत'—इति, यजत्यर्थस्य हि स्वर्गकामेन समभिव्याहारो न देवतायाः।

'ननु द्रव्यदेवताक्रियं यजत्यर्थः'। सत्यमेवं, किन्तु 'गुणत्वे देवताश्रुतिः', द्रव्यदेवतं हि भूतं, भावयितव्यो यजत्यर्थः, भूतभव्यसमुच्चारणे च भूतं भव्याय उपदिश्यते, तस्मात् न देवता प्रयोजिका।

अथ यदुक्तं,—कर्म्मण ईप्सितादभिप्रेततरम्—इति, न अस्य अभिप्रेतताम् अपक्रुमहे, तद्धितशब्देन चतुर्थ्या वा संयुक्तस्य देवतार्थस्य वाक्यात् अभिप्रेतता अवगम्यते, फलसंयोगस्तु वाक्यादेव यजत्यर्थस्य, तस्य च श्रुत्या करणता अवगम्यते, न देवतायाः। तत्र यद्यपि देवतार्थता यागस्य गम्यते, फलार्थतापि तेन न प्रतिषिध्यते; फलं च पुरुषार्थः, पुरुषार्था च नः प्रवृत्तिः, न च असौ देवतायाः, तस्मात् न देवताप्रयुक्ताः प्रवर्त्तिष्यामहे, या तु, सम्प्रदानस्य अभिप्रेतता सा फलवतो यजेः, साधनत्वे सति उपपद्यते।

यच्च,—यजिर्देवतापूजा सा पूज्यमानप्रधाना लोके लक्ष्यते—इति; न लोकवत् इह भवितव्यं, इह पूज्यमानपूजा प्रधानं, यत् हि फलवत्, तत् प्रयोजकं, तस्मात् यज्ञकर्म्म प्रयोजकम्। अपि च, एतस्मिन् पक्षे विग्रहवती देवता भुङ्क्ते च—इति अध्यवसनीयं भवति, न हि अविग्रहायै अभुञ्जानायै च दानं भोजनं वा सम्भवति—इति।

यच्च उक्तं, स्मृत्युपचारान्यार्थदर्शनैर्विग्रहवती, भुङ्क्ते च—इति; तन्न, स्मृतेर्मन्त्रार्थवादमूलत्वात्,—मन्त्रेभ्यश्च अर्थवादेभ्यश्च स्मृतिमूलं विज्ञानम् उत्पद्यते—इति प्रत्यक्षम् अवगम्यते, ते च मन्त्रार्थवादा नैवंपराः—इत्येतत् वक्ष्यामः।

आह, 'यदि नैवंपरा न तर्हि मन्त्रार्थवादमूलं तद्विज्ञानम्'—इति। उच्यते,—ये आलोचनमात्रेण मन्त्रार्थवादान् पश्यन्ति,

भा. तेषाम् तत् स्मृतिमूलं, ये पुनर्निपुणतः पश्यन्ति, तेषां तत् बाधितम् अपि च कस्यचित् स्मृतिमूलं भवति; तस्मात् ततः एव स्मृतिः, उपचारोऽपि स्मृतिमूल एव। यत्तु अन्यार्थदर्शनम्, उक्तं,—'अगृभ्मा ते दक्षिणम् इन्द्र हस्तम्'—इति। नैतत् एवम्परं,—इन्द्रस्य हस्तो विद्यते—इति, यः तस्य दक्षिणो हस्तस्तं वयं गृहीतवन्त—इति; तस्मात् वाक्यात् इन्द्रस्य हस्तसत्ता न प्रतीयते।

आह, 'यदि त्वसौ नास्ति, वयं ते हस्तं गृहीतवन्तः—इत्येवं न अवकल्पते—इति हस्तसत्ता अध्यवसीयते,—अस्त्यसौ हस्तः, वयं यं गृहीतवन्तः'—इति। तन्न उपपद्यते, यद्यप्यस्य हस्तो भवेत्, तथापि न तम् उपगृहीतवन्तः—इति प्रत्यक्षमेतत्, तथाप्येतन्न अवकल्पत एव, तच्च एतत् असम्बद्धं वा अवकल्पयितव्यं, स्तुतिर्वा, तच्च मत्पक्षेऽपि तुल्यम्।

अथ एवम् उच्यते,—'तस्य एतद्वचनं, यो गृहीतवान् तस्य हस्तम्'—इति। उच्यते, नैतत् अध्यवसेयम्, आदिमत्तादोषो वेदस्य प्रसज्येत, न च, गृहीतवान् आसीत्—इत्युच्यते, प्रमाणाभावात्। 'एतस्मात् एव वचनात् अर्थात्* कल्प्यते हस्तग्रहीता—इति चेत्'। तन्न, अयथार्थस्यापि उच्चारणं सम्भवत्येव यतः, यथा, 'दश दाड़िमानि षड़पूपाः'—इति। यस्यापि च एष पक्षो,—विग्रहवान् इन्द्रः—इति, तस्यापि इन्द्रशब्देन आमन्त्रणं सम्बोधनार्थं, सम्बोधनम् अनुवचनाय, तच्च सम्बद्धः—इत्यवगते अनुवचनं न्याय्यं, न च, असौ केनचित् प्रकारेण सम्बद्धः—इति अवगम्यते, अनवगते सम्बोधनं व्यर्थम्। 'वचनप्रामाण्यात् सम्बुध्यते—इत्येवं गम्यते—इति चेत्'। उक्तम् अदृष्टकल्पनायां हस्तादिकल्पनानुपपत्तिरिति। न च, असौ

---

* अर्थः इति क॰ सं॰ पु॰ पाठः।

भा. सम्बुद्धः—इति अवधार्य्यते, प्रमाणाभावात्। तस्मात् सम्बोधनवचनं न सम्बोधनाय, निर्द्देशार्थमेव। अविग्रहपक्षेऽपि तत् निर्द्देशार्थमेव भविष्यति। तत्र आमन्त्रितविभक्तिवचनं स्तुतये, एवम् इदं देवताख्यं साधयितृतमं, यच्चेतनादिवत् सम्बुध्य साधयति—इति चेतनवदिव उपचर्य्यमाणः* सम्बुद्धिशब्देन आमन्त्र्यते, तथा सम्बोधनशब्देन निर्द्दिश्य उच्यते,—गृहीतवन्तो वयं तव हस्तं त्वदाश्रया वयम्—इत्यर्थः; अस्माभिः इन्द्रकर्म्म कर्त्तव्यम्—इत्येतत् अनेन स्मार्य्यते।

तथा 'इमे द्यावापृथिव्यौ इरे अपारे यत् संगृह्णासि मघवन्निन्द्रो ते पूजितो मुष्टिः'—इति सन्तमिव मुष्टिं स्तुत्यर्थेन वदति, तस्यापि भावे न प्रमाणमस्ति, न इदं वचनं,—इत् महान् कश्चिः अस्ति, किन्तर्हि, यस्तव कश्चिः, स महान्—इति, अन्यार्थस्तव कश्चिरस्ति—इति, अन्यः तव कश्चिर्महान् —इति। 'सता हि स्तुतिः उपपद्यते—इति चेत्'। नैतत्, नियोगतो यस्यापि पौरुषविधिकैरङ्गैर्नास्ति संयोगः, पौरुषविधिकैरङ्गैः तस्यापि स्तुतिर्भवति, यथा,—'एते वदन्ति शतवत् सहस्रवत् अभिक्रन्दन्ति हरितेभिरासभिः। विद्वी ग्रावाणः सुकृतः, सुकृत्यया होतुश्चित् पूर्व्व हविरद्यमाशत'—इति। तथा,—'सुखं रथं युयुजे सिन्धुरश्विनम्'—इति। तस्मात् न श्रुतिवचनात् अर्थापत्तिर्भवति पुरुषविधत्वे देवतायाः। तथा, —'तुविग्रीव इन्द्रः'—इति नैतत् युक्तं भवति,—ग्रीवावान् इन्द्रः—इति, किन्तर्हि याऽस्य ग्रीवा, सा महती; ग्रीवासत्त्वे नास्ति प्रमाणम्। न च, ग्रीवास्तुतिः अर्थापत्तिः अपुरुषविधेऽपि स्तुत्युपपत्तेः।

अपि च, 'इन्द्रो वृत्राणि जिघ्नते'—इत्येताभ्यां पदाभ्याम्

---

* एवमेव सर्व्वत्र पाठः। उपचर्य्यमाणम् इति भवितुं युक्तम्।

भा. इन्द्रशब्दः सम्बद्धो न शक्नोति तुविग्रीवादिभिः सम्बन्धं यातुं, द्विवचनारणम् अस्य प्रसज्यते, तुविग्रीवावान् इन्द्रो वेदितव्यः, वृत्राणि च इन्द्रो हन्ति—इति, तथा हि सति भिद्येत ; अभिन्नं च वाक्यम् उपलभ्यते, तदेवम् अवकल्पते, यदि तुविग्रीवादयोऽस्य न उपदिश्यन्ते—इति स्तुत्यर्थं सङ्कीर्त्यन्ते तुविग्रीवादिः, 'अन्धसो मदे ईदृशो वृत्राणि हन्ति'—इति एषा तु वचनव्यक्तिः, वृत्रवधोपदेशपरम् इदं वचनम्—इति। यदपि वचनं,—बाहू ते इन्द्र रोमशौ, अक्षी ते इन्द्र पिङ्गले—इति, तदपि बाह्वोः रोमशत्वम् अक्ष्णोश्च पैङ्गल्यम् आह, न बाहुसत्तामक्षिसत्तां च। यदपि अक्षिसत्तां वदति—इति गम्यते,—'चक्षुष्मते शृण्वते ते ब्रवीमि'—इति, तदपि न चक्षुःसम्बन्धार्थं, चक्षुष्मते ब्रवीमि—इति वचनसम्बन्धार्थं, तत् सतोमिव चक्षुष्मत्तां स्तुत्यर्थम् उच्चारयति। कुतः एतत् अवगम्यते?। चतुर्थीनिर्देशात्, यदि प्रातिपदिकार्थोऽध्यवसीयते, तथा वाक्यम्भिद्येत, चक्षुष्मान्—इत्येवं च उद्दिश्येत, चक्षुष्मते ते ब्रवीमि—इति च। तस्मात् न किञ्चित् अन्यार्थदर्शनं पुरुषविधतां देवतायाम् इदं स्थापयति—इति ; न च, इदं भोजनं, न हि देवता भुङ्क्ते ; तस्मात्, भोजनस्य तदर्थत्वात्—इति तत् असद्वचनम्।

यदपि स्मृत्युपचारान्यार्थदर्शनैर्भुङ्क्ते—इति, तत् अविग्रहत्वेन प्रत्युक्तम्। अपि च, भुञ्जानायै देवतायै प्रत्तं हविः चीयेत! न च, मधुकरीवत् अक्षरसभोजिन्यो देवताः—इति प्रमाणमस्ति, मधुकरीषु प्रत्यक्षं, न च तद्वत् देवतायाम्। तस्मात् न भुङ्क्ते देवता—इति। यदुक्तं,—देवतायै हविः प्रत्तं नीरसं भवति—इति। नैष दोषः, वातोपहतं नीरसम्भवति—इति, शीतीभूतं च। न च, असौ कस्यचित् अर्थस्य ईष्टे, अनीशा कथं दास्यति?—इति।

यदुक्तं, स्मृत्युपचारान्यार्थदर्शनैः ईशाना देवता—इत्यव-

भा. गम्यते—इति। तत्र, स्मृतेः मन्त्रार्थवादमूलत्वात्—इत्युक्तम्; उपचारोऽपि,—'देवग्रामो देवक्षेत्रम्'—इति, उपचारमात्रं,—यो यदभिप्रेतं विनियोक्तुमर्हति, तत्तस्य स्वं, न च ग्रामं क्षेत्रं वा यथाभिप्रायं विनियुङ्क्ते देवता। तस्मात् न सम्प्रयच्छति—इति, देवपरिचारकाणान्तु ततो भूतिर्भवति, देवताम् उद्दिश्य, यत् त्यक्तम्।

यदुक्तम्, अन्यार्थदर्शनम् ईशानां देवतां ख्यापयति,—'इन्द्रो दिव इन्द्र ईशे'—इत्येवमादीति; तत् प्रत्यक्षाम् अनीशानां देवताम् उपलभ्य अध्यवस्यामः,—भाक्त एष शब्दः—इति। 'तत्र आह,—वचनप्रामाण्यादेव अस्य ईशानता अवगम्यते, यद्देवलोका अर्थान् विनियुञ्जते, तद्देवताभिप्रायादेव-इत्यध्यवस्यामः' —इति। तत्र, प्रत्यक्षात् प्रमाणात् देवतापरिचारकाणाम् अभिप्रायः—इत्यवगम्यते, स न शक्यो बाधितुम्, येऽपि देवताम् ईशानां वर्णयन्ति, तेऽपि न अपह्नुवते परिचारकाणाम् अभिप्रायम्। किं चाहुः,—तथा देवता करोति, यथा परिचारकाणाम् अभिप्रायो भवति—इति, न च, स ईशानो भवति, यः पराभिप्रायम् अनुरुध्यते, यस्य न स्वाभिप्रायात् विनियोगो भवति।

अपि च, न च एतद्वचनं, वर्त्तमानकालोपदेशत्वात्, प्रत्यक्षविरोधात्, स्तुतिवादोऽवधार्य्यते, स्तुतिवादे च सम्भवति न वचनप्रामाण्यात् ईशिष्यते—इति गम्यते। न च, देवता फलेन सम्बध्नाति, या तदर्थं परिचर्य्येत।

यदुक्तं,—स्मृत्युपचारान्यार्थदर्शनैर्ददाति प्रसीदति च—इति। तत्र स्मृत्युपचारयोरुक्तं, यत् अन्यार्थदर्शनं,—'तस्मै प्रीता इषमूर्जं प्रयच्छन्ति'—इति; तत्र, 'अन्यस्य विधेराम्नानात्, 'दक्षिणतः सम्परिहर्त्तव्या—इत्याह'—इति, तथा 'तृप्त एवैनम् इन्द्रः प्रजया पशुभिस्तर्पयति'—इति, अथ ऐन्द्रस्य

भा. हविषो विधानम्। तस्मात् देवता न प्रयोजिका—इति॥

सू. अतिथौ तत्प्रधानत्वमभावः कर्म्मणि स्यात्तस्य प्रीतिप्रधानत्वात्॥ १०॥ (यु० नि०)॥

भा. यदुक्तम्,—'अतिथिवत्'—इति, तत् परिहर्तव्यम्। आतिथ्यम् अतिथिप्रयुक्तं स्यात्, आतिथ्ये हि तत्प्रीतिर्विधीयते, अतिथिः परिचरितव्यः, यथा प्रीयते, तथा कर्त्तव्यम्—इति, दानं भोजनं वा कार्य्यम्—इति, यद्यत् अतिथये रोचते, तत् कर्त्तव्यं, यत् तस्मै न रोचते, न तत् बलात्कारयितव्यम्—इति। इह तु 'कर्म्मणि' 'अभावः' प्रीतिविधानस्य। तस्मात् विषमम् अतिथिना—इति॥ (९।१।४ अ०)॥

---

प्रोक्षणादीनामपूर्व्वप्रयुक्तत्वाधिकरणम्॥

सू. द्रव्यसंख्याहेतुसमुदायं वा श्रुतिसंयोगात्॥ ११॥ (पू०)॥

भा. दर्शपूर्णमासयोः आमनन्ति 'व्रीहीन् प्रोक्षति'—इति, तत्रैव 'त्रीन्परिधीन् तिस्रः समिधः'—इति मन्त्रं; 'चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रा अमावास्याम्'—इति चातुर्मास्यानां द्वितीये पर्व्वणि वरुणप्रघासेषु आम्नायते,—'शूर्पेण जुहोति तेन हि अन्नं क्रियते'—इति। तत्र संशयः, किं द्रव्य-संख्या-हेतु-समुदायप्रयुक्ताः प्रोक्षणादयो धर्म्मा उत अपूर्व्वप्रयुक्ताः?—इति। किं तावत् प्राप्तम्?—द्रव्यादिप्रयुक्ताः—इति,—इह 'व्रीहीन् प्रोक्षति'—इति प्रकरणेन अपूर्व्वप्रयुक्तता स्यात्, वाक्येन द्रव्यप्रयुक्तता, द्रव्येण हि प्रोक्षणस्य सम्भि-

भा. व्याहारः, तस्मिन्नपि समभिव्याहारे द्रव्यगता द्वितीया विभक्तिः प्रोक्षणस्य द्रव्यप्रयुक्ततां वदति।

तथा, 'वीन् परिधीन्'—इति, यत् त्रिशब्दस्य अभिधेयं, तत् इह मन्त्राम्नानसामर्थ्यात् वदितव्यम्—इति गम्यते; सङ्ख्या च त्रिशब्दस्य अर्थः, तस्याः श्रुतिर्बाधिका, तत्सम्बद्धे अपूर्व्वे लक्षणा स्यात्, यावन्तः परिधयः, तावन्तो वक्तव्याः—इति।

तथा हेतुना धर्म्मः संयुज्यते वाक्येन,—'शूर्पेण जुहोति'—इति। किङ्कारणम्?। यतः तेन अन्नं क्रियते, तद्धोमेन सम्बद्धद्रव्यमप्रकरणद्रव्यं होमे विधीयते। प्रकरणात् अपूर्व्व-प्रयुक्तता स्यात्, यस्मात् अनेन होमेन अपूर्व्वं क्रियते, तस्मात् एतत् शूर्पेण निर्व्वर्त्तयितव्यम्—इति, प्रकरणात् वाक्यं बलीयः, अतः प्रकरणं बाधेत, येन येन द्रव्येण दर्व्विपिठरादिनाप्यन्नं क्रियते, तेन तेन होमः कर्त्तव्यः—इत्येवम् अप्रकरणं सगुणं भवति—इति।

'ननु प्रथमेऽध्याये (५३ पृ०) प्रतिषिद्धा हेत्वर्थता, शूर्पस्य अर्थवादोऽयम्—इत्युक्तम्। सत्यम् उक्तम्, अपूर्व्वप्रयुक्ततायां हि सिद्धायां न एकस्मिन् वाक्ये होमे शूर्पविधानं, हेतुविधानं च अवकल्पते—इत्यर्थवादः प्रकल्पते, न अन्यथा; 'चतुर्होत्रा पौर्ण-मासीम् अभिमृशेत् पञ्चहोत्रा अमावास्याम्'—इति समुदाय-समभिव्याहारात् वाक्येन तत्प्रयुक्तता, प्रकरणसामर्थ्यात् लक्ष-णया अपूर्व्वसमभिव्याहारात् अवगताम् अपूर्व्वप्रयुक्ततां बाधते। तस्मात् द्रव्यादिप्रयुक्ताः प्रोक्षणादयो धर्म्माः॥

सू. अर्थकारिते च द्रव्येण न व्यवस्था स्यात्॥ १२॥
(यु०)॥

भा. अपूर्व्वप्रयुक्ते एवञ्जातीयके धर्म्मे सति 'द्रव्येण' च धर्म्म—

भा. 'व्यवस्था' 'न' 'स्यात्', 'पयसा मैत्रावरुणं श्रीणाति, सक्तुभिर्मन्थिनं धानाभिर्हारियोजनं हिरण्येन शुक्रमाज्येन पात्नीवतम्'—इति। यस्मात् मैत्रावरुणोऽपूर्व्वस्य, तस्मात् पयसा श्रयितव्यः—इति, ऐन्द्रवायवोऽपि अपूर्व्वस्य, सोऽपि पयसा श्रयितव्यः प्राप्नोति। एवं सर्व्वाणि श्रयणादीनि सर्व्वेषां ग्रहाणाम्। तत्र मैत्रावरुणादिग्रहणम् अविवक्षितं स्यात्। तस्मादपि द्रव्यादिप्रयुक्ताः प्रोक्षणादयः—इति॥

सू. अर्थो वा स्यात्प्रयोजनमितरेषामचोदनात्तस्य च गुणभूतत्वात्॥ १३॥ (सि०)॥

भा. वाशब्दः पक्षं व्यावर्त्तयति। न द्रव्यादिप्रयुक्ता भवेयुः, किन्तर्हि 'अर्थः' एषां 'प्रयोजनं,' 'अर्थः'—इति अपूर्व्वं ब्रूमः, तदर्थास्ते, तद्धि कर्त्तव्यतया श्रूयते, यच्च कर्त्तव्यतया श्रूयते, तत् इतिकर्त्तव्यतया अनुबध्यते, 'इतरेषां' द्रव्यादीनां कर्त्तव्यतया न चोदना, किन्तर्हि?—अर्थस्य गुणभूतत्वेन, अर्थं प्रति (अपूर्व्वं प्रति) गुणभूतानाम् एषां श्रवणम्। किमतः?। यद्येवम्, अकर्त्तव्यानाम् इतिकर्त्तव्यतया नास्ति सम्बन्धः—इति।

'ननु प्रोक्षादिसमभिव्याहारात् तैर्हि सम्बन्धः, तत्र द्वितीयया व्रीहिसमुदायप्रयुक्तता गम्यते, लिङ्गवाक्याभ्याम् सङ्ख्याहेतुप्रयुक्तता,। न—इत्याह, एवं सति फलं कल्पनीयं स्यात्, तस्मात् अपूर्व्वप्रयुक्तता।

'ननु एवमपि सति अपूर्व्वोपकारः कल्पयितव्यः'। सत्यं कल्पयितव्यः, प्रकृतेन तु एकवाक्यतां नीत्वा, त्वत्पक्षे त्वप्रकृतेन फलवचनेन एकवाक्यता स्यात्।

'ननु प्रकरणं वाक्यस्य श्रुतेर्वा न बाधकम्'। सत्यम् अबाधकं, फलाभावात्तु भवदीयः पक्षो मुच्यते, तस्मिन् आनर्थक्येन अविवक्षिते प्रकरणवता प्रयोगवचनेन अपरिपन्थि प्रोक्षणादि

भा. विधायिष्यते। आह,—"अपूर्व्वसम्बन्धेऽपि तदीयैः प्रोक्षणादिभिः एव धर्म्मः प्रयुज्यते, किम् एतत्। 'किम् एवं भविष्यति?'। इत्यादिसम्बन्धश्च एवं हि न अवज्ञातो भविष्यति, फलं च न कल्पयितव्यम्"। उच्यते, नैवं शक्यं,—'व्रीहीन् प्रोक्षति'—इति हि व्रीहिजातिर्निर्दिश्यते, व्रीहिद्रव्यलक्षणार्था वा, अपूर्व्व-साधनविशेषलक्षणार्था वा; अन्यतरलक्षणया श्रुतार्था—इति न उभयलक्षणार्था स्यात्, द्रव्यलक्षणे वा; तत्र च लक्षणैव दोषः, फलकल्पना-इति कृत्वा साधनविशेषलक्षणार्था जातिः अव-धीयते, व्रीहिजातिलक्षितं यत् साधनं, किं तत्?—यतः तण्डुला भवन्ति, तत् प्रोक्षितव्यम्—इति तण्डुलनिर्वृत्तिकरता हि तत्र साधनत्वं, न द्रव्यता। एवं सक्षूणादिष्वपि योजयितव्यं; तस्मात् अपूर्व्वप्रयुक्तता प्रोक्षणादीनाम्—इति॥

सू. अपूर्व्वत्वाद्व्यवस्था स्यात्॥ १४॥ (पू॰ नि॰)॥

भा. अथ यदुक्तम्,—'अर्थकारिते च द्रव्येण न व्यवस्था स्यात्'—इति, साधनविशेषलक्षणार्था जातिः—इत्येवं सति व्यवस्था भविष्यति, मैत्रावरुणेन यत् क्रियते, तत्र पयःश्रयणं, न तत् ऐन्द्रवायवेन। अतो न मैत्रावरुणापूर्व्वात् ऐन्द्रवायवस्य धर्म्माः, अपूर्व्वो हि ऐन्द्रवायवः। तस्मात् 'अपूर्व्वत्वात्, व्यवस्था स्यात्' —इति॥

सू. तत्प्रयुक्तत्वे च धर्म्मस्य सर्व्वविषयत्वम्॥ १५॥ (पू॰ यु॰ नि॰)॥

भा. यस्य मन्यते, द्रव्यादिप्रयुक्ताः प्रोक्षणादयो धर्म्माः—इति, तस्य सर्व्वविषयता धर्म्मस्य प्राप्नोति, येऽपि भक्तार्था व्रीहयः, तेऽप्येवं प्रोक्षितव्याः प्राप्नुवन्ति, न च एतत् त्वयापि इष्यते। तस्मात् अयम् अस्मिन् पक्षे दोषः—इति॥

सू. तद्युक्तस्येति चेत् ॥ १६ ॥ (आ०) ॥

भा. 'इति चेत्' पश्यसि,—सर्व्वविषयता धर्म्मस्य भविष्यति—इति, 'तद्युक्तस्य' प्रकरणयुक्तस्य भविष्यति। एवं प्रकरणम् अनुगृह्यते, न च सर्व्वविषयता धर्म्मस्य—इति ॥

सू. नाश्रुतित्वात् ॥ १७ ॥ (आ० नि०) ॥

भा. नैतदेवम्,—न हि श्रूयते,—करणयुक्ता व्रीहयो निर्वप्तव्याः प्रोक्षितव्याश्च—इति। 'ननु प्रकरणानुग्रहाय एतदध्यवसानम्'। न—इत्याह, न हि, वाक्येन बाधितं प्रकरणम् उत्सहते धर्म्मान् नियन्तुम्। अथापि न बाध्यते, तथापि न प्रकरणस्य विशेष्टुम् सामर्थ्यमस्ति, कर्त्तव्यतया हि तत् क्रियमाणं चोद्यते—इति न प्रसिद्धसम्बन्धमिव विशेषणत्वेन। तस्मात् न प्रकृतयागविशेषितानाम् व्रीहीणाम् निर्वापः प्रोक्षणं वा चोद्यते—इति ॥

सू. अधिकारादिति चेत् ॥ १८ ॥ (आ०) ॥

भा. 'इति चेत्' पश्यसि,—न प्रकरणं विशेषकं व्रीहीणाम्—इति; बाढ़म्,—'अधिकारात्' ज्ञास्यति अध्वर्युः,—इमे भक्तार्थाः, इमे कार्य्यार्थाः, तत्र कार्य्यार्थान् प्रोक्षिष्यति—इति ॥

सू. तुल्येषु नाधिकारः स्यादचोदितश्च सम्बन्धः पृथक्सतां यज्ञार्थेनाभिसम्बन्धस्तस्माद्यज्ञप्रयोजनम् ॥ १९ ॥ (सि०) ॥

भा. तुल्या एते व्रीहयः, ये एव भक्तार्थाः, ते एव कर्म्मार्थाः, न पृथक् केचित् कर्म्मार्था नाम। 'ननु ये नियताः, ते कर्म्मार्थाः'। सत्यं भवेदेतत्, प्रोक्षणादिषु दोषो न स्यात्, निर्वापे तु दोषः, न तत्र केचन प्रकृता विद्यन्ते, 'पृथक्सतां' 'यज्ञार्थेन'

भा. निर्वापः श्रूयते। कथम्?। 'अपरेण गार्हपत्यं प्रागीषम् अनोऽवस्थितं भवति, तस्य दक्षिणं चक्रं आक्रम्याधोऽधि निर्वपति'—इति। तस्मात् धर्मस्य सर्वविषयत्वं प्राप्नोतेरव पूर्व्वेण हेतुना अपूर्व्वप्रयुक्तत्वं मोक्षणादीनाम्—इति॥ (८। १। ५ अ०)॥

---

अग्निष्टोमे उपांशुत्वस्य प्राचीनपदार्थप्रयुक्तत्वाधिकरणम्।

सू. देशबद्धमुपांशुत्वं तेषां स्यात् श्रुतिनिर्द्देशात्तस्य च तत्र भावात्॥ २०॥ (सि०)॥

भा. ज्योतिष्टोमे समाम्नायते,—'तृसरा वा एषा यज्ञस्य, तस्मात् यत्किञ्चित् प्राचीनम् अग्नीषोमीयात्, तेन उपांशु चरन्ति'—इति। तदत्रैषोऽर्थः सांशयिकः,—किं प्राक् अग्नीषोमीयात्, यानि कर्म्माणि, तत्प्रयुक्तम् उपांशुत्वम्, उत परमापूर्व्वप्रयुक्तम्?—इति। किं प्राप्तम्?—प्राक् अग्नीषोमीयात् यानि अङ्गापूर्व्वाणि आरादुपकारकाणि, यच्च प्रधानद्रव्यसंस्कारकं, तत्प्रयुक्तोऽयं धर्म्मः, योऽयं देशसम्बद्धः। कुत एतत्?। 'श्रुतिनिर्द्देशात्', मर्यादया देशलक्षिता ये पदार्थाः, ते श्रुत्या एतेन धर्म्मेण सम्बद्धाः,—ये एतस्मिन् देशे पदार्थास्तैः उपांशु चरन्ति—इति।

'ननु वाक्येन एष धर्म्मो विनियुक्तो न श्रुत्या'। न ब्रूमः, न वाक्येन—इति, किन्तर्हि श्रुतेन अस्य एकवाक्यता, न प्रकृतेन, लक्षितेन, कल्पितेन वा—इति। 'उच्यते,—गृह्णीम एतदङ्गापूर्व्वाणाम् अयं धर्म्मः—इति, न तु प्रधानद्रव्यस्य संस्कारकं यत् अपूर्व्वं तस्यापि—इति। कतमं तत्?। यत् प्रधानद्रव्यसंस्कारकं पूर्वस्मिन् देशे अस्ति—इति'। उच्यते, 'तस्य च तत्र

भा. भावात्, 'तस्य' (एवञ्जातीयकस्य) पूर्व्वस्मिन् देशे 'भावात्'; अस्ति हि सोमपरिवहणीयं नाम सूक्तं; तस्मात् देशधर्म्मो भविष्यति—इति; यथा, 'प्रणीताः प्रणेष्यन्वाचं यच्छति, तां सह विष्णुना विसृजति'—इति। अस्मिन् देशे ये पदार्थाः, तेषां धर्म्मो वाग्यमो न प्रधानापूर्व्वस्य, एवम् इदम् अपि उपांशुत्वम्—इति॥

सू. यज्ञस्य वा तत्संयोगात्॥ २१॥ (पू०)॥

भा. वाशब्दात् पक्षो विपरिवर्त्तते। नैतदस्ति,—तद्देशानाम् धर्म्मः—इति। कस्य तर्हि?—परमापूर्व्वस्य—इति। कुतः?। 'तत्संयोगात्', तत्संयोगो भवति, यज्ञस्य संयोगः, 'त्वरा वा एषा यज्ञस्य यत् प्राचीनम् अग्नीषोमीयात्'—इति, यज्ञस्य यत् प्राचीनम्—इति सम्बन्धः, न त्वरा वा यज्ञस्य—इति। कुतः?। प्राचीनं विशिंषन् यज्ञस्य—इति शब्दो विधिपदशेषो भवति। ततः प्रवृत्तिविशेषकरो भविष्यति। इतरथा अर्थवादशेषः सन् अनर्थकः स्यात्, वादमात्रं हि अनर्थकम्—इति। प्राचीनम्—इति च यज्ञभागं श्रुत्या वदति, लक्षयति च तद्गतान् पदार्थान्, श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या स्यात्। तस्मात् प्राग्देशस्य एव धर्म्मः, तेन अस्य श्रुत्या संयोगः, न प्राग्देशगतानाम् पदार्थानाम् तैरस्य लक्षणया सम्बन्धः स्यात्।

अथापि अर्थवादपदशेषो यज्ञस्य—इति स्यात्, तथापि प्राग्देशः श्रुत्या धर्म्मेण सम्बध्यते, प्राग्देशगताः पदार्था लक्षणया—इति यज्ञप्रयुक्तता एव न्याय्या।

अपि च प्रत्यक्ष उपकारः परमापूर्व्वस्य लक्ष्यते, यत् प्राचीनम् अग्नीषोमीयात्, तत् उपांशुत्वेन शिथिलप्रयत्नः प्रचरन् अखिन्नः सुखं बहुवृत्तान्तं सौत्यम् अहर्निर्वर्त्स्यति। तस्मात् परमापूर्व्वप्रयुक्तम् उपांशुत्वम्—इति॥

अनुवादश्च तदर्थवत् ॥ २२ ॥ (पू० यु०) ॥

अनुवादश्च तद्देशपदार्थस्यैव भवति, 'त्सरा वा एषा यज्ञस्य यत्प्राचीनमग्नीषोमीयात्' इति, त्सरा नाम छद्मगतिः; यथा शकुनिग्राहकस्य शकुनिं जिघृक्षतः छद्मना गतिर्भवति, शनैः पदन्यासो, दृष्टिप्रणिधानम्, अशब्दकारणञ्च, कथमनवबुद्धः शकुनिर्गृह्येतेति ; एवमिहापि अनवबुद्धमिव गृहीतुं यज्ञं प्रच्छन्नगतिरुपांशुत्वं नाम । यथा शकुनिग्राहकस्य यस्मिन् देशे शनैः पदन्यासो न स तद्देशार्थः, अपितु तद्देशाभिगतस्य शकुनेरर्थेन क्रियते ; एवमिहापि उपांशुत्वं न तद्देशानां पदार्थानामर्थेन क्रियते, तद्देशाभिगतस्य यज्ञस्यार्थेन गम्यते । यस्तु त्सराशब्दं यज्ञविशेषं मन्यते, तस्य सुतरामर्थवादः परमापूर्वप्रयुक्ततां दर्शयति, यज्ञस्यैषा त्सरेति । यथा शकुनेः त्सरा, एवं यज्ञस्येति ।

प्रणीतादि तथेति चेत् ॥ २३ ॥ (आ०) ॥

इति यदुक्तं तत्परिहर्त्तव्यम् ।

न यज्ञस्याश्रुतित्वात् ॥ २४ ॥ (आ०नि०) ॥

नैतदेवं, तद्देशपदार्थप्रयुक्ततैव स्यात्, न परमापूर्वप्रयुक्ततेति ; नात्र पदार्थानां यज्ञभागविशेष्यता वाक्यसम्बन्धेन अवगम्यते, 'यज्ञस्याश्रुतित्वात्', नात्र सम्बन्धो यज्ञशब्दः श्रूयते । 'नन्विदानीमेवोक्तं, यज्ञं तनिष्यन्तौ अध्वर्युयजमानौ वाचं यच्छतः-इति' । उच्यते, तद्देशपदार्थप्रयुक्ततायामप्येतदवकल्पते । कथम् ? । यज्ञं विस्तारयितुं वाचं यच्छतः, तौ वाचंयमौ सन्तौ अ-विक्षिप्यमानचेतस्कौ, पदार्थेषु क्रियमाणेषु अप्रमाद्यन्तौ तथा करिष्येते, यथा,

न कश्चित् पदार्थः पदार्थावयवो वा हीयते, अध्वर्युर्वाग्यमेन अनन्य-चेतस्को न पदार्थान् प्रमादयिष्यति; यजमानश्चैवं वाग्यमेन अनन्य-चेतस्कः प्रमादयिष्यन्तं तं बोधयिष्यति। अङ्गैरप्यनन्तरीयमाणैः यज्ञो विस्तार्य्यते, न केवलैः स्वैरवयवैरङ्गैश्च विस्तारयितुं शक्यमः शक्नोति, अस्मिन् काले क्रियमाणो न स्वेनात्मना; यज्ञसंयोगश्चास्य विस्तारसम्बन्धः, तस्मादङ्गप्रयुक्ततायामप्युपपद्यते, यदध्वर्युयजमानौ वाचं यच्छतः, तत् प्रजापतिभूयङ्गतौ यज्ञं तन्वाते—इति दृष्टेन कारणेन, न अदृष्टेन—इति वर्त्तमान-कालापदेशादवगम्यते, यथा वयं वाग्यमेन तायमानं यज्ञं विद्यस्तथेति॥

सू. तद्देशानां वा सङ्घातस्याचोदितत्वात्॥ २५॥ (उ०)॥

भा. स्थितादुत्तरम्। वाशब्दात् पक्षं विपरिवर्त्तयेत्, नैतदस्ति,—परमापूर्वप्रयुक्तमुपांशुत्वमिति, कथन्तर्हि?-'प्राचीनम् अग्नी-षोमीयात्', ये पदार्थाः तत्प्रयुक्तम्। कुतः?। 'संघातस्याचोदित-त्वात्', संघात इति ग्रहयज्यभ्याससंघातं ब्रूमः; न तस्यायं भाग उपांशुत्वेन सम्बद्ध इति चोदना; नैवं सम्बन्धः क्रियते,—यज्ञस्य यत् प्राचीनमिति, कथं तर्हि?-त्वरा वा एषा यज्ञस्येति। कुतः?। तस्मादितिपदेन व्यवधानात्।

अथापि प्राचीनेन सम्बन्धः स्यात्, एवमपि न परमापूर्व-प्रयुक्तम्, न हि यदित्यनेन देशोऽभिसम्बध्यते, किन्तर्हि?—देशगताः पदार्थाः; यदि देशोऽभिसम्बध्येत, यत् प्राचीनमग्नी-षोमीयादिति भवेत्, न यत्किञ्चिदिति, वीप्सायां हि एतद्भवति; वीप्सा च बहुषु भवति, नैकस्मिन्; एकश्च देशः, बहवस्तत्र

पदार्थाः। तस्मात्पदार्थानामुपांशुत्वेन सम्बन्धो न तद्देशस्येति। 'कथं पुनर्वीप्साऽवगम्यते?'-इति। यदित्यनेन लक्ष्यते। 'किमित्य-साननवचनम्?'। विशेषाख्याताः शास्त्रमिष्टाः प्रतीयन्ते, बहुषु च सामान्यं विशेषाश्च भवन्ति; तस्मात् तद्देशाः पदार्थाः वीप्सया लक्ष्यन्ते, ते च उपांशुत्वेन सम्बध्यन्ते इति।

'ननु दीक्षणीयादिषु अन्यो धर्म्म उक्तः, 'यावत्या वाचा काम-येत तावत्या दीक्षणीयायामनुब्रूयात्, प्रायणीयायां मन्द्रतरमा-तिथ्यायाम् उपांशूपसत्सु' इति। कथं तत्रोपांशुत्वं कर्त्तुं शक्य-मिति?'। उच्यते, स धर्म्मः प्रधानेषु भविष्यति, दीक्षणीयादिषु प्रधानशब्दोपबन्धत्वात्,' उपांशुत्वम् प्रधानवर्जितेष्वङ्गेषु निवेक्ष्यते, सामान्योपदेशात्।

प्रयोजनं,—कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोति' इत्येवमादीनि प्रागग्नीषोमीयात्, एषु उपांशुत्वसम्बन्धो भवति, यथा पूर्वः पक्षः; यथा तर्हि सिद्धान्तः, न सम्बन्धः॥ (८।१।६ अ०)॥

रहकाले सकृद्विकर्षणाद्यनुष्ठानाधिकरणम्॥

सू. अग्निधर्मः प्रतीष्टकं संघातात्पौर्णमासीवत् ॥२६॥(पू०)॥

भा. अस्ति अग्निः, 'य एवं विद्वान् अग्निं चिनुते' इति; तत्रैव समाम्नायते,—'हिरण्यशकलसहस्रेणाग्निं प्रोक्षति, दध्ना मधु-मिश्रेणाग्निं प्रोक्षति, वेतसशाखयाऽवकाभिश्चाग्निं विकर्षति, मण्डूकेनाग्निं विकर्षति'। तत्रायमर्थः सांशयिकः, प्रतीष्टकं किं विकर्षणं प्रोक्षणं च कर्त्तव्यम्, अथ सकृदेव कर्त्तव्यम्? इति।

तत्रैवन्तावद्विचार्यते,—किम् इष्टकासमुदायेऽग्निशब्दः, उत तद्व्यतिरिक्ते द्रव्यान्तरे? इति। यदि समुदाये, ततस्तल्लक्षितानामिष्टकानाम् अगम्यमाने विशेषे सर्वासां प्रोक्षणं विकर्षणञ्च; यदा च द्रव्यान्तरे, ततः सकृदेवेति। किं प्राप्तं?—'प्रतीष्टकाम्' इति। कुतः?। समुदाये हि अग्निशब्दो वर्त्तते। कथमवगम्यते?। द्रव्यान्तरस्याभावात्, द्रव्यान्तरमेवान्यत् नास्ति, कोऽग्निशब्देनाभिधीयेत? कस्मिन्नग्निर्निधीयेत? इति। कथं पुनर्नास्तीति गम्यते?। द्रव्यान्तरवैलक्षण्यात्, तत्र हि द्रव्यान्तरमस्तीति गम्यते, यत्रैकस्मिन् अवयवे गृहीत्वा कृष्यमाणे कृत्स्नः कृष्यते। कोऽभिप्रायः?। यद्येकोऽवयवो हस्तेन संयुक्तः कृष्यते, न द्रव्यान्तरम्। कः प्रसङ्गः?! यत्तत्र द्वितीयोऽप्यवयवः कृष्येतेति। अथ द्रव्यान्तरमपि तत्र कृष्यते, तत्र द्रव्यान्तरस्य समवायिनां अवयवानामपि निर्भागात् कर्षणमुपपन्नम्। नच, संयुक्तसंयोगस्य द्रव्यान्तरादृते धर्म्म एषोऽवकल्पते; न हि अबद्धे काष्ठपूलके काष्ठे एकस्मिन्नाकृष्यमाणे काष्ठान्तराणि कृष्यन्ते; यत्र हि परस्पर-व्यतिषङ्गजनिता एका बुद्धिर्भवति, नावयवबुद्धिर्दृश्यते, नापि केनचित् अनुमानेन अनुमीयते, तत्र द्रव्यान्तरं जातमित्युच्यते, इह तु या एवेष्टका गृहीत्वा कृष्यते, सैवागच्छति, नेष्टकान्तराणि; सन्धिश्च लक्ष्यते, तेन नावयवसंस्यूतिरस्तीति गम्यते; तस्मान्नास्ति द्रव्यान्तरम्। तत्र 'इष्टकाभिरग्निं चिनुते' इति चयनमात्रम् इष्टकाभिः कर्त्तव्यम्; न, चयनमात्रेण कृतेन किञ्चित् दृष्टमस्ति; तस्मादग्निनिधानार्थानामिष्टकानां चयनसमुदायोपलक्षितानामगम्यमाने विशेषे सर्वासामेव प्रोक्षणं

विकर्षणं च कर्त्तव्यम्, 'पौर्णमासीवत्'; यथा, 'य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते' इति आग्नेयादय एव क्रियन्ते, नार्थान्तरं किञ्चित्। एवमिहापीति॥

घ. अग्नेर्वा स्यात् द्रव्यैकत्वादितरासां तदर्थत्वात्॥२७॥(सि०)॥

भा. वाशब्दात्पक्षो विपरिवर्त्तते। नैतदस्ति, प्रतीष्टकं कर्त्तव्यमिति, कथन्तर्हि?-सकृदेवेति; तत एतद् वर्ण्यते, द्रव्यान्तरमिष्टकाभिः क्रियते, तत्राग्निर्निधातव्यः, तत्र चाग्निशब्दो वर्त्तते इति। कथम्?। परार्थेनेष्टकानां निर्देशात्,—'इष्टकाभिरग्निं चिनुते' इति तृतीयया विभक्त्या पारार्थ्यमिष्टकानामवगम्यते; यदि चयनमात्रमत्रोच्यते, तत् इष्टकासंस्कारार्थमवगम्यते; तत्र द्वितीयया विभक्त्या संयोगः स्यात्, तृतीयया संयोगो बाध्येत! तस्मादिष्टकाभिः अन्यत् क्रियते, तत्राग्निर्निधातव्यः, तदर्था इष्टकाचयनं वेति।

'आह, नन्वेतदुक्तं, तस्याभावादयमन्यः पक्षः परिगृह्यते इति'। अत्रोच्यते, नाभावः, प्रत्यक्षा तत्रैकबुद्धिः, सा बह्वीषु इष्टकासु नावकल्पते। नच अवयवसन्निविष्टश्यते पुरीषच्छन्नानाम्। तस्मात्प्रक्रामसंयोगेऽप्येकबुद्धेरुत्पादादेकम् इष्टकाभ्यो व्यतिरिक्तम् द्रव्यं अग्निनिधानार्थमस्ति; यदि वा इष्टकासंस्यूति-*-रप्येकबुद्धेरेवावगम्यते। यत्तु 'एकाकर्षणेन कृत्स्नाकर्षणम्' इति। सत्यं, संस्यूतौ तत्र विच्छेदः क्रियते; द्विविधानि हि द्रव्याणि,

---

* सम्मितिरिति का० औ० पु० पाठः। एवं परत्र।

स्थावराणि जङ्गमानि च, तत्र स्थावरेषु विच्छेदो भवति; यथा, वनस्पतो पर्णं गृहीत्वा छिद्यमाने न छन्नः छिद्यते, स्थावरत्वात्; एवम् इदमपि, स्थावरं होदमग्निद्रव्यम्। तस्मात् सकृदेव प्रोक्षणं विकर्षणञ्च कर्त्तव्यमिति॥

सू. चोदनासमुदायात्तु पौर्णमास्यां तथा स्यात्॥२८॥(आ॰नि॰॥

भा. अथ यदुक्तं,—'य एवं विद्वान् पौर्णमासीं यजते य एवं विद्वानमावास्यां यजते' इति, नात्र आग्नेयादिभ्यः किञ्चिदर्थान्तरं, तथा इहापि—इति। उच्यते, युक्तं पौर्णमास्यां तथाभावः, चोदनासमुदायो हि तत्र कर्म, नच, कर्मसाध्यं विद्यते, इह तु द्रव्यान्तरमस्तीत्युक्तम्। तस्माद्वैषम्यं पौर्णमास्येति॥(८।१।७अ॰)॥

---

उत्तमान्याङ्गानामङ्गं पत्नीसंयाजान्तसंस्थाधिकरणम्॥

सू. पत्नीसंयाजान्तत्वं सर्वेषामविशेषात्॥२९॥ (पू॰)॥

भा. अस्ति अहर्गणः,'द्वादशाहेन प्रजाकामं याजयेत्' इति। तत्र श्रूयते, 'पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते' इति। तत्रायमर्थः सांशयिकः,—किं सर्वेषामह्नां पत्नीसंयाजान्तत्वम्, उत प्रागुत्तमात्? इति। उत्तमं वर्जयित्वा सन्देहः क्रियते,—तस्य हि मानसान्तता वचनेनोक्ता। किन्तावत् प्राप्तं?—'सर्वेषाम्' अह्नामिति। कुतः?। 'अविशेषात्' अविशेषेणोच्यते, पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते इति। नच, कश्चिद्विशेष आश्रीयते, तस्मात् सर्वेषामिति।

सू. लिङ्गाद्वा प्रागुत्तमात् ॥ ३० ॥ (सि०) ॥

भा. वाशब्दः पक्षव्यावृत्तौ। 'प्रागुत्तमात्' अङ्कः पत्नीसंयाजान्तता स्यात्। कुतः?। 'लिङ्गात्', लिङ्गं भवति,-'पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते न बर्हिरनुप्रहरति असंस्थितो हि तर्हि यज्ञः'* इति यस्मिन् अहनि असंस्थितो यज्ञस्तस्मिन् पत्नीसंयाजान्ततां दर्शयति। कथम्?। हेत्वर्थेन असंस्था निर्दिश्यते, यस्मादिमानि असंस्थितानि अहानि, तस्मादेषु पत्नीसंयाजान्ततेति। संस्थिति-श्चान्त्येऽहनि। अपिच, येषु अहःसु पत्नीसंयाजान्तता, तेषु असंस्था दृश्यते कीर्त्यमाना; तस्मादसंस्थायाः पत्नीसंयाजान्ततायाश्च सामानाधिकरण्यम्; असंस्थाञ्च प्रागुत्तमात् दृष्ट्वा, प्रागुत्तमादेव पत्नीसंयाजान्ततामध्यवस्यामः।

सू. अनुवादो वा दीक्षा यथा नक्तंसंस्थापनस्य ॥३१॥(आ०)॥

भा. वाशब्दः पक्षं व्यावर्त्तयति। नैतदस्ति,-प्रागुत्तमात् पत्नी-संयाजान्तता स्यात्-इति। किन्तर्हि?—सर्वेषामविशेषात्। यदुक्तं,-येषु पत्नीसंयाजान्तता, तेषु असंस्था दृश्यते। तस्मादसंस्थायाः प्रागुत्तमादङ्कः पत्नीसंयाजान्ततां नियच्छामः—इति। नैतदेवं, न ह्येदं विधिमूलं दर्शनं, नान्यप्रमाणमूलम्, अतो मृगतृष्णा-रूपमेतद्दर्शनम्।

यदप्यसंस्था हेतुरिति, तदपि न स्यात्, उक्तं हि, "स्तुतिस्तु शब्दपूर्वत्वात्(१।२।२३सू०)" इति। नच, सामानाधिकरण्यं असं-स्थापत्नीसंयाजान्ततयोः, पत्नीसंयाजान्तता सर्वेषामङ्कां शब्देन

* असंस्थितो हि यज्ञः इति क० सं० पु० पाठः।

गम्यते, असंस्था पुनर्न्यायेन प्रागुत्तमादङ्गः। यदेतत् 'असंस्थितो हि तर्हि यज्ञः' इति, अर्थवादः एष पत्नीसंयाजान्ततास्तुत्यर्थः, तथाहि असंस्थितो यज्ञश्चिरेण संस्थास्यते इत्यालोच्यते, यस्मात् चिरेण संस्थास्यते तस्मादवलुप्यतां, पत्नीसंयाजान्तानि अङ्गानि भवन्त्विति, सन्तिष्ठमानेष्वेवाङ्गेषु असंस्थावचनं पत्नीसंयाजान्तता-प्रशंसार्थं, संस्थावन्ति हि तानि अङ्गानि, अवभृथादय एषां शेषाः पदार्था करिष्यन्ते। यथा दीक्षामोचनवचनं 'नक्षसंस्थापनस्य' अर्थवादः, एवमेतत् द्रष्टव्यम्। 'वरुणपाशाभ्यां वा एषो निधीयते यो दीक्षितोऽहोरात्रे वै वरुणपाशौ यद्दिवा संस्थापयेत् अनुन्मुक्तो वरुणपाशाभ्यां स्यात् नक्तं संस्थाप्यो वरुणपाशाभ्यामेवोन्मुच्यते आत्मनो हिंसायाः' इति, अनुन्मुक्तः स वरुणपाशाभ्यां, न तावद्दीक्षया मुच्यते, अवभृथो हि दीक्षामोचनार्थः। अथवा उच्यते, वरुणपाशाभ्यामिव* निर्मुच्यत इति बह्वी नियमास्तदानीं विसृज्यन्ते, यान् आलोच्य एष वादो भवति; एवमिहापि चिरेण संस्थामालोच्य असंस्थितवचनं भवतीति॥

सू. स्याद्वाऽनारभ्य-विधानादन्ते लिङ्गविरोधात्॥ ३२॥ (आ० नि०)॥

भा. वाशब्दात् पक्षो विपरिवर्त्तते। भवेदा प्रागुत्तमात् पत्नीसंयाजान्तता, न हि आरभ्य उत्तमम् अङ्गः, एष विधीयते, कथन्तर्हि?—सामान्येन पत्नीसंयाजान्तानि अङ्गानि भवन्तीति;

* वरुणपाशाभ्यामेव इति क० स० पु० पाठः।

तत्रान्ते लिङ्गविरोधो भवति। का पुनर्न्यायेन प्राप्तिः? इति। पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते इति, तेन एतत् उक्तं भवति,-शिष्टमवलुप्यते इति,—सन्तिष्ठन्ते नानुष्ठीयन्त इति, कर्तुर्व्यापार एषु उपरमतीति, तेषु सहक्रियमाणेषु अहःसु अवश्यं कस्मिंश्चित् पदार्थे अवस्थाय अवश्यम् अपरस्य अह्नः पदार्था अनुष्ठातव्याः; तत्रानियमे प्राप्ते पत्नीसंयाजान्ते संस्थातव्यमिति नियम्यते। तस्यावस्थानस्यैतत् प्रयोजनं,—कथम् अहरन्तरस्य पदार्थानुष्ठानेन यौगपद्यमनुगच्छेतेति, एतद्धि दृष्टमवस्थानकार्य्यं, यस्मिन्नेतत् दृष्टम्, न शक्यं कल्पयितुं तत्रादृष्टम्; तत्र न पत्नीसंयाजान्तता, तत्रास्यस्य प्रयोजनं न विद्यते; तस्मात् प्रागस्यात् पत्नी-संयाजान्ततेति न्यायेन प्राप्ते लिङ्गदर्शनम्,—'असंस्थितो हि तर्हि यज्ञः' इति॥ (८।१।८अ०)॥

---

'त्रिः प्रथमामन्वाह' इत्यादिषु स्थानधर्म्मताधिकरणम्।

सू. अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्म्मः स्यात्॥ ३३॥ (सि०)॥

भा. स्तो दर्शपूर्णमासौ, तत्र सामिधेनीः प्रकृत्योच्यते, 'त्रिः प्रथमामन्वाह त्रिरुत्तमामन्वाह' इति। तत्रैषोऽर्थः सांशयिकः,—किम् ऋग्धर्म एषः,—यत्र-तत्रस्था 'प्र वो वाजा' त्रिरभ्यसितव्या, उत स्थानधर्म्मः,—या अन्याऽपि प्रथममुच्यते, सा त्रिरभ्यसितव्या? इति। कुतः संशयः?। उभयथोपपत्तेः,—यद्येवम् अभिसम्बन्धः क्रियते,—या असौ उच्चारितानां सामिधेनीनां प्रथममुच्चारिता,

सा त्रिरभ्यसितव्येति, ततः प्र वो वाजाया ऋचो धर्मः; अथैवं विज्ञायते,—प्राथम्यसंयुक्तं त्रिः ब्रूयादिति, ततो वचनस्य स्थान-धर्मता।

किन्तावत् प्राप्तम् ?—ऋचो धर्म इति। कुतः ?। प्राथम्यस्य व्यक्त्या सम्बन्धात्, व्यक्तेरभ्यासेन। कथमवगम्यते ?। स्त्रीलिङ्गनिर्देशात्, व्यक्तिविशेषो हि स्त्री नाम, यदि तद्विशेषणं प्राथम्यं स्यात्, ततो लिङ्गविशेषनिर्देशोऽवकल्पते, साऽपि स्त्री अभ्यासेन सम्भंत्स्यते; अथ प्रथममनुब्रुवता त्रिरभ्यसितव्यमिति ततो व्यक्तिविशेषो न विवक्ष्येत, तत्र स्त्रीलिङ्गविशेषनिर्देशो नोपपद्यते। अपिच वाक्यभेदः प्रसज्येत, प्रथममुक्तं त्रिरभ्यसितव्यं, प्रथममुक्ता ऋक् त्रिरभ्यसितव्येति; मत्पक्षे पुनः प्राथम्यलक्षिताया ऋचो धर्म उच्यते, तत्रैकार्थविधाने न भवेद्वाक्यभेदः। अपिच श्रुत्या प्राथम्येन स्त्री सम्बध्यते, वाक्येनाभ्यासः; तस्मात् ऋग्धर्मो यत्र-तत्रस्था 'प्र वो वाजा' त्रिरभ्यसितव्येति।

एवं प्राप्ते ब्रूमः,—योऽयं सामिधेनीनां प्रथमायास्त्रिरभ्यास उच्यते, स प्रथमस्थानानिमित्तो धर्मः, न ऋचः कस्याश्चित् जातिनिमित्तः। कुतः ?। न हि कृत्स्नेऽपि ऋग्वेदे प्रथमा नाम काचित् ऋक् विद्यते, या त्रिरभ्यस्येत, तत्र प्राथम्यम् ऋग्लक्षणार्थं* स्यात्, इतरस्मिन् पक्षे श्रुतिर्न लक्षणा, श्रुतिश्च ज्यायसी लक्षणायाः; तस्मात अस्मत्पक्षः।

अथ यदुक्तं,—स्त्रीलिङ्गसम्बन्धादस्मत्पक्ष एव श्रुतिः, वाक्यं च न भिद्यते, स्त्रीलिङ्गोपपत्तेश्चेति। अत्रोच्यते, गुणवचनानां हि

* ऋग्लक्षणम् इति क० सं० पु० पाठः।

शब्दानामाश्रयतो लिङ्गवचनानि भवन्तीति अविशेष्यमाणाया-मपि व्यक्तौ यदवश्यं प्राप्तं लिङ्गं, तत् आश्रयभूतं गुणस्य भवति; अविधित्सितेऽपि तस्मिन् लिङ्गविशेषनिर्देशोऽनुवादभूतो भवत्येव; यथा, शुक्लः पुमान्, शुक्ला स्त्री, शुक्लं नपुंसकं; शुक्ल एकः, शुक्लौ द्वौ, शुक्ला बहव इति; शुक्लां शाटीमानयेति; यद्यपि शाटाद्यानयनं न विधीयते, शुक्लसम्बन्धमात्रविधित्सा भवति, न तत्र लिङ्गेन विशेषणं क्रियते, तथापि अनुवादभूतः स्त्रीलिङ्गनि-र्देशो भवत्येव,—शुक्लामानयेति, अनुवादभूतत्वाच्च न वाक्यभेदो भविष्यति। एवं च सति, यद्यपि प्राथम्यस्य स्त्रीलिङ्गसम्बन्धः श्रोतस्तथापि प्राथम्यस्यैवाभ्यासेन सम्बन्धो न लिङ्गस्य; यदि लिङ्गस्यैतेन सम्बन्धोऽभिधीयते, प्राथम्यस्यानुवादता कल्प्येत! प्राथम्यसम्बन्धेऽप्यभिधीयमाने वाक्यं भिद्येत।

अपि च, नैवात्र विवदितव्यं, प्रातिपदिकविशेषणं हि स्त्रीशब्दः, स्त्रियां यत् प्रातिपदिकं वर्त्तते, ततः टाबादय इति, न विशेषण-स्य पदान्तरेण सम्बन्धो भवति, यथा राजपुरुषो गच्छतीति। यदा तु प्राथम्यस्याभ्यासेन सम्बन्धः, तत्र प्राप्तमनूद्यते स्त्रीत्वं, यानि सामिधेनीषु वचनानि, ऋचस्ताः, स्त्रीलिङ्गश्च (?) ऋक्-शब्दः, तत्र यत् प्रथमं वचनं, तस्याश्रय ऋक्, गुणवचनानाञ्च शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति, इत्यविशेषितायामप्यचि स्त्रीलिङ्गं भविष्यतीति, यत्प्रथमवचनं, तत् त्रिराहेति, स्त्री च सा ऋक् सामिधेनी; तस्मात् 'त्रिः प्रथमामन्वाह' इति प्राप्तस्य लिङ्गस्यानुवादः,—'त्रिः प्रथमामन्वाह त्रिरुत्तमां ताः पञ्चदश सम्पद्यन्ते' इति पञ्चदशानां सामिधेनीनां सम्पत्तये

निर्वचनम् उच्यमानं परिपूर्णाया ऋचो भवति, न ऋगवयवस्य, परिपूर्णा च समिन्धनवती न ऋगवयवः। तस्मात् प्राप्तानुवादो लिङ्गस्येति प्राथम्यस्य धर्म्मो न ऋचः॥ (८।१।८अ०)॥

---

यावज्जीवदर्शपूर्णमासयोरारम्भणीयेष्टेः सकृदनुष्ठानाधिकरणम्।

सू. इष्ट्यावृत्तौ प्रयाजवदावर्त्तेतारम्भणीया॥३४॥(पू०)॥

भा. स्तो दर्शपूर्णमासौ, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति; तत्रारम्भणीया इष्टिः समाम्नाता,-'आग्नावैष्णवमेकादश-कपालं निर्वपेत् सरस्वत्यै चरुं सरस्वते द्वादशकपालमग्नये भगिनेष्टाकपालं निर्वपेत् यः कामयेतान्नाद्यः स्याम्' इति नित्य-वत् एके भगिनम् आमनन्ति; आवृत्तिश्च दर्शपूर्णमासयोः श्रूयते,-'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति। तत्र इष्ट्यावृत्तौ सन्देहः,—किम् आरम्भणीयाऽप्यावर्त्तते, न? इति। किं प्राप्तम्?—आवर्त्तेत इति,—असकृदेव कर्त्तव्येति। कुतः?। एवं प्रयोगवचनोऽनुगृहीतो भविष्यति, 'प्रयाजवत्', यथा अङ्ग-भूताः प्रयाजा आवर्त्तन्ते, एवमङ्गभूता आरम्भणीयाऽप्यावर्त्तेत॥

सू. सकृद्वाऽऽरम्भसंयोगात् एकः पुनरारम्भो यावज्जीव-प्रयोगात्॥३५॥(सि०)॥

भा. वाशब्दः पक्षं व्यावर्त्तयति। नैतदस्ति,-यदुक्तमारम्भणीया आवर्त्तेतेति; सकृदेव कर्त्तव्या। कुतः?। 'आरम्भसंयोगात्',—दर्शपूर्णमासयोरारम्भेण संयुज्यते, साधारणश्च सर्वेषां प्रयोगाणा-

मारम्भः। कथम्?। अग्नीनाधाय सर्वः सङ्कल्पयति,*—पर्वणि पर्वणि मया दर्शपूर्णमासौ कर्त्तव्याविति, एवञ्च अध्यवसाय दर्शपूर्णमासौ कर्त्तव्याविति, आरम्भणीया क्रियते, एष एवास्य आरम्भो यदध्यवसानं नाम, तच्च साधारणं सर्वेषां प्रयोगाणां, यावज्जीवप्रयोगात्। अथापि प्रथमं प्रवर्त्तनमारम्भः, तथापि प्रथमप्रवृत्तेन सर्वे प्रयोगाः कृता भवन्ति; तस्मात् सकृदारम्भणीया कर्त्तव्येति॥ (९।१।१०)॥ एवं वा,—

आरम्भणीयेष्टेः पुरुषसंस्कारताधिकरणम्।

सू. इष्ट्यावृत्तौ प्रयाजवदावर्त्तेतारम्भणीया॥ ३४॥(पू०)॥

भा. यस्तु प्रथमः पदार्थ आरम्भ इति, तत्रैव संशयः,—किं दर्शपूर्णमासयोरारभ्यमाणयोरारम्भणीया प्रथमं पदार्थं सम्यञ्चं करोति, उत, पुरुषस्यारभमाणस्य प्रथमं दर्शपूर्णमासयोः प्रवर्त्तमानस्य आरम्भणीया कर्त्तारमारम्भणयोग्यं करोति?। किं प्राप्तम्?—दर्शपूर्णमासयोः प्रकरणात् तयोरारम्भे स्यात्, पुरुषसम्बन्धे फलं कल्पयितव्यं भवेत्, तस्माद्दर्शपूर्णमासारम्भे; एवञ्चेत् आरम्भभेदादिष्ट्यावृत्तौ प्रत्यारम्भं स्यात्, यथा प्रयोगावृत्तौ प्रयाजाः॥

सू. सकृद्वाऽऽरम्भसंयोगात् एकः पुनरारम्भो यावज्जीवप्रयोगात्॥ ३५॥ (सि०)॥

भा. सकृद्वा भवितुमर्हति। कुतः?। पुरुषारम्भसंयोगात्,—

* सङ्कल्पति इति क० ख० पु० पाठः।

पुरुषे दर्शपूर्णमासावारभमाणे विधीयते। कुतः?। 'निर्वपेत्' इति हि श्रुत्वा कर्त्तृसम्बन्धः क्रियते, तत्र पुरुषप्रयत्नवचनं विवक्षितस्वार्थं भवति, इतरथा पदार्थमात्रे विधित्सिते कर्त्तुः प्रयत्नवचनमविवक्षितं स्यात्, प्रयोगवचनप्राप्तमेवानूद्यते। यत्तु,— कर्त्तृसम्बन्धे फलं कल्पयितव्यं; तत्र कल्पयिष्यते, कृतारम्भणीयाकः पुरुषः प्रयोगवचनेन ग्रहीष्यते; एवञ्चेत् एकस्मिन्नेव आरम्भे कृतारम्भणीयाके कृते पुरुषे तत्र प्रयोगात् यावज्जीवं प्रयोगे कृतारम्भणीयाकः पुरुषो भवति; प्रथमं दर्शपूर्णमासौ आरभमाणः कृतारम्भणीयाको जातः, द्वितीयादिष्वपि प्रयोगेषु दर्शपूर्णमासौ आरप्स्यमानः कृतारम्भणीयाको जात इति योग्य एव भविष्यति।

'अथ उच्यते,—समानेऽहनि आरप्स्यमान इति भवति, न च, द्वितीयादिषु प्रयोगेषु समानेऽहनि कृतारम्भणीयाकोऽसाविति'। अत्र उच्यते,—द्वितीयादिष्वपि प्रयोगेषु समाने एव अहनि दर्शपूर्णमासावारप्स्यमानोऽसौ कृतारम्भणीयाको जात इति योग्य एव भविष्यति॥ (८।१।१०)॥

---

निर्वापमन्त्रे सवित्रादिशब्दानामनूद्याधिकरणम्।

सू॰ अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तत्राचोदितमप्राप्तञ्चोदिताभिधानात्॥ ३१॥ (सि॰)॥

भा॰ स्तो दर्शपूर्णमासौ, तत्र निर्व्वापमन्त्रः,—'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये जुष्टं निर्व्वपामि'

इति। तत्रैषोऽर्थः सांशयिकः,—किं सवितृश्रिपूषशब्दानां विक्रतो ऊहः, उत अनूहः? इति। तत एतत्तावत् परीक्ष्यते,—कर्मणि समवेतम् अर्थमेते शब्दाः अभिदधति, उतासमवेतम्? इति। यदि समवेतम्, ऊहिष्यन्ते; अथ असमवेतम्, अविक्रताः प्रयोक्ष्यन्ते; तदुभयमपि सह परीक्ष्यते। किं तावन्नः प्रतिभाति?—तत्र समवेतम् अभिवदन्तीति। कुतः?। एतद्धि मन्त्रपदानां दृष्टं प्रयोजनं, यत् समवेतमर्थं प्रकाशयन्तीति, तत्रासमवेतार्थप्रकाशने न किञ्चिदपि दृष्टं प्रयोजनम्; समवेतानान्तु प्रकाशने दृष्टमस्ति, तद्यदि समवेताभिधायिन एते शब्दास्ततः प्रयोजनवन्तः। कथं पुनः समवेताभिधायिनः?। यदि नाम सवित्रादयः शब्दा अग्न्यादीनां वाचका भवेयुः, यदि वा सवित्रादयो देवताविशेषा दर्शपूर्णमासयोः स्युः, तन्मन्त्रपदानामदृष्टार्थता मा भूदित्यन्यतरदध्यवसीयते,—मान्त्रवर्णिको वा देवताविधिः, सवित्रादयो वा शब्दा अग्न्यादीनां वाचका भवेयुः, तस्मादर्थवत्त्वादन्यतरदध्यवसेयम्।

'अत्राह, ननु 'अग्नये जुष्टम्' इत्यत्रावयवभूताः सवित्रादयोऽग्न्यादीनां वचना अपि सन्तोऽग्न्यादिभिः प्रकाशितताया देवताया न किञ्चिदप्यधिकं कुर्युः, नो खल्वपि सवित्रादिवचना एव मान्त्रवर्णिकाः शक्नुवन्त्युपकर्त्तुम्'। अत्र उच्यते, पृथग्वाक्यानि एतानि भविष्यन्ति, तेषां, 'जुष्टन्निर्वपामि' इति साधारणोऽनुषङ्गः, तानि वाक्यानि दर्शपूर्णमासयोर्गुणभूतानि यदि एतद्देवत्यानि अत्र हवींषि विद्यन्ते, ततोऽवकल्पन्ते,—इत्यर्थापत्त्या मान्त्रवर्णिक्यो देवता विधीयन्ते। अग्न्यादिवचनं तावत् सवित्रादीनां, पृथग्वाक्यानि वा अग्निवाक्येन वैकल्पिकानीति।

एवं प्राप्ते ब्रूमः,—न एवमादीनि ऊहितव्यानीति, अचोदिते ऊहो न प्राप्नोति, चोदिताभिधानाम्नस्येति। तत एतद्दर्शते, असमवेताभिधायिनः सवित्रादय इति। कथम्?। नह्यत्र सवित्रादिदेवत्यं कर्म्म चोद्यते। नच, अग्न्यादीनामर्थेषु सवित्रादयः शब्दाः प्रसिद्धाः।

'अत्राह, नन्वर्थापत्त्या अन्यतरदध्यवसीयेतेत्युक्तं, सति एतद्देवत्ये कर्म्मणि सवित्रादिवाक्यानि उपपद्यन्ते, अग्निवचनत्वे वा सति, या हविषो देवता, सा मन्त्रवचनेन प्रकाशयितव्या; सवित्रादयश्च शब्दा निर्वापवाक्ये प्रकाशनार्थाः, ते हविर्देवतां प्रकाशयन्त उपपद्यन्ते, नान्यथेति, अग्न्यादयश्च हविर्देवता इति तद्वचना* इत्यध्यवसीयते'। अत्र उच्यते, यदि अकल्प्यमाने आनर्थक्यमेषां स्यात् ततोऽन्यतरत्कल्प्येत, "अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावो(३।२।१सू०)" भवतीति, न त्वेवमकल्प्यमानेऽप्यानर्थक्यम्। तस्मात् न अन्यतरस्यापि कल्पने किञ्चिदस्ति प्रमाणम्। न च, चोद्यन्ते एतच्छब्दिका देवताः। 'तत्राचोदितमप्राप्तम्' ऊहम् 'चोदिताभिधानात्'।

अथ यदुक्तं,—प्रत्यायकेन शब्देन प्रकाश्यन्ते अत्र देवताः, तत्रापि अश्रुतानां प्रकाशने न किञ्चिदस्ति प्रयोजनमिति, तत् परिहर्त्तव्यम्; अत्रोच्यते,—

सू. ततश्चावचनं तेषामितरार्थं प्रयुज्यते॥ (३७)॥ (आ०नि०)॥

भा. 'ततश्च' तेन कारणेन अश्रुतानां वचनं न क्रियते, सवि-

* तद्वचनम् इति क० सं० पु० पाठः।

वादिभिः शब्दैः। केन तर्हि कारणेन क्रियते?। 'इतरार्थं प्रयुज्यते', निर्वापस्तुत्यर्थम्, 'देवस्य सवितुः प्रसवे',-देवेन सवित्रा यजमानेन प्रसूते, उदिते वा सवितरि, 'अश्विनोर्बाहुभ्यां',—परिक्रयमभिप्रेत्य यजमानयोर्दम्पत्योर्बाहुभ्याम्, अश्विनौ हि तौ अन्वाधेये अश्वदानेन अश्वितवन्तौ वा तदयज्ञफलमश्नुवाते, तत् बाहू इति स्वौ बाहू व्यपदिशति। देवताध्वर्य्योर्वा अश्विनोरेतौ बाहू इति। पूषणन्तु यजमानमेव मन्यते पुष्णातेः, एवं सर्वं निर्वापविशेषप्रकाशनार्थाः।

अत्राह,—'कस्मात् न, उत्कृष्टाः सवित्रादयः शब्दाः प्रकरणान्तरे सवितारम्, अश्विनौ पूषणञ्चाभिवदन्ति? लिङ्गेन तत्र उत्कृष्यमाणाः प्रकरणं बाधितुमर्हन्ति'। अत्र उच्यते,—सवित्रादयः परविशेषणं विभक्तिश्रुत्या क्रियन्ते, "प्रातिपदिकार्थस्तु अव्यतिरिक्तः" इति गम्यते; तत्र लिङ्गं श्रुत्या बाध्यते, लिङ्गं हि प्रातिपदिकार्थप्रकाशनं देवतार्थमिति कृत्वा, इह देवताभावात् यत्र देवता तत्रोत्कर्षति, विभक्तिश्रुतिस्तु प्रातिपदिकार्थं पदार्थान्तरविशेषणं ज्ञापयति, तच्चेहास्ति पदान्तरं; श्रुतिश्च लिङ्गात् बलीयसी, तस्मात् न उत्कर्षः।

आह,—'यदा सवित्रादयो यजमानपराः, तदा सर्वे कथमनूहः?' इति। उच्यते,—जोषणार्थमिदं वाक्यं, नानुज्ञापनार्थम्,—अजोषितस्य जोषणं कर्त्तव्यम्, तच्च दृष्टोऽर्थः, अनुज्ञापनं पूर्वं ह्यनेन कृतं, तददृष्टार्थमापद्येत। अपिच, 'जुष्टं निर्वपामि' इति जोषणकरणं 'निर्वपामि' इति भावशब्देन उच्यते, 'सवितुः प्रसवे'—इत्यनुज्ञानिर्हन्तापरविशेषणार्थं कीर्त्त्यते, अननुज्ञात-

मपि निर्वपणं शब्दार्थं कुर्य्यादेव, नत्वजोषितेन यागः श्रूयते, तस्मात् जोषणार्थत्वात्परार्थाः सवित्रादयः शब्दा नोहिष्यन्ते इति ॥ ९।१।११ अ०) ॥

---

अग्नये जुष्टमिति मन्त्रे अग्निशब्दस्य विकृतावूहाधिकरणम्।

सू. गुणशब्दस्तथेति चेत् ॥ ३८ ॥ ( पू० ) ॥

भा. तस्मिन्नेव वाक्ये दर्शपूर्णमासयोः 'अग्नये जुष्टं निर्वपामि' इति समाम्नायते। तत्रायमर्थः सांशयिकः,—किम् अग्निशब्दोऽपि विकृतौ नोह्यते, सोऽपि न समवेतवचनः; उत ऊहितव्यः, समवेतवचनो हि सः? इति। किं प्राप्तम्,—एवं चेत्तत्र संशयः, सोऽपि गुणशब्दस्तथैवासमवेतवचनः। कुतः?। सवित्रादयोऽस्मिन् वाक्येऽसमवेतवचनाः, यद्यग्निशब्दोऽपि असमवेतवचनः, एवमवैलक्षण्यं भविष्यति, अवैलक्षण्यञ्च न्याय्यम्। यदि समानं कारणं, तेन न्यायेन अवैलक्षण्यमुच्यते, समानश्चेह कारणं, य एषां शब्दानामर्थः, स इह प्रयोगे नास्तीति 'अग्नये जुष्टं निर्वपामि' इत्यस्यापि योऽर्थः, स इह नास्ति, 'अग्नये जुष्टं निर्वपामि' इत्यनेन जुष्टस्य निर्वाप उच्यते, न चेह जुष्टस्य निर्वापोऽस्ति; अजुष्टं चेह निर्वप्तव्यं, निर्वापेणैव तत् जोष्यते, तस्मान्न समवेतवचनः; तस्याप्यश्रुतार्थस्य वचनमुत्तरार्थं प्रयुज्येत निर्वापस्तुत्यर्थेनेति। तस्मादेतदपि विकृतौ नोहितव्यमिति ॥

सू. न समवायात् ॥ ३९ ॥ ( सि० ) ॥

भा. नैतदेवं, समवेतवचनो हि 'अग्नये जुष्टं निर्वपामि' इति।

ननु एतदुक्तं,-'जुष्टस्यापि निर्वाप उच्यते, न च जुष्टं निर्वप्तव्यम्' इति। अत्रोच्यते,—नैव जुष्टस्य निर्वाप एतेन वाक्येनोच्यते, किन्तर्हि निर्वापेण जुष्टकरणम्, 'अग्नये जुष्टं करोमि' इति; एवं हि दृष्टार्थं भवतीति; अतोऽतुल्यकारणत्वात् वैलक्षण्यमेव न्याय्यम्; तस्मात् समवेतवचनोऽग्निशब्द ऊहितव्यश्च विकृता-विति ॥६।१।१२ अ०)॥

---

तण्डुलावापमन्त्रे धान्यशब्दस्योहाधिकरणम्।

एवं वा,—

सू. गुणशब्दस्तथेति चेत् ॥ ३८ ॥ (पू० )॥

भा. दर्शपूर्णमासयोरामनन्ति,—'धान्यमसि धिनुहि देवानिति हविरावपति' इति।

तत्र धान्यशब्दं प्रति संशयः,-किं समवेतवचनः, न वा? इति। किं प्राप्तम्,—योऽयं गुणवचनशब्द इव लक्ष्यते धान्यशब्दः, नासौ समवेतवचनः स्यात्, धान्यशब्दो हि धान्यमभिवदति, न तु धान्य-मोप्यते, सतुषे हि धान्यशब्दो वर्त्तते, तण्डुलेष्वेव ओप्यमानेषु धान्यप्रकाशनं क्रियते, तत् असमवेतस्य प्रकाशनेऽदृष्टं यथा स्यादिति; तस्माद् विकृतिषु नोहितव्यमिति ॥

सू. न समवायात् ॥ ३९ ॥ ( सि० )॥

भा. नैतदेवं, समवेतो हि धान्यशब्दार्थः, स हि तण्डुलेषु वर्त्तते, तद्विकारत्वात् लक्षणया; यथा 'काशिकेषु शालयो भुज्यन्ते, गावः

पीयन्ते' इति श्रुत्युपादानेऽदृष्टं कल्पयितव्यमिति लक्षणाशब्दः परिकल्प्यते। तस्मात् समवेतवचनः, विकारे च ऊहितव्य इति।

प्रयोजनमस्ति,—शाक्यानामयनं षट्त्रिंशत्संवत्सरं,—तत्रेदं समाम्नायते,—'संस्थिते संस्थितेऽहनि गृहपतिर्मृगयां याति, स तत्र यान् मृगान् हन्ति तेषां तरसाः सवनीयाः पुरोडाशा भवन्ति' इति; तत्राविकारेण 'धान्यमसि धिनुहि देवान्' इति प्रयोगः कर्त्तव्यः, यथा पूर्वः पक्षः; यथा सिद्धान्तः, ऊहः कर्त्तव्यः,—'मांसमसि धिनुहि देवान्' इति ॥९।१।१२ अ०)।

---

इडोपह्वानमन्त्रे यज्ञपतिशब्दस्यानूहाधिकरणम्।

सू. चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात् ॥ ४० ॥

भा. स्तो दर्शपूर्णमासौ,—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति, तत्र इडानिगदः,—'इडोपहूता' इत्येवमादिः; तत्रेदमाम्नायते,—'दैव्या अध्वर्यव उपहूता उपहूता मनुष्या य इमं यज्ञमवान् ये च यज्ञपतिं वर्धान्' इति। तत्रायमर्थः सांशयिकः,—किं बहुयजमानके यज्ञपतिशब्दः ऊहितव्यः, उत, अविकारेण प्रयोक्तव्यः? इति।

तत्रेदं तावत् परीक्ष्यते,—किं समवेतवचनो यज्ञपतिशब्दः, उत, असमवेतवचनः? इति। कथं समवेतवचनः?। यदि यज्ञपतिसङ्कीर्त्तनं यज्ञपतेरुपकारकं, ततः समवेताभिधायी, अथैतत् स्तुत्यर्थं, ततो न समवेताभिधायी।

किं प्राप्तम्?—ऊहितव्यः, समवेताभिधायी। कथम्?। यज्ञ-

पतिहृद्विवचनात् यज्ञपतयः प्रोत्सहन्ते, इडापदानपेक्षैव पदै-र्यज्ञपतिहृद्विरभिधीयते; तस्मात् मुख्यः प्रत्ययः, इडास्तुती जघन्यः; तस्मादर्थविप्रकर्षात् न इडास्तुतिः; अतो यज्ञपतिशब्द ऊहि-तव्यः; यस्यैव हृद्विर्वौच्यते, स एवोत्साहसंस्कारेण संस्कृतो न स्यात्। तस्मात् सर्वे हृद्विसंस्कारार्थं वदितव्याः; सर्वेषु वदितव्येषु बहुवचनम्।

एवम् प्राप्ते ब्रूमः,—'चोदिते तु परार्थत्वाद्विधिवदविकारः स्यात्,' चोदितमपि यत् समवेतं, परार्थं चिकीर्ष्यते, न स्व-संस्कारार्थं, तदपि अविकारेण प्रयुज्यते, तत् न ऊहितव्यं 'स्यात्', 'परार्थत्वात्', अत्र हि यज्ञपतिवचनं हृद्विविशेषणार्थं, हृद्विवचनञ्च इडास्तुत्यर्थम्। कथमवगम्यते?। इडोपह्वानेन ऐकवाक्यत्वात्, इडाप्रकरणाच्च।

अथ यदुक्तं,—'गम्यते, इडापदानपेक्षं यज्ञपतिहृद्विवचनं तेषामुत्साहकम्,—उपह्वता मनुष्या ये यज्ञपतिं वर्द्धयेयुः' इति। अत्रोच्यते, 'स यो हैवं विद्वानिडया चरति' इत्यभिधाय, 'अथ प्रतिपद्यत इडोपह्वतोपह्वतेडोपास्मा इडाह्वयामि इडो-पह्वता' इत्याह; तेनावगम्यते, यस्यैष आरम्भः, स इडाया मन्त्र इति, तन्मध्यपतितश्च 'उपह्वता मनुष्याः' इत्येवमादिः, 'यज्ञपतिं वर्द्धान्',—इत्यन्तः; तस्मादिडामुपह्वातुं वदितव्य इति वाक्या-दवगम्यते। समर्थश्च इडोपह्वाने, यजमानन्तु प्रोत्साहयितुं वदि-तव्य इति नास्ति वाक्यं, केवलं वदितुं सामर्थ्यमस्ति, नच, सामर्थ्य-मात्रेण वाक्यादृते विनियोगा भवन्ति। इडाप्रकरणं चैव-मनुगृहीतं भविष्यतीति, इडया च सहैकवाक्यता। तस्मादियं

वचनव्यक्तिः,—उपहूता मनुष्या ये यज्ञपतिं वर्द्धयितुं समर्था इति, तत्र यज्ञपतिविशिष्टा हविर्वक्तव्येति एकस्मिन्नपि यजमाने कीर्त्तिते, भवति विशेषणकार्य्यं ; तस्मात् 'अविकारः स्यात्' 'विधिवत्', यथा यत्र यजमानो गुणभूतो विधीयते, तत्र येन-केन-चित् यजमानेन स विधिः सिध्यति, यथा, 'यजमानसम्मितौदुम्बरी भवति', 'स्रुक्तं यजमानोऽन्वारभते' इति ।९।१।१२ अ०) ॥

---

प्रस्तरप्रहरणसूक्तवाके यजमानशब्दस्य जहाधिकरणम् ।

सू. विकारस्तत्प्रधाने स्यात् ॥ ४१ ॥

भा० अस्ति दर्शपूर्णमासयोः सूक्तवाकः, 'सूक्तवाकेन प्रस्तरं प्रहरति' इति । तत्रेदं समाम्नायते,—'अयं यजमान आयुराशास्ते' इति । तत्रायमर्थः सांशयिकः,—किं बहुकर्त्तृके विकारे यजमानशब्दः जहितव्यः, उत न? इति । किं प्राप्तम्?—'अविकारेण प्रयोक्तव्यः, तथा सामर्थ्यमनुगृह्यते, न च, अयं समवेतवचनः, परार्थेन हि अत्र 'यजमान आयुराशास्ते' इति आयुराशासनेन यजमानस्य न कश्चित् दृष्टोऽर्थः संजन्यते, तस्मात् आयुराशासनमदृष्टार्थं,—यजमानविशिष्टा आशीरेकेनापि यजमानेन कीर्त्तितेन यथा श्रुता, तथा कृता भवति । यथा 'यजमानेन सम्मितौदुम्बरी भवति' इति, तथैतत् । तस्मादविकारेण प्रयोक्तव्यमिति ।

एवं प्राप्ते ब्रूमः,—'विकारः' 'स्यात्' (जहः), 'तत्प्रधाने' (यजमानप्रधाने) । कथं यजमानप्राधान्यम्? । एवं श्रूयते,—

'सूक्तवाकेन प्रस्तरं प्रहरति' इति, यदि सूक्तवाकः प्रस्तरप्रहरणे तत्साधनं तत्फलं वा प्रकाशयति, ततः सूक्तवाकेन प्रस्तरः प्रहृतो भवति; प्रहरणफलमायुराशासनं कल्पितं, 'यजमान आयुराशास्ते', एतेन कर्म्मणेति यजमानेन प्रस्तरः प्रहृतो भवति। तत्र य एव यजमानः फलं प्रति प्रधानभूतो न सङ्कीर्त्यते, तेन न प्रहृतं स्यात्। तस्मात्सर्वे समवेताः सङ्कीर्त्तयितव्याः; सर्वेषु च कीर्त्यमानेषु बहुवचनं भवति; तस्मादूहो यजमानस्येति॥ ९।१।१४अ० ॥

---

सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दस्यानूहाधिकरणम्।

सू. असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥४२॥ (सि०)॥

भा० अस्ति ज्योतिष्टोमः, तत्र सुब्रह्मण्यानिगदः समाम्नातः,—'इन्द्र आगच्छ हरिव आगच्छ मेधातिथेर्मेष:'* इत्येवमादिः; अग्निष्टुति च श्रूयते,—'आग्नेयी सुब्रह्मण्या भवति' इति। तत्र इन्द्रशब्दस्य स्थाने ऊहः क्रियते। अथेदानीं 'हरिव आगच्छ' इत्येवमादिषु संशयः,—ऊहितव्यं, न? इति। किं प्राप्तं,—'तद्विशिष्टं प्रतीयेत',—तेन विशिष्टम्, इन्द्रपदस्थाने ऊहः, एतेन विशेषेण विशिष्टम् अविकृतमेव वचनं प्रतीयेत। कुतः?। 'असंयोगात् तदर्थेषु', नैषां शब्दानां तेषु अर्थेषु संयोगः,—हरिवत्तादिषु, न हरिवदादयः समवेता इन्द्रे विद्यन्ते गुणाः, प्रमाणाभावात्, अविद्यमानास्तस्योच्यन्ते; एवं स्तुत्या अर्थः

---

* हरिवन्नस्य मेषे गौरावस्कन्दन्नहल्यायै जारेति न्यायमालायां शेषः।

प्रतिज्ञातो भवति, इतरथा लक्षणा स्यात्, न हरिवत्ताद्य उच्येरन्, हरिवत्तादिभिः सोऽस्य गुणो लक्ष्यते। अथ 'असमवेत-वचना मुख्यार्था एव भविष्यन्ति, आत्मीयं गुणं न लक्षयिष्यन्ति' इत्युच्येत। तथा, असतपक्ष एव; तस्मादद्दृष्टार्थं गुण उच्यत इति अविकारेण प्रयोगः स्यात्। तत्रैवं वचनव्यक्तिर्भवति,— 'इन्द्र आगच्छ हरिव आगच्छ' इति हरिवदादीन् अस्य गुणानारोपयति, हरिवदादिभिः सम्बध्यमान इन्द्रोऽभ्युदयकारी भवति। शक्यते चाग्निरपि तैः सम्बन्धयितुं, तस्मादविकारेण गुणानां प्रयोगः।

अथोच्यते,—'अस्मादेव सामानाधिकरण्यवचनादिन्द्रे एते गुणा विद्यन्ते' इति। तत्र, अविद्यमानेष्वपि स्तुत्या अस्य सामानाधिकरण्यवचनमुपपद्येतैव, यथा 'इन्द्रो बृहस्पतिर्देव-दत्तः' इति॥

सू. कर्माभावादेवमिति चेत्॥४३॥ (आ०)॥

भा० इति चेत् भवान् पश्यति,—अविकारेण हरिवदादीनां वचनमिति; 'कर्माभावादेवं' स्यात्, यद्येते गुणा इन्द्रे न भवेयुः, कर्मजास्तु एते गुणाः इन्द्रस्य विद्यन्ते। 'हरिव आगच्छेति पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ताभ्यां ह्येष सर्वं हरति' इति। 'मेधातिथेर्मेष:' इति मेधातिथिं हि काण्वायनं मेषो भूत्वा जहार, वृषणश्वस्य* मेनका नाम दुहिता बभूव, तामिन्द्रश्चकमे, 'गौरा-वस्कन्दन्' इति, गौरमृगो भूत्वा अरण्याद्राजानं सोमं पिबति

* वृषणश्वस्य इति न्यायमालायां पाठः।

इति वचनैः इमे गुणा इन्द्रस्याख्यायन्ते; तस्मात्समवेतवचना हरिवदादयः शब्दाः। तथासतीन्द्रप्रत्ययाय उच्चार्यन्ते इति न अदृष्टकल्पना भविष्यति। तत्रैवं वचनव्यक्तिः,—'इन्द्र आगच्छ, हरिव आगच्छ' इति,—हरिवत्त्वादिगुण एव यस्त्वं, स आगच्छेति। सर्वथा च अदृष्टकल्पनाया ज्यायसी। तस्मादूहितव्या हरिवदादयः शब्दा इति॥

सू. न परार्थत्वात्॥ ४४॥ (आ० नि०)॥

भा० नैतदेवं, परार्था हि हरिवदादयः शब्दाः,—इन्द्रस्तुत्यर्थाः, स्तुतये हरिवदादिसम्बन्धोऽस्य क्रियते; तत् पुरस्तादेवोपवर्णितम्। स्तुत्यर्थश्च अग्नेरप्येतैरभिसम्बन्धः शक्यते कर्तुम्। यत्तूक्तं,—'समवेता गुणा इन्द्रस्य विद्यन्ते, 'पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी-' इत्येवमादिभिर्वचनैरवगताः'-इति। तत्र, न हि इमानि वचनानि इन्द्रस्य सम्बन्धिनौ हरी विदधति, नह्येवमभिसम्बन्धः क्रियते, —यावेतौ पूर्वपक्षापरपक्षौ ताविन्द्रस्य हरी इति, तत्र हि हेतुः उपदिश्यते,—'ताभ्यां ह्येष सर्वं हरति' इति; न ह्रीदं प्रसिद्धं ताभ्यां इन्द्रः सर्वं हरति इति, सिद्धो हि हेतुर्भवति, न प्रसाध्यः; यथा तु इमौ हर्त्तारौ प्रसिद्धौ, कालेन सर्वमपचीयते इति, तथा न इन्द्रस्याग्नेश्च कश्चिद्विशेषः; तत्र एभिरभिधानम् अग्नेः प्राप्नोत्येव।

अथ 'इन्द्रस्य हर्तृत्वं विधीयते' इत्युच्यते। तथा च वाक्यं भिद्येत,—इन्द्रस्य एतौ हरी इत्येतदपि विधातव्यम्। अथैतन्न विधीयते, तथा स एव दोषः,—नास्त्यग्नेरिन्द्रस्य वा विशेष इति।

अथ 'पूर्वपक्षापरपक्षाविन्द्रस्येति विधीयते, तौ च हरी तस्मादिन्द्रो हरिवानिति'। तथा हेत्वप्रसिद्ध्यादिः स एव दोषः; न च, विधीयमाने वैशब्द्यो भवति; प्रसिद्धवचनो ह्येष दृष्टः, 'न वै स्तेयानि सख्यानि सन्ति' इति यथा।

'तथा मेधातिथेर्मेषः' इत्येवमादि इतिहासवचनमिव प्रतिभाति, इतिहासे च विधौ सति आदिमत्तादोषो वेदस्य प्रसज्येत। 'अस्तु' इति चेत्। तथा सति तस्याप्रामाण्यात् मेधातिथेर्हि काण्वायनस्य मेष इत्यप्रसिद्धिः। सर्वत्र च निगदविधानं, तत्र अपरस्मिन् विधीयमाने वाक्यभेदप्रसङ्गः। तस्मात् नैते गुणा इन्द्रे विद्यन्ते,—इति असमवेतवचनत्वादविकारेण प्रयोग इति।

तत् एतत् न रोचयन्ते याज्ञिकाः, ऊहं कुर्वन्ति,—'अग्न आगच्छ रोहिताश्व बृहद्भानो धूमकेतो जातवेदो विचर्षण' इति॥ (६।१।१५अ०)॥

---

तस्यै शृतमितिमन्त्रेऽनूहाधिकरणम्।

अथेदमन्यदुदाह्रियते,—

मू. असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत॥ ४२॥ (सि०)॥

भा० अस्ति साद्यस्कः, तत्रेदं समामनन्ति,—'साद्यस्त्रिवत्सः सोमक्रयणः' इति; अस्ति तु प्रकृताविकहायनी क्रयार्थ्या; तत्र इदमाम्नायते,—'इयं गौस्तया ते क्रीणामि तस्यै शृतं तस्यै शरः तस्यै दधि तस्यै मस्तु तस्या आतञ्चनं तस्यै नवनीतं तस्यै घृतं

तस्या आमिक्षा तस्यै वाजिनम्' इति; तदिह चोदकेन प्राप्तम्। तत्र सन्देहः,—किं गोशब्दस्थाने ऊहं कृत्वा अवशिष्टानां पदानामविकारः, उत सर्वेषामूहः? इति। किं प्राप्तं?—गोपदार्थविशिष्टमेव ऊहवचनं स्यात्; 'तस्यै शृतम्' इत्येवमादीनाम् अविकारः, 'असंयोगात्'—शृतादिभिरर्थैः, तेषामेकहायन्याम्, एकहायनीत्वादेव, न हि एकहायनी दुग्धे, तस्याम् असमवेतं वदन्ति एते; तस्मात्साण्डेऽपि अविकारेण प्रयोक्तव्या इति॥

सू. कर्माभावादेवमिति चेत्॥ ४३॥ (आ०)॥

भा० 'इति चेत्' एवं भवानमन्यते, नैकहायन्याम् एते समवेतान् अर्थानभिवदन्ति इति, भवेदेतदेवं, यद्येकहायन्या इमे गुणा न भवेयुः, कालान्तरे तु तस्या उपपद्यन्ते, न तु साण्डस्य, भविष्यत्कालवचना अप्येते प्ररोचनार्था भवन्ति,—'तस्यै शृतं' भविष्यति। तस्मान्नाविकारेण प्रयोक्तव्या इति॥

सू. न परार्थत्वात॥ ४४॥ (आ० नि०)॥

भा० नैतदेवं,—अविकारेण प्रयोक्तव्या इति। असमवेतवचना ह्येते नैकहायन्यां भवन्ति, एकहायनीत्वादेव। अथ उच्येत, कालान्तरे भविष्यन्ति—इति, साण्डेऽपि कालान्तरे भवितुम् अर्हन्ति, साण्डादपि हि या धेनुर्जनिष्यते, सा धोक्ष्यते इति। तस्मादविकारेण प्रयोक्तव्या इति॥ (९।१।१५ अ०)॥

---

सारस्वत्यां मेषामध्रिगुवचनाभावाधिकरणम् ।

सू. लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ४५ ॥ (सि०) ॥

भा. अस्ति ज्योतिष्टोमः, तत्र पशवः समाम्नाताः,—'आग्नेयः पशुरग्निष्टोमे आलब्धव्य ऐन्द्राग्नः पशुरुक्थ्ये ऐन्द्रावृष्णिः षोडशिनि सरस्वती मेषी अतिरात्रे' इति । अस्ति तु अग्नीषोमीयेऽध्रिगुप्रैषः,-'उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेधम्' इति । तत्र सन्देहः,-किं सारस्वत्यां मेषाम् अध्रिगुवचनं कर्त्तव्यं, न ? इति । ननु 'अग्नीषोमीयार्थं तत् चोदकेनेह प्राप्तम्' इति । अत्र उच्यते, सर्वेषां समानो विधिरिति कृत्वा-चिन्ता ।

किन्तावत् प्राप्तम् ?—'समानविधानेष्वेषु' पशुषु 'अप्राप्ता' 'सारस्वती' मेषी अध्रिगुवचनम् । कुतः ?। 'लिङ्गविशेषनिर्देशात्', विशिष्टलिङ्गो हि अध्रिगुवचनेन निर्दिष्टः,—'प्राशा अस्मिं भरता'* इति पुंशब्दः, स्त्रीत्वं चास्याः; नच पुंवचनः स्त्रियमभिवदितुमलं भवति शब्दः, तस्मादध्रिगुवचनम् अप्राप्ता सारस्वती मेषीति ॥

सू. पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् ॥ ४६ ॥ (पू०) ॥

भा. वाशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति अप्राप्ता सारस्वती अध्रिगुवचनमिति; तस्यामपि अध्रिगुवचनं स्यात् । कुतः ? ।

* भवता इति न्यायमालायां पाठः ।

प्रकरणात्, समानं प्रकरणं सर्व्वेषां पशूनामिति—कृत्वा चिन्त्यते, तेन सारस्वत्या अपि प्राप्नोतीति। लिङ्गविशेषादयुक्तं तस्यामिति यदुच्यते, तत्र, 'पश्वभिधानात्', अस्ति तत्र पशुत्वं सन्निहितं, तदभिप्रेत्य, 'प्रास्मा अग्निं भरता पशवः' इति ब्रूयात्; तद्धि 'चोदनाभूतं', सर्वनामशब्दस्य पुंविषयत्वं, तत् पशुशब्देनोच्यते। अस्ति च तत् मेषां, तदभिप्रेत्य पशुशब्दसमानाधिकरणं सर्वनामशब्दं समुच्चारयिष्यति। एवं प्रकरणमनुग्रहीष्यते। तस्मात् प्राप्नुयात् सारस्वती अध्रिगुवचनमिति ॥

सू. विशेषो वा तदर्थनिर्द्देशात् ॥ ४७ ॥(उ०) ॥

भा. वाशब्द एतं पक्षं व्यावर्त्तयति। नैतदस्ति,—प्राप्नुयात् सारस्वती अध्रिगुवचनमिति; अयमन्यः पक्षः,—न प्राप्नुयादिति। कुतः ?। 'विशेषो वा तदर्थनिर्द्देशात्', पुमर्थं ह्येष शब्दो निर्द्दिष्टुं शक्नोति: स्त्रीलिङ्गस्यायमर्थो मेषीति, स्त्रियं पुंशब्दो न शक्नोत्यभिवदितुम् इति प्रथम एव पक्षः संकीर्त्तितः; केवलं परपक्षस्य अनवक्लृप्तिर्वक्तव्या ॥

सू. पशुत्वं चैकशब्द्यात् ॥ ४८ ॥ (आ०) ॥

भा. अथ यदुक्तं,—पशुत्वाभिप्रायमेतद्वचनम्, एको हि शब्दः पशुत्वस्य च पशोश्च, तेन 'प्रास्मै पशवः' इत्यभिसम्बन्धो भविष्यतीति; तत्परिहर्त्तव्यमिति ॥

सू. यथोक्तं वा सन्निधानात् ॥ ४९ ॥ (आ० नि०) ॥

भा. 'यथोक्तं' स्यात् अध्रिगुवचनम्, अप्राप्ता सारस्वती। कुतः ?।

सारस्वत्यां मेषामध्रिगुवचनाभावाधिकरणम् ।

सू. लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात् ॥ ४५ ॥ (सि०) ॥

भा. अस्ति ज्योतिष्टोमः, तत्र पशवः समाम्नाताः,—'आग्नेयः पशुरग्निष्टोमे आलब्धव्य ऐन्द्राग्नः पशुरुक्थ्ये ऐन्द्रावृष्णिः षोडशिनि सरस्वती मेषी अतिरात्रे' इति । अस्ति तु अग्नीषोमीयेऽध्रिगुप्रैषः,-'उपनयत मेध्यादुर आशासाना मेधपतिभ्यां मेधम्' इति । तत्र सन्देहः,-किं सारस्वत्यां मेषाम् अध्रिगुवचनं कर्त्तव्यं, न ? इति । ननु 'अग्नीषोमीयार्थं तत् चोदकेनेह प्राप्तम्' इति । अत्र उच्यते, सर्वेषां समानो विधिरिति कृत्वा-चिन्ता ।

किन्तावत् प्राप्तम् ?—'समानविधानेष्वेषु' पशुषु 'अप्राप्ता' 'सारस्वती' मेषी अध्रिगुवचनम् । कुतः ?। 'लिङ्गविशेषनिर्देशात्', विशिष्टलिङ्गो हि अध्रिगुवचनेन निर्दिष्टः,—'प्रास्मा अग्निं भरता'* इति पुंशब्दः, स्त्रीत्वं चास्याः ; नच पुंवचनः स्त्रियमभिवदितुमलं भवति शब्दः, तस्मादध्रिगुवचनम् अप्राप्ता सारस्वती मेषीति ॥

सू. पश्वभिधानाद्वा तद्धि चोदनाभूतं पुंविषयं पुनः पशुत्वम् ॥ ४६ ॥ (पू०) ॥

भा. वाशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति अप्राप्ता सारस्वती अध्रिगुवचनमिति ; तस्यामपि अध्रिगुवचनं स्यात् । कुतः ? ।

---

* भवता इति न्यायमालायां पाठः ।

प्रकरणात्, समानं प्रकरणं सर्व्वेषां पशूनामिति—कृत्वा चिन्त्यते, तेन सारस्वत्या अपि प्राप्नोतीति। लिङ्गविशेषादयुक्तं तस्यामिति यदुच्यते, तत्र, 'पश्वभिधानात्', अस्ति तत्र पशुत्वं सन्निहितं, तदभिप्रेत्य, 'प्राश्ना अग्निं भरता पशवः' इति ब्रूयात्; तद्धि 'चोदनाभूतं', सर्वनामशब्दस्य पुंविषयत्वं, तत् पशुशब्देनोच्यते। अस्ति च तत् मेष्यां, तदभिप्रेत्य पशुशब्दसमानाधिकरणं सर्वनामशब्दं समुच्चारयिष्यति। एवं प्रकरणमनुग्रहीष्यते। तस्मात् प्राप्नुयात् सारस्वती अध्रिगुवचनमिति॥

सू. विशेषो वा तदर्थनिर्देशात्॥ ४७॥(उ०)॥

भा. वाशब्द एतं पक्षं व्यावर्त्तयति। नैतदस्ति,—प्राप्नुयात् सारस्वती अध्रिगुवचनमिति; अयमन्यः पक्षः,—न प्राप्नुयादिति। कुतः?। 'विशेषो वा तदर्थनिर्द्देशात्', पुमर्थं ह्येष शब्दो निर्द्देष्टुं शक्नोति; स्त्रीलिङ्गश्चायमर्थो मेषीति, स्त्रियं पुंशब्दो न शक्नोत्यभिवदितुम् इति प्रथम एव पक्षः संकीर्त्तितः; केवलं परपक्षस्य अनवक्लृप्तिर्वक्तव्या॥

सू. पशुत्वं चैकशब्द्यात्॥ ४८॥ (आ०)॥

भा. अथ यदुक्तं,—पशुत्वाभिप्रायमेतद्वचनम्, एको हि शब्दः पशुत्वस्य च पशोश्च, तेन 'प्राश्मै पशवः' इत्यभिसम्बन्धो भविष्यतीति; तत्परिहर्त्तव्यमिति॥

सू. यथोक्तं वा सन्निधानात्॥ ४९॥ (आ० नि०)॥

भा. 'यथोक्तं' स्यात् अध्रिगुवचनम्, अप्राप्ता सारस्वती। कुतः?।

पूर्व्वस्मादेव कारणाल्लिङ्गविरोधादिति। यदुक्तं,—पशुशब्दसमानाधिकरणः सर्वनामशब्दः प्रयोक्ष्यते इति। तन्न। कुतः?। 'सन्निधानात्', सन्निहितवचनो हि सर्वनामशब्दः, उच्चरितमात्रो यः पदार्थः शब्देन सन्निहितः, तेन सम्बध्यते, अथ तस्मिन् असति, लिङ्गादिसर्व्वविशेषणविशिष्टे रूपेण सन्निहिते प्रयुज्यते। सन्निधाने न एकेन विशेषणेन विशिष्टां व्यक्तिमभिवदितुं शक्नोति; सन्निधानात्तन्नैकं सामान्यमाश्रीयते, नान्यत् किञ्चित् पशुत्वादि; ततोच्चार्यमाणे पशुशब्दे शब्देन व्यक्तेर्निष्कृष्टे पशुत्वे 'अस्मै पशवः' इति शक्यते सम्बन्धः कर्त्तुम्; अनुच्चार्यमाणे तु लिङ्गविशेषवचनः प्राप्नोति। तस्मात् अप्राप्ता सारस्वती अध्रिगुवचनमिति कृत्वा-चिन्त्येयम्। अत्र प्रयोजनं न वक्तव्यं, किमग्नीषोमीयार्थाः पशुधर्माः, उत साधारणाः?—इत्यस्मिन्नधिकरणे प्रयोजनाय विचारोऽयं, यदि साधारणाः पशुधर्माः, ततः सारस्वती अध्रिगुवचनमप्राप्ता, अथाग्नीषोमीयधर्माः ततोऽस्याम् अध्रिगुवचनमूहेन प्राप्यते। नच प्रयोजनस्य प्रयोजनं वक्तव्यम्॥ (८।१।१६ अ०)॥

---

यज्ञायज्ञीये गिराशब्दस्य स्थाने इरापदस्यैव कर्त्तव्यताधिकरणम्।

सू. आम्नातादन्यदधिकारे वचनाद्विकारः स्यात्॥ ५०॥

(सि०)॥

भा. अस्ति ज्योतिष्टोमः,—'ज्योतिष्टोमेन स्वर्गकामो यजेत'

इति । तत्र यज्ञायज्ञीयं प्रकृत्यामनन्ति,—'न गिरा गिरेति ब्रूयात् यद्गिरा गिरेति ब्रूयात् आत्मानं तदुद्गातोद्गिरेदैरं कृत्वोद्गेयम्'* इति । तत्र संशयः,—किम् इरापदं गिरापदं वा कर्त्तव्यम्, अथ वा इरापदमेव ? इति । किं प्राप्तम् ?-यत्र 'अधिकारे' 'आम्नातात् अन्यत्' उच्यते, तद्विकारभूतं स्यात्; ज्योतिष्टोमाधिकारे आम्नातात् गिरापदादन्यदुच्यते इरापदं, तत् विशेषे उच्यमानं सामान्येन प्राप्तं गिरापदं बाधेत ॥

सू. द्वैधं वा तुल्यहेतुत्वात्सामान्याद्विकल्पः स्यात् ॥ ५१ ॥
(पू०) ॥

भा. वाशब्दः पक्षं व्यावर्त्तयति । न इरापदं नियम्येत, 'द्वैधं' 'स्यात्', द्वौ प्रकारौ स्यातामित्यर्थः । कौ द्वौ प्रकारौ ? । इरापदवचनं गिरापदवचनञ्च, तुल्यो हि हेतुः, गिरापदमाम्नातम्, तद्गता साम्ना† ज्योतिष्टोमः साधयितव्य इत्येतदप्यवगम्यते, इरापदेन साधयितव्यम् इत्येतदपि; समानार्थे चैते द्वे पदे, एक-

---

* "यज्ञायज्ञेत्यनेन शब्देन युक्तायाम् ऋचि उत्पन्नं साम यज्ञायज्ञीयं, तस्यामृचि गिराशब्दः पठ्यते, 'यज्ञायज्ञा वो अग्नये गिरा दक्षसे' इति तत्र सामगा योनिगानमधीयाना सदैव गकारेण गायन्ति । गायिरा इति ऊह्ये तु गकारलोपपूर्वकमाकारयकारादिकं गानं विधीयते, 'ऐरं कृत्वोद्गेयम्' इति गिराशब्दे गकारलोपादिराशब्दो भवति, इरायाः सम्बन्धि गानम् ऐरम्, तादृशं कृत्वा प्रयोगकाले उद्गानं कर्त्तव्यम्" इति न्यायमाला अनुसन्धेया ॥

† तद्गतसाम्ना इति का० स० पु० पाठः ।

मपि स्तुत्यर्थम अपरमपि। तस्मात् विकल्पः स्यात्,—इरापदं गिरापदं वेति॥

सू. उपदेशाच्च साम्नः॥ ५२॥ (यु०)॥

भा. अत्राह,—'नैतयोस्तुल्यता विद्यते, गिरापदे समाम्नान-मात्रं, न कर्त्तव्यता विधीयते, इरापदे तु कर्त्तव्यता विधीयते'। तन्न। कुतः?। 'उपदेशात्' 'साम्नः',—'उपदिश्यते हि साम,—'यज्ञायज्ञीयेन स्तुवन्ति' इति, गिरापदवच्च यज्ञायज्ञीयं, तस्मिन् उपदिश्यमाने गिरापदमप्युपदिष्टं भवति; तस्माद्विकल्पः इति॥

सू. नियमो वा श्रुतिविशेषादितरत्साप्तदश्यवत्॥ ५३॥ (उ०)॥

भा. 'नियमः' वा स्यात् इरापदस्य। कुतः?। 'श्रुतिविशेषात्', श्रुतिविशेषेण इरापदमुपदिष्टम्, 'ऐरं कृत्वा' इति, सामान्येन गिरापदं, तत्कथं साम्नः उच्यते?। गिरापदस्य पाठमात्रं, न कर्त्तव्यता, न ह्यन्यथा साम कृतं भवतीत्यर्थापत्त्या गिरापदस्य कर्त्तव्यता कल्प्यते, इरापदस्य पुनः श्रुत्यैव कर्त्तव्यता। तेन साम्नि सिद्धे नास्त्यर्थापत्तिः गिरापदस्य। 'अथ यः सामान्येनोप-दिष्टः, तस्य को विषयः?'। तदुच्यते,—'इतरत् साप्तदश्यवत्' इति,—गिरापदमुपदिश्यते, तद्यथा साप्तदश्यं, तथा स्यात्, विकृतिषु साप्तदश्यं निविशते, इतरदपि विकृतीरभिनिवेष्टु-मर्हतीति॥ ८।१।१७ अ०)॥

इरापदस्य प्रगीतताधिकरणम्।

सू. अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात्॥ ५४॥ (पू०)॥

भा. ज्योतिष्टोमे यज्ञायज्ञीयं प्रकृत्य आमनन्ति,—'न गिरा गिरेति ब्रूयात् यद्गिरा गिरेति ब्रूयात् आत्मानमेव तदुद्गाता उद्गिरेदैरं कृत्वोद्गेयम्' इति। ज्योतिष्टोमे गिरापदस्य स्थाने इरापदं कर्त्तव्यमिति समधिगतम्। इदानीमिदं सन्दिग्धं,—किं प्रगीतमिरापदं कर्त्तव्यम्, उत अप्रगीतम्?—इति। किं प्राप्तम्? —गिरापदादन्यस्मिन् शब्दे श्रूयमाणे ब्रूमः,—अप्रगीतमिरापदं कर्त्तव्यम्। कुतः?। 'अप्रगाणात्,' नहि तत् प्रगीतमुपदिश्यते, सर्वं हि यत् यथाभूतमुपदिश्यते, तत् तथाभूतमुपयोक्तव्यम्।

ननु 'नैव तत् अप्रगीतमुच्चार्यते, तद्धितशब्देन अयं निर्देशः क्रियते, तेन स्वरविशेषः कश्चित् निर्दिष्टो भवति'। अत्रोच्यते, यद्यपि चास्ति स्वरविशेषः, अन्ये तु गीतिविकारा आईभावादयो न निर्दिश्यन्ते, अविकृतात् तद्धित उत्पादितः; तस्मात् अविकृतं प्रयोक्तव्यम्। अथोच्यते,—'तद्भूतनिर्देशोऽविवक्षितः' इति। उच्यते, अविवक्षायां न किञ्चित्, विवक्षायान्तु निर्देश एव कारणं; तस्मात् अप्रगीतं प्रयोक्तव्यमिति॥

सू. यत्स्थाने वा तद्गीतिः स्यात् पदान्यत्वप्रधानत्वात्* ॥ ५५॥ (सि०)॥

भा० वाशब्दः पक्षं व्यावर्त्तयति। यस्य पदस्य स्थाने इरापदं

* "तत्गीतिः स्यात्" इति सर्वत्रैव पुस्तके पाठो न सम्यगिव प्रतिभाति।

x

प्रयुज्यते, तस्य पदस्य या गीतिः, सा इरापदे 'स्यात्' । कुतः ? । 'पदान्यत्वप्रधानत्वात्', पदान्यत्वप्रधानं हि इदं वाक्यं, गिरापदस्य स्थाने इरापदं भवतीति, नाप्रगीतं प्रयोक्तव्यमिति; अन्या हि वचनव्यक्तिः,—इरापदस्य विशेषे विधीयमाने, अन्या इरापदे; एवं हि श्रूयते,—'इरापदस्य विकारहृत्वोरेयम्' इति, तत्रानेन प्रकारेण इरापदं विधीयते, नान्यं प्रगाथात्, इरापदस्य विकारं ब्रूयात् । न गिरापदस्येत्येतत् तत्रितेनोच्यते, नाप्रगीतस्य इरा-पदस्य विकारस्तद्वितशब्देनाध्यवसीयते; यथास्तहितायां विकारं ब्रूयादिति असावनूद्यते एव; यः प्रकृत्यर्थः इरापदस्येति, स विधीयते; तेन पदान्यत्वपरम् एतद्वचनं, न गीत्यनन्वयपरं, गीतिर्हि विकारः सामान्यान्निर्दिश्यते ॥

सू. गानसंयोगाच्च ॥ ५६ ॥ (यु० ) ॥

भा० गानसंयोगो भवति,—'उद्दयमा इरा चा दाचासा' इति इरागानं दर्शयति ॥

सू. वचनमिति चेत् ॥ ५७ ॥ ( आ० ) ॥

भा० 'इति चेत्' पश्यसि,—गानदर्शनमेतद्भवति-इति, नैवं,— 'वचनं' भविष्यति,—उद्दयमा इरा चा दाचासा' इति ।

सू. न तत्प्रधानत्वात् ॥ ५८ ॥ ( आ० नि० ) ॥

भा० नैतदेवं, तत्प्रधानं हि इदं वाक्यम् । किंप्रधानम् ? । इरापदप्रधानं, निर्देशात्; न गीतिप्रधानम्, अनिर्देशादित्युक्तं;

तथा इरापदस्य अर्थवादो भवति, न गीतेः, 'इरामहं यजमाने दधानि' इतिपदस्य चायमर्थवादः, न गीतेः; तस्मात् प्रगीतं प्रयोक्तव्यमिति ॥

'किं भवति प्रयोजनं चिन्तायाः, नात्र कश्चिद्विशेषः ?'। अस्मिन् एतस्मिन्हये प्रयोजनमस्ति,—'न प्रप्रेति ब्रूयात्, प्रप्रीति ब्रूयात्,' यदि पूर्वः पक्षः, प्रप्रपदं वा वक्तव्यं, प्रप्रीपदं वा ; यदि सिद्धान्तः, प्रप्रीपदमेव वक्तव्यमिति ॥ ( ९।१।१८अ० ) ॥

इति आचार्यशबरस्वामिनः* कृतौ मीमांसाभाष्ये नवमस्य अध्यायस्य प्रथमः पादः ॥ ० ॥

---

* क्वचित् आचार्येशबरस्वामिनः भट्टेति पाठः ।

गीतीनां सामनामताधिकरणम् ।

सू. सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥ (पू०) ॥

भा० सन्ति सामानि, 'रथन्तरं बृहद्-वैरूपं वैराजं शाक्वरं* रैवतम्' इति 'अभित्वा शूर नो नुमः' इत्येवमादिषु; तत्रैषोऽर्थः सन्दिह्यते,—किं प्रगीता एते मन्त्राः सामानि, उत गीतयः सामानि? इति। ननु 'सिद्धं,—"गीतिषु सामाख्या" (२।१।३६ सू०) इति'। उच्यते,—तत्र द्वितीयेऽध्याये मन्त्रगते भावशब्दे चोदकत्वं प्रति विचार्यमाणे मन्त्राभावाशङ्कायां मन्त्रसद्भावोपपादनाय, "तच्चोदकेषु मन्त्राख्या" (२।१।३२ सू०) इति कृते लक्षणे, "अहेबुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयीविदा विदुः ऋचो यजूंषि सामानि" इति ऋगादीनां विभागाय प्रसक्तानुप्रसक्तं लक्षणं "गीतिषु सामाख्या" इत्युक्तं। तत्र यदि प्रगीतो मन्त्रः साम, यदि वा गीतिमात्रं, उभयथापि ऋग्यजुषाभ्यामन्यत्सामेति सिद्धे विभागे न विवेकाय प्रयत्नः, प्रयोजनाभावात्, इह तु प्रगीते मन्त्रेऽन्यत् कर्म्म, गीतिमात्रेऽन्यदिति विवेकाय प्रयत्यते।

आह, 'ननु एतदपि सिद्धं, गानकर्म्मणो वाचकः सामशब्दः' इति। उच्यते, तदेव पुनरभिधीयते, स्मरणाय, उत्तरमधिकरणं चिन्तयितुम्।

गीतिः सामेति स्थिते इदं चिन्त्यते, गीतिषु ऋचः प्रधानभूताः, उत, गुणभूताः? इति। आह, 'नैव स्मरणाय पूर्व्वपक्षोत्थरणं, नहि मन्त्राः सामानीत्येषोऽर्थः स्मर्त्तव्यः'। अत्र

* शाक्वरम् इति क० मं० पु० पाठः॥

उच्यते, पूर्व्वपक्षेऽपि सिद्धान्तस्मरणार्थमेवोपादीयते, यत् प्रगीतं मन्त्रवाक्यं तत्सामेत्येवं पूर्वपक्षं कृत्वा गीतिमात्रं सामेति स्थापितं ; तस्मिन् स्थिते अयमुत्तरो विचारः कर्त्तव्यः, गीतिषु किमृचः प्रधानभूताः, उत, गुणभूताः ? इति ।

किं प्राप्तं ?—'एके' मन्यन्ते, प्रगीतं मन्त्रवाक्यं सामेति । कुतः ? । 'स्मृत्युपदेशाभ्याम्,' एवं हि स्मरन्ति, प्रगीतं मन्त्रवाक्यं सामेति, तत्रभवन्तः छान्दसाः एवञ्च उपदिशन्ति शिष्येभ्यः । आह, 'ननु यदेव स्मरन्ति, तदेवोपदिशन्ति, नैवं सति उपदेशो हेत्वन्तरम्' इति । उच्यते, बाढम्, अन्यथा तर्हि उपदेशं वर्ण्णयामः, अयमुपदेशः ; 'अहेवुध्निय मन्त्रं मे गोपाय यमृषयस्त्रयीविदा विदुः ऋचो यजूंषि सामानि' इति । मन्त्रप्रकारः कश्चित् सामानीति मन्त्रोपदेशो भवति ; तस्मादुपदेशान्मन्त्राः सामानीत्यवगच्छामः ॥

सू. तदुक्तदोषम् ॥ २ ॥ (सि०) ॥

भा० तस्यैतस्य पक्षस्योक्तो दोषः सप्तमे, ऋचः प्रदेशो नोपपद्यते 'कवतीषु रथन्तरङ्गायति' इति, देशलक्षणा धर्मलक्षणा वा प्राप्नोति इति । तस्माद्गीतयः सामानि, न प्रगीतानि मन्त्रवाक्यानीति ॥ (८।२।१अ०) ॥

---

ऊहप्रन्यस्य पौरुषेयताधिकरणम् ।

एवं वा,—

सू, सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम् ॥ १ ॥(पू०) ।

भा, इदं सन्दिह्यते, योऽयम् ऊहो नाम 'कया नश्चित्र आभुवो

वा'* इति, किम्, अयमप्यार्षो नित्यः, उत, चिन्तयित्वा-प्रणीतः ? इति। किं प्राप्तम् ?—एतानि ऊहसामानि मन्त्रभूतानि आर्षाणि नित्यानीति 'एके' मन्यन्ते। कुतः ?। 'स्मृत्युपदेशाभ्याम्' एवं हि स्मरन्ति, मन्त्रभूतानि आर्षाणि नित्यानीति, उपदिशन्ति च एवंविधमेव शिष्येभ्यः।

आह, 'ननु यदेव स्मरन्ति, तदेवोपदिशन्ति'। बाढम्, अयमन्य उपदेशो वर्ण्यते, 'ऊहचिकीर्षितः' इति ब्राह्मणमुपदिशन्ति, 'चिकीर्षितः' इति च इष्ट उच्यते, इच्छायां हि सन् विधीयते, यदि च अयम् अपुरुषबुद्धिपूर्व्वको वेदतुल्यः, तत इष्टः, अथ पुरुषप्रणीतः, ततो न प्रमाणं, यत्न च अचिकीर्षितो न प्रयोक्तव्यः। 'चिकीर्षितः' इति च शब्दो भवति ; तस्मान्नित्य ऊह इति॥

सू. तदुक्तदोषम्॥२॥(सि०)॥

भा० 'तत्' एतत् 'उक्तदोषं',—भवद्वचनं भवतैव हेतुं वर्णयता अस्योक्तो दोषः,—ऊहचिकीर्षितः इति ;—ऊहचिकीर्षित इत्यनित्ये एतद्भवति। यदुक्तम्,—'इष्टे चिकीर्षितशब्दो भवति, इच्छायां हि सन् विधीयते' इति। उच्यते, सत्यम्, इष्टं कर्तुं यच्चि क्रियते, तत्कर्तुमिष्टं भवति इति ; तस्मात् अनित्य ऊहः। यदुक्तं,—स्मृतेर्नित्यतेति ; नैषा स्मृतिः प्रमाणं, दृष्टमूला ह्येषा ; भवति हि वचनं,—'कवतीषु रथन्तरं गायति' इति। तस्मात् अतिदेशवचनाश्रयेणैवं गातव्यमिति वाचनिकं प्रथमं विज्ञानं, तत एषा स्मृतिः, तस्मादप्रमाणं, कृत्रिम ऊहः इति।

* आभुवदिति व्याख्यमालायां पाठः। 'यस्मिन् मन्त्रे सामगाः पृथे सामैकैकं गायन्ति, सोऽयमृहो मन्त्रः' इति व्याख्यमाला।

किं भवति प्रयोजनं?—न्यायविरुद्धमपि प्रमाणं, यथापूर्वः पक्षः; यथा तर्हि सिद्धान्तः, न्यायविरुद्धमप्रमाणम्॥ (८।२।१अ०)॥

---

प्राधः कर्मसंस्कारकर्मताधिकरणम्।

सू. कर्म वा विधिलक्षणम्॥ ३॥ (पू०)॥

भा. तानि एव उदाहरणानि; तेषु अयमर्थः समधिगतः,—गीतिः सामशब्देनोच्यते इति; तत इदमिदानीं संदिह्यते, किं सा गीतिः ऋचः प्रति प्रधानभूता, उत, गुणभूता? इति। ननु 'सिद्धं,—संस्कारकर्मणः सामशब्दो वाचक इति "अपि तु कर्मशब्दः स्यात् भावोऽर्थः प्रसिद्धग्रहणत्वात्" (७।२।१३सू०) इति'। उच्यते, सत्यमाक्षेपेण प्रवर्त्तते, स एव निर्णयो भविष्यति। किं प्राप्तं?—तेनैवाधिकरणेन संस्कारकर्मेति।

तथा प्राप्ते ब्रूमः,—प्रधानकर्म वा सामशब्देनोच्यते इति। किंकारणम्?। प्रधानविधिलक्षणं हि अत्रास्ति द्वितीया विभक्तिः,—'रथन्तरं गायति' इति; तस्मात् प्रधानकर्मेति। अपिच, कर्मकाले गानं भवति, तत् यदि द्रव्यसंस्कारार्थं, संस्कृतं द्रव्यमदृष्टेन संस्कारेण न कर्मकाले पुनः संस्कर्त्तुं शक्यं, न हि छिन्नस्य छेदनं शक्यं कर्त्तुं, पिष्टस्य वा पेषणं, स एषोऽस्मी-नामिवाभ्युपगन्तव्यः,—अकर्मकाले क्रियमाणः संस्कारो भवतीति; अस्मत्पक्षे पुनः प्रधानकर्म्म फलाय भविष्यति, तत्र अविप्रतिषिद्धम् अकर्मकाले गानम्।

अपिच, श्रावण्यां पौर्णमास्यां व्रतानि उपाकृत्य, अर्धपञ्चमान्

मासान् स्वाध्यायमधीयीतेति, तदेषां फलाय भविष्यति, इतरथा पुरुषाणामुपदिश्यमानं, कर्म्मणां कल्पेत! तस्मादपि प्रधानकर्म्मेति ॥

सू. तदृग्द्रव्यं वचनात् पाकयज्ञवत् ॥ ४ ॥ (आ०नि०) ॥

भा. आह,-'प्रधानकर्म्मेत्युच्यते, न च एतत् प्रधानकर्म्म, न हीदं फलदं, फलकल्पनायां च अश्रुतं कल्प्येत, तेन यागं प्रति गुणभूतं, यदि न गुणभूतं, किमस्य द्रव्यं, यत् प्रति प्रधानभूतमेतत्?'। तदुच्यते, 'ऋग्द्रव्यं', ऋक् अस्य द्रव्यस्थानीया, यथा अन्यस्य कर्म्मणो द्रव्यं साधकम्, एवमस्य ऋक् साधिका, तस्मात् ऋचं प्रति प्रधानभूतमेतत्, भूतं हि भव्यायोपदिश्यते । कथं पुनरेतत् ऋग्द्रव्यम् ?। 'वचनात्,' वचनमिदं भवति, 'ऋचि साम गायति' इति; यथा पाकयज्ञेषु तत्तद्वाचनिकं द्रव्यं भवति,—लाजाः, धानाः, तण्डुलाः आज्यमिति, एवमिहापि ऋक् द्रव्यं, वचनादिति ।

सू. तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशस्य ॥ ५ ॥ (यु०२) ॥

भा. आह,-'या ऋगस्य वचनेनोच्यते, तद्द्रव्यमेतत् भवति, कथम्, द्रव्यव्यतिरेके सति द्रव्यान्तरे प्रदेशे च तदिदं साम?'-इति। अत्रोच्यते, अविप्रतिषिद्धमेतत्, गीतिमात्रं हि सामेति, द्रव्यमस्य निर्वर्त्तकं वाचनिकं, तत् सामान्यविहितं, विशेषविहितेन द्रव्यान्तरेण बाध्यते। यदत्र द्रव्यव्यतिरिक्तं गीतिमात्रं, तदेव बृहद्वा रथन्तरं वेति न दोषो भवति । तस्मात् प्रधानकर्म सामेति ।

# BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 315.



मीमांसादर्शनम् ।

श्रीशवरस्वामिकृतभाष्यसहितम् ॥

उत्तरार्द्धम् ।

# The Mímámsa Darśana.

WITH THE COMMENTARY OF ŚAVARA SWÁMIN,

EDITED BY

PAṆḌITA MAHEŚACHANDRA NYÁYARATNA.

FASCICULUS XII.




CALCUTTA.

PRINTED AT THE GANEŚA PRESS

1875.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

## *No. 57, Park Street.*

### 1.—THE SOCIETY'S PUBLICATIONS.

A. Bibliotheca Indica.

Sanskrit Works complete.

| *Old Series, Nos. 1 to 230 demi 8vo.* | Rs. | As. |
|---|---|---|
| The first two Lectures of the Sañhitá of the Rig Veda. Edited by Dr. E. Röer, Nos. 1 to 4. ... ... ... | 2 | 8 |
| Uttara Naishadha Charita, by S'ri Harsha, with a Commentary. Edited by Dr. E. Röer. 12 Fasciculi, ... .. | 7 | 8 |
| Chaitanya Chandrodaya Náṭaka, by Kavikarṇapura. Edited by Bábu Rájendralála Mitra. 3 Fasciculi, .. ... | 1 | 14 |
| Vásavadattá, by Subandhu, with its commentary entitled Darpaṇa. Edited by Professor F. E. Hall, M. A. 3 Fasciculi, .. | 1 | 14 |
| The Márkaṇḍeya Purána. Edited by the Rev. K. M. Banerjea. 7 Fasciculi, ... ... ... ... ... | 4 | 6 |
| The Elements of Polity, by Kámandaki. Edited by Rájendralála Mitra. 3 Fasciculi, ... ... .. .. | 1 | 14 |
| *New Series, Nos. 1 to 268, demi 8vo.* | | |
| The S'rauta S'útra of A'svaláyana, with the Commentary of Gárgya Náráyaṇa. Edited by Paṇḍita Rámanáráyaṇa Vidyáratna. 10 Fasciculi, .. ... ... .. ... | 6 | 4 |
| The S'añkara Vijaya of Anantánanda Giri. Edited by Paṇḍita Jayanáráyaṇa Tarkapaṇchánana. 3 Fasciculi, .. ... | 1 | 14 |
| Vais eshika Dars ana, with the Commentaries of S añkara Mis'ra &c. Edited by Paṇḍita Jayanáráyaṇa Tarkapaṇchánana. 5 Fasciculi, | 3 | 2 |
| The Nyáya Darsana of Gotama, with the Commentary of Vátsyáyana Edited by Paṇḍita Jayanáráyaṇa Tarkapaṇchánana. 3 Fasciculi, | 1 | 14 |
| Páli Grammar, by Kácchâyana, Edited by Dr. F. Mason. 2 Fasciculi, | 1 | 4 |
| The Das a-Rúpa, with Dhanika's Commentary. Edited by Professor F. E. Hall, D. C. L. 3 Fasciculi, ... ... ... | 1 | 14 |
| The Aphorisms of S âṇḍilya, with the commentary of Svapneśvara. Edited by J. R. Ballantyne, LL. D., .. ... | 0 | 10 |
| The Nárada Paṇcharátra. Edited by the Rev. K. M. Banerjea. 4 Fasciculi, ... ... .. .. .. | 2 | 8 |
| The Kaushítaki-Bráhmaṇa-Upanishad with Commentary and a translation by E. B. Cowell. M. A. 2 Fasciculi, ... | 1 | 4 |
| The Káváyadars'a of S'rí Daṇḍin. Edited with a Commentary by Paṇḍita Premachandra Tarkavágis'a. 5 Fasciculi, ... | 3 | 2 |
| The Sañkhya Sára of Vijnána Bhikshu. Edited by Dr. F. E. Hall, 1 Fasciculus, .. ... .. .. | 0 | 01 |
| The Brihat Sanhitá of Varáha-Mihira. Edited by Dr. H. Kern, 7 Fasciculi, ... .. .. ... | 4 | 6 |

सू. शब्दार्थत्वात्तु नैवं स्यात्॥ ६ ॥ (सि०)॥

भा. तुशब्दः पक्षं व्यावर्त्तयति,-नैतदेवं भवितुमर्हति, प्रधानकर्म्म सामेति, गुणकर्म स्यात्। कुतः?। 'शब्दार्थत्वात्'-शब्दस्य उपकारकं साम प्रत्यक्षमुपलभ्यते, साम्नि क्रियमाणे ऋगक्षराणि उच्चार्य्यन्ते, तस्मिन् सति नादृष्टं कल्पनीयम्॥

सू. परार्थत्वाच्च शब्दानाम्॥ ७ ॥ (यु०१)॥

भा. परार्थाश्च शब्दाः स्तुत्यर्थाः, स्तुतिर्हि चोदिता,-'आज्यैः स्तुवते पृष्ठैः स्तुवते' इति साम्नः ऋगक्षरैः उच्चार्य्यमाणैः प्रत्यक्षा अवगम्यते, ततः स्तुत्यर्थाया ऋचः सत्याः सामार्थता परिकल्प्येत, कल्पनायाञ्च प्रमाणं नास्ति; तस्मादपि साम गुणभूतमिति॥

सू. असम्बन्धश्च कर्मणा शब्दयोः पृथगर्थत्वात्॥ ८ ॥ (यु०२)॥

भा. इतश्च गुणभूतं साम। कुतः?। 'असम्बन्धश्च' साम्नः स्तोत्रेण स्यात्, तस्य प्रधानभावेन स्तुतिः साम्न उपदिश्येत, न साम स्तुतेः, तत्र 'बृहत् पृष्ठं भवति रथन्तरं पृष्ठं भवति' इति वचनं बाध्येत, रथन्तरगुणकं पृष्ठं भवतीत्येतदेवमुपदिश्यते, तत् ऋगर्थे साम्नो अवकल्पते, प्रत्यक्षं हि तदा पृष्ठस्योपकारं साम करोति, यदस्य वाचकं प्रकाशयति* शब्दं, तत् रथन्तरपृष्ठशब्दयोः सामानाधिकरण्यादेकार्थत्वे शक्यं विज्ञातुं; पृथगर्थत्वे तु 'असम्बन्धः' स्यात्; तस्मात् ऋचः साम गुणभूतमिति॥

---

* अत्र, 'तदस्य वाचकं भवति' इत्यधिकः क० सं० एवं का० सं० पुस्तके पाठः।

सू. संस्कारश्चाप्रकरणेऽग्निवत्स्यात् प्रयुक्तत्वात् ॥ ९ ॥ (आ०) ॥

भा. अथ यदुक्तम्,—कर्मकाले गानम् ऋचः संस्कारकम् अग्न्याधानमिव कल्प्येत, प्रयुक्तत्वादिति; तत् परिहर्त्तव्यम्,—

सू. अकार्यत्वाच्च शब्दानामप्रयोगः प्रतीयेत ॥ १० ॥ (आ०नि०) ॥

भा. यदि हि अकर्मकाले गानं कृतं, कर्मकालं यावत् तिष्ठेत्, न विनश्येत्, ततः पुनः 'अप्रयोगः प्रतीयेत', यदि वा पुनर्न शक्येत कर्मकाले गानं कर्त्तुं, तथाप्यप्रयोगः स्यात्, शक्यन्ते तु प्रगीताः शब्दाः पुनः प्रयोक्तुं; तस्मादकर्मकाले प्रयुक्ता असाधका इति कर्मकाले प्रयुज्येरन्। तस्मान्न दोषो भविष्यतीति ॥

सू. आश्रितत्वाच्च ॥ ११ ॥ (यु०) ॥

भा. अपि च कर्म्मकालाश्रितं गानं दर्शयति,—'औदुम्बरीं स्पृष्टानपाश्रित उद्गातोद्गायेत्' इति,—'सदस्यौदुम्बरी मध्यमा स्थूणा भवति, तां स्पृष्ट्वा' इति ब्रुवन् सदसि गानं दर्शयति। तस्मात् न अकर्मकालम् अग्न्याधानवत् कल्पयितव्यमिति ॥

सू. प्रयुज्यत इति चेत् ॥ १२ ॥ (आ०) ॥

भा. अथ यदुक्तम्,—अर्द्धपञ्चमात्मासान् अध्ययनं प्रयुज्यते, तत् फलाय भविष्यति इति, तत् परिहर्त्तव्यम्,—

सू. ग्रहणार्थम् प्रयुज्येत ॥ १३ ॥ (आ०नि०) ॥

भा. नहि फलाय भवितुमर्हति, तथाहि अदृष्टं कल्प्येत,

इष्यते अत्र प्रयोजनं,—यत्तावत् उपाध्यायः शिष्यसन्निधावधीते, तत् ग्रहणार्थं; यत् शिष्यः, तत् धारणार्थं; ग्रहणधारणे प्रयोगार्थे, भूमिरथिकवत् श्येनेष्टिवद्वा; तद् यथा, भूमिरथिको भूमौ रथमालिख्य शिक्षां करोति, संग्रामे प्राशुभावो भवितेति, यथा च छात्रः श्येनेष्टीः प्रयुङ्क्ते, प्रयोगे प्राशुकर्मा भविताऽस्मीति; एवमेतत् द्रष्टव्यम्। तस्मात् दृष्टे सति नाऽदृष्टाय अध्ययनं। तस्मात् संस्कारकर्म सामेति॥ (९।२।२अ०)॥

---

तृचे प्रत्यृचं व्यासङ्गाकं समापनाधिकरणम्।

सू. तृचे स्यात् श्रुतिनिर्देशात्॥ १४॥ (पू०)॥

भा. ज्योतिष्टोमे समाम्नायते,—'तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इति। अत्रायमर्थः सांशयिकः,—किं तिसृषु ऋक्षु व्यासज्य गानं कर्त्तव्यम्, उत, प्रति ऋचं समाप्तं गानं कर्त्तव्यम्? इति। किं प्राप्तं?—व्यासज्येति। कुतः?। 'श्रुतिनिर्देशात्,' एवं श्रूयते, 'एकं साम तृचे क्रियते' इति, साम्नि क्रियमाणे, निर्दिष्टो गुणभूता त्रिसंख्या ऋगाश्रिता श्रूयते, तत्र यद्येकस्यामृचि उपक्रम्य तस्यामेवैतत् परिसमापयेयुः, न त्रिसंख्यया साधनमस्य क्रियमाणस्य परिच्छिन्द्युः, एकसंख्यापरिच्छिन्नं क्रियमाणं स्यात्, तत्र श्रुतिर्बाध्येत, तद्यथा,—'अयं घटः त्रिषु नागदन्तकेषु स्थाप्यताम्'-इत्युक्ते व्यासज्य स्थाप्यते, न पर्य्यायेण, एवमिहापि द्रष्टव्यम्॥

'ननु पर्यायेऽप्येवंजातीयकः शब्दो भवति, यथा,–'त्रिषु कुलेषु

देवदत्तो भुङ्क्ते' इत्युक्ते न यौगपद्यमवगम्यते, पर्यायेणापि भुञ्जाने भवत्येव वादः; एवमिहापि पर्यायेण प्राप्नोति' इति। अत्रोच्यते, न तत्र त्रिसंख्या भुजिं प्रत्युपदिश्यते, येनैतदेवं भवति, तत्र कुलशब्देन सम्बध्यते,—त्रिषु कुलेषु, न द्वयोरेकस्मिन् वेति, यदा भुजिनिर्वृत्तिं प्रत्युपदिश्यते, तदा यौगपद्येनैव भोजयितव्यः; इह तु त्रिसङ्ख्या 'क्रियते'—इत्यनेन सम्बध्यते, एवं सति क्रियायां त्रिसङ्ख्या विहिता भवति, तत्र स्वपदगतस्य किञ्चिद्विधायकेन विहितं भवति, इतरथा ऋचः सङ्ख्यायाश्च सम्बन्धस्य पदान्तरगतेन शब्देन भावनोच्येत, तथा, अर्थविप्रकर्षः स्यात्; तस्मात् सामनिर्वृत्तिं प्रति त्रिसङ्ख्या उच्यते।

आह, ननु त्रिसङ्ख्या ऋक्शब्देनैवात्र सम्बध्यते, अन्यथाऽसति सामर्थ्ये समास एव न स्यात्' इति। अत्रोच्यते, न ब्रूमो न सम्बध्यते-इति, सम्बध्यत एव, समासश्च भवति, स तु समासशब्दः सामनिर्वृत्तावुपयुज्यते इति, तत्र त्रिशब्दस्य ऋक्शब्दस्य चार्थौ निर्वृत्तावुपदिष्टौ भवति, साम निर्वर्त्तयितव्यम्,* एवं तास्तिस्र ऋचो भवन्ति, न न्यूना इति; इतरस्मिन् पक्षेऽभ्यासस्त्रिसङ्ख्यया सम्बध्येत, तत्र साम क्रियते इति लक्षणा स्यात्, अभ्यासनिर्वृत्तौ सामनिर्वृत्तिशब्दो भवेत्; तस्मात् व्यासज्य गानं कर्त्तव्यम्॥

सू. शब्दार्थत्वाद्विकारस्य॥ १५॥ (यु०१)॥

भा. इतश्च पश्यामः,-तृचे व्यासज्य साम गातव्यमिति।

* न साम ऋचि निर्वर्त्तयितव्यमिति का० सं० पु० पाठः।

कुतः ? । शब्दार्थोऽयं सामसंज्ञको विकारः, ऋच गुणभूत इत्यर्थः; स यदि व्यासज्य क्रियते, बह्वन्यक्षराणि अविकृतानि भवन्ति, तत्रायं चोदकोऽनुगृहीष्यते । तस्माद्यासज्य गातव्यम् ॥

सू. दर्शयति च ॥ १६ ॥ (यु०२) ॥

भा. 'ऋक्सामे वाव* मिथुनौसम्भवावेति सोऽब्रवीन्न वै त्वं ममालमसि जायार्थे वेदो मम महिमेति ते द्वे भूत्वोचतुः, सोऽब्रवीत् न युवां ममालं स्थो जायार्थे वेदो मम महिमेति तास्तिस्रो भूत्वोचुः मिथुनौसम्भवामेति, सोऽब्रवीत् सम्भवामेति', तस्मादेकं साम तृचे क्रियते स्तोत्रीयमिति, नैका स्तोत्रीया साम्नः सम्भवति, नापि द्वे तिस्रः सम्भवन्तीति व्यासज्य गानं दर्शयति ॥

सू. वाक्यानां तु विभक्तत्वात् प्रतिशब्दं समाप्तिः स्यात् संस्कारस्य तदर्थत्वात् ॥ १७ ॥ (सि०) ॥

भा. तुशब्दः पक्षं व्यावर्त्तयति । वाक्यानि विभक्तानि त्रीणि एतानि, याः तिस्र ऋचः, तत्रैकैका ऋक् कृत्स्नेन पदग्रामेण काञ्चित् स्तुतिमभिनिर्वर्त्तयति, न ऋगन्तरेण सह कञ्चिदर्थं संस्तौति, तत्र साम, ऋचः संस्तवमभिनिर्वर्त्तयन्त्या गुणभावं गच्छत् साहाय्यं करोति, तत्र यदि व्यासज्य गीयेत, न ऋचः स्तुतिमभिनिर्वर्त्तयन्त्याः साम उपकारकं स्यात्, न हि सामावयवः साम भवतीति, न च ऋक्समुदायेन कश्चिदर्थः स्तूयते,

---

* वाव इति क० सं० पु० पाठः ।

यत्र सामसम्बद्धा* स्तुतिं कुर्य्यात्, ऋक् स्तुतिं करोति, सा न सामसम्बद्धा, य ऋक्समुदायः सामसम्बद्धः स स्तुतिं न करोति, तत्र प्रत्यृचं साम्नि परिसमाप्ते क्रियमाणे सामवता शब्देन स्तुतिः क्कता भवति, सामसंस्कारस्य स्तुतिभावनार्थत्वात् प्रत्यृचं परिसमाप्तं गानं कर्त्तव्यमिति ॥

सू. तथा चान्यार्थदर्शनम् ॥ १८ ॥ (यु०१)

भा. अन्यार्थमपि वाक्यमेतमर्थं दर्शयति,–'अष्टाचरेण प्रथमायामृचि प्रस्तौति द्व्यचरेणोत्तरयोः' इति प्रस्तावे भेदं दर्शयति। तथाच, 'एका वा अस्योत्तमा स्तोत्रीया तामुद्गृह्णोद्गायेत्' इति उद्गीथभेदं दर्शयति, तस्मादपि प्रत्यृचं गानं कर्त्तव्यमिति ॥

अर्धर्चप्रगीतेष्वपि ऋच्येव गानं कर्त्तव्यम्, अपरिपूर्णं तद्वाक्यं अर्धर्चे भवति, ऋचि तु परिपूर्यत इति। पादप्रगीतेषु पाद एव गानं कर्त्तव्यमिति, पाद एव हि तत्परिपूर्णं वाक्यं, यथा, गोष्ठे वासिष्ठ इति, एवं यावति परिपूर्णं वाक्यं, तावति साम परिसमापयितव्यं; क्वचित्पादेऽपि पूर्णं वाक्यम्, ऋच्यपि, क्वचिदर्धर्चेऽपि परिपूर्णं, यत्र यथा परिपूर्णं, तत्र तथा गातव्यमिति ॥

सू. अनवानोपदेशश्च तद्वत् ॥ १९ ॥ (यु०२)

भा. 'अनवानोपदेशश्च तद्वत्' युक्तो भविष्यति, यथाऽस्माभिर्न्याय उपदिष्टः, 'अनवानं गायति' इति शक्यते अनवानं, प्रत्यृचं परिसमापयितुं, न तु तिसृषु व्यासज्य शक्यते।

---

* सम्बद्धामिति का० श्री० पु० पाठः।

अपि च स्वाध्यायकाले प्रत्यृचं गानं परिसमापितं, स्वाध्यायकाले चाभ्यासः,-प्रयोगकाले कथं प्राप्तता स्यादिति, तद्यदि प्रयोगकाले प्रत्यृचं गानं कर्त्तव्यं, ततः स्वाध्यायकाले तदभ्यासो युक्तः। तस्मादपि प्रत्यृचं गेयमिति ॥

सू. अभ्यासेनेतरा श्रुतिः ॥ २० ॥ (आ०नि०)

भा. अथ यदुक्तं,—'तस्मादेकं साम तृचे क्रियते' इति, तासु 'अभ्यासेनेतरा श्रुतिः' द्रष्टव्या, पर्यायेणेत्यर्थः; नह्यत्र ऋक् सामनिर्वृत्त्यर्थमुपादीयते, तस्मात् न शक्यमिदं वक्तुं,-सामनिर्वृत्तिसाधनीभूतामृचं त्रिशब्दः परिच्छेत्स्यति इति; साम स्तोत्रस्य गुणभूतं निर्दिश्यते,-'रथन्तरं पृष्ठं भवति बृहत् पृष्ठं भवति' इत्येवमादि, तत्र प्रत्यृचं न्यायेन गानं प्राप्तं, न सामनिर्वृत्त्या संख्या सम्बध्यते, किन्तर्हि ऋग्भिः, तत्रान्यथा नावकल्पते इति अभ्यासो लक्ष्यते, तिसृष्वभ्यसितव्यं सामेति, यथा,'त्रिषु कुलेषु देवदत्तो भोजयितव्यः' इति, यदा त्रिसंख्या कुलैः सम्बध्यते, तदाऽभ्यासो लक्ष्यते, एवमिहापि द्रष्टव्यम्। तस्मात् प्रत्यृचं परिसमाप्तं गानं कर्त्तव्यमिति ॥ (८।२।३अ०) ॥

---

समास्वेव तिसृषु ऋक्षु गानाधिकरणम्।

सू. तदभ्यासः समासु स्यात् ॥ २१ ॥ (सि०) ॥

भा. अस्ति ज्योतिष्टोमः,-'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति; तत्रैतत् समाम्नायते, 'तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इति। तत्र एतत् समधिगतं,—प्रत्यृचं परिसमाप्तं गेयमिति। इदमन्यत् सांशयिकं,-समासु विषमासु वा गेयम्,

उत समास्वेव? इति। किं तावन्नः प्रतिभाति?—नियामकस्य शास्त्रस्याभावादनियम इति।

एवं प्राप्ते ब्रूमः,—'समासु' एव गेयं न नानाच्छन्दस्कासु-इति। किमेवं भविष्यति?। गीतेः संशर-विलेशौ* न भविष्यतः, यदि न्यूनच्छन्दस्का ऋच उपाददीमहे, गीतिं संमृणीयाम; अथ अधिकच्छन्दस्काः, ततो गीतिं विलेशयाम उभयथा चार्षं बाधेमहि, समासु तु उपादीयमानासु न किञ्चिद्दुष्यति। तस्मात्समासु गानं कर्त्तव्यमिति। अपिच त्रिशब्दोपचारः समासु युक्तो भविष्यति, समाने हि कस्मिंश्चिदाश्रीयमाणे सङ्ख्याव्यवहारो भवति॥

सू. लिङ्गदर्शनाच्च॥ २२ ॥(यु०)॥

भा. लिङ्गं खल्वपि अस्मिन्नर्थे पश्यामः,-'यस्यां सत्यवधीयते सम्भवति इत्याहुः, यद्बृहत् गायत्रीषु क्रियते ऋक्त्वेनास्तरजति†' इति नचास्यां सम्भवति' इति विच्छन्दस्कासु दोषं ब्रुवन् समानच्छन्दस्कासु गानं दर्शयति॥ (८।२।४अ०)॥

---

उत्तरयोर्गायतीत्यत्र उत्तराग्रन्थसमधीतयोरेव ऋचोर्ग्रहणाधिकरणम्।

सू. नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥२३॥(सि०)॥

भा. ज्योतिष्टोमे समामनन्ति,-'रथन्तरमुत्तरयोर्गायति बृहदुत्तर-

---

* "शरः हिंसा, लेशः अल्पत्वम्, शृ हिंसायां लेश अल्पीभाव इत्येतद्धातुद्वयदर्शनात्" इति माधवः।

† ऋक्त्वेनाजरजति इति आ० सो० पु० एवं क० सं० पु० पाठः।

योर्गायति कवतीषु रथन्तरं गायति यद्योन्यां गायति तदुत्तर-योर्गायति' इति। तत्रैतत् समधिगतम्,-समासु गेयमिति, अथ इदानीमिदं सन्दिह्यते,—किं योन्युत्तरयोर्वा उत्तराग्रन्थसमधीत-योर्वा गेयम्, उत, उत्तराग्रन्थसमधीते एव उपादातव्ये? इति, किं प्राप्तम्?—नियमकारिणः शास्त्रस्याभावादनियमः इति। एवं प्राप्ते ब्रूमः,—नैमित्तिकं तु उत्तरात्वम् उत्तराग्रन्थसम-धितासु उपपद्यते इति। कुतः?। समाख्यानात् प्रकृतत्वाच्च उत्तराग्रन्थसमधीतानाम्।

आह, 'द्वाभ्यामपि समाख्याप्रकरणाभ्यां वाक्यं बलीयस्तस्मा-दनियम एव प्राप्नोति'। अत्रोच्यते, सर्व्वे हि सम्बन्धिशब्दा पदा-न्तरमनपेक्षमाणाः न कञ्चिदप्यर्थमाहुः, तस्मात् अपेक्षितं पदा-न्तरं, तत् प्रकृतं सन्निहितं वा, इतरथा अपरिपूर्णार्थं वाक्यमन-भिधायकमेव कस्यचिदर्थस्य स्यात्, संज्ञासंज्ञिग्रहणे न पुनः पदान्तरमपेक्षते, श्रुत्यैव परिपूर्णार्था गृह्यते। तस्मात् न सम्बन्धिशब्दोऽध्यवसानीयः, उत्तरासंज्ञैवोपादातव्येति, नहि संज्ञासु गृह्यमाणासु पदान्तरानन्तर्थ्यमपेक्षितव्यं भवति॥

सू॰ ऐकार्थ्याच्च तदभ्यासः॥ २४॥ (यु॰)॥

भा॰ तास्वेव चोत्तराग्रन्थसमधीतासु साम अभ्यसितव्यम्, एवम् एकार्थता तृचशब्दस्य भविष्यति, एकं कञ्चित् सामान्यविशेष-माश्रित्य तृचशब्दम् उपचरन्ति; एतदेवमुक्तम् यद्विशेषे कस्मिंश्चित् संख्या भवति, इतरथा हि सर्व्वत्र सर्व्वसंख्या भवेयुः, तथाहि संव्यवहाराभावः स्यात्। तस्मात् समानच्छन्दस्कासु

समानदेवताकासु च हृचशब्दोपचारात् उत्तराशब्यसमधीता एव गृहीतव्या इति ॥ ( ८।२।५ ) ॥

---

अतिजगत्यामभ्यसनामायां विशोकमानाधिकरणम् ॥ ( द्वितीयवर्णकम् ) ॥

भा० एवं वा,—

सू० तदभ्यासः समासु स्यात् ॥ २१ ॥ ( पू० ) ॥

भा० अस्ति द्वादशाहः,—'द्वादशाहेन प्रजाकामं याजयेत्'-इति। तत्र चतुर्थेऽहनि वैशोकं नाम साम अतिजगत्याम् उत्पन्नम्, अतिजगती,—"विश्वाः पृतना अभिभूतरं नरं सजूस्ततक्षुरिन्द्रं जजनुश्च राजसे। क्रत्वा वरिष्ठं वरामुरीमुतोग्रमोजिष्ठं तवसं तरस्विनम्"। उत्तरे द्वे बृहत्यौ, तयोः पूर्वा,—"नेमिं नमन्ति चक्षसा मेषं विप्रा अभिस्वरा। सुदीतयो वो अद्रुहोऽपि कर्णे तरस्विनः समृक्वभिः"। उत्तरा,—"समी रेभासो अस्वरन्निन्द्रं सोमस्य पीतये। स्वर्पतिं यदीं वृधे। धृतव्रतो ह्योजसा समूतिभिः" इति। तत्रैषोऽर्थः सांशयिकः, किमन्ये अतिजगत्यौ उपादाय समासु गेयम्, उत ये एव ते उत्तरे बृहत्यौ, एते एव उपादाय विषमास्वेव गातव्यम्? इति। किं प्राप्तं-? संशयविलेशो मा भूताम्' इत्यन्ये उत्पत्तिजगत्यावुपादाय एतत्साम समास्वेव अभ्यसितव्यमिति ॥

सू० लिङ्गदर्शनाच्च ॥ २२ ॥ ( यु० )

भा० लिङ्गं खल्वप्यस्मिन्नर्थे दर्शयति,-'अतिजगतीषु स्तवन्ति' इति।

किं लिङ्गम्? । अतिजगतीष्विति बहुवचनं । तस्माद्न्ये अतिजगत्यौ उपादातव्ये इति ॥

सू० नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेत ॥२३॥( सि० )॥

भा० 'नैमित्तिकं तूत्तरात्वमानन्तर्य्यात्' उत्तरापाठनिमित्तम् आनन्तर्य्ये सति 'प्रतीयेत', श्रुतिर्हि वाक्याद्बलीयसीति प्रकृतत्वादुत्तरे बृहत्यौ एवमनुग्रहीष्येते। तस्मान्नान्ये आदातव्ये इति ॥

सू० ऐकार्थ्याच्च तदभ्यासः ॥ २४ ॥ ( यु०२ ) ॥

भा० एवञ्च समानदेवताके नैशोके 'तृच' इति तृचशब्दोपचारो युक्तो भविष्यति, तस्मादपि नान्ये उपादातव्ये इति । 'अथाह, अथ यदुक्तम्-'अतिजगतीषु स्तुवन्ति' इति शब्दोपचारात् अतिजगतीबहुत्वं दर्शयति इति, तत्परिहर्त्तव्यम्' । उच्यते,- 'तदभ्यासः' एव द्रष्टव्यः (षोडश्यभ्यासः) 'एकविंशः षोडशी' इति एकविंशतिकृत्वः षोडशिनि अभ्यस्यमाने नैशोकाभ्यासः, तत्र सप्तकृत्वोऽतिजगत्यामभ्यस्यमानायाम् 'अतिजगतीषु स्तुवन्ति' इति वचनमुपपत्स्यते इति ॥(८।२।५अ०) ॥

---

बृहतीपङ्क्त्योरेव प्रग्रथनेन रथन्तरस्य गानाधिकरणम् ।

प्रागाथिकन्तु ॥ २५ ॥ ( सि० ) ॥

भा० ज्योतिष्टोमे श्रूयते,—'बृहत् पृष्ठं भवति रथन्तरं पृष्ठं भवति' इति । रथन्तरस्य योनिर्बृहती, "अभि त्वा शूर नोनुमो दुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः" ।

उत्तरा पंक्तिः,-"न त्वावान् अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते। अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे"। बृहती योनिर्बृहत्येव,-त्वामिद्धि हवामहे साता वाजस्य कारवः। त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वतः"। उत्तरा पंक्तिरेव,-"स त्वं नश्चित्र वज्रहस्त धृष्णुया महःस्तवानो अद्रिवः। गामश्वं रथ्यमिन्द्र संकिर सत्रा वाजन्न जिग्युषे" इति। तयोः वैच्छन्दस्कं गानम् आम्नायते,-'न वै बृहद्रथन्तरमेकच्छन्दो यद्वैतयोः पूर्वा बृहती ककुभावुत्तरे' इति।

तत्रायमर्थः सांशयिकः,—किमन्ये उत्पत्तिककुभावागमयितव्यम्, उत, याऽसौ पूर्वा बृहती, उत्तरा च पंक्तिः, तयोः प्रग्रथनेन तृचकर्म कृत्वा ककुबुत्तराकारं गानं कर्त्तव्यम्? इति। किं प्राप्तम्?-उत्पत्तिककुभावागमयितव्ये इति। कुतः?। एवमन्यासां ककुभामुत्पत्तिरर्थवती भविष्यति, यदि ताः ककुप्कार्य्ये प्रयुज्यन्ते।

आह-'ननु वाचस्तोमे तासामर्थवत्ता भविष्यति'। उच्यते, सत्यमर्थवत्ता तत्र भविष्यति, ककुप्कार्य्यार्थताऽपि तु गम्यते, सा नापक्रोतव्येति।

एवं प्राप्ते ब्रूमः,-'प्रागाथिकं तु', तुशब्दः पक्षं व्यावर्त्तयति,-प्रागाथिकं सामगानं कर्त्तव्यमिति यासौ पूर्वा बृहती, उत्तरा च पंक्तिः, तयोः प्रग्रथनं कर्त्तव्यम्। एवं हि स्मरन्ति,-'काकुभः प्रगाथः' इति। आह,-'ननु ककुभि अनाम्नायां काकुभ इति न प्राप्नोति' इति। उच्यते, 'तस्येदम्' इति 'तत्र भवः' इति वा न दोषः॥

## खे च ॥ २६ ॥ ( यु०१ ) ॥

भा० एवं च 'खे' छन्दसि गानं कृतं भवति, उत्तरापाठेन हि अत्रैषा पङ्क्तिरुपदर्शिता तृचकर्मणि, तत्र प्रकृतहानं अप्रकृतप्रक्रिया च न कृता भविष्यति। तस्मादपि तयोः प्रग्रथनं कर्त्तव्यमिति ॥

## प्रगाथे च ॥ २७ ॥ ( यु०२ ) ॥

भा० एवञ्चात्र प्रगाथशब्द उपपन्नो भवति, प्रकर्षं हि प्रशब्दो द्योतयति, प्रकर्षेण यत्र गानं, स प्रगाथः। कश्च प्रकर्षः ?। यत् किञ्चित्पुनर्गायति। तस्मादपि प्रकृतयोः प्रग्रथनं कर्त्तव्यमिति ॥

## लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥ ( यु०३ ) ॥

भा० अव्यतिरेकेण च सर्वत्र लिङ्गं दर्शयति। कथमिदमव्यतिरेकेण? इति। यत् प्रकृतयोरेव प्रग्रथनमुपपद्यते, न प्रकृतव्यतिरेकेणेति। किं लिङ्गं भवति ?। एवमाह,–'एषा वै प्रतिष्ठिता बृहती या पुनःपदा तद्यत्पादं पुनरारभते तस्मात् वत्सो मातरमभि हिङ्करोति' इति। पुनःपादारम्भः प्रग्रथने उपपद्यते, न अन्यथा। तस्माद्याऽसौ पूर्वा बृहती, उत्तरा च पङ्क्तिः, तयोः प्रग्रथनेन तृचकर्म कृत्वा ककुबुत्तराकारङ्गानं कर्त्तव्यमिति ॥ (८।२।६अ० ) ॥

---

बृहतीविस्तारपङ्क्त्योः प्रग्रथनेन रौरवयौधाजयसाम्नोर्गानाधिकरणम् ॥
( द्वितीयवर्णकम ) ॥

भा० एवं वा,

सू० **प्रागाथिकन्तु** ॥ २५ ॥ ( सि० ) ॥

भा० अस्ति ज्योतिष्टोमः,—'ज्योतिष्टोमेन स्वर्गकामो यजेत'

इति। तत्र त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः पञ्चसामा,-'गायत्रामहीयवे गायत्रे तृचे भवतो रौरवयौधाजये बार्हते तृचे श्रैग्रनसमन्त्यं त्रिष्टुप्' इति। यदेतत् रौरवं यौधाजयञ्च द्वे सामनी, तयोः पूर्वा बृहती, "पुनानः सोम धारयापो वसानो अर्षसि। आ रत्नधा योनिमृतस्य सीदस्युत्सो देव हिरण्ययः"। उत्तरा विष्टारपङ्क्तिः,—"दुहान ऊधर्दिव्यं मधु प्रियं प्रत्नं सधस्थमासदत्। आपृच्छ्यं धरुणं वाज्यर्षति नृभिर्धौतो विचक्षणः"। तदत्र संशयः,—किमन्ययोरुत्पत्ति-बृहत्योरागमं कृत्वा समासु गानं कर्त्तव्यम्, उत, याऽसौ पूर्वा बृहती, उत्तरा च विष्टार-पङ्क्तिः, तयोः प्रग्रथनेन तृचकर्म कृत्वा बृहतीकारं गानं कर्त्तव्यम्? इति।

किं प्राप्तम्?—अन्ये बृहत्यावागमयितव्ये इति। कुतः?। एवमृचामुत्पत्तिरर्थवती भविष्यति इति।

एवं प्राप्ते, ब्रूमः,—'प्रागाथिकन्तु', तुशब्दः पक्षं व्यावर्त्त-यति। प्रागाथिकं सामगानं कर्त्तव्यं, नोत्पत्तिबृहत्यावामयितव्ये, प्रकृतयोरेव प्रग्रथनं कर्त्तव्यम्,— एवं हि स्मरन्ति,—'बार्हतः प्रगाथः' इति; उत्पत्तिबृहत्योरानीयमानयोः प्रगाथो न स्यात्, तत्र स्मृतिर्बाध्येत! तस्मात् प्रकृतयोः प्रग्रथनं कर्त्तव्यमिति॥

सू० स्वे च॥ २६॥ (यु० १)॥

भा० एवञ्च 'स्वे' च्छन्दसि प्रकृते गानं भविष्यति, न प्रकृत-हानमप्रकृतप्रक्रिया च; तस्मादपि नान्ये बृहत्यो आगमयितव्ये इति॥

सू० प्रगाथे च ॥ २७ ॥ (यु०२) ॥

भा० एवञ्च प्रगाथशब्द उपपन्नो भविष्यति, स हि प्रकर्षे गानस्य भवति, प्रकर्षश्चेह पुनःपादे उपादीयमाने भवति। तस्मादपि नाम्ये बृहत्यौ उपादातव्ये इति ॥

सू० लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥ (यु०) ॥

भा० अव्यतिरेकेण च लिङ्गं दर्शयति। किं लिङ्गं भवति?। एवमाह,—'षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनम्' इति। कथं कृत्वा लिङ्गम्?। यदि प्रग्रथनेन बृहतीकारङ्गानं क्रियते, ततः सर्वस्मिन् सवने या ऋचः समाम्नाताः, ताः षष्टिर्भवन्ति, इतरथा उत्पत्तिबृहत्योरानीयमानयोरभ्यधिका भवेयुः। 'तदिदं निर्दिश्यते,-'गायत्रामहीयवे गायत्रे द्वचे भवतः', ताः षड्गायत्र्यः; 'रौरव-यौधाजये बार्हते', ता अपि षड्बृहत्यः; 'औशनसमन्त्यं त्रिष्टुप्सु', ता अपि तिस्रस्त्रिष्टुभः। अथ होतुः पृष्ठे बृहति रथन्तरे वा सप्तदशस्तोमे क्रियमाणे पञ्च बृहत्यो भवन्ति, द्वादश च ककुभः।

कथम्?। एषा हि तत्र तत्र विष्टुतिः,—'पञ्चभ्यो हिङ्करोति, स तिसृभिः, स एकया, स एकया; पञ्चभ्यो हिङ्करोति, स एकया, स तिसृभिः, स एकया; सप्तभ्यो हिङ्करोति, स एकया, स तिसृभिः, स तिसृभिः' इति। तत्र बृहतीभिस्तिसृभिः प्रथममेकया च ककुभा, पुनश्चैकया ककुभा; ततः पुनरेकया बृहत्या तिसृभिः ककुब्भिः एकया च ककुभा; एवं चतस्रो बृहत्यः षट् ककुभः। ततः पुनः एकया बृहत्या, पुनश्च तिसृभिः

ककुब्भिः पुनश्च तिसृभिः ककुब्भिरिति, एवं पञ्च बृहत्यो द्वादश ककुभ इति। ताभिश्च बृहतीभिः सहैकादश बृहत्यो भवन्ति। ततः षस्यां गायत्रीणां चतस्रो गायत्र्यो द्वादशभिः ककुब्भिर्द्वादश बृहत्यो भवन्ति एवं त्रयोविंशतिर्बृहत्यः। ततो वामदेव्ये सप्तदशका गायत्र्यः, पावमानीभ्यां द्वाभ्यां गायत्रीभ्यामवशिष्टाभ्यां सहैकोनविंशतिर्गायत्र्यो भवन्ति। ततो नौधसकालेययोरेकत्र सप्तदश बृहत्यः, एकत्र सप्तपञ्चाशता गायत्रीपादैः सह सप्तपञ्चाशद्बृहत्यः सप्तपञ्चाशत् त्रिष्टुभो भवन्ति; पावमानीभिस्त्रिष्टुब्भिः सह षष्टिस्त्रिष्टुभ इति सिद्धं भवति।

अथ बृहद्रथन्तरयोरुत्पत्तिककुभोरागमः क्रियते, तत्र याः सवने समाम्नाताः, ताः षष्टिर्भवन्ति, ये ते द्वे सवने ककुभौ असमाम्नाते आनीयेते, तयोर्द्वादशकृत्वः प्रयोगस्तेन सा षष्टिः पूर्य्यते, यास्ता ऋचः सवने समाम्नातास्ता इह सवनशब्देन उच्यन्ते, न कर्म्मणि सवनशब्दप्रयोगः, तत्र हि त्रिषु सवनेषु बह्वः त्रिष्टुभो भवेयुः, न षष्टिस्त्रिष्टुभो माध्यन्दिनं सवनमिति। तस्माद्याऽसौ पूर्वा बृहती उत्तरा च विष्टारपङ्क्तिस्तत्र प्रगाथं कृत्वा गातव्यमिति॥ (८।२।६ अ०)॥

---

अनुष्टुप्गायत्र्योः प्रग्रथनेन आवापआर्भवीयगयोर्गानाधिकरणम्॥

(तृतीयवर्णकम्॥)

भा० एवं वा,—

सू० प्रागाथिकन्तु॥ २५॥ (सि०)॥

भा० पञ्चच्छन्दाः आवाप आर्भवः पवमानः सप्तसामा,—'गायत्र-

संहिते गायत्रे तृचे भवतः, श्यावाश्वान्धीगवे आनुष्टुभे, उष्णिहि सफं, ककुभि 'पौष्कलं, कावमन्यत्त्वगतीषु' इति। यदेतत् श्यावाश्वम् आन्धीगवञ्च द्वे सामनी, तयोः पूर्वा अनुष्टुप्,- "पुरोजितो वो अन्धसः सुताय मादयित्नवे। अप श्वानं श्नथिष्टन सखायो दीर्घजिह्वम्"। उत्तरे द्वे गायत्र्यौ,—"यो धारया पावकया परिप्रस्यन्दते सुतः। इन्दुरश्वो न कृत्व्यः। तं दुरोषमभी नरः सोमं विश्वस्या धिया। यज्ञं हिन्वन्ति अद्रिभिः"* इति। तत्रैषोऽर्थः सांशयिकः,—किमन्ययोरुत्पन्नयनुष्टुभोरागमं कृत्वा समासु गानं कर्त्तव्यम्, अथ वा, याऽसौ पूर्व्वाऽनुष्टुप्, उत्तरे च गायत्र्यौ, तयोः प्रथमेन तृचकर्म्म कृत्वा अनुष्टुप्कारं गानं कर्त्तव्यम्? इति।

किं प्राप्तम्?—अन्ये अनुष्टुभावागमयितव्ये इति। कुत एतत्?। एवं तासामुत्पत्तिरर्थवती भविष्यति। एवं प्राप्ते ब्रूमः,-'प्रागाथिकं तु',—प्रागाथिकं गानं कर्त्तव्यम्, एवं हि स्मरन्ति,—'आनुष्टुभः प्रगाथः' इति, प्रगाथता स्मर्य्यमाणा नापह्नोतव्या॥

सू॰ स्वे च॥ २६॥ (यु॰१)॥

भा॰ एवं 'स्वे' गानं भविष्यति; तत्र प्रकृतमनुग्रहीष्यते, नाप्रकृतप्रक्रिया भविष्यति॥

---

* 'यज्ञाय सं त्व' इति आ॰ सो॰ पु॰ एवं का॰ सं॰ पु॰ पाठः।
'यज्ञं हिन्वन्ति अद्रिभिः' इति ऋग्वेदसंहितायां पाठः।
See Dr. A. Weber's Edition. P. 267.

सू॰ प्रगाथे च ॥ २७ ॥ (यु॰२) ॥

प्रगाथशब्दश्चोपपत्स्यते पुनःपादे गीयमाने ॥

सू॰ लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥ (यु॰३) ॥

भा॰ अव्यतिरेकेण च लिङ्गं भवति, एवमाह,—'चतुर्विंशति-र्जगत्यस्तृतीयसवनं, एका ककुभ्' इति। तन्निर्दिश्यते,—पञ्चच्छन्दा आवाप आर्भवः पवमानः सप्तसामा,—'गायत्रसंहिते गायत्रे तृचे भवतः,' ताः षट् गायत्र्यस्तिस्रो जगत्यो भवन्ति। 'श्यावाश्वान्धीगवे आनुष्टुभे,' तयो पूर्वा अनुष्टुप्, उत्तरे गायत्र्यौ, तत्र प्रग्रथनेन क्रियमाणे द्वयोः साम्नोः षड़नुष्टुभः, तावतस्रो जगत्यः, पूर्वाभिः सह सप्त। 'उष्णिहि सफं, ककुभि पौष्कलं' एकमपि एकस्यामृचि, अपरमप्येकस्यां, ते द्वे उष्णिक्ककुभौ, सैका जगती, गायत्रीपादश्च पूर्वाभिः सहाष्टौ जगत्यः; कावे तिस्रो जगत्यः, ताभिः सहैकादश भवन्ति। एकविंशं यज्ञा-यज्ञीयं, तत्र पूर्वा बृहती, उत्तरा विष्टारपंक्तिस्ततः ककुभावुत्तरे कृत्वा प्रगाथः क्रियते। एकविंशे च स्तोमे क्रियमाणे सप्त बृहत्यो भवन्ति, चतुर्दश ककुभः, याः सप्त बृहत्यः, ता पञ्च जगत्यः, पूर्वाभिः सह षोड़श, एकश्चात्र जगतीपादः, पूर्वेण गायत्रीपादेन सह विंशतिरक्षराणि। अथ चतुर्दशसु ककुप्सु या द्वादश ककुभः, ताः सप्त जगत्यः पूर्वाभिः सह त्रयोविंशतिः, ये द्वे ककुभौ शिष्टे, सैका जगती गायत्रीपादश्च, पूर्वाभिः सह चतुर्विंशतिर्जगत्यः, गायत्रीपादः पूर्वैर्विंशत्यक्षरैः सह ककुब्भवति। एवं प्रगाथे क्रियमाणे चतुर्विंशतिः जगत्यः,

एका च ककुप्। अत्र प्रगाथो न क्रियते, ततः श्यावाश्वा-न्धीगवयोरुत्तरयोरानुष्टुभोरागमास्याम्नायमौये चौत्पत्तिकक्कुभोरा-गमाम्नेषा संस्था सम्पद्यते। तस्मात् प्रग्रथनेन गानं कर्तव्य-मिति॥ (८।२।६अ०)।

---

पादप्रग्रथनेन ब्रह्मसामगानाधिकरणम्॥
(चतुर्थवर्णकम्॥)

एवं वा—

भा० गवामयने ब्रह्मसाम प्रकृत्य समामनन्ति,—'चतुःशतमैन्द्रा बार्हताः प्रगाथास्त्रयस्त्रिंशतं च सतोबार्हतास्त्रिकाः' इति। तत्र सन्देहः,—किं द्वयोर्द्वयोः ऋचोः प्रगाथं कृत्वा गातव्यम्, उत, तिसृषु ऋक्षु गातव्यम्? इति। किं प्राप्तम्?,—तिसृषु ऋक्षु इति। कुतः?। एवं प्रकृतौ श्रूयते,—'तस्मादेकं साम तृचे क्रियते' इति। तदिह चोदकेन प्राप्तं, तस्मात्तिसृषु गातव्यमिति। एवं प्राप्ते ब्रूमः,—

सू० प्रागाथिकन्तु॥ २५। स्वे च॥ २६॥ प्रगाथे च॥ २७॥ (सि०)॥

भा० द्वयोर्द्वयोः ऋचोर्गेयम्, एवं 'स्वे' गानं कृतं भविष्यति। कस्मिन् स्वे?। 'प्रगाथे'। कथं प्रगाथः स्वः?। विहितो हि गवामयने ब्रह्मसाम प्रकृत्य, तस्मात् ब्रह्मसाम्नः स्वः प्रगाथः, प्रगाथशब्देन च वचनात् स्वः प्रगाथ इत्युच्यते॥

सू० लिङ्गदर्शनाव्यतिरेकाच्च॥ २८॥ (यु०)॥

भा० भवति हि लिङ्गदर्शनं,—'पञ्चसमाः सुबार्हताः प्रगाथा

आप्यन्ते' इति; तच्च प्रग्रथने युज्यते, न तृचगाने। कथम्?। चतुरुत्तरं हि शतन्ते प्रगाथाः, तत्र बृहद्रथन्तरयोर्ज्योतिष्टोमे प्रगाथद्वयं, नौधसकालेययोरपि तत्रैव प्रगाथद्वयं, इन्द्रक्रतुः प्रगाथ उत्तरस्मिन् यचसि भवति, त एते नवनवतिः प्रगाथाः शिष्टाः अभिप्लवेषु कर्त्तव्याः। पृष्ठेषु सतोबृहत्यो विधीयन्ते, अभिप्लवानां तृतीये दिवसे सतोबृहत्यः, एवमवशिष्टानि अभिप्लवानां शतमहानि, तेषामन्त्ये सतोबृहत्यः, अन्येषु नवनवती दिवसेषु नवनवतिः प्रगाथाः; 'आप्यन्ते' इति लिङ्गमप्युपपन्नं भवति। तृचे पुनर्गाने क्रियमाणे षट्षष्टिस्तृचाः त्रिषु समाधिकेषु मासेषु समाप्येरन्! तदेतस्माल्लिङ्गदर्शनात् प्रगाथे गानं कर्त्तव्यमिति मन्यते।

आह,—'अथ कस्मान्न प्रथमतृचे गानं कृत्वा ततस्तस्मात् तृचादेकामृचमादायान्ये द्वे ऋचौ गृहीत्वा तृचे गानं क्रियते? तथा हि तृचगानप्राप्तौ चोदकोऽनुगृहीतो भवति, लिङ्गञ्चोपपत्स्यते,—'पञ्चसुमाः सुबार्हताः प्रगाथा आप्यन्ते' इति'। उच्यते,—अव्यतिरेकेण लिङ्गं दर्शयति,—अन्या ऋचो भवन्ति, तदेव सामेति। तस्मात् द्वयोर्द्वयोः ऋचोः प्रगाथं कृत्वा गानं कर्त्तव्यमिति॥ (८।२।६अ०)॥

---

गीतिसम्पादकानामक्षरविकारादीनां विकल्पाधिकरणम्॥

सू० अर्थैकत्वात् विकल्पः स्यात्॥ २९॥

भा० सामवेदे सहस्रं गीत्युपायाः। आह, 'के इमे गीत्युपायाः नाम?'। उच्यते,—गीतिर्नाम क्रिया, सा आभ्यन्तरप्रयत्न-

जनितस्वरविशेषाणामभिव्यञ्जिका, सा सामशब्दाभिलप्या, सा नियतपरिमाणे ऋचि च गीयते, तत्सम्पादनार्थः ऋचु अक्षर-विकारो विश्लेषो विकर्षणमभ्यासो विरामः स्तोभ इत्येवमादयः सर्वे समधिगताः समाम्नायन्ते। तेषु संशयः,—किं समुच्चीयन्ते उत विकल्प्यन्ते?—इति। किं तावन्नः प्रतिभाति, सर्वेषां समाम्नानात् सर्वाङ्गोपसंहारित्वाच्च प्रयोगवचनस्य, समुच्चीयेरन्निति। एवं प्राप्ते ब्रूमः, "अर्थैकत्वाद्विकल्पः स्यात्" इति। एकार्था हि गीत्युपायाः,—गीतिः कथं निर्वर्त्तेतेति प्रयुज्यन्ते, तत्रान्यतरेण भिन्तौ* गीतौ निर्वृत्तायां नेतरे प्रयोगमर्हन्ति। तस्माद्विकल्प इति॥ (८।२।७अ०)॥

---

"ऋचा स्तुवते साम्ना स्तुवते" इति विधिषु साम्नैव स्तवविधानाधिकरणम्॥

सू० अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात्॥ ३०॥ (पू०)॥

भा० क्वचित्कर्मविशेषे श्रूयते,—'ऋचा स्तुवते साम्ना स्तुवते यदृचा स्तुवते तदसुरा अन्ववायन् यत् साम्ना स्तुवते तदसुरा नान्ववायन् य एवं विद्वान् साम्ना स्तुवीत' इति। तत्रायमर्थः सांशयिकः,-किमृचा वा स्तोतव्यं साम्ना वा, उत, साम्नैव? इति। किन्तावत्प्राप्तं?—विकल्पः,—ऋचा वा साम्ना वा; भिन्नमिदं वाक्यं दृश्यते,—'यदृचा स्तुवते तदसुरा अन्ववायन्' इति, ऋचा स्तवे क्रियमाणेऽसुरा अन्ववगता इति, परिपूर्णमेतावति वाक्यं पश्यामः, एवमर्थमिदं सङ्कीर्त्यते,—कथं नाम गम्यते ऋचा स्तोतव्यमिति। किमर्थम्?। यस्मिन् कर्म-

---

* अभिव्यक्तौ रतिषा० स० पु० पाठः।

विशेषे श्रूयते, तस्याङ्गं यथा स्यात्, तच्च प्रयोगसामर्थ्यात् प्रयोगवचनेन गम्यते इति।

'ननु असुरसङ्कीर्त्तनान्निन्देषा'। नेत्याह,—न वयं निन्दितान् अनिन्दितान्वा असुरान् विद्मः; सङ्कीर्त्तनात् कर्त्तव्यतामध्यवस्यामः। एवं 'साम्ना स्तुवते' इति पृथग्वाक्यं, तस्मादिकल्पः। ऋक्सामयोः स्तुत्यर्थत्वादुभयोरप्येकं कार्यं, स्तुतिर्हि निर्वर्त्तयितव्येति, तदन्यतरेण सिध्यतीति विकल्पः॥

सू० वचनाद्विनियोगः स्यात् ॥ ३१ ॥ (सि०)॥

भा० नैतदस्ति,—विकल्प इति; साम्नो विनियोगः स्यात्। कुतः?। नस्येह विनियोजकं वचनमस्ति,—'यदृचा स्तुवते तदसुरा अन्ववायन् य एवं विद्वान् साम्ना स्तुवीत' इति साम्ना स्तुतिः प्रशस्यते प्रत्यक्षेण प्रशंसावचनेन, इतरथा कल्प्या स्यात्, ऋचा स्तवने असुरा अनुगताः; तस्मात् ऋचा स्तोतव्यमिति। अथ साम्ना स्तवः प्रशस्यते, ततो 'यदृचा स्तुवते तदसुरा अन्ववायन्' इतीतरप्रशंसार्था निन्देषा न किञ्चित् विकल्पयिष्यते इति। कथं निन्दावचनमेतदिति गम्यते?। इतरस्तुतिवचनात्। तस्मात् साम्नैव स्तोतव्यमिति॥ (८।२।८।अ०)॥

---

अयं सहस्रमानव इत्यृचा प्रणीतवैश्वानरस्योपस्थानाधिकरणम् ॥
(द्वितीयवर्णकम् ॥)

सू० अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥ (३०)॥ (पू०)॥

भा० कश्चित् कर्म्मविशेषे श्रूयते,—'अयं सहस्रमानवः इत्येतया

आहवनीयमुपतिष्ठते' इति। अत्रायमर्थः सांशयिकः, किमप्रगीतया उपस्थातव्यम्, उत, प्रगीतया? इति। किं प्राप्तम्?। प्रगीतया अप्रगीतया वा। कुतः?। अविशेषोपदेशात्,—प्रगीताऽप्यसौ इयमेव ऋक्, अप्रगीताऽपीयमेव, उभयथा हि तां समामनन्ति, तस्मान्न विशेषः आदर्त्तव्य इति; न चेद्विशेषः, स्तुतिपरत्वात् ऋक्सामयोर्विकल्प इति। एवं प्राप्ते ब्रूमः,—

सू॰ वचनाद्विनियोगः स्यात्॥ ३१॥ (सि॰)॥

भा॰ प्रगीतैव विनियुज्येत, नाप्रगीता। कुतः?। 'वचनात्'। किं वचनम्?। 'अयं सहस्रमानवः इत्येतया' इतिप्रकृतवचनशब्दः; प्रगीता च सामवेदे प्रकृता, सा, 'एतया' इति सम्बध्यते। 'ननु अप्रगीताऽपि तत्र पठ्यते'। सत्यं, प्रगाणसम्बन्धार्था तु सा; न ह्यपठितायां प्रगाणं शक्यते कर्त्तुमिति ऋक् सामार्थ,—ऋचोऽध्ययनं सामार्थं गम्यते, नह्यन्तरेण ऋचं, सामनिर्वृत्तिर्भवति, अन्तरेणापि तु साम, ऋक् निर्वर्त्त्यते; न ऋक् साम आकांक्षते इति। तस्मादेवं सामवेदे, 'उपतिष्ठते:' वा, 'स्तौति' वेत्युक्ते प्रगीतायामेव ऋचि संप्रत्ययो भवति, नाप्रगीतायाम्।

आह,—'यदि प्रगीतायां संप्रत्ययः प्रकरणात्, वचनादप्रगीतायाम्, अप्रगीताऽपि हि शाखान्तरे समाम्नायते, सा प्रकरणं बाधित्वा वाक्येन गृह्येत' इति। उच्यते,—न वाक्येन ऋक् गृह्यते, प्रतीकग्रहणं ह्येतत्, 'अयं सहस्रमानवः इत्येतया' इति पुनः प्रकृताया ऋचो वाचको मुख्य ऋक्शब्दः, त्वत्पक्षे प्रतीकग्रहस्य लक्षणा स्यात्! श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा; तस्मात्प्रगीतया उपस्थातव्यमिति॥ (८।२।८अ॰)॥

अग्निमूर्द्धेत्यादि याज्यानुवाक्यादीनां तानेन प्रयोगाधिकरणम् ॥

(तृतीयवर्णकम् ॥)

सू॰ अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥ ३० ॥ (पू॰) ॥

भा॰ इह केचित् त्रैस्वर्य्येणाम्नायते, केचिच्चातुःस्वर्य्येण । आह,—'ये इमे चातुःस्वर्य्येणाधीयन्ते, किं ते, उदात्तानुदात्तस्वरितेभ्योऽधिकं अपरं स्वरं कुर्वन्ति ?' । नेत्याह, तेषामप्येते एव स्वराः, येऽन्येषां । किं नु* कुर्वन्ति ? । एकं स्वरान्तरमुत्क्रम्याधीयन्ते । तत्र सन्देहः,—किं समुच्चयः, त्रैस्वर्य्यादीनाम्, उत विकल्पः ? इति । किम्प्राप्तम् ? ।,—सर्वाङ्गोपसंहारित्वात् प्रयोगवचनस्य, समुच्चयः इति । एवम्प्राप्ते ब्रूमः,—'अर्थैकत्वाद्विकल्पः स्यात्,'—एकोऽर्थः सर्वेषां त्रैस्वर्य्यादीनामध्ययननिर्वृत्तिः; तस्माद्विकल्पः ।

सू॰ वचनाद्विनियोगः स्यात् ॥ ३१ ॥ (सि॰) ॥

वचनमिदं भवति स्मृत्यनुमितं,—'तानो यज्ञकर्म्मणि' इति, तस्मात्तानेन प्रयोगः कर्त्तव्यः† । 'अथ त्रैस्वर्य्यादीनां किमर्थं समाम्नानम् ? इति' । उच्यते,—अर्थावबोधनार्थं भविष्यति ॥ (६।२।८अ॰) ॥

* किन्तु इति आदर्शपुस्तकपाठः ।

† "यज्ञकर्मण्यजपन्युङ्खसामसु" (१।२।३२) इति पाणिनिव्याकरणरूपस्मृत्यनुमितमित्यर्थः । "यज्ञक्रियायां मन्त्र एकश्रुतिः स्यात् जपादीन् वर्ज्जयित्वा" इति कौमुदीप्रदर्शितः सूत्रार्थः । "अग्निं मूर्द्धानम्" इत्यादिमन्त्रा जपाः, न्युङ्खाः प्रणवाः, सामानि रथन्तरादीनि । तान इति एकश्रुतेपूर्वाचार्य्यसंज्ञा । उदात्तानुदात्तस्वरितेभ्यो व्यतिरिक्तचतुर्थस्वर एकश्रुतिः, तान्च अध्यापका प्रचय इत्याचक्षते । इति माधवः ।

रथन्तरमुत्तरयोर्गायतीत्यादौ उत्तरावर्णवशेन सामाधिकरणम् ।

सू० सामप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात् ॥ ॥ ३२ ॥ (पू०) ॥

भा० इदमाम्नायते,—'रथन्तरमुत्तरयोर्गायति, यद्योन्यां तदुत्तरयोर्गायति. कवतीषु रथन्तरं गायति, विराट्सु वामदेव्यं' इति । तत्र सन्देहः,—किमुत्तरावर्णवशेन गातव्यं, किं योनिवर्णवशेन? । कथमुत्तरावर्णवशेन गीतं भवति? कथं वा योनिवर्णवशेन? इति । उच्यते, किञ्चिदुदाहरणं गृहीत्वा आख्यास्यामः,—यदा तावत् 'इडन्तालव्यमाई भवति' इति योनौ यस्मिन् भागे आईभावः कृतस्तस्मिन्नेव भागे उत्तरासु आईभावः क्रियते, ततो योनिवर्णवशेन गीतं भवति, अथ भागान्तरे इडन्तालव्यं दृष्ट्वा आईभावः क्रियते, तत उत्तरावर्णवशेन गीतं भवति ।

किं पुनरत्र कर्त्तव्यम्?—योनिवर्णवशेनेति । कथम्? । यावति भागे एकारस्य योनौ आईभावः कृतस्तं विचारयामः,—किं तत्र कृतमिति?—एकारो नोच्चारितः, ईकाराकारौ आगमिताविति, एवञ्चेदुत्तरास्वपि तावत्येव भागे यो वर्णः, स न उच्चारयितव्यः, ईकाराकारौ आगमयितव्यौ इति । एवं, यद्योन्यां तदुत्तरयोर्गीतं भवति । तस्माद्योनिवर्णवशेन गातव्यमिति । अपिचैवं गीतिर्न प्रणंक्ष्यति, इतरथा क्वचित् प्रणश्येत्, यत्र महती गीतिः अल्पेषु अक्षरेषु गीयते, तत्र व्यक्तं प्रणश्यति यद्युत्तराक्षरवशेन क्रियते; तस्माद्योन्यक्षरवशेन कर्त्तव्यम् ।

अपिच क्वचित् क्रम उपलभ्यते यथाक्रमे आईभावभागवर्णः, आर्षश्च क्वचिदुपलभ्यते; यत्र प्राकृत आगमो नैव क्रियते, तत्र स्वाध्यायकाले गानेन च कर्मकालं गानमविरुद्धं कर्त्तव्यं; तस्मात् योन्यक्षरवशेन कर्त्तव्यमिति 'सामप्रदेशे विकारः' (आई-भावादिः), 'तदपेक्षः' (योन्यपेक्षः); एतत् शास्त्रेण कृतं,—'यद्योन्यां तदुत्तरयोः' इति, यावति सामभागे योनौ आई-भावः कृतः, तावत्येवोत्तरासु कर्त्तव्यः ॥

सू० वर्णे तु वादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात् ॥ ३३ ॥

॥ (सि०) ॥

भा० उत्तरावर्णवशेन कर्त्तव्यं वादरिर्मन्यतेस्म, न योनिभाग-वशेन । कुतः? । योऽसौ प्रकृतौ आईभावः कृतः, नासौ आगमः, न च तत्र एकारलोपः, किन्तर्हि एकारो नाम अवर्णम् इवर्णश्च*, अवर्णं संवृतम्, इवर्णं विवृतम्, उभे अपि च दीर्घे, ताभ्यामसाधुभ्यां सन्ध्यक्षरं साधु जन्यते । तत्र प्रकृतौ अकारेकारौ विश्लेषितौ, नापूर्वावागमितौ, गुणस्तु तयोः कश्चिदपूर्वः कृतः । सर्वत्रात्र प्रमाणं प्रत्यक्षं, तथाच, तावति भागेऽन्यो वर्णो† भवति, न सन्ध्यक्षरं, तत्र संश्लेषाभावे विश्लेषो न शक्यः कर्त्तुम्; अन्यस्मिन् भागे यत्र सन्ध्यक्षरं भवति, तत्र तद्वशाद्विश्लेषः क्रियते; एवं, यद्योन्यास्तदुत्तरयोः कृतं भवति, योन्यां हि संश्लिष्टयोर्विश्लेषः कृतः, इहापि संश्लिष्टयोर्विश्लेषः, इतरथा व्यतिरिक्तं कल्पितं स्यात् ।

---

* अत्र इंवर्णश्च इति क्वचित् पाठः साधुरिव प्रतिभाति । एवं परत्र ।

† अत्र अन्यत् वर्णम् इति पाठो भवितुं युक्तः ।

अथ यदुक्तं,-गीतिः प्रलभ्यतीति; न प्रणंक्ष्यतीति, विनाशं कृत्वा अनन्तरं गायिष्यते। संश्लेषाभावाच्छ्यक्यो विश्लेषः कर्तुं; आर्षक्रमो नोपरोत्स्यते॥ (८।२।८। अ०)॥

---

उत्तरयोः स्तोभातिदेशाधिकारणम्॥

## स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत्॥ ३४॥ (पू०)॥

'कवतीषु रथन्तरं गायति, रथन्तरमुत्तरयोर्गायति यद्योन्यां तदुत्तरयोर्गायति' इति। तत्रोत्तरावर्णवशेन गातव्यमित्येतत्समधिगतम्। अथेदानीम् इह संदिह्यते,-किं स्तोभाः* प्रदिश्यन्ते, न? इति। किं प्राप्तम्?,-न प्रदिश्यन्ते इति। कुतः। गीतिर्हि साम, न स्तोभाः; या गीतिः, सा प्रदिश्यते, 'यद्योन्यां तदुत्तरयोर्गायति' इति गायतिशब्दसम्बन्धात्। अपि च दिक्शब्दार्थैरसंबध्यमानः स्तोभोऽनर्थकः स्यात्, तस्मादपि न प्रदिश्येत। अपिच क्वचिद्भवति वचनम्,-'ऐन्द्राग्नमवभृथसाम गायति' इति, तत्रानुपपत्तिर्भवेत्, श्रौतकर्मा ह्यैन्द्रो वाक्यशेषेभ्योऽवगम्यते। तस्य 'तपति' इत्यनेन सम्बन्धो न स्यात्। तस्मात् स्तोभस्य ऋगन्तरे निवृत्तिः, यथा ऋगक्षराणामगीतित्वात् निवृत्तिरेवं स्तोभाक्षराणामपीति॥

## सर्व्वातिदेशस्तु सामान्याल्लोकवद्विकारः स्यात्॥३५॥(सि०)॥

नैतदस्ति,-स्तोभानां निवृत्तिरिति, 'सर्वातिदेशो' हि भवति,

---

* "औंकारद्वयेन होशब्देन हायीशब्देन च निष्पन्नः स्तोभः रथन्तरस्थः, औं औं हो हायीति" इति माधवः।

ऋक्-स्तोभ-स्वर-कालाभ्यासविशिष्टाया: गीते: सामशब्दो वाचक:। कथमवगम्यते ?। तत्र प्रयोगात्, यदि स्तोभा निवर्त्तेरन्, ततस्तो विशेषो नोपसंगृहीत: स्यात् तत्र शब्दो बाध्येत ! तस्मात् स्तोभा: प्रदिश्येरन्। यत्तूक्तम्,-ऋक्शब्दार्थै: असम्बध्यमाना: स्तोभा अनर्थका भवेयु:; अत्र ब्रूम:,-'लोकवत्' न अनर्थका भविष्यन्ति। तद्यथा, लोके गायनैरङ्गवस्तुकानि यानि नाम प्रक्षिप्यन्ते, तानि गीतिकालगणनार्थानि, नार्थसम्बन्धाय उच्चार्यन्ते. सुखं ह्यक्षरै: गीतिकाल: परिच्छिद्यते; तद्वदिहापि कालपरिच्छेदार्थानि स्तोभाक्षराणि अनुवर्त्तेरन्निति॥

## अन्वयश्चापि दर्शयति॥३६॥(यु०)॥

अन्वयतश्चापि स्तोभान् दर्शयति, यत्रार्चिकानि पदानि निवर्त्तन्ते, 'स्तोभा गेष्णाश्चानुयन्ति' इति, 'स्तोभा:' स्तोभा एव, 'गेष्णा:' स्वरा:। तस्मादपि स्तोभा: प्रदिश्यन्ते॥

## निवृत्तिर्वाऽर्थलोपात्॥३७॥(आ०)॥

वाशब्दात्पक्षो विनिवर्त्तते। 'निवृत्ति:' 'अभिष्टपति' इत्येवञ्जातीयकानां स्तोभानां; श्रौतकर्मा ह्यैन्द्रो वाक्यशेषे उपलभ्यते, न तेनैवंजातीयका: स्तोभा: सम्बध्येरन्निति॥ अन्वयात्सम्बध्यन्ते लोकवदिति यदुक्तं, तत्परिहर्त्तव्यम्॥

## अन्वयो वार्थवाद: स्यात्॥३८॥(आ०नि०)॥

अन्वीयुर्वा एवञ्जातीयका स्तोभा:, नहि वयमिन्द्ररूपं प्रत्यक्षमुपलभामहे; यत्र वाक्यशेषवचनं, सोऽर्थवाद:॥(९।२।१०अ०)॥

---

स्तोभशब्दाधिकरणम् ॥

अधिकञ्च विवर्णञ्च जैमिनिः स्तोभशब्दत्वात् ॥३९॥

अथ कः स्तोभो नाम? तस्य लक्षणं कर्त्तव्यम्; उच्यते,- य ऋगक्षरेभ्योऽधिको न च तैः सवर्णः स स्तोभो नाम, दृश्यते हि लौकिकाः स्तोभशब्दमुपचरन्तीति,—तद्यथा देवदत्तेन सभायां परं प्रलपता बहुस्तोभं कथितमिति, यदर्थवचनेभ्योऽधिकं विवर्णञ्च, तत् आलोच्य एवंवक्तारो भवन्ति।

लक्षणकर्मणः प्रयोजनं न वक्तव्यं, लक्षणकर्मणो हि तदेव प्रयोजनं, यल्लक्षितो भविष्यतीति। 'किमर्थमुभयं सूचितं? नन्वन्यतरत् पर्य्याप्तम् अधिकमिति वा विवर्णमिति वा' इति। नेत्याह,-भवति हि किञ्चित् अधिकं न विवर्णं,-यथा अभ्यासः,-'वाद्रि-वाद्रिः' इति; तथा किञ्चित् विवर्णं, नाधिकं,-यथा विकारः,-'ओग्नाइ' इति। तस्मादुभयं सूत्रयितव्यमिति॥ (९।२।११अ०)॥

---

नीवारादिषु प्रोक्षणावघातादिधर्म्मानुष्ठानाधिकरणम् ॥

सू० धर्म्मस्यार्थकृतत्वाद्द्रव्यगुणविकारव्यतिक्रम-प्रतिषेधे चोदनानुबन्धः समवायात् ॥ ४० ॥

भा० वाजपेये श्रूयते,-'बार्हस्पत्यञ्चरुं नैवारं सप्तदशशरावं निर्वपति' इति। अस्ति च प्रकृतौ व्रीहिषु प्रोक्षणं, तत् नीवारेषु भवति, न वा? इति संशयः। तथा, 'उद्गीथा वा एतर्हि वाम-वति यर्हि पृष्ठः षडहः सन्तिष्ठते, न बहु वदेनान्यं पृच्छेत् नान्यस्मै ब्रूयात्, संस्थिते षडहे मध्वाशयेत् घृतं वा' इति

मध्वशने घृताशने च षड़हधर्मा भवन्ति वा, न भवन्ति? इति संशयः। तथा राजसूये श्रूयते,-'नैऋतश्चरु नखावपूतानां परिहृत्ये ग्रहे' इति, अस्ति प्रकृतौ उलूखलमुसलयोः प्रोक्षणं,-'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इति, तत् नखेषु भवति, न भवति? इति संशयः। तथा चातुर्मास्येषु श्रूयते, 'परिधौ पशुं नियुञ्जीत' इति परिधौ यूपधर्म्माः कर्त्तव्याः, न कर्त्तव्याः? इति संशयः। तथा, 'न गिरा गिरेति ब्रूयाद्यदि गिरा गिरेति ब्रूयादात्मानं तदुद्गातोद्गिरेत् ऐरं कृत्वोद्गेयम्' इति इरापदे गिरापदधर्मा भवन्ति, न भवन्ति? इति संशयः।

किन्तावत्प्राप्तं; व्रीह्यादिषु उक्ता धर्म्मा न नीवारादिषु, तस्मात्तेषु न भवेयुरिति। एवं प्राप्ते ब्रूमः,—नीवारादिषु 'चोदनानुबन्धः' स्यात्, समवैति हि तेषु स प्राकृतो धर्म्मः, प्रकृतौ तावदपूर्वप्रयुक्तोऽसौ न व्रीह्यादिप्रयुक्तः, येनापूर्वस्य विशिष्टोऽयं साधनविशेषः, तत्रैव धर्म्मो न व्रीह्यादाविति समधिगतमेतत्। नीवारादयश्च व्रीह्यादिकार्यकारिण इत्यवगम्यते, नीवारस्य भावचोदना,-'नैवारश्चरुः कर्त्तव्यः' इति, स च नान्येन प्रकारेण नीवारो यागस्योपकरोति, वर्जयित्वा तण्डुलनिर्वृत्तिं, स प्रत्यक्षेण अवगम्यते,-व्रीहिकार्यं वर्त्तते इति। तस्माद्व्रीहिधर्मा नीवारे भवेयुरिति।

एवं 'षड़हेनोपासीत' इति चोदनायां सत्यां यदा 'षड़हः सन्तिष्ठते' (न षड़हेनोपास्यते इत्यर्थः), मधुघृताभ्यामुपासीतेति गम्यते, यस्य भावे यस्य निवृत्तिस्तत्तस्य स्थानेऽवगम्यते, षड़हनिवृत्तौ मध्वशनं भुवन् षड़हकार्यं वदतीति गम्यते।

तस्मात् षड्हधर्मो व्रतं नियमो वा मध्यमे भवतीति। यागाभावात्तन्निमित्ता ग्रहा न प्रवर्त्तन्ते, 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इति ग्रहचमसाभावात् स्तोत्राभावः, 'स्तुतमनुशंसति' इति स्तोत्राभावाच्छस्त्राभावः। सवनाभावात्सवनीया न प्रवर्त्तन्ते,-इत्येवमादि न प्रवर्त्तते, व्रतानि नियमाश्च प्रवर्त्तन्ते इति।

यच्चान्यदनर्थलुप्तं न नखावपूतानामिति, नान्यथा नखावपूता भवन्ति, यदि न तैस्तुषाः विपूयन्ते, तस्मात्तुषविमोचने नखाः श्रुता इति गम्यते। अतश्चोलूखलमुसलधर्म्मैः सम्बध्यन्ते इति।

तथा परिधिर्यूपकार्ये वर्त्तते इति विस्पष्टमेव वचनं, 'परिधौ पशुं नियुञ्जन्ति' इति। तस्मात्तद्धर्म्मकः परिधिः स्यात् इति।

तथा 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्' इति नैतौ द्वावपि विधीयेते प्रतिषेधः इरापदस्य, तथाहि वाक्यं भिद्येत। नच, इरापदमप्राप्तत्वादनूद्यते, प्रतिषेधे त्वनुवादः सम्भवति। यदा इरापदं तदा व्यक्तं गिरापदं न भवतीति। एकवाक्यरूपञ्च गम्यते, यस्माद्गिरापदस्यायं दोषस्तस्मादिरापदं ब्रूयादिति, भिन्नवाक्यरूपे त्वाश्रीयमाणे भूयसी अदृष्टानुमानकल्पना स्यात्, नह्यात्मानं गिरेदिति दोषो विधीयते, शरीरं गिरितुमसंभवः, परमात्मन्यदोषः। वाक्यभेदस्तु स्थित एव। तस्माद्गिरापदोच्चारणमिरापदस्य तत्कार्यापत्तिषु दर्शनार्थं, न गिरा गिरेति कृत्वोद्गायेदिति। तस्माद्गिरापदधर्म्मा इरापदे भवेयुरिति सर्वत्र पर्यवसितं। परिधौ अनन्तरा कथा वर्त्तिष्यते (।८।२।१२ भा०)॥

परिधौ यूपधर्म्मानुष्ठानाधिकरणम् ॥

सू॰ तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात्स्यात् ॥४१॥(पू॰)॥

भा॰ चातुर्मास्येष्वाम्नायते,-'मध्यमे पर्वणि परिधौ पशुं नियुञ्जन्ति' इति। तत्रोक्तं,-यूपधर्म्माः परिधौ कर्त्तव्या इति ; तद्विपरिवर्त्तते,—ते न कर्त्तव्याः 'तदुत्पत्तेः' परिधेराहवनीयपरिधानार्थोत्पत्तेर्यूपधर्म्मा निवर्त्तेरन्, तत्कृता हि ते अपूर्वप्रयुक्तपशुबन्धनद्वारेण अपूर्वं गच्छन्ति, तत्र यद्बन्धनस्याङ्गभूतमिति श्रुतं, तद्बन्धनार्थमेव द्रव्यमुत्पन्नं, यत्त्वाहवनीयपरिधानार्थमुत्पन्नं, तस्मिन् पराङ्गभूते बन्धनं कृतं भवति, न तद्धर्म्माणां द्वारं भवितुमर्हति, न हि तत्र क्रियमाणाः पशोः कृताः भवन्ति, न पाशुकस्य, अपिच सत्वकः परिधिरनुच्छ्रयश्च यूपधर्म्मैः परिधित्वात् हीयेत ; यूपायाज्यमानायेति च शब्द उह्येत, तत्रायं बाधितः स्यात्। तस्मात्परिधौ यूपधर्म्मा न स्युरिति ॥

सू॰ आवेश्येरन्वार्थवत्त्वात्संस्कारस्य तदर्थत्वात् ॥ ४२ ॥ (सि॰)॥

भा॰ 'आवेश्येरन् वा' यूपधर्म्माः परिधौ, बन्धनोपकारसाधने हि विधीयन्ते, यश्च परार्थो बन्धनं नयति निष्पादयति, करोत्यसौ बन्धनोपकारम् ; अयञ्च संस्कारो बन्धनं निष्पादयति, तदर्थोत्पत्तिम् अतदर्थोत्पत्तिं वा नापेक्षते ; तस्मात्परिधौ यूपधर्म्माः कर्त्तव्या इति।

यदुक्तम् अनुच्छ्रयश्च सत्वकश्च परिधिरिति ; अत्रोच्यते, ये परिधित्वाविरोधिनो यूपधर्मास्ते करिष्यन्ते, न विरुद्धा इति ॥

सू॰ आख्या चैवं तदावेशात् विकृतौ स्यादपूर्वत्वात् ॥ ४३ ॥ (आ॰ नि॰) ॥

भा॰ अथ यदुक्तं, 'यूपायाज्यमानाय' इति यूपशब्द ऊहितव्यः स्यादिति, अत्रोच्यते, नाहितव्यो भविष्यति, धर्मावेशात् 'आख्या' अपि 'यूपः' इति भविष्यति, धर्मनिबद्धा हि सा, यथैव यूपे, तथा परिधावपि भवितुमर्हति, तस्मान्नोहिष्यते यूपशब्द इति ॥ (८।२।१३ अ॰) ॥

---

घृतादौ प्रणीताधर्मानुष्ठानाधिकरणम् ।

सू॰ परार्थेन त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ ४४ ॥ (पू॰) ॥

भा॰ 'वि वा एनं प्रजया पशुभिरर्द्धयति वर्द्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति स त्रेधा तण्डुलान् विभजेत् ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् । ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं ये क्षोदिष्ठाः तान् विष्णवे शिपिविष्टाय शृते चरुं शृते चरुं दधंश्चरुम्' इत्येतदुदाहरणं । तत्रायमर्थः सांशयिकः,-किं शृते दध्नि प्रणीताधर्माः कर्त्तव्याः, उत न कर्त्तव्याः? इति । किं प्राप्तम्?-न कर्त्तव्या इति, परार्थम् एतत् प्रदानार्थमिति न प्रणीतार्थम् । दधि च तण्डुलविभागश्च एको भाग इन्द्राय प्रदात्रे दातव्यः, शृतश्च तण्डुलविभागश्च विष्णवे शिपिविष्टाय, न श्रपणार्थं दधि पयो वा विधीयते; तत्र हि सममीसंयोगोऽनुवाद एव, न च प्रणीताकार्यं विधीयते

दधि पयो वा; तस्मात् प्रणीतानां धर्म्मैर्न संयुज्येते। न हि प्रणीतानां दध्नश्च 'अर्थसामान्यं' किञ्चिदस्ति, तदर्थश्चायं संस्कारः, अपच्छादकः, तस्मान्न प्रणीताधर्म्माः पयसि दधनि वा भवेयुरिति॥

सू॰ क्रियेरन् वाऽर्थनिर्वृत्तेः॥४५॥(सि॰)॥

भा॰ नचैतदस्ति,—प्रणीताधर्म्मा दधिपयसोर्न कर्त्तव्या इति, अपणसाधने हि ते विधीयन्ते,-न अपणार्थमुत्पन्ने द्रव्ये, येनार्थो निवर्त्तेत, तत्र ते अपूर्वप्रयुक्तत्वात् क्रियते, क्रियते च दधिपयोभ्यां अपणं; तस्मात् तद्धर्मैः संयोगः स्यात्॥(८।२।१४ अ॰)॥

---

बृहद्रथन्तरयोर्धर्म्मव्यवस्थाधिकरणम्।

सू॰ एकार्थत्वादविभागः स्यात्॥४६॥(पू॰)॥

भा॰ ज्योतिष्टोमे समामनन्ति,-'बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवति' इति, व्यक्तो हि बृहद्रथन्तरयोर्विकल्पः,-यस्मिन् कार्ये रथन्तरं प्रवर्त्तते तस्मिन्नेव कार्ये बृहत्पृष्ठसिद्धिद्वारेण धर्म्मा विहिताः। तस्माद्बृहद्धर्म्मा रथन्तरधर्म्माश्च उभयत्र कर्त्तव्या इति। बृहद्ग्रहणं रथन्तरग्रहणञ्च लक्षणार्थं भविष्यति॥

सू॰ निर्द्देशाद्वा व्यवतिष्ठेरन्॥४७॥(सि॰)॥

भा॰ 'निर्द्देशाद्वा' रथन्तरे रथन्तरधर्म्माः कर्त्तव्याः,-'नोच्चैर्मैवं नच बलवत् गेयं, रथन्तरे प्रस्तूयमाने संमीलेत् स्वदृशं प्रतिवीक्षेत' इत्येवमादयः। बृहद्धर्माश्च, 'बृहति उच्चैर्गेयं बृहति गीयमाने समुद्रं मनसा ध्यायेत्' इत्येवमादयः। एवं निर्द्देशोऽर्थ-

याद् भविष्यति, इतरथा रथन्तरप्रकृत्य बृहत्प्रकृत्य प्रदर्श-
नार्थं स्यात्, तथा लक्षणा भवेत्, न च श्रुतिसम्भवे लक्षणा
न्याय्या। यदुच्यते,—अर्थैकत्वाद्बृहद्रथन्तरयोरिति, सत्यमेकोऽर्थः
पृष्ठसिद्धिः, एतदप्यस्ति,—अन्यथा बृहता साध्यते पृष्ठम्, अन्यथा
रथन्तरेणेति; यथा पर्वणि विभज्यमाने द्वावप्युपायौ, यथा द्वौ
पुरुषौ अन्तर्वीर्थ्यंहीत्वा आकर्षतः। यथा तीक्ष्णेन शस्त्रेण
च्छेदनम्, तत्र यत् शस्त्रस्य तीक्ष्णीकरणं द्रव्यं तच्छेदनाभ्युपाये
सम्बध्यते, नाकर्षणाभ्युपाये तदर्थापन्नेऽपि। एवं बृहद्धर्म्मा
रथन्तरे तदर्थापन्ने भवेयुर्वा न वा? इति जायते विचारणा,
तत्र निर्द्देशसामर्थ्यादिदमवगच्छामः,—अन्यथा बृहत्साधयति,
अन्यथा रथन्तरमिति; प्रत्यक्षं ह्येतदपि अन्यदुपलभामहे,—रथ-
न्तरं शूरादिकां संस्तुतिं कुर्वत् पृष्ठं साधयति, बृहत् चित्रादिकां;
तस्माद्रथन्तरधर्म्मा शूरादिकायां स्तुतौ निबद्धा रथन्तरे प्रस्तूय-
माने भवेयुर्न बृहति, बृहद्धर्मा अपि चित्रादिकायां स्तुतौ
निबद्धा बृहति भवेयुः; न रथन्तरे, तस्माद्व्यवस्था धर्माणा-
मिति॥ (९।२।१५अ०)॥

---

कण्वरथन्तरे बृहद्रथन्तरधर्मानुबन्धाधिकरणम्।

सू० अप्राकृते तद्विकाराद्विरोधाद्व्यव-
तिष्ठेरन् ॥ ४८ ॥

भा० अस्ति वैश्यस्तोमः,—'वैश्यो वैश्यस्तोमेन यजेत' इति;
तत्र इदमाम्नायते,—'कण्वरथन्तरं पृष्ठं भवति' इति। तत्रायमर्थः

सांशयिकः,—किं कण्वरथन्तरे अन्यतरस्य रथन्तरस्य बृहतो वा धर्माः कर्त्तव्याः, उतोभयोरपि? इति। किं प्राप्तम्,—अन्यतरस्येति। कुतः?। एवं हि उक्तं,—'रथन्तरस्य राथन्तरा भवन्ति, बृहतो बार्हता' इति निर्देशसामर्थ्यादिति, तद्विशेषेऽनुच्यमाने यावदुक्तं तावत्प्राप्तमिति; तस्मादन्यतरस्य धर्माः कर्त्तव्याः।

इत्येवं प्राप्ते ब्रूमः,—'अप्राकृते' (कण्वरथन्तरे) 'तद्विकारात्' यस्मात् कण्वरथन्तरमुभयोः कार्ये वर्त्तते, तस्मादुभयधर्मान् लभेत, नहि विकृतौ निर्देशोऽस्ति यथा प्रकृतौ, अर्थापत्तित इह भवन्ति, चोदकेन कण्वरथन्तरम् उभयोरर्थापन्नं। तस्मादुभयधर्मान् लभेत। ये तु विरुद्धा धर्माः तद्यथा,-'उच्चैर्गेयं बलवद्गेयम्' इत्येवंजातीयकाः 'विरोधात् व्यवतिष्ठेरन्, अविरुद्धेषु समुच्चयः* ॥ (८।२।१६ अ०)॥

---

द्विसामके बृहद्रथन्तरधर्मयोर्व्यवस्थाधिकरणम्।

सू० उभयसाम्नि चैवमेकार्थ्यात् ॥ ४९ ॥ (पू०)॥

भा० सन्ति उभयसामानः क्रतवः,—'संस्तवः उभे कुर्यात् गोसव उभे कुर्यात्', अपचितावपि 'एकाहे उभे बृहद्रथन्तरे कुर्यात्' इति श्रूयते, सन्ति तु प्रकृतौ बृहद्धर्मा रथन्तरधर्माश्च, ते इह चोदकेन प्राप्यन्ते। तत्र संशयः,-किमुभयसाम्नि उभयधर्माः कर्त्तव्याः,

---

* "तदेतदयुक्तम्,—न बृहद्रथन्तरयोरग्निष्टोमे समुच्चयः। किमतः?। एतदतो भवति, यद्यप्यग्निष्टोमस्य बृहद्रथन्तरे स्तुतसाधनत्वेनावगते तथापि तयोर्वैकल्पिकत्वात् एकस्यैव कार्य्यं कण्वरथन्तरमापद्यते, एवञ्चेद् एकस्यैव धर्मान् प्रतीयात्" इति वार्त्तिकमतमनुसन्धेयम्।

अथवा इहापि तथैव व्यवतिष्ठेरन् ? इति । किं प्राप्तं ?,—'उभयसाम्नि चैवं' स्यात्, यथा कण्वरथन्तरे, उभे हि अत्र सामनी पृष्ठकार्ये वर्त्तेते, नैकैकं, तस्मादेवैकधर्म्मान् लभेत, उभे हि अत्र संहते, उभे धर्म्मैः संयुज्येयाताम्, उभे हि ते संहते, एकार्थापन्ने पृष्ठकार्ये वर्त्तेते इति ।

सू॰ स्वार्थत्वाद्वा व्यवस्था स्यात् प्रकृतिवत् ॥ ५० ॥ (सि॰) ॥

भा॰ वाशब्दः पक्षं व्यावर्त्तयति,—न चैतदस्ति बृहद्रथन्तरयोः संहतयोरुभये धर्म्माः कर्त्तव्या इति; रथन्तरे रथन्तरधर्म्मा बृहति बृहद्धर्म्माः । कुतः ? । 'स्वार्थत्वात्' धर्माणां,—रथन्तरधर्म्मा रथन्तरार्थाः, बृहद्धर्मा बृहदर्थाः, साम्नो ह्येते धर्म्माः, न पृष्ठस्य, तत्र साम प्रयुज्यते रथन्तरं बृहद्वा, रथन्तरे प्रयुज्यमाने तद्धर्म्माः प्रयोक्तव्याः, बृहत्यपि प्रयुज्यमाने बृहद्धर्म्माः, सामप्रयुक्ता एवैते धर्म्माः, साम्नापि हि दृष्टमदृष्टञ्च क्रियते; तस्मात् सामापि धर्म्मप्रयोजने समर्थम्,—अतो 'व्यवस्था' धर्म्माणां 'प्रकृतिवत्,'—यथा प्रकृते रथन्तरे प्रयुज्यमाने तदङ्गं प्रयुज्यते, बृहति तदङ्गम्, एवमिहापीति ॥ ( ८।२।१७ अ॰ ) ॥

---

सौर्य्यादिषु पार्व्वणहोमाप्रवृत्त्यधिकरणम् ॥

सू॰ पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभीज्या हि ॥ ५१ ॥ ( सि॰ ) ॥

भा॰ स्तो दर्शपूर्णमासौ,—तत्रेदं समामनन्ति,—'स्रुवेण पार्वणौ जुहोति' इति । सौर्यादिषु वैकृतेषु कर्म्मसु भवति सन्देहः,—किं

ऋक्-स्तोभ-स्वर-कालाभ्यासविशिष्टाया: गीतेः सामशब्दो वाचकः। कथमवगम्यते ?। तत्र प्रयोगात्, यदि स्तोभा निवर्त्तेरन्, ततस्तो विशेषो नोपसंगृह्णीत; स्यात् तत्र शब्दो वाध्येत! तस्मात् स्तोभाः प्रदिश्येरन्। यत्तूक्तम्,-ऋक्शब्दार्थैः असम्बध्यमानाः स्तोभा अनर्थका भवेयुः; अत्र ब्रूमः,-'लोकवत्' न अनर्थका भविष्यन्ति। तद्यथा, लोके गायनैरङ्गवस्तुकानि यानि नाम प्रक्षिप्यन्ते, तानि गीतिकालगणनार्थानि, नार्थसम्बन्धाय उच्चार्य्यन्ते, सुखं स्वरैः गीतिकालः परिच्छिद्यते; तद्वदिहापि कालपरिच्छेदार्थानि स्तोभाक्षराणि अनुवर्त्तेरन्निति॥

## अन्वयश्चापि दर्शयति॥ ३६॥ (यु०)॥

अन्वयतश्चापि स्तोभान् दर्शयति, यत्रार्चिकानि पदानि निवर्त्तन्ते, 'स्तोभा गेष्णाश्चानुयन्ति' इति, 'स्तोभाः' स्तोभा एव, 'गेष्णाः' स्वराः। तस्मादपि स्तोभाः प्रदिश्यन्ते॥

## निवृत्तिर्वाऽर्थलोपात्॥ ३७॥ (आ०)॥

वाशब्दात्पक्षो विनिवर्त्तते। 'निवृत्तिः' 'अभिष्टपति' इत्येवञ्जातीयकानां स्तोभानां; शीतकर्मा श्यौन्द्रो वाक्यशेषे उपलभ्यते, न तेनैवंजातीयकाः स्तोभाः सम्बध्येरन्निति॥ अन्वयात्सम्बध्यन्ते लोकवदिति यदुक्तं, तत्परिहर्त्तव्यम्॥

## अन्वयो वार्थवादः स्यात्॥ ३८॥ (आ०नि०)॥

अन्वीयुर्वा एवञ्जातीयका स्तोभाः, नहि वयमिन्द्ररूपं प्रत्यक्षमुपलभामहे; यत्र वाक्यशेषवचनं, सोऽर्थवादः॥ (९।२।१० अ०)

स्तोभलक्षणाधिकरणम्।

**अधिकञ्च विवर्णञ्च जैमिनिः स्तोभशब्दत्वात् ॥३९॥**

अथ कः स्तोभो नाम? तस्य लक्षणं कर्त्तव्यम्; उच्यते,- य ऋगक्षरेभ्योऽधिको न च तैः सवर्णः स स्तोभो नाम, ईदृशे हि लौकिकाः स्तोभशब्दमुपचरन्तीति,—तद्यथा देवदत्तेन सभायां परं प्रलपता बहुस्तोभं कथितमिति, यदृग्वचनेभ्योऽधिकं विवर्णञ्च, तत् आलोच्य एवंप्रकारो भवन्ति।

लक्षणकरणे च: प्रयोजनं न वक्तव्यं, लक्षणकरणे हि तदेव प्रयोजनं, यल्लक्षितो भविष्यतीति। 'किमर्थमुभयं सूचितं? अन्यतरत् पर्य्याप्तम् अधिकमिति वा विवर्णमिति वा' इति। नेत्याह,-भवति हि किञ्चित् अधिकं न विवर्णं,-यथा अभ्यासः,-'वाङ्गि-वाङ्गिः' इति; तथा किञ्चित् विवर्णं, नाधिकं,-यथा विकारः,-'घोम्नाइ' इति। तस्मादुभयं सूचयितव्यमिति॥ (८।२।११५०)॥

---

नीवारादिषु प्रोक्षणावघातादिधर्म्मानुष्ठानाधिकरणम्॥

सू० धर्म्मस्यार्थकृतत्वाद्द्रव्यगुणविकारव्यतिक्रम-प्रतिषेधे चोदनानुबन्धः समवायात् ॥ ४० ॥

भा० वा… श्रूयते,-'बार्हस्पत्यञ्चरुं नैवारं सप्तदशशरावं निर्वपति' … च प्र… हिषु प्रोक्षणं, तत् नीवारेषु भवति, न … उद्गीथा वा एतर्हि वाग्- … यर्हि … स… बहु वदेन्नान्यं पृच्छेत् … श्रू… ग्रयेत … वा' इति

ऋक्-स्तोभ-स्वर-कालाभ्यासविशिष्टाया: गीतेः सामशब्दो वाचकः। कथमवगम्यते ?। तत्र प्रयोगात्, यदि स्तोभा निवर्त्तेरन्, ततस्ततो विशेषो नोपसंगृहीतः स्यात् तत्र शब्दो वाध्येत ! तस्मात् स्तोभाः प्रदिश्येरन्। यत्तूक्तम्,-ऋक्शब्दार्थैः असम्बध्यमानाः स्तोभा अनर्थका भवेयुः; अत्र ब्रूमः,-'लोकवत्' न अनर्थका भविष्यन्ति। तद्यथा, लोके गायनैरङ्गवस्तुकानि यानि नाम प्रक्षिप्यन्ते, तानि गीतिकालगणनार्थानि, नार्थसम्बन्धाय उच्चार्यन्ते, सुखं ह्यक्षरैः गीतिकालः परिच्छिद्यते; तद्वदिहापि कालपरिच्छेदार्थानि स्तोभाक्षराणि अनुवर्त्तेरन्निति॥

अन्वयश्चापि दर्शयति॥३६॥(यु०)॥

अन्वयतश्चापि स्तोभान् दर्शयति, यत्रार्चिकानि पदानि निवर्त्तन्ते, 'स्तोभा गेष्णाश्चानुयन्ति' इति, 'स्तोभाः' स्तोभा एव, 'गेष्णाः' स्वराः। तस्मादपि स्तोभाः प्रदिश्यन्ते॥

निवृत्तिर्वाऽर्थलोपात्॥३७॥(आ०)॥

वाशब्दात्पक्षो विनिवर्त्तते। 'निवृत्तिः' 'अभिष्टपति' इत्येवंजातीयकानां स्तोभानां; शीतकर्मा हीन्द्रो वाक्यशेषे उपलभ्यते, न तेनैवंजातीयकाः स्तोभाः सम्बध्येरन्निति॥ अन्वयात्सम्बध्यन्ते लोकवदिति यदुक्तं, तत्परिहर्त्तव्यम्॥

अन्वयो वार्थवादः स्यात्॥३८॥(आ०नि०)॥

अन्वीयुर्वा एवंजातीयका स्तोभाः, नहि वयमिन्द्ररूपं प्रत्यक्षमुपलभामहे; यच्च वाक्यशेषवचनं, सोऽर्थवादः॥(८।२।१०अ०)॥

---

स्तोभलक्षणाधिकरणम् ॥

**अधिकञ्च विवर्णञ्च जैमिनिः स्तोभशब्दत्वात् ॥३९॥**

अथ कः स्तोभो नाम? तस्य लक्षणं कर्त्तव्यम्; उच्यते,-य ऋगक्षरेभ्योऽधिको न च तैः सवर्णः स स्तोभो नाम, ईदृशे हि लौकिकाः स्तोभशब्दमुपचरन्तीति,—तद्यथा देवदत्तेन सभायां परं प्रलपता बहुस्तोभं कथितमिति, यदर्थवचनेभ्योऽधिकं विवर्णञ्च, तत् आलोच्य एवंवक्तारो भवन्ति।

लक्षणकर्मणः प्रयोजनं न वक्तव्यं, लक्षणकर्मणो हि तदेव प्रयोजनं, यल्लक्षितो भविष्यतीति। 'किमर्थमुभयं सूचितं? नन्वन्यतरत् पर्य्याप्तम् अधिकमिति वा विवर्णमिति वा' इति। नेत्याह,-भवति हि किञ्चित् अधिकं न विवर्णं,—यथा अभ्यासः,-'चाद्रि-चाद्रिः' इति; तथा किञ्चित् विवर्णं, नाधिकं,—यथा विकारः,-'अग्नाइ' इति। तस्मादुभयं सूत्रयितव्यमिति॥ (९।२।११अ०)॥

---

नीवारादिषु प्रोक्षणावघातादिधर्म्मानुष्ठानाधिकरणम् ॥

सू० **धर्म्मस्यार्थकृतत्वाद्द्रव्यगुणविकारव्यतिक्रम-प्रतिषेधे चोदनानुबन्धः समवायात् ॥ ४० ॥**

भा० वाजपेये श्रूयते,-'बार्हस्पत्यञ्चरुं नैवारं सप्तदशशरावं निर्वपति' इति। अस्ति च प्रकृतौ व्रीहिषु प्रोक्षणं, तत् नीवारेषु भवति, न वा? इति संशयः। तथा, 'उद्गीथा वा एतर्हि वाच-वति यर्हि पृष्ठः अडहः सन्तिष्ठते, न बहु वदेन्नान्यं पृच्छेत् नान्यस्मै ब्रूयात्, संस्थिते अडहे मध्वाशयेत् घृतं वा' इति

ऋक्-स्तोभ-स्वर-कालाभ्यासविशिष्टाया: गीते: सामशब्दो वाचक: । कथमवगम्यते ? । तत्र प्रयोगात्, यदि स्तोभा निवर्त्तेरन्, ततस्ततो विशेषो नोपसंग्टह्णीत: स्यात् तत्र शब्दो वाध्येत ! तस्मात् स्तोभा: प्रदिश्येरन् । यत्तूक्तम्,-ऋक्शब्दार्थै: असम्बध्यमाना: स्तोभा अनर्थका भवेयु: ; अत्र ब्रूम:,-'लोकवत्' न अनर्थका भविष्यन्ति । तद्यथा, लोके गायनैरङ्कवस्तुकानि यानि नाम प्रक्षिप्यन्ते, तानि गीतिकालगणनार्थानि, नार्थसम्बन्धाय उच्चार्य्यन्ते, सुखं स्वरै: गीतिकाल: परिच्छिद्यते ; , तद्वदिहापि कालपरिच्छेदार्थानि स्तोभाक्षराणि अनुवर्त्तेरन्निति ॥

अन्वयञ्चापि दर्शयति ॥ ३६ ॥ (यु० ) ॥

अन्वयतश्चापि स्तोभान् दर्शयति, यत्रार्चिकानि पदानि निवर्त्तन्ते, 'स्तोभा गेष्णाश्चानुयन्ति' इति, 'स्तोभा:' स्तोभा एव, 'गेष्णा:' स्वरा: । तस्मादपि स्तोभा: प्रदिश्यन्ते ॥

निवृत्तिर्वाऽर्थलोपात् ॥ ३७ ॥ ( आ० ) ॥

वाशब्दात्पक्षो विनिवर्त्तते । 'निवृत्ति:' 'अग्निष्टपति' इत्येवञ्जातीयकानां स्तोभानां ; शीतकर्मा श्चीन्द्रो वाक्यशेषे उपलभ्यते, न तेनैवंजातीयका: स्तोभा: सम्बध्येरन्निति ॥ अन्वयात्सम्बध्यन्ते लोकवदिति यदुक्तं, तत्परिहर्त्तव्यम् ॥

अन्वयो वार्थवाद: स्यात् ॥ ३८ ॥ (आ०नि०) ॥

अन्वीयुर्वा एवञ्जातीयका स्तोभा:, नहि वयमिन्द्ररूपं प्रत्यक्षमुपलभामहे ; यत्र वाक्यशेषवचनं, सोऽर्थवाद: ॥ (९।२।१०अ० )॥

---

स्तोभस्य चाधिकरणम् ॥

अधिकञ्च विवर्णञ्च जैमिनिः स्तोभशब्दत्वात् ॥३९॥

अथ कः स्तोभो नाम? तस्य लक्षणं कर्त्तव्यम्; उच्यते,-य ऋगक्षरेभ्योऽधिको न च तैः सवर्णः स स्तोभो नाम, ईदृशे हि लौकिकाः स्तोभशब्दमुपचरन्तीति,—तद्यथा देवदत्तेन सभायां परं प्रलपता बहुस्तोभं कथितमिति, यदर्थवचनेभ्योऽधिकं विवर्णञ्च, तत् आलोच्य एवंवक्तारो भवन्ति।

लक्षणकर्मणः प्रयोजनं न वक्तव्यं, लक्षणकर्मणो हि तदेव प्रयोजनं, यल्लक्षितो भविष्यतीति। 'किमर्थमुभयं सूचितं? नन्वन्यतरत् पर्य्याप्तम् अधिकमिति वा विवर्णमिति वा' इति। नेत्याह,-भवति हि किञ्चित् अधिकं न विवर्णं,--यथा अभ्यासः,-'आद्रि-आद्रिः' इति; तथा किञ्चित् विवर्णं, नाधिकं,--यथा विकारः,-'ओग्नाइ' इति। तस्मादुभयं सूत्रयितव्यमिति॥ (८।२।११अ०)॥

---

नीवारादिषु प्रोक्षणावघातादिधर्मानुष्ठानाधिकरणम् ॥

सू० धर्मस्यार्थकृतत्वाद्द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे चोदनानुबन्धः समवायात् ॥४०॥

भा० वाजपेये श्रूयते,-'बार्हस्पत्यञ्चरुं नैवारं सप्तदशशरावं निर्वपति' इति। अस्ति च प्रकृतौ व्रीहिषु प्रोक्षणं, तत् नीवारेषु भवति, न वा? इति संशयः। तथा, 'उद्गीथा वा एतर्हि यावति वर्हिः पृष्ठः अड्डहः सन्तिष्ठते, न बहु वदेतान्यं पृच्छेत् नान्यस्मै ब्रूयात्, संस्थिते अहनि मध्वाशयेत् घृतं वा' इति

मध्वशने घृताशने च षड़हधर्मा भवन्ति वा, न भवन्ति ? इति संशयः। तथा राजसूये श्रूयते,-'नैऋतश्चरुं नखावपूतानां परिहृत्ये यहे' इति, अस्ति प्रकृतौ उलूखलमुसलयोः प्रोक्षणं,-'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इति, तत् नखेषु भवति, न भवति ? इति संशयः। तथा चातुर्मास्येषु श्रूयते, 'परिधौ पशुं नियुञ्जीत' इति परिधौ यूपधर्माः कर्त्तव्याः, न कर्त्तव्याः ? इति संशयः। तथा, 'न गिरा गिरेति ब्रूयाद्यदि गिरा गिरेति ब्रूयादात्मानं तदुद्गातोद्गिरेत् ऐरं कृत्वोद्गेयम्' इति इरापदे गिरापदधर्मा भवन्ति, न भवन्ति? इति संशयः।

किन्तावत्प्राप्तं; व्रीह्यादिषु उक्ता धर्मा न नीवारादिषु, तस्मात्तेषु न भवेयुरिति। एवं प्राप्ते ब्रूमः,—नीवारादिषु 'चोदनानुबन्धः' स्यात्, समवैति हि तेषु स प्राकृतो धर्मः, प्रकृतौ तावदपूर्वप्रयुक्तोऽसौ न व्रीह्यादिप्रयुक्तः, येनापूर्वस्य विशिष्टोऽयं साधनविशेषः, तन्नैव धर्मो न व्रीह्यादाविति समधिगतमेतत्। नीवारादयश्च व्रीह्यादिकार्यकारिण इत्यवगम्यते, नीवारस्य भावचोदना,-'नैवारश्चरुः कर्त्तव्यः' इति, स च नान्येन प्रकारेण नीवारो यागस्योपकरोति, वर्जयित्वा तण्डुलनिर्वृत्तिं, स प्रत्यक्षेण अवगम्यते,-व्रीहिकार्यं वर्त्तते इति। तस्माद्व्रीहिधर्मा नीवारे भवेयुरिति।

एवं 'षड़हेनोपासीत' इति चोदनायां सत्यां यदा 'षड़हः सन्तिष्ठते' (न षड़हेनोपास्यते इत्यर्थः), मधुघृताभ्यामुपासीतेति गम्यते, यस्य भावे यस्य निवृत्तिस्तत्तस्य स्थानेऽवगम्यते, षड़हनिवृत्तौ मध्वशनं ब्रुवन् षड़हकार्यं वदतीति गम्यते।

तस्मात् षड्हधर्मो व्रतं नियमो वा मध्यमे भवतीति। यागाभावात्तन्निमित्ता ग्रहा न प्रवर्त्तन्ते, 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इति ग्रहचमसाभावात् स्तोत्राभावः, 'स्तुतमनुशंसति' इति स्तोत्राभावाच्छस्त्राभावः। सवनाभावात्सवनीया न प्रवर्त्तन्ते,-इत्येवमादि न प्रवर्त्तते, व्रतानि नियमाश्च प्रवर्त्तन्ते इति।

यच्चान्यदनर्थलुप्तं न नखावपूतानामिति, नान्यथा नखावपूता भवन्ति, यदि न तैस्तुषाः विपूयन्ते, तस्मात्तद्विमोचने नखाः श्रुता इति गम्यते। अतश्चोलूखलमुसलधर्म्माः सम्बध्यन्ते इति।

तथा परिधिर्यूपकार्ये वर्त्तते इति विस्पष्टमेव वचनं, 'परिधौ पशुं नियुञ्जन्ति' इति। तस्मात्तद्धर्म्मकः परिधिः स्यात् इति।

तथा 'न गिरा गिरेति ब्रूयादैरं कृत्वोद्गेयम्' इति नैतौ द्वावपि विधीयेते प्रतिषेधः इरापदञ्च, तथाहि वाक्यं भिद्येत। नच, इरापदमप्राप्तत्वादनूद्यते, प्रतिषेधे त्वनुवादः सम्भवति। यदा इरापदं तदा व्यक्तं गिरापदं न भवतीति। एकवाक्यरूपञ्च गम्यते, यस्माद्गिरापदस्यायं दोषस्तस्मादिरापदं ब्रूयादिति, भिन्नवाक्यरूपे त्वाश्रीयमाणे भूयसी अदृष्टानुमानकल्पना स्यात्, नह्यात्मानं गिरेदिति दोषो विधीयते, शरीरं गिरितुमसंभवः, परमात्मन्यदोषः। वाक्यभेदस्तु स्थित एव। तस्माद्गिरापदोच्चारणमिरापदस्य तत्कार्यापत्तिषु दर्शनार्थं, न गिरा गिरेति कृत्वोद्गायेदिति। तस्माद्गिरापदधर्म्मा इरापदे भवेयुरिति सर्व्वञ्च पर्यवसितं। परिधौ अनन्तरा कथा वर्त्तिष्यते (।८।२।१२ अ०)॥

परिधौ यूपधर्म्मानुष्ठानाधिकरणम् ॥

सू॰ तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात्स्यात् ॥४१॥(पू॰)॥

भा॰ चातुर्मास्येष्वाम्नायते,-'मध्यमे पर्वणि परिधौ पशुं नियुञ्जन्ति' इति। तत्रोक्तं,-यूपधर्म्माः परिधौ कर्त्तव्या इति ; तद्विपरिवर्त्तते,—ते न कर्त्तव्याः 'तदुत्पत्तेः' परिधेराहवनीयपरिधानार्थोत्पत्तेर्यूपधर्म्मा निवर्त्तेरन्, तत्कृता हि ते अपूर्वप्रयुक्तपशुबन्धनद्वारेण अपूर्वं गच्छन्ति, तत्र यद्बन्धनस्याङ्गभूतमिति श्रुतं, तद्बन्धनार्थमेव द्रव्यमुत्पन्नं, यत्त्वाहवनीयपरिधानार्थमुत्पन्नं, तस्मिन् पराङ्गभूते बन्धनं कृतं भवति, न तद्धर्माणां द्वारं भवितुमर्हति, न हि तत्र क्रियमाणाः पशोः कृताः भवन्ति, न पाशुकस्य, अपिच सत्वकः परिधिरनुच्छ्रयश्च यूपधर्म्मैः परिधित्वात् हीयेत ; यूपायाञ्यमानायेति च शब्द उह्येत, तत्रायं बाधितः स्यात्। तस्मात्परिधौ यूपधर्म्मा न स्युरिति ॥

सू॰ आवेश्येरन्वाऽर्थवत्त्वात्संस्कारस्य तदर्थत्वात् ॥ ४२ ॥ (सि॰)॥

भा॰ 'आवेश्येरन् वा' यूपधर्म्माः परिधौ, बन्धनोपकारसाधने हि विधीयन्ते, यश्च परार्थो बन्धनं नयति निष्पादयति, करोत्यसौ बन्धनोपकारम्; यश्च संस्कारो बन्धनं निष्पादयति, तदर्थोत्पत्तिम् अतदर्थोत्पत्तिं वा नापेक्षते ; तस्मात्परिधौ यूपधर्म्माः कर्त्तव्या इति।

यदुक्तम् अनुच्छ्रयश्च सत्वकश्च परिधिरिति ; अत्रोच्यते, ये परिधित्वाविरोधिनो यूपधर्मास्ते करिष्यन्ते, न विरुद्धा इति ॥

सू॰ चात्वाले चैवं तदावेशात् विकृतौ स्यादपूर्वत्वात् ॥ ४३ ॥ (आ॰ नि॰) ॥

भा॰ अथ यदुक्तं, 'यूपायाज्यमानाय' इति शब्द ऊहितव्यः स्यादिति, अत्रोच्यते, नोहितव्यो भविष्यति, धर्मावेशात् 'चात्वाला' अपि 'यूपः' इति भविष्यति, धर्मनिबद्धा हि सा, यथैव यूपे, तथा परिधावपि भवितुमर्हति, तस्मान्नोहिष्यते यूपशब्द इति ॥ (८।२।१३ प॰) ॥

---

शृतादौ प्रणीताधर्मानुष्ठानाधिकरणम् ।

सू॰ परार्थेन त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ ४४ ॥ (पू॰) ॥

भा॰ 'वि वा एनं प्रजया पशुभिरर्धयति वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति स त्रेधा तण्डुलान् विभजेत् ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत् । ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं ये क्षोदिष्ठाः तान् विष्णवे शिपिविष्टाय शृते चरुं शृते चरुं दधंश्चरुम्' इत्येतदुदाहरणं । तत्रायमर्थः सांशयिकः,-किं शृते दधनि प्रणीताधर्माः कर्त्तव्याः, उत न कर्त्तव्याः ? इति । किं प्राप्तम् ?-न कर्त्तव्या इति, परार्थम् एतत् प्रदानार्थमिति न प्रणीतार्थम् । दधि च तण्डुलविभागश्च एको भाग इन्द्राय प्रदात्रे दातव्यः, शृतश्च तण्डुलविभागश्च विष्णवे शिपिविष्टाय, न अपणार्थं दधि पयो वा विधीयते ; तत्र हि सप्तमीसंयोगोऽनुवाद एव, न च प्रणीताकार्यं विधीयते

दधि पयो वा; तस्मात् प्रणीतानां धर्म्मैर्न संयुज्येते। न हि प्रणीतानां दध्नश्च 'प्रयोजनसामान्यं' किञ्चिदस्ति, तदर्थं स्याद्यं संस्कारः, अपणहारकः, तस्मान्न प्रणीताधर्म्माः पयसि दधनि वा भवेयुरिति ॥

सू० क्रियेरन् वाऽर्थनिर्वृत्तेः ॥ ४५ ॥ ( सि० ) ॥

भा० नचैतदस्ति,—प्रणीताधर्म्मा दधिपयसोर्न कर्त्तव्या इति, अपणसाधने हि ते विधीयन्ते,-न अपणार्थमुत्पन्ने द्रव्ये, येनार्थो निवर्त्तेत, तत्र ते अपूर्वप्रयुक्तत्वात् क्रियते, क्रियते च दधिपयोभ्यां अपणं; तस्मात् तद्धर्मैः संयोगः स्यात् ॥ (८।२।१४ अ०) ॥

---

बृहद्रथन्तरयोर्धर्मव्यवस्थाधिकरणम्।

सू० एकार्थत्वादविभागः स्यात् ॥ ४६ ॥ ( पू० ) ॥

भा० ज्योतिष्टोमे समामनन्ति,-'बृहत्पृष्ठं भवति रथन्तरं पृष्ठं भवति' इति, व्यक्तो हि बृहद्रथन्तरयोर्विकल्पः,-यस्मिन् कार्ये रथन्तरं प्रवर्त्तते तस्मिन्नेव कार्ये बृहत्पृष्ठसन्निहितारेण धर्म्मा विहिताः। तस्माद्बृहद्धर्म्मा रथन्तरधर्म्माश्च उभयत्र कर्त्तव्या इति। बृहद्ग्रहणं रथन्तरग्रहणञ्च लक्षणार्थं भविष्यति ॥

सू० निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४७ ॥ ( सि० ) ॥

भा० 'निर्देशाद्वा' रथन्तरे रथन्तरधर्म्माः कर्त्तव्याः,-'नीचैर्मन्द्रं नच बलवत् गेयं, रथन्तरे प्रस्तूयमाने संमीलेत् स्वदृशं प्रतिवीक्षेत' इत्येवमादयः। बृहद्धर्माश्च, 'बृहति उच्चैर्गेयं बृहति गीयमाने समुद्रं मनसा ध्यायेत्' इत्येवमादयः। एवं निर्देशोऽर्थ-

यात् भविष्यति, इतरथा रथन्तरग्रहणेन बृहद्ग्रहणस्य प्रदर्शनार्थं स्यात्, तथा लक्षणा भवेत्, न च श्रुतिसम्भवे लक्षणा न्याय्या। यदुच्यते,—अर्थैकत्वाद्बृहद्रथन्तरयोरिति, सत्यमेकोऽर्थः पृष्ठसिद्धिः, एतदप्यस्ति,—अन्यथा बृहता साध्यते पृष्ठम्, अन्यथा रथन्तरेणेति; यथा पर्वणि विभज्यमाने द्वावप्युपायौ, यथा द्वौ पुरुषौ अन्तरीयं गृहीत्वा आकर्षतः। यथा तीक्ष्णेन शस्त्रेण छेदनम्, तत्र यत् शस्त्रस्य तीक्ष्णीकरणं द्रव्यं तच्छेदनाभ्युपाये लभ्यते, नाकर्षणाभ्युपाये तदर्थापन्नेऽपि। एवं बृहद्धर्मा रथन्तरे तदर्थापन्ने भवेयुर्वा न वा? इति जायते विचारणा, तत्र निर्देशसामर्थ्यादिदमवगच्छामः,—अन्यथा बृहत्साधयति, अन्यथा रथन्तरमिति; प्रत्यक्षं खल्वपि अन्यदुपलभामहे,—रथन्तरं शूरादिकां संस्तुतिं कुर्वत् पृष्ठं साधयति, बृहत् चित्रादिकां; तस्माद्रथन्तरधर्मा शूरादिकायां स्तुतौ निबद्धा रथन्तरे प्रस्तूयमाने भवेयुर्न बृहति, बृहद्धर्मा अपि चित्रादिकायां स्तुतौ निबद्धा बृहति भवेयुः; न रथन्तरे, तस्मादव्यवस्था धर्माणामिति॥ (९।२।१५अ०)॥

---

कण्वरथन्तरे बृहद्रथन्तरधर्मव्यवस्थाधिकरणम्।

सू० अप्राकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन्॥ ४८॥

भा० अस्ति वैश्यस्तोमः,—'वैश्यो वैश्यस्तोमेन यजेत' इति; तत्र इदमाम्नायते,—'कण्वरथन्तरं पृष्ठं भवति' इति। तत्रायमर्थः

सांशयिकः,—किं कण्वरथन्तरे अन्यतरस्य रथन्तरस्य बृहतो वा धर्माः कर्त्तव्याः, उतोभयोरपि? इति। किं प्राप्तम्,—अन्यतरस्येति। कुतः?। एवं हि उक्तं,—'रथन्तरस्य राथन्तरा भवन्ति, बृहतो बार्हताः' इति निर्देशसामर्थ्यादिति, तद्विशेषेऽनुच्यमाने यावदुक्तं तावत्प्राप्तमिति; तस्मादन्यतरस्य धर्माः कर्त्तव्याः।

इत्येवं प्राप्ते ब्रूमः,—'अप्राकृते' (कण्वरथन्तरे) 'तद्विकारात्' यस्मात् कण्वरथन्तरमुभयोः कार्यं वर्त्तते, तस्मादुभयधर्मान् लभेत, नहि विकृतौ निर्द्देशोऽस्ति यथा प्रकृतौ, अर्थापत्तित इह भवन्ति, चोदकेन कण्वरथन्तरम् उभयोरर्थापन्नं। तस्मादुभयधर्मान् लभेत। ये तु विरुद्धा धर्माः तद्यथा,-'उच्चैर्गेयं बलवद्गेयम्' इत्येवंजातीयकाः 'विरोधात्' व्यवतिष्ठेरन्, अविरुद्धेषु समुच्चयः* ॥ (८।२।१६ अ०)॥

---

द्विसामके बृहद्रथन्तरधर्म्मयोर्वैकल्प्याधिकरणम् ॥

सू॰ उभयसाम्नि चैवमेकार्थ्यात्तिः ॥ ४९ ॥ (पू॰)॥

भा॰ सन्ति उभयसामानः क्रतवः,—'संसवः उभे कुर्यात् गोसव उभे कुर्यात्', अपचितावपि 'एकाहे उभे बृहद्रथन्तरे कुर्यात्' इति श्रूयते, सन्ति तु प्रकृतौ बृहद्धर्मा रथन्तरधर्माश्च, ते इह चोदकेन प्राप्यन्ते। तत्र संशयः,-किमुभयसाम्नि उभयधर्म्माः कर्त्तव्याः,

---

* "तदेतदयुक्तम्,—न बृहद्रथन्तरयोर्धर्म्माणां समुच्चयः। किमतः?। एतदतो भवति, यद्यपि द्वे अपि बृहद्रथन्तरे प्रस्तावनत्वेनावगते तथापि तयोर्वैकल्पिकत्वात् एकस्यैव कार्य्यं कण्वरथन्तरमापद्यते, एवञ्चेत् एकस्यैव धर्म्मान् ग्रहीष्यति" इति वार्त्तिकमतानुसन्धेयम्।

अथवा बृहत्यपि तथैव व्यवतिष्ठेरन्? इति। किं प्राप्तं?,—'उभयसाम्नि चैवं' स्यात्, यथा कण्वरथन्तरे, उभे हि अत्र सामनी पृष्ठकार्ये वर्त्तेते, नैकैकं, तस्मादेकैकधर्म्मान् लभेत, उभे हि अत्र संहते, उभे धर्म्माः संयुज्येयाताम्, उभे हि ते संहते, एकार्थोपन्ने पृष्ठकार्ये वर्त्तेते इति।

सू॰ स्वार्थत्वाद्वा व्यवस्था स्यात् प्रकृतिवत् ॥ ५० ॥ (सि॰) ॥

भा॰ वाशब्दः पक्षं व्यावर्त्तयति,—न चैतदस्ति बृहद्रथन्तरयोः संहतयोरुभये धर्म्माः कर्त्तव्या इति; रथन्तरे रथन्तरधर्म्मा बृहति बृहद्धर्म्माः। कुतः?। 'स्वार्थत्वात्' धर्माणां,—रथन्तरधर्म्मा रथन्तरार्थाः, बृहद्धर्म्मा बृहदर्थाः, साम्नोऽथैते धर्म्माः, न पृष्ठस्य, तत्र साम प्रयुज्यते रथन्तरं बृहद्वा, रथन्तरे प्रयुज्यमाने तद्धर्म्माः प्रयोक्तव्याः, बृहत्यपि प्रयुज्यमाने बृहद्धर्म्माः, सामप्रयुक्ता एवैते धर्म्माः, साम्नापि हि दृष्टमदृष्टञ्च क्रियते; तस्मात् सामापि धर्म्मप्रयोजने समर्थम्,—अतो 'व्यवस्था' धर्म्माणां 'प्रकृतिवत्,'—यथा प्रकृते रथन्तरे प्रयुज्यमाने तदङ्गं प्रयुज्यते, बृहति तदङ्गम्, एवमिहापीति ॥ (८।२।१७ अ॰) ॥

---

सौर्य्यादिषु पार्व्वणहोमाप्रवृत्त्यधिकरणम् ॥

सू॰ पार्व्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात्तदभीज्या हि ॥ ५१ ॥ (सि॰) ॥

भा॰ स्तो दर्शपूर्णमासौ,—तत्रेदं समामनन्ति,'स्रुवेण पार्व्वणौ जुहोति' इति। सौर्य्यादिषु वैकृतेषु कर्म्मसु भवति सन्देहः,—किं

तेषु पार्वणहोमो कर्त्तव्यो न वा? इति। तत इदं तावत्परीक्ष्यं,— किं कालाभीज्या पार्वणहोमो, उत समुदायाभीज्या? इति, कालाभीज्यायां तयोः प्रवृत्तिः, समुदायाभीज्यायामप्रवृत्तिः। कुतः संशयः?। उभयत्र प्रसिद्धेः, उभयत्र हि पर्वशब्दो लोके प्रसिद्धः, काले समुदाये च यथा हिमवत यथा च कुमारीभ्यः। किं तावत्प्राप्तं?—कालाभीज्या इति, ततः कालगता प्रसिद्धिर्व्यपदिश्यते।

एवं प्राप्ते ब्रूमः,—पार्वणयोर्वैकृतेषु कर्मसु 'अप्रवृत्तिः'। कुतः?। 'समुदायार्थसंयोगात्', ततः समुदाये प्रसिद्धिर्व्यपदिश्यते, काले प्रसिद्धिं परिहरिष्याम इति; अतः समुदायवाचित्वात् पर्वशब्दस्य समुदायस्याभियष्टव्यत्वात् वैकृतेष्वप्रवृत्तिरिति।

सू॰ कालश्चेति चेत्॥ ५२॥ (आ॰)॥

इति चेत् पश्यसि—कालस्य पर्वशब्दो वाचकः। तस्मात् कालाभीज्येति, तत्परिहर्त्तव्यम्। आभाषान्तं सूत्रं परेण विशेष्यते॥

सू॰ नाप्रकरणत्वात्॥ ५३॥ (आ॰नि॰)॥

भा॰ नास्ति कालस्य प्रकरणम्, अस्ति तु समुदायस्य, तस्मात् प्रकरणेन विशेषेण समुदायवाची गम्यते, न कालवाची। अथाह,—'न प्रकरणेन शक्यते पर्वशब्दस्य कालवाचितां बाधितुं, दुर्बलं हि लिङ्गात् प्रकरणम्'। उच्यते,—नायम् उभयत्र पर्वशब्दो वर्त्तते, यदि कालवचनस्तत्सम्बन्धात् समुदाये

गम्यते, यदि वा समुदायवचनस्तत्सम्बन्धात् काले, अन्यतर-वचनो यत्नो नोभयवचनः। तत्र समुदायवचने कल्प्यमाने प्रकरणमनुगृहीतं भवति।

अपि च पृणातेः पर्वशब्दः, पृणातिश्च दाने प्रसिद्धः, दानानि च समुदायाः, तस्मात् समुदायाभीज्या। एवं शब्दावयवप्रसिद्धिः अनुगृहीता भवति इति। तस्माद्वैकृतेषु पार्वणयोरप्रवृत्तिः॥

सू॰ मन्त्रवर्णाच्च ॥ ५४ ॥ (यु॰) ॥

भा॰ मन्त्रवर्णाच्च फलवदनुवादो भविष्यति,—'ऋषभं वाजिनं वयं पूर्णमासं यजामहे'। 'अमावास्या सुभगा सुशेवा' इति च। तस्मादपि समुदायाभीज्येति॥

सू॰ तदभावेऽग्निवदिति चेत् ॥ ५५ ॥ (पुनः आ॰) ॥

भा॰ नैतदस्ति,—यदुक्तं वैकृतेष्वप्रवृत्तिरिति। 'तदभावेऽपि' यद्यपि समुदायवचनोऽयं, नच वैकृतेष्वयमस्ति समुदायः, तथापि पार्वणहोमौ भवेतामेव। कुतः?। अन्या एवंशब्दिका देवता भविष्यन्ति। समुदायो वाऽसन्निहितोऽपि यक्ष्यते, सौर्या-द्युपकारार्थेन। यथा, 'अग्निमग्न आवह' इति सन्निहितोऽ-सन्निहितो वा अग्निर्योगार्थेनावाह्यते, एवमिहापि इति॥

नाधिकारिकत्वात् ॥ ५६ ॥ (आ॰ नि॰) ॥

नैतदेवम्, आधिकारिकं ह्येदं वचनम्,—अधिकारे भवं, यस्याधिकारस्तस्य गुणं विदधाति इति आग्नेयादीनामाभि-कारः, ते चाच देवताः; तेषां होमो देवतार्थः। एवं यत्र

सा देवता नास्ति, न च तदर्थो होमो न करिष्यते; तस्मात् पार्वणहोमयोर्विकृतिभ्यो निवृत्तिः ॥ (८।२।१८अ०) ॥

---

दर्शपौर्णमासयोर्होमद्वयस्य व्यवस्थाधिकरणम् ॥

सू० उभयोरविशेषात् ॥ ५७ ॥ (पू० ) ॥

भा० इदमिदानीं सन्दिह्यते,—किमुभौ होमौ पौर्णमास्याममावास्यायाञ्च, उत पौर्णमासीहोमः पौर्णमास्याम्, अमावास्याहोमोऽमावास्यायाम् ? इति । किं प्राप्तम् ?—उभावप्युभयत्र । कुतः ? । उभयोर्हि प्रकरणे उभावप्याम्नातौ, तस्मादुभयत्र भवितुमर्हतः ॥

सू० यद्भीज्या वा तद्विषयौ ॥ ५८ ॥ ( सि० ) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,—नैतदस्ति,—उभयमुभयत्रेति, 'यद्भीज्या', स तत्र भवेत्, तस्य हि स उपकारकः, अनुपकारक इतरस्य, न चानुपकारकः कर्त्तव्यः, समुदायप्रधानावेव होमावित्युक्तम् । तस्माद्यद्भीज्या, तद्विषयौ भवेतामिति ॥ (८।२।१९अ० ) ॥

---

समिदादीनां नामधेयत्वाधिकरणम् ॥

सू० प्रयाजेऽपीति चेत् ॥ ५९ ॥ (आ० नि०) ॥

भा० दर्शपूर्णमासयोः प्रयाजा आम्नाताः,'समिधो यजति तनूनपातं यजति इडो यजति बर्हिर्यजति स्वाहाकारं यजति' इति।

तत्र संशयः क्रियते,—किं 'समिधो यजति' इत्यादिशब्दैः समिदादयो देवताविशेषा विधीयन्ते,—एतान् समिदादीन् यजतीति, किं वा न प्रकृतैः समिदादिभिः सम्बन्ध उपादीयते? एवंशब्दिका देवताः न प्रकृतौ उपदिश्यन्ते इति।

किं तावत् प्राप्तम्?—प्रकृतानां समिदादीनां यागो विधीयते, समिदादयश्च देवता वाक्यसम्बन्धादिति। एवं प्रकृतैः समिदादिभिः सम्बन्धे क्रियमाणे प्रकरणानुग्रहो भविष्यति, तस्मात् प्रयाजेऽपि प्रकृता देवता भवितुमर्हति इति। देवताप्राधान्यञ्च यथा पार्वणहोमे इति॥

सू॰ नाचोदितत्वात्॥ ६०॥ (सि॰)॥

भा॰ नैतदेवं, नात्र समिदादयश्चोद्यन्ते देवतात्वेन। कुतः?। द्वितीयानिर्देशात्; तद्धितनिर्देशेन वा देवता चोद्यते, चतुर्थ्यन्तनिर्देशेन वा, तत्र हि तादर्थ्यं गम्यते, तादर्थ्ये च सति देवता भवति। न देवता नाम आत्मा काचित्, सैव कस्यचित् रूपस्य देवता, सैव नान्यस्य, यस्य यां प्रति तादर्थ्यं, सा तस्य देवता। द्वितीया ईप्सिततमे कारके भवति; तत्र न द्रव्यस्य तादर्थ्यं गम्यते तस्माच्च द्वितीयान्तेन देवताविधानम्।

'भवाह,—तादर्थ्यं कल्पयिष्यामः,—यथा 'विष्णुं यजति', 'वरुणं यजति' इति। अत्र न विष्णुर्वरुणो वा यागः; नापि यागादर्थान्तरं यागस्य कारकं यदीप्सितं, तद् द्वितीययाऽभिधीयते, तेन तत्र कल्पाते तादर्थ्यं, शब्दान्तरेण वा विहितं गम्यते, इह तु न शब्दान्तरविहितं, नचैवं शक्यं परिकल्पयितुं। नच यागस्य

कारकत्वेन संभवति, समिदादिशब्दत्वात्तु यजीनां समिदादयः शब्दा बाधका उपपद्यन्ते ; क्रियायां चेप्सिततायामिष्यते द्वितीया, यथा पाकं पचतीति। तस्मात् 'समिधो यजति' इत्येवमादयः समिद्यजिः कर्त्तव्य इति। यदा च यजिं प्रति अनुष्ठानं चोद्यते, तदा यजिरुपदिष्टो भवति, यदि पुनरत्र देवता उपदिश्येत, उपदिष्टे यजौ देवतोपदिश्येत, तत्रोपदिष्टोपदेशे वाक्यं भिद्येत, तस्माच्च देवतोपदेशः। यदा न देवतोपदेशस्तदा मान्त्रवर्णिको देवताविधिः, तदा चोपादेयत्वादेवंशब्दिका देवता चोद्यन्ते। तस्मात् मान्त्रवर्णिको देवताविधिः ॥ ८।२।२० अ०) ॥

इत्याचार्यशबरस्वामिकृते मीमांसाभाष्ये नवमस्य अध्यायस्य द्वितीयः पादः ॥

---

## मीमांसाभाष्यम्

### नवमाध्याये तृतीयः पादः।

—:○:—

विकृतौ प्रकृतवत्प्रैषादिमन्त्राणामूहाधिकरणम् ॥

**सू०** प्रकृतौ यथोत्पत्तिवचनमर्थानां तथोत्तरस्यां ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥ (सि०) ॥

भा० वैकृतानि कर्माणि उदाहरणं,—'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति। 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजा-

कामः' इति। 'चित्रया यजेत पशुकामः' इति। 'वैश्वदेवीं सांग्रहणीं निर्वपेत् ग्रामकामः' इति। अस्ति तु प्रकृतौ निर्वापमन्त्रः,—'अग्नये जुष्टं निर्वपामि' इति। तथा 'इन्द्राय मरुत्वते नैवारमेकादशकपालं निर्वपेत्' इति। अस्ति तु प्रकृतौ व्रीहिलिङ्गो मन्त्रः,—'स्योनन्ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि। तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इति। तत्रैतत्र विकृतौ चोदकप्राप्तं सन्दिह्यते,—किम् अविकारेण प्रयोक्तव्यम् उतोहेन? इति।

किं प्राप्तम्?—अविकारेणेति। तथा आर्षमनुष्ठीयते,—यत् प्रकृतौ कर्त्तव्यं तद्विकृताविति। प्रकृतौ चाग्निव्रीहिशब्दौ प्रयुक्तौ, तस्माद्विकृतावपि तावेव प्रयोक्तव्याविति।

एवं प्राप्ते ब्रूमः,—सत्यं 'प्रकृतौ यथा उत्पत्तिवचनमर्थानां' कृतं मन्त्रे, 'तथोत्तरस्याम्' अपि 'ततौ' (विकृतौ) तेनैव मन्त्रेण वचनं कर्त्तव्यं, 'तत्प्रकृतित्वात्'।

तथा प्राप्ते इदमुच्यते,—नैतदेवम्, 'अर्थे चाकार्यत्वात्' इति; एतावदर्थौ अग्निव्रीहिशब्दौ सूर्यं नीवारञ्च नाभिदध्याताम्; अयमन्योऽत्र तु शब्दस्यार्थः, मन्त्राणां चार्थवचनं कार्यं, न स्वरूपं, स्वरूपे ह्यदृष्टं कल्पयितव्यम्; अर्थवचनेन दृष्ट उपकारः, तस्मादूहितव्यौ इति॥

सू॰ लिङ्गदर्शनाच्च॥ २॥ (यु॰)॥

भा॰ लिङ्गं खल्वपि अस्मिन्नर्थे भवति,—'न माता वर्धते न पिता न भ्राता न सखा' इति, प्रत्यक्षं, भ्रातरं सखायञ्च वर्धमानं

पश्याम:, अतो नार्थवृत्तिप्रतिषेधसंवादोऽयं, शब्दवृत्तिप्रतिषेधस्तु न भ्रातृशब्दो वर्त्तते, न सखिशब्द इति। का च तयोर्वृत्तिः?। वर्णान्तरोपजननं सा, एकस्मिन् भ्रातेति द्वयोर्भ्रातराविति। एतदुक्तं भवति,—न भ्रातृशब्द ऊह्यते, न सखिशब्दश्चेति। अतोऽवगम्यते अन्ये ऊह्यन्ते इति। यथा न भवन्तः समाजं गच्छन्ति, न भवन्तः प्रेक्षका भवन्तीत्युक्ते नूनमन्ये गच्छन्तीति गम्यते। एवमिहापि (न भ्राता ऊह्यते, न सखा) इत्युक्ते नूनमन्ये ऊह्यन्त इति लिङ्गदर्शनम्। स्थितन्तावत् अपर्य्यवसितमेव। अन्तरचिन्तान्तरं वर्त्तिष्यते॥ (९।३।१ अ०)॥

---

पौष्करीकेषु बर्हिःषु स्तरणमन्त्रस्योहाधिकरणम्।

सू० जातिनैमित्तिकं यथास्थानम्॥ ३॥ ( सि० )॥

भा० इदमामनन्ति,—'मौद्गं चरुं निर्वपेत् श्रियै श्रीकामः' इति। तत्रेदं विधीयते,—'पौष्करीकाणि बर्हींषि भवन्ति' इति। अस्ति प्रकृतौ मन्त्रः,—'स्तृणीत बर्हिः परिधत्त वेदिं जयामिं मा हिंसीरमुपाशयाना दर्भैः स्तृणीत हरितैः सुपर्णैः निःका इमे यजमानस्य ब्रध्नः' इति, इह चोदकेन प्राप्तः; अत्र दर्भैरिति जातिशब्दः* हरितैरिति नैमित्तिको गुणशब्दः। तत्र संशयः किं जातिशब्दः ऊहितव्यः, नैमित्तिकोऽविकारेण प्रयोक्तव्यः, उतोभावपि यथास्थानं ऊहितव्यौ, जातिशब्दः स्तरणे, नैमित्तिकः

---

* जातिशब्देन इति क० सं० पू० पाठः।

स्तरणसाधने द्रव्ये ? इति। तत एवं तावत्परीक्ष्यं,—किमयं हरितशब्दो हरितगुणविवक्षया प्रयुज्यते, उत स्तरणद्रव्यगुणाभिविवक्षया ? इति। कस्मात्र विशेषः ?,—यदि दर्भाणां हरितगुणसम्बन्धो वक्तव्यः, अवश्यमसावदृष्टोऽर्थः, तदा पुष्करीकाणामप्यदृष्टायैव हरितसम्बन्धो वचनीयो भवति इत्यविकारेण प्रयोक्तव्यः; अथ स्तरणद्रव्यगुणविवक्षया प्रयुज्यते, तत्र पुष्करीकाणामपि स्वगुणो वक्तव्यो भविष्यति; तदेतत् द्वयमपि हरितशब्दादवगम्यते ; किन्तु विवक्षितम् ? इति संशयः।

किं तावत् प्राप्तम्?—अविकारेण प्रयोक्तव्य इति। तत एतत्तावच्चिन्त्यते,—हरितगुणविवक्षया प्रयुज्यते इति। कुतः?। हरितशब्दस्य मन्त्रे भावात्, नहि यो यो द्रव्यगुणः सोऽवश्यवचनीयो भवति, यस्य यस्य तु वाचको मन्त्रे शब्दोऽस्ति, स गुणो वक्तव्य इति गम्यते। हरितगुणस्य वाचको मन्त्रोऽस्ति। तस्मात् हरितगुणो वक्तव्य इति।

'ननु स एव स्तरणद्रव्यगुणस्य वाचकः'। न इत्याह,—नह्यसौ स्तरणद्रव्यगुण इत्यनेन कारणेन हरितशब्देनोच्यते, कथं तर्हि ?—हरितत्वयोगात् हरितशब्देन उच्यते, स एव हारित्यं श्रुत्वा अभिदधाति लक्षणया स्तरणद्रव्यगुणं; श्रुतिश्च लक्षणाया ज्यायसी। तस्माद्धरितगुणविवक्षया प्रयुज्यते, विकृतौ न ऊहितव्यः इति।

एवं प्राप्ते ब्रूमः,—जातिशब्दो नैमित्तिकश्च उभावप्यूहितव्यौ, तत एतद्वर्ण्यते,—स्तरणद्रव्यस्य गुणविवक्षया प्रयुज्यते इति।

यद्यपि हारित्वं श्रुत्वा हरितशब्दोऽभिवदति, तथापि हरित-गुणवचनमनर्थकं, अदृष्टं हि तत्र कल्पनीयं स्यात्! तथासक्तं दृष्टे सम्भवति; स्वरुद्रव्यगुणन्तु लक्षणयाऽभिवदति, तद्वचने-ऽदृष्टं प्रयोजनं स्वरुद्रव्यप्रत्यायनं, एवञ्चेदिहापि स्वरुद्रव्यस्य पुण्डरीकस्य गुणः प्रत्याययितव्यः। तस्मात्तद्वाचक ऊहितव्यो रक्तशब्द इति। तत एव मन्त्रागभिधीत्यायो भवतीत्यन्यथा सूत्रं वर्ण्यते,—

सू० लिङ्गदर्शनाच्च ॥ २ ॥ (यु० ) ॥

सू० जातिनैमित्तिकं यथास्थानम् ॥ ३ ॥ (सि० ) ॥

भा० इति। इतश्च पश्यामो विकृतावूहः कर्त्तव्य इति। कुतः?। लिङ्गं दृश्यते। किं लिङ्गं भवति?। एवमाह,—'विश्वेषां देवानामुस्राणां छागानां वपानां मेदसोऽनुब्रूहि' इति जातिशब्दानामूहितानां समुच्चारणं भवति, तत्सम्भवार्थमर्थ-वचनपक्ष एव कल्प्यते, अन्यथा क्रियमाणे चानर्थपरत्वे चाग्निच्छाग-शब्दावेव प्रयुज्येयातां, तथामीषामक्रियार्थानां वचनमनर्थकमेव स्यात्! न चैते शब्दा विधीयन्ते, विधायकस्याभावात्। 'ननु प्रयोगवचनेन विधायिष्यन्ते'। एवं तर्हि चादृष्टार्थतादोषः। तस्मादस्ति ऊह इति ॥

सू० अविकारमेके नार्षत्वात् ॥ ४ ॥ (पू० ) ॥

भा० 'एके' पुनराचार्या 'अविकारम्' अनुमन्यन्ते, आर्षत्वं लिङ्गं वदन्ति, तस्येयं प्राप्तिः क्रियते। यदि हि ऊह्येत, आर्षः चोदको बाध्येत! तस्मादनूह इति ॥

सू॰ लिङ्गदर्शनाच्च ॥ ५ ॥ ( यु॰ ) ॥

भा॰ लिङ्गमस्मिन्नर्थे दृश्यते,—'आग्नेये पैत्रते पशौ आम्नायते,—'अग्नये छागस्य वपाया मेदसोऽनुब्रूहि' इति। ऊहपक्षे न विधातव्यं स्यात्, विधीयते तु, तस्मादनूह इति। अपि चेदमपरं लिङ्गं अग्नीषोमीये पशौ श्रूयते,—'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्। यदि द्वौ एतौ ते वायू इति यदि बहून् एते ते वायवः' इति। यद्यूहो भवेत् एतदपि प्राप्तत्वान्न विधातव्यं स्यात्! विधीयते तु। तस्मादप्यनूह इति॥

सू॰ विकारो वा तदुक्तहेतुः ॥ ६ ॥ ( उ॰ ) ॥

भा॰ वाशब्देन पक्षो व्यावर्त्यते,—यदुक्तमविकार इति, तन्न, ऊहः स्यात्। अस्मिन्नर्थे पूर्वोक्तो 'हेतुः',—'अर्थे त्वाम्नातत्वात्' इति, मन्त्रार्थं प्रयुज्यते चोदको, न मन्त्राक्षराणि, अर्थपराणि हि तानि, न स्वरूपप्रधानानि; तस्मादूहः स्यात्पूर्वेणैव हेतुना। केवलं लिङ्गपरिहारो वक्तव्यः॥

सू॰ लिङ्गं मन्त्रचिकीर्षार्थम् ॥ ७ ॥ (१म आ॰ नि॰ ) ॥

भा॰ यत् 'लिङ्गम्' उक्तम्,—'अग्नये छागस्य वपाया मेदसोऽनुब्रूहि' इति, तन्मन्त्रचिकीर्षया विधीयते, इतरथा अविहितत्वादमन्त्रः स्यात्, तस्मात्पुनर्वचनम्॥

सू॰ नियमो वोभयभागित्वात् ॥ ८ ॥ (२य आ॰ नि॰ ) ॥

भा॰ यल्लिङ्गमुक्तम् 'एष ते वायो' इति, तत्परिह्रियते, यदि हि एतत् न उच्येत,—'यदि द्वावुपस्पृशेत् यदि बहून्'

सर्वे इमे मन्त्रा एकयूपे भवेयुः। उभयमपि मा प्रकृतौ भूदिति नियमः क्रियते,—'यदि द्वावुपस्पृशेत्, एतौ ते वायू इति ब्रूयात्, यदि बहून्, एते ते वायव इति ब्रूयात्', तस्मादेतदप्यलिङ्गमिति॥ (९।३।२५अ०)॥

---

अग्नीषोमीयपशौ लौकिकयूपस्पर्शे प्रायश्चित्ताधिकरणम्।

सू० लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन प्रकृतौ स्यादभागित्वात्॥ ९॥

भा० अस्ति ज्योतिष्टोमः, तत्राग्नीषोमीये पशौ आम्नायते,-'यदि एकं यूपमुपस्पृशेदेष ते वायो इति ब्रूयाद्यदि द्वावेतौ ते वायू इति यदि बहून् एते ते वायवः' इति। तत्रैषोऽर्थः सांशयिकः,—लौकिके वैदिके च यूपोपस्पर्शने प्रायश्चित्तम्, उत वैदिके अथ वा लौकिके? इति। किं प्राप्तं? लौकिके वैदिके वाऽनियमः इति। कथं?। विशेषानाश्रयणात्, नहि विशेष आश्रीयते लौकिके वैदिके वेति, तस्मादनियम इति। वैदिके वा, तथाहि अस्य मन्त्रस्य समीपगतेन प्रयोजनेनाभिसम्बन्धो भविष्यति, इतरथा दूरगतेनाप्रकृतेन परोक्षः सम्बन्धः स्यात्, तस्मात् वैदिके यूपोपस्पर्शने इदं प्रायश्चित्तम् इति।

एवं प्राप्ते ब्रूमः,—लौकिके उपस्पर्शने भवितुमर्हति न वैदिके। कुतः?। एवं दोषसंयुक्तं हि श्रूयते इदं प्रायश्चित्तं, यूपो वै यज्ञस्य दुरिष्टमामुञ्चते, यद्यूपमुपस्पृशेद्यज्ञस्य दुरिष्टमामुञ्चते तस्माद्यूपो नोपस्पृश्यः' इत्यभिधाय 'यद्येकं यूपमुपस्पृशेत्'-

इति समाम्नायते। तस्माद्यत्र दोषस्तत्र प्रायश्चित्तमिति। लौकिके च दोषो न वैदिके, वैदिकं हि अञ्जनम् उपस्पर्शनं च कर्त्तव्यमुक्तं, न तत् कर्त्तव्यं सत् अकर्त्तव्यं भविष्यति, सावकाशश्चोपस्पर्शनप्रतिषेधवचनं लौकिके अविरुद्धं भविष्यति।

अपि च 'अपवृक्ते' कर्म्मणि 'चोद्यते निमित्तेन'। कथं?। 'यूपो वै यज्ञस्य दुरिष्टमामुञ्चते' इति,—यत्किल यज्ञे दुरिष्टं तद्यूप आमुञ्चते, यत् सुकृतं तद्यजमान इति, सर्वमिदं प्रशंसार्थं न विधिपदान्तरेण सम्बध्यते। इष्टशब्द एवैको विधिपदैः सम्बन्धमुपैति, प्रशंसापदैरपि सम्बध्यमान इह सन्निहितो भवति। सन्निहितत्वाच्च पदान्तरैः सम्बध्यते, यथा दण्डो मनोहरो रमणीयश्च प्रहर शीघ्रमिति रमणीय-मनोहर-सम्बन्धेऽपि सति सन्निहितत्वात् प्रहर शीघ्रमित्येतैः पदैः सम्बध्यते, एवमिष्टशब्दोऽपि सन्निहितत्वात् सम्बध्यते,—इष्टे यदि यूपमुपस्पृशेदेष ते वायो इत्येवमादि ब्रूयादिति, सोऽयमिष्ट इत्यपवर्गस्य वक्ता शब्दः। अपवृक्ते चेदुपस्पर्शनं मन्त्रस्य निमित्तं, व्यक्तं न वैदिकं; तस्मात् लौकिके यूपोपस्पर्शने प्रायश्चित्तं, 'न प्रकृतौ' वैदिके 'अभागित्वात्' प्रतिषेधस्यापवर्गस्य च वैदिके न सम्भवति इति ॥ (९।२।३अ०) ॥

---

द्विपशुयागे पाशमन्त्रयोरेकवचनान्तबहुवचनान्तपदयोर्द्विवचनान्तेन
ऊहाधिकरणम् ॥

सू० अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य ॥ १० ॥ (प्र० पू०) ॥

भा० अस्ति पशुरग्नीषोमीयः,—'यो दीक्षितो यदग्नीषोमीयं

पशुमालभते' इति, तत्र पाशैकत्वाभिधायी मन्त्रः,—'अदितिः पाशं प्रमुमोक्तेतम्' इति; तथा पाशबहुत्वाभिधायी 'अदितिः पाशान् प्रमुमोक्तेतान्' इति; प्रकृतौ तयोः समुच्चयं वक्ष्यति। अस्ति द्विपशुर्विकृतिः,—'मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च सन्धावन्नकामः' इति। तत्र चोदकेन पाशाभिधायिनौ मन्त्रौ प्राप्तौ। तयोः संशयः,—किं बहुवचनान्तोऽविकारेण प्रवर्त्तते एकवचनान्तस्य निवृत्तिः, उत बहुवचनान्तो निवर्त्तते एकवचनान्त ऊहितव्यः, उत उभयोरपि प्रवृत्तिरभिधानविप्रतिपत्तिश्च, उतैकवचनान्त ऊहितव्यो बहुवचनान्तोऽपि न निवर्त्तेत?।

किं प्राप्तम्?—'अन्यायस्त्वविकारेण' अन्यायनिगदो बहुवचनान्तोऽविकारेण प्रवर्त्तते, एकवचनान्तो निवर्त्तितुमर्हति। कुतः?। नास्यैकस्मिन् पाशे प्रवर्त्तमानस्य दृष्टः प्रतीघातः, यथैवैकस्मिन् पाशे प्रवर्त्तते, तथा द्वयोरपि प्रवर्त्तितुमर्हति, नासौ एकस्य वाचकः, न द्वयोः। एवमार्षः चोदकोऽनुगृहीतो भविष्यति। इतरथा हि ऊह्यमाने यथाप्रकृति मन्त्रो न कृतः स्यात्; न द्वयोः पाशयोः एकस्मिंश्च पाशे कश्चित् विशेषोऽस्ति। तस्मात् अविकारेण बहुवचनान्तः प्रयुज्यते, एकवचनान्तस्य निवृत्तिरिति॥

सू० विकारो वा तदर्थत्वात्॥ ११॥ (द्वि० पू०)॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,—'विकारो वा' स्यात्, एकवचनान्त ऊहेन प्रवर्त्तते, बहुवचनान्तनिवृत्तिरिति। कुतः?।

'तदर्थत्वात्,'-यौ पाशौ विकृतौ वक्तव्यौ, तौ च प्रयोगवचनानुग्रहात् यौगपद्येन, न पर्य्यायेण, तत्र न गम्यते विशेषः,-पाशशब्दे उच्चरिते कस्य पाशस्याभिधानं, कस्य न? इति, अविशेषात् द्वयोरपि पाशयोः, तत्र तयोः कर्म्मत्वाभिसम्बन्धं द्वितीयाद्विवचनमेव शक्नोति वदितुं, नान्यत्; तस्मात् द्विवचनमूहेत, बहुवचनमेकवचनं च निवर्त्तितुमर्हत इति ॥

सू० अपि त्वन्यायसम्बन्धात् प्रकृतिवत् परेष्वपि यथार्थं स्यात् ॥ १२ ॥ (दृ० पू० ) ॥

भा० अपि त्विति पक्षो व्यावर्त्त्यते,—न बहुवचनं निवर्त्त्येत, यथा प्रकृतौ बहुवचनान्तमेकवचनान्तं च प्रवृत्तं,-'अन्यायसम्बन्धात्' बहुवचनान्तम्, एवं विकृतावपि एकवचनान्तं, द्विवचनान्तम्* ऊह्येत; अन्यायसम्बन्धाच्च बहुवचनान्तं प्रवर्त्तेत, यदि प्रकृतौ प्रातिपदिकार्थमात्रं पक्षे प्रकाशितं, विकृतावपि तत् पक्षे प्रकाशयितव्यम्, अथ बहुवचनान्तेनैकत्वमुक्तम्, इहापि बहुवचनान्तेन द्वित्वं वक्तव्यं। तस्मादभिधानविप्रतिपत्तिः कर्त्तव्या इति॥

सू० यथार्थन्त्वन्यायस्याचोदितत्वात् ॥ १३ ॥ (सि० ) ॥

भा० तुशब्दः तमपि पक्षं व्यावर्त्तयति,—नाभिधानविप्रतिपत्तिः कर्त्तव्येति, किन्तर्हि?–'यथार्थं' द्विवचनमूहितव्यं, बहुवचनमेकवचनं च निवर्त्तयातां, तद्धि द्विपाशाभिधायिनः पाशशब्दात्परं बहुवचनं एकवचनं वा न शक्नोति कर्म्मसम्बन्धं वदितुं,

* अत्र न द्विवचनान्तमिति पाठो भवितुं युक्तः।

लोको हि शब्दार्थावगमे प्रमाणं, नच लोके द्वयोरर्थयोः बहुवचनान्त एकवचनान्तो वा प्रवर्त्तमानो दृश्यते, तस्मादृहेन द्वयोः पाशयोर्बहुवचनान्त एकवचनान्तो वा प्रयोक्तव्यः॥

कथं प्रकृतौ एकस्मिन् पाशे बहुवचनान्त इति चेत्,—

सू॰ छन्दसि तु यथादृष्टम्॥ १४॥ (आ॰ नि॰)॥

भा॰ यावद्दर्शनं प्रामाण्यमभ्युपगन्तव्यं, 'छन्दसि' न दर्शनमतिक्रमितव्यम्, यो हि दर्शनमतिक्रम्यान्यदपि कल्पयेत्, न तेन छान्दसं कृतं स्यात्, न लौकिकं नापि लक्षणसिद्धम्। यदुक्तं,—चोदकेनाभिधानविप्रतिपत्तिश्चोद्यते इति। नैतदेवम्, अन्यायस्य अचोदितत्वात्, न हि चोदकोऽन्याय्यामभिधानविप्रतिपत्तिमभिप्रापयति। किंकारणम्?। प्रकृतावेकत्वात्, पाशस्य प्रकृतत्वाच्च बहुवचनान्तस्य प्रत्यक्षाभिधानविप्रतिपत्तिः। केयमभिधानविप्रतिपत्तिर्नाम?। यदन्यथाऽभिधानं, अन्यथा अभिधेयम्। नच प्रकृतौ एकस्मिन् बहुवचनान्तं प्रयुक्तमभिधानविप्रतिपत्तिं कर्त्तुं, किन्तर्हि?,—यत् तेन शक्यते, तत् कर्त्तुं। किञ्चानेन शक्यते?। अस्य सिद्धे प्रयोगेऽर्थमन्विच्छन्तो, यदवगम्यते तदर्थः शब्द इत्यवधारयामः। अस्माच्च पाशद्रव्यस्य मोचनेन सम्बन्धोऽवगम्यते, तदर्थता शब्दस्य भवितुमर्हति, न एकत्वेन बहुत्वेन वा प्रयोजनं। इह तु विकृतौ पाशस्य च पाशस्य च यौगपद्येन मोचनेन सम्बन्धो वदितव्यः, बहुवचनञ्च द्वयोः पाशयोरन्याय्यं तस्याभिधाने इह पुनर्न प्रयोगः, किन्तु प्रयोग एव चिन्त्यते,—कः शब्दः प्रयोक्तव्यः? इति। तत्र

प्रयोगेऽस्मदायत्ते किमित्यवाचकं प्रयोक्ष्यामहे विद्यमाने वाचके। न चायं द्वयोः छन्दसि दृष्टो बहुवचनान्तः, सोऽयं मन्त्रः प्रयुज्यमानोऽपभ्रंश एव स्यात् छान्दसः। न च बहुवचनं द्वित्वप्रत्ययार्थं लभ्यते लौकिके वैदिके च; न चाभिधित्सिते द्वित्वे द्वयोर्बहुवचनं भवति। तद्यथा देवदत्तयज्ञदत्ताभ्यां कर्त्तव्यमिति देवदत्तयज्ञदत्तशब्दद्वयादेव द्वित्वं प्राप्तं, न विभक्त्या विधित्स्यते, तथापि द्विवचनमेव भवति, न बहुवचनं। तस्मात् विकृतावूहितव्यमिति ॥ ८।३।४अ० ॥

---

अग्नीषोमीयपशौ पाशैकत्वपाशबहुत्वाभिधायिमन्त्रयोर्विकल्पाधिकरणम्।

सू० विप्रतिपत्तौ विकल्पः स्यात् समत्वाद्गुणे त्वन्यायकल्पनैकदेशत्वात् ॥ १५ ॥ (सि०) ॥

भा० अस्ति पशुरग्नीषोमीयः,—'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति; तत्र पाशैकत्वाभिधायी पाशबहुत्वाभिधायी च मन्त्रौ समाम्नातौ, तयोः किम् एकत्वाभिधायी प्रकरणे निविश्यते, बहुत्वाभिधायी प्रकरणादुत्कृष्यते, उत उभावपि प्रकरणमभिनिविशेते? इति। किं प्राप्तम्?—बहुत्वाभिधायी उत्क्रष्टव्यः इति। कुतः?। बहूनां हि स पाशानां मोचकः, नच प्रकरणे बहवः पाशाः सन्ति; तस्मात् प्रकरणेऽसम्बध्यमानो यत्र बहवः पाशास्तत्र नीयेत। यथा, 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्य्यात्' इति, 'एत असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यः प्रतिपदं कुर्य्यात्' इति प्रतिपद्विधान-

मुत्कृष्यते। यथा च पौष्ण-सावित्र-सारस्वत-द्यावापृथिवीयाद्य-नुमन्त्रणानि उत्कृष्यन्ते, एवं पाशबहुत्वाभिधाय्यपीति।

एवं प्राप्ते ब्रूमः,—'विप्रतिपत्तौ' एतस्यां (का विप्रतिपत्तिः? यत्* प्रकृतावेकः पाशः, पाशबहुत्वाभिधायी च मन्त्रः, एतस्यां विप्रतिपत्तौ) किं मन्त्र उत्कृष्यते, न? इति। उच्यते,—न उत्क्रष्टव्यः। 'ननु प्रकृतौ अन्यो मन्त्रः?'। उच्यते, तेन सह 'विकल्पो' भविष्यति। कुतः?। पाशप्रातिपदिकार्थस्य प्रकृतौ विद्यमानत्वात् उत्कर्षो न न्याय्यः। 'ननु बहुपाशवचन एष मन्त्रः, प्रकृतौ त्वेकः पाशः, तस्मात् तत्र न सम्भवति इति'। उच्यते,-बहूनप्यसौ पाशान् वदन् बहुत्वाधिष्ठानं द्रव्यं प्रकाशयत्येव, यदि न प्रकाशयेत् न पाशविशिष्टं बहुत्वं गम्येत! प्रकाशयति चेत् तावता नः प्रयोजनम्, तस्य हि उन्मोचनं क्रियते, न बहुत्वस्य, पाशाकृतेर्वा। तस्मात् तस्य प्रकाशनं कर्त्तव्यं, तत् प्रातिपदिकेन करिष्यते, नोत्कृष्यते। 'अस्त्येव† ह्येकवचनान्तं प्रातिपदिकं, तत्तस्य प्रकाशनं करिष्यति' इति। अत्रोच्यते,-न हि इदं तस्मादन्यत्। यद्येकवचनान्तं प्रातिपदिकं न उत्कृष्यते प्रकरणादित्युच्यते, सिद्धस्तर्ह्यनुत्कर्षस्तदेवेदमिति।

ननु 'बहुवचनस्य बहुपाशकप्रयोगेऽर्थवत्ता। तस्मादुत्कृष्टव्यम्। तदुत्कृष्यमाणम् एकदेशत्वात् प्रातिपदिकमुत्कर्षति' इति। उच्यते,-'गुणे त्वन्यायकल्पना'‡ स्यादिति न प्रधाने,

---

* यत् इति का॰ सं॰ पुस्तके नास्ति।

† अथोच्यते अस्त्येव हि इति का॰ सं॰ पु॰ पाठः।

‡ गुणे त्वन्याय्यकल्पना इति का॰ क्री॰ पु॰ पाठः।

गुणस्य विभक्त्यर्थः, प्रधानं प्रातिपदिकार्थः, प्रातिपदिकार्थविशेषो विभक्त्याऽभिधीयते, सति प्रातिपदिकार्थे विभक्त्यर्थेन भवितव्यम् ; नच विकृतौ प्रातिपदिकमस्ति, अनारभ्याप्यभिहितं प्रकृतिं प्रविशति, किमङ्ग पुनः प्रकृतावेवाभिहितं ; तस्माद्यत्र प्रातिपदिकार्थस्तत्र विभक्त्यर्थो भविष्यति ।

'ननु विकृतावपि चोदकेन प्राप्तं प्रातिपदिकं, प्रातिपदिकार्थश्च उच्यते'। बाढ़ं, विप्रकृष्टस्तु चोदकः, बहुवचनसमर्पकं* प्रातिपदिकं चोदको नोत्क्रक्ष्यति। तस्मात् प्रातिपदिकमेकदेशत्वात् बहुवचनमाक्रक्ष्यतीति। न च प्रकृतौ अनर्थकमेव बहुवचनं, पाशाकृतिकस्य हि तदुन्मोचने कर्म्मसम्बन्धं करोति। तस्मात् 'गुणे' बहुवचने 'अन्यायकल्पना'† न प्रधाने प्रातिपदिकार्थे इति। किं पुनरन्याय्यम्?। यद् बहुत्वं गम्यमानमविवक्षितमित्युच्यते, तत् कल्प्यतां, न तु प्रकृतौ प्रातिपदिकस्य प्रातिपदिकार्थाभिधानमन्याय्यं कल्पयितव्यम्। अस्य हि गुणस्यावाच्यमेव वैकृतं बहुत्वं सन्निधानाभावात्। तस्मात् प्रकृतौ बहुवचनान्तस्यापि निवेश इति ॥

सू० प्रकरणविशेषाच्च ॥ १६ ॥ (यु०) ॥

भा० 'प्रकरणविशेषाच्च' एतदध्यवसीयते, प्रातिपदिकं बहुवचनमाकर्षति, न प्रातिपदिकं बहुवचनेनोत्कृष्यते इति, प्रकृतौ हि प्रातिपदिकार्थो विद्यते अग्नीषोमीये पशौ, बहु-

* समर्थकमिति क० सं० पु० पाठः।

† अन्याय्यकल्पना इति का० औ० पु० पाठः।

वचनार्था विकृतिषु। तस्मादपि बहुवचनान्तस्य प्रकृतौ निवेश इति॥

उत्कर्षो वा ग्रहणत्वात् इति यदुक्तं, तत्परिहर्त्तव्यम्,—

सू० अर्थाभावात्तु नैवं स्यात् गुणमात्रमितरत्॥ १७॥ (आ० नि०)॥

भा० युक्तं यत् प्रतिपद्विधानमुत्कृष्यते, नास्ति प्रकृतौ यजमानद्वित्वं यजमानबहुत्वं वा, तत्र न भवेद्विषय एतयोः प्रतिपदोः। इह तु गुणमात्रं नास्ति बहुत्वं, अन्यत्तु बहुवचनस्य प्रयोजनं सुचिना सम्बन्धः, नचानेकप्रयोजनमन्यतमेन प्रयोजनेन न प्रयुज्यते। न हि उल्का प्रकाशनेनाप्रयुज्यमाना भस्मना न प्रयुज्यते। तस्मात् विषमं प्रतिपद्भ्यामिदमिति॥

सू० द्यावोस्तथेति चेत्॥ १८॥ (आ०)॥

भा० अथ यदुक्तं,—द्यावापृथिवीयादीनामनुमन्त्रणानां यथा उत्कर्षस्तथाऽस्येति, तत्परिहर्त्तव्यम्,—

सू० नोत्पत्तिशब्दत्वात्॥ १९॥ (आ०नि०)॥

भा० नैतदनुमन्त्रणेन तुल्यं, न हि दर्शपूर्णमासयोर्द्यावापृथिव्यादीनामुत्पत्तौ शब्दोऽस्ति, अस्ति त्विह पाशस्योत्पत्तौ शब्दः; तस्मात् विषममनुमन्त्रणेनेति॥ (८।२।५अ०)॥

---

दर्शपूर्णमासयोर्हि पत्नीके प्रयोगे पत्नीं सन्नह्येति मन्त्रस्यानूहाधिकारणम्।

सू० अपूर्वे त्वविकारो प्रदेशात् प्रतीयेत॥ २०॥

भा० दर्शपूर्णमासयोरामनन्ति,—'प्रोक्षणीरासादयेध्मं बर्हिः उपसादय स्रुचः सम्मृड्ढि पत्नीं सन्नह्य आज्येनोदेहि' इति । तत्र, पत्नीं सन्नह्येति चिन्त्यते,—अस्ति हि यजमान एकपत्नीको बहुपत्नीकश्च, तत्र सर्वस्य प्रयोगमधिकृत्य पत्नीशब्द उच्चरतीति एतत्प्रायाधिकरणेनैव निर्णीतम्, इदन्तु सन्दिह्यते,—किं द्विपत्नीके बहुपत्नीके च प्रयोगे ऊहितव्यः पत्नीशब्दः, उत न ? इति । किं प्राप्तम् ?—अभिधानार्थत्वादाम्नानामूहितव्यः इति ।

एवं प्राप्ते ब्रूमः,—'अपूर्वे तु' अप्रकृतिपूर्वके कर्मणि अविकारेण प्रयुज्येत । कुतः ? । ईकारान्तं ह्येदं पत्नीमात्रस्य वाचकं, तत्र द्विपत्नीके बहुपत्नीके च प्रयोगे पत्नीशब्दे उपादीयमाने द्विवचनं बहुवचनं च सामर्थ्यात् प्राप्नोति सन्नहनसम्बन्धं कर्तुं, समाम्नानसामर्थ्यात्तु एकवचनेन क्रियते । नचात्र द्वित्वं बहुत्वं वा विवक्ष्यते, अचयत्वेन हि पत्नीशब्दस्य श्रवणात्, नचैकपत्नीकात प्रयोगाद्द्विपत्नीके प्रयोगेऽतिदेशो भवति, यथा तत्र सङ्ख्या उक्ता तद्वदिहापि इति । तस्मादविकारेण पत्नीशब्दस्य प्रयोगः । अत्रापि कश्चिदेकत्वं विवक्ष्येत, तथापि द्विपत्नीके प्रयोगे सम्प्रतिपत्त्यभावादेकवचनार्थमेकवचनं, तदनेकपत्नीके प्रयोगेऽविवक्षितमित्यविकारेण प्रयुज्यते इति ॥ (९।२।६ अ०) ॥

---

द्विपत्नीके विकृतियागेऽपि पत्नीं सन्नह्येति मन्त्रस्यानूहाधिकरणम् ।

सू० विकृतौ चापि तद्वचनात् ॥ २१ ॥

भा० अथेदानीं विकृतौ पत्नीशब्दश्चिन्त्यते,—किं द्विपत्नीके बहु-

पत्नीके च प्रयोगे ऊहितव्यः, न? इति। द्विवाची बहुवाची वा पत्नीशब्दो द्विवचनं बहुवचनञ्चोपाददानः प्रकृतौ समाम्नानेन बाधितः इह समाम्नानाभावात् उपादातुमर्हति इति।

एवं प्राप्ते ब्रूमः,—'विकृतौ' 'अपि' अविकारेण प्रयोक्तव्य इति। कुतः?। 'तद्वचनात्', यत् प्रकृतौ तत् विकृतौ कर्त्तव्यमिति तद्वचनं, प्रकृतौ चैकत्वमविवक्षितमिहापि द्वित्वं बहुत्वमेकत्वञ्च न विवक्षितव्यमिति, तस्मादविकारः। अथ वा तदेव विवक्षितं, तदनेकपत्नीकेऽपि अविरुद्धमित्यविकार एवाव-सीयते॥ (९।२।७अ०)॥

---

सवनीयपशूनामग्नीषोमीयसमानविधानत्वे 'प्राशा अस्मि' इति मन्त्रेऽनूहाधिकरणम्।

सू० अध्रिगुः* सवनीयेषु तद्वत्समानविधानाश्चेत्॥ २२॥

भा० अस्ति सोमे पशुरग्नीषोमीयः,—'यो दीक्षितो यदग्नी-षोमीयं पशुमालभते' इति। तत्राध्रिगौ इदं समाम्नायते,— 'प्राशा अस्मि भरतस्तृणीत बर्हिरन्वेनं माता मन्यतामनु पिता-ऽनु भ्राता' इत्येवमादि। यदा तु अग्नीषोमीयाः सवनीयाश्च समानविधानाः, तदेदं विचार्य्यते†,—किम् अध्रिगौ 'प्राशा' इत्येवमादि पदमूहितव्यम्, उत न? इति। किं प्राप्तम्?।

---

* अध्रिगौ इति पाठो भवितुं युक्तः।

† "यदाग्नीषोमीयः सवनीयाश्च समानविधानाः, तयेदं विचार्य्यते" इति सर्व्व पाठो न सम्यक्।

ततः अतिदेशः क्रियते,—अग्निमो ‘मद्वत्’ इति, तत्र यः पशु—धिकरणे पूर्वपक्षः स इह पूर्वपक्षः, यः सिद्धान्तः स इह सिद्धान्तः ;. ऊह इति पूर्वपक्षः, अविकार इति सिद्धान्तः* ॥ (८।२।८अ०) ॥

---

नीवाराणां व्रीहिप्रतिनिधित्वे मन्त्रे व्रीहिशब्दस्यानूहाधिकरणम् ।

सू० प्रतिनिधौ चाविकारात् ॥ २३ ॥ (सि० ) ॥

भा० अस्ति प्रतिनिधिः श्रुते द्रव्येऽपचरति,—“आगमो वा चोदनार्थाविशेषात्”(६६०पृ०) इति । स च सदृशः “सामान्यं तच्चिकीर्षा”(६६६पृ०)इति । तद् यदा व्रीहिषु अपचरत्सु नीवारा उपादीयन्ते प्रतिनिधित्वेन, तदा व्रीहिमन्त्रो यः समाम्नातः,—‘स्योनं ते सदनं कृणोमि । घृतस्य धारया सुशेवं कल्पयामि तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः’ इति ; तं प्रति सन्देहः,—किं नीवारेषु व्रीहिशब्दस्य ऊहेन प्रयोगः, उताविकारेण ? इति । किं प्राप्तम् ?—अविकारेण व्रीहिशब्दः प्रयुज्यमानः कार्य्यवतो नीवारान् न शक्नोति प्रकाशयितुमिति तेषु प्रकाशयितव्येषु नीवारशब्दः प्रयोक्तव्यो भवति । तस्मात् ऊहः कर्त्तव्य इति ।

एवं प्राप्ते ब्रूमः,—‘प्रतिनिधौ च अविकारात्’ प्रतिनिधौ

---

* “इत्यादिचिन्ता क्रियते” इत्यारभ्य “परमार्थतस्तु उपजीव्यपशूनामग्नीषोमीयविकृतित्वात् अध्येव लिङ्गवचनयोः प्रामाण्यात्कोहः,” इति न्यायमाला अत्र अनुसन्धेया ।

चेति ऊहो न कर्त्तव्य इत्यनुमास्यते। किमेवं भविष्यति?। एवमविकारो भविष्यति, तत्रार्षमनुग्रहीष्यते, तस्मादनूहः॥

सू० अनाम्नानादशब्दत्वमभावाच्चेतरस्य स्यात्॥ २४॥ (आ०)॥

भा० न चैतदस्ति—अनूह इति, एवमनूहो भवेत्, यदि तस्मिन् मन्त्रे व्रीहिशब्दो नाम्नातः स्यात्, 'अभावाच्चेतरस्य' यदि नेदं नीवाराख्यं स्यात्, न चेदमुभयमस्ति तस्मादभिधानसिद्धये ऊहितव्यो नीवारशब्द इति॥

सू० तादर्थ्याद्वा तदाख्यं स्यात् संस्कारैरविशिष्ट-त्वात्॥ २५॥ (आ० नि०)॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,-नैतदस्ति,—ऊह इति, अविकारेण प्रयोगः। कुतः?। 'तादर्थ्यात्' तादर्थ्यं व्रीह्यर्थता नीवाराणां, ये व्रीहिप्रोक्षणादयः संस्काराः क्रियन्ते, संस्कारैरविशिष्टत्वात्स व्रीहिशब्दो यथा धान्येषु व्रीहिलक्षितेषु भवति, एवम् एतेषु अपि नीवारेषु; तस्मादविकारेण प्रयोक्तव्यः इति॥

सू० उक्तञ्च तत्त्वमस्य॥ २६॥ (यु०)॥

भा० कथं पुनर्ज्ञायते,—यो यो व्रीहिगतो विशेषः स नीवारेष्विति?। 'उक्तञ्च तत्त्वमस्य' उक्तोऽस्य विशेषस्य तद्भावः षष्ठेऽध्याये (७६६पृ०) "सामान्यं तच्चिकीर्षा" इति, तस्मादप्यविकारः॥ (८।२।८अ०)॥

---

द्विपश्वादौ सूर्य्यं चक्षुर्गमयतादित्यस्याऽऽममूहाधिकरणम् ।

सू० संसर्गिषु चार्थस्याऽस्थितपरिमाणत्वात् ॥ २७ ॥ (सि०)॥

भा० सन्त्यग्निषोमीये संसर्गिणोऽर्थाः,-तद्यथा चक्षुः प्राण इत्येवमादयः 'सूर्य्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतात्' इति। द्विपश्वादिषु पशुगणेषु किमूहितव्य उत, न? इत्युच्यते। 'ननु अन्यायनिगदत्वादेवायं नोहितव्यः, द्वयोश्चक्षुषोरेकवचनान्तो यतः श्रूयते'। उच्यते, नायमग्निषोमीयो अधिष्ठानयोः सूर्य्यगमनमाह, नहि अधिष्ठाने सूर्य्यं गच्छतः, तेजोरश्मिवचनस्त्वयं, एकञ्च तत्तेजः; तस्मान्न अयमन्यायनिगदः। द्विपश्वादिषु च वैकृतेषु प्रयोगेषु 'मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च सन्धावन्नकामः' इत्येवमादिषु पशुभेदात्तेजसो भेदे गम्यमाने ऊहः स्यादिति प्राप्नोति। 'ननु एकस्मिन्नपि पशावधिष्ठानभेदेन भिन्ने एव तेजसी'। न-इत्युच्यते,-'सूर्य्यमस्य चक्षुर्गमयतात्' इति यत् पशोस्तेजस्तत् हि विवक्षितं, नाधिष्ठानभेदः, पश्वन्तरेषु पशुतेजोभेदादूह इति।

एवं प्राप्ते ब्रूमः,-'संसर्गिषु चार्थस्याऽस्थितपरिमाणत्वात्', संसर्गिषु अर्थेषु यद्यपि पशुभेदस्तथापि रश्मीनां संसर्ग एवैकीभूतास्तेषां रश्मयः, यथैव पानीयस्य तैलस्य घृतस्य वा स्तोका नानादेशेषु भिन्नाः समानदेशे एकीभूता भवन्ति तद्वद्रश्मयः, तस्मादेकवचनान्तस्तेषां वाचक इत्यनूहः स्यात् ॥

सू० लिङ्गदर्शनाच्च ॥ २८ ॥ (यु० ) ॥

भा० लिङ्गं खल्वपि भवति, यथा संसर्गिणो न ऊह्यन्ते

चेति ऊहो न कर्त्तव्य इत्यनुक्तम्यते। कथमेवं भविष्यति?। एवमविकारो भविष्यति, तत्रार्थमनुग्रहीष्यते, तस्मादनूहः॥

सू० अनाम्नानादशब्दत्वमभावाच्चेतरस्य स्यात्॥२४॥(आ०)॥

भा० न चैतदस्ति—अनूह इति, एवमनूहो भवेत्, यदि तस्मिन् मन्त्रे व्रीहिशब्दो नाम्नातः स्यात्, 'अभावाच्चेतरस्य' यदि नेदं नीवाराख्यं स्यात्, न चेदमुभयमस्ति तस्मादभिधानसिद्धये ऊहितव्यो नीवारशब्द इति॥

सू० तादर्थ्याद्वा तदाख्यं स्यात् संस्कारैरविशिष्टत्वात्॥२५॥(आ० नि०)॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,-नैतदस्ति,—ऊह इति, अविकारेण प्रयोगः। कुतः?। 'तादर्थ्यात्' तादर्थ्यं व्रीह्यर्थता नीवाराणां, ये व्रीहिप्रोक्षणादयः संस्काराः क्रियन्ते, संस्कारैरविशिष्टत्वाच्च व्रीहिशब्दो यथा धान्येषु व्रीहिलक्षितेषु भवति, एवम् एतेषु अपि नीवारेषु; तस्मादविकारेण प्रयोक्तव्यः इति॥

सू० उक्तञ्च तत्त्वमस्य॥२६॥(यु०)॥

भा० कथं पुनर्ज्ञायते,—यो यो व्रीहिगतो विशेषः स नीवारेष्विति?। 'उक्तञ्च तत्त्वमस्य' उक्तोऽस्य विशेषस्य तद्भावः षष्ठेऽध्याये (७६६पृ०) "सामान्यं तच्चिकीर्षा" इति, तस्मादप्यविकारः॥ (८।२।८अ०)॥

---

द्विपशुयागे सूर्यं चक्षुर्गमयतादित्यादिनिगदस्याऽनूहाधिकरणम्।

सू॰ संसर्गिषु चार्थस्यास्थितपरिमाणत्वात्॥ २७॥ (सि॰)॥

भा॰ सन्त्यध्रिगुप्रैषे संसर्गिणोऽर्थाः,-तद्यथा चक्षुः प्राण इत्येवमादयः 'सूर्यं चक्षुर्गमयताद्वातं प्राणमन्ववसृजतात्' इति। द्विपश्वादिषु पशुगणेषु किमूहितव्य उत, न? इत्युच्यते। 'ननु अन्यायनिगदत्वादेवायं नोहितव्यः, द्वयोश्चक्षुषोरेकवचनान्तो यतः श्रूयते'। उच्यते, नायमध्रिगो अधिष्ठानयोः सूर्यगमनमाह, नहि अधिष्ठाने सूर्यं गच्छतः, तेजोरश्मिवचनस्त्वयं, एकञ्च तत्तेजः; तस्मान्न अयमन्यायनिगदः। द्विपश्वादिषु च वैकृतेषु प्रयोगेषु 'मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च सन्धावन्नकामः' इत्येवमादिषु पशुभेदात्तेजसो भेदे गम्यमाने ऊहः स्यादिति प्राप्नोति। 'ननु एकस्मिन्नपि पशावधिष्ठानभेदेन भिन्ने एव तेजसी'। न-इत्युच्यते,-'सूर्यमस्य चक्षुर्गमयतात्' इति यत् पशोस्तेजस्तत् हि विवक्षितं, नाधिष्ठानभेदः, पश्वन्तरेषु पशुतेजोभेदादूह इति।

एवं प्राप्ते ब्रूमः,-'संसर्गिषु चार्थस्यास्थितपरिमाणत्वात्', संसर्गिषु अर्थेषु यद्यपि पशुभेदस्तथापि रश्मीनां संसर्ग एवैकीभूतास्तेषां रश्मयः, यथैव पानीयस्य तैलस्य घृतस्य वा स्तोका नानादेशेषु भिन्नाः समानदेशे एकीभूता भवन्ति तद्वद्रश्मयः, तस्मादेकवचनान्तस्तेषां वाचक इत्यनूहः स्यात्॥

सू॰ लिङ्गदर्शनाच्च॥ २८॥ (यु॰)॥

भा॰ लिङ्गं खल्वपि भवति, यथा संसर्गिणो न ऊह्यन्ते

इति, 'न माता वर्द्धते न मज्जा न नाभिः प्राणो हि सः' इति प्राणस्य सिद्धमनूद्य हेतुत्वेनोपदिशति, तस्मात् संसर्गिणो नोह्यन्ते इति ॥ (८।२।१० अ०) ॥

---

द्विपश्वादौ अध्रिगुप्रैषे एकधेत्यस्य शब्दस्याभ्यासाधिकरणम् ।

सू० एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यात् ॥

॥ २९ ॥ (सि०) ॥

भा० अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयो 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति तत्राध्रिगुप्रैषे समाम्नायते,-'एकधाऽस्य त्वचमाच्छ्यतात्' इति तद्विकृतौ द्विपश्वादिषु सन्दिह्यते, किमभ्यसितव्यः, उताविकारेण प्रयोक्तव्यः? इति। किं प्राप्तम्?—एकधेत्ययमभ्यसितव्यः। कुतः?। 'एकसंयोगात्' एकस्त्वचः प्रकारः आच्छ्यता कर्त्तव्या इति, तत्र द्वयोर्बह्वीषु वा तसु उत्कृत्यमानासु नैकः प्रकारो भवति, पर्यायेण हि तां पशुभ्योऽपाच्छ्यन्ति* एकस्यां त्वचि अपाच्छ्यमानायामेकेन प्रकारेणापाच्छ्येयुस्तस्मादसर्वविषयो भवति अविकृतः शब्दः प्रयुज्यमानस्तस्मादभ्यसितव्यः इति ॥

सू० अविकारो वा बहूनामेककर्मवत् ॥ ३० ॥ (पू०) ॥

भा० वाशब्दात्पक्षो विपरिवर्त्तते,-नैतदस्ति,-अभ्यसितव्य इति,

---

* पर्य्यायेण हि ताः पशुभ्यो पाछ्यन्ति इति का० सं० पु० पाठः ।

अविकारेण प्रयोक्तव्य इति । कुतः? । ऐकध्यवचन एष शब्दः, 'एकीकुरु एषां त्वचः' इति ।

किं तत्र ऐक्यं एककालोपदेशो वा एकदेशोपदेशो वा ? । 'बहु-नामिककर्मवत्', यथा बहुनामिककाले कर्माणि भवन्ति,—'एकधा माः पाययति' इति, एवमिहापि 'ऐकध्यं त्वचः कुरु' इति, बहूनां तु एकीकरणं शक्यते कर्त्तुं, नैकस्यास्त्वचः ; तस्माद्बह्वीषु त्वक्षु एकीकरणमेकधाशब्दो वदतीत्यवसेयम् ॥

सू० सकृत्त्वं त्वैकध्यं स्यादेकत्वात्त्वचोऽनभिप्रेतं तत्प्रकृतित्वात् परेष्वभ्यासेन विवृद्धावभिधानं स्यात् ॥ ३१ ॥ (उ०) ॥

भा० तुशब्दः पक्षं व्यावर्त्तयति,—नाविकारः, अभ्यसितव्यः शब्द इति, एककाले कामस्याभिधीयमाने सकृत्त्वं त्वचामभिहितं भवति, तत्प्रकृतावेकस्यास्त्वचि असम्भवात् 'अनभिप्रेतं तत्प्रकृतित्वात्' उत्तरासान्ततीनां 'परेषु' वर्धमानेषु पशुषु अभ्यासेन 'अभिधानं' स्यात् ॥ (९।२।११ अ०) ॥

---

द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारत्वाधिकरणम् ॥

सू० मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात्तस्य चान्यायनिगदत्वात् सर्वत्रैवाविकारः स्यात् ॥ ३२ ॥ (१म पू०) ॥

भा० अस्ति ज्योतिष्टोमेऽग्नीषोमीये पश्वावभिगुमैषे मेधपति-

शब्द एकवन्निगदः, परेषां शाखिनां द्विवन्निगदः। तं प्रति संशयो भवति, द्विपशादिषु पशुगणेषु किमविकारेण इतरश्चेतरश्च प्रयोक्तव्यः, उत स्वामिपर ऊहः कर्त्तव्यः, उत देवतापरः? इति। किम्प्राप्तम्?—अविकारः। कुतः? ‘मेधपतित्वं स्वामि-देवतस्य’,—स्वामी मेधपतिर्देवता च, स्वामिना पशुर्देवताभ्या-न्दत्तः सङ्कल्पितः, मेधपतये स्वामिनेऽप्यसौ भवति, तस्य कार्यं करिष्यतीति। देवताभ्यामपि ताभ्यामुत्स्रक्ष्यते इति। त्रया-णामपि हि तं मेधं प्रति आधिपत्येन समवायोऽस्ति, सर्वत्र च आधिपत्ये पतिशब्दः प्रयुक्तः, आ हिमवतः, आ च कुमारीभ्यः, स एव त्रयाणां एकवचनान्तो वाचको द्विवचनान्तश्च, यथा प्रकृतावविवक्षितैकत्वोऽविवक्षितद्वित्वश्च सम्बन्धमात्रनिबन्धनः, एवं सर्वासु विकृतिषु; तस्मान्न विक्रियेत॥

सू॰ अपि वा द्विसमवायोऽर्थान्यत्वे यथासंख्यं प्रयोगः स्यात्॥ ३३॥ (२य पू॰)॥

भा॰ ‘अपि वा’ नैतदेवं,—तयोरिह समवायः,—एकवन्निगदस्य, द्विवन्निगदस्य च। तयोरेकवन्निगदः स्वामिनि प्रयोक्ष्यते, येषां समाम्नातः; येषां द्विवन्निगदः समाम्नातस्तेषां सदेवते वक्ष्यति। तस्माद्द्विवत्तो बह्वीषु देवतासु द्विवन्निगद ऊहेन प्रवर्त्तिष्यते, यजमानेष्वेकवन्निगद ऊहिष्यते। एवं यथासंख्यं प्रयोगो भविष्यति॥

सू॰ स्वामिनो वैकशब्द्यादुत्कर्षो देवतायां स्यात् पत्न्यां द्वितीयशब्दः स्यात्॥ ३४॥ (३य प॰)

भा॰ वाशब्दः पक्षं व्यावर्त्तयति,—स्वामिदेवतयोरुभयो-र्वाचक इति, नैतदेवं, एक एव मेधपतिशब्दः ; यस्मात् द्विवचनं, यस्मात् एकवचनं, स एव न स्वामिदेवतयोर्वाचको भविष्यति। 'ननु एकोऽपि मेधपतिः अपरोऽपि प्रतीयते, कथमवाचक इत्यु-च्यते'*। यदा स्वामिनस्तदा मेधपतये यो मेधस्तं मेध्यादुर उपनयतेति सम्बन्धः, यदा देवतावचनस्तदा मेधपतये उपनयत मेध्यादुर इति सम्बन्धः, स एष सकृदुच्चरित उभाभ्यां पदाभ्यां न सम्बन्धमुत्सहते, वचनव्यक्तिभेदात् वाक्यभेदः प्रसज्यते। तस्मात् 'स्वामिनो' वाचक इति अध्यवसीयते।

'अथ किमर्थं न देवतावचनः कल्प्यते ?'। तथा हि कल्प्य-माने एकवन्निगदे उत्कृष्येत एकदेवत्यः क्रतुः, तत्र प्रकरणं बाध्येत ! यजमानवचने पुनः कल्प्यमाने न द्विवन्निगद उत्कृष्येत, तत्रैव यजमानयोर्दम्पत्योर्वाचको भविष्यति, तस्मात् प्रकरणानुग्रहाय स्वामिवचनः कल्प्यते, स्वामिपरश्चोहो भवि-ष्यतीति॥

सू॰ देवता तु तदाशीष्ट्वात्सम्प्राप्तत्वात् स्वामिन्यन-र्थिका स्यात्॥ ३५॥ (सि॰)॥

भा॰ तुशब्दः पक्षं व्यावर्त्तयति,—न स्वामिवचनो देवतापरो भविष्यति। कुतः ?। 'तदाशीष्ट्वात्' 'आशासाना मेधपतये मेधमिति देवताभ्यां हविराशास्यते, मेधपतिभ्यां मेधमाशासाना

* कथमवाचकः ?' इति। उच्यते,—इति वा पाठः।

उपनयत ताभ्याम्' इति यजमानं प्रत्याम्नासानानुकीर्त्तनमनर्थकम्, अकर्त्तव्यञ्च, स प्राप्त एव स्वामिनं, मेधः किमर्थमाम्नास्यते। न च तेन नित्यमेव स्वामिसम्बन्धेन प्रयोजनं। याग एव हि न संवर्त्तेत। तस्माद्देवतावचनो मेधपतिशब्द इति॥

सू॰ उत्सर्गाच्च भक्त्या तस्मिन् पतित्वं स्यात्॥ ३६॥

(यु॰)॥

भा॰ उत्सृष्टश्च यजमानेन नायं ममेति, केवलं परकीयो रक्ष्यते, कालेन देवतया सम्भंत्स्यते इति। कः पुनरस्य देवतया सम्बन्धः?। यत्तामुद्दिश्य परित्यागोऽस्य स्मर्यते, स च यागात् प्राक्तनः, तस्मात् यागात्परार्थं द्रव्यं नात्मीयं परित्यज्य भास्ते, भात्मप्रधानं यत्तदात्मीयं, न यं प्रति भात्मा गुणभूतस्तादृशेषु भक्त्या पतित्वं भवति; तस्मात् देवतयोरेव तत्र मुख्यं मेधपतित्वं, भाक्तं स्वामिन इति॥

सू॰ उक्तश्चानेकसंयुक्तो द्विदेवते सम्भवात्॥ ३७॥

(भा॰)॥

भा॰ इति यदुक्तं, तत्परिहर्त्तव्यम्,—

सू॰ एकस्तु समवायात्तस्य तल्लक्षणत्वात्॥ ३८॥

(आ॰ नि॰ १ म)॥

भा॰ अथोच्यते, यो हि तौ द्वावग्नीषोमौ तयोर्गच्छे मेधपतिशब्दः, सचाच देवतासमवेतस्तस्मिन् कर्मणि एकस्मै गत्वाव

'मेध उपनयत' इत्युच्यते। तस्मादेकवचनान्तो गणवाची मेधपतिशब्दो नोत्कृष्यते इति॥

सू० संसर्गित्वाच्च तस्मात्तेन विकल्पः स्यात्॥ ३९॥

(आ० नि० २ य)॥

भा० अयं चान्यः परिहारः,—संसर्गी अयमर्थो देवता नाम, द्वावर्थौ संसृष्टौ कदाचिदेका देवता भवति। यदि द्वयाय परिकल्पितं किञ्चित् द्रव्यं, तत्र द्वयं देवता भवति, द्वावर्थौ संसृष्टौ एकतां यातः। तस्मादेकवचनान्तोऽपि प्रकरणमभिनिविशते, पूर्वेण च सह विकल्पेत इति॥

सू० एकत्वेऽपि गुणानपायात्॥ ४०॥ (यु०)

भा० अन्याय्यं वचनमिदं, मा तावत् भूदिहैकत्वमर्थः, तथापि प्रकरणमनुप्रविशेतैव एकवचनान्तः, प्रातिपदिकं हि तस्य विद्यमानार्थम्, एकवचनस्योपनयनसम्बन्धार्थम्, एकत्वं वाऽविवक्षितं; तस्मान्न प्रकरणादुत्कृष्येत इति। अथोच्यते, 'एकत्वविशिष्टस्य विभक्तिः सम्बन्धं ब्रवीति' इति। तथाप्यस्मत्पक्ष उपपद्यतेतरां, सर्वोऽपि ह्येकत्वसम्बद्ध इति। 'अथ सम्बन्धं करोति एकत्वञ्च ब्रवीतीति'। न तेन विशिनष्टि अविवक्षितत्वाद्विरुद्धं भविष्यति इति। अथोच्यते,—'अविवक्षितेऽपि वचने एकत्वसम्बन्धे एकवचनं भवति नान्यथेति'। तथा मेधपतिगतमेकत्वमस्य भविष्यति, ततः सोऽनुवदिष्यते तस्माददोष इति॥ (८।२।१२अ०)॥

---

बहुदेवत्य पशावपि एकवचनान्तमेधपतिशब्दस्य विकल्पाधिकरणम् ॥

सू० 　नियमो बहुदेवते विकारः स्यात् ॥ ४१ ॥ ( पू० ) ॥

भा० 　अस्ति बहुदेवत्यः पशुः, 'स एतान् पशूनादित्येभ्यः कामाय आलभते' इति ; तथा 'वैश्वदेवं धूम्रमालभेत' इति । अस्ति तु प्रकृतौ अग्नीषोमीये द्विवचनिगद एकवचनिगदश्च मेधपतिशब्दः चोदकप्राप्तः सन्दिह्यते,—किं द्विवचनिगद ऊहितव्यः, एकवचनिगदो निवर्त्तेत, उत उभावपि परस्परेण विकल्पमानौ निविशयाताम् ? इति । किं तावत् प्राप्तं ?—द्विवचनिगदः समवेताभिधायित्वात् ऊहितव्यः, एकवचनिगदोऽशक्नुवन्नभिधातुमित्येतावता दर्शनेन निवर्त्तते एष नियमः । आह,—'ननु प्रकृतौ द्वित्वस्याविवक्षितत्वादविकारेण प्रयोगः प्राप्नोतीति' । उच्यते, अविशेषकमत्र द्वित्वं ननु तत्र समवेतत्वं गम्यते, न च गम्यमानं निःप्रयोजनम्, अन्यसंख्यापरिच्छेदेन पुनः संख्येयमुपस्थापयति, तदस्य दृष्टमेव प्रयोजनं । तस्माद्बहुष्वप्यूहो भवतीति ॥

सू० 　विकल्पो वा प्रकृतिवत् ॥ ४२ ॥ ( सि० ) ॥

भा० 　यदुक्तं द्विवचनान्त ऊहितव्य इति, तत् अङ्गीम, यत्त्वेकवचनान्तो निवर्त्तेतेति तन्न, एकवचनान्तोऽपि प्रकृतिवदिह द्विवचनान्तेन विकल्पितुमर्हति । उक्तं हि गणाभिप्रायस्तत् प्रकृतौ, संसर्गित्वाद्वा देवतानामिति, तद्वदिहापि गणाभिप्रायात् संसर्गित्वाद्वा देवतानां विकल्पेन निवेक्ष्यते इति ॥(८।३।१३ अ०)॥

---

एकादश्यिन्याम् एकवचनान्तमेधपतिशब्दस्यैवाविकरणम् ॥

सू॰ अर्थान्तरे विकारः स्याद्देवतापृथक्त्वादेकाभिसमवायात् स्यात् ॥ ४३ ॥

भा॰ अस्त्येकादश्यिनी, 'प्रैषाग्नेयेन* वापयति मिथुनं सारस्वत्या करोति रेतः सौम्येन दधाति प्रजनयति पौष्णेन' इत्येवमादि। अस्ति च प्रकृतौ अग्निषुप्रैषे एकवचननिगदो द्विवचननिगदश्च मेधपतिशब्दः, तस्येह चोदकप्राप्तिरिष्यते,—द्विवचननिगद ऊहितव्य एव, अथैकवचननिगदः किमविकारेण प्रवर्त्तेत, उत निवर्त्तेत?। किं प्राप्तं?—'विकल्पो वा प्रकृतिवत्' इति। एवं प्राप्ते ब्रूमः,—'विकारः' एवैकादश्यिन्यां न विकल्पः, तत एकवचनान्तेन निवर्त्तितव्यं। कुतः?। 'देवतापृथक्त्वात्', पृथगत्र देवता, अन्यस्य पशोरन्या देवता, अन्यस्यान्येत्येवं, नात्र गणो देवतात्वेन, तदभावात् संसर्गित्वमपि नास्ति। प्रकृतौ च एतद्द्वयं कारणं, एकवचनान्तस्य निवेशे न तदभावादिहास्ति प्रवृत्तिः। यच्चोक्तम्, एकत्वेऽपि गुणानपायादिति, परपक्षमन्वारभ्य तद्वचनं न स्वपक्षः तस्माददोष इति॥ (९।३।१४अ॰)॥

इति आचार्य्यशबरस्वामिनः कृतौ मीमांसाभाष्ये नवमस्य अध्यायस्य तृतीयः पादः ॥ ० ॥

---

* प्रैषाग्नेयेन इति न्यायमालायां पाठः।

## नवमाध्यायस्य चतुर्थः पादः ।



षड्विंशतिरस्य वङ्क्रय इत्यादौ समभ्यासाधिकरणम् ॥

सू० षड्विंशतिरभ्यासेन पशुगणे तत्प्रकृतित्वाद्गणस्य प्रविभक्तत्वादविकारे हि तासामकार्त्स्न्येनाभिसम्बन्धो विकाराच्च समासः स्यादसंयोगाच्च सर्वाभिः ॥ (१म पू०) ॥

भा० अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः,—'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्राध्रिगुप्रैषे इदमाम्नायते,—'षड्विंशतिरस्य वङ्क्रयः'* इति । तच्चोदकेन द्विपश्वादीन् पशुगणान् संप्राप्तं । 'मैत्रं श्वेतमालभेत वारुणं कृष्णमपाञ्चौषधीनाञ्च सन्धावन्नकामः' इत्येवमादिषु अयमर्थः सांशयिकः, किं षड्विंशतिशब्दोऽभ्यसितव्यः, किमविकारेण प्रयोक्तव्यः, किं

---

* 'षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्यावयतात्' इति । अयमर्थः—वङ्क्रयो वक्राणि पार्श्वस्थानि अस्थीनि, तानि अस्य पशोः षड्विंशतिसङ्ख्याकानि एकैकस्मिन् पार्श्वे त्रयोदशानामवस्थितत्वात्, ताश्च वङ्क्रीरनुष्ठ्या अनुक्रमेण नवधिता इति यावत् । उच्यावयतात् उद्धरतादिति । सोऽयं मन्त्रो वङ्क्रीणामुद्धरणे करणतया न विनियुक्तः किन्तु संज्ञपनात् प्राक् पशौ नीयमाने होत्रा प्रयुज्यते इति व्याख्याता अत्र अनुसन्धेया ।

वचनमात्रमुच्चरितव्यम्, अथ प्रत्यपदाभ्यासः, उत समस्य वचनम्? इति। किं प्राप्तं?—षड्विंशतिशब्दोऽभ्यसितव्यः, 'छिपश्वादिषु पशुगणेषु प्रकृतावेकस्य पशोः षड्विंशतिर्वङ्क्रय उक्ताः, इह स गुणः* प्रविभक्तः, पशौ पशौ षड्विंशतिवङ्क्रयः, तत्र यदि अविकारेण प्रयुज्येत, न कृत्स्ना वङ्क्रीरभिवदेत्; अथ समस्य वचनं क्रियते, तथा षड्विंशतिशब्दो निवर्त्तेत, तत्रार्थं बाधितं स्यात्। नच सर्वाभिर्वङ्क्रिभिः पशोः सम्बन्धोऽस्ति; पशुद्वयस्य ताभिः सम्बन्धः, नच पशुद्वयं पशुः।

'ननु पशोः कार्ये यः पशोः स्थाने, स वङ्क्रिभिः सम्बन्धयितव्यः, तथा हि प्रकृतो वचनं कृतं, समस्ताभिर्वङ्क्रिभिः पशुद्वयस्य सम्बन्धे कृते एकैकस्य षड्विंशत्या सम्बन्धः प्रत्यायितः स्यात्'। अत्रोच्यते,—नैवं, प्रकृतो साक्षात् षड्विंशत्या पशुसम्बन्धः, इह परसंख्यया सम्बन्धे क्रियमाणे परोक्षयाऽवयवसंख्यया सम्बन्ध आनुमानिकः स्यात्। न च नियोगतः षड्विंशत्या एकैकस्य सम्बन्धः प्रत्यायितः स्यात्, पञ्चविंशतिरेकस्य सप्तविंशतिरेकस्येत्यमपि तत्र गम्येत, न चैवं प्रकृतावभिधानं कृतं, तस्मादभ्यसितव्य इति॥

सू० अभ्यासेऽपि तथेति चेत्॥ २॥ (आ०)॥

भा० 'इति चेत्' भवान् पश्यति,—समासवचने अप्राकृतः शब्द उच्चरितो भवति इति। 'अभ्यासेऽपि' अनभ्यस्तं प्रकृतो वचनम्, इह साभ्यासमप्राकृतं स्यात्॥

---

* च तत्र इति क० स० पु० पाठः।

सू॰ न गुणादर्थकृतत्वाच्च॥ ३॥ (आ॰ नि॰)॥

भा॰ नैष दोषः, गुण एव शब्दस्याभ्यासो नाम, स मत्पक्षेऽप्राकृतः, त्वत्पक्षे पुनः शब्द एव, अङ्गगुणविरोधे च तादर्थ्यादित्युक्तं। अर्थाच्च मयैतदश्रुतमुपादीयते, प्रविभक्तं गुणं वक्तुं, यच्च श्रुतचिकीर्षयाऽश्रुतं क्रियते, इष्यते एव तदस्माभिः तस्माद्दोषः॥

सू॰ समासेऽपि तथेति चेत्॥ ४॥ (आ॰)॥

भा॰ 'इति चेत्' पश्यसि,—अभ्यासवचने चोदकोऽनुगृहीतो भविष्यति, कार्त्स्न्येन वङ्क्रयो वक्ष्यन्ते इति, 'समासेऽपि' चोदकानुग्रहः, कार्त्स्न्येन वङ्क्रीणामभिधानात्, अपि च समासवचने योगपद्यवचनात् प्रयोगवचनोऽनुगृहीतो भविष्यति। तस्मात् समभ्यसितव्या वङ्क्रय इति॥

सू॰ नासम्भवात्॥ ५॥ (आ॰ नि॰)॥

भा॰ नैतदेवं, मम चोदकोऽनुगृहीतः षड्विंशतिशब्दप्रयोगात्, तव प्रयोगवचनः समस्य वचनात्, न च सम्भवति चोदके प्रयोगवचनं प्रत्यादर्त्तव्यं, बलीयान् हि चोदकः, स हि धर्माणामुत्पादकः प्रापकश्च ; प्रयोगवचनः प्राप्तानामुपसङ्ग्राहकः, स उत्तरकालेऽर्थविप्रकर्षात् दुर्बलः। तस्मादभ्यसितव्यं वचनमिति॥

सू॰ स्वाभिश्च वचनं प्रकृतौ तथेह स्यात्॥ ६॥ (यु॰)॥

भा॰ 'स्वाभिश्च' वङ्क्रिभिः पशुरुपलक्षितः प्रकृतौ, इहापि तथैव

उपलक्षयितव्यः, सोऽभ्यासवचने शक्यते, समासवचने हि पर-सङ्ख्या समुदायस्योक्ता भवति ; तथा न ताभिः पशव उप-लक्षिता भवन्ति, तस्मादसदेतत् ॥

सू० वङ्क्रीणान्तु प्रधानत्वात् समासेनाभिधानं स्यात् प्राधान्यमध्रिगोस्तदर्थत्वात् ॥ ७ ॥ ( उ० )॥

भा० तुशब्दः पक्षं व्यावर्त्तयति,—नैतदेवम्, अभ्यसितव्यः षड्विंशतिशब्द इति,—किन्तर्हि ?—समस्य वदितव्या वङ्क्रय इति। कुतः ?। तत्र 'वङ्क्रीणां' 'प्रधानत्वात्,' 'प्राधान्यं' हि तासां, प्रकृतौ 'षड्विंशतिरेता वङ्क्रयः' इति अभिसम्बन्धः, तत्रैषितः षड्विंशतिरस्येति वङ्क्रयो गणिताः, न ताभिर्गणिताभिः पशुरुपलक्षितः। किङ्कारणं ?। वङ्क्रीभिर्गणिताभिर्हि दृष्टं प्रयोजनं क्रत्वर्थं पार्श्वमुद्धरिष्यते इति, न तु वङ्क्रीभिर्गणिताभिः पशावुपलक्ष्यमाणे किञ्चित् दृष्टमभ्यधिकं भवति, तस्मान्न पशुसम्बन्धो विवक्षितः, एवं 'प्राधान्यं' वङ्क्रीणाम्, 'अध्रिगोः', वङ्क्र्यर्थत्वान्न तस्य सङ्ख्यापशुसम्बन्धः प्रयोजनं। तस्मात्समस्य-वचनं कर्त्तव्यम्, एतावत्यः प्रकृतौ उक्ता इति विकृतौ एतावत्यैव वक्तव्येति तस्मात्समस्य-वचनं कर्त्तव्यमिति ॥

सू० तासाञ्च कृत्स्नवचनात् ॥ ८ ॥ (यु०) ॥

भा० 'तासाञ्च' वङ्क्रीणामिदं कार्त्स्न्यमुच्यते, न पशूनाम्, 'ता अनुष्ठ्योच्यावयतात्'* इति, षड्विंशतिवङ्क्रयस्ताः प्रयत्नेन

* च्यावयतादिति का० सं० पु० पाठः ।

सू० न गुणादर्थकृतत्वाच्च ॥ ३ ॥

भा० नैष दोषः, गुण एव शब्दस्या
ऽप्राकृतः, त्वत्पत्ते पुनः शब्द एव, अङ्ग
दित्युक्तं । अर्थाच्च मयैतदश्रुतमुपादीयते,
यत्र श्रुतचिकीर्षयाऽश्रुतं क्रियते, इष्यते ए
दोषः ॥

सू० समासेऽपि तथेति चेत् ॥ ४ ॥

भा० 'इति चेत्' पश्यसि,—अभ्यासवच
भविष्यति, कार्त्स्न्येन वङ्क्रयो वच्यन्ते इति,
गुयहः, कार्त्स्न्येन वङ्क्रीणामभिधानात्,
यौगपद्यवचनात् प्रयोगवचनोऽनुगृहीतो भ
समभ्यसितव्या वङ्क्रय इति ॥

सू० नासम्भवात् ॥ ५ ॥ ( आ० नि० )

भा० नैतदेवं, मम चोदकोऽनुगृहीतः षड्विंशति
तव प्रयोगवचनः समस्य वचनात्, न च सम्भ
प्रयोगवचनं प्रत्यादर्त्तव्यं, बलीयान् हि चोदकः, स
मुत्पादकः प्रापकश्च ; प्रयोगवचनः प्राप्तानामुपसङ्
उत्तरकालेऽर्थविप्रकर्षात् दुर्बलः । तस्मादभ्यसितव्यं वच

सू० स्वाभिश्च वचनं प्रकृतौ तथेह स्यात् ॥ ६ ॥ (

भा० 'स्वाभिश्च' वङ्क्रिभिः पशुरुपलक्षितः प्रकृतौ, इहापि

सू॰ न गुणादर्थकृतत्वाच्च ॥ ३ ॥ (आ॰ नि॰) ॥

भा॰ नैष दोषः, गुण एव शब्दस्याभ्यासो नाम, स मन्त्रे-ऽप्राकृतः, त्वत्पक्षे पुनः शब्द एव, अङ्गगुणविरोधे च तादर्थ्या-दित्युक्तं। अर्थाच्च मयैतदश्रुतमुपादीयते, प्रविभक्तं गुणं वक्तुं, यच्च श्रुतचिकीर्षयाऽश्रुतं क्रियते, दृश्यते एव तदस्माभिः तस्माद-दोषः ॥

सू॰ समासेऽपि तथेति चेत् ॥ ४ ॥ (आ॰) ॥

भा॰ 'इति चेत्' पश्यसि,—अभ्यासवचने चोदकोऽनुगृहीतो भविष्यति, कार्त्स्न्येन वङ्क्रयो वक्ष्यन्ते इति, 'समासेऽपि' चोदका-नुग्रहः, कार्त्स्न्येन वङ्क्रीणामभिधानात्, अपि च समासवचने यौगपद्यवचनात् प्रयोगवचनोऽनुगृहीतो भविष्यति। तस्मात् समभ्यसितव्या वङ्क्रय इति ॥

सू॰ नासम्भवात् ॥ ५ ॥ (आ॰ नि॰) ॥

भा॰ नैतदेवं, मम चोदकोऽनुगृहीतः षड्विंशतिशब्दप्रयोगात्, तव प्रयोगवचनः समस्य वचनात्, न च सम्भवति चोदके प्रयोगवचनं प्रत्यादर्त्तव्यं, बलीयान् हि चोदकः, स हि धर्माणा-मुत्पादकः प्रापकश्च ; प्रयोगवचनः प्राप्तानामुपसंग्राहकः, स उत्तरकालेऽर्थविप्रकर्षात् दुर्बलः। तस्मादभ्यसितव्यं वचनमिति ॥

सू॰ स्वाभिश्च वचनं प्रकृतौ तथेह स्यात् ॥ ६ ॥ (यु॰) ॥

भा॰ 'स्वाभिश्च' वङ्क्रिभिः पशुरुपलक्षितः प्रकृतौ, इहापि तथैव

उपलक्षयितव्यः, सोऽभ्यासवचने गम्यते, समासवचने हि पर-सङ्ख्या समुदायस्योक्ता भवति ; तथा न ताभिः पशव उप-लक्षिता भवन्ति, तस्मादसदेतत् ॥

सू॰ वङ्क्रीणान्तु प्रधानत्वात् समासेनाभिधानं स्यात् प्राधान्यमश्विगोस्तदर्थत्वात् ॥ ७ ॥ ( उ॰ )॥

भा॰ तुशब्दः पक्षं व्यावर्त्तयति,—नैतदेवम्, अभ्यसितव्यः षड्विंशतिशब्द इति,—किन्तर्हि ?—समस्य वदितव्या वङ्क्रय इति । कुतः ? । तत्र 'वङ्क्रीणां' 'प्रधानत्वात्,' 'प्राधान्यं' हि तासां, प्रकृतो 'षड्विंशतिरेता वङ्क्रयः' इति अभिसम्बन्धः, तत्रेप्सितः षड्विंशतिरस्येति वङ्क्रयो गणिताः, न ताभिर्गणिताभिः पशुरुपलक्षितः । किङ्कारणं ? । वङ्क्रीभिर्गणिताभिर्दृष्टं प्रयोजनं छागं पार्श्वमुद्धरिष्यते इति, न तु वङ्क्रीभिर्गणि-ताभिः पशावुपलक्षणमात्रे किञ्चित् दृष्टमभ्यधिकं भवति, तस्मान्न पशुसम्बन्धो विवक्षितः, एवं 'प्राधान्यं' वङ्क्रीणाम्, 'अश्विगोः', वङ्क्र्यर्थत्वान्न तस्य सङ्ख्यापशुसम्बन्धः प्रयोजनं । तस्मात्समस्य-वचनं कर्त्तव्यम्, एतावत्त्वं प्रकृतौ उक्तमिति विकृतौ एतावत्त्वेव वक्तव्येति तस्मात्समस्य-वचनं कर्त्तव्यमिति ॥

सू॰ तासाञ्च कृत्स्नवचनात् ॥ ८ ॥ ( यु॰ ) ॥

भा॰ 'तासाञ्च' वङ्क्रीणामिदं कार्त्स्न्यमुच्यते, न पशूनाम्, 'ता अनुष्ठ्योच्यावयतात्'* इति, षड्विंशतिवङ्क्रयस्ताः प्रयत्नेन

* उच्यावयतादिति का॰ सं॰ पु॰ पाठः ।

उक्तत्व्या इति। इतरथा षड्विंशतिरस्य वङ्क्रयस्तं प्रयत्नेन क्रिञ्चित् कुर्य्यादित्येवमभिसम्बन्धो भवेत्। यदि लभ्यते, तद्विकार्थ्य-सम्बन्धार्थं प्रतिनिर्द्दिश्यते ; तदिह 'षड्विंशतिरस्य वङ्क्रयस्ताः' इति वङ्क्रीणां प्रतिनिर्द्देशः कार्य्यार्थः ; तस्मात्तासां प्राधान्य-मिति ॥

सू० अपित्वसन्निपातित्वात् पत्नीवदाम्नातेनाभिधानं स्यात् ॥ ९ ॥ (पू० २)॥

भा० अपित्विति पक्षव्यावृत्तिः। नैतदेवं, समसितव्या वङ्क्रय इति, किन्तर्हि ?—अविकृतः षड्विंशतिशब्दः प्रयोक्तव्यः। कुतः ?। 'असन्निपातित्वात्,' असन्निपाती ह्यध्रिगुः,न करणत्वेन निर्द्दिश्यते, यदि हि करणत्वेन निर्द्दिश्येत, ततोऽनेन प्रकाशितं कर्त्तव्यं, न ध्यानेनेति सम्बान्तेन कर्म्मसन्निपातः स्यात्। तत्रा-शक्यमविकृतेन योगपद्यं कर्त्तुमिति विक्रियेत अभ्यस्येत वा। अथ पुनरेतदकरणं, क्रियमाणानुवादिनयनकालमध्रिगुवचनमने-कस्मिन् पशौ चोदकेनात्र निपतितं; तत्रैषां स्वसङ्ख्यावती-र्वङ्क्रीरभिवदितुमशक्यं विप्रतिपत्तिरूपं तत्; तस्मान्न तद्वङ्क्री-णामियत्ता वदितव्या, किन्तर्हि ?—षड्विंशतिसङ्ख्यायाः सम्बन्धः कर्त्तव्यः, यथा द्विपत्नीके बहुपत्नीके वा प्रयोगे पत्नीशब्द एकवचनान्तो न सङ्ख्यया पत्नीः परिच्छिनत्ति, किन्तर्हि ?—एकत्वेन सम्बध्नाति एकस्मिन्नपि, तस्मादविकारेण प्रयोगः। एवमविकारे भाष्यमनुगम्यते इति ॥

सू॰ विकारस्तु प्रदेशत्वाद्यजमानवत् ॥ १० ॥ (उ॰) ॥

भा॰ तुशब्दात्पक्षो विपरिवर्त्तते,—नाविकारः, अष्टः कर्त्तव्य इति। यद्यत्सङ्ख्येषु आहृत्य तत्सङ्ख्योच्चार्यते, तत्र वचनप्रामाण्यात् विप्रतिपन्नसङ्ख्याकस्य शब्दस्य प्रयुज्यमानस्य अदृष्टोऽर्थोऽभ्युपगम्यते, यथा प्रकृतौ पञ्चीशब्दस्य, न तु इहाहृत्य षड्विंशतिशब्दोऽनेकस्मिन् पशौ प्रयुज्यते, किन्तु चोदकेनेह प्राकृतवचनं प्राप्यते। तत्र यत् न्याय्यं तत् चोदकः प्रापयिष्यति, नाहृत्य षड्विंशतिशब्दं। किं तत्न्याय्यं?। यत् प्रकृतौ विवक्षितं, प्रकृतौ च वङ्क्रीणां इयत्ता कथिता; तस्मादिह सा प्रदिश्यते।

'नन्वेतदुक्तं नाध्रिगोः करणत्वेन निर्द्देश इति, यदा च न करणं, तदा कथमयं वङ्क्रीयत्तावचनः, श्रुत्या षड्विंशतिसङ्ख्यावचन एव भवितुमर्हति' इति। उच्यते, यद्यपि नास्य तृतीयया निर्द्देशः, तथापि प्रयोगवचनेनोपगृहीतः साधको भवन् कमप्य' दृष्टमुपकारं करिष्यति, अन्यतोऽवदानप्रकाशनात्। 'अत्रोच्यते, नास्यावदानैरभिसम्बन्धः प्रकृतियागप्रयोगवचनो यागेन सम्बध्नाति, तत्र च हविःकीर्त्तनं दृष्टं प्रयोजनं, षड्विंशतिशब्दोऽपि तत्स्तुतये भविष्यति इति'। नैतदेवमिति ब्रूमः,—प्रकरणात् यागमात्रेण अभिसम्बन्धे सति ऋत्विजां प्रैष इति गम्यते; लिङ्गात्तु शमितृप्रैषमेनमध्यवस्यामः; तथारूपाणि ह्यत्र वाक्यानि,—'दैव्या शमितार उपह्वता मनुष्या आरभध्वम्' इति। तथा 'षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्यावयतात्' इति। तस्मात् वङ्क्रीयत्तावचन एष न षड्विंशतिसङ्ख्यावचनः। यथा यजमानपदे एकयजमानवाचिनि स्वसङ्ख्या-

मावक्तवचनमितिकृत्वा द्वियजमानके च प्रयोगे समसङ्ख्यावचन-प्रदेशात् ऊहः क्रियते, एवमिहापीति ॥

सू० अपूर्वत्वात्तथा पत्न्याम् ॥ ११ ॥ (यु० ) ॥

भा० यदुक्तं पत्नीवदिति, युक्तं पत्न्यां न तत्रैकपत्नीके यज-माने पत्नीशब्दः समाम्नातः, द्विपत्नीके बहुपत्नीके च प्रदेशात् भवति। यथा एकस्याः पत्न्याः समसङ्ख्यावचनः, एवं द्वयोर्बह्वीनां च समसङ्ख्यावचन इति। तस्मादैषम्यं पत्न्याम् ॥

सू० आम्नातस्त्वविकारात् सङ्ख्यासु सर्वगामि-त्वात् ॥ १२ ॥ (पू०३ ॥

भा० तुशब्दोऽन्यं पक्षमवतारयति,—न समस्त-वचनं सङ्ख्यो-हः स्यादिति, यथा समाम्नातं षड्विंशतिप्रातिपदिकं प्रयोक्तव्यम्, एवमविकारे चार्थानुग्रहो भविष्यति। प्रविभक्तं गुणमभिवदितुं वचनमूहिष्यते,—षड्विंशती एतयोर्वङ्क्रय इति। ‘ननु षड्-विंशती इत्यभिधाने वङ्क्रीणां प्रथमा न प्राप्नोति’। उच्यते,—यदा षड्विंशतिगुणः प्राधान्येन विवक्षितो भवति, तद्विशेषणार्थं सङ्ख्येयमुच्चार्यते, तदा प्रथमान्तेनापि लक्षणया सङ्ख्या विशिष्यते, यथा इन्द्राग्नी देवते इति। यदा द्विवेरैश्वर्यं कर्मणोऽर्थो गुणो विवक्षितो भवति, तदेकवचनान्तमेव ‘इन्द्राग्नी’ इतिशब्दो लक्षणया विशिनष्टि; तथा च प्रयोगो दृश्यते,—‘पञ्चपञ्चाशत-स्त्रिवृतः संवत्सराः पञ्चपञ्चाशतः पञ्चदशा पञ्चपञ्चाशतः सप्तदशा पञ्चपञ्चाशत एकविंशाः’ इति सङ्ख्यावचनः शब्दः त्रिवृत इत्य-

शेष सप्तधा विशेष्यते; यथा देवदत्तयज्ञदत्तविष्णुमित्राः पर्यंदिति, एवं षड्विंशती वङ्क्रय इति। एवमविकारं च भविष्यति, वङ्क्रिगामी च षड्विंशतिशब्दो भविष्यति इति॥

सू॰ सङ्ख्या त्वेवं प्रधानं स्याद्वङ्क्रयः पुनः प्रधानम्॥ ॥ १३॥ (उ॰)॥

भा॰ सत्यमुपपद्यत एव वचनं,—षड्विंशती वङ्क्रय इति। सङ्ख्याप्रधानत्वेवनिर्द्देशः कृतो भवति, षड्विंशतिगुणः प्राधान्येन विवक्षितः, तद्विशेषणत्वेन वङ्क्रीणामुच्चारणं, वङ्क्रयः पुनः प्रकृतौ प्रधानं, न सङ्ख्या, तदुक्तं, "प्राधान्यमभिगोरुत्सर्गत्वात्"। "तासाञ्च कृत्स्नवचनात्" इति, तदेवं न प्रकृतिवदभिधानं कृतं भवेत्। तत्र चोदक एव बाध्येत; तस्मात्समसितव्यमेव वचनमिति॥

सू॰ अनाम्नातवचनमवचनेन हि वङ्क्रीणां स्यान्निर्द्देशः ॥ १४॥ (यु॰)॥

भा॰ न खल्वप्यस्मिन् पक्षे सर्वमेवाम्नातमुच्यते, अनाम्नातवचनमपि प्रतीयते* इति षड्विंशती षड्विंशतय इति। अत्र द्विवचनं बहुवचनं वा अनार्षं, तथा न क्रियते, न तासां वङ्क्रीणां कार्त्स्न्येनाभिधानं स्यात्॥

सू॰ अभ्यासो वाऽविकारात् स्यात्॥ १५॥ (पू॰४)॥

भा॰ वाशब्दः पक्षं व्यावर्त्तयति,—न समासवचनम्, अभ्यासः

---

* वचनमपि नीयत इति क॰ सं॰ पु॰ पाठः।

स्यात्, एवमविकारो भविष्यति ; तथाचं चोदकाववनुग्रहीष्यते ; सर्वं समाम्नातं कृतं भविष्यति । केवलम् अस्य शब्दोऽभ्यसिष्यते, कृत्स्नाय वङ्क्रयोऽभिहिता भविष्यन्ति ॥

सू॰ पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात् तस्मात्समासशब्दः स्यात् ॥ १६ ॥ (सि॰) ॥

भा॰ तुशब्देनावधार्यते,—नैतदेवं, समस्य-वचनमेवेति । कथम् ? । 'एवं' सति पशुः प्राधान्येनात्र निर्दिष्टः स्यात्, पशोः-पशोः षड्विंशतिः षड्विंशतिर्वङ्क्रयः न कश्चित् अषड्विंशति-वङ्क्रिः पशुरिति पशोः सङ्ख्यासम्बन्धेऽभिधित्सिते एवं वचनं भवति । न च पशुसङ्ख्यासम्बन्धः प्रकृतौ विवक्षितः इति । उक्तमियत्ता वङ्क्रीणां प्रकृतौ वक्तव्या । इहापि सैव चोदकेन प्रदिश्यते । तेन नाभ्यासः कर्त्तव्यः, स हि पशुनिमित्तकः, तस्मात् समस्य-वचनं वङ्क्रीणां कर्त्तव्यमिति ॥ (८।४।१ अ॰) ॥

---

चतुस्त्रिंशत्वाजिन इत्यनेन आश्वमेधिकसवनीयास्य चतुस्त्रिंशतवङ्क्रिरूपविशेष-वचनाधिकरणम् ॥

सू॰ अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम् ॥ १७ ॥

भा॰ अस्त्यश्वमेधः, तत्र सवनीयः पशुः अश्वस्तूपरगोमृगौ च ; अस्ति तु प्रकृतौ अग्नीषोमीये—'षड्विंशतिरस्य वङ्क्रयः' इति वचनं, तदिह चोदकेन प्राप्तं ; तत्राश्वस्य चतुस्त्रिंश-द्वङ्क्रयः तूपरगोमृगयोः षड्विंशतिः, अस्ति तु ऋक् समा-

ख्याता,—'चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेति। अच्छिद्रा गात्रा वयुना कृणोत परुष्परुरनुघुष्या विशस्ता' इति। तदिदं सन्दिह्यते,—किं अश्वस्य वैशेषिकमिदं वचनं कर्त्तव्यं, तूपरगोमृगयोः समासेन, उत सर्वेषामेव समासवचनम्?। किं प्राप्तम्?,—अश्वस्य चतुस्त्रिंशद्वङ्क्रयस्तस्य वैशेषिकमिदं वचनं कर्त्तव्यं। कस्मात्?। वचनात्, एवं 'चतुस्त्रिंशद्वाजिनो देवबन्धोः' इत्येतत् वचनमर्थवदिति, इतरथा एतद्वचनमनर्थकं स्यात्। तस्माद्वैशेषिकमश्वस्येति॥ (८।४।२७०)॥

---

आश्वमेधिकसवनीयाश्वस्य 'न चतुस्त्रिंशदिति ब्रूयात्' इत्यनेन समस्ताया एव वचो निषेधाधिकरणम्॥

सू॰ तत् प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंश-द्वाच्यत्वात्॥ १८॥ (सि॰)॥

भा॰ 'तत् प्रतिषिध्य प्रकृतिर्नियुज्यते,' प्रकृतौ यत् कृतं वचनं तत् कर्त्तव्यमिति। कथम्?। 'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्' इति, 'सा' नियुज्यमाना 'चतुस्त्रिंशद्वाच्य-त्वात्' वारयति शब्दं, तस्मात् प्रतिषिद्धत्वाद्वैशेषिकं वचनं न कर्त्तव्यं, सामासिकं वचनं कर्त्तव्यम्।

'ननु 'षड्विंशतिरित्येव ब्रूयात्' इति वचनात् प्रति-षिद्धेऽपि वैशेषिकमेव वचनं कर्त्तव्यमिति'। न,—इत्युच्यते, न ह्ययं षड्विंशतिशब्दो विधीयते, किन्तर्हि?—यथाप्राप्तवचनमनूद्यते, कथमवगम्यते?। एवकारकरणात्, यथाप्राप्ते एवकारकरणं, न

च षड्विंशतिशब्दः प्राप्तः, षड्विंशतिसङ्ख्याभिधानं प्रकृतौ कृतमिहापि तदेव प्राप्तं । षड्विंशतिशब्देन तत् प्रकृतौ लक्षितमिहापि षड्विंशतिशब्दस्तल्लक्षणार्थमेवोच्चारितः। षड्विंशतिसङ्ख्यापरेऽनेकोऽर्थो विधीयते,—चतुस्त्रिंशत्प्रतिषेधः, षड्विंशतिसङ्ख्यावचनञ्च, तत्र वाक्यं भिद्येत, भिद्यमाने एकवाक्यरूपं बाध्येत। किं तत्?। साकाङ्क्षत्वं, 'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्' इति; एतद्धि वचनं चतुस्त्रिंशद्वचनाभावे प्राप्तमेव सत् कर्त्तव्यतया प्रतिषेधं प्रशंसितुमुच्चार्यते, तदेवमेकवाक्यतामापद्यते। सैकवाक्यता सङ्ख्यापरे बाधिता स्यात्! अनेकार्थविधानञ्चान्याय्यम्, एकार्थविधाने सम्भवति, भूयसी हि तत्रादृष्टकल्पना स्यात्। तस्माद्यथाप्राप्तवचनं कर्त्तव्यमिति॥

सू० कृत्स्ना स्यादाम्नातत्वादविकल्पश्च न्याय्यः॥
॥ १९ ॥ (पू०)॥

भा० आम्नाता हि ऋक् प्रतिषिद्धा च तस्मादृचश्च वैशेषिकं वचनं स्यात्। तथा च अविकल्पो भविष्यति, अविकल्पश्च न्याय्यः। विकल्पे विरुद्धं वचनं अन्योन्येन भवति। भवति इति चेत्, न प्रतिषेधः; नेति चेत्, न विधिः। तस्माद्वैशेषिकं वचनं कर्त्तव्यम्॥

सू० तस्मात्तु वचनाद्वैरवत् पदविकारः स्यात्॥
॥ २० ॥ (आ० नि०)॥

भा० अथ यदुक्तम्,—ऋक् तत्र प्रतिषिध्यते इति। नैतदेवं'

'तस्याः' 'वचनात्' 'पदविकारः स्यात्', वचनं हि भवति,—'न चतुस्त्रिंशदिति ब्रूयात् षड्विंशतिरित्येव ब्रूयात्' इति। तत्र चतुस्त्रिंशत्पदं श्रुत्वा प्रतिषिध्यते, ऋक् सम्बन्धया प्रतिषिध्यते; श्रुतिसम्बन्धाविषये च श्रुतिर्न्याय्या। तस्माद्वैशेषिकं वचनं कर्त्तव्यमिति ॥

सू॰ सर्वप्रतिषेधो वाऽसंयोगात् पदेन स्यात् ॥

॥ २१ ॥ (उ॰) ॥

सर्वस्या एव वा ऋचः प्रतिषेधोऽयं, न चतुस्त्रिंशत्पदस्य। कस्मात्? । 'पदेन' 'असंयोगात्',—चतुस्त्रिंशत्पदेन ऋचः संयोगो न स्यात्, विना तस्मात् पदात्, नैव ऋक्शेषो वङ्क्रि-वचनं कुर्यात्।

अथ षड्विंशतिपदेन सम्बध्येत, तथापि नाध्रिवङ्क्री-(?)—वङ्क्रीं ब्रूयात्, तत्र दृष्टोऽर्थो नावकल्पेत, अनर्थ वाक्यमर्थं न साधयेत्, अन्ते च वाक्ये दोषश्रवणात्,—'मन्त्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्' इति। चतुस्त्रिंशत्पदं चेह अनर्थकं स्यात्। तस्मात् समस्त-वचनं कर्त्तव्यं। ऋचश्च विधान्तरेण विहितत्वाद्वैशेषिकं वचनमिति ॥ (९।४।२ अ॰) ॥

---

अग्नीषोमीयपश्वध्रिगावुरूकशब्देन वपाभिधानाधिकरणम्।

सू॰ वनिष्ठुसंनिधानादुरूकेण वपाभिधानम् ॥ २२ ॥

भा॰ ज्योतिष्टोमेऽग्नीषोमीये पशौ अध्रिगौ वचनं,—'वनिष्ठु-

मस्य मा राविष्टोरूकं मन्यमानाः'* इति। तत्रोरूकशब्दं प्रति विचारः,—किं वनिष्टुमस्य मा राविष्टोलूकसदृशं मन्यमानाः, उत उरूकं वपां मन्यमाना वनिष्टुं मा राविष्ट? इति। किं प्राप्तम्?—वनिष्टुमुलूकं मन्यमाना इति। कथम् उरूकशब्द उलूकवचनः? रलयोः समानश्रुतित्वात्, पर्य्यङ्कः पल्यङ्कः, रोमाणि लोमानि, अङ्गुरिः अङ्गुलिः; उलूकसदृशत्वाच्च वनिष्टोः, वपायाश्चाप्रसिद्धेः

एवं प्राप्ते ब्रूमः,—उरूकशब्देन 'वपाभिधानं' स्यात्। वपां मन्यमाना वनिष्टुं मा राविष्टेति एषा बुद्धिः क्रियमाणा दृष्टार्था भवति, भवति हि वनिष्टुसन्निधानात् व्यामोहेन वनिष्टोर्लवनप्रसङ्गः, तच्च निवर्त्तयन्नेष शब्दो दृष्टप्रयोजनो भवति, न हि वनिष्टुर्न लवितव्य एव, वपोद्धरणकाले वपां मन्यमानैर्न लवितव्यः इतरस्मिन् पक्षे वनिष्टुं मा राविष्टेति लवितव्ये वनिष्टौ अनर्थकः प्रतिषेधः उलूकसदृशवचनञ्च अदृष्टार्थं। 'कथं पुनर्वपायामप्रयुक्तो वपां प्रत्याययिष्यति उरूकशब्दः? इति'। उच्यते, अवयवप्रसिद्ध्या उरुशब्दस्य विस्तीर्ण-वचनो दृष्टः, तद्यथा उरु राजाङ्गणम् उरु तैलिकाङ्गणमिति। तथा, 'उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ'

* "वनिष्टुर्वपासमीपवर्त्ती कश्चित् पश्वङ्गविशेषः, तं मा राविष्ट तस्य लवनं मा कुरुत। छान्दसत्वेन लकारस्य रेफः। किं कुर्वन्तः? उरूकं मन्यमाना उरूकबुद्धिं कुर्वन्त इत्यर्थः। अत्र उरूकशब्देन काकविरोधी कश्चित् उलूकनामा पक्षिविशेषोऽभिधीयते। कुतः?। रलयोरविशेषात्, पर्य्यङ्कः पल्यङ्कः, रोमाणि लोमानि इत्यादिदर्शनात्। उरूकशब्दः सादृश्यलक्षकः, पक्षिसदृशं वनिष्टुं विवेकेन मन्यमाना मा राविष्टेति वाक्यार्थः" इति माधवः।

इति । तथा' 'उरु विष्णो विक्रमस्व' इति । इहापि स विस्तीर्ण-वचन एव । तथा वपाशब्दो मेदसि प्रसिद्धः, यथा वपावाहिनो रथाः,—मेदोवाहिन इति गम्यते । तस्यैकदेशः वपाशब्दः प्रमुदाय-प्रत्ययमादधाति ; मेदस्विनी तस्य वपा, न विस्तीर्णं मेदो मन्यमा-नेन तस्यविप्रकृष्टो वनिष्टुर्वरितव्य इति वपावचनता सिद्धा भवति । किं भवति प्रयोजनं? । वनिष्टुवचनपक्षे उपमानस्य उरूकशब्दस्य अनूहः ; वपावचनपक्षे उरुशब्द ऊहितव्यः कशब्दश्चेति उरूणी के, उरूणि कानि ; अथ वा उरूके उरूकाणि यदि समासाभिप्रायः ( ८।४।४अ० ) ॥

---

अग्निमौ 'प्रशसा बाहू' इत्यत्र प्रशसाशब्दस्य प्रशंसापरताधिकरणम् ॥

सू० प्रशसाऽस्यभिधानम् ॥ २३ ॥ ( पू० ) ॥

भा० तस्मिन्नेवाग्निगावाम्नायते,—'प्रशसा बाहू' इति । तत्र सन्देहः,—किं 'प्रशसा बाहू कुरुतात्' प्रशसेति तृतीयान्तः,-प्रशसा बाहू ग्रहीतव्याविति, उत, प्रशसेति द्विवचनं, आकारे विभक्तिः कृते प्रशस्तौ बाहू कर्त्तव्याविति? । किं प्राप्तम् ?—'प्रशसाऽस्यभिधानं', असौ हि ग्रासशब्दः प्रसिद्धः, तथाहि तमनु-वदति, 'इम प्रयाजमिष्ट्वाह ग्रासम्माहरेति असिं वै ग्रासमाचक्षते' इति । अनर्थिका च बाह्वोः स्तुतिः, स्तुतो बाहू विप्रकृष्टं कुरुत इति मात्रशर्थिकं तयोर्द्देवतात्वं कल्पितं स्यात्, तथायुक्तम् अस्मि-जिन् पक्षे सति । तथा शौनःशेपे भवति दर्शनम्,—'अतस्त्वामसिं मानवस्य शासेव विशसनताय द्रष्टुमुच्चे' इति । तस्मादसिनः प्रशसेति गम्यते ॥

सू॰ बाहुप्रशंसा वा ॥ २४ ॥ ( सि॰ ) ॥

भा॰ अथ वा बाहुप्रशंसैषा,—'प्रशस्ता बाहू कुरुतात्'—प्रशस्तौ बाहू छेत्तव्याविति। तथा प्रशंसाशब्दस्य दृष्टार्थता भविष्यति इति, कार्त्स्न्येन हि बाह्वोः प्रशस्तता, कृत्स्नौ बाहू उद्धरतेत्यर्थः, कृत्स्नौ च बाहू उद्धर्त्तव्याविति। इतरस्मिन् पक्षे स्वधितिना विशसनं क्रियते, अशेष वाचकः शब्दः उच्चार्यते ; यदि वा मांस-वर्षिकं द्रव्यं विधीयते,—असिना बाहू छेत्तव्यो इति, तथाप्युक्तं विधिविहिते स्वधितौ सति। न च न प्रशस्तौ बाहू, ताभ्यां पशुर्हि गच्छति ; अवनस्य च शमीकरोरे भवति। तस्मात् बाहुप्रशंसा। किं भवति प्रयोजनम् ?। अश्वमेधे शतं राजता हरितश्चरवोऽसयः, तत्रासिपर ऊहो भवति, यदा पूर्वः पक्षः ; यदा तर्हि सिद्धान्तः, तदा बाहुपरेणोहेन भवितव्यम् ॥ (९।४।५अ॰)॥

---

अग्नौ श्येनवक्ष इत्यादौ श्येनादिशब्दानां कार्त्स्न्यवचनाधिकरणम् ॥

सू॰ श्येन-शला-कश्यप-कवष-स्रेकपर्णेष्वाकृतिवचनं प्रसिद्ध-सन्निधानात् ॥ २५ ॥

भा॰ पशावेवाध्रिगाविदमाम्नायते,—'श्येनमस्य वक्षः कृणुतात् शला दोषणी कश्यपेवांसा कवषोरू स्रेकपर्णाष्ठीवन्ता' इति। एषु संशयः,—किं आकृतिवचनमेषु भवति, उत कार्त्स्न्यवचनम्? इति। किं प्राप्तम्?,—'प्रसिद्धसन्निधानात् आकृतिवचनम्', इह प्रसिद्धस्य सन्निधौ यदभिधीयते, किंचिदिदं कर्त्तव्य-

मिति तदाकृतिवचनं गम्यते, यथा 'अमी पिष्टपिण्डाः सिंहाः क्रियन्ताम्' इति 'अर्जुनवद्दरा मेखलाः क्रियन्ताम्' इति सिंहाकृतिवचनं मेखलाकृतिवचनञ्च गम्यते, एवं श्येनाकृति चयः कर्त्तव्यं, अश्वाकृती होमणी, कच्छपाकृती अंसौ, कवचाकृती अरू, करवीरपर्णाकृती अष्ठीवन्तौ इति ॥

सू० कार्त्स्न्यं वा स्यात्तथाभावात् ॥ २६ ॥ (सि० ) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति न चैतदस्ति,—आकृतिवचन इति, किन्तर्हि, कृत्स्नोद्धरणं विवक्षितं, कृत्स्नानि उद्धृतानि एतानि एतदाकृतिकानि भवन्ति । यथा श्येनाद्याकृतिकानि भवन्ति, तथैतानि कुरुत, कृत्स्नानि उद्धरतेत्ययमर्थोऽवगम्यते, अवयवेदं चोद्यमानं दृष्टार्थं भवति। कृत्स्नोद्धृतैर्हि तैः प्रयोजनं। तथा हि तदाकृतिकानामवत्तं भवति। इतरथाऽतदाकृतिकानामवद्यात्। तस्मात् कार्त्स्न्यमवगम्यत इति ॥

सू० अङ्गिनोश्च तदर्थत्वात् ॥ २७ ॥ ( यु० ) ॥

भा० अङ्गिशब्दानामुच्चारणार्थः, अङ्गानां कार्त्स्न्येनोद्धरणं यथा स्यादित्येवमर्थः । कथम् ?। एवं हि भवति वचनं,—'गात्रं गात्रमस्यानूनं कृणुतात्' इति ; तस्मादपि श्येनादिभिः कृत्स्नोद्धरणं गम्यत इति। प्रयोजनं पञ्चोक्तम् ॥ (८ अ।६प०) ॥

---

दर्शार्थोद्धृताग्निहोत्रे प्रायश्चित्तस्याज्योतिष्मत्या अननुष्ठानाधिकरणम् ।

सू॰ प्रासङ्गिके प्रायश्चित्तं न विद्यते परार्थत्वात्तदर्थं हि विधीयते ॥ २८ ॥

भा॰ अस्ति अग्निहोत्रम्,—'य एवं विद्वानग्निहोत्रं जुहोति' इति । तत्रेदमाम्नायते,—'अग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेत् यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायात्' इति । यदि तु दर्शार्थेन पौर्णमासार्थेन वा अग्निः उद्धृतोऽहुतेऽग्निहोत्रे उद्वायात्, किं ज्योतिष्मती कर्त्तव्या, न ? इति । किं प्राप्तं ?—कर्त्तव्येति । कुतः ? । उपसम्प्राप्तं हि निमित्तं, भवितव्यं नैमित्तिकेनेति । अग्निरसौ उद्धृतोऽहुतेऽग्निहोत्रे उद्वातः, एतावच्च निमित्तं ज्योतिष्मत्याः, तस्मात्सा कर्त्तव्येति । न चात्र शब्दोऽस्ति अग्निहोत्रार्थमुद्धृते उद्वाते कार्य्येति तस्मादपि कर्त्तव्या ।

एवं प्राप्ते ब्रूमः,—'प्रासङ्गिके' एवंलक्षणकेऽग्न्यावनुगते 'प्रायश्चित्तं न' कर्त्तव्यं, परार्थं हि तदुद्धरणं कृतं दर्शपूर्णमासार्थम्, अग्निहोत्रार्थं चोद्धृते व्यापन्ने तदाम्नातं । तस्मान्न कर्त्तव्यम् । 'आह,—ननूक्तं नास्त्यत्र शब्दः,—अग्निहोत्रार्थमुद्धृतेऽनुगते प्रायश्चित्तमिति' । अत्रोच्यते,—यद्यपि नास्त्येवञ्जातीयकः शब्दः, तथाप्यग्निहोत्रार्थमेवोद्धृतेऽनुगते प्रायश्चित्तं गम्यते । कथम् ? । अग्निहोत्रप्रकरणे एतदाम्नातमिति, अग्निहोत्रप्रकरणे चाम्नानात्तस्योपकारकमिति गम्यते । 'नाग्निहोत्रविशिष्टमुद्धरणं, स्वार्थं हि सर्वं क्रियते, न परविशेषणार्थेन' । अत्रोच्यते, अग्निसम्बन्धमेतत् प्रायश्चित्तमुच्यते, नोद्वानसम्बन्धं । किमतो

कथमेवं ?। यद्युद्दानसम्बन्धं भवेत्, उद्दानस्यानङ्गत्वादेतदुद्दाना-र्थमिति गम्यते, प्रकृतेनाग्निहोत्रेण प्रयोजनेन सम्बध्यते। अग्निसम्बन्धे पुनर्गुणत्वादग्नेस्तेनैव प्रायश्चित्तस्य प्रयोजन-सम्बन्धः, तत्रैवमुद्धृतो व्यापन्नो भवति, यदि स प्रयोजनं नाभिनिर्वर्त्तयति। तत्राग्निहोत्रार्थस्योद्धरणस्याग्निहोत्रनिर्वृत्तिः प्रयोजनं। दर्शपूर्णमासार्थस्य दर्शपूर्णमासनिर्वृत्तिः। उद्धृत-स्यानुगतं स्वस्मै प्रयोजनायायोग्यं प्रायश्चित्तेन योग्यं क्रियते। तत्र योग्यं कुर्वन् प्रायश्चित्तमग्निहोत्रस्योपकरोति। यस्तूद्धृतो दर्शपूर्णमासप्रयोजनः तं योग्यं कुर्वन्नाग्निहोत्रस्योपकुर्यात्। यस्त्वग्निहोत्रार्थमुद्धृतः तं योग्यं कुर्वन् अग्निहोत्रायोप-करोति। तस्मादग्निहोत्रार्थमुद्धृते प्रायश्चित्तं। कथं पुनर्ज्ञायते, अग्निना प्रायश्चित्तस्य सम्बन्धः नोद्दानेनेति ?। अग्निविशिष्टेन उद्दानेन सम्बन्ध इति श्रुत्या गम्यते, उद्दानपरीतेनाग्निनेति वाक्येन ; श्रुतेर्वाक्याद्बलीयस्त्वादुद्दानसम्बन्धः प्राप्नोति इति। 'उच्यते'—उद्दानसम्बन्धस्यापरिहार्यत्वात् 'यस्योद्दायात्' इत्यवि-वक्षितमेव प्राप्नोति, अदृष्टार्थत्वाच्च अनाकाङ्क्षितेन सम्बन्धः, तदुद्दानपरीतेऽग्नौ प्रायश्चित्तेन सम्बध्यमाने व्यापत्तौ सत्यामा-काङ्क्षितेन सम्बन्धः, दृष्टार्थता च। तस्मादुद्दानपरीतोऽग्निः प्रायश्चित्तेन सम्बध्यत इति। दर्शपूर्णमासार्थमुद्धृतो यत्रानुगच्छति तत्राग्निहोत्रस्य परकीयोऽग्निर्व्यापन्नः। परकीयस्योद्धरणमिति तत्र प्रायश्चित्तं न स्यात्। अपि च लिङ्गं भवति। किमिति ?। 'यस्याग्निरुद्धृतो अग्निहोत्र' इत्यनुवादः। विधौ हि एतस्मिन् सति वाक्यभेदप्रसङ्गः। यद्यग्निहोत्रप्रयोजनमुद्धरणं, ततोऽवगतः

प्रयोजनमिति विवक्षायाम् अहुतेऽग्निहोत्रे इति वचनमनुवदितु-मुपपद्यते। तस्मादपि अग्निहोत्रप्रयोजने उद्धृतेऽनुगते प्रायश्चित्तं भवितुमर्हतीति। किमर्थं तर्हि तदा कर्त्तव्यम्; अविशेषविहितम-न्येष्वपसमे प्रसज्यादिति॥ (८।४।७अ०)॥

---

गार्ह्योद्धारे प्रायश्चित्तकर्त्तव्यतानिषेधनमुद्राधिकरणम्॥

सू० धारणे च परार्थत्वात्॥ २९॥ (सि०)॥

भा० इदमाम्नायते, 'धार्यौ गतश्रिय आहवनीयः' इति तस्यानुगमे प्रायश्चित्तं 'अग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपे-द्यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायात्' इति। तत्रैषोऽर्थः सांशयिकः,—यदा धार्योऽग्निरनुगच्छति, तदा किमिदं प्रायश्चित्तं कर्त्तव्यं, न? इति। किं प्राप्तं?—कर्त्तव्यमिति। उपसम्प्राप्तं हि निमित्तं, एतावदिह निमित्तं, अग्निरग्नि-होत्रार्थमुद्धृतः अकृतप्रयोजन उद्वातीति। तच्चेह सर्वं प्राप्तं, तस्मात् कर्त्तव्यं प्रायश्चित्तमिति। 'ननु सर्वकर्मार्थमेतत् न केवलायाग्निहोत्राय'। उच्यते, यदि सर्वकर्मार्थं, समुदायार्थं तत् न केवलस्यार्थेन भवतीत्युच्यते। यत्तु एकैकस्मै—इत्येवं सर्वार्थं तत्, सर्वेभ्योऽपि प्रयुक्तमग्निहोत्राय प्रयुक्तं भवति। न चेदं सर्वकर्मसमुदायार्थं, समुदायस्याचोदितत्वात् साधनानि प्रत्या-काङ्क्षाभावः। एकैकं तत्र कर्माहरणमाकाङ्क्षति। तस्मात् सर्वार्थमपि सत् अग्निहोत्रार्थं भवति; एवञ्चेदनुगमनप्राय-श्चित्तं प्राप्नोति इति। यथा पशुचर्यं परिसमूहनं छन्दापवय-

इत्येवमादयः पदार्था धार्य्यऽग्न्यावहन्यहनि क्रियन्ते एवं प्राय-श्चित्तमपि क्रियेत ।

एवं प्राप्ते ब्रूमः,—'धारणे च' गतश्रियोऽनुगमने इदं प्रायश्चित्तं न कर्त्तव्यं । कुतः ? । 'परार्थत्वात्',—न हि तदा अग्निहोत्रार्थमुद्धरणं यस्मिन् काले भवत्यसौ गतश्रीः, तथाऽन्यार्थ-मुद्धृतोऽग्निः सर्व्वार्थं धार्य्यते, उद्धरणं तु तत् एकस्मै एव प्रयोजनाय, धारणं तु सर्व्वकर्म्मार्थं, नच धारणेऽग्निहोत्रार्थेऽनु-गमने प्रायश्चित्तं विहितं, किन्तर्हि उद्धरणे, परकीयं चाग्नेयद्धरणं, परार्थमुद्धरणं, यदर्थमुद्धरणं तदर्थमुद्धृतेऽपि तत् प्रायश्चित्तं । तस्मात् तत्रेदं प्रायश्चित्तमिति ॥

सू क्रियार्थत्वादितरेषु कर्म्म स्यात् ॥ ३० ॥ (आ०नि०)॥

भा० अथ यदुक्तं,—परिसमूहनं पर्युक्षणम् इत्येवमादयः पदार्था धार्य्येऽपि क्रियन्ते, एवं प्रायश्चित्तमपीति । अत्रोच्यते, युक्तं तत्,—परिसमूहनादीनि क्रियन्ते, चोदितानि हि तानि, संस्कारार्थत्वेन शक्यानि च अज्ञातप्रयोजनानि च ; उद्धरणं तु ज्ञातप्रयोजनत्वात् निवृत्तं, नियतदेशकालत्वाच्चाशक्यं । तस्मात् इदमतुल्यं प्रायश्चित्तेन ॥ (९।४।८अ०) ॥

---

उद्धरणाद्यग्न्योद्धरणस्याभ्यासकल्लाधिकरणम् ॥

सू न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ॥ ३१ ॥

भा० अथाग्निहोत्रे उद्धरणमन्त्रः,—'वाचा त्वा होत्रा प्राणेन

उद्गाता' इत्येवमादिः। तत्रायमर्थः सांशयिकः,—यद्दर्शपूर्ण-मासार्थेनोद्धरणं क्रियते, किं तत्रैव मन्त्रः कर्त्तव्यो न ? इति।

किं प्राप्तम् ?—दर्शपूर्णमासार्थमप्युद्धृतेऽग्नौ अग्निहोत्रं क्रियत एव। तत्र चेन्मन्त्रो न क्रियते, अमन्त्रोद्धृतेऽग्निहोत्रं प्रवर्त्तते। तस्मात् मन्त्रेण तदुद्धरणं कर्त्तव्यम्। यद्योच्येत,—'कालाभावे विगुणत्वादुद्धरणं नाग्निहोत्रस्येति, तन्न, कालमात्रं हि अपगतम्, उद्धरणं तु विगुणमप्यग्निहोत्रस्य भविष्यतीति। एवं चेत् समन्त्रकं कर्त्तव्यमिति।

एवं प्राप्ते ब्रूमः,—परार्थम् 'उत्पन्ने' अग्नौ 'यस्य' अग्निहोत्रं प्रवर्त्तते, (चोदनेति कर्म ब्रूमः) न तत्र मन्त्रः कर्त्तव्य इति; न तदग्निहोत्रस्योद्धरणं, अतः परकीये उद्धरणे न कर्त्तव्यमिति। उच्यते,—'ननूक्तं, विगुणमुद्धरणमग्निहोत्रस्यैव भविष्यति, न गुणाभावे प्रधानाभावोऽपि' इति। अत्रोच्यते, न गुणः कालः, निमित्तमसौ भवति,—इत्येतदुक्तम्। अतो निमित्ताभावे क्रियमाणमकृतं कृतं भवति। तस्मान्न तदुद्धरणमग्निहोत्रस्येति; न चेदुद्धरणमग्निहोत्रस्य, तस्मादत्र मन्त्रो न कर्त्तव्यः, कृतोऽपि असावनर्थक इति॥ (९।४।९अ०)॥

प्रायणीयवतौ प्रदानदर्शनाधिकरणम्॥

सू० प्रदानदर्शनं श्रपणे* तद्धर्मभोजनार्थत्वात् संसर्गाच्च मधूदकवत्॥ ३२॥ (पू०)॥

भा० ज्योतिष्टोमे समाम्नायते,—'आदित्यः प्रायणीयः† पयसि चरुः' इति। तत्र सन्देहः,—किं प्रदानार्थाः पयोधर्माः पयसि कर्त्तव्याः, उत न? इति। यदि प्रदानार्थमेतत् पयः, ततः कर्त्तव्याः, अथ श्रपणार्थं, न कर्त्तव्याः। कथं संशयः?। सप्तमीनिर्द्देशात् श्रपणार्थं पय इति गम्यते, देवतासम्बन्धस्य तु चरोरधिकरणे पयसि श्रूयमाणे वाक्यभेदाशङ्का, अतः संशयः।

किं तावत् प्राप्तं?—प्रदानार्थमिति। कथम्?। आदित्यः चरुर्भवति, स च पयसीत्येवमनेकार्थविधाने वाक्यं भिद्येत, द्वावपि चेदर्थौ अतो वाक्यादवगम्येते, यद्यन्यतरदेतयोर्विधीयते, तदाऽन्यतरदविधीयमानं गम्यते, अतो न वाक्यभेदः। यथा च न वाक्यभेदस्तथा आश्रयितव्यं; तत्राधिकरणसम्बन्धे विधीयमाने देवतासम्बन्धावगतिर्नावकल्पते, प्रमाणान्तरेणाप्राप्तत्वात्। देवतासम्बन्धे तु विधीयमाने हि ये निर्द्दिश्येते चरुपयसी, तयोर्निर्द्देशसामर्थ्याद्वाक्येन संसृष्टं गम्यते, तच्च देवतया सम्बध्यते, तत्रार्थात्पयश्चाधारश्चरुर्भवति।

आह,—'वाक्येन द्वे चरुपयसी गम्येते, न तयोः संसर्गः'।

---

* श्रपणे इति का० सो० पु० पाठः, एवं भाष्येऽपि।

† आदित्यः प्रायणीय इति का० सं० पुं० पाठः।

उच्यते,—यदा द्वे गम्येते, तदा प्रयोगवचनेन यौगपद्यमेतयोर्गम्यते, तदर्थात् संसर्गः, एककालत्वाच्च कालस्य सम्बन्धः। तेनात्र निर्देश एव विवक्षितः, नाधिकरणसम्बन्धो गम्यमानोऽपि विधीयते। एवं तु निर्देशः क्रियते, संसृष्टे चरुपयसी कथं गम्येयातामिति, तत्र चरुसंसृष्टं पयः चरौ त्यज्यमाने नियतं त्यज्यते, तदस्य 'प्रदानदर्शनं' भवति। पयसा अयमाचस्व तस्य प्रदानं कथम् स्यादिति सप्तमी निर्दिश्यते। तस्मात् भोजनार्थं यागार्थमेतत् पयः। भोजनमिति सारूप्यात् यागमाह। तस्माच्च पयः प्रदानार्थं पयोधर्मैः सम्बध्यते।

आह,—'न त्यागमात्रं यागः, देवतामुद्दिश्य यस्त्यागः स यागो भवति'। उच्यते,—अयमप्यदितिं देवतामुद्दिश्य त्यागः क्रियते इति। आह,—'न पयसोऽदितिर्देवता, न ह्युद्दिश्यमानैव देवता भवति, या यस्य श्रूयते सा तस्य देवता इति। चरोश्चैषा श्रूयते न पयसः'। उच्यते, उभयस्य निर्देशात्, उभयेन देवता सम्बध्यते, संसृष्टेन 'मधूदकवत्', यथा दधि मधु घृतं धाना उदकं, तत् संसृष्टं प्राजापत्यमिति भवति, एवमेवेदं द्रष्टव्यं। यद्यपि सप्तमीनिर्दिष्टं, सप्तम्यर्थस्याविवक्षितत्वान्निर्देशमात्रस्य विवक्षितत्वात्, यथौदने दधि दत्वा अभ्यवहर्तव्यमिति ओदनस्य निर्देशमात्रं विवक्ष्यते, नाधिकरणत्वम्, एवमिहापि द्रष्टव्यं। तस्मात् प्रदानार्थं पयः प्रदानार्थाश्च पयोधर्माः कर्त्तव्या इति॥

सू० संस्कारप्रतिषेधश्च तद्वत्॥३३॥ (यु० १)॥

भा० एवञ्च कृत्वा प्रदेयसंस्काराणां केषाञ्चित् प्रतिषेध उपपद्यो

भवति,—'अयजुषा वत्सानपाकरोति, अपविश्रयति गां दोहयति' इति; अतो हि प्रतिषेधो व्यर्थ इति ॥

सू० तत्प्रतिषेधे च तथाभूतस्य वर्जनात् ॥ ३४ ॥ (यु०२) ॥

भा० 'तत्प्रतिषेधे' पयःप्रतिषेधे तथाभूतमपि लोके वर्ज्यते,—पयसा सिक्तं, पयः अन्नम्; नचैष अयथार्थस्य द्रव्यस्य धर्मः, यथा अयथार्थं पानीयं, 'तत्प्रतिषेधे' तैले पीते पानीयं न पातव्यमिति विलेप्यं यवागूश्च पीयते। यच्च 'तथाभूतस्य वर्जनात्' पयो लोके एवं भवति, भोजनार्थं हि तत्; यथा हि लोके पयः, तद्वदिहापि भवितुमर्हति इति सामान्यतोदृष्टं व्यपदिष्टम् ॥

सू० अधर्मत्वमप्रदानात् प्रणीतार्थे विधानादतुल्यत्वा-दसंसर्गः ॥ ३५ ॥ (सि०) ॥

भा० 'अधर्मत्वं' तु पयसः, नास्य प्रदेयस्यैते धर्मा भवेयुरित्यर्थः। कुतः?। 'अप्रदानात्', नहीदं प्रदीयते। 'ननु चरौ प्रदीयमाने प्रदास्यत इत्येवमर्थं पयसि अयथामुच्यते'। नेत्याह,—शृतश्चरः कथं स्यादित्येवमर्थं हि तत् श्रायते। शृतैस्तण्डुलैः प्रयोजनमस्ति, नह्यन्यथा चरुर्भवति इति, नतु प्रणीतेन* पयसा नैतद्दातव्यं श्रूयते। कथम्?। 'प्रणीतार्थे विधानात्'। 'ननु वाक्यभेद एवं भवति इति परिज्ञापित एव पयः, संस्कृतत्वात् हविर्भवति इत्युक्तम्'। उच्यते,—'अतुल्यत्वादसंसर्गः,' अतुल्ये चरुपयसी,

* प्रणीतेन इति का० सं० पु० पाठः।

प्रत्यचतोऽधिकरणत्वेन पयः श्रूयते, प्रदेयत्वेन चरुः, पयसो यद्वाक्येन प्रदेयत्वं गम्यते, तदधिकरणश्रुत्या बाध्यते। यत्तु वाक्यभेदप्रसङ्ग इति, तन्न, न हि पयसि चरुरिति सम्बन्धो भविष्यति, कथन्तर्हि,—पयसि आदित्य इति, उभावादित्यशब्देन सम्बंत्स्येते,—आदित्यः पयसि, आदित्यश्चरुरिति उभौ चरुपयः-शब्दौ आदित्यप्रधानावित्येकं वाक्यं भविष्यति, न वाक्यभेद-प्रसङ्गः, पयश्चाधार आदित्यो भविष्यति। तस्मान्न पयसि प्रदेयधर्मा भवितुमर्हन्ति॥

सू॰ परो नित्यानुवादः स्यात्॥ ३६॥ ( आ॰नि॰१ )॥

भा॰ अथ यल्लिङ्गमुक्तं,—'अयजुषा वत्सानपाकरोति अपवित्र-वति गान्दोहयति' इति। नैतत्, एवं सति अस्यार्थस्य साधकं भवति, किन्तर्हि एतन्नित्यानुवादकं। नित्यमेतमर्थं सन्तं अनुवदति। नैवाप्रदेयत्वात् यजुषा वत्सा अपाक्रियन्ते, न पवित्रवति गौर्दुह्यते। 'ननु नित्यानुवादोऽनर्थकः'। उच्यते, न वयं प्रयोजनवत्ताम् अप्रयोजनवत्तां वा विचारयामः, किम् एतस्माद्वाक्याद्गम्यते? इति परीक्षामहे, अस्माच्च वाक्यादिदं गम्यते,—न यजुषा वत्सा अपाक्रियन्ते, न पवित्रवति गौर्दुह्यते इति, तच्चास्य अप्रदेयत्वात् अप्राप्तं यजुः पवित्रं वेति॥

सू॰ विहितप्रतिषेधो वा॥ ३७॥ ( आ॰नि॰ २ )॥

भा॰ अथवा, विहितस्यैव प्रतिषेधो द्रष्टव्यः,—विहितं केषाञ्चित् 'यजुषा वत्सानपाकरोति, पवित्रवति गां दुग्धि' इति, तस्य प्रतिषेधोऽर्थवानेव भवति इति॥

सू॰ वर्जने गुणभावित्वात्तदुक्तप्रतिषेधात् स्यात् कारणात् केवलाशनम् ॥ ३८ ॥ (आ॰नि॰ २)॥

भा॰ अथ यदुक्तं,—पयःप्रतिषेधे पयसा सिक्तं पयसा संसृष्टं च वर्ज्यते इति, तत्र ब्रूमः,—युक्तं हि लोके यत्संसृष्टस्य वर्जनं, तदेव हि तत्र प्रतिषिध्यते, नित्यं ह्युपसर्जनीभूतं भोजने पयः प्रचरति, यच्च प्रचरति, तत्प्रतिषेधाऽर्थवान्, यत् न प्रचरति, तस्य ह्यप्रसङ्गात् प्रतिषेधोऽनर्थकः। 'ननु केवलमपि लोके पय उपभुज्यते'। उच्यते, 'कारणात् केवलाशनं,'—व्रतमौषधं वा यस्य, स केवलं उपयुङ्क्ते, नत्वेतत् प्रचुरं। तस्मात् प्रायेण गुणभूतत्वात् पयसः, पयोयुक्तमेव न भक्षयितव्यमित्येवमर्थः पयःप्रतिषेध उच्यते ॥

सू॰ व्रतधर्माच्च लेपवत् ॥ ३९ ॥ (आ॰)॥

भा॰ अथ कस्मान्नायमन्यः परिहार उच्यते ?,—व्रतवदेतत् द्रष्टव्यमिति,—यथा ब्रह्मचारिणा मांसं न भक्षयितव्यमित्युक्ते दर्विगतमपि लेपं वर्जयन्ति, एवमिहापि पयो न पातव्यमित्युक्ते पयसा सिक्तं पयसा संसृष्टं वर्जयिष्यन्ति इति ॥

सू॰ रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥ ४० ॥ (आ॰ नि)॥

भा॰ नं वा 'एष' परिहारः। परिहारान्तरनिवृत्त्यर्थो वाशब्दः। कुतः ?। 'पुरुषधर्मत्वात्' व्रतस्य,—अदृष्टार्थं ब्रह्मचारिणो मांसभक्षणं, तत्र तावदपि यो भक्षयति, यावति मांसरसमात्रं विदितं भवति, तस्यापि दोषः, न श्लेष्मप्रकोपादि किञ्चित् दृष्टमपेक्षते,

ननु पयःप्रतिषेधे तथा, तस्मात् पूर्व एव परिहार इति ॥ (६।४।१०प०) ॥

---

अभ्युदयेष्टौ दधिपयसोः पयोधर्मानुष्ठानाधिकरणम् ॥

सू० अभ्युदये दोहापनयः स्वधर्मा स्यात् प्रवृत्तत्वात् ॥ ४१ ॥

भा० इदं समाम्नायते,—'वि वा एनं प्रजया पशुभिरर्द्धयति वर्द्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति त्रेधा तण्डुलान्विभजेद्ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्' इति। 'शृते चरुन्दधंश्चरुम्' इत्येतदुदाहरणं। तत्रैषोऽर्थः सांशयिकः,—किं शृते दधनि च इज्यार्थाः पयोधर्माः कर्त्तव्या, उत न ? इति। किं प्राप्तं ?। न कर्त्तव्या इति। कुतः ?। अप्रदानार्थत्वात्, प्रणीतार्थे विधानात् अतुल्यत्वाच्च चरुणा न संसर्ग इति।

एवं प्राप्ते ब्रूमः,—'अभ्युदये' निमित्ते योऽयं दोहो देवताया अपनीतः, स 'स्वधर्मा स्यात्', इज्यार्थाश्च तत्र पयोदधिधर्माः कर्त्तव्याः। कुतः ?। इज्यार्थमेव हि तत् पयो दधि च प्रवृत्तं, यतश्चेज्यार्थम्, अतोऽस्येज्यार्थाः प्रवृत्ता एव धर्माः, तद्धर्माणां प्रवृत्तावस्ति कारणं, निवृत्तौ नास्ति।

'ननु प्रणीतार्थे दधिपयसी श्रियेते'। नैतदेवम्,—वाक्यं हि

| | Rs. As |
|---|---|
| The Maitri Upanishad with a commentary and a translation. By E. B. Cowell, M. A., 3 Fasciculi, ... ... ... | 1 14 |
| The Gopála Tápani. Edited by Paṇḍita Harachandra Vidyábhúshana | 0 10 |
| The Grihya Sutra of A'svaláyana, with the commentary of Gárgyanáráyaṇa. Edited by A'nandachandra Vedántavágisa 4 Fasciculi, | 2 8 |
| The Nrisinha Tápani with the commentary of Sankara A'chárya, edited by Paṇḍita Rámmaya Tarkálankára. 3 Fasciculi, .. | 1 14 |
| Gopatha Brahmana, Edited by Babu Rájendralála Mitra. 2 fasc.,... | 1 10 |
| The Taittiriya Prátisákhya. Edited by Bábu Rájendralála Mitra. 3 fasc., ... ... .. ... ... | 1 14 |
| The Taittiriya A'raṇyaka of the Black Yajur Veda. Edited by Bábu Rájendralála Mitra. 11 Fasciculi, ... ... ... | 6 14 |
| The Látyáyana Sutra. Edited by Paṇḍita A'nandachandra Vedántavágiśa. 9 Fasciculi, .. ... ... .. | 5 10 |
| Chaturvarga Chintámani by Hemádri. Danakhandah Edited by Paṇḍit Bharata Chandra Siromani, 11 fasc., ... ... | 6 14 |
| The Táṇḍya Mahábráhmaṇa with the Commentary of Śáyaṇácharya. Edited by A'nandachandra Vedántavágisa, 19 Fasciculi, .. | 11 4 |
| Chhandah Sútra of Pingala Achárya. Edited by Viśvanátha S'ástrí 3 fasc. ... ... .. .. .. | 1 11 |

SANSKRIT WORKS IN PROGRESS.

*Old Series Nos.* 1 *to* 230, *demi* 8vo.

| | |
|---|---|
| The Lalita-Vistara, or Memoirs of the Life and Doctrines of S'ákya Siñha. Edited by Bábu Rájendralála Mitra. Published 5 Fasciculi, ... ... ... ... .. | 3 2 |
| The Taittiríya Bráhmaṇa of the Black Yajur Veda, with the commetary of Sáyaṇa. Edited by Bábu Rájendralála Mitra, Published 26 Fasciculi, .. ... ... .. | 16 |
| Taittiriya Sanhitá. Edited by Dr. E. Röer, E. B. Cowell, M. A. and Mahesachandra Nyáyaratna. Published 23 Fasciculi ... | 16 14 |

*New Series, Nos.* 1 *to* 291, *demi* 8vo.

| | |
|---|---|
| The Mimáñsá Darśana, with the Commentary of S'avara Svámí. Edited by Paṇḍita Maheśachandra Nyáyaratna. Published, 11 Fasciculi, ... .. .. .. ... | 6 14 |
| The Agni Puráṇa. Edited by Bábu Rájendralála Mitra, .. 6 Fasciculi, ... .. ... .. ... | 2 8 |
| Gobhiliya Grihya Sutra with a commentary by the Editor, Pandit Chandrakánta Tarkálankár. 5 fasc., .. ... ... | 3 2 |
| Sáma Veda Sañhita with the commentary of Sayaṇa A'chárya. Edited by Paṇḍit Satyavrata Sámasramí, Part I. 10 fasc., Part II. Fas. I. | 6 4 |
| A'tharvanopanishads with the commentary of Náráyana, Edited by Paṇḍita Rámamaya Tárkáratna, Nos. 249 265 276 & 282. 305 | 3 2 |
| Prithiraj Rasu, by Chand Bardai, Part I. fasc. I Pt. II. fasci. I. ... | 0 10 |

*English Translations complete, demi* 8vo.

| | |
|---|---|
| An English Translation of the Brihad A'raṇyaka Upanishad, and Commentary. By Dr. E. Röer, 3 Fasciculi, .. ... | 1 14 |
| An English Translation of the Chhándogya Upanishad, by Babu Rájendralála Mitra. 2 Fasciculi, ... ... ... | 1 |
| An English Translation of the Taittiriya, Aittaréya, Svetáśvatara. Kéna, Iśa, Katha, Muṇḍka and Máṇḍukya Upanishads, by Dr. E. Röer. 2 Fasciculi, .. ... .. .. | 1 4 |
| The Súrya-Siddhánta, translated by Paṇḍita Bápú Deva Sástri. 1 Fasciculus, ... ... ... ... ... | 0 10 |
| The Siddhánta Siromani, tranlated by the late Lancelot Wilkinson, Esq., C. S. and revised by Paṇḍita Bápu Deva Sástri. 2 Fasciculi, .. ... ... ... .. | 1 4 |
| A Translation of the Sánkhya Aphorisms of Kapila, by Dr. Ballantyne, published 2 Fasciculi, ... ... ... | 1 8 |

| | Rs. | As. |
|---|---|---|
| *English Translations in progress, demi 8vo.* | | |
| Sáhitya Darpaṇa or Mirror of Composition, a treatise on Literary criticism by Visvanátha Kavirája. Translated into English by Babu Pramadádása Mitra. 3 Fasciculi, — — | 1 | 14 |
| The Brahma Sutra with the commentary of Sankara Ácharya. Translated into English by the Rev. K. M. Banerjea, No. 214, — | 1 | 0 |
| Aini Akbari 6 fasc., — — — | 10 | 8 |
| B. MISCELLANEOUS. | | |
| One complete set of the Journal of the Asiatic Society of Bengal, — | 750 | 0 |
| Journal of the Asiatic Society, from Vol. XII. for 1842, to Vol. XXXVI. for the 1867, except Vols. XXIII, XXIV. and XXIX. prices as per title page. | | |
| Asiatic Researches, from Vols. VI to XII. and Vols. XVII. to XX., each at., — — — — — | 10 | 1 |
| Ditto ditto, Index, — — — — | 5 | 0 |
| Catalogue of the Books and Maps in the Library of the Asiatic Society, By Bábu Rájendralála Mitra, 1856, — — | 3 | 0 |
| ——— of the Sanskrit Books and MSS. of the Asiatic Society, — | 1 | 0 |
| ——— of Persian, Arabic, and Urdu, ditto, — — | 1 | 0 |
| ——— of the Fossil Remains of Vertebrata from the Sewalik Hills, the Nerbudda, Perim Island, &c. in the Meseum of the Asiatic Society of Bengal. By H. Falconer, Esq., M.D., F. R.S. and H.S., | 2 | 0 |
| ——— of the Recent Shells in the Museum of the Asiatic Society, by W. Theobald, Esq., Jnr., — — — | 3 | 0 |
| ——— of the Reptiles in the Asiatic Society's Museum by W. Theobald, Esq., Jr., — — — — | 3 | 0 |
| Catalogue of Mammalia, — — — — | 3 | 0 |
| Harivansa, 563 pages, royal 4to., — — — | 3 | 0 |
| Maháhbhárata, Vols. 3rd and 4th, royal, 4to., and Index, — | 40 | 0 |
| Rájatarangini, 440 pages, 4to., — — — | 4 | 0 |
| Csoma's Tibetan Grammar, — — — | 8 | 0 |
| ——— ——— Dictionary, — — — | 10 | 0 |
| Vedánta Sára, translated by Dr. E. Röer., — — | 0 | 8 |
| Purána Sangraha, edited by the Rev. K. M. Banerjea, No. I., — | 1 | 0 |
| 1.—PRIVATE PUBLICATIONS. | | |
| Wise's Hindu System of Medicine, — — — | 9 | 0 |
| The pilgrimage of Fa Hian, — — — | 5 | 0 |
| Lassen's Bactrian Coins, by Dr. Edward Röer, — — | 5 | 0 |
| Meng Tseu, in Latin, by Stanislaus Julien. Two parts in one vol., | 6 | 0 |
| Aborigines of India, by B. H. Hodgson, — — | 3 | 0 |
| History of the Afghans, Pt. I., by Dorn, — — | 5 | 0 |
| Examination and Analysis of Mackenzie Manuscripts, by the Rev. W. Taylor, — — — — | 2 | 1 |
| Low's Siamese Grammar, — — — — | 2 | 1 |
| Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis, F.R.S., | 1 | 8 |
| Dictionarium Anamrtico-Latinum, by A. J. L. Tabard, — | 14 | 0 |
| Blank Vocabulary for Ethnographical purposes, — — | 1 | 0 |
| Collection of Oriental Proverbs, by Thomas Roebuck, — — | 2 | 0 |
| Mataparikhá, — — — — — | 0 | 8 |
| Travels of Macarius, Pt. I., by F. C. Balfour, — — | 4 | 0 |
| Contributions towards an Index to Indian Bibliography, F. Hall, — | 2 | 0 |
| Outlines of Indian Philology, by J. Beames, — — | 3 | 8 |
| Translations from the Tárikh Fírúzshahi, — — — | 1 | 8 |

*N. B.*—For Arabic, Persian and Urdu works vide the covers of the persian series.

# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

OLD SERIES, No. 368.



# मीमांसादर्शनम् ।

## श्रीशवरस्वामिकृतभाष्यसहितम् ।

## उत्तरार्द्धम् ॥

---

# THE MI'MA'ÑSA' DARS'ANA.

WITH THE COMMENTARY OF

S'AVARA SVÆMIN,

EDITED BY

MAHES'ACHANDRA NYA'YARATNA.

FASCICULUS XIII.




CALCUTTA:

PRINTED BY C. B. LEWIS, BAPTIST MISSION PRESS.

1877.

# शुद्धिपत्रम्।

| पृष्ठा | पङ्क्तिः | अशुद्धं | शुद्धम् |
|---|---|---|---|
| २८६ | ६ | अभिधीयभाने | अभिधीयमाने |
| २९२ | १९ | अभिर्दंश्यः | अनिर्देश्यः |
| २९६ | २१ | यगस्तु | यागस्तु |
| ३०१ | ४ | अपि चा | अपिवा (एवं परत्र पङ्क्तौ) |
| ३०४ | १ | .शिष्टत्वात् | विशिष्टत्वात् |
| ३०८ | १ | जातः?’ | जातः’ |
| ३१६ | १६ | कोमो | कामो |
| ३१८ | १४ | आ सो ० | आ सोमं |
| ३२१ | १४ | कर्म्मसम्बद्धतरं | कर्म्म सम्बद्धतरं |
| ३३२ | ४ | ‘प्रविशेषात्’ | ‘अविशेषात्’ |
| ३३३ | २० | चार्थतप्रःद | चार्थतः प्रद |
| ३३६ | ११ | सादयतिव्यः | सादयितव्यः |
| ३४१ | २१ | बचि | शुचि |
| ३५६ | १९ | घदेकेन | चेदेकेन |
| ३६७ | १३ | अङ्गं | अङ्ग |
| ,, | २१ | वाक्यनि | वाक्यानि |
| ३७२ | २ | तेनैत् | तेनैतत् |
| ३८० | १७ | यदव | यदेव |

---

तदा भिद्येत,—चरौ देवतार्थे, सर्वार्थयोश्च दधिपयसोः। आह,—'ननु चरोरपि देवतासम्बन्धो दधिपयसोरपि तथा, न भविष्यति वाक्यभेद इति'। नैवं शक्यं, विभागः कर्त्तव्य इति, पूर्ववाक्यं ह्युक्तं,—'त्रेधा तण्डुलान् विभजेत्' इति; तदनन्तरं विभागविशेषपरमिदं भवति वाक्यं,—'ये स्थविष्ठाः, तानिन्द्राय प्रदात्रे दधंश्चरुं येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्' इति; अथाविशेषाद्दधिपयसोरपि विभागो वक्तव्यः। यदि च दधिपयसी विभक्तव्ये सती प्रणीतार्थेऽप्युच्येयातां, ततो भिद्येत वाक्यम्, अतो नैतयोः प्रणीतार्थं विधानं। अविधीयमाने च सप्तम्यर्थे प्रातिपदिकार्थौ देवतया सम्भंत्स्यते, वाक्यसामर्थ्यात्। उभे च दधिपयसी देवतया सम्भंत्स्येते चरुणा सह,—दधनि चरुरेको भाग इन्द्राय प्रदात्रे भवति इति। यथा विभज्यमानेषु नानाद्रव्येषु उच्येत,—रुक्मपात्र्यां समाहार्यो मणयः, एको भागो देवदत्तस्य; रजतपात्र्यां सुवर्णं निहितम् अपरो भागो विष्णुमित्रस्येति सह पात्रीभ्यां द्वौ भागौ गम्येते, विभागविशेषपरत्वाद् वाक्यस्य, पात्र्योश्च विभक्तत्वादनुवादश्च सप्तम्यर्थो गम्यते। एवमिहापि विभागपरत्वादेव वाक्यस्यास्य, विभक्तत्वाच्च दधिपयसोरेको भाग इति गम्यते। अर्थप्राप्तत्वाच्च सप्तम्यर्थोऽनुवादो भविष्यति। तस्मात् प्रदानार्थे दधिपयसी। प्रदानार्थाश्च दधिपयसोर्धर्माः कर्त्तव्याः ॥

सू० कृतोपदेशाच्च ॥ ४२ ॥ (यु०) ॥

भा० इतश्च प्रदानार्थे दध्नि पयसि च इज्यार्था धर्माः कर्त्तव्याः

इति। कुतः?। सिद्धवत् शृतोपदेशो भवति,—'शृते चरुं दधंश्चरुम्' इति। स खलु धर्मेषु उपपद्यते, इतरथा श्रयणं न क्रियेत इति। तत्र सिद्धवच्छृतोपदेशो नावकल्पेत। तस्मादपि पश्यामः इज्यार्थाः दधिपयसोर्धर्माः कर्त्तव्या इति॥ (९।४।११अ०)॥

---

पश्वकामेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम्॥

सू० अपनयो वार्थान्तरे विधानाच्चरुपयो-
वत्॥४३॥ (सि०)॥

भा० अस्ति पशुकामेष्टिः,—'यः पशुकामः स्यात् सोऽमावास्या-मिष्ट्वा वत्सानपाकुर्यात्। ये चोद्दिष्टास्तानग्नये सनिमतेऽष्टा-कपालं निर्वपेद् ये मध्यमास्ताम् विष्णवे शिपिविष्टाय शृते चरुं ये स्थविष्टास्तानिन्द्राय प्रदात्रे दधंश्चरुम्' इति। शृते चरुं, दधं-श्चरुमित्येतदुदाहरणम्। अत्र सन्देहः,—किं शृते दधनि चेज्यार्था दधिपयोधर्माः कर्त्तव्या उत न? इति। किं प्राप्तं?—पूर्वेणाधिकरणेन कर्त्तव्या इति, समाना हि श्रुतिर्भवति इति। सिद्धवच्च शृतोपदेशः खलु प्रदानार्थेषु धर्मेषु उपपद्यते।

एवं प्राप्ते ब्रूमः,—'अपनयो वा' धर्माणां भवेत्। 'अर्थान्तरे' ह्येतत्पयो विधीयते, दधि च श्रयणार्थं, न प्रदानार्थं; चरुमी-संयोगात् 'चरुपयोवत्'। यथा प्रायणीये चरौ पयसि प्रदेयधर्मा न क्रियन्ते चरुमीसंयोगात्, एवमिहापि॥

सू० लक्षणार्था शृतश्रुतिः॥४४॥ (आ० नि०)॥

भा० अथ यदुक्तं,—'श्रिद्रुवत्कृतोपदेशो भवति' इति। नैष दोषः। श्रयणेन द्रव्यं लक्षयिष्यति, यथाप्राप्तं हि परो श्रयणं, तत्सम्बद्धं द्रव्यं लक्ष्यते, श्रयणवति द्रव्ये चरेरिति। तस्मात् प्रदेयधर्मा न भवेयुरिति॥ (९।४।१२अ०)॥

---

ज्योतिष्टोमे श्रयणानां प्रदेयधर्म्मानुष्ठानाधिकरणम्॥

सू० श्रयणानान्त्वपूर्व्वत्वात् प्रदानार्थे विधानं स्यात्॥ ४५॥ (पू०)॥

भा० ज्योतिष्टोमे श्रूयते,—'पयसा मैत्रावरुणं श्रीणाति सक्तुभिर्मन्थिनं धानाभिर्हारियोजनं हिरण्येन शुक्रं आज्येन पात्नीवतं'। तत्र संशयः। किं श्रयणानां प्रदेयधर्मा भवन्ति, उत न? इति। कुतः संशयः?। यदि प्रदेयानि श्रयणानि, तत एषु प्रदेयधर्मा भवन्ति, अथ न प्रदेयानि, न भवन्ति इति। किं प्राप्तं?—प्रदेयानि प्रदेयधर्म्मैः सम्बध्येरन् इति। श्रयणाद्धि द्वयं जायते, पयोमिश्रश्च सोमो भवति, संमिश्रे च हूयमाने पयोऽपि होमेन सम्बध्यते। यदि पयोमिश्रस्य सोमो भवति, तत्र सोमस्य पयसा मिश्रमाणस्य न कञ्चिदुपकारं पश्यामः, यागे* तु उपकारो भवति निर्वृत्तिर्नाम। यदि होमेन सम्भंत्स्यत इति मिश्रणाभिप्रायः, ततः उपकारकं मिश्रणं दृष्टेनोपकारेण, अतो हि गुणवान् यागः प्रत्यक्षः पयसा निर्वर्त्त्येत इति। सोमोपकारः कल्प्यः स्यात्। तस्मात् पयसा सोमो मिश्रयते, स मिश्रितः प्रयोगवचनेन कथं

---

* यागस्य इति क० ख० एवं का० सं० पु० पाठः।

सम्बध्यत इति। न च प्राकृतं मिश्रणं केनचिद्द्रव्येण प्राप्तं, यचेदं द्रव्यान्तरं पयो विधीयते इति, 'अपूर्वत्वात्' सोमस्य। तस्मात् प्रदानार्थस्य पयसो 'विधानं स्यात्'। प्रदेयपयोधर्मास्तस्य कर्त्तव्या इति ॥

सू॰ गुणो वा श्रयणार्थत्वात् ॥ ४६ ॥ (सि॰) ॥

भा॰ 'वा'-शब्दः पक्षं व्यावर्त्तयति। गुणभूतं पयः स्यात् सोमस्य, न प्रदेयद्रव्यं, प्रदेयत्वेनाश्रवणात्, सोमार्थेन च श्रुतत्वात् ॥

सू॰ अनिर्देशाच्च ॥ ४७ ॥ (यु॰१) ॥

भा॰ न होमेन प्रयोगवचनेन वा अस्य सम्बन्धः। अनिर्देशः परार्थत्वात्*। न च, प्रत्यक्षेणापि पयस्त्यागे यागनिर्वृत्तिः पयसा, प्रत्यक्षदेवतासम्बद्धो हि त्यागो यागः; न चात्र पयसो देवता-सम्बन्धः,—'मैत्रावरुणं ग्रहं गृह्णाति' इति वचनं, न मैत्रावरुणं पय इति। तस्मात् दृष्टोपकाराभावात् अदृष्टः सोममिश्रणे सोमसंस्कारोऽभ्युपगम्यते, तस्मान्न प्रदेयधर्मैः सम्बध्यत इति ॥

सू॰ श्रुतेश्च तत्प्रधानत्वात् ॥ ४८ ॥ (यु॰२) ॥

भा॰ इतश्च सोमार्थं पयः। कुतः?। श्रुतिर्हि सोमप्रधाना भवति,—द्वितीयाविभक्तिः श्रूयते। तस्मात् श्रयणेन सोम एवेष्यत इति ॥

---

* चानिर्देशः परार्थत्वात् ॥ इति सूत्रमधिकमादर्शपुस्तके विद्यते।

सू० अर्थवादश्च तदर्थवत् ॥ ४९ ॥ (यु०३) ॥

भा० अर्थवादश्च श्रयणस्य सोमार्थस्य भवति,—'स मित्रोऽब्रवीत् पयसैव मे सोमं श्रीणन्' इति, न हि भवति 'पयो मे दधुः' इति। कथं तर्हि?—सोमं पयसा संस्कुर्युः इति। तस्मादपि सोमार्थं श्रयणम् ॥

सू० संस्कारं प्रति भावाच्च तस्मादस्य प्रधानं स्यात् ॥ ५० ॥ (यु०४) ॥

भा० 'संस्कारं प्रति' श्रयणवचनं भवति, यत्र संस्काराः श्रूयन्ते तत्रेदं श्रूयते,—'पयसा मैत्रावरुणं श्रीणाति' इत्येवमादि। तस्मात् संस्कारप्राये श्रवणादयमपि संस्कार एवेति गम्यते। भवति हि प्रायोवृत्त्या तद्बुद्धिः, यथाऽश्वप्राये लिखितोऽश्व इति गम्यते। तस्मात् प्रदेयधर्म्मैर्न सम्बध्यत इति ॥ (९।४।१२ अ०) ॥

---

अश्वमेधे ईशानाय परस्वत इत्यनेन यागान्तरविधानाधिकरणम् ॥

सू० पर्य्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ५१ ॥ (पू०) ॥

भा० अश्वमेधे समामनन्ति,—'ईशानाय परस्वत* आलभेत' इति। तत्प्रकृत्य श्रूयते,—'पर्य्यग्निकृतान् आरण्यानुत्सृजन्ति' इति। तत्र संशयः,—किमारण्यानामालम्भ उत्सर्गार्थ एव, द्रव्योत्सर्गश्च अथ

---

* परस्वच्छब्देन आरण्याः पशुविशेषा उच्यन्ते इति माधवः। पूर्व्वपक्षवादिमते आलम्भशब्देन स्पर्शोऽर्थः।

किं कर्मशेषप्रतिषेधः,—पर्यग्निकरणान्तेः संस्कृता उत्स्रष्टव्याः ? इति। किं प्राप्तं ?—द्रव्योत्सर्गोऽयम्, आलम्भस्य उत्सर्गार्थ एवेति। कुतः?। एवमुत्सर्गम् अप्राप्तं विदधत् तस्य सत्तां ब्रुवन् श्रुत्या वक्ष्यति, इतरथा उत्सर्गं प्राप्तमनुवदेत्। वाक्यार्थस्य प्रतिषेधस्य सत्तां ब्रूयात् प्रत्ययः। श्रुतिश्च वाक्याद् बलीयसी। एवञ्च सति देवतासम्बन्धो ग्रहणे,—ईशानमुद्दिश्य परस्वन्त आलब्धव्याः, पर्यग्निकरणं कृत्वा त्यक्तव्या इति; 'उपधानवत्', यथा, 'एतत् खलु साचादन्नं य एष चरुर्य एनं चरुमुपदधाति' इत्युपधानार्थमेव चरोरुपादानम्, एवमिहापि उत्सर्गार्थं एवालम्भो भविष्यति॥

सू॰ शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत्॥ ५२॥ (सि॰)॥

भा॰ कर्मशेषप्रतिषेधो वा'ऽस्मिन् वाक्ये उच्यते। कुतः?। 'अर्थाभावात्',—'ईशानाय परस्वत आलभेत' इत्यस्य वाक्यस्य न कश्चिदर्थो भवेत्, यद्युत्सर्गार्थं आलम्भः स्यात्। कथं?। आलम्भकाल एवाध्वर्युर्जानीयात् नेमे ईशानाय दास्यन्त इति, तस्यैवं जानतो नैवं सङ्कल्पो भवति,—ईशानाय दातुं गृहीतव्या इति। असङ्कल्पार्थत्वादनर्थकमिदं वाक्यं भवति। स एव सङ्कल्प एवमवकल्पते यदीशानाय दातव्याः। तस्मादालम्भवचनेन शब्देन दानमेव विधीयते इति गम्यते। यदा च दानं विधीयते, तदा पर्यग्निकृतानुत्सृजन्तीत्युत्सर्गमनूद्य, एवमुत्सृजन्तीतिविशेषविधानार्थं भवति शास्त्रम्।

'कथं पुनरत्र विशेषो विधीयते,—किं कालः पर्यग्निकरणे,—एत-

स्मिन् काल उत्सृजन्तीति ?'। नेत्याह,—नात्र कालवचनः शब्दः श्रूयते। काले च विधीयमाने कालान्तरं प्रतिषिध्यते न अङ्गान्तराणि। 'अथ किं पर्यग्निकरणवदुत्स्रष्टव्यमिति ?। तदपि नास्ति, न ह्यत्र पर्यग्निकरणभावना कोर्त्यते। तस्माद्व सत्यां पर्यग्निकरणात् प्राञ्चः पराञ्चश्चार्थाः सर्वे प्रतिषिध्येरन्। कथं तर्हि?— निर्वृत्ते पर्यग्निकरणे उत्स्रष्टव्यः इति। 'किमेतस्यामवस्थायामिति ?'। नेत्याह,—चोदकादेवैतत् प्राप्तम्,—एतदवस्थः पशुरुत्सर्जनीय इति। अवस्थान्तरप्रतिषेधस्य च नायं शब्दो वाचकः। चोदकप्राप्ते हि काले उत्सृज्यमाने कृतपर्यग्निकरण एवासौ भवति। यदि तु अवस्थायाः प्रतिषेधः स्यात्, पर्यग्निकरणादूर्द्ध्वं उत्सर्गात् प्राक् पदार्थाः प्रतिषिध्येरन्, न पराञ्चः। 'कस्तर्ह्यर्थः ?'। पर्यग्निकरणे कृते यादृशो भवति तादृशस्त्याज्य इति। 'ननु चोदकेनैव तदङ्गोऽसौ प्राप्तः'। उच्यते,—पुनरस्यैतदङ्गवत्ता श्रूयते, अङ्गान्तरपरिसङ्ख्यार्थम्,—एतैरेव अङ्गैरङ्गवानुत्स्रष्टव्यः। एवं चोदकप्राप्तानि परिसङ्ख्यायन्ते, नान्यानि अङ्गानि भवन्तीति। 'कथमेष शब्द एवं परिसङ्ख्यातुं शक्नोति इति चेत्'। शक्नोतीति ब्रूमः,— कथं ?। प्रत्यक्षेण वाक्येन तैरङ्गैर्निराकाङ्क्षीकृते प्रधाने शेषैरङ्गैः सह चोदकेन परोक्षा सती एकवाक्यता न भविष्यति इति। तस्मात् कर्मशेषप्रतिषेध इति॥

सू॰ पूर्ववत्त्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥ ५३ ॥ (यु॰१) ॥

भा॰ पूर्ववांश्च भवति शब्दो यागप्रवृत्तिपूर्वकः,—'आज्येन शेषं

संस्थापयति' इति। यदि याग एव प्रारब्धस्ततः संस्थापयतीति समाप्तिसादृश्यादुपपद्यते। यागस्य हि इदं यागान्तरं समाप्त्या सदृशं। यदि हि पूर्वो न यागः प्रवृत्तः स्यात् उत्सर्गमात्रं, न तस्य यागः समाप्त्या सदृशस्तत्र संस्थापयतीति नोपपद्यते। तस्मादपि शेषकर्म्मप्रतिषेधः॥

सू॰ प्रवृत्तेर्यज्ञहेतुत्वात्प्रतिषेधे संस्काराणामकर्म्म स्यात् तत्कारितत्वाद् यथा प्रयाजप्रतिषेधे ग्रहणमाज्यस्य॥ ५४॥ (यु॰२)॥

भा॰ इदं प्रयोजनसूत्रं। यदि द्रव्योत्सर्गो विधीयते ततः 'संस्काराणामकर्म स्यात्'। कुतः?। संस्कार'प्रवृत्तेः' 'यज्ञहेतुत्वात्'। तत्'प्रतिषेधे' (यज्ञाभावे) किमिति संस्काराः क्रियेरन्, यज्ञकारिता हि ते। यथा प्रयाजाभावे तदर्थमाज्यं न गृह्यते, ग्रहणमाज्यस्य न क्रियते, अप्रयाजास्ता अननूयाजा इति यत्र श्रूयते तत्र प्रयाजाभावे तदर्थमाज्यं न गृह्यते, एवमिहापि संस्कारा न कर्त्तव्या इति॥

सू॰ क्रिया वा स्यादवच्छेदादकर्म्म सर्वहानं स्यात्॥ ॥ ५५॥ (आ॰ नि॰)॥

भा॰ यदा तु कर्म्मशेषप्रतिषेधपक्षस्तदापि किं न कर्त्तव्याः संस्काराः? इति। नैतदेवं,—'क्रिया' स्यादवच्छेदपक्षे, यागो हि तदा भवति। तस्मात् सर्वे यागपदार्थाः कर्त्तव्याः। यदि न यागो भवेत् ततः 'अकर्म', संस्काराणां 'सर्वहानं स्यात्', यागस्तु तदा

भवति । तस्मात् कर्मशेषप्रतिषेधपक्षे सर्वं कर्त्तव्यम् इति ॥ (८।४।१४ अ०) ॥

---

आज्येन शेषं संस्थापयतीत्यनेन कर्म्मान्तरविधानाधिकरणम् ॥

सू० आज्यसंस्थाप्रतिनिधिः स्यात् द्रव्योत्सर्गात् ॥ ॥ ५६ ॥ (पू०) ॥

भा० 'पर्य्यग्निकृतं पात्नीवतमुत्सृजति' इति प्रकृत्य श्रूयते,—'आज्येन शेषं संस्थापयति' इति । तत्र सन्देहः,—किमाज्यं पूर्व्वस्मिन् कर्मणि प्रतिनिधीभूतम्, अथ वा आज्यद्रव्यकं पूर्व्वस्मात् कर्मान्तरं विधीयते? इति । किं प्राप्तं?—प्रतिनिधिरिति । कुतः ?। पात्नीवतमिति द्रव्यम् उच्यते, उत्सृजतीति तत्रैवोत्सर्गः श्रूयते। शेषमित्युपयुक्तेतरत् विद्यमानं गम्यते, तत् 'आज्येन संस्थापयति' इति पश्चोः कार्य्ये आज्यं श्रुतं भवति इति । 'ननु पूर्व्वकर्म परिसमाप्तमित्युक्तम्' । अत्रोच्यते,—द्रव्योत्सर्गवचने प्रत्यक्षे, शेषशब्दे वाऽपरिहृते पुनरसमाप्तं पूर्व्वकर्मेत्याशङ्कते, तस्मात् प्रतिनिधीयते आज्यमित्याशङ्कामहे। 'संस्थापयति' इति च अपूर्व्वे नोपपद्यते॥

इतस्त्वाशङ्कामहे,—

सू० समाप्तिवचनात् ॥ ५७ ॥ (२ यु०) ॥

भा० समाप्तिवचनमिदं भवति,—'संस्थापयति' इति, तेन मन्यामहे, यत् पूर्व्वं पशुना आरब्धं तदुत्सृष्टे पशावाज्येन परिसमाप्यते

इति। अपूर्वस्याच कर्मण उच्यमानस्यारम्भ एव वक्तव्यो भवति, यतस्त्वनभिधायारम्भं परिसमाप्तिरेवोच्यते, ततोऽवगच्छामः, पूर्वस्यैव परिसमाप्तिर्नापूर्वकर्म चोद्यत इति॥

सू० चोदना वा कर्म्मोत्सर्गादन्यैः स्यादविशिष्टत्वात्॥ ५८॥ (सि०)॥

भा० कर्म्मान्तरचोदना वा। कुतः?। पूर्वस्य कर्म्मणः परिसमाप्तत्वात्। 'ननूक्तं द्रव्योत्सर्गे प्रैषवचने वाऽपरिहृते पूर्वकर्म्मणोऽसमाप्तिराशङ्किता भवति। अत्रोच्यते,—इदं द्वयमपि परिह्रियते,—'संस्थापयति' इति प्रकृतेन पात्नीवतशब्देन सम्बध्यते, तत्रायमर्थः, 'पात्नीवतं संस्थापयति' इति, स एष* यागो विधीयते। संपूर्वस्य स्थापयतिः प्रयुज्यते, अवश्यं कश्चिद्धातुः पूर्वो भावनावचनस्य प्रयोक्तव्य इति तत्राविरुद्धो भावनायामुच्यमानायामर्थप्राप्तः संस्थापयतिरालभतिरिव प्रयुज्यते। प्रैषशब्दस्यैवं सादृश्यात् प्रयुज्यते। द्रव्योत्सर्गस्याविरुद्ध एव यागे उच्यमाने, तस्माद् यथाऽन्ये निर्वपत्यादयः कर्म्मान्तरविधाने भवन्ति, एवं तैरविशिष्टत्वात् संस्थापयतिरपि भवितुमर्हति इति॥

सू० अनिज्याच्च वनस्पतेः प्रसिद्धा तेन दर्शयति॥ ५९॥ (यु०)॥

---

* एव इति का० सं० पु० पाठः।

भा॰ 'अभिहुतां' 'वनस्पतेः' 'अग्निष्वात्' अत एव पठति। कथं ?। 'यत् त्वष्टारञ्च वनस्पतिमावाहयस्यथ वेनौ यष्ठ्युभि लाशो नवमो प्रयाजेज्या वानस्पत्या इत्यन्यचैवेताविष्टौ विद्यात्' इत्यङ्गान्तरेणानुयष्टं ब्रुवन् वनस्पतीज्याया अभावं दर्शयति, शेषपरिसमाप्तौ सत्यां 'वनस्पतिं जुहोति' इति। अथ परिसमाप्तं पूर्वं कर्म, ततो लुप्ता स्यात्, तचाभावदर्शनमुपपद्यते। तस्मात् पूर्वकर्म परिसमाप्तम्, इदमपि कर्मान्तरम् इति।

सू॰ संस्था तद्देवतत्वात् स्यात् ॥ ६० ॥ (आ॰नि॰)॥

भा॰ अथ यदुक्तं, 'संस्थापयति' इति च 'अपूर्वे नोपपद्यते' इति, तत् परिहर्तव्यम्,—अत्रोच्यते,—असंस्थायां संस्थावचनमेतत्, तदपि पूर्वं पात्नीवतमिति समानदेवत्वात् समाप्तिसादृश्यं ज्ञायते,—तच तत्पात्नीवतमारब्धमिह परिसमाप्तमिति। स एष सादृश्यात् संस्थापयतीति शब्दोऽवकल्पत इति ॥ (८।४।१५अ॰) ॥

इति भट्टश्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये नवमस्य अध्यायस्य चतुर्थः पादः ॥ समाप्तश्चाध्यायः ॥ शुभमस्तु ॥०॥

---

# मीमांसा-दर्शने

१० अध्याये १ पादः ॥



श्रीगणेशाय नमः ।

विकृतौ लुप्तार्थानां प्राकृतानां बाधाधिकरणम् ॥
(प्रथमवर्णकम्)

सू० विधेः प्रकरणान्तरेऽतिदेशात् सर्व्वकर्म्म स्यात् ॥ १ ॥ (पू०) ॥

भा० ऊहो वृत्तः, बाधाभ्युच्चयमिदानीं वर्त्तयिष्यामः । बाधो नाम यदेवेदमिति निश्चितं विज्ञानं, कारणान्तरेण* मिथ्येति कथ्यते । तथा अभ्युच्चयो यत् इदमिह भवति इति विज्ञायते, अपरमपि भवति इति विज्ञानं । तत्रायमर्थः प्रथमं परीक्ष्यते,— किं सर्व्वं प्राकृतं विकृतौ कर्त्तव्यम्, उत किञ्चिद्बाध्यते ? इति । किं तावत्प्राप्तं ?—'विधेः' (प्राकृतस्य) 'प्रकरणान्तरे' (विकृतौ) यतो भवत्यविशेषेणातिदेशः, अतो यच्च यावच्च प्राकृतं धर्मजातं तत्सर्वं विकृतौ कर्त्तव्यं, यदप्यर्थलुप्तं । कुतः ? । वचनेन ह्येदं सर्वं प्राप्यते, न च वचनस्यातिभारोऽस्ति प्रापयतः । कथं वचनमिति गम्यते ? । सर्व्वास्वेव वैकृतीषु देशनासु प्राकृतं धर्मजातम् अपेक्ष्यते वाक्य-शेषत्वेन, तद्यथैव प्राकृत्यां देशनायामनुषज्यते, एवं वैकृत्यामपि ।

* विकारान्तरेण इति का० श्री० पु० पाठः ।

न कश्चिद्विशेषोऽस्ति। तत्र यथा कृष्णलानां पाकोऽप्राकृतार्थोऽपि वचनप्रामाण्यात् क्रियते, एवमवहन्त्यादि अप्राकृतार्थमपि सर्वं कर्त्तव्यमिति॥

सू० अपि चाभिधानसंस्कारद्रव्यमर्थे क्रियेत तादर्थ्यात्॥२॥(सि०)॥

भा० 'अपि च' इति पक्षव्यावृत्तिः। नैतदस्ति,—सर्वं प्राकृतं विकृतौ कर्त्तव्यमिति, क्वचित् 'अभिधानसंस्कारद्रव्यं' निवर्त्तितुमर्हति लुप्तार्थं। कुत एतत्?। अभिधानसंस्कारद्रव्यं हि प्रयोजने सति क्रियते, नाप्रयोजनम्, अन्यस्मै प्रयोजनाय तदाम्नायते न स्वार्थम्।

'ननु चोक्तं लुप्तार्थमपि क्रियते वचनप्रामाण्याद्यथा कृष्णलेषु पाकः'। नेत्याह,—नास्ति लुप्तार्थस्य देशकं वचनं; न वैकृतं कर्म्म प्राकृतैरङ्गपदार्थैः सहैकवाक्यतां याति, नैवं विज्ञायते,—यागेन फलं कुर्यात्, कथं? प्राकृतैरङ्गैरिति, कथन्तर्हि, यथा प्राकृतेन यागेन फलं साधितमभूत् तथा इति। कुत एतत्?। यागगतो हि व्यापारविशेषस्तेनापेक्ष्यते, न व्यापारमात्रं, यागगतश्च व्यापारः प्राकृते यागे प्रयोगवचनेन कल्पितः, सङ्गृहीतश्च विद्यते, स शक्योऽपेक्षितुं; स चाकाङ्क्षितो निराकाङ्क्षश्च शक्नोति कर्तुमिति। अङ्गेष्वप्यपेक्ष्यमाणेषु न यागगतो विकृतौ व्यापारविशेषः कल्प्यः स्यात्। इतरथा लक्षणा स्यात्! यथा दण्डेन युध्यते इति वचने न दण्डिरूपं शब्देनाभिहितं। यदि तु तेन

लक्षितेन प्रयोजनं स्यात्, शक्यते तेन लक्षयितुं, एवमिष्टाप्यङ्गवत्त्वं यागगतो विशेषो नाङ्गेष्वपेक्ष्यमाणेषु शब्दाभिहितो भवति, लक्षणया तु कल्प्यते, लक्षणायाञ्च शब्दो वाध्येत ! अथ शब्दो मा वाधीति यागगतो विशेषो नैवापेक्ष्येत, अङ्गान्येवापेक्ष्येरन्। ततः, कथमिति इतिकर्त्तव्यताविशेषं प्रति वैकृतस्य कर्मणश्चोदकशब्दोऽनिवृत्ताकाङ्क्ष एवावतिष्ठेत, अङ्गैरपि च अपरा इतिकर्त्तव्यता आकाङ्क्ष्येत, गम्यमाना च प्राकृतयागेतिकर्त्तव्यता उत्सृज्येत, प्राकृतानाञ्च अङ्गानां प्रकरणेऽर्थवतां दुर्लभो वैकृतेन कर्म्मणा एकवाक्यभावोऽभ्युपगम्येत ! सर्वं चैतदन्याय्यं। तस्मादेवमभिसम्बन्धः क्रियते,—यथा प्राकृतेन यागेन फलं साध्यते, तथैवैतेनापि इति।

किमतो यद्येवम् ? एतदतो भवति,—प्राकृतान्यङ्गानि यस्मै प्रयोजनाय प्रकृतौ भवन्ति, नासति तस्मिन् प्रयाजने विकृतौ चोदितानि भवन्ति। तस्माल्लुप्तप्राकृतप्रयोजनं न चोदकश्चोदयति इति॥

सू० तेषामप्रत्यक्षविशिष्टत्वात्॥ ३ ॥ (आ०नि०)॥

भा० अथ यदुक्तं,—'यथा कृष्णलेषु लुप्तप्राकृतप्रयोजनोऽपि पाको वचनप्रामाण्यात् क्रियते, एवमन्यदपि क्रियेतेति'। तन्न, न हि कृष्णलेषु पाकश्चोदकेन प्राप्नोति, प्रत्यक्षं हि तत्र वचनं,—'घृते श्रपयति' इति ; न तत् प्राकृतप्रयोजनं पाकमाह, तत्र वचनप्रामाण्याददृष्टार्थः पाकः। यदि च तत्र प्रत्यक्षवचनं ना-

भविष्यत्, 'तेषामप्रत्यक्षविशिष्टत्वात्' पाकोऽपि नाभविष्यदेव। तस्मादनुपवर्णनं पाकवदिति ॥

किं भवति प्रयोजनं? कतरद्वा वेदं तमुदाह्रियते? इति। क्वचित् श्रूयते,—'स्वयंदितं* बर्हिर्भवति' इति। तत्र प्राकृतं द्रव्यं निवर्त्तते। 'स्वयंकृता वेदिर्भवति' इति उद्धनन-खनन-परिलेखनानि निवर्त्तन्ते। 'स्वयंशीर्णा शाखा भवति' इति असिद्रव्यं निवर्त्तते, मन्त्राश्चैतेषु निवर्त्तन्ते ॥ (१ वर्णकम्) ॥

---

एवं वा,—

कृष्णलेऽवहननिराधाधिकरणम् ॥
(द्वितीयवर्णकम्)

सू॰ विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात् ॥ १ ॥ (पू॰) ॥

भा॰ इति। अस्ति प्राजापत्यश्चरुः,—'प्राजापत्यं चरुं निर्वपेत् शतकृष्णलमायुष्कामः' इति। तत्रैतद्विशिष्टमुदाहरणमङ्गीकृत्य एतदेव सर्वं चिन्त्यते,—किं कृष्णलेष्ववहननं कर्त्तव्यः, न? इति। 'विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात्' इति पूर्वः पक्षः,—कर्त्तव्यः, यथा तेषामेव पाक इति ॥

सू॰ अपि वाऽभिधानसंस्कारद्रव्यम्.... ॥ २ ॥ (सि॰) ॥

भा॰ इति सिद्धान्तो,—न कर्त्तव्य इति ॥

---

* कृतं इति का॰ श्री॰ पु॰ पाठः।

सू० तेषामप्रत्यक्षशिष्टत्वात् ॥ ३ ॥ (आ०नि०) ॥

भा० इत्युपवर्णनापरिहारः ॥ (२वर्णकम्) ॥

---

एवं वा,—

वैश्वदेवे चरौ विष्णोरावाहनबाधाधिकरणम् ॥
(तृतीयवर्णकम्)

'वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवांस्तं बर्हिःषदं कृत्वा अन्यया स्फ्येन व्यूहेदिदमहममुष्यामुष्य व्यूहामीति यं द्विष्यात् तं ध्यायेत् यद्धोऽवमृद्येत यच्च स्फ्य आक्लिश्येत् तद्विष्णव उरुक्रमायावद्येत्'* इति। तत्र संशयः,—किं विष्णुरुरुक्रम आवाहयितव्यः, उत न? इति। किं प्राप्तम्?।

सू० विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात्॥१॥(पू०)॥

भा० आवाहयितव्यः। "ननु स्फ्येन कदाचिन्नवा आक्लिश्येदपि, न वाऽधोऽवमृद्येत, तत्रावाहनं कृतम् अनर्थकं स्यात्। न च, वचनबलादाक्लेषयितव्यम् अवमर्द्दयितव्यं वा, न ह्युपादेयत्वेनाक्लिष्टमवमृद्दितं वा श्रूयते। न च विष्णोरुरुक्रमस्य यागो अर्थकर्म,

---

* "अस्यायमर्थः,—अयं मनुष्यार्थश्चरुः तस्य प्रकृतीभूतादाग्नेयपुरोडाशात् विशेष उच्यते, पुरोडाशश्चेषं यागोत्तरकाले बर्हिःषदः संस्थाप्य चतुर्णामृत्विजां भक्ष्यविभागाय हस्तेन चतुर्धा कुर्य्यात्। तत इदं ब्रह्मणः इदं अध्वर्य्योरिदं होतुः इदमग्नीध्र इति तत्तद्भागान् पृथगुपदिशेत्। अत्रोपकर्म्मत्वात् न हस्तेन विभागः किन्तु तीक्ष्णाग्रेण शम्या स्फ्यनामकेन यज्ञायुधद्वयेन, मन्त्रश्चेदमहं ब्रह्मभागं व्यूहामीति एवमादिरूपं पठेदित्येतावान् विशेषः। ततो यदि कदाचित् चरुलेशो व्यूहनकाले भूमौ पतेत् यज्ञायुधेन वा लिप्येत, तदा तं पतितं लिप्तं चरुलेशं तीव्रपराक्रमाय शत्रुवधसमर्थाय विष्णवे अवद्येत्। व्यूहनकाले अवदानकाले च शत्रुं चीलं ध्यायेदिति" माधवः।

किन्तर्हि, आवेशनेनाथसम्बन्धेन च अस्मिन् एवेव प्रकारेण आहव-नीये प्रतिपाद्यते, तथा हि दृष्टमवघाते तत्र प्रयोजनं भवति स्कन्नादिसंशोधनं, इतरथा हि यागादृष्टं कल्प्येत । 'ननु यागादृष्टमवश्यं कल्पनीयं' । सत्यं कल्पनीयं, द्रव्यप्रतिपादन-द्वारं तत् ।

अथोच्यते,—'तृप्त्यर्थमपि कर्त्तव्यं, यथा सम्पन्ने चरौ पाकः । अपि च कदाचिदाक्रियेत, अधस्तादवमृद्येत, तदानन्तरिते आवाहने वैगुण्यमापद्येत । तथाऽस्माभिरावाहयितव्या देवता, यदि सत्र आसेत्स्यते अधस्तादवमर्दिष्यते, न ह्यावाहनमकृतम् अन्तरा इष्यते, स्वकाले हि आवाहनेन देवता स्मर्यमाणा साध्वी भवति इति, न स्वकालोत्तरकाले. तत्र हि अर्थप्राप्तमनन्तकं स्मरणम् । अथ सोमा नोपसेत्स्यते न वाऽधोऽवमर्दिष्यते तदा कृतेऽप्यावाहने न किञ्चित् दुष्यति' । नैवं मन्तव्यं, यथा राजा अमात्यो वा ब्राह्मणो वा परिचरितुं निमन्त्रितः आहूतः अपरिचर्यमाणो विमानितमात्मानं मन्यमानो अप-चरिष्यतीत्याशङ्क्यते, एवं देवताऽपि इति, न तत्र देवता आहूयते आहूता सती हविरुपयोक्ष्यते, तर्प्स्यति च; तृप्ता प्रसत्स्यति, प्रसन्ना सती फलेन संयोक्ष्यति इति तदेतद्वचने सिद्धं । तस्मान्न दोषः, आवाहितायामनिज्यमानायाम् ॥

सू॰ अपि वाभिधानसंस्कारद्रव्यमर्थे क्रियेत ताद-र्थ्यात् ॥ २ ॥ (सि॰) ॥

भा० अपि वेति पक्षव्यावृत्तिः,—एषोऽभिधानसंस्कारो* निवर्त्तते। कुतः?। अभिधानसंस्कारो द्रव्यं वा सति प्रयोजने क्रियते नान्यथा, तद्दर्शितं। यदुक्तं,—कदाचित् ध्रियेत अवभृथेत वा, तत्रावाहनं नान्तरा दृश्यते इति। नैष दोषः, अन्तरितमेतदनन्तरितेनैव† तुल्यं, यदा आवाहनस्य कालो, न तदा उरुक्रमयागस्य निमित्तमापतितम्, आपतिते हि निमित्ते तस्य प्रयोगो भविष्यति। न ह्यनाम्नातम् अनवम्रादितं वा तत्र प्रतिपादयितव्यं, न चारब्धे प्रयोगे कृतमुपकारकं भवति। तस्माद् विष्णुरुरुक्रमो नावाहयितव्य इति॥

सू० तेषामप्रत्यक्षविशिष्टत्वात् ॥ ३ ॥ (आ० नि०)॥

भा० इत्युपवर्णनापरिहार उक्तः॥ (३ वर्णकं॥ १०।१।१अ०)॥

---

दीक्षणीयादिषु चारम्भणीयाबाधाधिकरणम्॥

सू० इष्टिरारम्भसंयोगादङ्गभूतान्निवर्त्तेतारम्भस्य प्रधानसंयोगात् ॥ ४ ॥

भा० अस्ति ज्योतिष्टोमो 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। तत्र दर्शपूर्णमासप्रकृतिकानि कर्म्माणि दीक्षणीयादीनि 'आग्नावैष्णवमेकादशकपालं निर्वपेत्' इत्येवमादीनि; अस्ति तु प्रकृतौ

---

* अभिधानेन संस्कार इति चा० सो० पु० पाठः।
† चा० सो० पुस्तके एवकारो नास्ति।

आरम्भणीयेष्टिः 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासा-वारभमाणः सरस्वत्यै चरुं सरस्वते द्वादशकपालमग्नये भगिने अष्टाकपालं निर्वपेद् यः कामयेत अन्नादः स्याम्' इति। नित्यवदेवे भगिनमामनन्ति। तत्र सन्देहः,—किं दीक्षणीयादिषु आरम्भणीया कर्त्तव्या, उत न? इति। किं प्राप्तं?,—सर्वं प्राकृतं विकृतौ कर्त्तव्यं, 'विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात्' इति।

एवं प्राप्ते ब्रूमः,—इष्टिरारम्भणीया ज्योतिष्टोमाङ्गभूताद् दर्शपूर्णमासप्रकृतिकाद्दीक्षणीयादेः कर्मराशेर्निवर्त्तते। किंकारणं?। योऽआरम्भः स ज्योतिष्टोमस्य न दीक्षणीयादेः। कुतः?। आरम्भो हि प्रथमः पदार्थः स्यात्, प्रथमं वा पुरुषस्य प्रवर्त्तनं?। यदि प्रथमः पदार्थः, स ऋत्विगानयनं देवयजनजोषणं वा, तदिह ज्योतिष्टोमस्याङ्गं क्रतोरर्थेन कृतं स दीक्षणीया-दीनामर्थं साधयति, न पुनस्तेषां कर्त्तव्यं, लुप्तमेव तत्। तस्मिन् लुप्ते आरम्भे तत्सिद्ध्यर्थो धर्म आरम्भणीयाख्यो लुप्येत। अथ प्रथमप्रवर्त्तनम् आरम्भः, औदासीन्यात् व्यावृत्तिः, पुरुषस्य व्यापृतता, तदा ज्योतिष्टोमं साङ्गं कर्त्तुम् अपावोदासीन्यात् व्यावृत्तो ज्योतिष्टोमिकेन प्रथमेन पदार्थेन, स ततः प्रभृति आ-साङ्गज्योतिष्टोमसमाप्तेर्व्यापृत एव न पुनरुदासीनो भवति, यतो व्यावृत्तो भवति। साङ्गज्योतिष्टोमारम्भेणैव प्रवृत्तो दीक्षणीयादिष्विति लुप्यत एवैषामारम्भः, तस्मिन् लुप्ते आरम्भणीया-पदार्थ आरम्भसिद्ध्यर्थो लुप्येत।

'ननु अङ्गभूतस्य दीक्षणीयादेरस्य आरम्भो जातः?'। नेत्याह,—उत्तिष्ठायननं देवयजनमोवसादि वा प्रथमं वा पुरुषस्य अनर्त्तनम् आरम्भः, प्रथमश्च प्रवृत्तोऽसौ ज्योतिष्टोमार्थमेव। 'अथायमस्य प्रथमः पदार्थो दीक्षणीयादेर्जात इत्युच्यते'। तथापि न तस्यारम्भणीया प्राप्नोतीति तस्मादङ्गभूतात् पदार्थादारम्भणीया निवर्त्तेत। अपि च दीक्षणीययैव ज्योतिष्टोमे आरम्भार्थः सिध्यति, एवं हि श्रूयते,—'आग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणोऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञञ्चारभते अग्निः प्रथमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवताश्चैव यज्ञञ्चोभयतः परिगृह्णावरुन्धे' इति॥ (१०।१।२५०)॥

---

अनुयज्ञादिषु आरम्भणीयाभावाधिकरणम्॥

सू० प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्त्तेतानङ्गत्वात्॥ ५॥

भा० अस्ति राजसूयः, 'राजसूयेन स्वाराज्यकामो यजेत' इति। तत्रेष्टिपशुसोमदर्विहोमाः प्रधानभूताः। ऐष्टिकेष्वनुमत्यादिषु संशयः,—किं आरम्भणीया कर्त्तव्या, न? इति। किं प्राप्तं?,—कर्त्तव्या, 'विधेः कार्यान्तरेऽतिदेशात् सर्वकर्म स्यात्' इति।

एवं प्राप्ते ब्रूमः,—'प्रधानाच्च' अपरप्रधानसंयुक्तान्निवर्त्तितुमर्हति। कुतः?। सर्वारम्भार्थेन तत्र ज्योतिष्टोमः समाम्नायते,—'अग्निष्टोमं

प्रथममाहरति' इति। न प्राकृतानां प्रधानभूतानामेकैकस्य तन्त्रेण समाम्नातो भवितुमर्हन्ति, एकैकस्य ह्यत्र प्रधानस्य तन्त्रेण साधारणं प्रकरणं, तेनानुमत्यादीनाम् आरम्भार्थे सिद्धे न आरम्भणीया भवितुमर्हति इति ॥ (१०।१।१७०)॥

---

आरम्भणीयायां आरम्भणीयाबाधाधिकरणम् ॥

सू० तस्यां तु स्यात् प्रयाजवत् ॥ ६ ॥ (पू०) ॥

भा० अस्त्यारम्भणीया इष्टिः,—'आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारभमाणः सरस्वत्यै चरुं सरस्वते द्वादशकपालं अग्नये भगिनेऽष्टाकपालं यः कामयेत अन्नादः स्याम् इति नित्यवदेके भगिनमामनन्ति'। तत्रैषोऽर्थः सांशयिकः,—किमारम्भणीयायामारम्भणीया कर्त्तव्या, उत न? इति। किं प्राप्तं?,—"तस्यां तु स्यात् प्रयाजवत्"। संशयनिवृत्त्यर्थं तुशब्दः,—न खलु संशयोऽस्ति,—आरम्भणीयायामारम्भणीया भवितुमर्हति। कुतः?। 'विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात्' इति, यथा प्रयाजा एवमारम्भणीयापि इति। "आह,—ननु तस्या अप्यर्थं अन्या आरम्भणीया, तस्या अप्यर्थं अन्या आरम्भणीया, तस्या अप्यर्थेऽन्येत्येवमारम्भणीया न व्यवतिष्ठेत! व्यवस्थितेन च शास्त्रार्थेन भवितव्यम्"। अत्रोच्यते,—सर्वास्वेव अनवस्थासु सामर्थ्येन व्यवस्था भविष्यति ॥

सू० नवाङ्गभूतत्वात् ॥ ७ ॥ (सि०) ॥

भा० नवेति पक्षः प्रतिषिध्यते,—'न स्यादारम्भणीयायामारम्भणीया' इति । कुतः? । अङ्गभूता हि सा दर्शपूर्णमासयोः, अङ्गभूतस्य च प्रधानारम्भेणैव सिद्धिरित्युक्तम् ।

'आरम्भणीयाप्रवृत्तेन दर्शपूर्णमासौ कर्त्तव्यौ, अतः प्रकृतिवदारम्भणीयापि आरम्भणीयाप्रवृत्तेन कर्त्तव्येति, तस्मात् किल आरम्भणीयायामारम्भणीया स्यात्' । तच्च नैवं,—प्रकृतावप्यन्यामारम्भणीयामारम्भणीयां कुर्वन्नारम्भणीयाप्रवृत्त एव करोतीति गम्यते । तस्मान्नारम्भणीयायामारम्भणीया स्यात् । अपि च अनवस्थावत् अव्यवस्था आरम्भणीयायां वाक्येन गम्यमाना सामर्थ्येन बाध्येत ! अस्मत्पक्षे नाव्यवस्था न बाधः, तस्मान्नारम्भणीयायामारम्भणीया इति ॥

सू० एकवाक्यत्वाच्च ॥ ८ ॥ (यु०) ॥

भा० इतश्च पश्यामः एवमेवेति । कुतः? । एकं ह्येदं वाक्यं यदा आरम्भणीयां विदधाति, तदा नासौ दर्शपूर्णमासयोर्विहितां, ताम् अविहितामिव दर्शपूर्णमासयोर्विदध्यात्, विहितामिव चारम्भणीयायामतिदिशेत्, नैतत् कर्तुमलं भवति सकृदुच्चरितं । तस्मादप्यारम्भणीयायामारम्भणीया नास्ति ॥ (१०।१।४ अ०) ॥

---

अलेपाख्यां यूपाकृतिबाधाधिकरणम् ॥

सू० कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्त्तेत तादर्थ्यं श्रुतिसंयोगात् ॥ ९ ॥

भा० तस्मिन्नेव ज्योतिष्टोमे पशुरग्नीषोमीयः,—'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति। तत्रेदमाम्नायते,—'यूपमच्छेष्यता होतव्यं न हि दीक्षितस्याग्नौ जुहोति प्राच्यं चारधिं चाहाय यूपस्यान्तिके अग्निं मथित्वा यूपाहुतिं जुहोति' इति। साद्यस्क्रे श्रूयते,—'खलेवाली यूपो भवति' इति। तत्रैषोऽर्थः सांशयिकः,—किं साद्यस्क्रे खलेवाल्यां यूपाहुतिः कर्त्तव्या, न? इति। किं प्राप्तं?,—कर्त्तव्या, 'विधेः प्रकरणान्तरेऽतिदेशात् सर्वकर्म स्यात्' इति।

एवं प्राप्ते ब्रूमः,—'कर्म च' एतत् 'द्रव्यसंयोगार्थं' यूप एवमादिभिः संस्कारैः भविष्यतीति क्रियते, यूपं प्राप्तुमेष्यत एतच्छ्रूयते, तेनास्य संस्कारस्य श्रुतिसंयोगेन यूपार्थता। अच्छशब्दो हि आप्तुमित्यर्थे* वर्त्तते, न चाच यूपेन प्रयोजनम्, अयूपे हि खलेवाल्यां पशुर्बध्यते, तस्मात् तत्र यूपकरणार्था यूपाहुत्यादयः संस्कारा अर्थलोपान्निवर्त्तितुमर्हन्ति इति। तस्मान्नास्ति खलेवाल्यां यूपाहुतिरिति ॥ (१०।१।५ अ०) ॥

---

साद्यस्क्रे स्थाणाहुतिबाधाधिकरणम् ॥

सू० स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ ॥१०॥ (पू०) ॥

भा० तस्मिन्नेवाग्नीषोमीये पशौ श्रूयते,—'स्थाणौ स्थाणाहुतिं जुहोति' इति। ततः साद्यस्क्रेऽयमर्थः सांशयिको भवति,—किं

---

* इत्यस्यार्थे इति क० ख० पु० पाठः ॥

शायस्त्रे स्वाध्वाकृतिः कर्त्तव्या, न? इति। तत्र एतत्तावत् परीक्ष्यं, किमारादुपकारकं कर्म स्वाध्वाकृतिः, उत यूपसंस्कारः इति। यद्यारादुपकारकं कर्म तदा कर्त्तव्या, अथ यूपसंस्कारो निवर्त्तेत इति। कथमारादुपकारकं कर्म स्यात्, कथं वा यूपसंस्कारः? इति। यद्येवमभिसम्बन्धः क्रियते, यूपमञ्क्ष्यता स्वाध्वाकृतिः कर्त्तव्येति, ततो यूपसंस्कारः; अथ यूपमञ्क्ष्यतीति प्रकृतेन न सम्बध्येत, तदा आरादुपकारकं कर्मेति। किन्तावत्प्राप्तं? । आरादुपकारकं कर्मेति। एतद्विज्ञातं कर्मणां प्रयोजनं, भूतं हि तावद् भव्यार्थमिति।

अपि च भिन्नप्रयोजनेन स्वाधुना सम्बध्यमाना आकृतिः किमिव यूपस्य उपकरिष्यति? सम्बद्धे हि क्रियमाणं सम्बन्धिनि उपकुर्यात्, व्यावृत्तो हि यूपात् स्वाधुः। अपि च तस्मिन्नेकादशिन्यां यूपाकृतिर्भविष्यति, यद्यारादुपकारकं कर्म स्यात्, तथा हि नाभ्युतोऽभ्यासः कल्पयिष्यते। अपि च अविशिष्टेन वाक्येन स्वाध्वे स्वाध्वाकृतिः श्रूयते, सा च प्रकरणेन यूपप्रवचनस्वाधुविशेषे कल्प्येत। तस्मादारादुपकारकं कर्म स्वाध्वाकृतिः शायस्त्रे च कर्त्तव्या चोदकानुग्रहायेति। एवं प्राप्तम्। एवं प्राप्ते ब्रूमः,—

सू० अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत* ॥
॥ ११ ॥ (सि०) ॥

भा० अपि वेति पक्षव्यावृत्तिः। यूपसंस्कारः प्रतीयेत। कुतः? । प्रकरणविशेषात्। यूपमञ्क्ष्यतः स्वाध्वाकृतिर्विधीयत इति

* प्रतीयते इति चा० सो० पु० पाठः एवं परत्र ॥

क्रियते, यो हि तक्ष्णो ऽविशिष्टेन वाक्येन स्वाङ्गुष्ठमात्रो क्रियेत इति, कथं तस्य कल्पनीयं भवति। योऽपि तक्ष्णो प्रकरणादारादुपकारकत्वमपि प्रेक्षणीयस्य भवतीति, तत्रापि प्रकरण-सामान्यं प्रकरणविशेषेण बाध्येत*। कर्मशेषभूतस्य यूपः प्रयोजन-वत्त्वात्, तेन सम्बध्यमाना अदृष्टार्थापि आरादुपकारिका सती कल्प्यप्रयोजना स्यात्! अतः प्रसिद्धिन्यायेन बाध्येत, यथा अन्यकर्म इति। निवृत्तप्रयोजने अपि स्वार्थे यूपात् व्यावृत्ते च यूपैकदेशो यथाविधि कृत्वा यत्र क्रियमाणा यूपाकृतिः यूपसम्बद्धा कृता भवतीति तदा तक्षणे क्रियते, यथा शिरसा धारितायाः स्रजः शिरसोऽवतारितायाः; देवहूतौ यथाविधि कृत्वा शुचि-देशनिधानादिः संस्कार एषितव्यो भवति; एवं स्वार्थाकृतिरपि प्रकारान्तरेणास्यां सांनिध्यकरणस्याविवक्षितत्वात् तत्रं यूपार्थ-भविष्यत्येव। तस्मात् संस्कारपक्ष एव ज्यायान्॥

सू॰ समाख्यानञ्च तद्वत्॥ १२॥ (यु॰१)॥

भा॰ स्वार्थाकृतिरिति च 'समाख्यानं' स्वरुप्रधानाया इवाकृते-र्भवतीति। कथं?। षष्ठीसमासोऽयं, कर्मणि षष्ठी; ईप्सिततमञ्च कर्म। सप्तमीसमासो लक्षणापेत इति कृत्वा नादर्त्तव्यो भवति॥

सू॰ मन्त्रवर्णश्च तद्वत्॥ १३॥ (यु॰२)॥

भा॰ इतश्च पश्यामः संस्कारकर्मेति, यतो 'मन्त्रवर्णः' अपि 'तद्वत्' भवति,—'अतस्त्वं देववनस्पते शतवल्शो विरोह' इति।

---

* बाध्यते इति क॰ सं॰ पु॰ पाठः ॥

D

यच्च मया दृष्ट्वा, योऽत्र आम्नायलाद्यप्रकारो विरोद्येति यूपम् इवाद्रियमाणो मन्त्रवर्णो भवति। तस्मादपि संस्कारकर्म स्वलेवाद्यां न कर्त्तव्यम् इति॥ (१०।१।६ अ०)॥

---

उत्तमप्रयाजस्य संस्कारकर्म्मताधिकरणम्॥

सू० प्रयाजे च तन्न्यायत्वात्॥ १४॥

भा० दर्शपूर्णमासयोराम्नायते, 'उत्तमः प्रयाजः, स्वाहाकारं यजति' इति। तत्र संशयः,—किं? 'उत्तमः प्रयाज आरादुपकारकं कर्म उत संस्कारकर्म' इति। तत्र एतत् तावत् परीक्ष्यतें, किं?—आज्यभागादिषु या देवता यष्टव्यास्ता एवात्र देवताः, उत अन्यास्ताभ्यो देवताभ्यः? इति। कथम् अन्या देवताः? कथं वा प्रकृताः स्युः? इति। यदि 'स्वाहाकारं यजति' इति देवता-विधानं, ततोऽन्याः प्रकृताभ्यो देवताः; अथ 'ये यजामहे, स्वाहाग्निम्' इति निगदेन मान्त्रवर्णिको देवताविधिस्ततः प्रकृता देवता इति।

किं प्राप्तं?—आरादुपकारकं कर्म इति। तदेतद् वर्ण्यते, अन्या देवता 'स्वाहाकारं यजति' इत्यनेन विधीयते, एवं वचनप्राप्ता भविष्यति, इतरथा मान्त्रवर्णिकी कल्पयितव्या भवेत्। 'ननु अन्या अन्यादिशब्देर्न शक्यते वदितुं, तथायं 'ये यजामहे स्वाहाग्निम्' इति मन्त्रवर्णोऽपि विप्रतिषिध्येत'। अत्रो-च्यते,—नैतद्विप्रतिषिद्धं, अनेकस्याप्येकः शब्दो भवति वाचकः;

तद्यथा मातेति मातरमपि वदति मातारमपि। माता च परमं दैवतं, समा च पुत्रेष्वित्येतैरुपवध्यमानो जननीवचनोऽवगम्यते। माता समः चिप्रश्चेति एभिरप्यनुबध्यमानो धान्यस्य मातुर्वाचकः। एवं मन्त्रेऽप्यग्न्यादयः स्वाहाकारदेवताके यागे प्रयुज्यमानास्तद्वाचिनोऽवगम्येरन्। तथा सति प्रज्ञातं यागस्य कार्यमनुग्रहीतम्, आरादुपक्रिया। तस्मादारादुपकारकं कर्म उत्तमः प्रयाज इति।

एवं प्राप्ते ब्रूमः,—"प्रयाजे च तन्न्यायत्वात्" उक्तमधस्तात् स्वाध्याहुतिः संस्कारकर्मेति, इहापि चशब्देनाभ्यादिश्यते,— उत्तमः प्रयाजः संस्कारकर्मेति। तत एतत्तावद्वर्णयन्ति, या आज्यभागादिषु देवता यष्टव्यास्ता एव इह देवता इति। कुतः?। स्वाहाकारस्य देवतासंयोगाभावात्, तद्धितेन वा देवतासंयोगो विज्ञायते चतुर्थ्यन्तेन वा; न चेह तद्धितो न चतुर्थी, अतो न देवताविधिः। यागसामानाधिकरण्यं च द्वितीयया गम्यते। तस्माद् यागवचनः स्वाहाकारशब्दो यथा समिदादय इति।

'आह,—यदि द्वितीयया संयोगात् तं यागवचनं मन्यसे, आरादुपकारकस्तर्हि यागः, ईप्सिततमे हि द्वितीयाविभक्तिर्भवति इति'। अत्रोच्यते,—एवमेव प्राप्ते वदामः, 'तन्न्यायत्वात्' इति। स एव न्यायः इह, यः स्वाध्याहुतौ "अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत" इति। शेषभूतास्त्वाज्यभागादिष्वग्न्यादयः, तदर्थो यागः सन् प्रयोजनवान् भवति। इतरस्मिन् पक्षे यागेऽ

निष्प्रयोजनः स्यात्, तदर्थं देवताभिधानमपि निष्प्रयोजनं स्यात्। सत्यां च देवतासंस्कारप्रज्ञायां यागप्रयोजनं कल्पयितुं न शक्यते। तथा अग्न्यादीनां सम्भवति स्वार्थेऽदृष्टो स्वाहाकारवचनतां न शक्या कल्पयितुं। तस्मात् देवतासंस्कारार्थमुत्तमः प्रयाजः; देवतास्मरणसंस्कारद्वारं चादृष्टमपि तस्माद् यागाद् भवति इति॥

सू॰ लिङ्गदर्शनाच्च॥ १५॥ (सि॰)॥

भा॰ लिङ्गमप्यस्मिन्नर्थे भवति। किं लिङ्गं?। संप्रतिपन्नदेवताकस्यातुर्मास्येषु उत्तमप्रयाजस्य निगदो दृश्यते, 'स्वाहाग्निं स्वाहा सोमं स्वाहा सवितारं स्वाहा सरस्वतीं स्वाहा पूषणमित्येवंलक्षणकः; स देवतासंस्कारपक्षेऽवकल्पते; इतरस्मिन् अदृष्टार्थः स्यात्। तस्मादपि देवतासंस्कार उत्तमः प्रयाजः स्यात्। प्रयोजनं विप्रतिपन्नदेवताकेषु सौर्यादिकर्मसु प्राकृतानि देवतापदानि न निवर्त्तन्ते पूर्वपक्षे, सिद्धान्ते तु निवर्त्तन्ते॥ (१०।१।७अ॰)॥

---

अग्नियागस्याराहुपकारकताधिकरणम्॥

सू॰ तथाज्यभागाग्निरपीति चेत्॥ १६॥ (पू॰)॥

भा॰ दर्शपूर्णमासौ स्तो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। तत्रेदमाम्नायते,—'आज्यभागौ यजति' इति। इदं चापरं श्रूयते,—'तौ होचतुः किमावयोस्ततः स्यादिति। यस्मै कस्मैचिद्देवतायै हविर्निर्वपस्यदां पुरस्तादाज्यस्य यजन्तिति तस्माद्यस्मै कस्मैचिद्देवतायै हविर्निर्वपन्ति ते पुरस्तादाज्यभागा-

अग्नीषोमाभ्यां यजन्ति तौ न दोग्धेऽध्वरे न पशौ' इति । तत्रैतत् अभिधीयते, यदाज्यभागयोरग्नीषोमाविज्येते किं तथाग्नियागो देवतासंस्कारार्थं उत आरादुपकारकः ? इति । किं प्राप्तं ? । इति चेत् सन्देहे पश्यसि, 'तथा आज्यभागाग्निरपि' स्यात्, यथोक्तः प्रयाजः, "अपि वा शेषभूतत्वात् तत्संस्कारः प्रतीयेत" इति ॥

सू० व्यपदेशाद्देवतान्तरम् ॥ १७ ॥ (सि०) ॥

भा० न चैतदस्ति,—देवतासंस्कारः आज्यभागयोरिति, किन्तर्हि आरादुपक्रिया । कुतः ? । 'व्यपदेशात्' अवगम्यते प्रधानाग्नेर्देवतान्तरमिह दृश्यत इति । कोऽसौ व्यपदेशः ? । 'अग्निमग्न आवह सोममावह अग्निमावह' इति, कथमस्मिन्नावाहने एतावत्यश्च देवता दृश्येरन् इति । एवमावाहनेन देवतासु अव्यामोहार्थं परिगण्यमानासु द्विरग्निशब्देन परिगणनं कृतं, तद्देवतान्तरेऽवकल्पते, इतरथा हि सङ्ख्याहत्या व्यामुह्येत । गणनं चोभयोरपि पक्षयोस्तुल्यं । अपि च त्वत्पक्षे सोमव्यवधानात् गणने क्रमो बाध्येत । अपि च असकृद्वचनं शब्देनानुवध्यमानमन्यमिव व्यपदिशति । यथा 'ब्राह्मण आगतो वृषल आगतो ब्राह्मण आगतः' इति द्वयोरिव ब्राह्मणयोर्भवति गणनावादः । एवमिहापि द्वयोरिव अग्न्योर्भवति वादः ।

'स एष व्यपदेशो भवति लिङ्गं । प्राप्तिस्तु वक्तव्या', सोच्यते,—

सू० समत्वाच्च ॥ १८ ॥ (हे०) ॥

भा० इयं प्राप्तिः,—यमोऽत्र देवतया यागः,—देवतापि श्रुता प्रधानयागे, यागोऽपि वाक्यान्तरे, 'आज्यभागौ यजति' इति। तदिहोभयोः यागदेवतयोः प्रयोजनवतोर्देवताया यागार्थता न्याय्या, प्रज्ञातं आरादुपकारकत्वं यागस्य इति। न हि देवतां विना यागो भवति, तेन स देवतामाकांक्षति, न तु प्रधान-देवता यागान्तरमाकांक्षति। यच्च येन आकांक्ष्यते तत् तदर्थं भवति। तस्मात् देवता यागार्था। अपि च आरादुपकारकैः कर्मभिः साम्यं भवति। कथं? 'अभीषू वा एतौ यज्ञस्य यदाघारौ चक्षुषी वा एतौ यदाज्यभागौ यत् प्रयाजा इज्यन्ते वर्म वा एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्यस्य अभिभूत्यै' इति॥ (१०।१।८अ०)॥

---

पशुपुरोडाशयागस्य देवतासंस्कारकताधिकरणम्॥

सू० पशावपीति चेत्॥ १९॥ (पू०)॥

भा० अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः,—'आ वो वरुण्यग्निना प्रतितिष्ठन्ति तौ सम्भवन्तौ यजमानमभिसम्भवतो वरुणपाशाभ्यां वा एषोऽभिधीयते यो दीक्षितो यदग्नीषोमीयं पशुमालभते वरुणपाशाभ्यामेव मुच्यते' इति। तत्रेदं समामनन्ति, 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनु-निर्वपति' इति। तत्र सन्देहः, किं पशुपुरोडाशयाग आरा-दुपकारकः, उत देवतासंस्कारार्थः? इति। किं तावत्प्राप्तं?। ततः प्रयाजाधिकरणे पराजितोऽपि हेतुः केनचिदपरेण विशेषेण

पुनरनुप्राप्यत इति पुनरुपदिश्यत, "पश्चावपीति चेत्", इति चेत् पश्यसि,—किम् आरादुपकारको, देवतासंस्कारः ? इति। पश्चावप्यारादुपकारकः स्यात्, एतद्धि कर्मणां प्रसिद्धं कार्यं। अग्नीषोमीयमिति च गुणभूतदेवताकस्तद्धितशब्दो भवति। पश्चावपि तद्धित एव शब्दो वाक्यशेषेण बलवता व्यवनवचनो व्यपदिश्यते, न नियोगतस्तद्वचनः पशुपुरोडाशे। अतः प्रसिद्धेरारादुपकारकत्वम् ॥

सू० न तद्भूतवचनात् ॥ २० ॥ (सि०) ॥

भा० नेति प्रतिषेधकः शब्दः। 'या सोमं वहन्ति अग्निना प्रतितिष्ठन्ति' इत्यर्थवादवचन एवः, यदर्थवादवचनादन्या पशौ देवता, अन्या पुरोडाशयागे इति गम्यते। अर्थवादवचनादेव सैवेत्यवगन्तव्या। एवं ह्याह,—'यद्देवत्यः पशुस्तद्देवत्यः पशुपुरोडाशः' इति। तस्मादर्थवादसाम्ये देवतासंस्कार इति गम्यते ॥

सू० लिङ्गदर्शनाच्च ॥ २१ ॥ (हे०) ॥

भा० इतश्च पश्यामः संस्कारकर्म पशुपुरोडाश इति। कुतः?। लिङ्गमप्येतमर्थं दर्शयति, 'इन्द्राय वज्रिणे वृषभमालभेत' इत्यस्य पशोः पुरोडाशस्य क्रमे सम्प्रतिपन्नदेवताकं याज्यानुवाक्याद्वयं समाम्नातं,—'इन्द्रं स्तुहि वज्रिणं सोमपृष्ठं स्तुहि शूरं वज्रिणं सुप्रतीतिम्' इति च, तत् संस्कारपक्षेऽवकल्पते, नान्यथा। तस्मात् पशुदेवतासंस्कारार्थः पुरोडाशयाग इति ॥

सू० गुणो वा स्यात् कपालवत् गुणभूतविकाराच्च ॥
॥ २२ ॥ (सि० सू०) ॥

भा० विशेषविवक्षया पुनस्तमेव हेतुं व्यपदिशति । वाशब्देन पक्षं व्यावर्त्तयति । 'गुणः' 'स्यात्' देवता । एवमारादुपकारकत्व-प्रसिद्धिरनुग्रहीष्यते । अनेकगुणभावश्च कपालवद् भविष्यति । यथा कपालं श्रपणेऽपि तुषोपवपनेऽपि, एवमग्नीषोमावप्यभिन्नो पशुयागे पुरोडाशयागे च गुणभूतौ भविष्यतः । एवं च सति दार्शपौर्णमासिकयोराग्नेयैन्द्रयोर्गुणभावेन यागे द्वारभूतयोः कर्म प्राकृतम्, इह गुणभूतयोरेवाविरोधेन भविष्यति, इतरथा प्रधानभूतयोरन्यकार्ययोः न प्राप्नुयात् ! दृश्यते चाभिचारः श्रिष्टकृदिति । तस्मादप्यारादुपक्रिया । अपि च शेषानन्तर्य्या-न्नाग्निमारुतसवनीयदेवतादेवतात्वेषु पशुषु ऐन्द्राग्नवत्प्रकृतयिकाः पुरोडाशाः पशुप्रकरणाल्लोभ्यन्ते, संस्कारपक्षे उत्कर्षेरन् । छिद्रापिधानार्थतायाश्च उत्कमर्थवादत्वं । तस्मादप्यारादुपक्रिया ॥

सू० अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत स्वाहा-कारवदङ्गानामर्थसंयोगात् ॥ २३ ॥ (उ०) ॥

भा० 'अपि वा' इति पक्षव्यावृत्तिः । न आरादुपकारकं कर्म । 'तत्संस्कारः प्रतीयेत' देवतासंस्कार इति । कुतः ? । (शेषभूतत्वात्) देवतायाः प्रयोजनवत्त्वं । तस्माद्यथा स्वाहाकारवषिर्विष्प्रयो-जन इति देवतासंस्कारः प्रतीयते, एवमिहापि ; 'अङ्गानामर्थ-संयोगात्',—अर्थेन प्रयोजनेन संयोग इव गम्यते वाक्येन, तेन न

आरादुपकारकं। आरादुपकारकेभ्यः सामवायिकानि अङ्गानि वरीयांसि भवन्ति इति। यदुक्तं,—'गुणभूतदेवताकेन तद्धितशब्देन निर्देशः' इति, प्रधानभूतदेवताकेनाप्येवंजातीयकेन शब्देन सम्बन्धे विधीयमाने निर्देशो भवति। अपि च दृष्टं कार्यमदृष्टाद्बलीयः, तस्मात् संस्कारकर्मेति ॥

सू० व्यृद्धवचनञ्च विप्रतिपत्तौ तदर्थत्वात् ॥ २४ ॥ (यु०) ॥

भा० इतश्च संस्कारकर्मेति, सौत्रामण्यां पशुपुरोडाशदेवता-'विप्रतिपत्तौ' 'व्यृद्धवचनं' देवतासंस्कारे एवावकल्पते; 'यद्वै सौत्रामण्यां व्यृद्धं तदस्याः समृद्धं यदन्यदेवत्याः पशुपुरोडाशा भवन्ति, अन्यदेवत्याः पशवः' इति ॥

सू० गुणेऽपीति चेत् ॥ २५ ॥ (आ०) ॥

भा० एवं 'चेत्' पश्यसि,—संस्कारपक्षे व्यृद्धवचनमवकल्पत इति, तन्न, संस्कारपक्षेऽपि व्यृद्धवचनं नावकल्पते; न हि तत्र किञ्चित् व्यृद्धं, विप्रतिपन्नदेवताकैरेव पुरोडाशैस्तत्कर्मसमृद्धतरं भवति। एवं ह्याह,—'यदन्यदेवत्याः पुरोडाशा भवन्ति अन्यदेवत्याः पशव इति तदस्यां समृद्धं भवति' इति। यस्तोभयोः पक्षयो-र्दोषः, न तमेकश्चोद्यो भवति; यथैव हि संस्कारपक्षे व्यृद्ध-वचनमर्थवाद एवमितरस्मिन्नपि पक्षेऽर्थवादो भविष्यति ॥

सू० नासंहानात् कपालवत् ॥ २६ ॥ (आ० नि०) ॥

भा० नैतदेवं, भवदीये पक्षे न किञ्चिदपि हीनं, यथैवैकेन

कपालेन हुतेषु उप्यमानेषु अन्येषां कपालानां न किञ्चिद्धीयते, एवमन्यया देवतया पशुपुरोडाशयागे निर्वर्त्त्यमाने न किञ्चित् पशुदेवतायां हीयते, तथाप्यृद्धे एव व्यृद्धवचनं भवति। मदीये तु पक्षे देवताप्रकाशनमङ्गभूतं हीयते। अन्यदेतदुच्यते,— 'यत् व्यृद्धमपि समृद्धं भवति' इति। अहीने तु व्यृद्धशब्दे उच्चरिते न शब्दार्थो गृह्येत इति॥

सू॰ ग्रहाणाञ्च संप्रतिपत्तौ तद्वचनं तदर्थत्वात्॥ ॥२७॥ (यु॰१)॥

भा॰ इतश्च संस्कारकर्मेति। सौत्रामण्यां सम्प्रतिपन्नदेवताकेषु ग्रहेषु 'तद्वचनं' भवति, (पुरोडाशवचनं)। 'नैतेषां पशूनां पुरोडाशा विद्यन्ते, ग्रहपुरोडाशा ह्येते पशव इति'। न तावन्न विद्यन्ते, विप्रतिपन्नदेवताकेस्तु संस्काराभावमालोच्य एवमुच्यते, ग्रहा एषां पुरोडाशाः 'ग्रहपुरोडाशा ह्येते' इति। किं तेषां पुरोडाशैः सामान्यं ?। यदेते देवतासंस्कारार्थाः, यदि पुरोडाशा अपि देवतासंस्कारार्था एवमेतदवकल्पते। तस्मात् संस्कारपक्ष एव श्रेयान्॥

सू॰ ग्रहाभावे च तद्वचनं॥ २८॥ (यु॰२)॥

भा॰ एवं श्रूयते, 'नैतस्य पशोर्यं गृह्णन्ति पुरोडाशवानेव पशुः' इति। पशुपुरोडाशवत्ताहेतुकं ग्रहाभावं ब्रुवन् ग्रहपुरोडाशयोरेकार्थतां दर्शयति। तत्र ग्रहस्य देवतासंस्कारार्थता

विज्ञाता, यदि पुरोडाशोऽपि देवतासंस्कारार्थ एवमेतदव-
कल्पते ॥

सू॰ देवतायाश्च हेतुत्वं प्रसिद्धं तेन दर्शयति ॥
॥ २९ ॥ (यु॰३) ॥

भा॰ इतश्च पश्यामः संस्कारकर्मेति। एवं ह्याम्नायते,—'अग्निभ्यः कामेभ्यः पशव आलभ्यन्ते कामा वा अग्नय आग्नेयाः पुरोडाशा भवन्ति आग्नेया हि पशवः' इति। पशुदेवता-हेतुकान् पुरोडाशान् ब्रुवन् देवतासंस्कारार्थतां पुरोडाशानां दर्शयति ॥

सू॰ अविरुद्धोपपत्तिरर्थापत्तेः शृतवत् गुणभूत-
विकारः स्यात् ॥ ३० ॥ (आ॰ नि॰१) ॥

भा॰ अथ यदुक्तं, 'गुणभूतयोर्धर्मः प्रधानभूतयोरग्नीषोमयोर्न स्यात्' इति। उच्यते, 'अविरुद्धा' प्रधानभूतयोरप्यग्नीषोमयो-र्धर्माणाम् 'उपपत्तिः'। कुतः?। 'अर्थापत्तेः' प्रधानभूतावपि प्राकृतं कार्यं यागनिर्वृत्तिं कुर्वाणौ द्वारभूताविति धर्मैर्युज्येते 'शृत-वत्', यथा 'शृते चरुं, दध्नंश्चरुम्' इति प्रदानार्थे इधिशृते प्रणीताकार्यं कुर्वाते इति धर्मैर्युज्येते न च दोषो भवति ॥

सू॰ स द्व्यर्थः स्यादुभयोः श्रुतिभूतत्वाद्विप्रतिपत्तौ
तादर्थ्याद्विकारत्वमुक्तं तस्यार्थवादत्वम् ॥ ३१ ॥
(आ॰ नि॰२) ॥

भा॰ अथ यदुक्तं,—'ऐन्द्रवायवसाविचाणां पुरोडाशानां सौत्रामणीप्रकरणादुत्कर्षः प्राप्नोति', तत्रेदमुच्यते, 'स ह्यर्थः' (यागो देवतासंस्कारार्थश्छिद्रापिधानार्थश्च), 'उभयोः' अर्थयोः 'श्रुतिभूतत्वात्' । अतो विप्रतिपन्नदेवताकेषु छिद्रापिधानार्थतया प्रकरणादुत्कर्षो न भविष्यति, तत्प्रकरणगत एवायं विकारो भविष्यति । 'तत्त्व' अपि 'उक्तम्' 'अर्थवादत्वम्' इति यदुक्तं, तत्रेदमुच्यते,—

सू॰ विप्रतिपत्तौ तासामाख्याविकारः स्यात् ॥ ३२ ॥
(आ॰ नि॰३) ॥

भा॰ एवं तर्हि अनेन प्रकारेण प्रकरणादनुत्कर्षः, देवतासंस्कारत्वात्प्रकरणादुत्कर्षेण न शक्यते बाधितुं । तत्र सौत्रामण्यां अप्रतिपन्नदेवताका एव चोदकेन पुरोडाशाः प्राप्ताः, तत्रेन्द्रादयः शब्दाः पशुदेवतानामेव वाचकाः । कथम्? । एकदेशा हि तेषामिमे वर्णान्तरसहिता उच्चारिता इति गम्यते । शक्नुवन्ति ह्येकदेशाः समुदायिनः समुदायं प्रत्याय्य समुदायार्थान् गमयितुं, यथा गाव्यादयः । यथा च सरस्वतीदेवताके निगदे 'सरस्वति देवनिदो* निवर्हय प्रजां विश्वस्य वृसयस्य मायिनः' इति । वृसयशब्दो वृत्रशब्दार्थं गमयति । किमर्थं पुनरेवं कल्प्यते? । यतो देवतान्तराणि पशुदेवतासंस्कारार्थेषु यागेषु प्रत्याय्यमानानि अनर्थकानि भवेयुः । तस्मात् पशुदेवतानाम् आख्याविकाराः पुरोडाशदेवताशब्दा इति ॥

---

* 'सरस्वति देवनिदो' इत्यंशो क॰ ख॰ पु॰ एवं का॰ च॰ पुस्तके नास्ति ।

सू० अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥ ३३ ॥ (२यु०) ॥

भा० संस्कारपक्षे एव, वाशब्दो युक्तिं व्यावर्त्तयति न पक्षं, न वा आख्याविकारः, संस्कारपक्षेऽन्यथानुपपद्यमाने आख्याविकारा भवन्ति, अनाख्याविकारेष्वपि संस्कारपक्षोऽवकल्पत एव। कथं?। 'अभ्यासः' एव पुरोडाशयागस्य भविष्यति। तत्र हि चोदकेन पशुदेवता च प्राप्नोति पुरोडाशस्य। पशुदेवताया अन्यत् द्रव्यं विधीयते चरुः, पुरोडाशस्यान्या देवता; यागस्त्वविकृत एव तिष्ठति, स पशुदेवतासम्बद्धश्चैव कर्त्तव्यो ग्रहसम्बद्धश्च। तदुभयमप्यनभ्यस्ते यागे न सम्भवतीत्यर्थादभ्यस्यते यागः। तस्य 'एकदेशोऽन्यदेवत्यः' 'प्रयाजवत्'। तद्यथा, पञ्चा पञ्चानां प्रयाजानां चोदकेन प्राप्तानां एकदेशसङ्ख्या विधीयते, सा चान्तरेणाभ्यासं नावकल्पत इत्यभ्यस्यन्ते प्रयाजाः। तेषामभ्यस्यमानानामेकदेशेऽन्या देवता दुरपवादा नक्तेत्येवमादयः। एवमिहाप्यभ्यासः पुरोडाशयागस्य। तस्मादनुत्कर्षः संस्कारपक्षेऽपीति ॥ (१०।१।९अ०) ॥

---

सौर्यं चरुं निर्वपेदित्यत्र चरुशब्दस्यौदनवाचिताधिकरणम् ॥

सू० चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥३४॥ (सि०)॥

भा० चरुः श्रूयते, 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इति। सौर्य आग्नेयविकार इत्येतत्समधिगतं,—"सामान्याद्वा नियम्येत पूर्ववत्त्वाद्विकारो हि" इति। तत्रैषोऽर्थः सांशयिकः,—किं चरुः

कपालविकारः, हविर्विकारः? इति। यदा हविर्विकारस्तदा किं स्वाम्या हविर्विक्रियते, उत ओदनेन? इति। किन्तावत्प्राप्तं?—'हविर्विकारः स्यात्' इति। कुतः?। 'इज्यासंयोगात्'। तद्धितार्थो विधीयते चरोः,—'सौर्यं चरुं निर्वपेत्' इति। एवमिज्यार्थश्चरुः, तस्माद्धविर्विकार इति॥

सू॰ प्रसिद्धग्रहणत्वाच्च॥ ३५॥ (पू॰)॥

भा॰ एवं स्थिते विशेष उच्यते,—हविर्विकारः, 'प्रसिद्धग्रहणत्वाच्च' स्वाम्या हविर्विकारः क्रियते। प्रसिद्धस्य ग्रहणं न्याय्यं। प्रसिद्धस्य स्थाल्यां चरुशब्दः, आ हिमवतः आ च कुमारीभ्यः प्रयुज्यमानो दृष्टः। तस्मात् स्थाल्या हविर्विक्रियते इति॥

सू॰ ओदनो वान्नसंयोगात्॥ ३६॥ (उ॰)॥

भा॰ ओदनेऽपि चरुशब्दः प्रयुज्यते। तत्रोदनस्यैव ग्रहणं न्याय्यं न स्थाल्याः। कुतः?। अदनीयसंयोगात्,—अदनीयेन हि द्रव्येण देवतायागमाचरन्ति शिष्टाः, नानदनीयेन। तत्रभवतामाचारात् तेषां स्मृतिरनुमीयते, स्मृतेः श्रुतिः। तस्मादोदनेन हविर्विक्रियते इति॥

सू॰ न द्व्यर्थत्वात्॥ ३७॥ (आ॰)॥

भा॰ 'न' ओदनस्य वाचकश्चरुशब्दः। कुतः?। द्व्यर्थ एवं स भवेत्,—स्थाल्यां हि स प्रसिद्धः समधिगतः, तस्मादोदने लक्षणाशब्दः-सम्बंधोगादित्येवं मन्तव्यं। अन्याय्यो ह्येवंजातीयकेष्वनेकार्थभावः,

तस्मात् स्वाम्या हविर्विक्रियते इति। यदुक्तम्,—'अदनीयेन शिष्टा देवतायागमाचरन्तीति भुवमेवां स्मृतिः' इति। उच्यते,—अनुमानमेतत् प्रत्यक्षेण वचनेन वाध्यते। वचनादवगम्यते स्वाम्या यागः कर्त्तव्य इति। कथं?। तस्यां हि चरुशब्दः प्रसिद्धः। न असौ आचारानुरोधेन लक्षणाशब्दः कल्पनीयः। कल्प्यमाने वा आचारेण शब्दो वाध्येत, न चैतत् न्याय्यं। शब्दानुरोधेन हि व्यामोहादाचार इति कल्पयितुं न्याय्यं। यथा 'शूलैश्च माषैरेव चावश्यमभ्यवयन्ति' इति,—'प्राजापत्यं चरुं निर्वपेत् शतकृष्णलम् आयुष्कामः' इति च॥

सू० कपालविकारो वा विशयेऽर्थोपपत्तिभ्याम्॥ ॥३८॥ (२य पू०)॥

भा० हविर्विकारपक्षो न सिद्ध्यति, स्वाम्या विकारे स्मृतिहेतुराचाराकृतिराशङ्क्यते, ओदनेन विकारे स्थालीसंयोगाल्लक्षणाशब्दः चाशङ्क्यः। अस्ति चान्या गतिः, कपालविकारो भवेदिति। तस्मादाशब्देन पक्षं व्यावर्त्त्य कपालविकारश्चरुरिति ब्रूमः। कपालविकारोऽप्यर्थः स्वर्यश्च, तेन सौर्य इति शक्यते व्यपदेष्टुम्। उपपत्तिश्चास्ति, शक्यते स्वाम्यां श्रपयितुं। तस्माद्धविर्विकारपक्षे संशये कपालविकार आश्रयणीयः॥

सू० गुणमुख्यविशेषाच्च॥ ३९॥ (यु०१)॥

भा० अस्ति च गुणमुख्ययोर्विशेषः,—गुणो वाधितव्यो न्याय्यः, न मुख्यः, तदुक्तम् "अङ्गगुणविरोधे च तादर्थ्यात्" इति॥

सू० तच्छ्रुतौ चान्यहविष्ट्वात् ॥ ४० ॥ (यु०२) ॥

भा० चरुश्रुतौ चान्यद्धविर्दर्शयति,—'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' इति, शतकृष्णलानि हविः, चरुरेषां सम्बन्धी। 'चत्वारि चत्वारि कृष्णलान्यवद्यति' इति कृष्णलानां हविष्ट्वं ॥

सू० लिङ्गदर्शनाच्च ॥ ४१ ॥ (यु०३) ॥

भा० एवं हि आह,'मारुतं चरुं निर्वपेत् पृश्नीनां दुग्धे प्रियङ्गुकं ग्रामकामः' इति मृण्मयो हि चरुर्न प्रियङ्गुविकारः। तस्मात् अन्यद्धविः, चरुरपि कपालविकार इति ॥

सू० ओदनो वा प्रयुक्तत्वात् ॥ ४२ ॥ (आ० एवं २ पू० नि०) ॥

भा० हविर्विकार एवायं चरुशब्दितसंयोगादवगम्यते, सौर्य-श्चरुः कर्त्तव्य इति। यदि पुरोडाश उत्सृज्येत, चरुरुत्सृष्टो-ऽवगम्यमानो बाध्येत, सूर्यसम्बद्धो हि चरुः कर्त्तव्यः, तस्मिन् अशक्ये सौर्यसम्बन्धः क्रियेत, न शक्ये, यदा च हविर्विक्रियते, तदा ओदनेन, ओदने हि चरुशब्दः प्रसिद्धः आ हिमवतः आ च कुमारीभ्यः। तच्च अदनीयसंयोगो युक्तो भविष्यति।

यत्तु, द्व्यर्थत्वमन्याय्यमिति, अन्याय्यमेव द्व्यर्थत्वं ; तच्च कुत एतत् स्थालीसंयोगेन ओदने भविष्यतीति, न पुनरोदनसंयोगात् स्थाल्यां स्यात्। स्मरन्ति च पाके चरुशब्दं,—चरुवशादितानेकरूपको

विशदश्चिन्तु ओदनश्चरुरिति। तदुक्तं "न पक्तिनामत्वात्" इति। आचाराच्च स्मृतिर्बलीयसी, तस्मादोदने चरुशब्दः, ओदनेन हविर्विक्रियत इति। तत्रायमप्यर्थोऽनर्दनीयेन यागो भविष्यति इति। अपि च सूर्यस्यान्यद्रव्यं नैवास्ति येन चरुः संबध्येत। चोदकप्राप्तः पुरोडाश इति चेत्। नैतदेवं, कर्म्मचोदनायां हि निष्पन्नायां चोदको भवति; प्राक् चरुशब्दवचनात्र यजतिचोदना। द्रव्यदेवतासम्बन्धो हि यज्यर्थः। तेन चोदनाविधिशेषः चरुशब्दो न पुरोडाशविशेषणं भवति, अचन्यत्वाच्चोदकस्य इति॥

सू॰ अपूर्व्वव्यपदेशाच्च॥ ४३॥ (१ यु॰)॥

भा॰ इतश्च पश्यामः,—ओदनेन हविर्विक्रियत इति। कुतः?। अपूर्वव्यपदेशो भवति,—एवं ह्याह,—'पुरोडाशेन वै देवा अस्मिँल्लोक आर्ध्नुवंश्चरुणामुष्मिँल्लोके' इति, पुरोडाशेन आप्नोति चरुणामुष्मिन् इति। यदि स्यात्रां चरुशब्दः कपालविकारश्चरुः, ततो यस्मिन्नेव पक्षे पुरोडाशस्तस्मिन्नेव पक्षे चरुः, 'पुरोडाशेन वै देवा अस्मिँल्लोके आर्ध्नुवन्' इति चरुणा अस्मिँल्लोक इति गम्यते, न च 'चरुणामुष्मिन्' इति अन्यवद् व्यपदेशो नावकल्पते। तस्मादपि ओदनेन हविर्विक्रियत इति॥

सू॰ तथा च लिङ्गदर्शनम्॥ ४४॥ (२ यु॰)॥

भा॰ एवञ्च कृत्वा 'लिङ्गदर्शनम्' अप्युपपन्नं भविष्यति। कथं?। 'आदित्यः प्रायणीयश्चरुः आदित्य उदयनीयः' इति। तत्रैतच्छ्रूयते,

'आज्यस्यैव चरुमभिपूर्य चतुर आज्यभागान् यजति। पञ्चमीं स्वस्तिमिष्टाग्नीषोमौ यजति अग्नीषोमाविष्ट्वा सवितारं यजति। अदितिमोदनेन' इति। चतुर्षु आज्यभागेषु विधिः, अदितेः 'आदित्यश्चरुः' इति प्राप्तत्वादनुवादः। तत्र चरुम् ओदनशब्देन ब्रुवन् ओदनेन हविर्विक्रियत इति दर्शयति। तथा इदमपरं लिङ्गं भवति,—'यदि तण्डुलो विद्यते आमं तद्धविः स्यात्' इति। तण्डुले हविःशब्दं ब्रुवन्नोदनेन हविर्विक्रियत इति दर्शयति॥ (१०।१।१०अ०)॥

---

सौर्य्यचरोः स्थाल्यामेव पाकाधिकरणम्॥

सू० स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात्॥ ॥४५॥ (१म पू०)॥

भा० अस्ति चरुः,—'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इति। अत्रैषोऽर्थः समधिगतः,—ओदनेन हविर्विक्रियत इति। स इदानीम् ओदनः क्व पक्तव्यः? इति भवति संशयः। किन्तावत्प्राप्तं?— न नियमः स्यात्,—कपालेष्वेव इति, अर्थप्राप्ते यस्मिन्-कस्मिंश्चित् द्रव्ये पच्येत। यदि हि कपालं चोदकेन प्राप्येत, कपालत्वं चोदकेन सङ्ख्यापि प्राप्येत! न हि प्रकृतौ कपालेषु श्रपयितव्यमित्येव चोदना, किन्तर्हि, 'अष्टाकपालो भवति' इति, सङ्ख्यायां प्राप्यमाणायां अष्टाकपालतास्य चोदिता भवति, नान्यथा। न चैवं सङ्ख्या प्राप्यते, न हि बहुषु कपालेषु पुरोडाशवदोदनः पक्तुं शक्यः।

केवले च कपाले प्राप्यमाणे याऽसावष्टाकपालता चोदिता सा नैव प्राप्येत। अतो यस्मिन्-कस्मिंश्चित् अर्थप्राप्ते द्रव्ये पक्तव्यश्चरुरिति।

एवं प्राप्ते ब्रूमः,—"स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात्"। स एव चरुः कपाल एव स्यात्। एवं प्रकृतिवच्छब्दोऽनुग्रहीतो भवति, न चान्यत् किञ्चित् द्रव्यमाम्नायते, तस्मान्नियमः॥

'सङ्ख्या चापि कपालवत्' इति यदुक्तं तत्परिहर्त्तव्यम्,—

सू० एकस्मिन् वा विप्रतिषेधात् ॥ ४६ ॥ (आ० नि०) ॥

भा० यदि बहुषु कपालेषु न शक्यते चरुः पक्तुं, 'विप्रतिषेधात्' 'एकस्मिन्' पक्तव्यः। यदेतदुच्यते,—'अष्टाकपालो भवति' इत्येतदुक्तं भवति,-अष्टसु कपालेषु अपचितव्यः इति। तत्र, यदि अष्टत्वं विरोधान्न प्राप्यते, तत् कपालमविरोधात् प्राप्येत॥

सू० न वार्थान्तरसंयोगादपूपे पाकसंयुक्तं धारणार्थं चरौ भवति तत्रार्थात् पात्रलाभः स्यादनियमोऽविशेषात् ॥ ४७ ॥ (२य पू०) ॥

भा० न वा कपालेषु पक्तव्यः। कुतः?। 'अर्थान्तरसंयोगात्',—अपूपपाके यत् कपालमुपादीयते, तद्गतेनोष्मणा अपूपस्य निर्वर्त्तकः पाको यथा स्यादिति। तच्च कपालं चरोरुपादीयमानं उदकधारणार्थं भवति, यदूष्मणा उदकगतेन ओदनपाको निर्वर्त्यते,

स ओदनपाको न कपालगतेन जष्मणा निर्वर्त्तते। तत्रोदक-धारणार्थं कपालम् उपादीयमानं न प्राकृतकार्थं स्यादिति चोदको नैवानुष्ठास्यते। तस्मात् 'अर्थात् पात्रलाभः स्यात्' इति तद्, 'अविशेषात्' न नियम्येत,—किं तत्? इति॥

सू० चरौ वा लिङ्गदर्शनात्॥ ४८॥ (सि०)॥

भा० स्थाल्यां वा श्रपणं क्रियेत, लिङ्गं हि भवति, 'यासु स्थालीषु सोमाः स्युस्ते चरवः स्युः' इति। सोमस्थालीषु चरुं पक्तव्यं ब्रुवन् विशेषेण स्थालीं चरुस्थापनार्थां दर्शयति।

आह,—'दर्शनमिदं व्यपदिश्यते, प्राप्तिरुच्यताम्'इति। अथो-च्यते,—स्थाल्यां स चरुसम्बन्धकः पाको निर्वर्त्त्यते, न कटाहे कपाले वा। तस्मात् स्थाल्यां चरुः पक्तव्यः इति।

'किं भवति प्रयोजनं, यदि कपालविकारश्चरुः यदि वा ओदनेन हविर्विक्रियते?' इति। यदि कपालविकारः, तस्मिन् पेषणमनर्थलोपात् कर्त्तव्यम्। अथ ओदनेन हविर्विक्रियते, अक्रिया पेषणस्य अपूपहेतुत्वात्। पिण्डार्थत्वाच्च संयवनं पूर्वपक्षे कर्त्तव्यं, न सिद्धान्ते; संवपनमप्येवं। सन्तापनञ्च अधस्तात्, श्रपणार्थं पूर्वपक्षे कर्त्तव्यं, न सिद्धान्ते; उपधानञ्चैवमेव। पृथुश्लक्ष्णे च पूर्वपक्षे कर्त्तव्ये, न सिद्धान्ते। अभ्यूहस्याङ्गाराणां पूर्वपक्षे कर्त्तव्यः, न सिद्धान्ते, उपरिपाकार्थत्वात्; अवज्वलनम-प्येवमेव। व्युद्धृत्यासादनं पूर्वपक्षे अर्थात् कर्त्तव्यम्; अर्थो नास्ति

इति न सिद्धान्ते; अयात् हतं हि उद्धूत्यासादनं न अब्दप्राप्तम्, अर्थाच्च हतं न चोदकः प्रापयति* ॥ (१०।१।११अ०) ॥

---

सौर्य्यचरौ पेषणाभावाधिकरणम् ॥

एवं वा,—पृथगधिकरणानि पेषणादीनि। अस्ति चरुः,—'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इति। ओदनेन हविर्विक्रियते,—इत्येतत्समधिगतं। तत्रैतत्सन्दिह्यते,—किं चरौ पेषणं कर्त्तव्यं, न? इति। किं प्राप्तम्?,—

सू० तस्मिन् पेषणमनर्थलोपात्स्यात् ॥ ४९ ॥ (पू०) ॥

भा० शक्यते हि तण्डुलेषु पेषणं कर्त्तुम् ॥

सू० अक्रिया वा अपूपहेतुत्वात् ॥ ५० ॥ (सि०) ॥

भा० यद्यपि शक्यते, तथापि न क्रियते। अपूपः पेषणेन विना न निर्वर्त्तते, ओदनस्तु विनैव पेषणेन भवति, कामं पेषणेन व्याहन्यते, पिष्टकं यवागूर्वा स्यात् खलिर्वा। तस्माच्चरोः पेषणं निवर्त्तेत ॥ (१०।१।१२अ०) ॥

---

* "पेषणं चूर्णनं, वपनं पिष्टस्य उदकमिश्रणं, वाप उदकमिश्रणाय पिष्टस्य पात्रे प्रक्षेपः, तापः कपालानां अङ्गारैः प्रतापनं, उपस्थितिः अङ्गारेषु कपालस्थापनं, प्रथा कपालेषु अवस्थापितस्य पुरोडाशस्य हस्तमर्दनेन सर्व्वेषु कपालेषु प्रसारणं, मार्जनं श्लक्ष्णीकरणं, अभ्यूहनं भस्मना अङ्गारैश्च उपरि आच्छादनं, ज्वाला दर्भपिञ्जलैः प्रज्वालनं, उद्वृत्यासादनं कपालेभ्यः पुरोडाशं पृथक्कृत्य अन्यत्रैवावस्थापनं" इति माधवः।

अनन्तरोक्ताधिकरणानां एतदधिकरणान्तर्गतपक्षे अनन्तरोक्तसूत्राण्येवाचार्य्येतप्रःदर्शितानि इति ध्येयं॥

सौर्य्यचरौ संयवनाभावाधिकरणम् ॥

सू० पिण्डार्थत्वाच्च संयवनम् ॥ ५१ ॥

भा० चरुरेवोदाहरणं । प्रकृतौ श्रूयते, 'प्रणीताभिर्हवींषि संयौति' इति । तदिह सन्देहः, चरौ संयवनं कर्त्तव्यं, न? इति । कर्त्तव्यं, शक्यते हि कर्त्तुमिति ।

एवं प्राप्ते ब्रूमः,—शक्यमपि न क्रियेत, पिण्डार्थं हि तत् पिण्डेन च अपूपस्य प्रयोजनं, न चरोः ॥ (१०।१।१३अ०) ॥

---

सौर्य्यचरौ संवपनाभावाधिकरणम् ॥

सू० संवपनञ्च तादर्थ्यात् ॥ ५२ ॥

भा० सौर्य्य एव चरुरुदाहरणं । प्रकृतौ श्रूयते, 'सवितृप्रसूत इत्येवैनं देवताभिः संवपति' इति । इह चरौ सन्देहः,—संवपनं कर्त्तव्यं, न ? इति । किं प्राप्तं?,—शक्यत्वाच्चोदकानुग्रहाय कर्त्तव्यम् इति । एवं प्राप्ते ब्रूमः,—संयवितुं हि तत् प्रकृतौ क्रियते, न चरोः संवप्तव्येन प्रयोजनम् ॥ (१०।१।१४अ०) ॥

---

सौर्य्यचरौ सन्तापनाभावाधिकरणम् ॥

सू० सन्तापनमधःश्रपणात् ॥ ५३ ॥

भा० चरावेव च सन्देहः । प्रकृतौ सन्तापनं कपालानामस्ति,— 'वसूनां रुद्राणामादित्यानां भृगूणामङ्गिरसां धर्मस्य तपसा तप्यध्वम्' इति । चरौ सन्तापनं कर्त्तव्यं, न ? इति सन्देहः । प्रकृतिवद्वचनात् कर्त्तव्यमिति प्राप्तम् । अधःपाकार्थं हि तत् । तस्मान्न चरौ चोदकः प्रापयति ॥ (१०।१।१५अ०) ॥

---

सौर्य्यचरावुपधानाभावाधिकरणम् ॥

सू॰ उपधानञ्च तादर्थ्यात् ॥ ५४ ॥

भा॰ चरावेव कपालोपधानं प्रति सन्देहः,—कर्त्तव्यं, न? इति। प्रकृतिवद्वचनात् प्राप्तम्; अधःपाकार्थत्वान्निवर्त्तते इति॥ (१०।१। १६ अ॰) ॥

---

सौर्य्यचरौ प्रथुश्लक्ष्णाभावाधिकरणम् ॥

सू॰ पृथुश्लक्ष्णे वानपूपत्वात् ॥ ५५ ॥

भा॰ पृथुश्लक्ष्णे च प्रति चरोरेव सन्देहः,—प्रकृतौ श्रूयते,—'उरु प्रथा उरु प्रथस्वेति पुरोडाशं प्रथयति'। 'सन्तेतन्वा तनूः सृज्यतामिति त्रिभिः परिमार्ष्टि'। तदुभयं चरौ कर्त्तव्यं, न? इति। चोदकानुग्रहाय कर्त्तव्यमिति प्राप्ते, 'अनपूपत्वात्' तत् निवर्त्तते॥ (१०।१।१७अ॰) ॥

---

सौर्य्यचरावभ्यूहाभावाधिकरणम् ॥

सू॰ अभ्यूहश्चोपरिपाकार्थत्वात् ॥ ५६ ॥

भा॰ प्रकृतौ श्रूयते,—'वेदेन भस्मनाङ्गारान् अभ्यूहति' इति। तत् सौर्य्ये चरौ कर्त्तव्यं, न? इति सन्देहः। प्रकृतिवद्वचनात् कर्त्तव्यमिति प्राप्ते ब्रूमः,—उपरिपाकार्थं हि तत् पुरोडाशस्याव-कल्पते, न चरोरिति निवर्त्तते॥ (१०।१।१८अ॰) ॥

---

सौर्य्ये चरावञ्जनाभावाधिकरणम् ॥

सू० तथाञ्जनम् ॥ ५७ ॥

भा० दर्शपूर्णमासयोः श्रूयते, 'दर्भपिञ्जूलैरञ्जयति' इति। सौर्य्ये चरौ सन्देहः,—किं तत्कर्त्तव्यं, न? इति। किं प्राप्तं? प्रकृतिवद्वचनात् कर्त्तव्यम्, उपरिपाकार्थत्वान्निवर्त्तते इति॥ (१०। १।१९अ०)॥

---

सौर्य्यचरौ व्युदूत्यासादनाभावाधिकरणम्॥

सू० व्युदूत्यासादनञ्च प्रकृतावश्रुतित्वात् ॥ ५८ ॥

भा० प्रकृतौ श्रूयते, 'अन्तर्वेद्यां हवींष्यासादयति' इति। तत् प्रकृतौ कपालेभ्यो व्युद्धृत्यासादनं क्रियते; सौर्य्ये चरौ सन्देहः,—किं स्थाल्या व्युत्थाप्य चरुरासादयितव्यः, उत व्युत्थानं न कर्त्तव्यम्? इति। प्रकृतौ कृतत्वाच्चरावपि कर्त्तव्यमिति प्राप्तं। तदुच्यते,—"व्युद्धृत्यासादनञ्च प्रकृतावश्रुतित्वात्"।*—प्रकृतौ न श्रूयते,—कपालेभ्यो व्युद्धृत्यासादयितव्यः पुरोडाशः इति, अर्थात् स व्युद्ध्रियते, यच्चार्थात्कृतं न स चोदकार्थः, तस्माच्चरौ व्युद्धरणं न कर्त्तव्यम्। अपि चोद्धरणे क्रियमाणे कपित्थवत् परिशेषः† उद्ध्रियेत; तत्र पात्रभेदः स्यात्? तस्मात् व्युद्धृत्यासादनं चरौ न कर्त्तव्यमिति॥ (१०।१।२०अ०)॥

इति भट्टश्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये दशमस्य अध्यायस्य प्रथमः पादः ॥०॥

---

* 'अश्रुतत्वात्' इति सर्व्वत्र पाठो न साधुः।

† 'परिशेष' इति का० च० पु० एवं क० सं० पु० पाठः।

# मीमांसा-दर्शने

१० अध्याये २ पादः ॥

कृष्णले चरौ पाकानुष्ठानाधिकरणम् ॥

सू० कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥ (पू०) ॥

भा० 'प्राजापत्यं चरुं निर्वपेत् घृते शतकृष्णलमायुष्कामः' इति। तत्र सन्देहः,—किं चोदकेन पाकः प्राप्यते कर्त्तव्यश्च, उत न प्राप्यते न कर्त्तव्यः? इति। किं तावत्प्राप्तं? । 'कृष्णलेषु' पाको न 'स्यात्'। प्रकृतौ हि पुरोडाशार्थः पाकः, इहान्तरेणापि पाकं, कृष्णलानि कृष्णलान्येव भवन्ति। तस्मान्न प्राप्यते, अतो न कर्त्तव्यः इति ॥

सू० स्याद्वा प्रत्यक्षशिष्टत्वात् प्रदानवत् ॥ २ ॥ (सि०) ॥

भा० 'स्याद्वा' पाकः; चोदकेन तु न प्राप्यते, प्रत्यक्षन्तु अस्य श्रवणं,—'घृते श्रपयति' इति। प्राकृतस्य कार्यस्यार्थे न भवति, वचनप्रामाण्याददृष्टार्थो भवति। यथा तेषामेवानदनीयानां प्रत्यक्षश्रवणात् प्रदानम्, एवं पाकोऽपीति ॥ (१०।२।१ अ०) ॥

---

कृष्णले उपस्तरणाभिघारणयोरभावाधिकरणम् ॥

सू० उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ ॥ ३ ॥ (सि०) ॥

G

भा॰ कृष्णलचरावेव सन्देहः,—ये प्रकृतावुपस्तरणाभिघारणे,—'यदुपस्तृणात्यभिघारयत्यमृताहुतिमेवैनां करोति' इति। ते उपस्तरणाभिघारणे कृष्णलचरौ कर्त्तव्ये, न ? इति एष संशयः। किं प्राप्तं ?। 'उपस्तरणाभिघारणयोः' न क्रिया। कुतः। 'अमृतार्थत्वात्',—अमृतार्थत्वेन हि ते क्रियेते,—'यदुपस्तृणात्यभिघारयति अमृताहुतिमेवैनां करोति' इति अमृतेनोपमिमानः स्वादुभावार्थतां तयोर्दर्शयति, न च कृष्णलेषु स्वादुभावः सम्भवति। तस्माद् अक्रियेति॥

सू॰ क्रियेत वार्थवादत्वात्तयोः संसर्गहेतुत्वात्॥ ॥ ४ ॥ (पू॰) ॥

भा॰ 'क्रियेत वा' उपस्तरणमभिघारणञ्च, "विधेः प्रकरान्तरेऽतिदेशात् सर्वकर्म स्यात्" इति। यदुक्तं,—स्वादुत्वाय ते क्रियेते इति, न स्वादुतार्थः प्रकृतौ श्रुतः,—स्वादुः कर्त्तव्य इति। तस्मात् अर्थवादः,—'अमृताहुतिमेवैनां करोति' इति। संसर्गमात्रमाज्यस्य क्रियते हविषश्च। तच्च कृष्णलेष्वपि शक्यं कर्त्तुं, तस्माद् अनिवृत्तिः॥

सू॰ अकर्म वा चतुर्भिराप्तिवचनात् सह पूर्णं पुनश्चतुरवत्तम्॥ ५ ॥ (उ॰) ॥

भा॰ वाशब्दः पक्षं व्यावर्त्तयति। अक्रिया तयोरिति। कुतः ?। 'चतुर्भिराप्तिवचनात्',—'चत्वारि कृष्णलान्यवद्यति' इति। कोऽभिप्रायः ?। चत्वारि कृष्णलानि चत्वारि अवदानानि; एकैकं

कृष्णलम् एकैकस्यावदानस्य स्थाने, तेनोपस्तरणाभिघारणयोर्निवृत्तिः। तथा चाग्निवचनं भवति,—'चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै' इति। अविद्यमानस्यार्थान्तरेणानुग्रहो भवति, तस्मान्निवृत्तिरेतयोः। 'सह' 'पुनः' उपस्तरणाभिघारणाभ्यां 'पुर्णं' 'चतुरवत्तम्' एव स्यात्, तत्राग्निवचनं व्याहन्येत॥

सू॰ क्रिया वा मुख्यावदानपरिमाणात् सामान्यात् तद्गुणत्वम्॥ ६॥ (पुनः पू॰)॥

भा॰ 'क्रिया वा' तयोस्तोदकानुग्रहाय, मुख्यावदानस्य हि प्रकृतौ परिमाणमुक्तम्,—'अङ्गुष्ठपर्वमात्रं देवतानामवद्यति' इति। इहापि कृष्णलशब्दः परिमाणवचनः श्रूयते; स चतुःसङ्ख्यया अनुवध्यते,—'चत्वारि कृष्णलान्यवद्यति' इति, न यानि चत्वारि अवदानानि तानि कृष्णलपरिमाणानि भवन्तीति; हिरण्यपरिमाणवचनः एष कृष्णलशब्दो न आज्यस्य परिमाणं वदितुमुत्सहते। तच्च परिमाणं न द्रव्यं निवर्त्तयति, न हि द्रव्यकार्येषु गुणो वर्त्तितुमर्हति। परिमाणं यत् प्राकृतं तस्य कार्ये वर्त्तमानं तन्निवर्त्तयेत्, यथा, इदं दधि घृतं शाक इमे शालयः, देवदत्तो भोज्यतां, देवदत्तवत् यज्ञदत्तस्तैलेनेति, तैलं हि भोजने स्नेहनेनोपकरोति, तत् स्नेहनार्थं प्राकृतं निवर्त्तयितुमर्हति घृतं, न शाकं दधि च ओदनं वा। एवमिहापि परिमाणं मुख्यावदानं परिमिमीते न द्रव्यं निवर्त्तयेत्। प्रकरणात्तु मुख्यपरिमाणं स्यात् न उपस्तरणाभिघारणयोः। तस्मात् तयोरनिवृत्तिरिति॥

सू० तेषां चैकावदानत्वात् ॥ ७॥ (यु०) ॥

भा० चतुर्णां चैकावदानतां दर्शयति,—'चत्वारि ह्यवदानान्येकमवदानम्' इति, इतरथा चत्वारि अवदानानि अभविष्यत्; तच्चैकावदानवचनमुपरोत्स्यते। तस्मादप्यनिवृत्तिरिति ॥

सू० आप्तिः संख्यासमानत्वात् ॥ ८ ॥ (परिहारः) ॥

भा० अथ यदुक्तं,—'आप्तिवचनं भवति' इति, चतुःसङ्ख्यासंस्तुतिरेषा, एवं चतुःसङ्ख्याया माहात्म्यं यदेकस्मिन्नवदाने चत्वारि अवदानानि भवन्ति इति। यथा, यद्वैश्वदेवः प्रातःसवने प्रचर्यते, 'प्रातःसवने वा एतद्वैश्वदेवयज्ञं संस्थापयति' इति वैश्वदेवसंस्तुतिर्न अन्यसवननिवृत्तिः; एवमिहापि चतुःसङ्ख्यासंस्तवः, नोपस्तरणाभिघारणयोर्निवृत्तिरिति ॥

सू० सतोस्त्वाप्तिवचनं व्यर्थम् ॥ ९ ॥ (परि० नि०) ॥

भा० तुशब्दः एनं चतुःसङ्ख्यासंस्तवं व्यावर्त्तयति। न हि, विद्यमानयोरुपस्तरणाभिघारणयोस्तदाप्तिवचनेन कश्चित् संस्तवोऽस्ति। यद्यविद्यमानम् आपयति* इत्युच्यते, ततो गुणवानित्युक्तो भवति, तत्र संस्तूयते। अथ विद्यमानम् आपयति* इति अनर्थको भवतीत्युक्तं भवति, न संस्तवः। तस्माद्विद्यमानयोरुपस्तरणाभिघारणयोराप्तिवचनं व्यर्थमेव, अन्यः परिहारो वक्तव्यः ॥

---

* 'आपतति' इति का० च० पु० पाठः।

सू॰ विकल्पस्त्वेकावदानत्वात् ॥ १० ॥ (२ परि॰) ॥

भा॰ तुशब्द आप्तिवचनान्निवृत्तिरुपस्तरणाभिघारणयोरित्येतन्निवर्त्तयति । यथा भवान् ब्रूते,—आप्तिवचनाल्लिङ्गान्निवृत्तिरेतयोरिति, एवमेकावदानवचनाल्लिङ्गादनिवृत्तिरेतयोरिति लिङ्गविकल्पः । लिङ्गविकल्पाच्च नैकान्ततो निवृत्तिमाप्तिवचनं कर्त्तुमर्हति ॥

सू॰ सर्वविकारे त्वभ्यासानर्थक्यं हविषो हीतरस्य स्यादपि वा स्विष्टकृतः स्यादितरस्यान्याय्यत्वात् ॥ ११ ॥ (२ परि॰ नि॰) ॥

भा॰ तुशब्द आप्तिवचनं बाधते । आप्तिवचने बाधिते सति चतुर्षु कृष्णलेषु सर्वावदानविकारेष्वभ्यासो अनर्थकः स्यात्,—‘चत्वारि चत्वारि कृष्णलान्यवद्यति समृद्ध्य’ इति । अस्मत्पक्षे पुनः इतरद्धविर्द्वितीयमवदानमपेक्ष्याभ्यासोऽवकल्पिष्यते । ‘अथ मतं, एतन्ममापि स्विष्टकृतमपेक्ष्याभ्यासे भवति इति’ । तन्नैवं,—‘इतरस्य’ स्विष्टकृतोऽपेक्षणमन्याय्यं । प्रकरणात् प्रधानमभिसम्बध्यते वचनेन, न च स्विष्टकृतः प्रकरणं, चोदकेन हि स प्राप्यते, तस्मात् त्वत्पक्षेऽभ्यासोऽनर्थक एव; उपस्तरणाभिघारणे कर्त्तव्ये एव ॥

सू॰ अकर्म वा संसर्गार्थनिवृत्तित्वात् तस्मादाप्तिसमर्थत्वम् ॥ १२ ॥ (पुनः पू॰ उ॰) ॥

भा॰ अक्रिया उपस्तरणाभिघारणयोः । कुतः? । संसर्गः स्रुचि पुरोडाशचूर्णानां सूक्ष्माणां माभूदिति उपस्तरणेन स्रुक्

स्निग्धीक्रियते, अभिघारणेन हविः श्रुचि असंयुक्तं शुष्कं यथा अग्नौ पतेदिति; न तु विग्रहस्य कृष्णलस्य श्रुचि संयोगो भवति, यन्निमित्तमुपस्तरणमभिघारणञ्च स्नेहनार्थं सुवर्णस्य क्रियेत। तस्मात् प्राकृतस्य प्रयोजनस्य निवृत्तत्वात् कृष्णलेषु उपस्तरणाभिघारणे निवर्त्तितुमर्हतः। एवञ्चाग्निवचनमुपपन्नं भविष्यति, 'चत्वारि कृष्णलान्यवद्यति चतुरवत्तस्याप्त्यै' इति॥ (१०।२।२अ०)॥

---

कृष्णलचरौ भक्षमन्त्राभावाधिकरणम्॥

**सू० भक्षाणान्तु प्रीत्यर्थत्वादकर्म स्यात्॥१३॥ (पू०)॥**

भा० अतत्कृष्णलस्वदुदाहरणं। सन्ति प्रकृतौ भक्षाः इडाप्राशित्रचतुर्द्धाकरणशंयुवाककालाः। तेषु संशयः,—कृष्णलचरौ ते भक्षाः कर्त्तव्याः, उत न? इति। किं प्राप्तं?। न कर्त्तव्याः, प्रीत्यर्थं हि प्रकृतौ ते कृताः, सामर्थ्यं जनयिष्यन्तीति; न तु हिरण्यं प्रीतिमुत्पादयति भक्ष्यमाणम्। अतो न कर्त्तव्याः॥

**सू० स्याद्वा निर्द्धानदर्शनात्॥१४॥ (सि०)॥**

भा० स्याद्वा हिरण्यस्य भक्षः, भक्षणविशेषदर्शनात्, 'निरवधयन्तो* भक्षयन्ति चुचुषाकारं† भक्षयन्ति' इति प्राप्ते भक्षे केवलं भक्षोपायं

---

* 'निरिवधयन्तः' इति का० ख० पु० पाठः। एवं परत्र।

† 'बुभुक्षाकारम्' इति का० ख० पु० पाठः। आदर्शपुस्तके तु चुचुषाकारमिति पाठः। एवं परत्र। न्यायमालायान्तु चुचुषाकारमिति पाठः। तत्र च तस्य एवमर्थोऽकारि,—"इक्षुदण्डभक्षणे तद्रसस्वीकारे यः शब्दः तस्यानुकरणं चुचुषेति। इते निरवशेषु कृष्णलेषु चर्विन्नमाज्यं तदन्तर्लेढुमिव बाला चुचुषां कृत्वा तदाज्यं निःशेषेण पिबन्तो भक्षयेयुरित्यर्थः" इति।

विधास्यति भब्द इति, इतरथा भक्षोपायं भक्षणस्य विकृतौ विदध्यात्, तच वाक्यं भिद्येत! तस्माचोदकेन प्राप्यते भक्ष इति ॥

सू० वचनं वाज्यभक्षस्य प्रकृतौ स्यादभागित्वात् ॥ ॥ १५ ॥ (आ०) ॥

भा० न लेतदस्ति,—प्राप्यन्त भक्षा इति, अर्थलोपादेषां निवृत्तिः । यत्तु, भक्षणे विशेषवचनं भवतीति, वचनादेतत् आज्यस्य भक्षिष्यति। निरवधयन्तो भक्षयन्त्याज्यमिति, चुचुषाकारं भक्षयन्त्याज्यमिति; निर्लूनं चुचुषाकारं चार्थप्राप्तं भक्ष्यमाणस्यानूद्यत इति न वाक्यभेदः ॥

सू० वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥ १६ ॥ (आ० नि०) ॥

भा० सत्यं, वचनमेतद्धिरण्यस्य, न त्वाज्यस्य। कुतः?। भक्षयन्तीत्येतावच्छ्रूयते, न इदं वा तदा इति, तत्र यन्निर्दिष्टं प्रकृतं, तस्य तेन सम्बन्धो भवतीति, हिरण्यं चात्र निर्दिश्यते, नाज्यं। कथं?। 'प्राजापत्यं चरुं निर्वपेत् घृते शतकृष्णलम्' इति शतकृष्णलस्य चरोश्च कार्यसम्बन्धार्थमुच्यते*, तद्विशेषणार्थेन घृतं, न स्वनिर्देशार्थेन। तस्माच्चरुरेव शब्दान्तरैः सम्बध्यते, न घृतं। तद्यथा एष दण्ड इष्टकाकूटे तिष्ठति, प्रहरानेनेति, दण्डेनेति गम्यते, नेष्टकाकूटेनेति; एवमिहापि चरुर्भक्षणवचनेन संबध्यते न घृतं, तस्माच्चरोर्भक्षणं

* उपायंते इति का० ५० पु० पाठः ।

प्रदानवत्। यथा तेषामेव छन्दसानाम् अनदनीयानां प्रदानं क्रियते, एवमत्रापि द्रष्टव्यम् इति॥ (१०।२।३ अ०)॥

---

अन्वयचरौ एकधा ब्रह्मणे परतीत्यनेन सहपरिहारविधानाधिकरणम्।

सू० एकधोपहारे सहत्वं ब्रह्मभक्षाणां प्रकृतौ विहृतत्वात्॥ १७॥

भा० तत्रैव श्रूयते,—'एकधा* ब्रह्मणे परिहरति' इति। तत्र सन्देहः, 'किमेतत् सहत्वम् उत सकृत्त्वम्' इति। किं प्राप्तं? सकृत्त्वं वा सहत्वं वा अनियम इति। कुतः?। एकप्रकारवचन एकधेति शब्दः, सकृत्त्वमप्येकः प्रकारः सहत्वमपि। तद्यथा, यः सकृत् गाः प्रापयति स एकधा प्रापयतीत्युच्यते, योऽपि सह प्रापयति सोऽप्येकधा प्रापयतीति, तस्मात् सकृत्त्वं सहत्वं वा कर्त्तव्यम् इति।

एवं प्राप्ते ब्रूमः,—'एकधा ब्रह्मणे परिहरति' इति सहेति गम्यते, एवं ब्रह्मभक्षस्याब्रह्मभक्षस्यापि परिहारः कृतो भविष्यति। इतरस्मिन् पक्षे कस्यचिद्ब्रह्मभक्षस्य परिहारो न क्रियेत, तत्र प्राकृतः प्रयोगवचनो बाध्येत। विहृतास्तावत् भक्षाः प्रकृतौ, ते इह चोदकेन विहृता एव प्राप्तास्तत्र सहत्ववचन एकधाशब्दोऽवकल्पते। 'ननु वाचनिक इह भक्षोऽप्राकृतः, न प्राकृता विहृताः प्राप्नुमर्हन्ति इति'। उच्यते, पुरुषसंस्कारार्थत्वेन न प्राप्नुवन्ति, द्रव्यसंस्कारार्थत्वेन तु प्राप्नुवन्तीति। 'यदि प्राप्नुवन्ति, किमर्थं तर्हि वचनम्? इति'। भक्षोपायविधानार्थं। 'ननु निर्ज्ञातं पुरुषाकरणं

---

† 'एकधा तु' इति का० घ० पु० पाठः।

वा अर्थप्राप्तम्, अर्थप्राप्तत्वादनुवादः'। उच्यते,—न नियमेन प्राप्यते, नियमार्थस्य विधीयते इति॥ (१०।२।४अ०)॥

---

उच्छिष्टपरिहारे सर्वभक्षभागापेक्षाधिकरणम्॥

सू० सर्वत्वं च तेषामधिकारात्स्यात्॥ १८॥ (पू०)॥

भा० इदमुच्चयरेवोदाहरणं। तत्र श्रूयते,—'सर्वं ब्रह्मणे परिहरति'* इति। तत्र सन्देहः,—किं ब्रह्मभक्षाणामेवैष परिहारः, उत पुरुषेभ्यः शेषापनयः? इति। कथं ब्रह्मभक्षाणां परिहारः, कथं वा शेषापनयः? इति। यदि 'ब्रह्मणे परिहरति' इत्यनूद्य 'सर्वम्' इति विधीयते, 'ब्रह्मणे' 'सर्वम्' इति वानूद्य 'परिहरति' इति विधीयते, ततो ब्रह्मभक्षाणां परिहारः; अथ 'सर्वम्' इति उच्चयित्वा 'ब्रह्मणे' 'परिहरति' इति विधीयते, 'परिहरति' इति वा उच्चयित्वा 'सर्वं' 'ब्रह्मणे' इति, ततः शेषापनयः। किं प्राप्तं?। 'सर्वत्वं' ब्रह्मभक्षाणां स्यात्। कुतः?। 'ब्रह्मणे परिहरति' इति प्राप्तमेव न विधीयते। सर्वपरिहारस्तु अप्राप्तः तस्य विधानं भवितुमर्हति।

अथ वा अस्त्येव ब्रह्मणे सर्वो भागस्तत्र कस्यचिद्भागस्य परिहारः प्राप्तः कस्यचिन्न प्राप्तः, यस्य च न प्राप्तस्तस्य परिहारो विधीयते। तस्मादधिकृतानां ब्रह्मभक्षाणामेव वाद इति।

---

* "परिहारः समर्पणं, ब्रह्मसहितानां ऋत्विजाम् एकैकस्य चतुर्षु कालेषु चत्वारो भक्षभागाश्चोदकप्राप्ताः। तत्र सर्वता किं ब्रह्मसम्बन्धिचतुर्भागविषया उत इतरसम्बन्धिभागचतुष्टयविषयापीति सन्देहः" इति माधवः।

सू० पुरुषापनयो वा तेषामवाच्यत्वात् ॥१९॥ (सि०)॥

भा० वाशब्दः पक्षं व्यावर्त्तयति। 'पुरुषापनयः' स्यात्; यद्येवम् उच्येत,—यत् ब्राह्मणे परिहरति, तत् सर्वमिति; सर्वमेव हि तद्विधानमनर्थकं स्यात्! अथ यत् ब्राह्मणे, तत् सर्वं परिहरतीति; विशेष्यस्यानिर्देशात् न ब्राह्मशब्दो विशेषणम्। अथ यद् ब्राह्मणे, सर्वं तत् परिहरति इति; एवमपि विशेष्यो नैव निर्दिष्टः स्यात्! यत् सर्वं तत् परिहरतीति नैवं वचनमर्हति, सर्वं हि सर्वं, ततश्च विशेषयितव्यं। तस्मात् सर्वं ब्राह्मणे परिहरतीति ब्राह्मसम्बन्धः सर्वस्य विधीयते परोः, एवं न किञ्चिदनर्थकं। तस्मात् पुरुषेभ्यः शेषापनय इति॥ (१०।२।५अ०)॥

भक्षाणां स्वकाले भक्षणाधिकरणम्॥

सू० पुरुषापनयात् स्वकालत्वम्॥२०॥

भा० तत्रैव सन्देहः,—समधिगते शेषापनये किमेकस्मिन् काले सर्वे भक्षा भक्षयितव्याः, उत स्वस्मिन् स्वस्मिन् काले? इति। किं प्राप्तं?। भक्षयितुं तत्परिहरणं क्रियते, अतो यत् भक्षणाय परिहृतं तदनन्तरं भक्षयितव्यमेव।

एवं प्राप्ते ब्रूमः,—'पुरुषापनयात् स्वकालत्वम्' इति, पुरुषापनयं कृत्वा कृतार्थः शब्दः स्वकालतां भक्षाणां न निवारयति, तस्माद्यथाकालमेव भक्षयितव्याः' इति॥ (१०।२।६अ०)॥

प्रकृतौ चतुर्धाकरणादीनामभावाधिकरणम् ॥

सू॰ एकार्थत्वादविभागः स्यात् ॥ २१ ॥

भा॰ तत्रैवेदं चिन्त्यते,—प्रकृतौ व्यादेश आम्नातः,—'इदं ब्रह्मण इदं होतुरिदमध्वर्योरिदमग्नीधः' इति। स इह कर्त्तव्यो न कर्त्तव्यः? इति संशयः। चोदकप्राप्त्या कर्त्तव्य इति यस्य बुद्धिः स्यात्, तस्य निवृत्त्यर्थं सूत्रम्। प्रकृतौ बहूनां सम्बन्धः कर्त्तव्यः, स विभागमन्तरेण न सिध्यतीति विभागो बहुसम्बन्धात् क्रियते। इह तु 'सर्वं ब्रह्मणे परिहरति' इति एकस्मै सर्वप्रदः, तत्र विभागेन न प्रयोजनं, क्रियमाणोऽपि न प्राकृतार्थः स्यात्, अदृष्टार्थ एव क्रियेत। तस्मात् कृष्णलचरौ न व्यादेश इति ॥ (१०।२।७अ०) ॥

---

ज्योतिष्टोमे ऋत्विग्दानस्यानत्यर्थताधिकरणम् ॥

सू॰ ऋत्विग्दानं धर्ममात्रार्थं स्याद्ददातिसामर्थ्यात् ॥ २२ ॥ (पू॰) ॥

भा॰ अस्ति ज्योतिष्टोमः, 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। तत्रेदं समामनन्ति,—'गौश्च अश्वश्च अश्वतरश्च गर्दभश्च अजाश्च अवयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा'। इदं चापरं श्रूयते, 'ऋत्विग्भ्यो दक्षिणां ददाति' इति। तत्र संशयः,—'किं दानं धर्ममात्रम्, उत ऋत्विगानमनम्'? इति। किं प्राप्तं?। 'ऋत्विग्दानं धर्ममात्रं * स्यात्', तस्य हि कर्त्तव्यता श्रूयते। ददातिकर्त्तव्यता अस्माच्छब्दाद् गम्यते, ऋत्विगानमनं

* अत्र धर्ममात्रार्थमिति पाठो भवितुं युक्तः ।

कर्त्तव्यं वाक्याद्गम्यते, श्रुतिश्च वाक्याद् बलीयसी। लोकेऽपि अदृष्टार्थतैव ददातेर्गम्यते इति सामर्थ्यादेव नानमनादि। अपि च कर्मानुरूपमपि दाक्षिण्यं क्वचित् श्रूयते,—'चैधातव्यायां सहस्रं क्षतपेये सोमचमसः'। अपि च यत्रोपनीयपणीपणः* क्रियते स परिक्रयो भवति, न चात्र नियतपरिमाणं दानं। तस्माद्धर्ममात्रं दानम्। अपि च नियमवच्चानवच्च क्रियते, तददृष्टार्थत्वेनावकल्पते। क्वचिच्च श्रूयते,—'द्रप्सः, उपानहौ, ध्रुक्का इतिः सा हि दक्षिणा' इति। को हि द्रप्सेनानमेत्? तस्मात् धर्ममात्रं दानमिति॥

सू० परिक्रयार्थं वा कर्मसंयोगाल्लोकवत्॥२३॥(सि०)॥

भा० 'परिक्रयार्थं' वा दानं। कुतः?। 'कर्मसंयोगात्',—कर्मसंयुक्तेभ्यः श्रूयते,—'ऋत्विग्भ्यो दक्षिणां ददाति' इति। तत्र दृष्टं प्रयोजनमुत्सृज्य न शक्यमदृष्टं कल्पयितुं। यदपि नियमाददृष्टं, तदपि दृष्टद्वारमेव,—अनेन नियतेन नियतगुणकेन च दानेनानम्यमाना ऋत्विजः अभ्युदयकारिणो भवन्ति। कथम्?। आनमने गुणभूतत्यागश्चोद्यते न प्रधानभूतः, वाक्यार्थश्च अवश्यंग्रहीतव्यः, इतरथा 'ऋत्विग्भ्यः' इत्येतदेव पदमनर्थकं स्यात्! अग्रह्यमाणो सुतरां श्रुतिर्वाध्येत। यच्च,—न कर्मानुरूपं दाक्षिण्यमिति। नैतावता दृष्टोऽर्थः सन् अपकृष्येत†। नियमात् दृष्टद्वारमदृष्टमित्युक्तमेव। वचन-

---

* पणापणः इति चादर्शपुस्तकपाठः। पणः पणः इति क० सं० पु०पाठः।

† अपकृष्यते इति क० सं० पु० इदं चादर्शपुस्तकपाठः।

प्रामाण्याच्च दृश्योऽवगम्यते। अपि च भवति तत्र या च यावती चानमनमात्रा, लोकेऽपि हि काष्ठवाहप्रभृतिभ्यो यद्दीयते, तदपदीर्त्तितेऽपि परिक्रये आनमनार्थमेव भवति। तस्मात् परिक्रयार्थं दक्षिणादानमिति ॥

सू० दक्षिणायुक्तवचनाच्च ॥ २४ ॥ (यु०१) ॥

भा० 'दक्षिणायुक्तवचनाच्च' लिङ्गात् परिक्रयार्थं दानमिति पश्यामः। 'दक्षिणायुक्ता वहन्ति ऋत्विजः' इति ॥

सू० न चान्येनानम्येत परिक्रयात्, कर्मणः परार्थ-त्वात् ॥ २५ ॥ (यु०२) ॥

भा० इतश्च परिक्रयार्थं दानमिति। कुतः?। नान्तरेण परिक्रयं, परार्थे परः प्रवर्त्तते। 'ननु यामादयोऽपि प्रवर्त्तनोपायाः'। न ब्रूमो, न प्रवर्त्तनोपाया इति, किन्तर्हि परिक्रयः प्रत्यक्षमाम्नात इति। अतस्तेनैव परिक्रेतव्या नान्येन इति ॥

सू० परिक्रीतवचनाच्च ॥ २६ ॥ (यु०३) ॥

भा० परिक्रीतवचनं भवति, तेनाप्यमर्थो द्योत्यते,—'दीक्षित-मदीक्षिता दक्षिणापरिक्रीता ऋत्विजो याजयन्ति' इति। तस्मा-दपि परिक्रयार्थं दानमिति ॥

सू० सनिवन्त्येव भृतिवचनात् ॥ २७ ॥ (यु०४) ॥

भा०　सनिवनिप्राप्तं सनिवन्यं याञ्चाप्राप्तमित्यर्थः*। तस्मिन् स्तुतिवचनं भवति,—'यज्ञो वै देवतानां न समभवत्, तं भृत्या समभावयन्, यत् भृतिं वनुते, यज्ञस्य भृत्यै दाक्षिणायो-र्दीक्षितो भृतिं वन्वीत' इति। यज्ञार्थं यद् भिक्षितं ऋत्विजः परिक्रेतुम्, अन्यच्च यज्ञार्थं साधयितुं, तस्मिन्नेव स्तुतिवचनं। भृतिश्च कर्मकरेभ्य आनत्यर्थं यद्दीयते। तस्मादपि परिक्रयार्थं ऋत्विग्भ्यो दानमिति॥

सू०　नैष्कर्तृकेण संस्तवाच्च॥ २८॥ (यु०५)॥

भा०　'नैष्कर्तृकेण' च संस्तवो भवति,—'यथा वै दाशहारो नैष्कर्तृको निष्कर्त्तनभृतः कर्म्मयोगे वर्त्तते, एवं वा एते यज्ञस्य ऋत्विजः' इति। नैष्कर्तृको दाशहारः, यथाऽसौ, एवं ऋत्विज इति ब्रुवन् परिक्रयार्थं दानं दर्शयति॥ (१०।२।८अ०)॥

---

ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थताधिकरणम्॥

सू०　शेषभक्षाश्च तद्वत्॥ २९॥ (पू०)॥

भा०　सन्ति शेषभक्षा ज्योतिष्टोमे दर्शपूर्णमासयोश्च, यथा वषट्कारनिमित्ता होमाभिषवनिमित्ताश्च, तथा इडा-प्राशित्र-चतुर्द्धाकरण-शंयुवाककालाः। तेषु संशयः, 'किं ते परिक्रयार्थाः, उत न' इति। किं प्राप्तं?। 'शेषभक्षाश्च तद्वत्' भवितुमर्हन्ति,

---

* याच्ञाप्राप्तमित्यर्थं इति क० सं० पु० पाठः।

भक्षणम् दक्षिणादानं। प्रीतिं हि करोति भक्षणं, प्रीत्या चानमन्ति। तस्मात् परिक्रयार्थाः शेषभक्षा इति॥

सू० संस्कारो वा द्रव्यस्य परार्थत्वात् ॥ ३०॥ (सि०)॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,—'न परिक्रयार्थं भक्षणं, द्रव्यसंस्कारार्थम्' इति। कुतः?। यस्यार्थेन हि द्रव्यमुत्पन्नं प्रयोजनवत्, यदि तस्य संस्कारार्थं भक्षणं, ततस्तदपि प्रयोजनवत्। 'दक्षिणार्द्धमाध्याचावयति' इत्येवमादि च एकदेशवचनं प्रकृतशेषापेक्षं भवति, न द्रव्यस्योत्पादकं, तस्मात् द्रव्यस्य भक्षणमुच्यते, न भक्षार्थं द्रव्यमुपादीयते, प्रकृतस्य च भक्षणं। तस्मात् संस्कारार्थमिति गम्यते॥

सू० शेषे च समत्वात् ॥ ३१ ॥ (यु०१) ॥

भा० अपि च यच्छेषं द्रव्यं, तत् देवतायै सङ्कल्पितं यजमानेन न स्वयमुपयोक्तव्यम् इति। तस्मान्न तस्योपयोक्तुम् ऋत्विज ईशते, नो ऽप्यपि यजमानः। साम्यमत्र यजमानस्य ऋत्विग्भिः, परिक्रीणानस्य स्वीकुर्यात् द्रव्यं, तत्रास्य देवतार्थः सङ्कल्प एव न अवकल्पते। तस्मादपि न परिक्रयार्थं भक्षणम् इति॥

सू० स्वामिनि च दर्शनात् तत्सामान्यादितरेषां तथात्वम् ॥ ३२ ॥ (यु०२) ॥

भा० 'स्वामिनि च' भक्षणं दृश्यते,—'यजमानपञ्चमाः समुपहूता इडां भक्षयन्ति' इति। यजमानस्य भक्षणम् अपरिक्रयः,

'तत्सामान्यादितरेषाम्' अपि न परिक्रयः। कथं?। एवं सति, नैव विज्ञायते,—इडाभक्षणेन यजमानपञ्चमाः परिक्रीयन्त इति। किं तत् सामान्यं?। द्वितीया विभक्तिः। तस्मादपि न परिक्रयार्थं भक्षणमिति॥

सू० तथा चान्यार्थदर्शनम्॥ ३३॥ (यु० ३)॥

भा० एवम् 'अन्यार्थदर्शनम्' इदमुपपन्नं भवति,—'कुण्डपायिनामयने अस्वरकैश्चमसैः सोमान् भक्षयन्ति' इति प्राप्ते भक्षे विशेषः श्रूयते,—'अस्वरकैः' इति। एवं सत्रेषु भक्षणं दृश्यते, तत्परिक्रयार्थत्वे न अवकल्पते। तस्मादपि न परिक्रयार्थं भक्षणमिति॥ (१०।२।८ अ०)॥

---

सत्रे ऋत्विग्वरणाभावाधिकरणम्॥

सू० वरणमृत्विजामानमनार्थत्वात् सत्रे न स्यात् स्वकर्मत्वात्॥ ३४॥

भा० सन्ति द्वादशाहप्रभृतीनि सत्राणि,—'द्वादशाहमृद्धिकामा उपेयुः' इत्येवमादीनि। अस्ति च प्रकृतौ ज्योतिष्टोमे वरणम्,—'अग्निर्मे होता स मे होता होतस्त्वं मे होतासीति होतारम्'—इत्येवमादीति। तत् सत्रेषु सन्दिह्यते,—किं कर्त्तव्यं, न? इति। तत एतत् तावन्नः परीक्ष्यं,—किं प्रकृतौ धर्ममात्रं वरणम्, उत परिक्रयार्थम्? इति। यदि धर्ममात्रं, प्रकृतौ सत्रेषु कर्त्तव्यम्; अथ परिक्रयार्थं, न कर्त्तव्यमिति। किं प्राप्तं?। मन्त्रवर्णितवरणवचेति कृत्वा धर्ममात्रं। तस्मात् सत्रेषु कर्त्तव्यम् इति।

एवं प्राप्ते ब्रूमः,—'वरणमृत्विजां' सत्रेषु 'न स्यात्', न कर्त्तव्यमिति। स्वार्थं हि तेषां कर्म, न च कश्चिदात्मानं वृणीते। प्रकृतौ चानमनार्थं वरणं दृष्टप्रयोजनमिति न शक्यमदृष्टं कल्पयितुं। तस्मात् सत्रेषु वरणं न स्यादिति॥ (१०।२।१०अ०)॥

---

सत्रे परिक्रयाभावाधिकरणम्॥

सू० परिक्रयस्य तादर्थ्यात्॥ ३५॥ (नि०)॥

भा० 'परिक्रयस्य'* प्रकृतौ ज्योतिष्टोमे आम्नातः, 'गौश्च अश्वश्च अश्वतरश्च गर्दभश्च अजाश्च अवयश्च ब्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति। तत् दाक्षिण्यं सत्रे चोदकेन प्राप्तं किं कर्त्तव्यं, निवर्त्त्यं वा? इति संशयः। किं प्राप्तं?,—कर्त्तव्यः परिक्रयश्चोदकानुग्रहाय। अपि च तत्र गवादयः प्रतिषिध्यन्ते,—'न खलु गौर्दीयते न वासो न हिरण्यम्' इति, तत् सति परिक्रयेऽवकल्पते।

एवं प्राप्ते ब्रूमः,—'परिक्रयस्य तादर्थ्यात्' इति, परिक्रयस्य न कर्त्तव्यः। उक्तमधस्तादरणं सत्रेषु न कर्त्तव्यमिति, परिक्रयश्चेति 'च'शब्देनान्वादेशः क्रियते,—न कर्त्तव्यः परिक्रयः। कुतः?। आत्मार्थत्वात्,—न कश्चिदात्मानं परिक्रीणीते इति।

---

* "सत्कारपुरःसरमग्निर्होतेत्यादिप्रार्थना वरणं। तत्र वरणं चिकीर्षुर्यजमानो वरणीयेभ्यो ब्राह्मणेभ्यः सोमं ब्रूयात्, तेभ्यः सोमं प्राहेति आपस्तम्बवचनात्। सोमाभिधानप्रकारश्चान कल्पे दर्शितः, ज्योतिष्टोमेनाग्निष्टोमसंस्थेन रथन्तरपृष्ठेन गवां द्वादशशतदक्षिणेनाहं यक्ष्ये, तत्र समुद्गाता भवेति, तत्र देयदक्षिणाद्रव्यनिश्चयेन ब्राह्मणाः स्वकीयकर्म्मविशेषं नियोक्तुं योग्या भवन्ति, सोऽयं क्रयः" इति माधवः।

सू० प्रतिषेधश्च कर्मवत् ॥ ३६ ॥ (आ०) ॥

प्राप्तौ सत्यां प्रतिषेधोऽवकल्पते इति यदुक्तं, तत् परिहर्त्तव्यम्,—

सू० स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् ॥ ३७ ॥ (पू०) ॥

भा० प्रतिषेध उपपद्यत इत्यर्थः । कस्य ?। 'प्रासर्पिकस्य' दानस्य इति । धर्ममात्रं हि तत् सत्रेषु चोदकप्राप्तं, तन्निवर्त्तते । तस्मादुपपन्नः प्रतिषेध इति ॥

सू० न दक्षिणाशब्दात् तस्मान्नित्यानुवादः स्यात् ॥
॥ ३८ ॥ (सि०) ॥

भा० नायं प्रासर्पिकस्य प्रतिषेधः । कुतः ?। 'दक्षिणाशब्दात्' दक्षिणाशब्दो ह्यत्र भवति,—'अदक्षिणानि सत्राण्याहुः न हि अत्र गौर्दीयते न वासो न हिरण्यम्' इति । दक्षिणाशब्दश्च परिक्रयार्थो भवति । तत्र हि श्रूयते, 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति*, ऋत्विग्दानं दक्षिणा, न प्रासर्पिकं; तस्यैवासौ प्रतिषेधो न प्रासर्पिकस्य। तस्मान्नित्यप्राप्तस्यैवानुवादोऽसौ न सत्रेषु दक्षिणा इति ॥ (१०।२।११अ०) ॥

---

*'दक्षिणा', इत्येव इति का० औ० पु० पाठः ।

उदवसानीयस्य सत्राङ्गतया तत्र दानस्य परिक्रयार्थताधिकरणम् ॥

सू० उदवसानीयः सत्रधर्मा स्यात् तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ ३९ ॥ (पू०)॥

भा० अस्ति उदवसानीयः,—'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्' इति। तत्रैषोऽर्थः सांशयिकः,—दक्षिणादानं धर्ममात्रम्, उत परिक्रयार्थम्? इति। तथा इदमपरं द्वैतं,—किं सत्राङ्गमुदवसानीयः, न? इति। यदि सत्राङ्गं, धर्ममात्रं दानम्; अथ न सत्राङ्गं, परिक्रयार्थम् इति। किं प्राप्तं?—सत्राङ्गम् इति। कुतः?। सत्रप्रकरणात्, सत्रं परिसमाप्य कर्त्तव्यमिति श्रूयते, सत्रप्रकरणात् सत्रं लक्षयित्वेति गम्यते। उदवसानीयस्य सत्रस्य विधीयते इति। सत्रस्य च फलार्थत्वान्नोदवसानीयार्थता गम्यते। न च सत्रोदवसानकाले उदवसानीयः, लक्षणा हि तथा स्यात्। अनङ्गत्वे च फलं कल्पयितव्यं, तस्मादानन्तर्यादेकवाक्यतासम्बन्धाच्च सत्राङ्गमुदवसानीयः,—सत्रं यथोक्तं परिसमाप्य न सन्तोष्टव्यं, न तावत् कृत्वा कृतिता मन्तव्या, इदमपरं तस्याङ्गं कर्त्तव्यमुदवसानीय इत्येवमभिसम्बन्धः क्रियते। यथा 'अग्निं चित्वा सौत्रामण्या यजेत' 'वाजपेयेनेष्ट्वा बृहस्पतिसवनेन यजेत' इति। तस्मात् सत्राङ्गम्। एवं चेत् साङ्गस्य सत्रस्य स्वयंकर्तृकत्वात् 'धर्ममात्रं' 'तत्र' दानं; सत्रधर्मा उदवसानीय इति॥

सू० न त्वेतत्प्रकृतित्वाद्विभक्तचोदितत्वाच्च॥४०॥(सि०)॥

भा० तुशब्दः पक्षं व्यावर्त्तयति। नैतदेवं धर्म्ममात्रमत्र दानम् इति, किन्तर्हि,—परिक्रयार्थम् इति। कुतः?। नैतत् सत्राङ्गं 'विभक्तचोदितत्वात्', नैतद् बृहस्पतिसवेन सोमसामान्या च तुल्यं, तत्रैवं श्रूयते,—यथोक्ताङ्गं कृत्वा नैव सन्त्योष्टव्यमिदमपरं तस्य कर्त्तव्यम् इति। इह पुनः सत्रमुत्सृज्य उदवसानीयः कर्त्तव्य इति,— 'सत्रादुदवसाय' (उत्थायेत्यर्थः)। तत्रान्योऽर्थः क्त्वाशब्दस्य,—यथोदितं निर्वर्त्त्य न प्रहातव्यम्। उत्पूर्वस्य अवपूर्वस्य स्यतेः प्रहायेत्यर्थः। प्रहाणे इह क्त्वाशब्दस्तत्र पुनरनुष्ठानानन्तर्य्ये। तस्माद् विभक्तचोदितत्वान्न सत्राङ्गं, न च सत्रप्रकृतिकं। तस्मादत्र दानं परिक्रयार्थमिति ॥ (१०।२।१२अ०) ॥

---

उदवसानीयस्य ऋत्विजामेकैकेनानुष्ठानाधिकरणम् ॥

सू० तेषां तु वचनात् द्वियज्ञवत् सहप्रयोगः स्यात् ॥ ॥ ४१ ॥ (पू०) ॥

भा० इदमेवोदाहरणं,—'सत्रादुदवसाय पृष्ठशमनीयेन ज्योतिष्टोमेन सहस्रदक्षिणेन यजेरन्' इति। तत्रैषोऽर्थः समधिगतः, न सत्राङ्गं पृष्ठशमनीयः इति। अथेदानीमिदं सन्दिह्यते, किं संहत्य तैस्तत् कर्त्तव्यम्, उत एकैकेन? इति। किं प्राप्तं?—संहत्य इति। कुतः?। उपादेयत्वेन यागे चोद्यमानस्य बहुत्वस्य श्रवणात्। स यद्येकेन क्रियेत, बहुत्वसंयुक्तः प्रयोगो न स्यात् 'द्वियज्ञवत्', यथा 'एतेन राजपुरोहितौ सायुज्यकामौ यजेयाताम्' इति, यद्यपि राजपुरोहितौ लक्षणत्वेन श्रूयेते एवमपि 'यजेयाताम्'

इति याग उपादेयत्वेन,यागे च एतत्कर्तृत्वं श्रूयते,—'यजेयाताम्' इति। तद्वत् पृष्ठशमनीयेन यजेरन् इति। तस्मात् संहत्य पृष्ठशमनीयं प्रयुञ्जीरन् इति॥

एवं स्थितं तावदपर्यवसितम्, अन्तराचिन्तान्तरस्य सूत्रं तावद्वर्णयिष्यामः,—

---

उदवसानीये सत्रिभ्योऽन्येषामृत्विक्त्वाधिकरणम्। (अन्तरा-चिन्ता)॥

सू० तत्रान्यानृत्विजो वृणीरन्॥ ४२॥

भा० अस्मिन्नेवोदाहरणे एषोऽर्थः सांशयिकः, 'किं त एव सत्रिण ऋत्विजः, उतान्ये वा वरीतव्याः? इति। किं प्राप्तं?—त एव। कुतः?। समानकर्तृकता हि गम्यते,—'उदवसाय यजेरन्' इति। य एव उदवसातारस्त एव यष्टार इति भवति प्रत्ययः। यथैव वचनप्रामाण्याच्चोदकप्राप्तामेककर्तृकतां बाधित्वा बहुकर्तृकता भवति, एवं चोदकप्राप्तानन्यानृत्विजो बाधित्वा वचनप्रामाण्यात् त एव भवितुमर्हन्ति इति।

एवं प्राप्ते ब्रूमः, 'तत्रान्यानृत्विजो वृणीरन्' इति। न हि पृष्ठशमनीये ये सत्रादुदवसातारस्ते कर्त्तारो विधीयन्ते, न तेषामुपादेयत्वेन चोदनेत्युक्तं, न चाविहितमङ्गं भवति, न चाङ्गे हीने विगुणता काचित् भवति; सन्ति च चोदकप्राप्ता अन्ये ऋत्विजः। अपि चात्र यावति कर्त्रभिप्रायं क्रियाफलं, तावति त एव कर्त्तारः, तदेतदुपपदविशेषादवगम्यते। न च ऋत्विजः

प्रति यागस्य कर्म्माभिप्रायं क्रियाफलं। तस्मादार्त्विज्ये त एव कर्त्तारः, प्रधानयागे तावत्कर्त्तृन् भवगच्छामः; ऋत्विजः पुनरन्ये वरीतव्या इति। (१०।२।१३म०) ॥

सू० एकैकशस्त्वविप्रतिषेधात् प्रकृतेश्चैकसंयोगात् ॥ ॥ ४३ ॥ (सि०) ॥

भा० स्थितादुत्तरम्। तुशब्दः पक्षं व्यावर्त्तयति। न पृष्ठशमनीयं संहत्य प्रयुञ्जीरन्, किन्तर्हि 'एकैकशः'। कुतः?। 'अविप्रतिषेधात्',—उदवसानेन हि पुरुषा लक्ष्यन्ते,—ये यज्ञादुदवस्यन्ति इति। तत्र एकोऽप्युदवसाता भवति, ये चोदवसानलक्षितास्तेषां याग इति एकैकस्यापि यागो विहितो भवति, न च केनचित् प्रतिषिध्यते, तस्मादेकैकोऽपि यजेत। 'ननु बहूनां प्रयोग उच्यते, तेनैकैकस्य न भवति'। नैष दोषः, एकैकस्यापि न वार्य्यते, तेन चोदकसामर्थ्यादेकैकश एव यजेत इति।

आह,—'बहुसंयुक्तः प्रयोग एकैकेन न शक्यते कर्त्तुम्' इति। एवमपि न दोषः, नात्र बहुवचनं विधीयते, ये यज्ञादुदवसातारस्तेषामेव यागः, ते च बहवः, तेषां बहूनामत्र प्राप्तानाम् वचनमनुवादः। एकैकशेनापि च ते उदवसातारः। तस्मात् तेषां तथैव यागो भविष्यति, यथैवोदवसाने तेषामसंहतानां बहुवचनं, एवं यागेऽपि असंहतानामेव भविष्यति।

अत्रोच्यते,—[न बहुवचनमनुवादः, अप्राप्तत्वात्, न हि बहुवचनं यागे प्राप्तं यदनूद्येत। 'गव्यिदाभीमेवोसमुदवसाद्वर्षा

आसते च बहवः' इति। उच्यते, बहुत्वं तेषामुदवसाने, न यागे। 'ननु वाक्यसामर्थ्याद्यागेऽपि भविष्यति'। नेत्याह, परिपूर्णं हि पदं पदान्तरमाकाङ्क्षति, ततो वाक्यं भवति, अयञ्च यागः प्रागेव बहुवचनेन सम्बद्धो न तस्यामवस्थायां वाक्येनोदवसातारः प्राप्ताः। उपादत्ते तु तदा बहुत्वं, ततो बहुवचनसंयुक्तः पदान्तरगतान् उदवसातॄनपेक्षते, तस्माद् बहुत्वसंयुक्तः प्रयोगः कर्त्तव्यः, यथा द्वियज्ञे सत्रेषु च इति]।

आह,—नैतदेवं,—यत्र केनचित्प्रकारेणानुवादः सम्भवति तत्रानुवादो वा स्याद् विधिर्वेति; यद्यप्यपूर्वत्वादन्यत्र विधिर्न्यायादनुवादात्, तथाप्यत्रानुवाद एव बहुत्वस्य भवितुमर्हति, तथा हि यागसम्बन्धो बहूनां न कृतो भवति, तत्र दृष्टमेव प्रयोजनं, इतरस्मिन् पक्षे बहुत्वस्य यागसम्बन्धेऽदृष्टं कल्पनीयं स्यात्, तस्मादनुवाद इति। आह,—'द्वियज्ञेऽपि तर्ह्येवमेव प्राप्नोति सत्रेषु च इति'। अत्रोच्यते, अस्त्यत्र विशेषः 'उदवसाय यजेरन्' इति, 'राजपुरोहितौ यजेयातां', 'ऋद्धिकामाः सत्रमासीरन्' इति। यत्र ह्याख्यातः शब्दो भवति तत्र द्वौ प्रयोगौ गम्येते, समानाश्च कर्त्तारः श्रवणादेव, तयोरन्तरप्रयोगवचनेन केवलो धात्वर्थो विधीयते, तदाश्रयः प्रयोगः, कर्त्तारश्च, तद्गता च संख्या,—एवं सर्वमेतत्, धात्वर्थे विधीयमाने प्राप्तमेवानूद्यते। द्वियज्ञे सत्रेषु च धात्वर्थो विधीयते, प्रयोगोऽपि, कर्त्तारः, तद्गता च संख्येति सर्वमेव तत्राप्राप्तं। न हि राजपुरोहितावित्येव शक्नोति प्रयोगं वदितुं, तत्र च कर्तृत्वं तद्गताश्च संख्या। तथा 'ऋद्धिकामाः'

इति। तस्मादेवंजातीयकेषु यज्ञा उपादेयत्वेन श्रूयते। अतो द्वियज्ञादिषु नानुवादरूपेषु यज्ञत्वसंयुक्तः प्रयोगः कर्त्तव्यः, इह तु न तथा। तस्मादेकैकः पृष्ठशमनीयेन यजेत इति॥ (१०।२।१४अ०)॥

---

कामेष्टौ दानस्यादृष्टार्थताधिकरणम्॥

सू० कामेष्टौ च दानशब्दात्॥४४॥ (पू०)॥

भा० अस्ति सारस्वते सत्त्रे कामेष्टिः,—'स्नाथं प्रस्रवणं प्राप्याग्नये कामायाष्टाकपालं पुरोडाशं निर्वपति तस्यामश्वां पुरुषीं च धेनुके दत्वा प्रति यमुनामवभृथमभ्यवयन्ति' इति। तत्र संशयः,—किं परिक्रयार्थं दानम्, उत धर्म्ममात्रम्? इति। पृष्ठशमनीये च सत्रस्यानङ्गभूते परिक्रयार्थं दानमित्युक्तम्, अथेदानीमङ्गभूतायां कामेष्टौ चिन्त्यते। तत्र किं तावत् प्राप्तं?,—यथा पृष्ठशमनीये परिक्रयार्थम्, एवमिहापोति चशब्देनान्वादिश्यते। कुतः?। 'दानशब्दात्', दानशब्दो भवति, 'तस्यामश्वां पुरुषीं च धेनुके दत्वा' इति। दानशब्दः कर्मकरेषु सत्सु परिक्रयार्थं इत्युक्तम्।

न चैतत्सत्रम्, सत्रस्याङ्गभूतमेतत्। प्रकरणाच्च सत्रस्य स्वयंकर्तृकता, नाङ्गानां, तत्रोदकप्राप्तेः ऋत्विग्भिः सगुणं सत् सत्रस्योपकारकं भवति। अन्यैर्ऋत्विग्भिर्विना विगुणं सत्रस्य नोपकुर्यात्। तस्मादत्र दानं परिक्रयार्थं इति॥

सू॰ वचनं वा सत्रत्वात् ॥ ४५ ॥ (सि॰) ॥

भा॰ वाशब्दात् पक्षो व्यावर्त्त्यते,—नाच परिक्रयार्थं दानं धर्म्ममाचम् इति। कुतः?। 'सत्रत्वात्', सत्रे हि आनतिर्निवृत्ता। 'आह,—नैतत् सत्रं सत्राङ्गमित्युक्तम्'। उच्यते, न सत्रं, सत्राङ्गं तु सत्रमध्यपतितं, सत्रस्य च शाङ्गस्य स्वयंकर्त्तृकता, तस्यां क्रियमाणायां ऋद्धा एवा इष्टेः कर्त्तारः। तत्र आनत्या न प्रयोजनं, श्रूयमाणं तु दानं धर्म्ममाचं भवितुमर्हति इति॥ (१०।२।१५ अ॰)

---

दर्शपूर्णमासयोर्द्वेष्याय दानस्यादृष्टार्थताधिकरणम्॥

सू॰ द्वेष्ये चाचोदनाद्दक्षिणापनयः स्यात्॥ ४६ ॥

भा॰ दर्शपूर्णमासयोरिदमाम्नायते,—'यदि पत्नोः संयाजयन् कपालमभिजुहुयात्, वैश्वानरं द्वादशकपालं निर्वपेत् तस्यैकहायनो गौर्दक्षिणा तं स द्वेष्याय दद्यात्' इति। तत्र संशयः,— किं परिक्रयार्थम् एकहायनस्य दानम्, उत धर्म्ममाचम्? इति। किं प्राप्तं,—दक्षिणाशब्दात् परिक्रयार्थमिति, परिक्रयार्थे हि दक्षिणाशब्दो भवति।

एवं प्राप्ते ब्रूमः, 'द्वेष्ये च' धर्म्ममाचं दानम् इति चशब्देन अन्वादिश्यते। कुतः?। 'अचोदनात्' द्वेष्यस्य ऋत्विजः, न हि द्वेष्य ऋत्विग् भवति, ऋत्विगाचार्यौ नातिचरितव्यौ इति। यदा परिक्रेतव्येनैव कर्म्म प्रयोजनं नास्ति, तदा किं दक्षिणाशब्दः करिष्यति?। अपि च परिक्रयार्थे सति दक्षिणाशब्दः स्यात्

चोदकप्राप्तोऽन्वाहार्योऽपनीयेत, तत्र चोदको बाध्येत; तस्मात् धर्म्मात्रमेकहायनस्य दानमनूलिके दातव्यम् इति ॥ (१०।२। १६ अ०)॥

---

जीवतामस्थियज्ञाधिकरणम् ।

सू० अस्थियज्ञोऽविप्रतिषेधादितरेषां स्यादिप्रतिषेधादस्थ्नां ॥ ४७ ॥ (सि०) ॥

भा० इदमाम्नायते, 'यदि सत्त्रीक्षितानां प्रमीयेत तं दग्ध्वा कृष्णाजिने अस्थीन्युपनह्य योऽस्य नेदिष्ठस्तं तस्य स्थाने दीक्षयित्वा तेन सह यजेरन् ततः संवत्सरे अस्थीनि याजयेत्' इति। योऽयं संवत्सरे यज्ञः, स सन्दिह्यते,—किमस्थ्नामुत जीवताम्? इति, किन्तावत्प्राप्तं?,—सामानाधिकरण्यादस्थ्नामिति। किं सामानाधिकरण्यं ?। याजयतेरस्थीनि कर्मभूतानि।

'ननु अस्थीन्यचेतनानि न शक्नुवन्ति स्वयं सम्नयितुं, कथं तानि क्रियायां कर्तॄणि भवेयुः'? इति। उच्यते, 'प्रयोज्यता तेषां श्रूयते, ततो अन्ये प्रयोजयितारः, ते एतानि क्रियां कारयिष्यन्ति' इति।

आह,—'न हि अकुर्वति कारयतीति भवति, कर्तुः हि प्रयोजको हेतुः, न चैतानि कार्त्स्न्येन क्रियामुपसंहर्तुं शक्नुवन्ति' इति। उच्यते, वचनप्रामाण्याद् यावत् यजमानं कारयितुं शक्ष्यन्ते, तावत् कारयिष्यन्ते,—औदुम्बरीं स्पृष्ट्वा गां स्पृशन्त्वारम्भणमित्येवमादीनि।

आह,—'प्रधानमेव न प्रकुर्वन्ति याज्ञानि कुर्वन्ति, याज-मानानि भवन्ति' इति। अत्रोच्यते, वचनसामर्थ्यात् तच्छवद्द्रव्यं ऋत्विजः प्रतिपद्यन्ते तद्दक्षिणास्तत्परिक्रीताः तत् यजन्ति इत्युभो द्रव्यत्यागो वाचनिको भविष्यति इति। आह, 'एवं वर्तमाने अस्वामिविदुषामेव कर्तृत्वमुपदिष्टं भवति चास्याम्' इति। उच्यते, यद्दुष्पमेवैतेन प्रकारेण कर्तृत्वमुपदिश्यते, न स्वकर्तरि कारयतीति भवति, हेतुकर्तृत्वं चास्यां प्राप्ते सति प्राप्तमेवानूद्यते, यथा, 'ग्रामकामं संयाजयेत्' इति 'ग्रामकामो यजेत' इति विधीयते, हेतुत्वं च प्राप्तमनुवादमात्रं, तत्र दर्शयति,—'लोके ऋत्विक्कुम्भमुप-दधाति' इति। अस्यामेव यजमानत्वं दृश्यते। तस्माद् अस्यां यज्ञो न चोक्ताम्।

इति प्राप्ते ब्रूमः,—'ऋत्विजः' 'इतरेषां' क्रीतत्वं स्यात्, तेषामवि-प्रतिषिद्धो यज्ञः, अस्यां विप्रतिषिध्यते, त्यागो नाम मनसा क्रियते, न चास्याम् अस्ति मनः। यदुक्तं,—'ऋत्विजः स्वद्रव्यं दक्षिणां प्रतिगृह्य तत्परिक्रीताः त्यागं कुर्वन्ति इति, इत्युभो वाचनिकस्त्यागो भवति' इति। नैतदेवं, न हि यजेतेत्युक्ते प्रकृतवतु वचनप्रामाण्यादन्यो यष्टव्यो भवति, यागं कुर्वीत इति हि तद्वचनं, नान्यो यष्टव्य इति। न च वचनप्रामाण्यादेतद्भवति,—'यच्छवद्द्रव्यं तत् गृह्यते,' न हि तद् ऋत्विग्भिर्दत्तं भवति, न चासति दाने परिक्रयः। न च गोशब्दोऽर्थो विधिशब्दादवगम्यते, अन्येन हि प्रमाणेन परिच्छिन्नेऽर्थे गोशब्दः समन्वीयते, यथा, 'गौरनुबन्ध्यः' इति गोजातिविशिष्टः पशुरनुबध्यते, न वाहीकः, गौरयं वाहीक इति तु संवादे

वाहीके गौणः शब्दः प्रवर्त्तते। तस्माद्व्यागविधाने अन्यो व्यवहारः स्यात्। न चास्थ्यां द्रव्यं स्वं सम्भवति, यत् स्वत्विजो गृहीता वयमनेन परिक्रीता इति मन्येरन्। तस्माच्च कथञ्चन अस्थीनि यष्टुपि भवन्ति अतो न विवक्षितं सामानाधिकरण्यम् इति।

आह,—'सम्बद्धवचनादनर्थकं तर्हीदं वाक्यं'। नेति ब्रूमः,—न हि गम्यमाने अर्थे अनर्थकं भवति, ततः संवत्सरे याजयेदित्येतावतो वाक्यात् कश्चिदर्थोऽवगम्यते,—स इह विवक्षितः, अस्थीनि याजयेदित्येष सम्बन्धो न विधीयते। आह,—'किमस्थीनीति प्रमादपाठः?'। न च प्रमादपाठ इति ब्रूमः, न हि स एवाप्रमादपाठो यो विधानार्थः मुख्यार्थश्च, अनुवदन्नप्यर्थं लक्षणयापि ध्रुवम् वाक्ये समवायं गच्छति, न च प्रमादपाठो भवति, तच, अस्थीनीत्येष शब्दो विदधत् स्वमर्थं मुख्यया वृत्त्या ध्रुवम् वाक्ये न समवैति, अनुवदंस्तु लक्षणया समवेष्यति। ततः 'संवत्सरे याजयेत्' इति जीवतः प्रकृताम् वक्ष्यति। तत्रास्थिशब्दो वर्त्तिष्यते लक्षणया, ततः संवत्सरेऽस्थिमतो याजयेदिति। के तेऽस्थिमन्तः?। ये तेन सह यष्टुं प्रक्रान्ताः। तस्माद् यस्य तानि अस्थीनि तैरस्थिभिः स शक्यते लक्षयितुं, तस्माज्जीवतां यज्ञ इति॥

सू० यावदुक्तमुपयोगः स्यात्॥ ४८॥ (आ० नि०)॥

भा० अथ यदुक्तमस्थ्यां याजमानं दर्शयति—'लोपेऽस्थिकुम्भमुपदधाति' इति'। नैतद् याजमानं, न हि अस्थीनि यजन्ते—इत्युक्तम्, अतो वचनप्रामाण्यादेतत् कर्म याजमानस्वरूपं भवति,

यावति वचनं, तावत्येव तद् भवितुमर्हति, न तत्, सर्वं याजमानं शक्नोति लम्बयितुं, तस्माज्जीवतामेव यज्ञ इति ॥ (१०।२।१७अ०)॥

---

षट्त्रिंशद्वर्षे षष्ठ्यां जपाद्यननुष्ठानाधिकरणम्। औदुम्बरीगानप्रकृतसर्वा-नुष्ठानाधिकरणञ्च। (कृत्वा—चिन्ता)।

## सू० यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं सेष्टि तदर्थत्वात् ॥ ४९ ॥

भा० इह जपसंस्कारमिष्टिश्च चिन्त्यते। तत्र सूत्रेतरार्द्धेन जपसंस्कारं चिन्त्यते, शेषेणापीष्टिः। जपाः 'यत्र* जपति' इति चोदनाः, संस्काराः 'केशश्मश्रु वपति' इत्येवमादयः। किमस्यां जपसंस्कारं कर्त्तव्यं, न? इति संशयः। 'ननु नैवास्यां यज्ञो जीवतामयनावित्युक्तं'। अथोच्यते, कृत्वा—चिन्त्यैषा। अस्यामिति कृत्वा—चिन्त्यते, अनेन प्रकारेण पूर्वाधिकरणस्य प्रयोजनं विचार्यते,—यदि अस्यां यज्ञः स्यात्,—किं जपसंस्कारं क्रियते, न? इति। किन्तावत् प्राप्तं?,—"विधेः प्रकरणान्तरेऽतिदेशात् सर्व्वकर्म स्यात्" (१०।१।१सू०) इत्यनेन न्यायेन कर्त्तव्यमिति।

एवं प्राप्ते ब्रूमः,—यदि तु वचनात्तेषां अस्यां यज्ञः स्यात्, तेषां जपसंस्कारं लुप्तार्थं निवर्त्तेत, न तैः शक्यं जपितुं, नापि केशश्मश्रु वप्तुं, अशक्यञ्च चोदको न प्रापयति। अत्र सूत्रोत्तरार्द्धं,—"सेष्टि तदर्थत्वात्" इति। दीक्षणीया इष्टिः कर्त्तव्या न? इति विचारः। किं प्राप्तं?—चोदकानुग्रहाय कर्त्तव्या।

---

* यत्र यत्र इति क० सं० २य पु०।

एवं प्राप्ते ब्रूमः,—यद्देष्या अपसंस्कारं न कर्त्तव्यम्, इष्टिर्लुप्येत इति। कुतः?। तदर्था हि सा, यजमानो दीक्षां प्राप्नोतीति, दीक्षा च व्रतानि, नियमाश्च मानसं कर्म, न चैषां मनोऽस्ति, दीक्षाग्रहणार्था चेष्टिः संयोगात् ज्ञायते,—'आग्नावैष्णवमेकादश-कपालं निर्वपेद्दीक्षिष्यमाणः' इति तस्मादिष्टिरपि निवर्त्तेत इति।

क्रत्वर्थं तु क्रियेत गुणभूतत्वात्॥ (१०।२।१८अ०) ॥

अस्मिन्यज्ञे एवेदं समाम्नायते,—'यजमानेन सम्मितौदुम्बरी भवति', तथा 'स्रुक्कं यजमानोऽन्वारभते' इति। अस्थ्नां यागे प्रति किमेवंजातीयकं कर्त्तव्यं, न? इति। किं प्राप्तम्?,—अचेतनानामस्थ्नां सर्वक्रियासु ज्ञातव्यं नास्ति, तस्मात् औदुम्बरी-सम्माने स्रुक्कान्वारम्भणे च तान्यपि कर्तॄणि भवेयुः इति।

एवं प्राप्ते ब्रूमः, क्रत्वर्थन्तु क्रियेत, गुणभूतत्वात्, यत् क्रत्वर्थम् एवंजातीयकं, तत् क्रियेत, गुणभूतत्वात्, गुणभूतः तत्र यजमानः, यजमानपरिमाणसम्मिततया औदुम्बर्यां प्रयोजनं, यजमानान्वारम्भेण च स्रुक्केण अचेतनेनैव स परिमीयते, स्रुक्कश्च अन्वारभ्यते; तस्मादेवंजातीयकं कर्त्तव्यम् इति॥ (१०।२।१९अ०) ॥

---

अस्थियज्ञे अस्थ्नां काम्यकर्मादिननुष्ठानाधिकरणम्। (ऋता—त्रिंशा)।

सू० काम्यानि तु न विद्यन्ते कामाज्ञानात् यथेतर-स्यानुच्यमानानि॥ ५० ॥

भा० अस्ति ज्योतिष्टोमस्तत्र श्रूयते,—'यदि कामयेत वर्षेत् पर्जन्यः इति, नीचैः सदो मिनुयात्' इत्येवमादि। तदिह

चोदकेन प्राप्तं काम्यं कर्त्तव्यं, न ? इति सन्दिह्यते। चोदकानुग्रहाय कर्त्तव्यम् इति।

'अन्यस्त्रीणि न किञ्चित् कामयन्ते यजमानकामनिमित्तका-श्चैवंजातीयाः पदार्थाः'। अत्रोच्यते,—नात्र यजमानेन कामयमानेन प्रयोजनम्, एषोऽस्यार्थो,—नीचैः सदसि मीयमाने वृष्टिर्भवति इति, तद्यदि वृष्ट्या प्रयोजनं, नीचैः सदो मातव्यं, वृष्टिः प्रयोजनवती भविष्यतीति।

एवं प्राप्ते ब्रूमः;—काम्यान्येवंजातीयकानि न कर्त्तव्यानि। कुतः ?। यदि यजमानो वृष्टिं कामयेत नीचैः सदसि मीयमाने वृष्टिर्भवति। यजमानफलदं हि उपपदविशेषात् साङ्गं कर्म, नान्येषां कामयितॄणां दातुमर्हति इति। न च वृष्टिर्यजमानस्य फलमिति विज्ञायते, यद्येतरस्य जीवतो यजमानस्य विद्यमानोऽपि कामोऽनुच्यमानो न भवति, किमङ्ग पुनरस्थ्नां, येषां काम एव नास्ति, तस्मात् काम्यानि न कर्त्तव्यानि इति ॥ (१०।२।२०अ०)॥

---

अस्थियज्ञे अस्थ्नां सूक्तवाकगताशासनाननुष्ठानाधिकरणम्।

सू० इहार्थाश्चाभावात् सूक्तवाकवत् ॥ ५१ ॥ (नि०)॥

भा० सन्ति अस्थियज्ञे दर्शपूर्णमासप्रकृतिकानि चोदकप्राप्तानि प्रायणीयादीनि। तेषु चोदकप्राप्तः सूक्तवाकः, तत्रेमानि,*—'अयं यजमान आयुराशास्ते सुप्रजास्त्वमाशास्ते विश्वं प्रियमाशास्ते यदनेन हविषाऽऽशास्ते तदश्यात् तदृध्यात् तदस्मै देवा रासन्ताम्' इति।

---

* वाक्यानि श्रूयन्ते इत्यधिकः पाठः क० सं० २य पु०।

किम् इमानि कर्त्तव्यानि, न कर्त्तव्यानि ? इत्येषोऽर्थः सन्दिह्यते । किं तावत् प्राप्तम् ?,—ईहार्था ये कामाः सूक्तवाके श्रूयन्ते, तेऽपि न स्युः । किं कारणं ? । 'अभावात्' कामयितुः, न हि अचेतनानि कामयन्ते, इत्येतदुक्तं, तस्मात् न कर्त्तव्यानि । सूक्तवाके इति सूचयितव्ये सूक्तवाकवदिति सूचितम् ।

कथमेवं वर्ण्यते ? इति । उच्यते,—'ईहार्थाः' सूक्तवाकार्थाः, अर्हे वतिर्द्रष्टव्यः । यथा छन्दोव्यतिक्रमाधूढे अध्यधमानपरिधि-कपालं (?), मन्त्राणां यथोत्पत्तिवचनमूहवत् स्यात् इति । तस्मात् सूत्रोपालम्भः ॥

सू० स्युर्वा अर्थवादत्वात् ॥ ५२ ॥ (पू०) ॥

भा० न चैतदस्ति,—यदुक्तं भवता अस्थामीहार्थाः कामा न कर्त्तव्या इति । 'स्युर्वा अर्थवादत्वात्',—स्युर्वा एते कामाः । कस्मात् ? । 'अर्थवादत्वात्', अर्थवादा एते 'आयुराशास्ते सुप्रजास्त्व-माशास्ते' इति, नैते विधयोऽर्थवादा एते, अर्थवादत्वाच्च तेषां क्रियां चोदकः प्रापयति*, एवं चोदकानुग्रहो भवति, तस्मात् पश्यामः,—ईहार्थाः कामाः कर्त्तव्या इति ।

सू० नेच्छाभिधानात् तदभावादितरस्मिन् ॥
॥ ५३ ॥ (सि०) ॥

भा० न चैतदस्ति,—यदुक्तं भवता,–ईहार्थाः कामाः कर्त्तव्याः† इति । कस्मात् ? । 'इच्छाभिधानात्',—इच्छाभिधाना एते कामाः,

---

* चोदकाः प्रापयन्ति इति चादर्शपु० ।

† न कर्त्तव्या इति अधिकः पाठः क० सं० २य पु० ।

—'आयुराशासे दिव्यं धामाशासे सुप्रजास्त्वमाशासे' इतीच्छाया-मुत्पत्त्यर्थायां प्रयुज्यन्तें, य एतान् कामान् इच्छेत्, स चेह यजमानो नास्ति, अचेतनावन्ति एतानि अस्थीनि, अस्थ्नामिच्छा न विद्यते, 'तदभावाद्' (अस्थ्नामिच्छाया अभावात्)। 'इतरस्मिन्' (जीवति) एते कामा भविष्यन्ति, नास्थिषु, तस्मात् यजमानोऽस्थ्नामीशार्थाः कामा न कर्त्तव्या इति।

'ननु एतेऽर्थवादा इत्युक्ताः'। अत्रोच्यते,—नैते अर्थवादाः, विधय एते। एवं चेत् परिहृतमेतत्* भवति। तस्माद् यदुक्तं भवता, अस्थ्नामीशार्थाः कामाः कर्त्तव्या इति, नैतदेवं,—न कर्त्तव्याः, 'नेच्छाभिधानात् तदभावादितरस्मिन्' ॥ (१०।२।२१अ०) ॥

---

अस्थियज्ञे होतृकामाभावाधिकरणम्।

सू० स्युर्वा होतृकामाः ॥ ५४ ॥ (पू०) ॥

भा० द्वादशाहप्रभृतीनि सत्राणि उदाहरणं। तानि प्रकृत्य श्रूयते,—'ततः संवत्सरे अस्थीनि याजयेत्' इति। चोदकप्राप्तानि दीक्षाप्रभृतीनि कर्म्माणि श्रूयन्ते, सन्ति च प्रकृतौ होतृकामाः,—'यं कामयेत अपशुमान्त्स्यादिति, पराचीं तस्येडामुपह्वयेत, अपशुमानेव भवति; यं कामयते प्रमायुकः स्यादिति, तस्योच्चैस्तरां वषट् कुर्यात्, यं कामयेत पापीयान्त्स्यादिति, नीचैस्तरां तस्य याज्यया वषट्कुर्यात्; यं कामयेत वर्षीयान्त्स्यादिति, उच्चैस्तरां तस्य याज्यया वषट्कुर्यात्' इति। एवं तत्र संशयः क्रियते,—किमस्थ्नां

* 'परिहृतमेतद्' इति क० स० प्रथमपु० पाठः।

L

होढ़कामाः कर्त्तव्या अथ वा न कर्त्तव्याः? इति। 'ननु जीवतो यज्ञ इत्युक्तम्'।

अत्रोच्यते, अस्थ्नां यज्ञ इत्येवं कृत्वा—चिन्ता प्रवर्त्तते। तत्र सूत्रेणैवोपक्रमः क्रियते,—'स्युर्होढ़कामाः',—एतेऽस्थ्नां कर्त्तव्याः स्युः। कस्मात्?। चोदकः प्रापयति, एवं चोदकानुग्रहो भविष्यति। तस्मात् पञ्चामो होढ़कामाः कर्त्तव्या इति॥

सू० न तदाशीष्ट्वात्॥ ५५॥ (सि०)॥

भा० न चैतदस्ति, यदुक्तं भवता होढ़कामाः कर्त्तव्या इति, न कर्त्तव्याः। कस्मात्?। 'तदाशीष्ट्वात्',—तदाशीरेषा भवति,—यजमानाशीरेषा,—'यां वै काञ्चन यज्ञे ऋत्विज आशिषमाशासते सा सर्वा यजमानस्य' इति यजमानविषयतामाशिषो दर्शयति। स चेह यजमानो नास्ति, अचेतनानि अस्थीनि, अस्थ्नां कामयितुं सामर्थ्यं नास्ति, अर्थी समर्थश्चाधिक्रियते इत्युक्तं,—"कर्त्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्येत" इति। तस्मात् पञ्चामोऽस्थ्नां होढ़कामा न कर्त्तव्या इति। चोणा कृत्वा—चिन्ता, प्रयोजनं नोच्यते। 'न तदाशीष्ट्वात्'॥ (१०।२।२२अ०)॥

---

यजमानस्य दिष्टगतावपि सर्वस्वारस्य समापनाधिकरणम्।

सू० सर्वस्वारस्य दिष्टगतौ समापनं न विद्यते कर्मणो जीवसंयोगात्॥ ५६॥ (पू०)॥

भा० अस्ति सर्वस्वारः क्रतुः शुनःकर्णोऽग्निष्टोमः; 'मरणकामो

ष्टोतेन यजेत, यः कामयेतानामयः स्वर्गं लोकमियाम्' इति। तत्र संशयः,—किं दिष्टगते यजमाने तदन्तं कर्म उत्स्रष्टव्यम्, उत परिसमापयितव्यम्? इति। किन्तावत्प्राप्तं?—सर्वस्वारे दिष्टगतो यजमानस्य सत्यां तदन्तं कर्म उत्स्रष्टव्यं, 'कर्मणो जीवसंयोगात्',—जीवता हि प्रवर्त्यं, न अजीवता। तस्मादिदमर्थादापद्यते,—सर्वस्वारेण दिष्टगत्यन्तं यजेत इति॥

सू॰ स्याद्वोभयोः प्रत्यक्षशिष्टत्वात्॥ ५७॥ (सि॰)॥

भा॰ 'स्याद्वा' तस्य परिसमाप्तिः, उभयं हि प्रत्यक्षशिष्टं,—क्रतुः, परिसमाप्तिश्च। 'मरणकामो हि एतेन यजेत' इत्यारभ्य परिसमापयितव्यमित्याख्यातार्थः, तेन समाप्तिराख्यातेनैवोक्ता भवति। अपि चेदमाम्नायते,—'आर्भवे प्रस्तूयमाने औदुम्बरीं परितोऽहतेन वाससा परिवेष्ट्य ब्राह्मणाः परिसमापयत मे यज्ञमिति सम्प्रेष्याग्निं विशति' इति। यदि प्रैषमात्रं स्यात्, अदृष्टार्थं भवेत्। तस्मात् सम्प्रेषणद्वारलक्षणया* परिसमाप्तिरेव विधीयते। यथा, 'यदि सोममपहरेयुः विधावतेच्छतेति ब्रूयात्' इति। अथ यदुक्तं,—'जीवन् कर्त्ता भवति, न मृतः' इति। न इत्युच्यते, जीवता वचनं प्रोक्तम्,—आरब्धं परिसमापयतेति, अतः तत्कृतैवासौ परिसमाप्तिः।

अत्राह,—'यदासौ प्रयुक्तवांस्तदा तावत् परिसमाप्तिस्तेन न कृता, यदा परिसमाप्तिस्तदासौ नास्ति, कः परिसमाप्तेः कर्त्ता?'

* सम्प्राप्तिद्वारलक्षणया इति का॰ स्री॰ पु॰ पाठः। सम्प्रेषणद्वारा लक्षणया इति पाठो भवितुं युक्तः।

इति। अथोच्यते, मुक्तसंशयेनैतत् तुल्यं,*—यद्भवान् मुक्तसंशयं जीवन्तं कर्त्तारं मन्यते, तेनैत् तुल्यं,—योऽपि परिसमापयतेति प्रेष्य परिसमाप्तिकाले जीवति, तस्यापि जीवनं परिसमापनकाले ऽनुपकारकं, पूर्वप्रैषादेवास्य कर्त्तृत्वम् उपपद्यते इति, स च पूर्वप्रैषो जीवतो अजीवतश्च तुल्यः। तस्माज्जीवन्निव अयमपि कर्त्तेति। अथोच्येत,—'जीवतः सत्त्वात् कर्त्तृत्वमुपपद्यते' इति। एतदपि तुल्यमेव, जीवतोऽपि पुरुषः कर्त्ता न शरीरं, स च पतितेऽपि शरीरे पुरुषोऽस्ति। तस्मात् स एव परिसमाप्तेः कर्त्तेति। अथोच्येत,—'याजमानासम्भवादशक्यं हि दिष्टगतो उत्तरं तन्त्रं कर्त्तुम्, अतस्तच्चोदको न प्रापयति' इति। न एतदेवं, याजमानवर्ज्जं प्रापयिष्यति सः, तस्माददोषः। अथ वा, प्रत्यक्ष-मेव परिसमाप्तेर्वचनं,—'ब्राह्मणाः संस्थापयत मे यज्ञम्' इति, तत्सामर्थ्यादेवां याजमानं भविष्यति॥ (१०।२।२३अ०)॥

---

यजमानस्य दिष्टगतौ सर्व्वस्वारस्य शुक्लधर्म्मादिदोषस्यानुष्ठानाधिकरणम्॥

सू० गते कर्म्मास्थियज्ञवत्॥ ५८॥

भा० अस्ति सर्व्वस्वारः क्रतुः शुनःकर्णोऽग्निष्टोमः,—'मरणकामो हि एतेन यजेत, यः कामयेत अनामयः स्वर्गं लोकमियाम्' इति। तत्र दिष्टगतौ यजमानस्य सत्यां किं कर्त्तव्यं,?‡ इति प्रश्नः,

---

* मुक्तसंशयेनैतत् तुल्यमिति का० क्री० पु० नास्ति।

† ततसामर्थ्यादेवं इति का० क्री० पु०।

‡ 'किं न कर्त्तव्यम्' इति आदर्शपुस्तकेऽधिकः पाठः।

भवति चादर्शयित्वापि द्वौ पक्षौ, प्रश्नेनोपक्रमः; पक्षद्वयेऽपि प्रतिभाति भवति संशयः, सर्वाप्रसिद्धावपि भवति। यथा को नामायं पर्वतः? का नामेयं नदी? किमिदं फलम्? इति। तदभिधीयते,—'गते कर्म्म अस्थियज्ञवत्'—दृष्टां गतिं 'गते' यजमाने 'अस्थियज्ञवत्' 'कर्म्म' भविष्यति। यथा अस्थियज्ञे क्रत्वर्थं क्रियते नान्यत् अस्थिभिः, एवं दिष्टामपि गतिं गते क्रत्वर्थं शवेन कारयितव्यं नान्यत्; यथा, 'शूलं यजमानोऽन्वारभते', 'यजमानेन सम्मिता औदुम्बरी भवति' इति॥ (१०।२।२४ अ०)॥

सर्वस्वारे यजमानस्य दिष्टगतावपि आयुराशंसनाधिकरणम्॥

सू० जीवत्यवचनमायुराशिषस्तदर्थत्वात्॥५८॥(पू०)॥

भा० सर्वस्वारे एव जीवति यजमाने भवत्येव संशयः,—'आशास्ते यजमानः' इति किमायुराशीर्वक्तव्या, उत न? इति। किं प्राप्तं?,—'जीवति अवचनम् आयुराशिषः'। कुतः?। 'तदर्थत्वात्',—यत्रायुराशास्ते यजमानस्तत्र प्रस्तरं प्रयच्छत* एवंकामो यजमान इत्यावेदयितव्यं भवति, तत् यजमानः कथं प्राप्नुयात् इति। स च अयमत्र यजमानो विपरीतकामो,—मरणकामः। तस्मादायुराशीस्तत्र न वक्तव्या॥

* प्रयच्छत इति का० क्री० पु० पाठ.।

सू० वचनं वा भागित्वात् प्राक् यथोक्तात् ॥
॥ ६० ॥ (सि०) ॥

भा० उच्यते, वक्तव्या आयुराशीः, भागी हि आयुराशीर्वादः। आर्भवे प्रस्तूयमाने यजमानस्य दिष्टा गतिः प्रार्थयितव्या भवति। 'प्राक्' आर्भवकालादायुराशास्ते यजमानः,—आर्भवकालं यावज्जीव्यासम् इति। चोदकस्यैवमनुग्रहोष्यते। तस्मादत्रापि आयुराशीर्वक्तव्या इति॥ (१०।२।२५अ०)॥

---

द्वादशाहे ऋतुयाज्यानुष्ठानाधिकरणम्॥

सू० क्रिया स्याद्धर्म्ममात्राणाम्॥ ६१॥

भा० अस्ति द्वादशाहः, 'द्वादशाहमृद्धिकामा उपेयुः' इति। अस्ति तत्र चोदकप्राप्तं धर्ममात्रं किञ्चित्,—यथा ऋतुयाज्या, वरणम्, आत्रेयहिरण्यदानञ्च*। तत्र संशयः किं धर्ममात्रं कार्यं, न? इति। किं प्राप्तं?—स्वयंकर्तृकत्वात् यज्ञस्य, वरणं दानञ्च निवर्त्तते इत्युक्तं। न च, अन्यद्वचनमस्ति,—कर्त्तव्यमिति, यावानेव श्रुतस्य उत्सर्गे दोषः, तावान् अश्रुतकल्पनायां। तस्मान्न कर्त्तव्यमिति।

एवं प्राप्ते ब्रूमः,—'क्रिया स्याद्धर्म्ममात्राणां',—यद्धि वरणं दानं वा, न भवत्यानत्यर्थं, तत् स्वयंकर्तृकेऽपि न विरोधमुपैति। तस्माच्चोदकानुग्रहाय क्रिया स्यादिति॥ (१०।२।२६अ०)॥

---

* वरणमात्रेय हिरण्यदानञ्च इति चाद्यपु० पाठः।

पवमानेष्टौ निर्वापानुष्ठानाधिकरणम् ॥

सू० गुणलोपे च मुख्यस्य ॥ ६२ ॥

भा० सन्ति अन्याधाने पवमानेष्टयः,—'यः अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत्, अग्नये पावकायाग्नये शुचये' इति। तत्र चोदकेन प्राप्तम् 'अग्निहोत्रहवण्या हवींषि निर्वपति' इति, तत्र तावदग्निहोत्रस्य कालः, तस्मादग्निहोत्रहवणी नास्ति पवमानेष्टिषु, तदभावे किं निर्वापोऽपि न कर्त्तव्यः, उत कर्त्तव्यः ? इति। किं प्राप्तं?,—यथाश्रुतोऽसौ न शक्यते कर्त्तुं, न चायथाश्रुतेन कृतेन किञ्चिदस्ति प्रयोजनं। तस्माद्विगुणत्वान्न कर्त्तव्य इति।

एवं प्राप्ते ब्रूमः,—'गुणलोपे च मुख्यस्य' क्रिया स्यात् इति। गुणोऽग्निहोत्रहवणी, प्रधानं निर्वापः, यदि निर्वापो न सम्भवेत्, ततस्तदसम्भवात् अग्निहोत्रहवण्यपि न सम्भवतीति निवर्त्तेत; न तु गुणलोपे मुख्यं न सम्भवतीति। तस्मान्निर्वापः कर्त्तव्यः, अग्निहोत्रहवणीसाधनता च तस्य न सम्भवतीति निवर्त्तते ॥ (१०।२।२७अ०) ॥

---

वाजपेये मुष्टिलोपाधिकरणम् ॥

सू० मुष्टिलोपात्तु संख्यालोपस्तद्गुणत्वात् स्यात् ॥ ॥ ६३ ॥ (पू०) ॥

भा० अस्ति वाजपेयः,—'शरदि वाजपेयेन स्वाराज्यकामो यजेत' इति। तत्र श्रूयते,—'नैवारः सप्तदशशरावः चीरे चरुर्भवति'

इति। अस्ति तु प्रकृतौ सङ्ख्या मुष्टयश्च,—'चतुरो मुष्टीन्निर्वपति' इति, उभयं चोदकेन प्राप्तं। तत्र संशयः, किं सङ्ख्यानुग्रहो मुष्टिलोपः, उत मुष्ट्यनुग्रहः सङ्ख्यालोपः? अथ वा किं सङ्ख्या-लोपः? अथ वा किं सङ्ख्याया मुष्टीनाञ्च लोपः? अथ वा अन्य-तरलोपः? इति। किं प्राप्तम्?—अन्यतरलोपः इति—यदि वा मुष्टिषु, यदि वा सङ्ख्यायां। कुतः?। नियमकारिणः शब्दस्याभावात् अनियम इति।

एवं प्राप्ते ब्रूमः,—मुष्टिलोपः स्यात्, सङ्ख्यानुग्रहश्चेति। कुतः?। मुख्यत्वात् सङ्ख्यायाः, पूर्वं हि सङ्ख्या निपतति, सा पूर्वमेव अवगम्यते, न तदवगमकाले सङ्ख्याविज्ञानस्य परिपन्थि किञ्चिद्विज्ञानमस्ति, तस्मिन्निःप्रतिद्वन्द्वे सङ्ख्याविज्ञाने प्राप्ते मुष्टिविज्ञानमापतति, तत् सङ्ख्याविज्ञानपरिपन्थितां नाचरितु-मर्हति। तस्माद् यद्यन्यत्वान्मुष्टीनां लोपः। मुख्यार्थत्वात् सङ्ख्या-नुग्रहः। तदुक्तं,—'मुख्यं वा पूर्व्वचोदनाल्लोकवत्' इति।

एवं प्राप्ते ब्रूमः,—'मुष्टिलोपेन सङ्ख्या लोपमर्हति' इति। कुतः?। 'तद्गुणत्वात्',—मुष्टिगुणो हि सङ्ख्या श्रूयते,—'चतुरो मुष्टीः' इति, चतुःसङ्ख्याविशिष्टा मुष्टयः कथं भवेयुरिति सङ्ख्या उच्चार्यते, न स्वार्थे। तस्मात् सङ्ख्या पूर्व्वनिर्दिष्टा अनिर्दिष्टेव, सा हि परविशेषणार्थमेवोच्चार्यते, तेन नैव तस्या अनुग्रहः कार्य्यः, मुष्टि-लोपे सति तदधिकरणा सङ्ख्या अधिकरणाभावान्निवर्त्तते। अन्याधिकरणायां क्रियमाणायां न प्रकृतिवत् कृता स्यात्। सङ्ख्यालोपे पुनर्मुष्टयो निर्वापाधिकरणाः श्रूयमाणा अधिकरणा-

निवृत्ता न निवर्त्तन्ते। तस्मान्मुष्टिगुणत्वात् सङ्ख्या निवर्त्तेत न मुष्टयः; तदुक्तम्,—'गुणविरोधे च तादर्थ्यात्' इति॥

सू॰ न निर्वापशेषत्वात्॥ ६४॥ (सि॰)॥

भा॰ नैतदेवं,—न सङ्ख्या मुष्टिषु श्रूयते, यदि मुष्टिषु श्रूयेत, तद्गुणत्वान्निवर्त्तेत। क तर्हि श्रूयते?। निर्वापे। कथं?। नैवमभिसम्बन्धः क्रियते,—चतुरो मुष्टीरिति, कथं तर्हि?,—चतुरो निर्वपति इति,—मुष्टिगुणः सङ्ख्यागुणश्च निर्वापो निर्दिश्यते, क्रियासम्बन्धे हि द्वितीया विभक्तिर्भवति। कथं?। कारकविभक्तिर्हि सा, कारकं क्रियाया एव भवति, न द्रव्यस्य। अतः चतुःसङ्ख्या श्रुत्या सवगता निर्वापस्य, वाक्येन मुष्टीनां, वाक्याच्च श्रुतिर्बलीयसी। तस्मान्मुख्यानुपपत्तेर्मुष्टिलोप एव इति॥

सू॰ संख्या तु चोदनां प्रति सामान्यात् तद्विकारः संयोगाच्च परं मुष्टेः॥ ६५॥ (द्वि॰ पू॰)॥

भा॰ तुशब्दः एतं पक्षं व्यावर्त्तयति। न सङ्ख्यागुणत्वे मुष्टिलोप इति, किं तर्हि?—सङ्ख्या 'सङ्ख्या' निवर्त्तते,* शरावेश्च मुष्टयः। कथं?। 'सामान्यात्', निर्वापसाधनं द्रव्यं प्रकृतौ मुष्टयः, तासां परिच्छेदिका चतुःसङ्ख्या, इह सप्तदशसङ्ख्याकः शरावद्रव्यकश्चरुर्भवतीति श्रूयते, तत्र मापनार्थं मुष्टिद्रव्यं मापनार्थैः शरावैर्निवर्त्त्यते, तत्परिच्छेदनार्था चतुःसङ्ख्या परिच्छेदार्थया सप्तदशसङ्ख्या निवर्त्त्यते; तद्यथा इदं दधि घृतं शाकमिमे शालयः,

* निवर्त्त्यते इति पाठो भवितुं युक्तः।

देवदत्तो भोजयितव्यः, देवदत्तवद् यज्ञदत्तस्तैलेनेति भोजने यत् घृतेन शक्यते कर्त्तुं, तत् तैलेन क्रियते। तस्माद् यद्यपि न श्रूयते तैलेन भोजयितव्यम् इति, तथापि समानकार्यत्वात् तैलं घृतस्य विनिवर्त्तकं भवति ; एवं सङ्ख्यापरिच्छेदं कुर्व्वती परिच्छेदिकाया एव सङ्ख्याया निवर्त्तिका भवितुमर्हति। 'परं' 'च' शरावद्रव्यं 'मुष्टेः' निवर्त्तकं 'संयोगात्'। तस्मात् प्राकृती सङ्ख्या प्राकृतं च द्रव्यं निवर्त्तते॥

सू० न चोदनाभिसम्बन्धात् प्रकृतौ संस्कारयोगात्॥ ६६॥ (सि०)॥

भा० न एतदेवं। चोदनेति यागं ब्रूमः। यागसम्बद्धा हि सप्तदशसङ्ख्या शरावद्रव्यञ्च, प्रकृतौ निर्वापसंस्कारसम्बद्धा चतुःसङ्ख्या मुष्टिद्रव्यञ्च, न चान्यत्र क्रियमाणं समानकार्यमपि अन्यत्र निवर्त्तकं भवति, यस्य हि प्रत्यक्षश्रुतेन चोदकप्राप्तस्य कार्यमभिनिर्वर्त्त्यते, तेन च यागे क्रियमाणे निर्वापकार्यं निवर्त्त्यते। तस्मान्निर्वापप्राप्तं किञ्चिदपि अनेन न निवर्त्त्यत इति; विरोधात्तु चतुर्भिर्मुष्टिभिर्निरूप्यमाणं द्रव्यं न सप्तदशशरावं भवति, तस्माद्विरोधात् अन्यतरं निवर्त्त्यते द्रव्यं सङ्ख्या वा, तत्र चतुःसङ्ख्यानुग्रहान्मुष्टिलोपो न्याय्यतर इति॥ (१०।२।१८अ० ॥

---

'धेनुमालभेतेत्यादिश्रुतौ धेन्वादिशब्दानां गोत्वाभिधानाधिकरणम्॥

सू० औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्य्यत्वात्॥ ॥ ६७॥

भा० क्वचित् श्रूयते, 'द्यावापृथिव्यां धेनुमालभेत ; मारुतं वत्समैन्द्रं ऋषभम्' इति। तत्र संशयः,—किमजा धेनुवत्सर्षभाः, उत गावः? इति। किं प्राप्तं?,—चोदकानुग्रहाय अजा इति, गुणनिमित्तास्ते शब्दाः, स गुणश्चोदकेन प्राप्ते द्रव्ये आवेशयितव्यः। 'ननु गवि गुणमाहुस्ते शब्दाः'। सत्यं गवि आहुः, न तु गोरत्र प्रत्यक्षेण वचनेन, चोदकेन वा ; स एष गुणवचनो यद्यपि श्रुत्या गोऽधिष्ठानं गुणं वदति, वाक्येनालम्भद्रव्यम् आस्कन्दति, तथापि गोद्रव्यस्याभावात् आलभतिवाक्यमेव गृह्यते न श्रुतिः। अपि च धानवयोवचना एते शब्दाः, गुणास्त्वामूर्त्तत्वात् न क्रियया सम्बध्यन्ते, द्रव्येणैषां सम्बन्धो भवति, चोदकप्राप्तञ्च द्रव्यं ; तेनैषां सामानाधिकरण्यं ; यथा 'अवी द्वे धेनू ददाति, तस्य पुरुषी धेनुर्दक्षिणा'। तथा 'अजर्षभस्य अजिनमवस्तृणाति' इति धानवयोवचनः शब्दस्तदेकवाक्यगतेनैव द्रव्येण सम्बध्यते। एवमिहापि चोदकप्राप्तेन द्रव्येण सम्भंत्स्यत इति। तस्मादजा धेनुवत्सर्षभा इति।

एवं प्राप्ते ब्रूमः,—'औत्पत्तिके' एतस्मिन् (उत्पत्त्यैव जातिविशिष्टे गुणशब्दे) 'द्रव्यतो विकारः स्यात्',—द्रव्यमपि विकुर्यात् न गुणमात्रं, यदेतज्जातिविशिष्टं धानं वयस्य, न तद् अजपशुषु शक्यं कर्त्तुं, गोपशुष्वेव तद् भवति। 'नन्वत्र यदपि स्यात् शक्यमावेशयितुं, तद् आवेशयिष्यते, यत्र शक्यं, तत् प्रमादिष्यते, यथा अजा धेनुवत्सर्षभाः' इति। उच्यते, विस्पष्टमत्र अजशब्देन धेन्वादीनामेकवाक्यभावः, इह चोदकेन अजद्रव्यं, चोदकस्य विरोधे सति न अजद्रव्यं प्रापयति। न च धेन्वादीनां द्रव्येण

सम्बन्धः, कारकविभक्तिरेषा आलम्भेन सम्बन्धं करोति। गवि या च श्रुतिः, द्रव्यसम्बन्धो वाक्येन स्यात्, तच्च दुर्बलं श्रुतेः। तस्मिंश्च जातिविशिष्टे गुणे आलम्भसंयुक्ते सति न शक्यम् अश्वादिद्रव्येण भवितुं। न च चोदकापेक्षया प्रत्यक्षा जातिरुत्स्रष्टुं शक्यते। तस्माद् गावो धेन्वादयो भविष्यन्तीति॥ (१०।२।२९ अ०)॥

---

वायव्यं श्वेतमालभेतेत्यत्रैव अजस्यैवालम्भनाधिकरणम्॥

सू० नैमित्तिके तु कार्य्यत्वात् प्रकृतेः स्यात् तदापत्तेः॥ ६८॥

भा० इदमामनन्ति, 'वायव्यं श्वेतमालभेत भूतिकामः' इति। अत्र संशयः,—किमिहापि नाजः पशुः कर्त्तव्यः, उत अजः पशुः? इति। उच्यते,—औत्पत्तिकोऽयं* श्वेतगुणसम्बन्धे श्वेतशब्दः, अतो यः कश्चित् श्वेतगुणसम्बद्धः, स आलभ्यः, न हि श्वेतशब्दः प्रत्यक्षः सन् कुतश्चित् श्वेतद्रव्यात् चोदकेन† निवर्त्तयितव्यः। तस्माद् अजो गौरन्यो वा श्वेत आलब्धव्य इति।

एवं प्राप्ते ब्रूमः,—'नैमित्तिके' एतस्मिन् (श्वेतगुणनिमित्तके) द्रव्ये श्वेतशब्दे सति गुणमात्रं विज्ञायते, न त्वत्र जातिविशिष्टं द्रव्यं प्रतीयते, यदत्र आलम्भसाधनभूतं तदेव परिच्छेत्तव्यं,—इत्येतद्वाक्यादवगम्यते। यच्चात्र चोदकप्राप्तं द्रव्यं साधनमविद्यमानं श्रुत्या प्राप्नोति, तदयं श्वेतशब्दः परिच्छेत्स्यति। 'ननु अजादन्यान्यपि द्रव्याणि परिच्छेत्तुमयं शक्नोति'। न ब्रूमो न शक्नोति, न तेन

---

* औत्पत्तिकोऽयं इति क्वचित् पाठः समीचीन इव प्रतिभाति।
† आनुमानिकेन इति आदर्शपुस्तके अधिकः पाठः।

परिच्छिन्नेन प्रयोजनमस्ति। तस्मात् प्रत्यचोऽपि श्वेतशब्दः छागमेव परिच्छिन्द्यात् गाव्यं पशुमिति॥ (१०।२।३०अ०)॥

---

वाचस्पत्ये चित्रायाञ्च खलेवाल्यादिषु यथाप्राप्तं खादिरत्वश्रैहत्वानियमाधिकरणम्॥

सू० विप्रतिषेधे तद्वचनात् प्राकृतगुणलोपः स्यात् तेन च कर्मसंयोगात्॥ ६८॥

भा० वाजपेये श्रूयते,—'खलेवाली यूपो भवति' इति। तत्र सन्देहः,—किं खादिरचोदकेन प्राप्येत, स खलेवाली कर्त्तव्यः, अथ न प्राप्यते, खादिरी अखादिरी वा खलेवाली स्यात्? इति। तथा चित्रायां श्रूयते,—'दधि मधु घृतमापो धानाः तण्डुलास्तत्संसृष्टं प्राजापत्यं भवति' इति। तत्रापि सन्देहः,—'किं व्रीहयश्चोदकेन प्राप्यन्ते, व्रैहास्तण्डुलाः कर्त्तव्याः, उत न प्राप्यन्ते, व्रैहा अव्रैहा वा तण्डुला उपादातव्याः? इति।

किं तावत् प्राप्तं?—खादिरादिः खलेवाली कर्त्तव्या, व्रैहास्तण्डुलाः कर्त्तव्याः, चोदकेन खादिरादयो व्रीहयश्च प्राप्नुवन्ति। एवं चोदकानुग्रहो भविष्यति, तेषां प्राप्तानां खलेवालीत्वं विधीयते,—यो यूपः स खलेवाली कर्त्तव्य इति। शक्यते हि यूपः खलेवाली कर्त्तुं, न खलेवाली केनचित्प्रकारेण यूपो भवति, खादिरादीनां हि काष्ठानां संस्कारैर्यूपः क्रियते छेदनादिभिः, न तन्येषां। तत्र 'यूपो भवति' इति यूपकार्ये भवतीत्युक्तं स्यात्, तथा लक्षणाशब्दो भवेत्, व्रीहीणामपि तण्डुलाश्चोदकेन प्राप्ता एव, व्रैहा तद्भूतानां पिष्टभावं प्रत्याख्याय

देवतासम्बन्धः क्रियते। तस्मात् खादिरादयः खलेवालीत्वमापादयितव्याः, मीहयश्च तण्डुलभावमापादयितव्या इति।

एवं प्राप्ते ब्रूमः,—'विप्रतिषेधे' एतस्मिन् प्राकृतस्य गुणस्य लोपः स्यात्। कथं विप्रतिषेधः?। 'तद्वचनात्', खलेवाल्या यूपता विधीयते, न यूपस्य खलेवालीता, तथा अव्यवहितेन भवतिना सम्बन्धात् प्रत्यक्षं वाक्यम्, इतरथा व्यवहितेन परोक्षं स्यात्। खलेवालीशब्दस्य यः खले वारणे प्रवर्त्तते तस्य वाचकः, तथाभूतस्य यूपकार्ये विनियुज्यते,—या खलेवाली स यूप इति, शक्यते च यूपकार्ये विनियोक्तुं। यत्तु,—यूपशब्दः कार्यलक्षणार्थ इति, व्यवधानाल्लक्षणापि ज्यायसी, प्रत्यक्षं हि लक्षणायां, परोक्षं व्यवधाने वाक्यं; तस्माद् यज्जातीयस्य वृक्षस्य खलेवाली कृता, तज्जातीयस्य यूपकार्ये विनियोक्तव्या, नैनां चोदको विशेषे अवस्थापयितुं शक्नोति, प्रत्यक्षा हि श्रुतिः, तया चोदकेन वाधिता स्यात्। तस्मान्न खादिरादिनियम इति ॥ (१०।२।२१अ०) ॥

खलेवाल्यां तक्षणाद्यननुष्ठानाधिकरणम् ॥

सू० परेषां प्रतिषेधः स्यात् ॥ ७० ॥ (सि०) ॥

भा० खलेवाल्यामेव संशयः,—किं तक्षणं औपरमुच्छ्रयणमित्येवमादयः पदार्थाः कर्त्तव्याः, न? इति। किं प्राप्तं?—चोदकानुग्रहाय कर्त्तव्या इति।

एवं प्राप्ते ब्रूमः,—'परेषां प्रतिषेधः स्यात्' इति। तथाभूतस्य हि यूपकार्ये विनियोगे कृते कृतः शास्त्रार्थो भवति, कृते शास्त्रार्थे न अपरस्मै गुणाय यतितव्यं। अपि च तक्षणादीनि

यूपकारणानि, न चात्र यूपे योजनम्, अयूपो हि यूपकार्य्ये विनियोजयितव्यः। तस्मात् तक्षणादयो न कर्त्तव्या इति॥

सू० प्रतिषेधाच्च ॥ ७१ ॥ (हे०)॥

भा० इतश्च न कर्त्तव्याः,—विप्रतिषेधः कृतो भवेत्, क्रियमाणेषु तक्षाः खलेवाल्याः, यत् काष्ठं खलेवारणप्रवृत्तं, सा खलेवाली, तादृश्येवोपादातव्या, तक्षणे क्रियमाणे सा विनश्येत्, द्रव्यान्तरं जायेत? यत् न खले वारणे प्रवृत्तम्। जोषणं तु अष्टावसरमेव, जोषितं तद् अन्यार्थेनैव, वृक्षाणां हि जोषणं न तु विकारस्य। उच्छ्रयणं चोच्छ्रितायाः अशक्यमेव। तस्मात् तक्षणादयो न कर्त्तव्या इति॥ (१०।२।३२ अ०)॥

---

खलेवाल्यां पर्य्यूहणादिसंस्काराणामनुष्ठानाधिकरणम्॥

सू० अर्थाभावे संस्कारत्वं स्यात् ॥ ७२ ॥

भा० खलेवाल्यामेव सन्देहः,—किं मैत्रावरुणदण्डेन भूमेः समक्रिया, अद्भिरवसेचनं, बलवदवधानमञ्जनमित्येवमादयः पदार्थाः कर्त्तव्याः, उत न? इति। किं प्राप्तं?—न कर्त्तव्या इति,—'परेषां प्रतिषेधः स्यात्' इत्युक्तं। यादृशः खले वारणे वर्त्तते, तादृश एव यूपकार्य्ये विनियोक्तव्यः अयूपः, यूपार्थाश्च चोदकप्राप्ताः संस्काराः तस्मिन् निवर्त्तेरन् इति।

एवं प्राप्ते ब्रूमः,—'अर्थाभावे' (कार्य्याभावे) यदि खलेवाल्यास्तैः संस्कारैः कार्य्यं न भवति, ततो यूपत्वमेव तेषां निमित्तं स्यात्, खलेवाल्यां न भवेयुः, इह पुनर्भूमेः समक्रियया अद्भिरवसेचनेन

नखवदवधानेन च कार्यमस्ति द्राक्षौ, त्रिधिखा हि सा सखे वारखे न भवति, न च खलेवालीत्वमुपपद्यन्ति । तस्मात् कर्त्तव्याः । अञ्जनमपि अनुपघातकं चोदकप्राप्तं क्रियमाणमधिकाय गुणाय स्यान्न दोषाय। तस्मात् तदपि कर्त्तव्यमिति ॥ (१०।२।३३ अ०) ॥

---

महापितृयज्ञे धानासु अवघातानुष्ठानाधिकरणम् ॥

सू० अर्थेन च विपर्यासे तादर्थ्यात् तत्त्वमेव स्यात् ॥ ॥ ७३ ॥

भा० अस्ति महापितृयज्ञः,—'सोमाय पितृमते षट्कपालं पितृभ्यो बर्हिषद्भ्यो धानाः पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थम्' इति । धाना इत्यत्र सन्देहः,—किं धानासु हन्तिः कर्त्तव्यः, उत न ? इति । किं प्राप्तं ?—न कर्त्तव्य इति । कुतः ?। विघातात्,—क्रियमाणे हन्तौ धानात्वं विहन्येत* सक्तवो हि भवेयुस्तस्मात् न कर्त्तव्या इति ।

एवं प्राप्ते ब्रूमः,—उक्तम् अविघातकम् अधिकाय गुणाय कर्त्तव्यम् अञ्जनवत् इति । 'आह अञ्जनम् अविघातकं, हन्तिस्तु धानात्वं विहन्तीति' । अत्रोच्यते, यथा न विघातकं भवति, तथा करिष्यते, विपर्यसिष्यते तथा, न विहनिष्यते; विपर्यासे क्रममात्रं न कृतं भवति, पदार्थस्तु न निवर्त्तते, तदुक्तं,—गुणलोपे च मुख्यक्रिया भवतीति । तस्मात् पूर्वं हन्तिं कृत्वा पाकः कार्यः, तत्र हि हन्तिः पाकार्थो भविष्यति, न धानात्वं विहनिष्यते इति ॥

इति भट्टश्रीशबरस्वामिविरचिते मीमांसाभाष्ये दशमाध्यायस्य द्वितीयः पादः ॥ ०॥

---

* विघाय इति का० श्री० पु० ।

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.,

57 AND 59, LUDGATE HILL, LONDON, E. C.

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Uttra Naishadha, 12 fasci. | 7 | 8 |
| Chaitanya-chandrodaya, Nátaka, 3 fasci. | 1 | 14 |
| Srauta sútra, Asvaláyana, 11 fasci | 6 | 14 |
| ——— Látyáyana, 9 fasci | 5 | 10 |
| Sankara Vijaya, 3 fasci. | 1 | 14 |
| Vaisheshika Darsana, 5 fasci. | 3 | 2 |
| Nyáya Darsana, 3 fasci. | 1 | 14 |
| Dasa Rúpa, 3 fasci. | 1 | 14 |
| Nárada Pancharátra, 4 fasci. | 2 | 8 |
| Kaushitaki Bráhmanopanishad, 2 fasci. | 1 | 4 |
| Sánkhyasára, 1 fasci. | 0 | 10 |
| Brihat Sañhitá, 7 fasci. | 4 | 6 |
| Lalitavistara, 5 fasci. | 3 | 2 |
| Taittiríya Bráhmana, 24 fasci. | 15 | 0 |
| Taittiríya Sañhitá, 28 fasci. | 17 | 8 |
| Taittiríya Aranyaka, 11 fasci. | 6 | 14 |
| Maitri Upanishad, 3 fasci. | 1 | 14 |
| Asvaláyana Grihya Sútra, 4 fasci. | 2 | 8 |
| Mimáñsá Darsana, 12 fasci | 7 | 8 |
| Tándya Bráhmana, 19 fasci. | 11 | 14 |
| Gopatha Bráhmana, 2 fasci. | 1 | 10 |
| Atharvana Upanishads, 5 fasci. | 3 | 2 |
| Agni Purána, 9 fasci. | 5 | 10 |
| Sáma Veda Sañhitá, 24 fasci. | 15 | 0 |
| Gopála Tápaní, 1 fasci | 0 | 10 |
| Nrisiñha Tápaní, 3 fasci. | 1 | 14 |
| Chaturvarga Chintámani, 17 fasci | 10 | 10 |
| Gobhilíya Grihya Sútra, 6 fasci. | 3 | 12 |
| Piñgala Chhandah Sútra, 3 fasci | 1 | 14 |
| Taittiríya Prátisákhiya, 3 fasci. | 1 | 14 |
| Prithiráj Rásu by Chand Bardai, 2 fasci. | 1 | 4 |
| Rájatarangini, | 4 | 0 |
| Mahábhárata, vols. III. and IV., | 40 | 0 |
| Purána Sangraha, | 1 | 0 |
| Páli Grammar, 2 fasci | 1 | 4 |
| Aitareya Aranyaka of the Rig Veda, 5 fasci. | 3 | 2 |
| Chhándogya Upanishad, English, 2 fasci | 1 | 4 |
| Taittiriya, &c., Upanishads, English, 2 fasci | 1 | 4 |
| Sáñkhya Aphorisms, English, 2 fasci. | 1 | 4 |
| Sáhitya Darpana, English, 4 fasci | 2 | 8 |
| Brahma Sútra, English, | 1 | 0 |
| Kátantra, 4 fasci | 4 | 0 |
| Kámandakíya Nítisára, 4 fasci. | 2 | 8 |
| Bhámatí, 3 fasci. | 1 | 14 |
| Tabaqat i Nasiri, 8 fasci | 8 | 0 |

| | | |
|---|---|---|
| Dictionary of Arabic Technical Terms, 20 fasci. | 25 | 0 |
| Risálah-i-Shamsiyah, (Appendix to Do. Do.), | 1 | 4 |
| Fihrist Túsí, 4 fasci. | 3 | 0 |
| Nukhbat-ul-Fikr, | 0 | 10 |
| Futúh-ul-Shám, Wáqidí, 9 fasci. | 5 | 10 |
| Futúh-ul-Shám, Azadí, 4 fasci. | 2 | 8 |
| Maghází of Wáqidí, 5 fasci. | 3 | 2 |
| Suyúti's Itqán, 10 fasci. | 8 | 0 |
| Isábah, 26 fasci., with supplement, | 19 | 6 |
| Táríkh-i-Fírúz Sháhí, 7 fasci. | 4 | 8 |
| Táríkh-i-Baihaqí, complete in 9 fasci. | 5 | 10 |
| Muntakhab-ut-Tawáríkh, vols. I. II. and III., complete in 15 fasci. | 9 | 6 |
| Wís o Rámín, 5 fasci. | 2 | 2 |
| Iqbálnámah-i-Jahángírí, complete in 3 fasci. | 1 | 14 |
| 'Alamgírnámah, 13 fasci., with index, | 8 | 2 |
| Pádsháhnámah, 19 fasci., with index, | 11 | 14 |
| Muntakhab-ul-Lubáb, by Kháfi Khán, 19 fasci., with index, | 12 | 15 |
| Áín-i-Akbarí, Persian text, 4to., 18 fasci. | 22 | 9 |
| Áín-i-Akbarí, English translation by H. Blochmann, M. A., vol. I, | 12 | 4 |
| Farhang-i-Rashídí, 14 fasci., complete, | 17 | 5 |
| Nizámí's Khiradnámah-i-Iskandarí, 2 fasci. complete, | 2 | [illegible] |
| Akbarnámah, 6 fasci. | 7 | [illegible] |
| Maásir-i-'Alamgírí, by Muhammad Sáqí, complete, 6 fasci., with index, | 3 | 12 |
| Haft Ásmán, history of the Persian Masnawí, | 1 | [illegible] |
| Ṭabaqát-i-Náçirí, English translation by Raverty, 8 fasci. | 6 | 0 |
| Ṭabaqát-i-Náçirí, Persian text, 5 fasci. | 3 | 2 |

## MISCELLANEOUS.

Journal of the Asiatic Society of Bengal from vols. XII to XVII, 1843-48, vols. XIX to XXI, 1850-52, to Subscribers at Re. 1 per number and to non-subscribers at Re. 1-8 per number; vols. XXVI, XXVII, 1857-58, and vols. XXIII to XLIV, 1864-75, to Subscribers at 1-8 per number and to non-subscribers at Rs. 2 per number.

| | | |
|---|---|---|
| Asiatic Researches, vols. VII. to XII. and vols. XVII. to XX. each, | 10 | 0 |
| Do. Do. Index, | 5 | 0 |
| Catalogue of Mammalia, | 2 | 0 |
| ——— of Fossil Vertebrata, | 2 | [illegible] |
| ——— of Sanskrit Manuscripts, | 1 | [illegible] |
| ——— of Arabic and Persian Manuscripts, | 1 | 0 |
| Tibetan Dictionary, | 15 | 0 |
| ——— Grammar, | 8 | [illegible] |
| Ross' Annals of 'Omán, | 2 | [illegible] |
| Notices of Sanskrit Manuscripts, 10 fasci. | 10 | 0 |
| Blochmann's Persian Prosody, | 5 | 0 |
| Istiláhát-i-Súfiyah. Edited by Dr. A. Sprenger, 8 vo. | 1 | 0 |
| Jawámi' ul-'ilm ir-riyází, 168 pages with 17 plates, 4to. | 2 | 0 |
| Purána Sangraha. Edited by the Rev. K. M. Banerjea, No. 1, | 1 | 0 |
| Corcoran's Chinese Empire, in Urdu, Vols. I. and II., per vol. | 20 | 0 |
| Aborigines of India, by B. H. Hodgson, | 3 | 0 |
| History of the Afghans, Part 1, by Dorn, | 5 | 0 |
| Examination and Analysis of the Mackenzie Manuscripts, by the Rev. W. Taylor, | 2 | 0 |
| Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis, | 1 | [illegible] |
| 'Ináyah, a Commentary on the Hidáyah, Vols. II. IV., | 16 | 0 |
| Analysis of the Sher Chín, by Alexander Csoma de Körös, | 1 | 0 |
| Khazánat-ul-'ilm, | 4 | 0 |
| Sharáyat-ul-Islám, | 4 | 0 |
| Anís-ul-Musharrihín, | [illegible] | [illegible] |

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

OLD SERIES, No. 388.





# मीमांसादर्शनम् ।

## श्रीशबरस्वामिकृतभाष्यसहितम् ।

## उत्तरार्द्धम् ॥

---

# THE MI'MA'ṄSA' DARS'ANA,

WITH THE COMMENTARY OF

S'AVARA SVA'MIN.

EDITED BY

MAHES'ACHANDRA NYA'YARATNA.

FASCICULUS XIV.

---

CALCUTTA:

PRINTED BY C. B. LEWIS, BAPTIST MISSION PRESS.

1877.

# मीमांसा-दर्शने

१० अध्याये १ पादः ।



पश्वादौ सामिधेन्यादिप्राकृतेतिकर्त्तव्यतानुष्ठानाधिकरणम् ॥

सू० विकृतौ शब्दवत्त्वात् प्रधानस्य गुणानामधिकोत्पत्तिः सन्निधानात् ॥ १ ॥ (पू०) ॥

भा० अस्ति सोमे पशुरग्नीषोमीयः, 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्रेदं समाम्नायते,—'एकादश प्रयाजान् यजत्येकादशानुयाजान् यजति' इति । तथा 'चातुर्मास्यानि चातुर्मास्यैः स्वर्गकामो यजेत' इति । तत्राप्याम्नायते,—'नव प्रयाजान् यजति नवानुयाजान्' इति । तथा 'वायव्यं श्वेतमालभेत भूतिकामः' इति । तत्राप्याम्नायते, 'हिरण्यगर्भः समवर्त्तताग्रे इत्याघारमाघारयति'। तथा अवभृथे श्रूयते,—'अप्सु गृह्णां प्राञ्चा-घारमाघारयति' इति । तदेतेषु संशयः,—किं प्राकृतेतिकर्त्तव्यता न प्राप्यते, अप्राप्तायां कर्मान्तराण्येतानि चोद्यन्ते, अथ वा प्राप्यते, प्राप्तायां गुणविधयः? इति । किं प्राप्तं?—न प्राप्यते इति । 'विकृतौ' तस्यां तस्यां शब्दवत् प्रधानं साङ्गानि, तस्मादग्नीषोमीयादिषु गुणकर्म्मणामधिकानाम् उत्पत्तिः । यजति, आघारमाघारयतीति च कर्मान्तराण्येतानि विधीयन्ते, तथा हि श्रुतिरनुपरोता भवति, तैरेव च तानि साङ्गानि

जायन्ते, तस्मात् प्राकृती इतिकर्त्तव्यता न प्राप्यते, सन्निहिता हि सा प्रकृतौ, न प्रकृतिं सन्निहितामतिक्रमिष्यति इति ॥

सू० प्रकृतिवत् तस्य चानुपरोधः ॥ २ ॥ (यु०) ॥

एवञ्च न उपरोधो भविष्यति। क उपरोधः ?। प्रकृतिवदिति कल्पना, स चोदकशब्दो न दूरे सतीम् इमामनेकवाक्यव्यवहितां प्रकृतिमपेक्षिष्यते, तस्मात् कर्मान्तराणि चोद्यन्ते,—प्रयाजयागान् करोति, नव करोति,* आघारं करोति, 'हिरण्यगर्भः समवर्त्तताग्रे इति करोति' इति ॥

सू० चोदनाप्रभुत्वाच्च ॥ ३ ॥ (आ० नि०) ॥

भा० इदं परिचोदनोत्तरं सूत्रं,—'ननु एषां कर्म चोदयितुं सामर्थ्यं नास्ति। कथमिति । नैतस्माद्वाक्यादिदमवगम्यते,—यागं करोति इति, कथं तर्हि ?,—'यागे एकादशसङ्ख्यां करोति इति, यागे गुणवत्तां भावयतीति गुणशब्दश्रवणात्, यागसत्तायां भाव्यमानायां गुणशब्दश्रवणमनर्थकं स्यात्। तस्माद् गुणविधिस्वरूपा एते शब्दा इति'।

उच्यते,—अस्त्येतेषां चोदनाप्रभुत्वे† सामर्थ्यं, प्रभवन्त्येते कर्म चोदयितुं। कुतः ?। आख्यातशब्दा ह्येते, आख्यातशब्दाश्च कर्मणः चोदकाः समधिगताः,—"भावार्थाः कर्मशब्दाः (२।१।१सू०)" इति।

* 'नव करोति' इति का० मं० द्वितीयपुस्तके नास्ति।
† 'प्रभुत्वं' इति पाठो भवितुं युक्तः।

न एते अमुष्यं कर्म चोदयिष्यन्ति। यागः कर्तव्यः, एकादशसङ्ख्या चेत्येवं सर्वत्र। तस्मात् कर्मणश्चोदका एते शब्दाः; इतिकर्त्तव्यता न प्राप्नोति इति॥

सू॰ प्रधानं त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात् तस्य विध्युपलक्षणात् सर्वो हि पूर्ववान् विधिरविशेषात् प्रवर्त्तितः॥ ४॥ (सि॰)॥

भा॰ न ह्येतदस्ति,—इतिकर्त्तव्यता न प्राप्यते कर्मान्तराणि इति। 'प्रधानं' प्राकृतम् 'अङ्गसंयुक्तं' 'तथाभूतमपूर्वम्' अपि वैकृतं 'स्यात्'। उक्तमेतद् "विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्त्तेत, तथा हि लिङ्गदर्शनम् (७।४।१०सू॰)" इति। 'तस्य' प्राकृतस्य कर्मणो 'विधिः' वैकृतेषु कर्मसु केषुचिदुपलक्ष्यते। तस्मात् 'सर्वः' वैकृतो विधिः 'पूर्ववान्'(प्रकृतिपूर्वकः), 'अविशेषात्' 'प्रवर्त्तितः' चोदकादवगम्यते, तस्मात् इहापि प्राकृती इतिकर्त्तव्यता प्राप्यते। यदुच्यते,— 'प्रयाजादिभिर्निराकाङ्क्षत्वात् प्राकृती इतिकर्त्तता न प्राप्यते इति'। स्यादेतदेवं, यदि यागो विधीयते, यागे हि विधीयमाने एकादश, नव, हिरण्यगर्भः समवर्त्तताग्रे इत्येतानि पदान्यनर्थकानि भवेयुः, न च शक्यते वदितुमेकादशादीनि अनूद्यन्ते इति, अपूर्वाणि हि तानि अवश्यंविधातव्यानि, तानि च वाक्येन यागे; अथ यागो विधीयते, यागे च सङ्ख्या, तथा वाक्यं भिद्येत। तस्माद् इतिकर्त्तव्यतायां प्राप्तायां गुणविधय एते इति॥

जायन्ते, तस्मात् प्राकृती इतिकर्त्तव्यता न प्राप्यते, सन्निहिता हि सा प्रकृतौ, न प्रकृतिं सन्निहितामतिक्रमिष्यति इति ॥

सू० प्रकृतिवत् तस्य चानुपरोधः ॥ २ ॥ (यु०) ॥

एवञ्च न उपरोधो भविष्यति। क उपरोधः ? । प्रकृतिवदिति कल्पना, स चोदकशब्दो न दूरे सतीम् इमामनेकवाक्यव्यवहितां प्रकृतिमपेक्षिष्यते, तस्मात् कर्म्मान्तराणि चोद्यन्ते,—प्रयाजयागान् करोति, नव करोति,* आघारं करोति, 'हिरण्यगर्भः सम-वर्त्तताग्रे इति करोति' इति ॥

सू० चोदनाप्रभुत्वाच्च ॥ ३ ॥ (आ० नि०) ॥

भा० इदं परिचोदनोत्तरं सूत्रं,—'ननु एषां कर्म चोदयितुं सामर्थ्यं नास्ति। कथमिति । नैतस्माद्वाक्यादिदमवगम्यते,—यागं करोति इति, कथं तर्हि ?,—'यागे एकादशसङ्ख्यां करोति इति, यागे गुणवत्तां भावयतीति गुणशब्दश्रवणात्, यागसत्तायां भाव्यमानायां गुणशब्दश्रवणमनर्थकं स्यात्। तस्माद् गुणविधि-स्वरूपा एते शब्दा इति'।

उच्यते,—अस्त्येतेषां चोदनाप्रभुत्वे† सामर्थ्यं, प्रभवन्त्येते कर्म चोदयितुं। कुतः ? । आख्यातशब्दा ह्येते, आख्यातशब्दाश्च कर्मणः चोदकाः समधिगताः,—"भावार्थाः कर्मशब्दाः (२।१।१सू०)" इति।

---

* 'नव करोति' इति का० सं० द्वितीयपुस्तके नास्ति।

† 'प्रभुत्वं' इति पाठो भवितुं युक्तः।

त एते अमुष्यं कर्म चोदयिष्यन्ति। याम: कर्त्तव्य:, एकादश्यक्षुला चेत्येवं सर्वत्र। तस्मात् कर्मणश्चोदका एते शब्दा:; इतिकर्त्तव्यता न प्राप्नोति इति॥

सू॰ प्रधानं त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात् तस्य विध्युपलक्षणात् सर्वो हि पूर्ववान् विधि-रविशेषात् प्रवर्त्तितः॥ ४॥ (सि॰)॥

भा॰ न ह्येतदस्ति,—इतिकर्त्तव्यता न प्राप्यते कर्मान्तरापि इति। 'प्रधानं' प्राकृतम् 'अङ्गसंयुक्तं' 'तथाभूतमपूर्वम्' अपि वैकृतं 'स्यात्'। उक्तमेतद् "विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्त्तेत, तथा हि लिङ्गदर्शनम् (७।४।१०सू॰)" इति। 'तस्य' प्राकृतस्य कर्मणो 'विधि:' वैकृतेषु कर्मसु केषुचिदुपलक्ष्यते। तस्मात् 'सर्व:' वैकृतो विधि: 'पूर्ववान्' (प्रकृतिपूर्वक:), 'अविशेषात्' 'प्रवर्त्तित:' चोदकादवगम्यते, तस्मात् इहापि प्राकृती इतिकर्त्तव्यता प्राप्यते। यदुच्यते,— 'प्रयाजादिभिर्निराकाङ्क्षत्वात् प्राकृती इतिकर्त्तता न प्राप्यते इति'। स्यादेतदेवं, यदि यागो विधीयते, यागे हि विधीयमाने एकादश, नव, हिरण्यगर्भ: समवर्त्तताग्रे इत्येतानि पदान्यनर्थकानि भवेयु:, न च शक्यते वदितुमेकादशादीनि अनूद्यन्ते इति, अपूर्वाणि हि तानि अवश्यंविधातव्यानि, तानि च वाक्येन यागे; अथ यागो विधीयते, यागे च सङ्ख्या, तथा वाक्यं भिद्येत। तस्माद् इतिकर्त्तव्यतायां प्राप्तायां गुणविधय एते इति॥

सू० न चाङ्गविधिरनङ्गे स्यात् ॥ ५ ॥ (१म यु०) ॥

भा० इतस्य गुणविधय इति। न हि अनङ्गे कर्मणि अङ्गस्य विशेषविधिः स्यात्। भवति च विशेषविधिः,—'आश्ववालः प्रस्तरः' इति; न ह्यसति प्रस्तरे प्रस्तरविशेषः क्रियेत, यथा यस्य नास्ति पुत्रो, न तस्य पुत्रस्य क्रीड़नकानि क्रियन्ते। एवमिहापि प्रस्तरस्याश्ववालता न विधीयेत! तस्माद् गुणविधय इति ॥

सू० कर्मणश्चैकशब्द्यात् सन्निधाने विधेराख्यासंयोगो गुणेन तद्विकारः स्यात् शब्दस्य विधिगामित्वात् गुणस्य चोपदेश्यत्वात् ॥ ६ ॥ (२य यु०) ॥

भा० अयं त्वपरो विशेषः,—प्रधानकर्मणो गुणकर्मणश्च 'एकशब्द्यात्', प्रयोगवचनेन हि एकेन शब्देनाङ्गप्रधानानि उच्यन्ते, तस्मात् प्रधानवचने सन्निहितानि अङ्गानि, तेषु सन्निहितेषु गुणविधेर्नाम गृहीत्वा अभिसम्बन्धो भवति,—यः प्रयाजसम्बन्धो यागः, तत्र गुण इति। एवं सर्वत्र यागे 'गुणेन तद्विकारः स्यात्', सङ्ख्यया मन्त्रेण च सङ्ख्यान्तरं मन्त्रान्तरञ्च विक्रियेत; प्रयाजादिविधिगामी हि शब्दः, गुणश्चोपदेष्टव्यः, नानर्थकं पुनर्वचनं। तस्माद् इतिकर्त्तव्यता प्राप्यते, प्राप्तायां गुणविधय इति ॥

सू० अकार्य्यत्वाच्च नाम्नः ॥ ७ ॥ (३य यु०) ॥

भा० न च शक्यते वदितुं, नामनामिसम्बन्धोऽयं विधीयते इति,

धन्या हि वचनव्यक्तिः शब्दार्थसम्बन्धे विधीयमाने भवति,— एकादश याजान् करोति, ते च प्रयाजानुयाजसञ्ज्ञका भवन्ति इति, वाक्यं हि धन्यां वचनव्यक्तिं भिन्द्यात। अथ पुनरेषां प्रसिद्धनामकानाम् उच्चारणं गुणविधानार्थं, तस्मादपि इति-कर्त्तव्यता प्राप्यते, गुणविधयश्चैते इति ॥

सू॰ तुल्या च प्रभुता गुणे ॥ ८ ॥ (१म आ॰ नि॰) ॥

भा॰ इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रं। कानि तानि पदानि?। यदुक्तं,—प्रयाजानुयाजा अप्रविहिताः, न शक्यते तेषां गुणो विधातुमिति; तत् परिहर्त्तव्यम्।

अत्रोच्यते,—'तुल्या' ह्येषा 'प्रभुता' गुणान् प्रति चोदकस्य, प्राकृतान्* गुणान् इह प्रापयिष्यति। ते च प्राप्ता गुणविधानपरे वाक्ये इह सङ्कीर्त्यन्ते। यदा उत्पाद्य प्रापयिष्यति, ते गुणवचने न सम्भन्त्स्यन्ते इति। तत्रोत्पन्नानां प्राप्तिर्लघीयसी। प्राकृतान् प्राप्य कृतार्थः शब्दो नापूर्वान् उत्पादयितुं शक्नोति। 'इदम् अधुनातनवचनम् उत्पादकमिति चेत्'। न एतदेवं, गुण-सम्बन्धार्थमेव तत्, गुणवचनस्य श्रवणात्। तस्मादपि प्राप्तेषु गुणविधय इति।

अथ यदुक्तं,—आख्यातशब्दा एते कर्म्मणो विधायकाः "भावार्थाः कर्म्मशब्दास्तेभ्यः क्रिया प्रतीयेत (२।१।१सू॰)" इति। 'तुल्या'

* अत्र 'वा' इति क॰ सं॰ द्वितीयपुस्तके अधिकः पाठः।

एषां 'प्रभुता' आख्यातशब्दानां, ये हि शक्नुवन्ति गुणवचनसहिता गुणं कर्म्म च विधातुं, शक्नुवन्तितरां ते केवलं गुणं विधातुं; यो हि पाषाणान् भक्षयति, इषत्करास्तस्य मुद्गशष्कुल्य इति। तस्मादपि गुणविधय इति ॥

सू० सर्वमेवं प्रधानमिति चेत् ॥ ९ ॥ (२य आ० नि०) ॥

भा० इति चेत् पश्यसि आख्यातशब्दोऽयं गुणं विधास्यति इति, एवं सति सर्वं प्रधानम् आख्यातशब्दवाच्यत्वात् इति ॥

सू० तथाभूतेन संयोगाद्यथार्थविधयः* स्युः ॥
॥ १० ॥ (आ० नि० यु०) ॥

भा० न हि आख्यातशब्दाभिधानेन प्रधानभूतो गुणभूतो वा अर्थो भवति, यः स्वभावतो गुणभूतोऽर्थः, नासौ आख्याताभिधानेन प्रधानभूतो भवति। 'तथाभूतेन' संयोगे† सति आख्यातशब्दभूतेन यथार्थविधयो भवेयुः। यत् प्रधानं तत् प्रधानमेव, यद् गुणभूतं तद् गुणभूतमेव इति ॥

सू० विधित्वं चाविशिष्टमेवं‡ प्राकृतानां वैकृतैः कर्म्मणा योगात्तस्मात् सर्वं प्रधानार्थम् ॥
॥ ११ ॥ (४र्थ यु०) ॥

---

* योगाद्यथार्था विधयः इति क० सं० द्वितीयपुस्तकपाठः।

† गुणभूतसंयोगे इति क० सं० द्वितीयपुस्तकपाठः।

‡ एव इति क० सं० द्वितीयपुस्तकपाठः।

भा० इतश्च पश्यामो गुणविधय इति। कुतः?। 'विधित्वं चाविशिष्टं', 'प्राकृतानां वैकृतैः' अर्थवादकर्मणा योगो न विशिष्यते,— 'अग्निं स्विष्टकृतं यजति यज्ञस्य प्रतिष्ठित्यै' इति प्रकृतौ य एव, स एव विकृतावर्थवादो भवति,—'अग्निं स्विष्टकृतं यजति यज्ञमेव प्रतिष्ठापयति' इति। तथा 'चक्षुषी वा एते यज्ञस्य यदाज्यभागौ' इति प्रकृतौ, 'आज्यभागौ यजति चक्षुषी एव तान्करोति' इति विकृतौ। तस्मात् सर्वम् एवंजातीयकं प्रधानार्थं, विकृतौ गुणभूतमिति॥

सू० समत्वाच्च तदुत्पत्तेः संस्कारैरधिकारः स्यात्॥ ॥ १२॥ (पूम यु०)॥

भा० इतश्च पश्यामो न सर्वं प्रधानं, प्रधानार्थमपि किञ्चिदस्तीति; समा हि उत्पत्तिक्रमता प्रयाजानुयाजानां,—येनैव क्रमेण प्रकृतौ प्रयाजानुयाजानां संस्काराणामधिकारः, तेनैव क्रमेण विकृतौ दृश्यते। कथं?। 'प्रजापतिर्यज्ञमसृजत स आज्यं पुरस्तादसृजत पशुं मध्यतः पृषदाज्यं पश्चात् इति। तस्मादाज्येन पुरस्तात् प्रयाजा वर्त्तन्ते पशुना मध्यतः पृषदाज्येन पश्चादनुयाजा वर्त्तन्ते' इति प्रयाजानुयाजानां स्वक्रमाणां दर्शनं प्रधानार्थत्वे सति उपपद्यते, न प्रधानत्वे। तस्मान्न सर्वं प्रधानं, प्रधानार्थमपि किञ्चिदस्तीति॥ (१०।३।१अ०)॥

---

वायव्यपशौ 'हिरण्यगर्भः' इत्यादिमन्त्रस्योत्तरस्मिन्नाघारे गुणत्वाधिकरणम् ॥

सू॰ हिरण्यगर्भः पूर्वस्य मन्त्रलिङ्गात् ॥ १३ ॥ (पू॰) ॥

भा॰ अस्ति वायव्यः पशुः, 'वायव्यं श्वेतमालभेत भूतिकामः' इति। तत्र श्रूयते,—'हिरण्यगर्भः समवर्त्तताग्रे इत्याघारमाघारयति' इति। तत्रायमर्थः समधिगतः,—प्राप्ते एवाघारे गुणविधिरयम् इति। इदन्तु चिन्त्यते,—किं पूर्व्वस्मिन्नाघारे गुणविधिः, उत, उत्तरस्मिन्? इति। किं प्राप्तं?। 'हिरण्यगर्भः पूर्व्वस्य मन्त्रलिङ्गात्',—'पूर्व्वस्य' आघारस्य गुणविधिरयं। कुतः?। 'मन्त्रलिङ्गात्', एवं मन्त्रार्थो भवति,—'हिरण्यगर्भः समवर्त्तताग्रे इत्याघारमाघारयति' इत्यत्र मन्त्रे इदमस्ति वचनं,—'भूतस्य जातः पतिरेक आसीत्' इति, 'एकः' इति च प्रजापतेरभिधानम् इति; स हि प्रजोत्पत्तिसम्भवात् प्राक्, प्रजोत्पत्तेरेकसङ्ख्यायुक्त इति गम्यते, स एव मन्त्रः प्रजापतिमभिवदितुं शक्नोति; प्राजापत्यश्च पूर्व्वं आघारः, तत्रायं समर्थः कार्य्यं निर्वर्त्तयितुं, नोत्तरस्मिन्; अतः पूर्व्वस्य गुणविधिरिति॥

सू॰ प्रकृत्यनुपरोधाच्च ॥ १४ ॥ (यु॰) ॥

भा॰ प्रकृतिवदिति चोदकस्यानुपरोधो भविष्यति, उत्तरस्य आघारस्य मन्त्रानपनयात्, इतरथा अपनीयेत,—'ऊर्द्ध्वोऽध्वरः' इति मन्त्रः। तस्मादपि पूर्व्वस्य गुणविधिरिति ॥

सू० उत्तरस्य वा मन्त्रार्थित्वात् ॥ १५ ॥ (सि०) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति। न पूर्व्वस्य गुणविधिरिति, किं तर्हि?—'उत्तरस्य' गुणो विधीयते, तस्य मन्त्रेणार्थो न पूर्व्वस्य। कथं?। एवमाम्नायते,—'हिरण्यगर्भः समवर्त्तताग्रे इत्याघारमाघारयति' इति। कोऽर्थः?। आघारे एतामृचमुच्चारयति इति। सा उच्चारिता विशिष्टं श्रौतं विज्ञानमङ्गभूतं करोति, 'कस्मै देवाय हविषा विधेम' इति, एकस्मै देवाय इत्यर्थः। एकारलोपेन एतच्छब्दविज्ञानात् एतदर्थप्रत्ययो भवति,—एकस्मै देवाय हविर्दातव्यमिति। न च पूर्व्वस्मिन्नाघारे श्रौतं विज्ञानमङ्गभूतमस्ति, तच्च कल्पयितव्यं स्यात्,—श्रौतं विज्ञानमङ्गभूतं भवति इति, तच्च 'हिरण्यगर्भः समवर्त्तताग्रे' इत्येतेन कर्त्तव्यमिति, कल्पनायां न प्रमाणमस्ति। इदं हि वाक्यं मन्त्रकार्यविशेषस्य विधायकं, न मन्त्रकार्यसामान्यस्य नियामकं। सामान्यं मन्त्रकार्यं पाक्षिकम्। 'तस्मिन् पाक्षिके मन्त्रकार्ये विशेषविधानमिति चेत्'। आनर्थक्यम्, अप्राप्तपक्षपरिग्रहस्य, उपदेशस्य चार्थवत्त्वं, औहवाघारविषयत्वात्; तस्मादुत्तरस्य गुणविधिरिति।

यदुक्तं,—प्रजापतिवचनोऽयं मन्त्र इन्द्रमभिवदितुं न शक्तो भविष्यतीति, न एतदेवं, यथा हि प्रजापतिरेक इति संस्तुतः प्रजापतिशब्दत्वात्, एकोऽसौ प्राक् प्रजोत्पत्तेरिति प्रजापतिरेक आसीदित्युच्यते, एवमिन्द्रोऽपि, ऐश्वर्यवचनत्वात् इन्द्रशब्दस्य, सर्वमुत्पादयितुमयम् अजमिति संस्तूयते,—"क ईं स्तवत् कः पृणात् को

यजाते यदुग्रमिन्मघवा विश्वहावेत्। पादाविव प्रहरन्नन्यमन्यं कृणोति पूर्वमपरं शचीभिः” (ऋ० ६म० ४७सू०) इति। तथा “क उ नु ते महिमनः समस्यास्मत् पूर्व ऋषयोऽन्तमापुः। यन्मातरञ्च पितरञ्च साकमजनयथाः स्तन्वा स्वायाः” (ऋ० १०म० ५४सू०) इति। ‘क ईं स्तवत् कः पृणात् को यजाते’ इति ऐन्द्रे सूक्ते वचनादैन्द्री ऋक्। क एनं शक्नोति स्तोतुं, को वाऽस्मै ददाति को वा यजतीति सर्वत्रानवक्लृप्तिः, अयमेव सर्वमिदं करोति, यथा गच्छन् कश्चित् पूर्वपादमपरं करोति, अपरञ्च पूर्वम्, एवमयमिदं सर्वं करोति इति। अयं चेत् सर्वं करोतीति, प्राक् करणादेकः। तथा,—‘क उ नु ते महिमनः समस्य’ इति,—कोऽस्य सकलस्य महिम्नः अस्मत्पूर्वेऽप्यृषयोऽन्तं प्राप्तुं शक्नुवन्ति, यन्मातापितरावपि स्वस्मा-च्छरीराज्जनयसीति मातापितृभ्यामपि पूर्वः, किमुत अन्यस्माज्जनादिति सिद्धमेकत्वमस्येति। सोऽपि प्राक् सर्वोत्पत्तेः, एक एव। तत इन्द्राभिधायिन्येषा ऋक्, तस्मादविरोधः॥

सू० विध्यतिदेशात् तच्छ्रुतौ विकारः स्यात् गुणा-
नामुपदेश्यत्वात् ॥ १६ ॥ (१यु०) ॥

भा० गुणविधिरयमुपदिश्यते, आघारश्रुतौ, स तन्मन्त्रस्य ‘विकारः’ स्यात्, उपदेश्यो हि मन्त्रविशेषोऽत्र उत्तरस्मिन्नाघारे, तत् श्रौतं मन्त्रविशेषविज्ञानम्,—‘ऊर्ध्वोऽध्वरो दिविस्पृशमह्रुतो यज्ञो यज्ञपतेरिन्द्रावान् इन्द्रावी हि मधोर्घृतस्य स्वाहा’ इति, तदङ्गभूत-मुपकारकस्य विज्ञानस्य साधनमिति इन्द्राय हविर्हातव्यम्, इह तु

हिरण्यगर्भ इति विज्ञानं श्रौतं, श्रौतस्य प्राकृतस्य विज्ञानस्य कार्यं विधातुमर्हति सामर्थ्यात्, इदं दधि घृतं शाकम् इमे शालयः, देवदत्तो भोजयितव्यः देवदत्तवद् यज्ञदत्तस्तैलेन इति भोजने तैलमुपकारकं श्रूयमाणं, यच्च प्राकृतस्य कार्यमभिनिर्वर्त्तयितुं शक्नोति, तस्य कार्ये विनियुज्यते घृतस्य; सामान्यं हि यस्य स्नेहनसामर्थ्यं घृतेन इति। इहापि मन्त्र उच्चार्यमाणः प्राकृते श्रौतविज्ञाने विशेषमुत्पादयति, तयोरन्तरभिन्नप्रभूतं तदर्थविज्ञानस्य साधकं, न पूर्व्वस्मिन्; तस्मा-दुत्तरस्य गुणविधिरिति॥

सू० पूर्वस्मिंश्चामन्त्रत्वदर्शनात्॥ १७॥ (२ यु०)॥

भा० पूर्वस्मिंश्चाघारे अमन्त्रत्वमेव दर्शयति,—स्वाहेति करोति, मन्त्रश्च न आहेति। तस्मादुत्तरस्य गुणविधिरिति॥ (१०।२।२ अ०)॥

---

चातुर्मास्येषु सोमेष्वासादननियोजनयोः प्राकृतगुणविधित्वाधिकरणम्॥

सू० संस्कारे तु क्रियान्तरं तस्य विधायकत्वात्॥
॥ १८॥ (पू०)॥

भा० सन्ति चातुर्मास्याः सोमाः, च श्रूयते,—'उत्करे वाजिन-मासादयन्ति, परिधौ पशुं नियुञ्जन्ति'* इति। तत्रैषोऽर्थः सांशयिकः,—

---

* 'वैश्वदेवसुत्यायां पांसूनां सीदन्तीमी राशिरुत्करः। स हि तत्र वाजिनाख्यक्षीर-स्यासादनं लभते। मध्यस्तम्भीबद्धमीषषि परिधौ पशुर्नियोक्तुं लभते' इति माधवः।

किम्, एतत् आसादनान्तरं नियोजनान्तरञ्च, उत, प्राकृतयोरासादन-नियोजनयोर्गुणविधिः इतरस्येतरस्य? इति। तत्रैतत्तावत्: परीक्ष्यं,—किं धर्म्ममात्रमासादनं नियोजनञ्च, उत दृष्टकार्य्यम्? इति। यदि धर्म्ममात्रं, ततः क्रियान्तरं, अथ दृष्टकार्य्यं ततो गुणविधिरिति; तत उभयं सन्दिग्धमित्युभयं संहृत्य परीक्ष्यते,—किं धर्म्ममात्रमितरस्येतरस्य क्रियान्तरं, उत दृष्टकार्य्यं, गुणविधिः? इति।

किं प्राप्तं?। तुङ्गत्वात् तीक्ष्णाग्रत्वाच्चोत्करस्य दृष्टं कार्य्यमासादनं न शक्यं कर्त्तुं, तथोपशयत्वात् परिधेर्दृष्टकार्य्यकं नियोजनमशक्यं कर्त्तुं, तस्मात् धर्म्ममात्रं। यथा सौत्रामणीप्रकरणे 'ब्राह्मणस्य मूर्द्धनि आसादयति' इति धर्म्ममात्रमासादनम्, एवमिहापि धर्म्ममात्रं चेत् क्रियान्तरं, तथा च सति आसादनं नियोजनञ्च विधायिष्यते, तच्च श्रुत्या विहितं भविष्यति; इतरथा वाक्यं विधायकं स्यात्। अपि च अस्मत्पक्षे आसादननियोजने गुणविधिलक्षणार्थे न भविष्यतः, भवत्-पक्षे तु गुणविधिं लक्षयेयातां। तस्मात् 'क्रियान्तरम्' इतरदितरच, 'तस्य विधायकत्वात्', स्वपदगतस्य भावप्रत्ययस्य पदान्तरस्य न यथा आघारे गुणविधिः, तथा अस्मिन् संस्कारे आसादननियोजनाख्ये॥

सू॰ प्रकृत्यनुपरोधाच्च॥ १९॥ (यु॰)॥

भा॰ एवञ्च प्राकृतस्य धर्म्मस्य प्रापकश्चोदको नोपरोत्स्यते, 'वेद्यां हवींष्यासादयति', 'यूपे पशुं नियुञ्जन्ति' इति। तस्मादपि क्रियान्तरम् इति॥

सू॰ विधेस्तु तत्र भावात् सन्देहे यस्य शब्दस्तदर्थः स्यात् ॥ २० ॥ (सि॰) ॥

भा॰ तुशब्दः पक्षं व्यावर्त्तयति। नासादनान्तरं नियोजनान्तरं चेति, किन्तर्हि?—प्राकृतयोरासादननियोजनयोर्गुणविधिः, तच्च एतदर्थ्यते,—दृष्टकार्यके आसादननियोजने इति। कुतः?। कार्यस्य दृष्टत्वात्,—आसादनं समीपानयनं, तस्य होमनिर्वृत्तिर्दृष्टं प्रयोजनं, नियोजनस्यापि पश्वनपगमः, एवं चेत्, तस्माद् गुणविधिरितरस्य इतरस्य। कुतः?। 'विधेः' (आसादननियोजनविधेः) 'तत्र' दृष्टत्वात्, चोदकेन तत्र प्राप्तत्वात्। 'सन्देहे', तत्र गुणविधिः कर्मान्तरमिति, न कर्मान्तरविधानं युक्तम्, अज्ञातस्य हि ज्ञापनं विधिः, ज्ञाते च चोदकेन आसादननियोजने; तस्मात् 'यस्य' गुणस्य चोदकः 'शब्दः' तदर्थतया उच्चारणं स्यात्। तस्माद्गुणविधिरिति। अथ यदुक्तं,—'श्रुतिरेवंविधायिका, त्वत्पक्षे तु वाक्यम्' इति। उच्यते,—यद्यपि वाक्यं, तथापि अल्पीयसी अदृष्टानुमानकल्पना भविष्यतीति, यावता* केवलस्य गुणस्य विधीयमानस्य, न गुणस्य कर्मसहितस्य इति॥

सू॰ संस्कारसामर्थ्याद्गुणसंयोगाच्च ॥ २१ ॥ (आ॰नि॰) ॥

भा॰ अथ यदुक्तं,—'तीक्ष्णाग्रत्वादुल्करस्य, उपशयत्वाच्च परिधेः, दृष्टकार्ये आसादननियोजने न शक्यते कर्त्तुम्' इति। अत्रोच्यते,—

* यावती इति आदर्श पु॰ पाठः।

किम्, एतत् आसादनान्तरं नियोजनान्तरञ्च, उत, प्राकृतयोरासादन-नियोजनयोर्गुणविधिः इतरस्येतरस्य? इति। तत्रैतत्तावत्नः परीक्ष्यं,—किं धर्म्ममात्रमासादनं नियोजनञ्च, उत दृष्टकार्य्यम्? इति। यदि धर्म्ममात्रं, ततः क्रियान्तरं, अथ दृष्टकार्यं ततो गुणविधिरिति; तत्र उभयं सन्दिग्धमित्युभयं संहृत्य परीक्ष्यते,—किं धर्म्ममात्रमितरच्चेतरच्च क्रियान्तरं, उत दृष्टकार्यं, गुणविधिः? इति।

किं प्राप्तं?। तुङ्गत्वात् तीक्ष्णाग्रत्वाच्चोत्करस्य दृष्टं कार्य्यमासादनं न शक्यं कर्त्तुं, तथोपशयत्वात् परिधेर्दृष्टकार्य्यकं नियोजनमशक्यं कर्त्तुं, तस्मात् धर्म्ममात्रं। यथा सौत्रामणीप्रकरणे 'ब्राह्मणस्य मूर्द्धनि आसादयति' इति धर्म्ममात्रमासादनम्, एवमिहापि धर्म्ममात्रं चेत् क्रियान्तरं, तथा च सति आसादनं नियोजनञ्च विधायिष्यते, तच्च श्रुत्या विहितं भविष्यति; इतरथा वाक्यं विधायकं स्यात्। अपि च अस्मत्पक्षे आसादननियोजने गुणविधिलक्षणार्थे न भविष्यतः, भवत्-पक्षे तु गुणविधिं लक्षयेयातां। तस्मात् 'क्रियान्तरम्' इतरदितरच्च, 'तस्य विधायकत्वात्', स्वपदगतस्य भावप्रत्ययस्य पदोत्तरस्य न यथा आधारे गुणविधिः, तथा अस्मिन् संस्कारे आसादननियोजनाख्ये॥

## सू॰ प्रकृत्यनुपरोधाच्च॥ १९॥ (यु॰)॥

भा॰ एवञ्च प्राकृतस्य धर्म्मस्य प्रापकस्य चोदको नोपरोत्स्यते, 'वेद्यां हवींष्यासादयति', 'यूपे पशुं नियुञ्जन्ति' इति। तस्मादपि क्रियान्तरम् इति॥

सू॰ विधेस्तु तत्र भावात् सन्देहे यस्य शब्दस्तदर्थः स्यात् ॥ २० ॥ (सि॰) ॥

भा॰ तुशब्दः पक्षं व्यावर्त्तयति। नासादनान्तरं नियोजनान्तरं चेति, किन्तर्हि?—प्राकृतयोरासादननियोजनयोर्गुणविधिः, तत्र एतदर्थ्यते,—दृष्टकार्यके आसादननियोजने इति। कुतः?। कार्यस्य दृष्टत्वात्,—आसादनं समीपानयनं, तस्य होमनिर्वृत्तिर्दृष्टं प्रयोजनं, नियोजनस्यापि पश्वनपगमः, एवं चेत्, तस्माद् गुणविधिरितरस्य इतरस्य। कुतः?। 'विधेः' (आसादननियोजनविधेः) 'तत्र' दृष्टत्वात्, चोदकेन तत्र प्राप्तत्वात्। 'सन्देहे', तत्र गुणविधिः कर्मान्तरमिति, न कर्मान्तरविधानं युक्तम्, अज्ञातस्य हि ज्ञापनं विधिः, ज्ञाते च चोदकेन आसादननियोजने; तस्मात् 'यस्य' गुणस्य चोदकः 'शब्दः' तदर्थतया उच्चारणं स्यात्। तस्माद्गुणविधिरिति। अथ यदुक्तं,—'श्रुतिरेवंविधायिका, त्वत्पक्षे तु वाक्यम्' इति। उच्यते,—यद्यपि वाक्यं, तथापि अल्पीयसी अदृष्टानुमानकल्पना भविष्यतीति, यावता* केवलस्य गुणस्य विधीयमानस्य, न गुणस्य कर्मसहितस्य इति॥

सू॰ संस्कारसामर्थ्याद्गुणसंयोगाच्च ॥ २१ ॥ (आ॰नि॰)॥

भा॰ अथ यदुक्तं,—'तीक्ष्णाग्रत्वादुल्करस्य, उपशयत्वाच्च परिधेः, दृष्टकार्ये आसादननियोजने न शक्यते कर्त्तुम्' इति। अत्रोच्यते,—

* यावती इति चादर्श पु॰ पाठः।

यथा अक्येते उत्करे च परिधौ च आसादननियोजने कर्त्तुं, तथा करिष्यते,—पृथ्वग्रमुत्करं करिष्यामः, महान्तञ्च परिधिम्; अतः पृथ्वग्रतया स्वज्ञिका च गुणेन संयोगादासदननियोजनसंस्कारसामर्थ्यं भविष्यति। तस्मान्न कर्मान्तरम् इति॥

सू॰ विप्रतिषेधात् क्रियाप्रकरणे स्यात्॥२२॥ (यु॰नि॰)॥

भा॰ अथ यदुक्तं,—यथा सौत्रामणीप्रकरणे धर्म्ममात्रमासादनं, एवमिहापि इति। तत्परिहर्त्तव्यं,—अत्रोच्यते,—सौत्रामणीप्रकरणे विप्रतिषेधान्न अक्यं दृष्टकार्यकमासादनं कर्त्तुं, तस्मात् क्रियामात्रमदृष्टकार्यकं सौत्रामणीप्रकरणे स्यात्, नत्विह दृष्टकार्यकमशक्यं। तस्माद् गुणविधिः॥ (१०।२।२अ॰)॥

---

अग्निचयने प्राकृतवैकृतोभयदीक्षाहुतीनामनुष्ठानाधिकरणम्॥

सू॰ षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुति-संयोगात्॥२३॥ (पू॰)॥

भा॰ अस्ति अग्निः,—'य एवं विद्वानग्निं चिनुते' इति। तत्र दीक्षाहुतयः,—प्राकृत्यो वैकृत्यश्च,—"आकूतिमग्निं प्रयुजं स्वाहा(१) मनो मेधामग्निं प्रयुजं स्वाहा(२) चित्तं विज्ञातमग्निं प्रयुजं स्वाहा(३) वाचो विधृतिमग्निं प्रयुजं स्वाहा(४) प्रजापतये मनवे स्वाहा(५) अग्नये वैश्वानराय स्वाहा(६) विश्वे देवस्य नेतुर्मर्त्तो वृणीत सख्यं। विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा(७)" (तै॰सं॰ ४।१।९अ॰) इति प्राकृत्यः। तथा वैकृत्यः,—"आकूत्यै प्रयुजेऽग्नये स्वाहा(१)

मेधायै मनसेऽग्नये स्वाहा[२] दीक्षायै तपसेऽग्नये स्वाहा[३] सरस्वत्यै पूष्णेऽग्नये स्वाहा[४] आपो देवीर्बृहतीर्विश्वशम्भुवो द्यावापृथिवी उर्वन्तरिक्षं बृहस्पतिर्नो हविषा विधातु स्वाहा[५] विश्वे देवस्य नेतुर्मर्त्तो वृणीत सख्यं विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा[६]" (तै०सं०१।२।२अ०) इति। एताः प्रकृत्य समामनन्ति,—'षड्भिर्दीक्षयति' इति। तत्र संशयः,—किं वैकृतीनां प्रयोगः, प्राकृतीनां निवृत्तिः, अथ वा समुच्चयः प्राकृतीनां वैकृतीनाञ्च?—इति। किं प्राप्तं?—'षड्भिर्दीक्षयतीति तासां' प्राकृतीनां आहुतीनां 'मन्त्रविकारः' स्यात्,—वैकृतैर्मन्त्रैः प्राकृता निवर्त्तेरन्, 'श्रुतिसंयोगात्',—प्रत्यक्षश्रुतिसंयोगो विकृतानां, षट् वैकृता मन्त्राः, षट्सङ्ख्येन वैकृता गृह्यन्ते। तस्मात् प्राकृतानां बाधो न समुच्चय इति॥

सू० अभ्यासात्तु प्रधानस्य ॥ २४ ॥ (सि०) ॥

भा० तुशब्दः पक्षं व्यावर्त्तयति,—प्राकृतानां बाध इति, न बाधः, समुच्चयः। कुतः?। सम्भवात्,—यत्र हि प्राकृतवैकृतयोर्युगपत् न सम्भवः, तत्र वैकृतेन प्राकृतं बाध्यते, समुच्चये हि आवृत्तिः स्यात् 'प्रधानस्य' इति। यत्र पुनरावृत्तिः श्रुता कर्त्तव्यैव, तत्र नैष दोषो भवति, आवृत्तिः प्राप्नोति इति। इह चावृत्तिः श्रूयते प्रधानस्य होमस्य,—'द्वादश जुहोति' इति। अतः सम्भवात् समुच्चय इति॥

सू० आवृत्त्या मन्त्रकर्म स्यात् ॥ २५ ॥ (आ०) ॥

भा० नैतदस्ति,—समुच्चय इति, प्रत्यक्षश्रुतैर्वैकृतैश्चोदकप्राप्ताः प्राकृता

बाध्येरन्। अथ यदुक्तं,—'सम्भवे सति न बाधितव्याः' इति। अत्रोच्यते, नास्ति सम्भवः। कथं?। वैकृताः षट् मन्त्रा अग्नौ प्राकृतेषु होमेषु प्रत्यक्षेण श्रवणेन विधीयन्ते, ते चेद्धोमाः, वैकृतैर्मन्त्रैर्भवितव्यम्, अभ्यासे सति पुनस्त एव होमा भवन्ति; ते चेद्धोमाः, वैकृतैरेव मन्त्रैर्भवितव्यं। तस्मात् 'आवृत्त्या मन्त्रकर्म्म स्यात्'। अतः प्राकृता बाध्येरन्नेवेति॥

सू० अपि वा प्रतिमन्त्रत्वात् प्राकृतानामहानिः स्यादन्यायश्च कृतेऽभ्यासः॥२६॥ (आ०नि०)॥

भा० अपि वेति पक्षव्यावृत्तिः। प्रतिमन्त्रं आकृतयो भवन्ति। अभ्यासाच्च द्वादशता, प्राकृता अपि मन्त्राश्चोदकेन प्राप्ताः, वैकृता अपि श्रवणेन; सर्वाङ्गग्राही च प्रयोगवचन उभयान् सङ्गृह्णाति। समुच्चयासम्भवे च बाधविकल्पौ, न सम्भवति समुच्चये; बाधे हि चोदक-प्राप्तिरपह्नूयेत! न च होमनिर्वृत्तौ निष्कृष्टा वैकृताः श्रूयन्ते, तेन होमसंदापतितस्ततो वैकृताश्च साधका इत्यध्यवसेयं। दीक्षणे हि ते वैकृताः श्रूयन्ते,—'षड्भिर्दीक्षयति' इति। होमप्रयोगवचनस्तु प्रदानार्थान् स्वाहाकारान्तान् सामर्थ्येन सन्निहितान् गृह्णाति। उभये च प्राकृता वैकृताश्च सन्निहिताः; तस्मान्न विनिगमनायां हेतुरस्ति,—इमान् सङ्गृह्णाति इमान्न इति। न च प्रधानावृत्तिरिह दोषो भवति,—इत्युक्तमेव, तस्मात् प्राकृतानां मन्त्राणामहानं। अपि च 'अन्यायश्च कृतेऽभ्यासः',—सकृद्वैकृताः मन्त्राः पठ्यन्ते, तैर्दीक्षितः सम्पादयितव्य इति, सकृत्सम्पादिते तैर्दीक्षिते कृतेऽर्थे पुनरभ्यासो न न्याय्यः। तस्मादपि प्राकृतानामहानम् इति॥

सू० पौर्वापर्य्यञ्चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ ॥ २७ ॥ (१ यु०) ॥

भा० अपि च पूर्वापरशब्दौ भवतः,—'यद् पूर्वान् जुहोति यदुत्तरान् जुहोति' इति। न च वैकृतानां केवलानामभ्यस्यमानानां पूर्वापरता उपपद्यते, 'नैमित्तिकत्वात्', पूर्वनिमित्तो हि उत्तरशब्दः उत्तरनिमित्तश्च पूर्वशब्दः। तस्मादपि प्राकृतानामहानमिति ॥

सू० तत्पृथक्त्वञ्च दर्शयति ॥ २८ ॥ (२ यु०) ॥

भा० इतश्च पश्यामः,—न निवृत्तिः, समुच्चय इति। कुतः?। तासामाकृतीनां 'पृथक्त्वं' 'दर्शयति',—'उभयीर्जुहोति आग्निकीश्चाध्वरिकीश्च' इति। यद्युभयेषां मन्त्राणां समुच्चयस्ततस्तेषामाग्निकत्वात् आध्वरिकत्वाच्च भवत्येव निर्देशः, इतरथा सर्वा एवाग्निको भवेयुः, तत्र पृथक्त्वं नोपपद्येत! भवति च पृथक्त्वं, तस्मादनिवृत्तिः, समुच्चय इति ॥

सू० न चाविशेषाद्व्यपदेशः स्यात् ॥ २९ ॥ (३ यु०) ॥

भा० इतश्चानिवृत्तिः, समुच्चय इति। कुतः?। व्यपदेशात्, व्यपदेशो भवति,—'अध्वरस्य पूर्वमथाग्नेरुपाग्नि होतत्कर्म यदग्निकर्म' इति, पूर्वमध्वरस्य अथाग्नेरिति व्यपदेशः समुच्चयेऽवकल्पते, नासति विशेषे। तस्मात् समुच्चय इति ॥ (१०।१।४ अ०) ॥

---

बाध्येरन्। अथ यदुक्तं,—'सम्भवे सति न बाधितव्याः' इति। अत्रोच्यते, नास्ति सम्भवः। कथं?। वैकृताः षट् मन्त्रा अग्नौ प्राकृतेषु होमेषु प्रत्यक्षेण श्रवणेन विधीयन्ते, ते चेद्धोमाः, वैकृतैर्मन्त्रैर्भवितव्यम्, अभावे सति पुनस्त एव होमा भवन्ति; ते चेद्धोमाः, वैकृतैरेव मन्त्रैर्भवितव्यं। तस्मात् 'आवृत्त्या मन्त्रकर्म्म स्यात्'। अतः प्राकृता बाध्येरन्नेवेति॥

सू॰ अपि वा प्रतिमन्त्रत्वात् प्राकृतानामहानिः स्यादन्यायश्च कृतेऽभ्यासः॥२६॥ (आ॰नि॰)॥

भा॰ अपि वेति पक्षव्यावृत्तिः। प्रतिमन्त्रं आहुतयो भवन्ति। अभ्यासाच्च द्वादशता, प्राकृता अपि मन्त्राश्चोदकेन प्राप्ताः, वैकृता अपि श्रवणेन; सर्वाङ्गग्राही च प्रयोगवचन उभयान् गृह्णाति। समुच्चयासम्भवे च बाधविकल्पौ, न सम्भवति समुच्चये; बाधे हि चोदक-प्राप्तिरपहूयेत! न च होमनिर्वृत्तौ निष्कृष्टा वैकृताः श्रूयन्ते, तेन होमस्तेदापतितस्ततो वैकृताश्च साधका इत्यध्यवसेयं। दीक्षणे हि ते वैकृताः श्रूयन्ते,—'षड्भिर्दीक्षयति' इति। होमप्रयोगवचनस्तु प्रदानार्थान् स्वाहाकारान्तान् सामर्थ्येन सन्निहितान् गृह्णाति। उभये च प्राकृता वैकृताश्च सन्निहिताः; तस्मान्न विनिगमनायां हेतुरस्ति,—इमान् गृह्णाति इमान्न इति। न च प्रधानावृत्तिरिह दोषो भवति,—इत्युक्तमेव, तस्मात् प्राकृतानां मन्त्राणामहानं। अपि च 'अन्यायश्च कृतेऽभ्यासः',—सकृद्वैकृताः मन्त्राः पठ्यन्ते, तैर्दीक्षितः सम्पादयितव्य इति, सकृत्सम्पादिते तैर्दीक्षिते कृतेऽर्थे पुनरभ्यासो न न्याय्यः। तस्मादपि प्राकृतानामहानम् इति॥

सू० पौर्वापर्य्यञ्चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ ॥ २७ ॥ (१ यु०) ॥

भा० अपि च पूर्वापरशब्दौ भवतः,—'षट् पूर्वान् जुहोति षडुत्तरान् जुहोति' इति । न च वैकृतानां केवलानामभ्यस्यमानानां पूर्वापरता उपपद्यते, 'नैमित्तिकत्वात्', पूर्वनिमित्तो हि उत्तरशब्दः उत्तरनिमित्तश्च पूर्वशब्दः । तस्मादपि प्राकृतानामहानमिति ॥

सू० तत्पृथक्त्वञ्च दर्शयति ॥ २८ ॥ (२यु०) ॥

भा० इतश्च पश्यामः,—न निवृत्तिः, समुच्चय इति । कुतः ? । तासामाकृतीनां 'पृथक्त्वं' 'दर्शयति',—'उभयीर्जुहोति आग्निकीश्चाध्वरिकीश्च' इति । यद्युभयेषां मन्त्राणां समुच्चयस्ततस्तेषामाग्निकत्वात् आध्वरिकत्वाच्च भवत्येव निर्द्देशः, इतरथा सर्वा एवाग्निक्यो भवेयुः, तत्र पृथक्त्वं नोपपद्येत ! भवति च पृथक्त्वं, तस्मादनिवृत्तिः, समुच्चय इति ॥

सू० न चाविशेषाद्व्यपदेशः स्यात् ॥ २९ ॥ (३यु०) ॥

भा० इतश्चानिवृत्तिः, समुच्चय इति । कुतः ? । व्यपदेशात्, व्यपदेशो भवति,—'अध्वरस्य पूर्व्वमथाग्नेरपाग्नि होतत्कर्म यदग्निकर्म' इति, पूर्व्वमध्वरस्य अथाग्नेरिति व्यपदेशः समुच्चयेऽवकल्पते, नासति विशेषे । तस्मात् समुच्चय इति ॥ (१०।२।४अ०) ॥

---

पुनराधानेऽग्न्याधानदक्षिणानां निवृत्त्यधिकरणम् ॥

सू० आग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणा-दानमधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥ (पू०) ॥

भा० अस्ति पुनराधानं निमित्ते श्रूयते,—'भाग्यवानः श्रीकामानां पुनरादधीत योऽग्नीनाधाय भाग्यक्षानिं पुनःक्षानिं वा श्रीकेन च पुनरादधीत' इति। तत्र श्रूयते,—'पुनरुत्स्यूतं वासो दक्षिणा पुनरुत्सृष्टोऽनड्वान्' इति। तथा, आधाने दक्षिणा,—'एका देया षट् देया द्वादश देयाश्चतुर्विंशतिर्देया शतं देयं सहस्रं देयमपरिमितं देयम्' इति। तत्र संशयः,—किं पुनराधानेऽग्न्याधानदक्षिणानामनिवृत्तिः, समुच्चयः; अथाग्न्याधेयदक्षिणानां निवृत्तिः? इति। किं प्राप्तम्?,—'आग्न्याधेयस्य नैमित्तिके' पुनराधेये 'दक्षिणादानमधिकं स्यात्', प्राकृतीनामनिवृत्तिः समुच्चय इति। कुतः?। एकस्मिन् वाक्ये उभयो दृश्यन्ते,—'उभयीर्ददाति, आग्न्याधेयिकीश्च पुनराधेयिकीश्च'* इति। तस्मादनिवृत्तिः, समुच्चय इति ॥

सू० शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३१ ॥ (यु०) ॥

भा० इदं परोत्तरं सूत्रं। कथं चोदकप्राप्तस्य, प्रत्यक्षश्रुतस्य समुच्चयो भविष्यति?। अत्रोच्यते,—'शिष्टत्वात्' 'इतरासां', प्राकृतीनां वचनप्रामाण्यात् 'यथास्थानं' समुच्चयो भविष्यतीति। प्रत्यक्षं हि

---

* 'चपुनराधेयिकीश्च' इति का० श्री० पु० पाठः। एवं परत्र।

दृष्टमनुज्ञापनम्, 'आग्न्याधेयिकीर्दत्त्वा पौनराधेयिकीर्ददाति' इति । तस्मान्न बाधः प्राकृतीनां, समुच्चय इति ॥

सू॰ विकारस्त्वप्रकरणे हि काम्यानि ॥ ३२ ॥ (सि॰)॥

भा॰ तुशब्दः पक्षं व्यावर्त्तयति,—न तु समुच्चयो विकार इति । कुतः ?। काम्यं ह्येतत् पुनराधेयं श्रूयते, तद् असति प्राकृते प्रकरणे आम्नानमवकल्पते न सति, यत् तत्रोच्यते वैकृतं, तत् प्राकृतं बाधत इत्यर्थः । काम्यो वा नैमित्तिको वा अर्थो नित्यमर्थं विकृत्य विधीयते, यथा 'आमये सुहृदौदनभोजनं नियतमश्यात् च' इति नित्यं भ्यासकं भोजनस्य विकरोति । प्रत्यक्षं हि वैकृतम्, आनुमानिकञ्च प्राकृतं, तस्माद् वैकृतेन बाध्यते । अथ यदुक्तं,—'वचनप्रामाण्यात् प्राकृतो भविष्यन्ति' इति । अत्रोच्यते,—'ता उभयीर्ददाति' इति नात्र विधिविभक्तिरस्ति, वर्त्तमानापदेशोऽयं । प्रमाणान्तरप्राप्तस्यापि* अयमर्थः प्रापितः,—'उभयीर्दक्षिणा ददाति, आग्न्याधेयिकीः पौनराधेयिकीश्च',—अग्न्याधेये आग्न्याधेयिकीः, पुनराधेये पौनराधेयिकीः,† इत्येतद् भूतानुवादमात्रं । तस्मात् प्राकृतीनां निवृत्तिरिति ॥

सू॰ प्रकृते च निवृत्तेरुभयत्वं हि श्रूयते ॥ ३३ ॥ (यु॰)॥

भा॰ इतश्च प्राकृतीनां निवृत्तिः । कुतः ?। निवृत्त्यावश्यादर्शनात् 'प्रकृते' हि 'निवृत्तेः' इति गम्यते । कथं ?। 'उभयत्वं हि श्रूयते',—

* प्रमाणान्तरादपि इति का॰ ग्री॰ पु॰ पाठः ।

† अत्र 'पुनराधेयिकीः' इति पाठो भवितुं युक्तः, पूर्व्वत्र परत्र च तथाविधपाठस्य दृष्टत्वात् ।

'यद् वैकृतीर्ददाति दक्षिणा उभय्योऽपि तेन दक्षिणाः प्रत्ता भवन्ति'। 'ननु उभय्योऽपि प्रदीयन्ते, यत उभय्योऽपि प्रत्ता भवन्तीत्याह'। आन्वाधेयिकी हि अन्वाधेये, पुनराधेयिक्यः पुनराधेये। तस्मात् प्राकृतीनां निवृत्तिरिति ॥ (१०।३।५अ०)॥

---

आग्रयणे वासोवत्साभ्यामन्वाहार्य्यस्य निवृत्त्यधिकरणम् ॥

## सू० वासो वत्सश्च सामान्यात् ॥ ३४ ॥

भा० आग्रयणं भवति,—'कृताग्राय यजमानस्यापराभवाय नवानामैन्द्राग्नः पुराणानामाग्नेयः सौम्यः श्यामाकः वैश्वदेवः पयसि चरुः द्यावापृथिवीय एककपालः' इति। तत्र श्रूयते,—'वासो दक्षिणा वत्सः प्रथमजो दक्षिणा' इति। अस्ति तु प्रकृतौ अन्वाहार्य्यो दक्षिणेति, स इह चोदकेन प्राप्यते। तत्र संशयः,—किं वासो वत्समन्वाहार्यस्य निवर्त्तकम्? उत अनिवर्त्तकम्? इति। किं प्राप्तं?। चोदकानुग्रहात् विरोधाभावाच्च अनिवर्त्तकम् इति।

एवं प्राप्ते ब्रूमः,—'वासो वत्सश्च सामान्यात्'। उक्तमधस्तात्,—आधानदक्षिणानां पुनराधेये निवृत्तिरिति, तत्र्र्येनान्वादेशः क्रियते,—अन्वाहार्यस्य निवृत्तिः। कुतः?। कार्यसामान्यात्, दक्षिणाकार्ये अन्वाहार्यः प्रकृतौ, इह वासो वत्सं तस्मिन् कार्ये, दक्षिणाशब्दश्रवणात्। तस्मान्न समुच्चयः, निवृत्तिरिति। प्राप्तिर्वा उत्तरविवक्षया क्रियते इति॥ (१०।३।६अ०)॥

---

वासवत्सयोर्वासोवत्सयोरन्वाहार्यधर्मानुष्ठानाधिकरणम् ॥

सू० अर्थापत्तेस्तद्धर्मा स्यान्निमित्ताख्याभिसंयोगात् ॥ ॥ ३५ ॥

भा० तत्रैव वाससि वत्से च संशयः,—अन्वाहार्यधर्माः कर्त्तव्याः, उत न? इति। किं प्राप्तं?—न तावत् न्याय उच्यते,—कर्त्तव्या इति, तेनाकर्त्तव्या इति मन्यामहे इति।

एवं प्राप्ते ब्रूमः,—'अर्थापत्तेस्तद्धर्मा' वत्सः 'स्यात्', तद्धर्मकश्च वासः साधनविशेषनिबन्धना हि ते धर्माः, नान्वाहार्यनिबन्धनाः। तस्माद् अन्यस्मिन्नपि तत्कार्यापन्ने भवितुमर्हन्ति इति। कथं पुनर्वासो वत्सं तत्कार्यापन्नम्? इति। निमित्ततया आख्याय परिक्रयेण दक्षिणेति तयाऽभिसंयोगो भवति,—'वासो दक्षिणा वत्सः प्रथमजो दक्षिणा' इति। तस्माद्वासोवत्सावन्वाहार्यधर्मकौ स्याताम् इति॥ (१०। ३।७अ०) ॥

---

वासोवत्से वत्से पाकाभावाधिकरणम् ॥

सू० दाने पाकोऽर्थलक्षणः ॥ ३६ ॥

भा० तत्रैव 'वत्सः प्रथमजो दक्षिणा' इति। तत्रैतत् समधिगतं,—अन्वाहार्यधर्माः कर्त्तव्याः इति। तदत्र संशयः,—'किं वत्से पाकः कर्त्तव्यः, उत न? इति। किं प्राप्तं?—चोदकानुग्रहात् अकथनाच्च कर्त्तव्यः इति।

एवं प्राप्ते ब्रूमः,—वत्सस्य दाने पाको न कर्त्तव्यः, अपक्वो हि

वत्सो वत्स एव, वत्सस्य श्रूयते न मांसं, परिक्रयाय च श्रूयते, न पुरुषसंस्काराय। तस्माच्चोदकः पाकं न प्रापयति, यदि हि पाकः क्रियेत, अश्रुतः प्राणिवधः आचारविरुद्धोऽनुष्ठीयेत। तस्मात् पाको न कार्यः॥ (१०।२।८अ०)॥

---

आग्रयणे वाससि पाकाभावाधिकरणम्॥

सू० पाकस्य चान्नकारितत्वात्॥ ३७॥

भा० तत्रैव श्रूयते,—'वासो दक्षिणा' इति। तत्रायमर्थः समधिगतः,—अन्वाहार्यधर्माः कर्त्तव्या इति, अथ पाकः कर्त्तव्यः, न? इति संशयः। अर्थापत्तेः कर्त्तव्यः। इति प्राप्ते ब्रूमः,—न कर्त्तव्यः, 'अन्नकारितत्वात्' इति, अन्नकारितो हि पाकः, न च वासोऽन्नं, न तत्र पाकः शक्यते कर्त्तुं। तस्मात् तत्र पाको न कर्त्तव्य इति॥ (१०।२।९अ०)॥

---

आग्रयणे वासोवत्सयोरभिघारणाभावाधिकरणम्॥

सू० तथाभिघारणस्य॥ ३८॥

भा० आग्रयणे श्रूयते,—'वासो दक्षिणा वत्सः प्रथमजो दक्षिणा' इति। तत्रायमर्थः समधिगतः,—अन्वाहार्यधर्मा वाससि वत्से च कर्त्तव्या इति। अथायमपरः सांशयिकः,—किमभिघारणं कर्त्तव्यं, न? इति। किन्तावत् प्राप्तम्?—अर्थापत्तेः कर्त्तव्यम् इति।

एवं प्राप्ते ब्रूमः,—'तथाभिघारणस्य'। किं?। अक्रियेति, अभिघारणं

हि अन्वाहार्ये ऋत्विजे क्रियते, ऋत्विजा हि ओदनस्य परिक्रये उपकरोति, न च, तावपि वत्से च ऋत्विजा प्रयोजनं। तस्मात् तत्राभिचारणं न स्यात् इति॥ (१०।३।१०अ०)॥

---

ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम्॥

सू० द्रव्यविधिसन्निधौ सङ्ख्या तेषां गुणत्वात् स्यात्॥ ३९॥ (१म पू०)॥

भा० अस्ति ज्योतिष्टोमः,—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। तत्रैवाम्नायते,—'गौश्चाश्वश्च अश्वतरश्च गर्दभश्च अजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' इति। तत्र संशयः,— किमेकैकस्य गवादेर्द्रव्यस्य द्वादशशतम्, उत एकस्य द्रव्यस्य? यदा एकस्य, तदा किमनियमो यस्यकस्यचित्, उत, माषाणाम्? अथ वा सर्वस्यादनी इयं सङ्ख्या, उत, एकजातीयस्य?। यदा एकजातीयस्य, तदा किम् अनियमः,—यस्यकस्यचित्, उत, पशूनां?। यदा पशूनां, तदा किमनियमः,—येषांकेषाञ्चित्, उत, गवाम्? इति, एते पक्षा भविष्यन्तीति। किन्तावत् प्राप्तं?। द्रव्याणां विधीयमानानां 'सन्निधौ'। केषां द्रव्याणां?। गवादीनां, के विधीयमानानां?। दक्षिणासम्बन्धे सङ्ख्या समाम्नाता,—'तस्य द्वादशशतं दक्षिणा' इति, तेषां गवादीनां एकैकस्य सङ्ख्या स्यात्। कुतः?। गुणतः सङ्ख्या विधीयते, गवादीनि प्रधानतः। कथम्?। नैवमभिसम्बन्धः क्रियते,—द्वादशशतं स्यादिति, कथन्तर्हि 'द्वादशशतं तस्य' इति। एवं तस्य ग्रहणमर्थवद् भवति, इतरथा

तद् अनर्थकं चानुवादो वा स्यात्, एकवचनमपि प्रकृतापेक्षं तद्वचया अनूद्येत। प्रधानसन्निधौ च गुणः क्रियमाणः प्रतिप्रधानं भिद्येत, इति। अस्ति चैतया सञ्ज्ञया प्रयोजनं,—गवादीनि द्रव्याणि मत्सञ्ज्ञानि कर्त्तव्यानि। तत्र न गम्यते विशेषः,—किमेतत्सञ्ज्ञं कर्त्तव्यं, किं न? इति। यदेव द्रव्यं नैतत्सञ्ज्ञं स्यात्, तत् प्रतिश्रुति बाध्येत। तस्मादेकैकमेतया सञ्ज्ञया सम्बद्धव्यम् इति॥

सू॰ समत्वात् तु गुणानामेकस्य श्रुतिसंयोगात्॥ ॥ ४० ॥ (२य पू॰)॥

भा॰ तुशब्दः पक्षं व्यावर्त्तयति। तस्य तस्य द्वादशशतम् इति, न एतदेवमेकस्य कस्यचित् द्वादशशतं स्यात्। कुतः?। 'समत्वाद्' 'गुणानां', गवादयोऽपि हि दक्षिणासम्बद्धाः, सञ्ज्ञापि; न गवादीनां सञ्ज्ञा विधीयते, दक्षिणा तु सञ्ज्ञाविशिष्टा चोद्यते, न गवादयः। कुतः?। सञ्ज्ञाया दाक्षिण्येन अनभिसम्बन्धे सति अनियतसञ्ज्ञानां गवादीनां दक्षिणासम्बन्धेनानर्थक्यमेव सञ्ज्ञायाः स्यात्। सञ्ज्ञेय-सामानाधिकरण्याच्च तच्छब्दस्य बहुवचनं प्रसज्येत। गवादिषु तस्य द्वादशशतमिति चैकवचनं न स्यात्। तस्माद् यस्यकस्यचित् परिक्रय-साधनस्य द्रव्यस्य एतस्यां सञ्ज्ञायां कृतायामेतत्सञ्ज्ञः परिक्रयः कृतो भवति। तस्मादेकस्य सञ्ज्ञा, नैकैकस्य। एवमेकवचनश्रवणं युक्तरूपं भविष्यति।

'ननु लक्षणत्वात् तस्य शब्दस्याविवक्षितं वचनम्'। उच्यते,— अविवक्षितेऽपि वचने या सञ्ज्ञा अनूद्यते, तेन वचनेन भवितव्यं।

यथा ब्रह्मलोकाच्युत्थमाने ब्राह्मणजातीयो न हन्तव्य इति न द्विवचनान्तेन निर्देशो भवति,—ब्राह्मणौ न हन्तव्यौ इति। आह,— 'आत्याख्यायामेकस्मिन् बहुवचनं भवति, बहुषु वा एकवचनं भवति, न तु एकस्मिन् बहुषु च द्विवचनं भवति, तेन अत्र बहुवचनान्तेन निर्देशः, एकवचनान्तेन वा बहुषु निर्देशो भवति'। अत्रोच्यते,— आत्याख्यायामेतदेवं भवति, न च तच्छब्देन जातिरभिधीयते, सन्निहितव्यक्तिवचन एव भवति। तस्मादेकस्य-कस्यचित्सङ्ख्या इति॥

सू० यस्य वा सन्निधाने स्याद् वाक्यतो ह्यभिसम्बन्धः॥ ४१॥ (३य पू०)॥

भा० इदं परोत्तरं सूत्रं,—यदा एकस्य सङ्ख्यासम्बन्धः, तदा अनियमः,—यः-कश्चिद् विशेषाश्रवणात् इति।

एवं प्राप्ते ब्रूमः,—'यस्य वा सन्निधाने स्यात्',—'यस्य' शब्दस्य 'सन्निधाने' सङ्ख्याशब्दः उच्चरितः, सोऽर्थः सङ्ख्याविशिष्टः प्रतीयेत, अनन्तरमुच्चरितेन हि सहैकवाक्यता भवति। कुतः?। अनन्तरसम्बद्धं हि विशेषणं विशेषं विशेष्टुं शक्नोति, न हि व्यवहितं। व्यवहिताश्च गवादयो माषैः, वाक्यश्च प्रकरणाद् बलीयः। तस्मान्माषाः सङ्ख्या सम्बध्येरन्निति॥

सू० असंयुक्ता तु तुल्यवदितराभिर्विधीयन्ते तस्मात् सर्वाधिकारः स्यात्॥ ४२॥ (४य पू०)॥

भा० तुशब्दः पक्षं व्यावर्त्तयति। माषाः सङ्ख्यायुक्ता इति, नैतदेवं,

तद् अनर्थकं चानुवादो वा स्यात्, एकवचनमपि प्रकृता अनूद्येत। प्रधानसन्निधौ च गुणः क्रियमाणः प्रतिप्रध इति। अस्ति चैतया सङ्ख्यया प्रयोजनं,—गवादीनि तत्सङ्ख्यानि कर्त्तव्यानि। तत्र न गम्यते विशेषः,—किमेतत्स किं न? इति। यदेव द्रव्यं नैतत्सङ्ख्यं स्यात्, तत् प्रतिगुणि तस्मादेकैकमेतया सङ्ख्यया सम्बन्धव्यम् इति॥

सू० समत्वात् तु गुणानामेकस्य श्रुतिसंयो

॥ ४० ॥ (२य पू०) ॥

भा० तुशब्दः पक्षं व्यावर्त्तयति। तस्य तस्य द्वादशशतम् इ एतदेवमेकस्य कस्यचित् द्वादशशतं स्यात्। कुतः?। 'स 'गुणानां', गवादयोऽपि हि दक्षिणासम्बद्धाः, सङ्ख्यापि; न गव सङ्ख्या विधीयते, दक्षिणा तु सङ्ख्याविशिष्टा चोद्यते, न गवाद कुतः?। सङ्ख्याया दाक्षिण्येन अनभिसम्बन्धे सति अनियतसङ्ख् गवादीनां दक्षिणासम्बन्धेनानर्थक्यमेव सङ्ख्यायाः स्यात्। सङ्ख् सामानाधिकरण्याच्च तच्छब्दस्य बहुवचनं प्रसज्येत। गवादिषु द्वादशशतमिति चैकवचनं न स्यात्। तस्माद् यस्य कस्यचित् परिक साधनस्य द्रव्यस्य एतस्यां सङ्ख्यायां कृतायामेतत्सङ्ख्यः परिक्रयः कृ भवति। तस्मादेकस्य सङ्ख्या, नैकैकस्य। एवमेकवचनमवयं युक्त भविष्यति।

'ननु लक्षणत्वात् तत्र शब्दस्याविवक्षितं वचनम्'। उच्यते,— अविवक्षितेऽपि वचने या सङ्ख्या अनूद्यते, तेन वचनेन भवितव्यं।

तद् अनर्थकं चानुवादो वा स्यात्, एकवचनमपि प्रकृतापेक्षं सर्वथा अनूद्येत। प्रधानसन्निधौ च गुणः श्रियमाणः प्रतिप्रधानं भिद्येत, इति। अस्ति चैतया सङ्ख्यया प्रयोजनं,—गवादीनि द्रव्याणि तत्सङ्ख्यानि कर्त्तव्यानि। तत्र न गम्यते विशेषः,—किमेतत्सङ्ख्यं कर्त्तव्यं, किं न? इति। यदेव द्रव्यं नैतत्सङ्ख्यं स्यात्, तत् प्रतिश्रुति बाध्येत। तस्मादेकैकमेतया सङ्ख्यया सम्बद्धव्यम् इति॥

सू॰ समत्वात् तु गुणानामेकस्य श्रुतिसंयोगात्॥ ॥ ४० ॥ (२य पू॰)॥

भा॰ तुशब्दः पक्षं व्यावर्त्तयति। तस्य तस्य द्वादशशतम् इति, न एतदेवमेकस्य कस्यचित् द्वादशशतं स्यात्। कुतः?। 'समत्वाद्' 'गुणानां', गवादयोऽपि हि दक्षिणासम्बद्धाः, सङ्ख्यापि; न गवादीनां सङ्ख्या विधीयते, दक्षिणा तु सङ्ख्याविशिष्टा चोद्यते, न गवादयः। कुतः?। सङ्ख्याया दाक्षिण्येन अनभिसम्बन्धे सति अनियतसङ्ख्यानां गवादीनां दक्षिणासम्बन्धेनानर्थक्यमेव सङ्ख्यायाः स्यात्। सङ्ख्येय-सामानाधिकरण्याच्च तच्छब्दस्य बहुवचनं प्रसज्येत। गवादिषु तस्य द्वादशशतमिति चैकवचनं न स्यात्। तस्माद् यस्यकस्यचित् परिक्रय-साधनस्य द्रव्यस्य एतस्यां सङ्ख्यायां कृतायामेतत्सङ्ख्यः परिक्रयः कृतो भवति। तस्मादेकस्य सङ्ख्या, नैकैकस्य। एवमेकवचनश्रवणं कुशलरूपं भविष्यति।

'ननु लक्षणत्वात् तस्य शब्दस्याविवक्षितं वचनम्'। उच्यते,—अविवक्षितेऽपि वचने या सङ्ख्या अनूद्यते, तेन वचनेन भवितव्यं।

यथा अजपलेनाप्युच्यमाने ब्राह्मणजातीयो न हन्तव्य इति न द्विवचनान्तेन निर्देशो भवति,—ब्राह्मणौ न हन्तव्यौ इति। आह,—'जात्याख्यायामेकस्मिन् बहुवचनं भवति, बहुषु वा एकवचनं भवति, न तु एकस्मिन् बहुषु च द्विवचनं भवति, तेन अत्र बहुवचनान्तेन निर्देशः, एकवचनान्तेन वा बहुषु निर्देशो भवति'। अत्रोच्यते,—जात्याख्यायामेतदेवं भवति, न च तच्छब्देन जातिरभिधीयते, सन्निहितव्यक्तिवचन एव भवति। तस्मादेकस्य-कस्यचित्सङ्ख्या इति॥

सू० यस्य वा सन्निधाने स्याद् वाक्यतो ह्यभिसम्बन्धः॥ ४१॥ (३य पू०)॥

भा० इदं परोत्तरं सूत्रं,—यदा एकस्य सङ्ख्यासम्बन्धः, तदा अनियमः,—यः-कश्चिद् विशेषाश्रवणात् इति।

एवं प्राप्ते ब्रूमः,—'यस्य वा सन्निधाने स्यात्',—'यस्य' शब्दस्य 'सन्निधाने' सङ्ख्याशब्दः उच्चरितः, सोऽर्थः सङ्ख्याविशिष्टः प्रतीयेत, अनन्तरमुच्चरितेन हि सहैकवाक्यता भवति। कुतः?। अनन्तरसम्बद्धं हि विशेषणं विशेषं विशेष्टुं शक्नोति, न हि व्यवहितं। व्यवहिताश्च गवादयो माषैः, वाक्यञ्च प्रकरणाद् बलीयः। तस्मान्माषाः सङ्ख्यया सम्बध्येरन्निति॥

सू० असंयुक्ता तु तुल्यवदितराभिर्विधीयन्ते तस्मात् सर्वाधिकारः स्यात्॥ ४२॥ (४य पू०)॥

भा० तुशब्दः पक्षं व्यावर्त्तयति। माषाः सङ्ख्यायुक्ता इति, नैतदेवं,

सर्वव्यापिनी सङ्ख्या स्यात्,—सर्वैर्गवादिभिः सम्पाद्येत। 'असंयुक्ता' चोक्तीर्माषैः सङ्ख्या, 'तुल्यवदितराभिः' द्रव्यश्रुतिभिर्माषाः श्रूयन्ते। कथं?। तिलाश्च माषाश्चेतिचशब्देन तिलैः सहिता माषा इति गम्यते, गवादिभिः सहितानां सङ्ख्यासम्बन्धः, चशब्दश्रुतिरर्थान्तरसम्बन्धमेषा-माह; चशब्दश्रवणस्यैतत्सामर्थ्यं,—यस्मात् चशब्दः पर उच्चार्य्यते, तस्मा-र्थान्तरसम्बन्धं श्रुत्यैवाह, न वाक्येन; यदि हि वाक्येन स्यात्, पुरस्तादप्युच्चार्य्यमाणः एतमर्थं कुर्य्यात्, सङ्ख्या तु वाक्येन सम्बध्यते। यदि च पूर्वं न चार्थोऽवकल्पेत, चशब्दश्रवणमनर्थकं स्यात्, न हि अथावुत्तरकाले सम्बध्यते सङ्ख्यासम्बन्धे अभिनिर्वृत्ते,—'तस्य द्वादशशतं' चेति अन्य एवावगम्येत,—द्वादशशतमन्यच्च किञ्चिदिति, न च तदन्यत् किञ्चिदुच्चार्य्यते। तस्मात् पूर्वं चयोगः, पश्चात् सङ्ख्यासम्बन्धः, समर्थतराणि समानविभक्तीनि, दुर्बलो विविभक्तिः।

अपि च समानविभक्तीनि समर्थतराणि, तेषां हि आशुतरा आवृत्तिः, विलम्बिता विविभक्तीनां, स्वार्थे समानविभक्तीनि समर्थतराणि प्रथमान्तानि भवन्ति; परपदार्थे षष्ठ्यन्तो विशिनष्टि। तस्मात् समुचितानि वा इतरेतरयुक्तानि वा सङ्ख्येयानि सङ्ख्यया सम्बध्यन्ते; समाहारो येषां सङ्ख्यया युक्तः। तस्मात् सर्वैः सङ्ख्या सम्पादयितव्या। किमेवं भविष्यति?। सङ्ख्यासम्बन्धे न कश्चिद्वर्जितो भविष्यति, विनिगमनायां चेत्भावे यमेव सङ्ख्यासम्बन्धो वर्जयेत्, तत्रैव प्रत्ययो बाध्येत; तस्माद्गवादिराशिः सङ्ख्ययैतया सम्बध्येत इति॥

सू० असंयोगाद्विधिश्रुतावेकजाताधिकारः स्यात् श्रुत्याकोपात् क्रतोः ॥ ४३ ॥ (सि०) ॥

भा० नैतदस्ति,—सर्वस्वप्रदानीयस्य संख्या इति, 'असंयोगाद्विधिश्रुतौ' सर्वस्वप्रदाने सम्बन्धो नास्ति, न श्रूयते, गवादिराशेः संख्या भवतीति, न गवादिराशिः शब्देन निर्दिश्यते, यः सर्वनाम्ना प्रतिनिर्दिश्येत, गवादयस्तु शब्देनोक्ताः, तेन ते सर्वनाम्ना प्रतिनिर्देष्टुमर्हन्ति, न चास्य गवादीनां प्राधान्यमित्युक्तं, द्वादशशतेन हि संख्या सम्बध्यत इति संख्याविशेषणं सर्वनामशब्दः संख्यां विशेष्टुमुपादीयते। तत्रैकवचनं विवक्षितमेव, तच्चैषां नानाजातीयानां निर्दिष्टानामन्यतमदेकं प्रतिनिर्देशेन संख्याविशेषणमुपादीयते। तस्मान्नानाजातीयानां निर्दिष्टानामेकं स्यात्, स एकजातीय एव भवति; तस्माद् 'एकजाताधिकारः' इति सूचितं। किमेवं भविष्यति?। एवमेकश्रुतिर्न कोपिता भविष्यति, इतरथा, वाक्येन द्रव्यस्य भवन्ती प्रवृत्तिविशेषमकुर्वती नाप्रवृत्तिविशेषकरा प्रकरणवशेन क्रतोः कल्पिता भविष्यति, तस्य क्रतोर्द्वादशशतं दक्षिणा इति। तस्मादेकजातीयस्य द्वादशशतं दक्षिणा इति ॥

सू० शब्दार्थश्चापि लोकवत् ॥ ४४ ॥ (यु०) ॥

भा० अपि च लोकवदेतत् द्रष्टव्यं,—लोके हि निर्विशेषिते संख्याशब्दे उच्चरिते, एकजातीये प्रत्ययो भवति। कुतः?। अन्यथा व्यवहारानुपपत्तेः,—असति ह्येकस्मिन् जातिविशेषे, सर्वधान्यैः सह परार्द्धसंख्या निविष्टा, परार्द्धस्य चावान्तरसंख्याभिः संव्यवहारः क्रियते।

Q 2

येषामेकेन केनचित् सम्बन्धः, तेषां तमेकं सम्बन्धिनमपेक्ष्य सङ्ख्या निविशते; स तत्रैकः सम्बन्धी वक्तव्यः, प्रकृतो वा ग्रहीतव्यः, अर्थाद्वा य आपद्येत, स उपादेयः; इह च प्रकृता नानाजातीयास्तेषामन्यतमः सङ्ख्यया सम्बद्धः स्यात् इति। यथा, शतमाश्वं दीयताम् इति, एकजातीयानां शतं, न भिन्नजातीयानां, यथा द्रव्यं गुणः कर्माचव इत्येवमादीनाम् ॥ (१०।१११अ०)॥

'तस्य द्वादशशतं दक्षिणा' इत्यनेन पशुमवसङ्ख्याभिधानाधिकरणम्॥

सू॰ सा पशूनामुत्पत्तितो विभागात्॥४५॥ (१ सि॰)॥

भा॰ एकजातीयस्य सङ्ख्येत्येतत्समधिगतं। 'सा पशूनाम्', उत माषाणाम्? इति। अनियमे प्राप्ते उच्यते,—'पशूनाम्' इति। कुतः?। 'उत्पत्तितो विभागात्', औत्पत्तिकेन विभागेन पशवः संव्यवहारेषु सङ्ख्यायन्ते,—'पञ्चभिरश्वैः क्रीतः, पञ्चभिर्गोभिः क्रीतः' इति, न व्रीह्यादीनाम् औत्पत्तिकेन विभागेन संव्यवहारेषु सङ्ख्या सङ्गीर्यते, निगदाभिप्राया मानाभिप्राया वा भवति, न हि भवति,—पञ्चभिर्माषैः क्रीत इति, पञ्चभिर्माषाणामाढ़कैर्द्रोणैर्वा कुड़वैर्वा खारीभिर्वेति भवति, तत्र आढ़कादिभिरनुचार्य्यमाणैः साकाङ्क्षमेव वाक्यमपरिपूर्णमप्रमाणमर्थस्य कस्यचित्।

'अथ माषाणामपि औत्पत्तिकेन विभागेन कस्मादिह परिक्रयो न क्रियते?' इति। अत्रोच्यते,—मूल्यस्य सतः परिक्रये विधेय उच्यते,— द्वादशशतं दक्षिणा इति, न च द्वादशशतं व्रीह्यादिबीजानां, श्रुतिस्तेन

फलितामवकल्पते; त्रिभिः प्रकारैर्भृतिर्भवति व्यापारतः, फलतः वचनत इति। व्यापारस्तावन्न माषवीजानां द्वादशशतं भृतिः, कर्म कुर्वाणा हि कर्मकराः पादिकमप्यदर्शं लभन्ते। फलानुरूप्यं नैव ज्ञायते। वचनं तु भृतौ सत्यां परिमाणविशेषपरं भवति। यत्र हि पादिकमप्यदर्शं लभ्यते न सा दक्षिणा भवति, न हि सा तस्मिन् कर्मणि दर्शं करोति, स्नेहाद्वा अन्येन वा प्रकारेण कृतमनः कर्म कुर्यात्, न व्रीहीणां द्वादशशतेन प्रोत्साहितः।

आह,—'यः कश्चित् कस्यांश्चिदवस्थायां व्रीहीणां द्वादशशतेन प्रोत्साह्यते, तस्य किं सा दक्षिणा भवेत्?'। न इति ब्रूमः,—दक्षकरणी हि दक्षिणा, दक्षस्य बलं, या न आश्रितत्वं करोति, नासौ बलकरणी, तस्माद् या न आश्रितत्वा, नासौ दक्षिणा। आश्रितत्वाया आधिक्यं वचनस्य विषयः।

आह,—'व्रीहिवीजानामपि द्वादशशतं यावत् यावतीं बलमात्रां करोति'। अत्रोच्यते,—आपेक्षिकं इदं बलं नाम, स एव हि पुरुषः कश्चित् प्रति बलीयान्, कश्चित् प्रति अबलः, तत्र यावदाश्रितत्वं नास्ति, तावद् अबलता, बलवत्तरो हि आश्रितेन भवतीति आश्रितत्वादूर्ध्वं बलकरणं, तस्मादाश्रितत्वं यत् द्रव्यं, सा भृतिः, सा दक्षिणा, ततोऽधिकं दक्षिणात्वे सिद्धे वचनप्रामाण्यात् भवति। विकृतौ ऋतपेये वचनप्रामाण्यादल्पबलकरणमपि दक्षिणायाः स्थाने विधीयते सोमचमसः, स आश्रयात् सिध्यति। पशवस्तु सर्वे मुख्यबलकरणे समर्थाः, तेषु सत्सु न व्रीह्यादिवीजानि सङ्ख्यया समानुत्स्यन्त इति॥

सू॰ अनियमोऽविशेषात् ॥ ४६ ॥ (पू॰) ॥

भा॰ यदा पशूनां द्वादशशतं, तदा 'अनियमो' गवादीनां,—अन्यतमस्य कस्यचिद्द्वादशशतं। एवमनियमे लाघवं भविष्यति, प्रयोगस्याशुभावश्च, तथाधिकारशास्त्रं महाविषयं भविष्यति इति ॥

सू॰ भागित्वाद्वा गवां स्यात् ॥ ४७ ॥ (२ सि॰) ॥

भा॰ वाशब्दोऽनियमं व्यावर्त्तयति। गवां द्वादशशतं स्यात्। कुतः?। 'भागित्वात्',—भागवत्यो हि गावो महाभागाः,—महति उपकारे वर्त्तन्ते इत्यर्थः। एवमृत्विजामुपकारभूयस्त्वं भविष्यति, ऋत्विजाञ्च उपकारः कर्त्तव्यः। महत्तमे च हिते उपकारे वर्त्तमाने, उपकुर्वतां चोपकर्त्तव्यमिति सदाचारः। एवं सदाचारोऽनुगृहीतो भविष्यति, यदि महाभागानां भूयसी संख्या दीयते, गावश्च महाभागाः, तस्मात् तासां द्वादशशतं। अन्या उपकारकतरा भवेयुः, यदेषां दानप्रतिषेधविज्ञानं न प्रतिषिध्येरन्,—'न केसरिणो ददाति, नोभयतोदतः प्रतिगृह्णाति' इति श्रुतिः। स्मर्यते च,—'नाश्वं विक्रीणीते' इति। तस्माद् द्वादशशतं 'गवां स्यात्' ॥

सू॰ प्रत्ययात् ॥ ४८ ॥ (यु॰) ॥

भा॰ अतश्च गवां संख्या। कुतः?। 'प्रत्ययात्'। संख्यासम्पादनार्थं उपादीयमानेषु प्रकृतेषु पश्वेन उपादेय स्मर्यमाणेषु पूर्वं गावः प्रतीयन्ते, अतस्ताः संख्यया सम्बध्यन्ते, न च तत्र विरोधः कश्चिदस्ति,

गोषु सम्बद्धासु न पुनरश्वादयः सम्बध्यन्ते, एकजातीयो हि सम्बद्धव्यः, स च सम्बद्ध इति। तस्मात् गवां सङ्ख्या॥

सू० लिङ्गदर्शनाच्च ॥ ४९ ॥ (यु०२) ॥

भा० लिङ्गं खलु एतमर्थं दर्शयति। किं लिङ्गं भवति?। एवमाह,—'सहस्रं दक्षिणा। सहस्रं स्तोत्रीया यावदस्य साहस्रस्य उत्तराधरा गौर्गवि प्रतिष्ठिता तावदस्मात् लोकादसौ लोकः' इति गाः प्राप्य दर्शयति। तथा 'तां वा एतां गवलीं समामनन्ति। इडे रन्ते हव्ये काम्ये चन्द्रे ज्योतिरदिति सरस्वति महि विश्रुति। एता ते अघ्न्ये नामानि देवेभ्यो मा सुकृतं ब्रूतात्' इति गवामेतानि नामानि सहस्रतमीञ्च दक्षिणामेवमाह, एतानि ते नामानि इति यदि सा गौः, एवमेतदवकल्पते। तस्मादपि गवां सङ्ख्या इति॥ (१०।२१२अ०)॥

---

विभज्य गोदक्षिणाया दानाधिकरणम्॥

सू० तत्र दानं विभागेन प्रदानानां पृथक्त्वात्॥ ॥ ५० ॥ (सि०) ॥

भा० ज्योतिष्टोमे गवादयो दक्षिणा, तत्रैषोऽर्थः समधिगतः,—गवां सङ्ख्या इति। अथेदानीमिदं सन्दिह्यते,—किं यस्य यावान् भाग आभजति, स्वयमेव यजमानेन विभज्य तस्य तावान् कल्पयितव्यः, उत परिषदेव विभज्यत इति। किं प्राप्तम्?—अनियमो विभज्याविभज्य वा दातव्यम्, एतावद्धि श्रूयते,—दातव्यम् इति, न, विभज्याविभज्य वा इति। तस्मादनियम इति।

एवं प्राप्ते ब्रूमः,—विभज्य दातव्यमिति, दातव्यस्यैव तद्रूपं, स्व-स्वत्वपरित्यागेन परस्वत्वापादनं, तच्च यजमानेन स्वयं कर्त्तव्यं। तस्मात् स्वयं प्रयोगे स्यात् इति। यो यस्यांश्च आभजति, स तस्मै अनिर्दिष्टो न शक्यते तेन सम्बन्धयितुं, तेन यस्तं निर्दिशति स दानमभिनिर्वर्त्तयति। यजमानेन च दानं निर्वर्त्तयितव्यं। तस्माद् यजमानो विभज्य निर्दिशेत्, 'प्रदानानां पृथक्त्वात्'। असति विभागे न शक्यः स्वेन भागेन सम्बन्धः कर्त्तुं। तस्माद्विभज्य दक्षिणा दातव्येति ॥

सू॰ परिक्रयाच्च लोकवत् ॥ ५१ ॥ (यु॰१) ॥

भा॰ अपि च परिक्रयार्थं दानं, न धर्ममात्रं, परिक्रयार्थेन च भर्त्ता भृत्येन सह पणितव्यं। यदि च परिषदं प्रत्युच्येत, परिषच्च विभजेत, न स्वामिना सह अपणिष्यत, तत्र परिक्रय एव नाभविष्यत्; यथा लोके काष्ठवाहप्रभृतिभ्यो यद्दीयते, तत्र काष्ठवाहाः स्वामिना सह पणन्ते, तेभ्यः स्वामी विभज्य निर्दिशति,—इदं तुभ्यमिदं तुभ्यमिति, तद्वदिहापि द्रष्टव्यं। तस्माद्विभज्य दक्षिणा दातव्येति ॥

सू॰ विभागञ्चापि दर्शयति ॥ ५२ ॥ (यु॰२) ॥

भा॰ अपि च दर्शयति विभागं, यत् विभागाभिधायिनं मन्त्रमामनन्ति,—'तुथो वो विश्ववेदा विभजतु' इति। 'कृष्णाजिनेन विचाय दक्षिणां ददाति' इति। तथा 'आग्नीध्रेऽग्रे ददाति, अग्निमुखानेव पितॄन् प्रीणाति, ब्रह्मणे ददाति प्रसृतेभ्यो ददाति प्रसृत्यै होत्रे ददाति नेष्ट्रे ददाति हविर्धान आसीनेभ्य अध्वर्युभ्यो

ददाति, उद्गातृभ्यो ददाति, अन्तःसदसि आसीनेभ्यो यथाश्रद्धं प्रासर्पकेभ्यो ददाति' इति। एवं विभागदर्शनमुपपद्यते; तस्माद्विभज्य दातव्यमिति ॥ (१०।२।१२अ०)* ॥

---

ज्योतिष्टोमे समाख्यानुसारेण दक्षिणाविभागाधिकरणम् ॥

## सू॰ समं स्यादश्रुतित्वात् ॥ ५३ ॥ (१पू॰) ॥

भा॰ ज्योतिष्टोमे समाम्नायते, 'गौश्चाश्वश्च अश्वतरश्च' इति। तत्रायमर्थः समधिगतः,—विभज्य दातव्यम् इति। इदमिदानीं सांशयिकं,—किं समो विभागः, उत कर्मकृतं वैषम्यं, उत श्रद्धाकृतम्? इति। किं प्राप्तं?,—समो भागः स्यात् 'अश्रुतित्वात्' विशेषस्य, यत्र विशेषो न श्रूयते, तत्र समो विभागो भवितुमर्हति। कथमिव?। एकस्मै सर्वं दातव्यं प्राप्नोति, यद्यपरस्मै दातव्यं न भवति; तत्र यावति एकस्मै दीयमाने नान्यः संविभज्यते, तावत् तस्मै एकस्मै न दातव्यम्, अविशिष्टं दातव्यं, एवमेकैकस्मै, तस्माद्विशेषाश्रवणात् समं देयमिति ॥

## सू॰ अपि वा कर्म्मवैषम्यात् ॥ ५४ ॥ (२पू॰) ॥

भा॰ अपि वेति पक्षव्यावृत्तिः,—न समं स्यात्, कर्मकृतं वैषम्यं भवेत्,—यो बहु कर्म करोति, तस्मै बह्वी क्षतिर्दीयते। तस्मात् कर्मानुरूप्येण वैषम्यमिति ॥

---

* येषां मते एकादशाधिकरणं दशमाधिकरणान्तर्गतमेव, न पृथक्, तेषां मते इदमेव द्वादशाधिकरणं ज्ञेयं। एवं परत्रापि एकैकन्यूनता बोद्धव्येति।

सू० अतुल्याः स्युः परिक्रये विषमाख्या विधिश्रुतौ परिक्रयात् न कर्मण्युपपद्यते दर्शनाद्विशेषस्य तथाभ्युदये ॥ ५५ ॥ (सि०) ॥

भा० न चैतदस्ति,—कर्मकृतं वैषम्यम् इति, किन्तर्हि उपकारकृत्; स उपकारः श्रुत्या विज्ञायते, तस्मात् श्रुतिकृतं वैषम्यं; तेन 'अतुल्याः' 'परिक्रये' भवेयुः। 'विषमा' हि एषाम् 'आख्या', केचित् 'अर्द्धिनः', केचित् 'तृतीयिनः' केचित् 'पादिनः', येषामर्द्धं ते 'अर्द्धिनः', कथं च तेषामर्द्धं भवति?,—यदि तेभ्यः अर्द्धं दीयते। एवं 'तृतीयिनः', 'पादिनः' इति च दीक्षा 'विधिश्रुतौ' समाख्यायन्ते, सा 'परिक्रयात्' कर्मकृते वैषम्ये न 'उपपद्यते'। क्व पुनरयं विशेषो दृश्यते?। 'अभ्युदये',—अभ्युदय इति अभ्युदयफलं (ऋद्धिफलं) द्वादशाहं ब्रूमः। 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति, तत उद्गातारं, ततो होतारं, ततस्तं प्रतिप्रस्थाता दीक्षयित्वाऽर्द्धिनो दीक्षयति। ब्राह्मणाच्छंसिनं ब्रह्मणः, प्रस्तोतारमुद्गातुः, मैत्रावरुणं होतुः, ततस्तं नेष्टा दीक्षयित्वा तृतीयिनो दीक्षयति। आग्नीध्रं ब्रह्मणः, प्रतिहर्त्तारमुद्गातुः, अच्छावाकं होतुः, ततस्तं उन्नेता दीक्षयित्वा पादिनो दीक्षयति। पोतारं ब्रह्मणः, सुब्रह्मण्यमुद्गातुः, ग्रावस्तुतं होतुः, ततस्तमन्यो दीक्षयति ब्रह्मचारी वा आचार्यप्रेषितः' इति 'अर्द्धिनः' 'तृतीयिनः' 'पादिनः' इति द्वादशाहे अनुवादः; यदि प्रकृतौ यथासमाख्यम् अमीषामिमे भागाः, ततो द्वादशाहे दर्शनमुपपद्यते। तस्मादर्द्धादिभिः समाख्यानात् समाख्या-श्रुतिकृतं वैषम्यं भवितुमर्हतीति ॥ (१०।२।१४अ०) ॥

---

भूयसिद्धान्ते 'तस्य धेनुः' इत्यनेन कृत्स्नक्रतुदक्षिणाबाधाधिकरणम् ॥

**सू० तस्य धेनुरिति गवां, प्रकृतौ विभक्तचोदितत्वात् सामान्यात् तद्विकारः स्यात् यथेष्टिर्गुणशब्देन ॥ ५६ ॥ (पू०) ॥**

भा० इदमामनन्ति, 'अथैष भूर्वैश्वदेवः पितृदेव सर्वस्य विश्ववत्यसोमीया धेनुर्दक्षिणा' इति। अत्र सन्देहः,—'किं धेनुर्गवां निवर्त्तिका, उत कृत्स्नाया दक्षिणायाः?' इति। तत्र इदं तावत् परीक्ष्यं,—किं प्रकृतौ विभक्तं दाक्षिण्यं, उत, समस्तम्? इति। तत इदं तत्र संहत्याधिकरणं क्रियते,—किं प्रकृतौ विभक्तं दाक्षिण्यं, धेनुर्गवां निवर्त्तिका; उत, अविभक्तं, कृत्स्नाया दक्षिणाया निवर्त्तिका? इति। किं प्राप्तं?। 'तस्य····धेनुः' इति सूत्रभाष्ये ब्रूमः,—धेनुः गवां निवर्त्तिका इति।

तत एतत्तावद् विचार्यते,—प्रकृतौ विभक्तं दाक्षिण्यमिति। किमिदं विभक्तम्? इति। गवादीनामेकैकं द्रव्यं दक्षिणा इति। कथं?। 'गौश्च अश्वश्च अश्वतरश्च दक्षिणा' इति प्रकृतौ गवादिभिर्दक्षिणाशब्दः प्रत्येकं परिसमाप्यते, निर्दिष्टा हि गवादयः, न तेषां समुदायः। चशब्दः समुच्चयार्थो भवति, न तु समुच्चयस्य निर्देशकः, परपदविशेषणार्थन्तु समुच्चयमुपादत्ते; यदि हि निर्दिशेत्, क्रियागुणैः समुच्चयः सम्बध्येत!—समुच्चयः शोभनः समुच्चयो द्रष्टव्य इति यथा भवति, एवं च शोभनः च द्रष्टव्य इति वा भविष्यति। तथा, यथेह समुच्चेययोः षष्ठी भवति,—धवखदिरयोः समुच्चय इति, एवं धवः

खदिरस्येत्यथापि अभविष्यत्! न तु भवति। तस्मात् चशब्दः समुच्चयं निर्दिशति, श्रुत्या निर्दिष्टेन च एकवाक्यता न्याय्या, न गवादिलक्षितेन समुदायेन। तस्मात् गौर्दक्षिणा, अश्वो दक्षिणेत्येवं सम्बन्धः। लक्षयित्वा हि गवादीन्, तेषां दक्षिणात्वं विधीयते, तच्च गुणभूतं प्रतिप्रधानं भिद्येत! चशब्दश्चैवं समर्थितो भविष्यति, गौर्दक्षिणा अश्वश्च दक्षिणा इति, न गौरश्वादिसहितो गवादीनां वा समाहार इति।

यदि विभक्तं दाक्षिण्यं, तदा प्राप्ता गौर्दाक्षिण्ये, पुनर्विशेषार्थमुच्चार्यते,— धेनुर्दक्षिणा इति, याऽसौ गौर्दक्षिणा सा धेनुरिति अन्यासां दक्षिणानामविकारेण, यथाप्रकृतिभावेन चोदकानुग्रहो भविष्यति। शब्देनैव गवि एष गुण उच्यते धेनुत्वं नाम; गौरेव हि धेनुर्नान्या, 'यथेष्टिः' 'गुणशब्देन,'—'सौर्यं निर्वपेत्' इति सूर्यसम्बन्धं कुर्यात्, द्रव्यस्येति विवक्षिते निर्वपणाश्रय एव प्रयोगः शब्देन निर्दिश्यते इति, सनिर्वपणकात् प्रयोगात् अनेन निर्वपणशब्देन ऐष्टिको विध्यन्तो नियम्यते,* एवमिहापि गोर्गुणवचनेन धेनुशब्देन गोदक्षिणाविकारः क्रियते, नान्या दक्षिणा विक्रियते इति॥

सू॰ सर्वस्य वा क्रतुसंयोगादेकत्वं दक्षिणार्थस्य गुणानां कार्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात् तस्मात् समवायाद्धि† कर्म्मभिः॥५७॥ (सि॰)॥

भा॰ वाशब्दः पक्षं व्यावर्त्तयति, 'सर्वस्य' क्रतुदाक्षिण्यस्य निवर्त्तिका

* 'नियम्यते' इति क॰ स॰ पुस्तके नास्ति।
† 'समवायो हि' इति आदर्शपुस्तके पाठः।

धेनुरिति प्रतिज्ञायते। तदेतदर्थ्यते समस्तं दाक्षिणम् इति। किमिदं समस्तं दाक्षिणम्? इति। न प्रतिद्रव्यं दक्षिणाशब्दः सम्बध्यते,—गौर्दक्षिणा, अश्वो दक्षिणा, अश्वतरो दक्षिणा इति, कथन्तर्हि गवादयो दक्षिणेति। न हि गवादीन् उद्दिश्य, दक्षिणा-सम्बन्धो विधीयते,—ये गवादयस्ते दक्षिणा इति, तथा हि दक्षिणा-शब्दो गवादीन् दक्षिणासम्बन्धविधानार्थं यौगपद्येन अन्तर्गतसम्बन्धमभि-वदन् बहुवचनान्तः स्यात्!—गवादयो दक्षिणाः इति, यथा 'अग्नीषोमौ देवते' 'प्राणापानौ अभिसमभवताम्' इति; गुणवचनानां शब्दानाम् आश्रयतो लिङ्गवचनानि भवन्ति; कथं तर्हि,—दक्षिणामुद्दिश्य गवादयो विधीयन्ते,—का दक्षिणा?,—गवादयः इति। दक्षिणा नाम दक्षतेरुत्साहकर्मणः, दक्षिणा उत्साहिका इति, एकः सः गुणः, स च प्राधान्येन विवक्षितः, तद्विशेषणत्वेन गवादयः; गुणवचनानाञ्च शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति, न द्रव्यवचनानामाश्रित-गुणवत्त्वेन, यथा 'विश्वे देवा देवता' इति। का पुनर्दक्षिणा?,—'गौश्च अश्वश्च अश्वतरश्च' इति दक्षिणाशब्दो दाने सम्बध्यते,—ऋत्विग्भ्यो ददातीति, न गवादयः। एको हि दक्षिणानामर्थः,—ऋत्विजाम् आनमनं; सकृच्च आनतास्ते भवन्ति, भूय आनमनेन अर्थो नास्ति, गवादीनामपि गुणानामेकं कार्यं दक्षिणात्वं।

यदा समस्तं दाक्षिण्यं, तदा विकृतौ भुवि तस्मिन् प्राकृते अर्थे धेनुः श्रुतिभूता, सा च प्राकृतं कार्यमभिनिर्वर्त्तयति। क्रतुसंयोगेन हि श्रूयते,—'तस्य'—(क्रतोः) 'धेनुर्दक्षिणा' इति, तस्मिन्निर्वृत्ते सर्वं चोदकप्राप्तमानुमानिकं निवर्त्तते। तथा 'समवायाद्धि कर्मभिः' ऋत्विजः सम्बध्यन्ते श्रुतिभूतया।

अपि च यच्छब्दश्रुत्या समवायं गोद्रव्यमिति प्रतीयते, दक्षिणा-सम्बन्धोऽस्य वाक्येन, श्रुतिश्च वाक्याद् बलीयसी। तस्मात् पूर्व्वं यद्योगः, पश्चात् दक्षिणासम्बन्धः, इतरेतरयुक्ताः दक्षिणात्वेन सम्बध्यन्ते गवादयः अर्थाः। तस्मात् कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तिका धेनुरिति॥

सू० चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात्॥
॥५८॥ (आ० नि०)॥

भा० यदुक्तं,—'यथेष्टिर्गुणशब्देन' इति, अत्रोच्यते, 'आग्नेयो-पांश्वयाजाग्नीषोमीयानां प्राकृतानां सौर्य्यार्यमणप्राजापत्यनैर्ऋतीनां 'चोदनानां' न किञ्चित् एकं कार्य्यं, यदेकतरा चोदना आश्रयेत्, तत्र वक्ष्यते, एकस्य कर्मणो वैकृतं कर्म्म विध्यन्तं गृह्णातीति। तत्र कस्य ग्रहीष्यति? इति सन्देहे युक्तो लिङ्गेन नियमः, इह तु अदिष्टो हेतुः,गवादीनामेकं कार्य्यं दक्षिणात्वं,तस्मिंश्च धेनुः श्रुतिभूता चोदकप्राप्तान् निवर्त्तयितुमर्हति इति॥ (१०।२।१५अ०)॥

---

'यस्य सोममपहरेयुः' इत्यादौ 'एकां गाम्' इत्यादिना गोमात्रसङ्ख्याबाधाधिकरणम्॥

सू० एका पञ्चेति धेनुवत्॥५९॥ (पू०)॥

भा० 'यस्य सोममपहरेयुरेकां गां दक्षिणां दद्यादभिदग्धे पञ्च गाः' इति। अत्र सन्देहः,—'एका पञ्च च गावः श्रूयमाणाः किं कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तिकाः, उत गवाम्'? इति। किं प्राप्तं?,—'एका पञ्चेति धेनुवत्'। यथा धेनुः कृत्स्नस्य निवर्त्तिका

एवमेका पञ्च च भवेयुः, दक्षिणाम्नायो हि तासां प्रत्यक्षः श्रूयते, तेन ताः प्राकृतीनां कार्यमभिनिर्वर्त्तयन्ति, प्राकृतास्त्वानुमानिक्यो निवर्त्तन्त इति ॥

इदं तावदपर्यवसितं तिष्ठतु। अथाधिकरणान्तरं प्रस्तूयते,—

---

साद्यस्क्रे त्रिवत्सेन सर्वेषां क्रयार्थानां बाधाधिकरणम् ॥

सू० त्रिवत्सश्च ॥ ६० ॥ (सि०) ॥

भा० अस्ति साद्यस्क्रे ‘साण्डस्त्रिवत्सः सोमक्रयणः सर्द्धमानानाम्’ इति। सन्ति क्रयार्थानि द्रव्याणि चोदकप्राप्तानि,—‘अजया क्रीणाति, हिरण्येन क्रीणाति, ऋषभेण क्रीणाति, अश्वशफेन क्रीणाति, वाससा क्रीणाति’ इत्येवमादीनि। तत्र संशयः,—किं त्रिवत्सः ऋषभस्य निवर्त्तकः, अथ वा सर्वेषां क्रयार्थानां द्रव्याणाम्? इति। किं प्राप्तं?,—ऋषभस्य निवर्त्तक इति। कुतः?। पुङ्गवत्वात्, पुङ्गवत्वेन सामान्येन, पुङ्गवोऽसौ विधीयते। कुतः पुङ्गवत्वम्?। साण्डश्रवणात्; तस्मात् ऋषभस्य निवर्त्तक इति।

एवं प्राप्ते ब्रूमः,—‘त्रिवत्सश्च’। किं?। कृत्स्नस्य क्रयार्थस्य निवर्त्तक इति। प्रत्यक्षः स क्रीणातिना सम्बध्यते, तेन चोदकप्राप्तं निवर्त्तयति, तस्मात् कृत्स्नस्य क्रयार्थस्य निवर्त्तक इति ॥

सू० तथा च लिङ्गदर्शनम् ॥ ६१ ॥ (यु०) ॥

एवञ्च कृत्वा लिङ्गं दर्शयति। किं लिङ्गं भवति?। एवमाह,—अपरस्मिन् साद्यस्क्रे ‘वशी गौः सोमक्रयणी व्यावृत्ता श्येता सर्द्धा’

इति। यदि सर्व्वस्य क्रत्वर्थस्य निवर्त्तिका स्त्री गौः, ततः सैव एकाकिनी केन सह स्पर्द्धिष्यते ? इति। इतरथा सर्व्वस्य-निवर्त्तिकायां सङ्घस्य स्पर्द्धा भवेत्, तथास्यां वर्त्तमानायां स्पर्द्धायां 'व्यावृत्ता ह्येषां स्पर्द्धा' इति नोपपद्यते। तस्मात् सर्वस्य निवर्त्तिकेति, चित्वतोऽपि तत्समानश्रुतिः, सोऽपि च सर्वस्य निवर्त्तक इति।

एवं वा, यदि चित्वतः सर्वेषां निवर्त्तकः, तदा तम् अपबाधमाना बाह्यस्यान्तरे स्त्री गवी श्रूयमाणा केवला स्यात्, तत्र 'व्यावृत्ता ह्येषां स्पर्द्धा' इति दर्शनमुपपद्यते, इतरथा हि केवलस्य छागस्यापबाधितारं चित्वन्तं निवर्त्तयन्ती सङ्घमध्यपतिता स्पर्द्धेतापि, तत्र 'व्यावृत्ता ह्येषां स्पर्द्धा' इति वचनं नावकल्पते। अतः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकश्चित्वत इति॥ (१०।२।१७अ०)॥

तत्र एवमन्तरागर्भिणीन्यायो भवतीति अन्यथा सूत्रं वर्ण्यते,—इतश्च 'एका' 'पञ्च' च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तका, चित्वतश्च, तथा च लिङ्गदर्शनं, एवमेतत्-समानश्रुतिश्चित्वतोऽपि सर्वस्य निवर्त्तकः प्राप्नोति, तदेतद्दर्शनम् उपपत्स्यते,—'व्यावृत्ता ह्येषां स्पर्द्धा' इति॥

## सू० एके तु श्रुतिभूतत्वात् सङ्ख्यया गवां लिङ्ग-विशेषेण ॥ ६२ ॥ (सि०) ॥

भा० स्थितादुत्तरं। यदुक्तम्, एका पञ्च च कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तिकेति, एतन्न, 'एके तु' अर्था निवर्त्तन्ते,—एके गावो निवर्त्तन्ते, अश्वादयो न निवर्त्तन्ते। 'एका देया पञ्च देयाः' इति य एष नियमः, स गोविषयः। कुतः ?। गोविशिष्टया 'सङ्ख्यया' सम्बन्धात्।

यद्देतत् 'एकां ददाति पञ्च ददाति' इति, नैवमभिसम्बन्धः क्रियते,— एकां दक्षिणां ददातीति, कथन्तर्हि एकां गामिति, गोसङ्ख्यासम्बन्धो हि मुख्यत्वात् बलीयान्।

अपि च गोशब्देन सह सङ्ख्यायाः प्रत्यक्षः सम्बन्धः, गोशब्दव्यवधानात् परोक्षो दक्षिणाशब्देन, गोशब्दश्चैवं मुख्यार्थो भवति, इतरथा लक्षणा स्यात्,—एकां गामन्यादि चेति। तेन 'गवां सिद्धविशेषेण' सङ्ख्या गोषु निविशते; एवञ्च सर्वेषामनिष्टत्वावश्यादीनां यथा-प्रकृतिभावे चोदकानुग्रहो भविष्यति, तस्मादेका पञ्च च गवां निवर्त्तिका इति॥ (१०।२।१६ अ०)॥

---

अश्वमेधे प्राकाशाविमित्तमेनाध्वर्य्युभागबाधाधिकरणम्॥

सू॰ प्राकाशौ तथेति चेत्॥ ६३॥ (पू॰)॥

भा॰ अश्वमेधे श्रूयते, 'हिरण्मयौ प्राकाशावध्वर्यवे ददाति' इति। तत्रैषोऽर्थः सांशयिकः,—किं प्राकाशौ कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकौ, उत अध्वर्युभागस्य निवर्त्तकौ? इति। कुतः संशयः?। इह प्राकाशाविशेष यदि ददातिना सम्बध्यते, ततः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकः, अथ अध्वर्युणा, तदा अध्वर्युभागस्य। किं प्राप्तं?—कृत्स्नस्येति। तत्र एतदर्थ्यते, प्राकाशविति शब्दो ददातिना सम्बध्यत इति। कुतः?। एवं ददातिसम्बन्धविधाने श्रुतिरनुगृहीता, अध्वर्य्युणा सम्बन्धे वाक्यं। अपि च प्राकाशविति द्वितीया कारकविभक्तिः सामर्थ्यादेवाख्यातेन सम्बध्यते, न नाम्ना; तस्माद् ददातिना सम्बन्धः। अध्वर्युसम्बन्धे चाध्वर्य्युशब्दात् षष्ठी अभविष्यत्,

तस्मादपि ददातिना सम्बन्धः । ददातिं समर्थयित्वा प्राकाशौ विधीयेते, तत्र न शक्यो ददातिरध्वर्युणा विशेष्टुं, वाक्यं हि तदा भिद्येत । अपि च विशेषणे सत्यपि यदि ददातिरविशिष्टः पदान्तरेण सम्बध्यते, अविशिष्ट एव कार्ये प्राप्नोति, प्रयुज्यमानमपि हि विशेषणमशक्तं न विशेष्यं विशिनष्टि। तस्मात् योऽध्वरं युनक्ति, योऽध्वर्युरिहाभिप्रेतः । अतः कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकौ प्राकाशाविति ॥

सू० अपि त्ववयवार्थत्वात् विभक्तप्रकृतित्वात् गुणेदन्ताविकारः स्यात् ॥ ६४ ॥ (सि०) ॥

भा० अपि त्विति पक्षव्यावृत्तिः । दक्षिणावयवकार्यार्थौ प्राकाशौ, न कृत्स्नदक्षिणाकार्यार्थौ, विभक्ता हि तेषां भागा अध्वर्य्वादीनाम्,— अयम् अध्वर्योर्भागः, इमे अन्येषाम् इति । तस्मात् 'गुणेदन्ताविकारः स्यात्' । किमिदं गुणेदन्ताविकारः इति? । गुणस्य इदन्ता गुणेदन्ता, इदंभाव इदन्ता, गुणेदन्ताया विकारो गुणेदन्ताविकारः,— अध्वर्योर्भागस्य निवर्त्तकौ प्राकाशौ । कथमिव? । एकमिदं हि वाक्यं,—'हिरण्मयौ प्राकाशौ' इति, नेयं प्रथमा, नापि दक्षिणाशब्देन सम्बन्धः, येन दक्षिणाकार्ये वर्त्तेयातां । का तर्ह्येषा?। द्वितीया, ददातिनैव सम्बध्यते । तदेकं वाक्यं,—हिरण्मयौ प्राकाशावध्वर्यवे ददाति इति, अध्वर्युसम्प्रदानकेन ददातिना एतयोः सम्बन्धसामर्थ्यात् तथाऽध्वर्युददातिभागं निवर्त्तयतः । यदा सर्वविशेषणविशिष्टो ददातिरपूर्वो विधीयते । दृष्टार्थत्वादध्वर्योरन्यान् भागस्तयोः प्रत्याख्यास्यति ।

अथ यदुक्तं,—'प्राकाशयोर्ददातिसम्बन्धो विधीयत इति तथा हि श्रुतिरनुगृहीता भविष्यति' इति; नासौ वाक्यानपेक्षिणी श्रुतिः, अपति ददातिना आनन्तर्यं नावकल्पते। यदप्युच्यते,—'कारक-विभक्तिराख्यातेन सम्बन्धयोग्या' इति; योग्यत्वं दर्शनेन बाध्यते, दृश्यते त्वानन्तर्यं प्राकाशयोरध्वर्युशब्देन। यदप्युक्तं,—तत्सम्बन्धे षष्ठी अभविष्यत् इति। सत्यं प्राप्नोति षष्ठी, न तु तद्भावे सम्बन्धो नास्ति अध्वर्युणा, गम्यते हि स वाक्येन। 'आह,—चतुर्थीश्रुतिरत्र या, सा वाक्यमपबाधिष्यते' इति। न, अविधीयमाना बाधितुम् उत्सहते। कथं तर्हि अविवक्षिते सम्प्रदाने श्रूयते? इति। सामर्थ्य-प्राप्तस्यानुवादेनेति। तस्माददोषः। उक्तं वा सर्वविशेषणविशिष्टं दानं विधीयत इति। एकस्यैवामभिहृत्तौ यथाप्रकृतिभावे योऽध्वर्युकानुयत्नो भविष्यति। तस्मादध्वर्युभागस्य निवर्त्तकौ प्राकाशाविति॥ (१०।३।१८अ०)॥

उपहव्ये ऽश्वेन ब्रह्मक्रतुदाक्षिण्यस्य बाधाधिकरणम्॥

सू॰ धेनुवच्चाश्वदक्षिणा, स ब्रह्मण इति पुरुषापनयो यथा हिरण्यस्य॥ ६५॥ (सि॰)॥

भा॰ अस्ति उपहव्यः,—'उपहव्यो ऽनिरुक्तस्तेनाभिशस्यमानं याजयेत्। अग्निष्टोमो यज्ञः पञ्चदशस्तोमो रथन्तरसामाश्वः श्वेतो दक्षिणा। उपहव्यो निरुक्तः तेनाभिशस्यमानं याजयेत्। उक्थ्यो यज्ञः सप्तदशस्तोमो बृहत्पृष्ठः अश्वः श्यावो रुक्मललाटो दक्षिणा'।

तत्र श्रूयते,—'स श्मिनितः स ब्रह्मणे देयः' इति। तत्र सन्देहः,—किमयो ब्रह्मभागस्य निवर्त्तकः, उत कृत्स्नस्य क्रतुदाक्षिण्यस्य? इति। किं प्राप्तं?—ब्रह्मभागस्य निवर्त्तक इति। कुतः?। कर्तृसम्बन्धाद् अवयवार्थत्वात् विभक्तप्रकृतित्वाच्च 'गुणेऽन्याविकारः स्यात्'। स्रग्वत्, यथा,—'स्रजमुद्गात्रे ददाति' इति उद्गातृभागस्य निवर्त्तिका स्रक्, न कृत्स्नस्य क्रतुदाक्षिण्यस्य; एवमिहापि इति।

एवं प्राप्ते ब्रूमः,—'धेनुवत्' 'अश्वदक्षिणा' स्यात्,—कृत्स्नस्य निवर्त्तिका इति। कुतः?। दक्षिणाशब्दसम्बन्धात्,—'अश्वः श्यावो रुक्मललाटो दक्षिणा' इति प्रत्यक्षश्रुतेनाश्वेन आनमनं कर्त्तव्यं, एवश्चेत् आनुमानिकं निवर्त्तितुमर्हति। ननु कर्तृसम्बन्धोऽस्य श्रूयते,—'स श्मिनितः स ब्रह्मणे देयः' इति। उच्यते,—'एकेन वाक्येन देयकप्राप्तानां निवृत्तिः, द्वितीयेन वाक्येन विनिवृत्तौ सत्यां 'पुनरपायनयः' क्रियते, 'यथा, हिरण्यस्य' 'सर्वं ब्रह्मणे परिहरति' इति। तस्मात् कृत्स्नस्य निवर्त्तकोऽश्व इति॥

सू॰ एके तु कर्तृसंयोगात् स्रग्वत्तस्य लिङ्गविशेषेण॥
॥ ६६ ॥ (आ॰) ॥

भा॰ अथ यदुक्तं,—'एके' अर्था निवर्त्तन्ते, 'कर्तृसंयोगात्' 'लिङ्गविशेषेण' 'स्रग्वद्' इति तत्परिहर्त्तव्यम्॥

सू॰ अपि वा तदधिकाराद्धिरण्यवद्विकारः स्यात्॥
॥ ६७ ॥ (आ॰ नि॰) ॥

भा० अपि वेति पक्षव्यावृत्तिः,—'तदधिकारात्' (दक्षिणाधिकारात्) दक्षिणाशब्देन दक्षिणामधिकृत्यायमनुबन्धः कृतः। तस्मात् कृत्स्नदक्षिणा-विकारोऽयम्‌: । अतो हिरण्यवदेव भवति, न सम्वत्॥ (१०।२।१८अ०)॥

---

वाजपेये सोमचमसेन कृत्स्नक्रतुदाक्षिण्यबाधाधिकरणम्॥

सू० तथा च सोमचमसः॥ ६८॥ (पू०)॥

भा० वाजपेये श्रूयते,—'औदुम्बरः सोमचमसो दक्षिणा स प्रियाय सगोत्राय ब्रह्मणे देयः' इति। तत्र सन्देहः,—किं ब्रह्मभागस्य निवर्त्तकः सोमचमसः, उत कृत्स्नस्य क्रतुदाक्षिण्यस्य?। किं प्राप्तं?,—'तथा' 'सोमचमसः' स्यात्, यथा स्रक् उद्गातृ तद्भागस्य नि-वर्त्तिका, उद्गातृसंयोगात्, एवं ब्रह्मसंयोगात् ब्रह्मभागस्य निवर्त्तकः सोमचमसः॥

सू० सर्वविकारो वा क्रत्वर्थे प्रतिषेधात् पशूनाम्॥ ॥ ६९॥ (सि०)॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,—न ब्रह्मभागस्य निवर्त्तकः, किन्तर्हि कृत्स्नस्य क्रतुदाक्षिण्यस्य। कथमवगम्यते?। पशुप्रतिषेधानु-वादात्,—एवमाम्नायते,—'ऋतं वै सोमोऽनृतं पशवो यत् पशून् दद्यात् सोऽनृतं कुर्यात्। औदुम्बरः सोमचमसो दक्षिणा' इति, पशुदानमपोद्य सोमचमसो विधीयते, यः पशून् दद्यात् तस्यैव दोषो भवेत्, एतस्मात् न पशवो दातव्या इति वक्तव्ये तमेवार्थमुक्तं मन्यमानः, 'सोमचमसो दक्षिणा' इत्याह। सोमचमसदानेन

पशवो न दीयन्त इति गम्यते। तदेवं छत्वस्य निवर्त्तकोऽवकल्पते; अश्वदानस्य निवर्त्तके सति अन्येभ्यः पशवो दीयेरन्। तस्मात् छत्वस्य निवर्त्तक इति।

सू० अश्वदानेऽविशिष्टमिति चेत् ॥ ७० ॥ (आ०) ॥

भा० 'इति चेत्' पश्यसि—पशुदानविप्रतिषेधात् छत्वस्य क्रतु-दाक्षिण्यस्य निवर्त्तक इति। 'अश्वदाने'ऽप्येतदवकल्पते,—'अश्वाय सोमचमसो देयः, यः पशून् दद्यात् स अश्वाय' इति गम्यते। तस्मान्न नियोगतः छत्वस्यैव क्रतुदाक्षिण्यस्य निवर्त्तके पशुप्रति-षेधानुवादोऽवकल्पते,—अश्वाय दानेऽपि तदुपपद्यत इति ॥

सू० उत्सर्गस्य क्रत्वर्थत्वात् प्रतिषिद्धस्य कर्म स्यात् न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् ॥ ७१ ॥ (आ० नि०) ॥

भा० न चैतदस्ति,—अश्वभागस्य निवर्त्तकः सोमचमस इति, छत्वस्य क्रतुदाक्षिण्यस्य निवर्त्तकः स्यात्; अस्य सोमचमसस्य य उत्सर्गः, स क्रत्वर्थः स्यात्, दक्षिणाशब्देन हि सम्बध्यते,—सोमचमसो दक्षिणा इति। न च प्रकृतावेकैको गवादिर्दक्षिणा,—उक्तमेतद् (५७सू०) गवादीनां समुदाये दक्षिणाशब्द इति। तदेवं सोम-चमसदानेन प्रतिषिद्धेषु पशुषु यदि अश्वदानेऽप्येतदविशिष्टमिति कृत्वा अन्येभ्यः पशवो दीयेरन् प्रतिषिद्धं क्रियेत*; यो हि अश्वभागो

* अत्र 'सत् क्रियेत' इति का० मी० पु० पाठः।

न सा दक्षिणा, दक्षिणावयवो हि सः, दक्षिणावयवे दक्षिणाशब्दो निविशमानो गौणः स्यात्, 'न च' विद्यमाने मुख्ये 'गौणः' उपादीयते; सोमचमसस्य हि 'प्रयोजनं' दक्षिणानिवृत्तिः, सर्व्वेषामृत्विजाम् आनमनं प्रयोजनं 'दक्षिणानां', न ब्रह्मदानं। तस्मात् कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तकः सोमचमस इति ॥

सू० यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ ७२ ॥
सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥
॥ ७३ ॥ (प्र०) ॥

भा० प्रयोजनसूचद्वयमिदं। यदि तु ब्रह्मभागस्य निवर्त्तकः सोमचमसः, ततः ब्रह्मभागोना सा दक्षिणा, एतेन विकारेण अन्या दीयेरन् यथा पूर्वः पक्षः; यथा तर्हि सिद्धान्तः तथा सर्वं निवर्त्तते। तस्मिन् निवर्त्तिते, ततः पुरुषापनयः क्रियते,—'स ब्रह्मणे देयः' इति। 'तासां' दक्षिणानां क्रतुप्रधानत्वं भवति। सर्वर्त्विगानमनेन हि क्रतुः सिध्यति, न ब्रह्मानत्या केवलया, सोमचमसेन च सा सर्वानतिः कृतेति नान्यत् किञ्चन दीयेत, एतत्प्रयोजनं भक्त्येव पचोक्तं यथोपवर्णितम् इति।

एवं वा,—

---

सोमचमसेन कृत्स्नदक्षिणापुरुषानत्योर्बाधाधिकरणम् ॥ पर्य्यवसानम् ॥

सू० यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ ७२॥ (पू०)॥

भा० वाजपेये श्रूयते,—'औदुम्बरः सोमचमसो दक्षिणा। स प्रियाय

सगोत्राय ब्रह्मणे देयः' इति। तत्रैषोऽर्थः सांशयिकः,—किं ब्रह्मभागेनोऽन्यं दातव्यम्, उत सोमचमस एव केवलो दातव्यः? इति। 'ननु सोमचमसो दक्षिणेत्येष सम्बन्ध इत्युक्तं'। तत्रोच्यते, सोमचमसो ब्रह्मण इत्येष सम्बन्ध इति कृत्वा-चिन्ता। यद्येवं, ब्रह्मणः सोमचमस इति सम्बन्धो विवक्षितः, सोमचमसेन ब्रह्मभागो निवर्त्तितोऽवशिष्टं दातव्यं तद्गो विकारः स्यादिति॥

सू॰ सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात्॥ ॥७३॥ (सि॰)॥

भा॰ 'सर्वं वा' सोमचमसेन निवर्त्येत। कुतः?। सोमचमसो दक्षिणा इत्येष सम्बन्धः प्रत्यक्षः, तेन निवर्त्तिते सर्वस्मिन् दाक्षिण्ये पुरुषापनय एव क्रियते, 'तासां क्रतुप्रधानत्वात्', दक्षिणानां सोमचमसो यः क्रतुदक्षिणा, स सर्वं क्रतुदाक्षिण्यं निवर्त्तयतीति॥ (१०।३।२०अ०)॥

---

वाजपेये रथस्य भागनियामकताधिकरणम्॥

सू॰ यजुर्युक्ते त्वध्वर्योर्दक्षिणा विकारः स्यात्॥ ७४॥

भा॰ अस्ति वाजपेयः, तत्रेदं समाम्नायते,—'यजुर्युक्तं रथमध्वर्यवे ददाति' इति तत्रायमर्थः सांशयिकः,—किं यजुर्युक्तोऽध्वर्योर्भागस्य निवर्त्तकः, किं भागे नियमः? इति। किं प्राप्तं?। 'यजुर्युक्ते' 'दक्षिणा' 'तु' 'अध्वर्योः' 'विकारः स्यात्'। तुशब्दः संशयव्यावृत्त्यर्थः,—न खलु संशयोऽस्ति। यजुर्युक्तं रथमध्वर्यवे ददाति, नान्यदिति गम्यते, स रथोऽध्वर्युभागं निवर्त्य कृतार्थः अवशिष्टानां चोदकप्राप्तानां

निवृत्तिं न शक्नोति कर्त्तुं। नैवमभिसम्बन्धः क्रियते,—यजुर्युक्तं रथं वाजपेये ददातीति, येन क्रतुसंयोगो गम्यते। कुतः?। प्रकृतौ हि वाजपेयः, अध्वर्युः पुनर्वाक्येन श्रूयते; वाक्यं पुनः प्रकरणाद् बलीयः। तस्मादध्वर्युभागस्य निवर्त्तको रथ इति॥

सू॰ अपि वा श्रुतिभूतत्वात् सर्वासां तस्य भागो नियम्यते* ॥ ७७ ॥

भा॰ अपि वेति पक्षव्यावृत्तिः। श्रुतिभूता हि सर्वे रथाः सामान्येन वचनेन,—'सप्त सप्तदशकानि ददाति' इति, 'सप्तदश रथाः, सप्तदश निष्काः, सप्तदश दास्यः, सप्तदश च युग्मानि, सप्तदश गवां शतानि, यवसो वयस्कम सप्तदश' इति। तेनाविशेषेण सप्तदश रथाः सर्वेषां प्राप्ता विभक्तव्याः, तत्र न ज्ञायते कस्य को रथः?,—तत्राध्वर्यो-र्यजुर्युक्तः पक्षे प्राप्तः स नियम्यते,—यजुर्युक्तमध्वर्यवे ददाति, न अन्यं, न चान्यस्मै। एवम् ऋग्भिर्युक्तं होत्रे, नान्यं, न चान्यस्मै। सामभिर्युक्तमुद्गात्रे ददाति, नान्यं, न चान्यस्मै। तत्र पक्षे विधानार्थं यजुर्युक्तग्रहणं, न अध्वर्योर्भागं निवर्त्तयितुमुत्सहते; तस्यानिवृत्तौ चोदकानुग्रहो भविष्यति। तस्मादध्वर्योर्भागे रथो नियम्यते, न तद्भागं निवर्त्तयतीति॥ (१०।३।२१अ०)॥

इति भट्टश्रीशबरस्वामिविरचिते मीमांसाभाष्ये दशमाध्यायस्य तृतीयः पादः ॥०॥

---

* 'भागेन नियम्येत' इति का॰ श्री॰ पु॰ पाठः।



चयनादौ नारिष्ठहोमादिभिः नक्षत्रेष्ट्यादीनां समुच्चयाधिकरणम् ॥

सू० प्रकृतिलिङ्गासंयोगात् कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥ (सि०) ॥

भा० अस्ति अग्निः,—'य एवं विद्वानग्निं चिनुते' इति। तत्र नक्षत्रेष्टिः,—'अग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निर्वपेत् सोऽनुजुहोति अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा अम्बायै स्वाहा नियत्न्यै स्वाहा अभ्रयन्त्यै स्वाहा मेघयन्त्यै स्वाहा निपुणिकायै स्वाहा' इति। सन्ति तु प्रकृतौ नारिष्ठहोमाः,—'नारिष्ठान् होमान् जुहोति' इति। तत्र संशयः,—किं नारिष्ठहोमानां निवृत्तिः अथवाऽनिवृत्तिः, समुच्चयः? इति। तथा श्येने श्रूयते,—'लोहितोष्णीषा लोहितवसना निवीता ऋत्विजः प्रचरन्ति' इति। अस्ति प्रकृतौ,—'निवीतं मनुष्याणां, प्राचीनावीतं पितॄणाम्, उपवीतं देवानामुपव्ययते देवलक्ष्ममेव तत् कुरुते' इति, तदिह चोदकेन प्राप्तं। तत्र संशयः,—किमुपवीतस्य निवृत्तिः उत अनिवृत्तिः, समुच्चयः? इति। तथा पृष्ठ्ये षडहे श्रूयते,—'मध्वाशयेत् घृतं वा' इति। अस्ति तु प्रकृतौ,—'पयोव्रतं ब्राह्मणस्य यवागूराजन्यस्यामिक्षा वैश्यस्य' इति। तदिह चोदकेन प्राप्तं। तत्र संशयः,—किं तस्य निवृत्तिः उतानिवृत्तिः, समुच्चयः? इति।

किं प्राप्तं? तत्र निवृत्तिरिति, प्रत्यक्षश्रुता उपहोमादयः चोदकप्राप्तानाम् आनुमानिकानां निवर्त्तका इति। अपि च प्रकृतिलिङ्गसंयोगो भवति,—'जुहोति', 'निवीताः', 'प्रचरन्ति', 'आश्रयेत्' इति। यथा,—'शरमयं बर्हिर्भवति' इति शराः कुशान्निवर्त्तयन्ति।

एवं प्राप्ते ब्रूमः,—अनिवृत्तिः, समुच्चय इति। कुतः?। 'प्रकृतिलिङ्गासंयोगात्',—प्राकृतेन लिङ्गेन कार्येण संयोग एषाम् उपहोमादीनां नास्ति, स हि प्रत्यक्षदर्शनेन वा भवति,—'यथा नैवारश्चरुः' इति। अभावे विधानेन वा भवति, यथा,—'शुक्ला वा एतर्हि वाग् भवति यर्हि पुरुषः पक्वः सन्तिष्ठते। न वाऽत्र वदेनान्यं पृष्टेनान्यद्वै ब्रूयात् मधु आश्रयेत् घृतं वा' इति। विकारेण वा, यथा,—'नैष्कासहनसंख्यानपूतानाम्' इति। स्वशब्देन वा भवति,—यथा, 'परिधौ पशुं नियुञ्जीत' इति। प्रतिषेधेन वा भवति, यथा, 'न गिरा गिरेति ब्रूयात् यो गिरा गिरेति ब्रूयादात्मानं तदुद्गाता गिरेदैरं कृत्वोद्गेयम्' इति। अन्येन वा, येनावगम्यते प्राकृतं कार्यमभिनिर्वर्त्तयतीति, तदिह न किञ्चिदप्यस्ति। न चैतावता निवृत्तिः,—इदं प्रत्यक्षश्रुतम्, इदं चोदकेन प्राप्तमिति। प्रकृतिलिङ्गसंयोगे निवृत्तिर्भवति नान्यथा।

'नन्विहाप्युक्तो,—भवतीह प्रकृतिलिङ्गसंयोगः,—'जुहोति', 'निवीताः', 'प्रचरन्ति', 'आश्रयेत्' इति। उच्यते,—'प्रकृतानां जुहोत्यादीनां जुहोत्याद्यन्तराणि इमानि विधीयन्ते। तत्र तावत् जुहोतिरदृष्टार्थः, कथमसौ अन्येन प्राकृतस्यार्थे वर्त्तेत इति। तथा, उपवीतमदृष्टार्थं, कथं तस्य कार्ये निवीतं वर्त्तेत इति गम्यते। तथा,

अतं इत्यर्थं, मध्वशनं घृताशनञ्च तस्मिन्नर्थे वर्त्तेत इत्येतच्च शाख्यत एव। तस्मान्नास्ति प्रकृतिलिङ्गसंयोगः।

अथोच्यते,—'नैवोपहोमा जुहोत्यन्तरं, प्रकृते होमे मन्त्रो विधीयते' इति। तच्च न, विधायकस्याभावात्; 'योऽनु जुहोति' इति परिसमाप्ते वाक्ये केवलस्य मन्त्रस्याम्नानं, नास्ति वचनम्,—एवं जुहोतीति। भिन्नान्येतानि वाक्यानि,—'योऽनु जुहोति' इति विधिवाक्यम्, 'अग्नये स्वाहा कृत्तिकाभ्यः स्वाहा' इत्येवमादीनि मन्त्र-वाक्यानि। तस्मात् न मन्त्रविधानार्थं जुहोतेः पुनःश्रवणं। होम-विधानार्थे श्रुतिर्विधायिका भवति, मन्त्रविधाने वाक्यं, तस्मादपि न मन्त्रविधानं, अतः समुच्चयः। उभयमपि प्रमाणेन प्राप्तं,—प्रत्यक्षश्रवणं प्रमाणं, चोदकोऽपि प्रमाणं, नानाकार्यत्वाच्चैतयोर्विरोधः। तस्माद्यथा, प्रयाजादीन्न बाधन्ते एवं नारिष्टहोमानपि न बाधेरन्। अत एवंजातीयकं 'कर्मसंस्कारं विकृतावधिकं स्यात्' इति॥

सू॰ चोदनालिङ्गसंयोगे* तद्विकारः प्रतीयेत प्रकृति-सन्निधानात्॥ २॥ (आ॰ नि॰)॥

भा॰ अथ यदुक्तं,—'शरमयं वर्हिर्भवति' इति यथा शराः कुशान् निवर्त्तयन्ति, एवमिहापीति। अत्रोच्यते,—'युक्तं शरमये, भवति हि तत्र प्रकृतिलिङ्गेन संयोगः,—वर्हिःशब्देन, एवंविशिष्टं वा वर्हिर्भवति, शरा वा वर्हिषः कार्ये वर्त्तन्त इति; इह तु प्रकृतिलिङ्गासंयोगः, तस्माद्विषमं वर्हिषेति॥ (१०।४।१अ॰)॥

* चोदनालिङ्गसंयोगे इति क॰ सं॰ पु॰ पाठः। एवं परत्र।

शरमयबर्हिषा कौशबर्हिर्बाधाधिकरणम्॥ (प्रथमवर्णकम्)॥

एवं वा। इदमाम्नायते,—'सोमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणामभिचरन्' इति। तत्रेदं श्रूयते, 'शरमयं बर्हिर्भवति' इति। तत्र संशयः,—'किं कौशं निवर्त्तते, न?' इति। किं प्राप्तं?—उभयस्य प्रमाणावगतत्वात् समुच्चयः।

एवं प्राप्ते ब्रूमः,—'चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत' इति। अस्ति हि तत्र प्रकृतिलिङ्गेन बर्हिःशब्देन संयोगः, तस्मात् प्राकृतस्य निवृत्तिरिति॥

---

वाजपेये रथघोषदुन्दुभिघोषाभ्यां दर्भमन्त्रयोरुभयोरेव बाधाधिकरणम्॥ (द्वितीयवर्णकम्)॥

एवं वा,—अस्ति वाजपेयः,—'शरदि वाजपेयेन स्वाराज्यकामो यजेत' इति। तत्र श्रूयते, 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति। दुन्दुभिघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोति' इति। अस्ति च प्रकृतौ,—'उपावर्त्तध्वमिति दर्भाभ्यां स्तोत्रमुपाकरोति' इति। तदिह चोदकेन प्राप्तं। तत्र संशयः,—'किं रथघोषेण दुन्दुभिघोषेण यो नादः स मन्त्रस्य निवर्त्तकः, यत् द्रव्यं तत् दर्भयोः, उतोभयम् उभयस्य निवर्त्तकम्'? इति। किं प्राप्तं?,—शब्दत्वेन सामान्येन नादो मन्त्रस्य निवर्त्तकः, द्रव्यत्वेन द्रव्यं दर्भयोः। 'ननु तत्पुरुषनिर्देशोऽयं, तेन परार्थेन रथस्य घोषविशेषणत्वेनोच्चारणं, न स्वकार्येण निर्देशः'।

अत्रोच्यते,—द्वन्द्वनिर्देशोऽपि ईदृशो भवति, तत्रायमप्यर्थः, न रथः परार्थ उच्चरिष्यते; श्रुतिर्हि तथा हीयेत, लक्षणा च स्यात्;

चोदनालिङ्गसंयोगश्च बाध्येत, तस्मात् घोषेण मन्त्रस्य निवर्त्तको द्वयो-र्द्वयोः इति ।

एवं प्राप्ते ब्रूमः,—'चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत', उभयत्र चोदनालिङ्गसंयोगो नैकैकस्य, रथघोषेणेति श्रूयते, न रथेन घोषेण चेति; रथविशिष्टो घोषो लक्षणं स्तोत्रोपाकरणस्य, प्रकृतौ दर्भौ लक्षणं मन्त्रस्य । 'ननु इदानीमेकैकस्य द्वन्द्वनिर्देशो भविष्यति' इति । नैतदेवं, द्विवचनं हि तथा स्यात्, एकवचनेन च निर्देशः, तेनैको लक्षणं, स च घोषः, तेन हि समभिव्याहारः तृतीयायाः । 'ननु समुदायेन समभिव्याहारो भविष्यति' । न हि समुदायस्य अशब्दार्थत्वात् । अथ समुदायो निर्दिश्येत, ततोऽभ्युपगतमुभयस्य निवर्त्तकमिति । 'ननु मन्त्रो वाचक एव उपावर्त्तध्वमिति' । नेत्युच्यते, उपावर्त्तनमात्रस्याभिधायको मन्त्रो न चोपावर्त्तनमात्रं स्तोत्रोपाकरणं । अथाप्यभिधानं स्यात्, तथापि तस्य निवर्त्तकः, लक्षणेनोपाकर्त्तव्यमितिप्रत्यक्षा श्रुतिः, अभिधानेन उपाकर्त्तव्यमिति चोदकः, श्रुतिश्च चोदकाद्बलीयसी । तस्मादुभयस्य निवर्त्तको रथघोषो दुन्दुभिघोषस्येति । किं भविष्यति प्रयोजनं ? यदि रथो न घोषविशेषणम्, अरथविशिष्टोऽपि घोषस्तोत्रोपाकरणं लक्षयेदिति ॥ (१०।४।२अ०) ॥

---

इत्यतिसंवादो बार्हस्पत्यमन्त्रादिभिः प्राकृतेन्द्रवायवादिमन्त्राणां समुच्चयाधिकरणम् ॥

सू० सर्वेषां तु महाम्नानमधिकं स्यात् प्रकृतिवत् ॥

॥ ३ ॥ (सि०) ॥

भा० बृहस्पतिसवे श्रूयते,—'बार्हस्पत्यं ग्रहं गृह्णाति विपुक्यकं* ग्रहं गृह्णाति' इति। महाव्रते 'शुक्रग्रहं गृह्णाति' इति। अश्वमेधे 'सौवर्णराजताभ्यां महिमानौ ग्रहौ गृह्णाति' इति। सन्ति तु प्रकृतौ ऐन्द्रवायवादयो ग्रहाः, त इह चोदकेन प्राप्ताः। तत्र संशयः,—वैकृतैस्ते निवर्त्त्यन्ते, उतानिवृत्तिः, समुच्चयः? इति। किं प्राप्तं?—प्रत्यक्षश्रुता वैकृताश्चोदकप्राप्तान् प्राकृतान् निवर्त्तयितुमर्हन्ति, अस्ति हि तेषां प्रकृतिलिङ्गेन ग्रहशब्देन संयोगः इति।

एवं प्राप्ते ब्रूमः,—तत्र तत्र सर्वत्र ग्रहागममधिकं भवितुमर्हति, प्राकृतस्यानिवृत्तिः इति। कुतः?। उभयेषां प्रमाणावगतत्वात्, चोदकोऽपि प्रमाणं, प्रत्यक्षश्रवणमपि। 'ग्रहशब्दः प्रकृतिलिङ्गम्' इति चेत्। नैवं, यदि ग्रहशब्दमुच्चार्य गुणो विधीयते, ततः प्राकृता एव ग्रहा गुणविकृता भवेयुः। अथ ग्रहसम्बन्धेनापूर्वो विधीयते, ततो ग्रहकार्ये वर्त्तेत इति प्राकृतं निवर्त्तयेत्, यथा, 'खलेवाली यूपः' इति; अन्यः पुनरेष ग्रहशब्दो ग्रहणवचनः, अर्कं नाम ग्रहं गृह्णाति, महिमानौ नाम ग्रहौ गृह्णाति इति। अत्रापूर्वा ग्रहणक्रिया विधीयते। तस्मान्न ग्रहशब्दश्चोदनालिङ्गमेकार्थानां हि विकल्पो वा बाधो वा भवति, न चैषां वैकृतैरेकार्थता।

ननु 'यागनिर्वृत्त्यर्थाः सर्वे, तेनैषामेकार्थता' इति। उच्यते,—यागं प्रति संहत्यकारिण एते, न निरपेक्ष एकैक एषां साधकः, न चैषां पृथक्त्वेन यागसम्बन्धः,—'अर्कैण यजेत, शुक्रेण यजेत' इति, कथन्तर्हि प्रयोगवचन एषां ग्राहकः, स च सन्निहितानां, न च

* विपुषत्यार्कं इति का० क्री० पु० पाठः।

सन्निधाने विशेषोऽस्ति, तस्मात् सर्वेषां प्राकृतानां वैकृतानाञ्च संग्राहकः 'प्रकृतिवत्', यथा प्रकृतौ ऐन्द्रवायवग्रहणं चोदितं, मैत्रावरुणग्रहणं पुनश्चोद्यते, विभागश्चादृष्टार्थः संस्कारो देवतोद्देशश्च, अदृष्टत्वात् कार्यस्य, न ज्ञायते पूर्वं उत्तरस्य कार्यं भवति इति, प्रयोगवचनग्रहणाच्च समुच्चयः, न केवलं मैत्रावरुणादिभिः सह अप्रकरणाधीताभ्यामंश्वदाभ्यामपि। एवं विकृतावपि समुच्चयो भवितुमर्हति।

आह,—'ननु ग्रहं सङ्कीर्त्य गुणो विधीयते,—'अश्वमेधे सौवर्णराजताभ्याम्' इति। अत्रोच्यते,—न तौ प्राकृतौ ग्रहौ "सङ्ख्या वोत्पत्तिसंयोगात्" इति ग्रहकर्मणी भिद्येते। आह,—'इह तर्हि वार्हस्पत्यं गृह्णाति' इति देवताविधानार्थं स्यात्'। उच्यते,—ग्रहे विधीयमाने श्रुतिरनुगृहीता, देवतायां वाक्यं, श्रुतिश्च वाक्याद्बलीयसी। आह,—'आग्नेयवत्, यथा अग्निष्टुति आग्नेया ग्रहा भवन्तीति देवताविधानं भवति, एवमेकवचनान्तेनापि तस्याविवक्षितत्वात्, यथा, 'ग्रहं समार्ष्टि' इति सर्वग्रहाणां सम्मार्गोऽभिधीयते, एवमिहापि सर्वग्रहाणां देवता विधीयते'। अत्रोच्यते,—उक्तमेतच्छ्रुतेर्बलीयस्त्वादिति। आग्नेया ग्रहा भवन्तीति तु वाक्यमविरुद्धं श्रुत्या, न हि तत्राग्नेयं ग्रहं गृह्णातीति, आग्नेयसत्ता तत्र वाक्येन श्रुत्यविरुद्धेन चोद्यमाना युक्तैवेति। तस्मात् प्राकृतेभ्यो व्यतिरिक्तो वार्हस्पत्यः प्राकृतैः समुच्चीयते। यथा प्रकृतौ 'अंशुं गृह्णाति अदाभ्यं गृह्णाति' इति अप्राकरणिकौ प्राकरणिकैः समुच्चीयेते, एवमिहापि वैकृताः समुच्चीयेरन्निति॥

सू० अधिकैश्चैकवाक्यत्वात् ॥ ४ ॥ (यु०) ॥

भा० इतश्च पश्यामः समुच्चय इति। कुतः?। निःसन्दिग्धैश्च 'अधिकैः' सुराग्रहैरेकवाक्यत्वं भवति। कथं?। 'सप्तदश एते ग्रहा गृह्यन्ते द्वये प्राजापत्याः सोमग्रहाः सुराग्रहाश्च', अत्र व्यक्तमधिकाः सुराग्रहाः, तेषु 'गृह्यन्ते' इति ग्रहणं चोद्यते, नानूद्यते। सकृदुच्चरितः 'गृह्यन्ते' इति शब्दः सोमग्रहैरपि सम्बध्यते। तस्माच्चोदनान्तरं ग्रहाणामनेन असन्दिग्धेन अन्यदप्येवमेवावगम्यते ॥

सू० लिङ्गदर्शनाच्च ॥ ५ ॥ (हे०) ॥

भा० लिङ्गमप्येतमर्थं दर्शयति। किं?। 'विरण्शो वा एष यज्ञक्रतुर्यद् वाजपेय अतीव ह्यग्निष्टोमं क्रामत्युक्थ्यमति षोडशिनं नातिरात्रम् आप्नोति' इति। विरण्शशब्दो विस्तीर्णे भवति, यथा विरण्शानि अरण्यानि विस्तीर्णानीति गम्यते, यदि समुच्चयः, एवं विस्तीर्णता, बाधायां नोपपद्यते, तस्मादपि समुच्चय इति ॥ (१०।४।२अ०)॥

---

वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुच्चयाधिकरणम् ॥

सू० प्राजापत्येषु चाम्नानात् ॥ ६ ॥

भा० अस्ति वाजपेयः,—'वाजपेयेन स्वाराज्यकामो यजेत' इति। तत्र प्राजापत्याः पशवः, 'सप्तदश प्राजापत्यान् पशूनालभते' इति। सन्ति तु प्रकृतौ क्रतुपशवः, ते इह चोदकेन प्राप्ताः। तत्र संशयः,—

किं ते प्राजापत्यैः क्रतुपशवो बाध्यन्ते, उत समुच्चीयन्ते? इति। किं प्राप्तं?—प्रत्यक्षाः प्राजापत्याः चोदकप्राप्तान् क्रतुपशून् बाधेरन्निति।

एवं प्राप्ते ब्रूमः,—'प्रजापत्येषु च' समुच्चयः स्यात्। चशब्दः अन्वाचयार्थः। आम्नायन्ते हि क्रतुपशवः,—'ब्रह्मवादिनो वदन्ति, नाग्निष्टोमो नोक्थ्यो न षोडशी नातिरात्रः इति। अथ कस्माद् वाजपेयेन सर्व्वे यज्ञक्रतवोऽवरुध्यन्ते, पशुभिरिति ब्रूयात् यदाग्नेयं पशुमालभतेऽग्निष्टोमं तेनावरुन्धे ऐन्द्राग्नेनोक्थ्यम् ऐन्द्रेण षोडशिनं सारस्वत्याऽतिरात्रं मारुत्या बृहत्स्तोत्रमेतावन्तो वै यज्ञक्रतवस्तान् पशुभिरेवावरुन्धे' इति समुच्चयं दर्शयति। 'ननु दर्शनमिदमुपदिश्यते, कोऽत्र न्यायः?' इति। उच्यते,—प्रकृतिलिङ्गासंयोगः। 'ननु पशुशब्दः प्रकृतिलिङ्गं'। नेत्याह,—नात्र पशुमनूद्य देवता विधीयते, सङ्ख्याश्रवणात्; सङ्ख्यादेवताश्रवणात् कर्मान्तरं चेदमुक्तं, पृथक्त्वनिवेशात् सङ्ख्यया कर्मभेदः स्यात् इति। अतो ग्रहाणामिव समुच्चयो भवितुमर्हतीति॥ (१०।४।४अ०)॥

---

साङ्ग्रहणीष्टौ आमनहोमैः अनुयाजानां समुच्चयाधिकरणम्॥

सू० आमने लिङ्गदर्शनात्॥ ७॥

भा० अस्ति सांग्रहणीष्टिः,—'वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामः' इति। तत्र श्रूयते,—'आमनमस्या देवा इति तिस्र आहुतीर्जुहोति' इति। सन्ति तु प्रकृतौ त्रयोऽनुयाजाः, तेऽत्र चोदकेन प्राप्ताः। तत्र संशयः,—किमामनहोमैरनुयाजा निवर्त्तन्ते, उत तैः समुच्चीयन्ते?

इति। किं प्राप्तं?,—प्रत्यक्षश्रुतैरामनहोमैरानुमानिका अनुयाजा निवर्त्त्येरन्। अपि च चिह्नं प्रकृतिलिङ्गयोगो भवति।

एवं प्राप्ते ब्रूमः,—'आमने' समुच्चयः स्यात्। कुतः?। 'लिङ्ग-दर्शनात्',—लिङ्गं हि इममर्थं दर्शयति। किं लिङ्गं?। 'बहिरात्मा वै प्रयाजानुयाजा आत्मा देवता यत् प्रयाजानुयाजानां पुरस्ताद्वा उपरिष्टाद्वा जुहुयाद्बहिरात्मानं सजातानामादधीत, अथ यन्मध्यतो जुहोति मध्यत एव सजातानामात्मानं धत्ते' इति अनुयाजानाम् अनिवृत्तिं दर्शयति। आह,—'ननु चिह्नं प्रकृतिलिङ्गसंयोगः'। नेत्याह,—न हि सङ्ख्यामात्रमनूद्य शक्यते गुणो विधातुं, न हि, कस्यचित् काचित् सङ्ख्या न भवति। तस्मान्न सङ्ख्या प्रकृतिलिङ्गसंयोगः। 'लिङ्गदर्शनं लिङ्गम् अपदिष्टं, प्राप्तिश्च वक्तव्येति'। उच्यते,—'आहुती-र्जुहोति' इति श्रुत्या आहुतिसत्ता, वाक्येन मन्त्रविधानं, त्रिसङ्ख्या चानुवादत्वेनावकल्पते; सङ्ख्यामन्त्रवन्ति तु यागान्तराणि विधीयन्ते। तेषां चोभयप्रमाणावगतत्वात् समुच्चयो न्याय्य इति॥ (१०।४। ५अ०)॥

---

महाव्रते ऋत्विगुपगानस्य पत्न्युपगानेन समुच्चयाधिकरणम्॥

## सू० उपगेषु शरवत् स्यात् प्रकृतिलिङ्गसंयोगात्॥ ॥८॥ (पू०)॥

भा० महाव्रते श्रूयते,—'पत्न्य* उपगायन्ति पिच्छोलाभिरुप-

---

* 'पत्नयः' इति माधवसम्मतः पाठः।

गायन्ति, काण्डवीणादिभिरुपगायन्ति आपाटलिकाभिरुपगायन्ति' इति। अस्ति तु प्रकृतौ 'ऋत्विज उपगायन्ति' इति। तदिह चोदकेन प्राप्यते। तत्रायमर्थः सांशयिको भवति,—किं पत्नीभिः 'उपगायन्ति' इति ऋत्विज उपगायन्तो निवर्त्त्यन्ते, उत न निवर्त्त्यन्ते? इति। तत्रैतत् तावच्चिन्त्यते,—किं गानोपगानमेतत्, उत वादित्रोपगानम्? इति; तत्रापि द्वैतं,—किं गानस्योपगानम्, गानोपगानं, उत गानमेवोपगानं गानोपगानम्? इति। किं तावत् प्राप्तं?—प्राकृतं निवर्त्त्यते इति। तत इदं वर्ण्यते,—गानस्योपगानमिति, पत्न्यो गायतां गानमुपचिन्वन्ति इति, गानं प्राप्तमेव प्राकृतम्, उपचय उपसर्गार्थो विधीयते। तस्माद्गानस्योपगानम् इति।

अथ वा गानमेवोपगानं, गानशब्दो हि शारीर्यां गीतौ प्रसिद्धः, तस्माद्गानमेतदुपगानं, गानस्य चोपगानमिति। यदा एतयोरन्यतरं, तदा ऋत्विक्कार्ये पत्न्यो वर्त्तन्ते। अतः 'प्रकृतिलिङ्गसंयोगात्' प्रत्यक्षश्रुतेन चोदकप्राप्तं निवर्त्त्यते 'शरवत्',—यथा 'शरमयं बर्हि-र्भवति' इति शराः प्रत्यक्षश्रुताः चोदकप्राप्तान् दर्भान् निवर्त्तयन्ति, एवमिहापीति॥

सू॰ आनर्थक्यात् त्वधिकं स्यात्॥ ६॥ (सि॰)॥

भा॰ तुशब्दः पक्षं व्यावर्त्तयति,—न निवृत्तिरिति, समुच्चयः स्यात्। तत एतच्चिन्त्यते,—वादित्रस्यैतदुपगानम्, अस्ति ह्यत्र वादित्रं,— 'दिवि दुन्दुभयो नदन्ति' इत्येवमादि, तस्योपगानं वादित्रस्योपगानं। कथं?। प्रत्ययेन हि श्रुत्या धात्वर्थस्य सत्ता उच्यते, विप्रकृष्टा

उपसर्गार्थस्य सत्ता अर्थविप्रकर्षात् दुर्बला भवति। तस्मादुपसर्गार्थसत्ताविधानं धात्वर्थसत्ताविधानेन बाध्यते।

अथ वा वादित्रमिदमुपगानं, एवं ह्याह,—'पत्न्य उपगायन्ति काण्डवीणादिभिरुपगायन्ति' इति। काण्डवीणादिभिर्वादित्रमुपगानं भवति, भवति च तन्त्रीगाने गानशब्दः। तस्माद् वादित्रमुपगानं। तत्र यद्येवं वादित्रस्योपगानं, यदि वा वादित्रमुपगानम्, उभयथा प्राकृतादर्थान्तरे भवति। तस्मात् समुच्चयः। कुतः?। 'आनर्थक्यात्',—एवं चोदकानर्थक्यं न भविष्यति, चोदकोऽनुग्रहीष्यतीत्यर्थः। तस्मात् समुच्चय इति॥ (१०।४।६अ०)॥

---

अञ्जनाभ्यञ्जने नवनीताभ्यञ्जनस्य गैग्गुलवाभ्यञ्जनादिभिः समुच्चयाधिकरणम्॥

## सू० संस्कारे चान्यसंयोगात्॥ १०॥ (सि०)॥

भा० अस्ति अञ्जनाभ्यञ्जनो नाम एकोनपञ्चाशद्रात्रः। तत्रेदं समाम्नायते,—'गैग्गुलवेन प्रातः सवने समञ्जते अभि वाञ्जते पैतुदारवेण माध्यन्दिने सवने सौगन्धिकेन तृतीयसवने' इति। अस्ति तु प्रकृतौ नवनीतेनाभ्यञ्जनं, तदिह चोदकेन प्राप्तं। तत्र संशयः,—'किं तद् वैकृतेन बाध्यते, उत न? इति। किं प्राप्तं?। प्रत्यक्षश्रुतत्वात् वैकृतेषु 'अञ्जते' 'अभि वाञ्जते' इति च, प्रकृतिलिङ्गसंयोगाद्बाध्यते इति। आह,—'ननु सुत्याकालम् अञ्जनमभ्यञ्जनञ्च सत्रे, दीक्षाकाले नवनीतेनाभ्यञ्जनं प्रकृतौ, अन्यकालत्वात् प्रयोजनान्तरे वर्त्तते इति बाधो न स्यात्'। उच्यते,—'प्रयाजवदन्यकालमपि तत्कार्यमेव द्रष्टव्यं,

कालमात्रमन्यत्, पदार्थस्तु स एव; यथा 'तिष्ठन्तं पशुं प्रयजन्ति' इति तिष्ठति पशौ प्रयाजा वर्त्तमानाः प्राकृतकार्यका एव भवन्ति, एवमिहापि द्रष्टव्यम्।

एवं प्राप्ते ब्रूमः,—'संस्कारे' अञ्जनेऽभ्यञ्जने च प्राकृतेन सह समुच्चयः स्यात्। कुतः?। 'अन्यसंयोगात्'। अन्यकालमिदं कार्यान्तरे वर्त्तते, एवं चोदकोऽनुग्रहीष्यते। तस्मात्समुच्चयः इति॥

सू॰ प्रयाजवदिति चेत्॥ ११॥ (आ॰)॥

भा॰ इति यदुक्तं तत्परिहर्त्तव्यम्॥

सू॰ नार्थान्यत्वात्॥ १२॥ (आ॰ नि॰)॥

भा॰ 'न' च प्रयाजवत् भवितुमर्हतीति। कुतः?। 'अर्थान्यत्वात्',—स्नेहनार्थम् आदौ नवनीतं सुखप्रचाराय; प्रवृत्ते कार्ये सुत्याकालं गौग्गुलवेनाभ्यञ्जनं विरूक्षीकरणार्थं प्रत्यक्षं कार्यान्तरे वर्त्तेत इति, न प्राकृतं निवर्त्तयितुमर्हति॥ (१०।४।७अ॰)॥

———

महाव्रते चरतवाससः तार्प्यादिभिः समुच्चयाधिकरणम्॥

सू॰ आच्छादने त्वैकार्थ्यात् प्राकृतस्य विकारः स्यात्॥ १३॥ (पू॰)॥

भा॰ महाव्रते श्रूयते,—'तार्प्यं * यजमानः परिधत्ते दर्भमयं पत्नी'

* घृताक्तः कम्बलः तार्प्यमित्युच्यते इति माधवः।

इति। अस्ति तु प्रकृतौ,—'अहतवासः परिधत्ते' इति; तदिह चोदकेन प्राप्तं। तत्र संशयः,—'किम् अहतस्य वाससो निवृत्तिः, न? इति। किं प्राप्तम्?। 'आच्छादने तु' 'प्राकृतस्य विकारः स्यात्'। कुतः?। 'एकार्थ्यात्',—एको ह्यर्थः प्राकृतस्य वैकृतस्य च कौपीनम् आच्छादयितुं, प्रकृतौ विकृतौ च प्रच्छादनं क्रियते। तस्मात् प्रत्यक्षश्रुतेन चोदकप्राप्तं निवर्त्तेत॥

सू० अधिकं वान्यार्थत्वात्॥ १४॥ (सि०)॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,—'अधिकम्' इदं प्राकृताद्वाससो भवितुमर्हति इति। कुतः?। तत् हि निवर्त्तकं भवति, यदनिवर्त्त्य न शक्नोति निवेष्टुं, यत् तु अनिवर्त्त्यापि शक्नोति भवितुं, न तत् निवर्त्तयति, तत् हि निवर्त्तयत् अप्रतिषेधकं सत् चोदकं प्राप्तं बाधेत। ननु— 'कौपीनप्रच्छादने 'परिधत्ते' इति भवति, नान्यकार्य्ये'। उच्यते,— नैतदेवं, उपरि वाससोऽपि कार्य्ये 'परिधत्ते' इति भवति; तद्यथा,— कम्बलं परिधत्ते, रौरवं परिधत्ते इति; सर्वतो धत्ते परिधत्त इति अवयवप्रसिद्धा भवति। तस्मादहतस्य वाससो न निवृत्तिः, समुच्चय इति॥

सू० समुच्चयञ्च दर्शयति॥ १५॥ (यु०)॥

भा० 'समुच्चयञ्च' वासःशब्देन बहुवचनान्तेन 'दर्शयति',—'वासांसि वाराही चोपानहौ विमुञ्चति' इति। 'कृष्णविषाणया वासांसि विस्रंसयति, ततोऽध्वर्युः परिधत्ते' इति। तस्मादपि पश्यामो अनिवृत्तिः समुच्चय इति॥ (१०।४।८अ०)॥

महाव्रते रथन्तरादिसाम्नां श्लोकादिसामभिः समुच्चयाधिकरणम् ॥

सू० सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १६ ॥

भा० महाव्रते श्रूयते,—'श्लोकेन पुरस्तात् सदसः स्तुवते अनुश्लोकेन पश्चात् सदसः क्रोशेन चात्वालमवेक्षमाणाः' इति। सन्ति तु प्राकृतानि सामानि इह चोदकेन प्राप्तानि। तत्र संशयः,—'किं प्राकृतानां साम्नां निवृत्तिः, उत अनिवृत्तिः, समुच्चयः? इति। किं प्राप्तं?। 'स्तुवते' इति प्रकृतिलिङ्गसंयोगे प्रत्यक्षश्रुते चोदकप्राप्तानि सामानि निवर्त्त्यन्ते इति। यथा,—'कौत्सं भवति, काण्वं भवति, वसिष्ठस्य जनित्रे भवतः, शुद्धाशुद्धीये भवतः, भर्गयशसी भवतः'। 'क्रोशानि भवन्ति' इति श्रुतेषु चोदकप्राप्तानि निवर्त्त्यन्ते, एवमिहापि द्रष्टव्यम्॥

एवं प्राप्ते ब्रूमः,—'सामसु' 'श्लोकेन पुरस्तात् स्तुवते' इत्येवमादिषु श्रूयमाणेषु प्राकृतानाम् 'अविकारः प्रतीयेत'। कुतः?। 'अर्थान्तरश्रुतेः',—अर्थान्तरेण हि सम्बन्धः श्रूयते,—'पुरस्तात् सदसः स्तुवते' इत्येवमादिषु। यच्च पदं केनचित् पदेन सम्बध्यते विशेषणत्वेन न तत् पदान्तरेण सह सम्बन्धमर्हति सकृदुच्चरितं। यथा,—'भार्या राज्ञः, पुरुषो देवदत्तस्य' इति भार्याविशेषणत्वेनोच्चार्यमाणः 'राज्ञः' इतिशब्दो न पुनः पुरुषशब्देन सम्बध्यत इति, एवं 'पुरस्तात् सदसः स्तुवते' इत्यनेन सम्बध्यमानो न पुनः 'श्लोकेन' 'स्तुवते' इति सम्बन्धमर्हति।

यदि स्तुतौ देशसत्ता विधीयते, श्लोकेन चेति अनूद्येत, तत उपपद्येत एकं वाक्यमिति। यदा तु पुनर्देशसत्ता विहिता, तदा परिपूर्णं वाक्यं, श्लोकेन चेत्येतदपि विधातव्यं, तदा पुनर्विधिप्रत्ययो

हृदयम् आनेतव्यः, हृदयम् आनेतुमुच्चारयितव्यः ; न चोच्चारितः, तस्मात् अनुच्चारितो वा कल्पयितव्यः, उच्चारणं वा कल्पयितव्यं, कल्पनायाञ्च शब्दो बाध्येत! तस्मात् नैवं ; कथन्तर्हि ?,—देशसाम-विशिष्टा स्तुतिः श्रुत्या विधीयते, न चैकेन केनचित् सम्बन्धे विहिते, परिपूर्णे वाक्ये पुनरपरं वाक्यं कल्पयितव्यं भवति ; उभयविशेषण-विशिष्टा हि स्तुतिः श्रुत्या यदा विहिता, तदा परिपूर्णं वाक्यं, न तदा पुनरपरेण केनचित् सम्बन्धः कल्पयितव्यो भवति, यदर्थं किञ्चित् हिरुच्चार्येत, तस्मात् स्तुत्यन्तरमिदं विधीयते, न प्राकृतं निवर्त्त्यते, समुच्चयः इति ॥

सू॰ अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकारः स्यात् ॥ १७ ॥ (यु॰) ॥

भा॰ अथ यदुपवर्णितं,—यथा—'कौत्सं भवति, काण्वं भवति, वशिष्ठस्य जनित्रे भवतः' इत्येवमादिभिरिव प्राकृतानां निवृत्तिः,—इति, तत् परिहर्त्तव्यं। अत्रोच्यते,—युक्तमत्र यत् प्राकृतं निवर्त्त्यते, अत्र हि अर्थान्तरं न श्रूयते, प्राकृतस्यैव शेषः श्रूयते, तस्मात् तत्र वैकृतेन प्रत्यक्षश्रुतेन प्राकृतस्य निवृत्तिरिति, इह तु अर्थान्तरश्रवणाद् वाक्यभेदप्रसङ्गात् अनिवृत्तिरित्युक्तम् ॥

---

विकृतिविशेषे प्राकृतसाम्नां कौत्सादिभिर्बाधाधिकरणम् ॥
( द्वितीयवर्णकम् ) ।

एवं वा,—क्वचित् श्रूयते,—'कौत्सं भवति, काण्वं भवति, वशिष्ठस्य जनित्रे भवतः, क्रुङ्क्राङ्क्रुङ्कीये भवतः, भर्गयशसी भवतः, क्रौञ्चानि

भवन्ति' इति, सन्ति तु प्रकृतौ सामानि तत्र चोदकेन प्राप्तानि; किं तानि निवर्त्तेरन्, न ?—इत्येषोऽर्थः सन्दिह्यते । किं प्राप्तं? । अनिवृत्तिः, समुच्चय इति । कुतः? । साममात्रं विधीयते, न 'स्तुवते' इति प्रकृतिलिङ्गसंयोगोऽस्ति । तस्मादधिकमिति ।

एवं प्राप्ते ब्रूमः,—

सू० अर्थे त्वश्रूयमाणे शेषत्वात् प्राकृतस्य विकारः स्यात् ॥ १७ ॥

भा० तुशब्दः पक्षं व्यावर्त्तयति,—अश्रूयमाणेऽप्यर्थे प्राकृतस्य विकारः स्यात्; शेषभूतं हि प्रकृतौ साम, इदमपि साम श्रूयते, तत्सामत्वेन सामान्येन साम्नः कार्ये भवितुमर्हति । तद्यथा,—दधि घृतं शाकं शालयः देवदत्तो भोजयितव्यः, देवदत्तवत् यज्ञदत्तस्तैलेनेति, यद्यपि तैलेन स्नेहयितव्य इति न श्रूयते, तथापि स्नेहने एव तैलं भवति, तत्समर्थत्वात्; एवं यद्यपि साम्ना ऋक् संस्कर्त्तव्येति न श्रूयते, एवमपि तत्समर्थत्वात् साम ऋक्संस्कारे एव भवितुमर्हति ॥ (१०।४।९ अ०) ॥

---

कौत्सादिभिर्व्यवस्थया रकादिबाधाधिकरणम् ॥

सू० सर्वेषामविशेषात् ॥ १८ ॥ (पू०) ॥

भा० क्वचित् श्रूयते,—'कौत्सं भवति काण्वं भवति वसिष्ठस्य जनित्रे भवतः [illegible] भवतः भर्गयशसी भवतः क्रौञ्चानि भवन्ति' इति; सन्ति तु प्राकृतानि सामानि तत्र चोदकेन प्राप्तानि, तानि

प्राकृतानां निवर्त्तकानीत्येतत् समधिगतं। अथेदानीं सन्दिह्यते,—किं सर्वाणि सर्वेषां निवर्त्तकानि, अथ किमेकम् एकस्य, द्वे द्वयोः, बहूनि बहूनाम्? इति। किं तावत् प्राप्तं?,—सर्वाणि सर्वेषामिति। कुतः?। विशेषाभावात्, न हि विशेषः कश्चिदस्ति, येनावगम्यते,—इदमस्य निवर्त्तकं, नान्यस्येति। तस्मात् सर्वं सर्वस्य निवर्त्तकमिति॥

सू॰ एकस्य वा श्रुतिसामर्थ्यात् प्रकृतेश्चाविकारात्॥
॥ १९ ॥ (सि॰)॥

भा॰ न चैतदस्ति,—सर्वाणि सर्वेषां निवर्त्तकानीति; एकमेकस्य, द्वे द्वयोः, बहूनि बहूनाम् इति। कुतः?। 'श्रुतिसामर्थ्यात्',—'कोशं भवति कार्णं भवति' इति एकैकस्य निवृत्तिं कृत्वा श्रुतिः समर्था अर्थवतीति। एवं 'वसिष्ठस्य जनित्रे भवतः इन्द्राग्न्योर्जिघ्ने भवतो भर्गवसती भवतः' इति द्वयोर्निवृत्तौ कृतायां श्रुतिसामर्थ्यमनुगृहीतं भवति। यथा 'स्तोत्राणि भवन्ति' इति बीभिः त्रिषि निवर्त्ये कृतसामर्थ्या श्रुतिर्भवति। यद्येकस्मिन् श्रुते एकमेव निवर्त्यते, ततो यावत्येव असौ प्रवृत्ता प्राकृती सामसङ्ख्या तावत्येव भवति, एवं सर्वत्र। किमेवं भविष्यति?। प्रकृतेरविकारः, प्राकृतानामवशिष्टानां साम्नां यत्नं भविष्यति, तच्च चोदकोऽनुग्रहीष्यते। तस्मादेकम् एकस्य निवर्त्तकं, द्वे द्वयोः, बहूनि बहूनामिति॥ (१०।४।१०अ॰)॥

---

विवृद्धाविवृद्धस्तोमकक्रतुषु यथाक्रमं प्राकृतसामबाधाबाधाधिकरणम् ॥

सू॰ स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वाच्च ॥ २० ॥

भा॰ सन्ति विवृद्धस्तोमका अविवृद्धस्तोमकाश्च क्रतवः,—'एकत्रिंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति। तथा 'द्वात्रिंशाः पवमाना अभिषेचनीयस्य'। तत्र नव राजसामानि, एकादश राजसामानि, वसौधश्रवसे वशिष्ठस्य जनित्रे च साकम्प्रवेदनान्याहुः। शुद्धाशुद्धीये च संश्रवोपपदे चोभे। तथा रथहविर्धाने पुनःस्तोमस्य यज्ञस्य, तथा अपचितिवत्यः पुनःस्तोमस्य यज्ञस्य,—

'पुनःस्तोमस्य सवनं मध्यमं द्वादशं स्मृतम्।
कार्यौ नवदशस्तोमावभितः सवने उभे' ॥ इति।

तदत्र क्वचित् प्राकृती स्तोमसङ्ख्या विवृद्धा, क्वचिद्धीना। तत्र सन्देहः,—किं विकृतौ विवृद्धौ हानौ च प्राकृतानां साम्नां निवृत्तिः, उत हानौ निवृत्तिः, विवृद्धावनिवृत्तिः? इति। किं प्राप्तं?। उभयत्र निवृत्तिः, प्रत्यक्षश्रुतेन हि चोदकप्राप्तं निवर्त्त्यते। साम्नां चोत्पत्तिरर्थवती भविष्यति अपूर्वेषु क्रियमाणेष्विति।

एवं प्राप्ते ब्रूमः,—'स्तोमविवृद्धौ' अनिवृत्तिराधिक्यं स्यात्। कुतः। आगमेन हि साम्नां सङ्ख्यापूरणं वक्ष्यते,—"आगमेन वा स्यादभ्याससङ्ख्याश्रुतित्वात्" (१०।५।२ ३सू॰) इति; एवं चोदकानुग्रहो भविष्यति। 'अविवृद्धौ' तु प्राकृतं निवर्त्त्येत, यावता निवृत्तेन सा सङ्ख्या पूर्यते, तावत् प्राकृतं बाधितव्यं, अन्यत् प्राकृतमेव स्यात्। कुतः?। 'इतरस्य

अश्रुतित्वात्', इतरं न श्रूयते,—आगमः कर्त्तव्य इति, सङ्ख्यामात्रं श्रूयते। तस्मात् विवृद्धस्तोमकेषु अनिवृत्तिः, हीनस्तोमकेषु यावदर्थं निवर्त्तयितव्यं। अथ यदुक्तं,—साम्नां उत्पत्तिरर्थवती भविष्यति—इति। उच्यते,—बाध्यतां आर्षं चोदकेन, गुणमात्रमविशिष्टार्षं; गुणचोदकः इति ॥ (१०।४।११अ०) ॥

पवमान एव विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्वापाधिकरणम् ॥

सू० पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ ॥ २१ ॥

भा० इह वृद्धस्तोमका अविवृद्धस्तोमकाश्च क्रतव उदाहरणं, त एव ये पूर्वस्मिन्नधिकरणे उदाहृताः। तत्रैषोऽर्थः समधिगतः,—विवृद्धस्तोमकेष्वनिवृत्तिरविवृद्धस्तोमकेषु निवृत्तिः-इति। अथेदानीम् इदं सन्दिह्यते,—किं यस्मिन्-कस्मिंश्चिदावापो यतः-कुतश्चिदुद्वापः, उत पवमानेष्वेव आवापोद्वापौ? इति। किं प्राप्तं?। अविशेषात् अनियमः इति।

एवं प्राप्ते ब्रूमः,—'पवमाने' आवापोद्वापौ 'स्याताम्' इति। कुतः?। अस्मिन्नेव हि तौ दृश्येते, 'त्रीणि ह वै यज्ञस्योदराणि गायत्री वृहती अनुष्टुप्, अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति।

'ननु दर्शनमिदं प्राप्तिरुच्यतां'। उच्यते,—

सू० वचनानि त्वपूर्वत्वात् ॥ २२ ॥

भा० असति न्याये वचनान्येव एतानि कल्प्यन्ते। तस्मात् पवमान एव आवापोद्वापस्थानमिति ॥ (१०।४।१२अ०) ॥

याज्यादौ विधिशब्देनैव देवताभिधानाधिकरणम् ॥

सू० विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥
॥ २३ ॥

भा० तौ दर्शपूर्णमासौ—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। तत्रेदमाम्नायते,—'यदाग्नेयोऽष्टाकपालो ऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति। सन्ति चाग्नेरभिधानानि,—अग्निः शुचिः पावकः धूमकेतुः कृशानुर्वैश्वानरः शाण्डिल्यः—इत्येवमादीनि। तत्र सन्देहः,—वाचिषु निगमेषु किं येन-केनचिदग्नेः शब्देनाभिधानं कर्त्तव्यं, उत विधिशब्देनाग्निशब्देन? इति। किं प्राप्तं?। येन-केनचिदिति। कुतः?। अभ्यर्थनिर्देशात्,—अभ्यर्थेन पुरोडाशः संबद्धव्यः, अभ्यर्था देवता कर्त्तव्या, त्यागकाले उद्देष्टव्या, सा येन शब्देन शक्यते उद्देष्टुं, तेनोद्देशनीया, सा एषां शब्दानामन्यतमेन शक्या उद्देष्टुं; तस्माद् येन-केनचित् वाचिषु निगमेषूद्देशः कर्त्तव्य इति।

एवं प्राप्ते ब्रूमः,—विधिशब्देनैव अग्निशब्देनोद्देष्टव्या, नान्येन शुच्यादिना इति। कुतः?। 'तेन चोदना', तेन विधिशब्देनास्य हविषः सम्बन्धः चोदना भवति। कथमिव?। आग्नेयः कर्त्तव्य इत्यग्निरस्य देवता कर्त्तव्येत्यर्थः।

का पुनरियं देवता नाम?। एकं तावन्मतं,—या एता इतिहासपुराणेष्वग्न्याद्याः सङ्कीर्त्यन्ते नाकसदस्ता देवता इति।

उच्यते,—तासु देवतासु अहरादीनां शार्दूलादीनां वा न संग्रहः। स्मर्यते च कालवाचिनां देवतात्वं,—'कालेभ्यो भवति, मासो देवता संवत्सरो देवता' इति।

अपरं मतं,—'येषु देवताशब्दो मन्त्रब्राह्मणे श्रूयते,—अग्निर्देवता वातो देवता सूर्यो देवता चन्द्रमा देवता इत्येवमादिषु तेऽत्र देवताशब्देनोच्यन्ते' इति।

तच्चाप्यध्वरादीनाम् अनुपसंग्रह एव। किञ्च सामान्यवचनस्य शब्दस्य लौकिके व्यवहारे अभावादर्थस्याप्रसिद्धिः स्यात्। तस्मात् सूक्तभाजो हविर्भाजश्च देवताः। काः सूक्तभाजः?। "इमं स्तोममर्हते जातवेदसे रथमिव संमहेमा मनीषया। भद्रा हि नः प्रमतिरस्य संसद्यग्ने सख्ये मा रिषामा वयन्तव" (ऋ० १९४म०) इति, हविर्भाजः,— "आग्नेयमष्टाकपालं निर्वपेत्। अग्नीषोमीयमेकादशकपालम्" इति। आह,—'यदि हविर्भाजो देवताः कपालानामपि देवतात्वं प्राप्नोति, तान्यपि हविर्भाञ्जि'। एवं तर्हि सा हविर्भाग् देवता, यां प्रति तादर्थ्यं हविषः, सूक्तस्याप्येवमेव। अत्र हि देवताशब्दः स्मर्यते,—अग्निदेवत्यं सूक्तम्, अग्निदेवत्यं हविः इति। तथा अतिथिदेवत्यं पितृदेवत्यम् इति। एवं मूर्त्तानाममूर्त्तानां चेतनानामचेतनानां चुत्या कश्चिदर्थं प्रति तादर्थ्येन सङ्कल्पनीयानां देवतात्वं भविष्यति, सामान्यवचनत्वं चोपपत्स्यते।

किमतः?। यद्येवं, यस्याः वाचकं शब्दमुद्दिश्य त्यक्ता वा हविस्त्यक्ष्यामीति सङ्कल्पः क्रियते, सा देवता भवति तत्र।

'नन्वेवं सति सुतरां येन केनचिदग्नेः शब्देन निर्देशः कर्त्तव्यः'।

अत्रोच्यते,—भवेदेतदेवं, यद्यग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्येत, अर्थोऽपि हविःसम्बन्धार्थं प्रत्याय्येत, न त्वत्राग्निशब्दोऽर्थप्रत्यायनार्थमुच्चार्यते, यत्र पूर्वं कार्यमापाद्यते, तत्र शब्दोऽर्थप्रत्यायनार्थो

भवति, यथार्थे न प्रयोजनं, यत्र पुनः शब्दे एव कार्यं, तत्र कार्य-सम्बन्धार्थः शब्द एव प्रत्यापयितव्यः। देवतायाश्च यज्ञसाधनभावो न रूपेण भवति, केन तर्हि?,—सम्बन्धिना शब्देन; यथा अध्वर्यु-र्हस्ताभ्यामुपकरोति, एवं देवता शब्देनोपकरोति, यथा 'होतुः पाणौ दिर्ब्लेपेनोपस्तृणाति' इति पाणिसम्बन्धेऽपि होतैव उपकरोति, एवं सम्बन्धिना शब्देन उपकुर्वती देवता उपकारिणी गम्यते। देवतायामप्युपकारिण्यां चोदितायां शब्दस्यैव यज्ञे समवायः। तस्माच्च शब्दोऽर्थप्रत्यायनार्थमुच्चारितः; स चार्थः पुनः शब्दं प्रत्याययेदिति उचितलक्षणा हि तथा स्यात्। किन्तर्हि?—शब्द एव हविषा सम्बध्यते, तत्सम्बन्धादर्थोऽपि देवता भविष्यति, यस्य हि शब्दो हविषा तादर्थ्येन सम्बध्यते, सा देवता, शब्दे कार्यस्यासम्भवादर्थे कार्यं विज्ञायते, इह तु शब्द एव कार्यं सम्भवति। तस्मान्नार्थप्रत्ययनार्थः शब्द इति। तदुक्तं वृत्तिकारेण,—'न वा शब्दपूर्वको ह्यर्थसम्प्रत्यय-स्तस्मादर्थनिष्पत्तिः' इति। एवं चेदग्निशब्देन हविषः सम्बन्धः, नास्ति प्रसङ्गः शुच्यादीनां शब्दानामिति। तस्मात् 'मन्त्रत्वे' विधिशब्द उपादातव्य इति।

उच्यते—'नन्वेवं शब्द एव देवता प्राप्नोति'। अत्रोच्यते,—नैतदस्माभिः परिहर्त्तव्यं, न हीदमुच्यमानमसत्पक्षं बाधते, सुतरां शुच्यादीनामप्रसङ्ग इति॥

सू॰ शेषाणां चोदनैकत्वात्तस्मात्सर्वत्र श्रूयते॥
॥२४॥ (यु॰)॥

भा॰ इतश्च विधिशब्देन वाचिषु वचनं कर्त्तव्यं। कुतः?। 'शेषाणां'

मन्त्राणाम् एकः शब्दः, स एवासौ विधिशब्दः, स एव सर्वत्र श्रूयते अपाङ्कारे उज्जित्यां स्वाहाकारे च,—'अपाडग्नेः प्रिया धामानि अपाट् सोमस्य प्रिया धामानि अपालिन्द्रस्य प्रिया धामानि' इति अपाङ्कारे; 'अग्नेरुज्जितिमनूज्जेषं सोमस्योज्जितिमनूज्जेषम्' इत्युज्जित्यां; 'स्वाहाऽग्निं स्वाहा सोमम्' इत्येवमादि स्वाहाकारे। एवञ्च नित्यवत् श्रूयमाणा अपाक्षिका भविष्यन्ति, यथाऽस्माभिर्न्यायोऽपदिष्टः। तस्मात् "विधिशब्दस्य मन्त्रत्वे भावः स्यात्" इति ॥ (१०।४।१२ अ०) ॥

---

अतिदेशस्थलेऽपि विधिशब्देनैव देवताभिधानाधिकरणम् ॥

## सू० तथोत्तरस्यान्ततौ तत्प्रकृतित्वात् ॥ २५ ॥

भा० अस्ति चरुः,—'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इति। सन्ति सूर्यस्याभिधानानि,—सूर्य आदित्यो भास्करः सविता दिवाकरः—इति। तत्र किं वाचिषु निगमेषु येन-केनचिच्छब्देनाभिधानं कर्त्तव्यम्, उत विधिशब्देन सूर्यशब्देन? इति। किं प्राप्तं?। अग्नि-शब्दसंयुक्तास्ते प्रकृतौ निगमा इह चोदकेन प्राप्ताः, न सूर्यशब्देनेति, सूर्यशब्दो हि चरौ, न उज्जित्यादिषु, ते यथार्थं विपरिणमयितव्याः, सूर्यार्थश्च तेषु सङ्कीर्त्तयितव्यः, स च येन-केनचित् सूर्यवाचिना शब्देन सङ्कीर्त्त्यते, तस्मादनियमः। ये च प्रकृतावग्निशब्दसंयुक्ता निगमास्ते इहोदाहरणं, न असंयुक्ताः।

एवं प्राप्ते ब्रूमः,—'तथोत्तरस्यान्ततौ तत्प्रकृतित्वात्' इति। यथा प्रकृतौ, 'तथा' उत्तरस्यां 'ततौ' विकृतौ कर्त्तव्याः, 'तत्प्रकृतित्वात्'

तेषां, चोदकानुग्रहाय प्रकृतौ च विधिशब्दाभिप्रायो ऽग्निशब्दः प्रयुक्तः, न ग्रन्थ्यभिधानपरः; इहापि तत्प्रकृतित्वात् विधिशब्दाभिप्रायेणैव निगमाः प्रयोक्तव्याः। न चायं चरुणा सूर्यशब्दस्य सम्बन्धः, किन्तर्हि प्रयोगेण, 'सौर्यं निर्वर्त्तयेत्' इति प्रयोगेण सम्बन्धः, न 'सौर्यश्चरुः' इति, कारकविभक्तिर्हि द्वितीया, सा चाख्यातेन सम्बध्यते, तस्मात् तत्रापि सूर्यशब्देन संयुक्ताः कर्त्तव्या इति ॥ (१०।४।१४अ०) ॥

---

आधाने ऽग्नेः सगुणेनाभिधानाधिकरणम् ॥

सू० प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ ॥ २६ ॥ (सि०) ॥

भा० अस्ति आधानं,—'य एवं विद्वानग्निमाधत्ते' इति। तत्र पवमानहवींषि श्रूयन्ते,—'अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकायाग्नये शुचये' इति। तत्र संशयः क्रियते,—किं सगुणमग्नेरभिधानं कर्त्तव्यं, उत निर्गुणम्? इति। किं प्राप्तं?। 'प्राकृतस्य' निर्गुणस्य 'सगुणेन' 'अभिधानं' कर्त्तव्यमिति ॥

सू० अविकारो वा अर्थशब्दानपायात्स्यात् द्रव्यवत् ॥ ॥ २७ ॥ (पू०) ॥

भा० 'अविकारो वा' 'स्यात्',—निर्गुणमभिधानं। कुतः?। 'अर्थशब्दानपायात्',—एवं शब्दोऽर्थस्यानपेतो भवति,—य एव असौ अग्निः, स एव पवमानः, पावकः शुचिश्च। या देवता निर्देष्टव्या, सा

निर्दिष्टैव भवति, असत्यपि गुणवचने, 'द्रव्यवत्', यथा,—'या वा एषा सर्वदेवत्या यदजावया, वायव्यामालभेत भूतिकामः' इति, अजावयाशब्देन चोदिते कर्मणि छागाशब्देन वाचिषु निगमा भवन्ति, अर्थः शब्दोऽनपेत इति कृत्वा; एवमिहापि द्रष्टव्यं। तस्मान्निर्गुणेन अभिधानं कर्त्तव्यमिति ॥

सू॰ तथारम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात् ॥ २८ ॥ (उ॰) ॥

भा॰ अथ वा, 'चोदितेन' सगुणेनाभिधीयेत। कुतः?। 'आरम्भासमवायात्',—न हि आरम्भेण देवता कर्मणि समवैति, न स्वेन रूपेण देवतायाः कर्मणि साधनभाव इत्युक्तं। यदि हि रूपेण समवेयात्, तथा सति अग्निशब्देन पवमानोऽपि प्रत्याय्यते इति गुणाभिधानं न क्रियेत। कथं तर्हि साधनभावः?। 'श्रुतिसमवायित्वात्' देवतार्थस्य, देवताशब्दस्य च हविषश्च सम्बन्धः साक्षादुच्यते, यस्य शब्दस्य सम्बन्धः, स शब्दो वदितव्यः, एवमसौ सम्बन्धः कृतो भवति। यदि च गुणाभिधानं न क्रियते, गुणशासनमनर्थकं स्यात्। एकमर्थं हि तच्च शब्द उच्चार्यते, कथमसौ कर्मणि सम्बध्येत इति; तत्र यदि गुणो न सम्बध्नीयात्, गुणवचनवैयर्थ्यं स्यात्; तस्मात् सगुणेनाभिधानं कर्त्तव्यमिति ॥

सू॰ द्रव्येष्वारम्भगामित्वादर्थे विकारः सामर्थ्यात् ॥ ॥ २९ ॥ (आ॰ नि॰) ॥

भा॰ यच्च यदुक्तं द्रव्यवत् इति,—'या वा एषा सर्वदेवत्या यदजा-

तेषां, चोदकानुग्रहाय प्रकृतौ च विधिशब्दाभिप्रायो अग्निशब्दः प्रयुक्तः, न अग्न्यभिधानपरः; इहापि तत्प्रकृतित्वात् विधिशब्दाभिप्रायेणैव निगमाः प्रयोक्तव्याः। न चायं चरुणा सूर्यशब्दस्य सम्बन्धः, किन्तर्हि प्रयोगेण, 'सौर्यं निर्वर्त्तयेत्' इति प्रयोगेण सम्बन्धः, न 'सौर्यश्चरुः' इति, कारकविभक्तिर्हि द्वितीया, सा आख्यातेन सम्बध्यते, तस्मात् तत्रापि सूर्यशब्देन संयुक्ताः कर्त्तव्या इति ॥ (१०।४।१५अ०) ॥

---

आधानेऽग्नेः सगुणेनाभिधानाधिकरणम् ॥

सू० प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ ॥ २६ ॥ (सि०) ॥

भा० अस्ति आधानं,—'य एवं विद्वानग्निमाधत्ते' इति। तत्र पवमानहवींषि श्रूयन्ते,—'अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकायाग्नये शुचये' इति। तत्र संशयः क्रियते,—किं सगुणमग्नेरभिधानं कर्त्तव्यं, उत निर्गुणम्? इति। किं प्राप्तं?। 'प्राकृतस्य' निर्गुणस्य 'सगुणेन' 'अभिधानं' कर्त्तव्यमिति ॥

सू० अविकारो वा अर्थशब्दानपायात्स्यात् द्रव्यवत् ॥ ॥ २७ ॥ (पू०) ॥

भा० 'अविकारो वा' 'स्यात्',—निर्गुणमभिधानं। कुतः?। 'अर्थशब्दानपायात्',—एवं शब्दोऽर्थेनानपेतो भवति,—य एव असौ अग्निः, स एव पवमानः, पावकः शुचिश्च। या देवता निर्देष्टव्या, सा

निर्दिष्टैव भवति, असत्यपि गुणवचने, 'द्रव्यवत्', यथा,—'या वा एषा सर्वदेवत्या यदजावशा, वायव्यामालभेत भूतिकामः' इति, अजावशाशब्देन चोदिते कर्मणि छागाशब्देन वाचितु निगमा भवन्ति, अर्थः शब्दोऽनपेत इति कृत्वा; एवमिहापि द्रष्टव्यं। तस्मान्निर्गुणेन अभिधानं कर्तव्यमिति ॥

सू० तथारम्भासमवायाद्वा चोदितेनाभिधानं स्याद्र्थस्य श्रुतिसमवायित्वादवचने च गुणशास्त्रमनर्थकं स्यात् ॥ २८ ॥ (उ०) ॥

भा० अथ वा, 'चोदितेन' सगुणेनाभिधीयेत। कुतः?। 'आरम्भासमवायात्',—न हि आरम्भेण देवता कर्मणि समवैति, न स्वेन रूपेण देवतायाः कर्मणि साधनभाव उक्तं। यदि हि रूपेण समवेयात्, तथा सति अग्निशब्देन पवमानोऽपि प्रत्याय्यते इति गुणाभिधानं न क्रियेत। कथं तर्हि साधनभावः?। 'श्रुतिसमवायित्वात्' देवतार्थस्य, देवताशब्दस्य च हविषश्च सम्बन्धः साक्षादुच्यते, यस्य शब्दस्य सम्बन्धः, स शब्दो वदितव्यः, एवमसौ सम्बन्धः कृतो भवति। यदि च गुणाभिधानं न क्रियते, गुणशासनमनर्थकं स्यात्। एवमर्थं हि तत्र शब्द उच्चार्यते, कथमसौ कर्मणि सम्बध्येत इति; तत्र यदि गुणो न सम्बध्नीयात्, गुणवचनवैयर्थ्यं स्यात्; तस्मात् सगुणेनाभिधानं कर्तव्यमिति ॥

सू० द्रव्येष्वारम्भगामित्वादर्थे विकारः सामर्थ्यात् ॥ ॥ २९ ॥ (आ० नि०) ॥

भा० यच्च यदुक्तं द्रव्यवत् इति,—'या वा एषा सर्वदेवत्या यदजा-

वशा, वायव्यामालभेत भूतिकामः' इति, अजावशाशब्देन चोदिते कर्मणि छागाशब्देन निगमा वाचिषु भवन्तीति यदुक्तं, तत् परिहर्त्तव्यम्। अचोच्यते,—युक्तं द्रव्येणारम्भसमवायः, रूपेण समवायं गच्छति द्रव्यं, तत्र छागाशब्देन या असौ आलब्धा यदि वशा अथवशा, तत्र साऽभिधीयत इति गम्यते। तस्मादर्थे साधने सति अविकारेऽप्यर्थे वचनसामर्थ्यमुपपद्यत इति विना गुणवचनेन, अभिधानं स्यात् चोदकानुग्रहाय; इह श्रुतिसमवायित्वादवश्यं चोदकप्राप्तस्य 'विकारः' कर्त्तव्य इति ॥ (१०।४।१५अ०) ॥

---

चाधानाज्ययोरग्नेर्निर्गुणेनाभिधानाधिकरणम् ॥

सू० वृधन्वान् पवमानवद्विशेषनिर्द्देशात् ॥ ३० ॥ (पू०)॥

भा० अस्ति आधानं,—'य एवं विद्वानग्निमाधत्ते' इति। तत्र पवमानेष्टयः,—'अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये' इति। तत्राज्यभागौ प्रकृत्य श्रूयते,—'वृधन्वान् आग्नेयः कार्यः, पावकवान् सौम्यः' इति। तत्रायमर्थः सांशयिकः,—किं सगुणमग्नेरभिधानं कर्त्तव्यम्, उत निर्गुणम्? इति।

तत्रैवं तावत् परीक्ष्यते,—किं देवतानिर्द्देशोऽयं, मन्त्रनिर्द्देशः? इति। देवतानिर्द्देशे सति सगुणमभिधानं, मन्त्रनिर्द्देशे निर्गुणमिति। किं तावत् प्राप्तं?;—सगुणमभिधानमिति। तत्र एतदर्थ्यते, देवतानिर्द्देशः इति। कुतः?। रूपत एव मन्त्राणां प्राप्तत्वात्, विधानमनर्थकं, देवता पुनर्न प्राप्नोति, तस्या विधानमर्थवत् भवति,

बुधन्वान् आग्नेयः कर्त्तव्य इति देवतया बुधन्वत्गुणयुक्तया भवति बुधन्वान् आग्नेयः। तस्मात् सगुणमभिधानं, यथा पावमानेष्टिषु अग्निः पवमान इति; एवमत्रापि अग्निर्बुधन्वानिति विशेषनिर्देशो-ऽर्थवान् भविष्यति। तस्मात् सगुणमभिधानमिति ॥

सू॰ मन्त्रविशेषनिर्देशात् न देवताविकारः स्यात् ॥ ॥ ३१ ॥ (सि॰) ॥

भा॰ न चैतदेवं,—सगुणमभिधानमिति, निर्गुणं कर्त्तव्यं। तत्र एतद् वर्णयन्ति,—मन्त्रविशेषनिर्देशोऽयम् इति। कुतः?। मन्त्र-विशेषरूपोऽयं शब्दः,—आग्नेयो यो विशिष्टाग्निविशिष्टः स बुधन्वान् कर्त्तव्यः नाग्निः। अथ अग्निर्बुधन्वान् क्रियते, तत्र बुधन्वानग्निर्देवता स्यात्, तत्राग्नेय इति सापेक्षे तद्धितनिर्देशो न स्यात्, न हि सविशेषणानां वृत्तिर्भवति; न खल्वपि वृत्तस्य विशेषणं प्रयुज्यते; तस्मात्राग्नेर्विशेषणं बुधन्वत्ता। कस्तर्हि बुधन्वत्तया विशेष्यते?। आग्नेयः, तस्य बुधो मन्त्रः, तेनासौ बुधन्वान् भवति यागः,—'अग्निं स्तोमेन बोधय समिधानो अमर्त्यम्' इति। अथ वा मन्त्र एवाभिसम्बध्यते,—बुधन्वान् आग्नेय इति।

अथ यदुक्तं,—रूपादेव मन्त्रः प्राप्नोति न विधातव्यः इति। उच्यते,—यः-कश्चिदन्यभिधानो मन्त्रः प्राप्नोति, तन्निषेधार्थमिद-मुच्यते,—बुधन्वान् कर्त्तव्यः, 'अग्निं स्तोमेन बोधय' इति; एवं चेत् न देवताविशेषणं; तस्मान्निर्गुणमभिधानं देवतायाः कर्त्तव्यम्। एवं चोदकानुग्रहो भविष्यति ॥ (१०।४।१६अ॰) ॥

प्रयाणुबन्धमन्त्रयद्वाग्नीषोमयोर्विधिशब्द्वानामेव उस्राद्यभिधाननिगमशब्दानामभिधाना-धिकरणम् ॥

सू० विधिनिगमभेदात् प्रकृतौ तत्प्रकृतित्वाद्विकृता-वपि भेदः स्यात् ॥ ३२ ॥ (पू०) ॥

भा० अस्ति ज्योतिष्टोमः, तत्र श्रूयते,—'गौरनुबन्ध्योऽग्नी-षोमीयः' इति। सन्ति तु गोरभिधानानि,—"उस्रा उस्रिया मही मही अदितिरिडा" (निघ० २।११) इति। तत्र संशयः,—किं निगमेषु केनचिदेव शब्देन गोरभिधानं कर्त्तव्यम्, अथ वा विधि-शब्देन कर्त्तव्यम्? इति।

तथा, 'पृषदाज्येन वनस्पतिं यजति' इति। सन्ति वनस्पतेरभि-धानानि,—'वृक्षः पादपो द्रुमो नगः' इति। तत्र संशयः,—'किं निगमेषु केनचिदेव शब्देन वनस्पतेरभिधानं कर्त्तव्यम्, अथ वा विधिशब्देन? इति। किं प्राप्तं?,—केनचिदेवेति। कुतः?। 'विधिनिगमभेदात् प्रकृतौ',—विधिनिगमभेदः कृतः,—'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति विधौ, मन्त्रे, 'छागस्य वपाया मेदसोऽनुब्रूहि' इति; इहापि चोदकेन यत् प्राकृतं, तत् प्राप्यते; विधिनियमभेदश्च प्रकृतावस्ति, तस्मात् स प्राप्यते छागशब्दः, प्रकृतौ कृतः स न शक्यते गवि कर्त्तुं, विधिनिगमभेदस्तु शक्यते। तस्मात् उस्रादीनां अन्यतमेन वाक्येषु वचनं कर्त्तव्यं।

तथा, 'अग्निं स्विष्टकृतं यजति' इति विधौ, निगमेऽपि,—'अग्निर्ह्य देवं उशतो यविष्ठ विद्वन् ऋतूंरृतुपते यजेह। ये दैव्या ऋत्विजस्तेभि-रग्ने त्वं होतॄणामस्या यजिष्ठ' इति; विधिनिगमभेदः प्रकृतौ कृतः;

स्विष्टकृद्विकारश्च वनस्पतिरिति अनूर्द्धं वक्ष्यते। तस्मात् तत्रापि विधिनिगमभेदः कर्त्तव्यः। अतो येन-केनचित् वनस्पत्यभिधानेन निर्द्देशः कर्त्तव्यः, 'तत्प्रकृतित्वात्' इति॥

सू॰ यथोक्तं वा विप्रतिपत्तेर्न चोदना॥ ३३॥ (सि॰)॥

भा॰ यथोक्तेन वा शब्देन वचनं कर्त्तव्यं,—गोः उस्राशब्देन, स हि तथाम्नातः,—'उस्राया वपाया मेदसोऽनुब्रूहि' इति। आह,— 'मन्त्राम्नानमेतत् न वचनमस्ति,—अनेन कर्त्तव्यम् इति। वचनं पुनश्चोदको विधिभिन्नेन वक्तव्यम्' इति। नैतदेवं,—न विप्रतिपत्तिं चोदकः प्रापयति, न हि यत् प्रकृतावस्ति तद्विकृतौ कर्त्तव्यमिति केनचित् प्राप्यते, किन्तु यत् प्रकृतौ चिकीर्षितं शब्देनाभिहितं न अर्थात् प्राप्तं, तत् चोदकः प्रापयति; न च, प्रकृतौ विधिनिगमभेदो विवक्षितः, 'छागस्य वपाया मेदसोऽनुब्रूहि' इत्येतद्वक्तव्यमिति विधीयते, तथार्थाद् विधिनिगमभेदो जातः। छागशब्दविधानं श्रुत्या गम्यते, विधिनिगमभेदो लक्षणया; श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा। तस्मान्न येन-केनचिदभिधानं, आम्नानसामर्थ्याद् उस्राशब्देन। तथा पृषदाज्ये देवतायां यो विधिशब्द उक्तः, तेन वचनं कर्त्तव्यं, विधिनिगमविप्रतिपत्तिर्न चोद्यते। तस्माद् वनस्पतिशब्देन निर्द्देशः कर्त्तव्यः इति॥ (१०।४।१७अ॰)॥

---

अवभृथे अग्नीवरुणयोः सखिष्टकृच्छब्देनाभिधानाधिकरणम् ॥

सू॰ स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्त्तेत ॥ ३४ ॥ (पू॰) ॥

भा॰ अस्ति अवभृथः,—'वारुणेनैककपालेनावभृथं यन्ति' इति । तत्र इदमाम्नायते,—'अग्नीवरुणौ स्विष्टकृतौ यजति' इति । तत्रायमर्थः सांशयिकः,—किं निगमेऽस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम्, उत सस्विष्टकृच्छब्दकम्? इति । तत्र एवं तावत् परीक्ष्यते,—किं सांविशायिकः स्विष्टकृच्छब्दः, उत स्विष्टं करोतीति एतेन गुणेन प्रवृत्तः इति गौणो न रूढः? इति । यदि रूढः, अस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम्, अथ व्युत्पाद्यते, ततः सस्विष्टकृच्छब्दकं । किं प्राप्तं?,—सांविशायिकः, न व्युत्पाद्यते इति । कुतः?। न तावत् स्विष्टं कृतवान्, अथ च तस्मिन्नेव काले स्विष्टकृदित्युच्यते,—'स्विष्टकृतं यजति' इति, न ह्यत्र स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ भवतः । अग्निरेव स्विष्टकृच्छब्देनोच्यते, तयोर्यः स्विष्टं कृतवान् । यदा सांविशायिकः, तदा अस्विष्टकृच्छब्दकं वचनं कर्त्तव्यं । कुतः?। अग्नेर्हि देवतायाः असौ वाचकः, नाग्नीवरुणयोः, विकृतौ अग्नेर्देवताया अभावात् अग्नीवरुणाभ्यां निवर्त्तेत । तस्मादस्विष्टकृच्छब्दकं वचनं कर्त्तव्यमिति ॥

सू॰ संयोगो वा अर्थापत्तेरभिधानस्य कर्मजत्वात् ॥ ॥ ३५ ॥ (सि॰) ॥

भा॰ न चैतदस्ति,—अस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम् इति । किन्तर्हि सस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम् इति । तत एतदर्श्यते,—

गौणमिदमभिधानमिति,—स्विष्टकरणात् स्विष्टकृदिति गम्यते, गम्यमानं न न्याय्यं अविवक्षितं कल्पयितुं, क्रियानिमित्तत्वम् अवयवशब्देभ्यो गम्यते; समुदायस्य चाग्नौ अप्रयोगात् लोकेऽप्यभिधानत्वं नाध्यवसीयते; तस्मान्न सांविधायिकः। एवं चेत् सस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम्, 'अर्थापत्तेः',—अग्नेरर्थे अग्नीवरुणौ श्रूयेते,—'अग्नीवरुणौ स्विष्टकृतौ यजति' इति, क्रियासंयोगित्वाच्च शक्नोति स्विष्टकृच्छब्दः अग्निवरुणौ* वक्तुं। तस्मात् सस्विष्टकृच्छब्दकं वचनं कर्त्तव्यम् इति। यच्च यदुक्तं,—स्विष्टं कृतवति चैष शब्दः, न चाग्निः स्विष्टं कृतवान्,—इति। अत्र ब्रूमः,—मत्पक्षे भूतकालता हीयेत, त्वत्पक्षे सा च सोपपदस्य धात्वर्थः। अपि च ततः पूर्वान् यागानपेक्ष्य स्विष्टं कृतवानग्निः॥ (१०।४।१८अ०)॥

---

अग्नीषोमीयपशौ सर्व्वत्रैव प्रयोगे निर्गुणेनाग्निशब्देनाग्नेरभिधानाधिकरणम्॥

## सू० सगुणस्य गुणलोपे निगमेषु† यावदुक्तं स्यात्॥ ॥३९॥ (पू०)॥

भा० अस्ति सोमे पशुरग्नीषोमीयः। तत्र श्रूयते,—'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमनुनिर्वपति‡' इति। तत्र स्विष्टकृति गुणलोपः श्रूयते,—'अग्निं यजति' इति। तदत्र संशयः,—

---

* एवमेव सर्व्वत्र पाठः।

† अत्र 'गुणसमाने' इति क्वचित् अधिकः पाठः।

‡ अनुनिवर्णपति इति का० क्री० पु० पाठः।

किं याग एव स्विष्टकृतो गुणलोपः सर्वाग्निष्टेषु निगमेषु यथा-प्रकृति भावः, उत सर्वत्रैव गुणलोपः? इति। किं प्राप्तं?—स्विष्टकृतो ऽग्नेः सगुणस्य गुणलोपे ब्रूयमाणे ब्रूमः,—यत्रैवोच्यते, गुणलोप-स्तत्रैव स्यात्, यागे चोच्यते,—'अग्निं यजति' इति, यागे गुणलोपे उच्यमाने यदि सर्वनिगमेषु गुणलोपोऽध्यवसीयेत, अश्रुतं कल्प्येत! यावांश्च श्रुतस्योत्सर्गे दोषः, तावान् अश्रुतकल्पनायां। तस्मात् याग एव लोपः स्यात्, न सर्वेषु निगमेष्विति॥

सू॰ सर्वस्य वैककर्म्यात्॥ ३७॥ (सि॰)॥

भा॰ 'सर्वस्य वा' निगमस्यस्यापि स्विष्टकृतोऽग्निशब्दस्य गुणो लुप्येत। कुतः?। 'एककर्म्यात्', नैव स्विष्टकृद्याग एव गुणो लुप्येत, किन्तर्हि यागप्रयोगे। कथम्?। 'अग्निं यजति' इति प्रयोगवचन एष शब्दः, सर्वस्मिन् स्विष्टकृद्यागप्रयोगे लुप्येत, अन्येऽपि हि स्विष्टकृन्निगदाः स्विष्टकृद्याग एव। तस्मात् सर्वत्र लोप इति॥ (१०।४।१९अ॰)॥

---

अनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्म्मताधिकरणम्॥

सू॰ स्विष्टकृदावापिकोऽनुयाजे स्यात् प्रयोजनवदङ्गानामर्थसंयोगात्॥ ३८॥

भा॰ स्तो दर्शपूर्णमासौ; तत्र स्विष्टकृत्,—'अनुयाजेष्वग्निं स्विष्टकृतं यजति' इति। तत्र सन्देहः,—किं स्विष्टकृद्यागोऽनुजाजेष्वारादुपकारकः, उत संस्कारकः? इति। किं प्राप्तम्?—आरादुपकारकः इति। कुतः?। एतद्धि कर्मणां प्रसिद्धं कार्यं, यत् आरादुपक्रिया, तथा

हि भूतस्य भव्यार्थता भविष्यति, श्रुत्या च विधानम्; इतरथा भव्यस्य भूतार्थता स्यात्, वाक्येन च विधानं। तस्मादारादुपकारकमिति।

एवं प्राप्ते ब्रूमः,—'स्विष्टकृदावापिकः' स्यात् न वाच्यः, किमिदम् 'आवापिकः' इति?। आज्यभागस्विष्टकृतौ अन्तरा आवापः (स्थानं), तत्र भवः आवापिकः। वहिरावापादनुयाजस्ताग्निकः, या तु स्विष्टकृद्देवता तत्र, सैवासौ प्रधानदेवता आवापिकी; तस्मादावापिक इत्युच्यते। यदा चैवं, तदा संस्कारकर्म स्यात्, तथा प्रयोजनवद् भवति, प्रयोजनवतो अग्नेरुपकरोति इति। अपि च द्विविधानि अङ्गानि,—आरादुपकारकाणि, सामवायिकानि च; आरादुपकारकेभ्यः सामवायिकानि गरीयांसि, तत्र हि साक्षाद्वाक्यम्; आरादुपकारकेषु प्रकृतेन परोक्षेणैकवाक्यता स्यात्। तस्मात् संस्कारकर्मेति ॥ (१०।४।२० अ०) ॥

---

दर्शपूर्णमासयोर्याज्यापुरोनुवाक्ययोः संस्कारकर्मताधिकरणम् ॥

सू॰ अन्वाहेति च शस्त्रवत् कर्म स्यात् चोदनान्तरात् ॥ २९ ॥ (पू॰) ॥

भा॰ दर्शपूर्णमासयोः श्रूयते,—'याज्यामन्वाह पुरोनुवाक्यामन्वाह' इति। तत्र संशयः,—किं याज्यापुरोनुवाक्यानुवचनं प्रधानकर्म, उत संस्कारकर्म? इति। किं प्राप्तम्?—'अन्वाहेति' प्रधानकर्म स्यात्। कुतः?।'चोदनान्तरात्', यदि संस्कारकर्म ततोऽस्वरूपादेवतयोर्वचनं*

---

* अयमादर्शपुस्तकपाठः। 'ततो रूपादेवतयोः' इति क॰ सं॰ पु॰ एवं का॰ श्री॰ पु॰ पाठः। रूपदेवतयोरिति तु क्वचित् पाठः।

प्राप्नोति, पुनः 'अन्वाहेति' वचनमनर्थकं, प्रधानकर्मत्वे तु वचनार्थं, न ह्यन्यथा तस्य कर्त्तव्यता गम्यते इति । अतः श्रुत्या कर्त्तव्यतावगमात् प्रधानकर्मेति । 'स्तुतवत्',—यथा स्तोत्रशस्त्रे 'स्तौति'—'शंसति'—इति कर्त्तव्यतावगमात् प्रधानकर्मणी ; एवमिहापि द्रष्टव्यम् ॥

सू० संस्कारो वा चोदितस्य शब्दवचनार्थत्वात् ॥ ॥ ४० ॥ (सि०) ॥

भा० संस्कारकर्म वा स्यात् । कुतः? । 'चोदितस्य' अर्थस्य यः शब्दः, स तद्वचनार्थो भवति, स तस्य दृष्टोऽर्थः ; तस्मिन् सति अदृष्टकल्पनायां हेतुर्नास्ति । तस्मात् संस्कारकर्मेति ॥ 'अवाच्यत्वादेति चेत्' इति यदुक्तं, तत् परिहर्त्तव्यम्,—

सू० स्याद्गुणार्थत्वात् ॥ ४१ ॥ (आ० नि०) ॥

भा० 'स्यात्' (उपपद्येत) 'अन्वाहेति' वचनं । कुतः? । 'गुणार्थत्वात्',— 'तिष्ठन् याज्यामन्वाह आसीनः पुरोनुवाक्यामन्वाह' इति स्थानासन-गुणार्थं पुनर्वचनं उपपद्यते । तस्मात् संस्कारकर्मणी याज्यापुरोनुवाक्ये इति ॥ (१०।४।२१अ०) ॥

---

मनोतायामूहाभावाधिकरणम् ॥

सू० मानोतायान्तु वचनादविकारः स्यात् ॥ ४२ ॥

भा० अस्ति वायव्यः पशुः,—'वायव्यं श्वेतमालभेत भूतिकामः' इति । अस्ति तु प्रकृतावग्निषोमीये पशौ मनोतामन्त्रः,—"त्वं ह्यग्ने प्रथमो

मनोता। अस्याधियो अभवोदस्य होता" (तै० ब्रा० ३।६।१०) इति। स इह चोदकेन प्राप्यते। तत्र सन्देहः,—किं यथादेवतमूहितव्यो मनोतामन्त्रः, अथ वा अविकारेण प्रयोक्तव्यः? इति। उच्यते,—'ननु प्रकृतावन्यायनिगदोऽयम्, अग्नीषोमौ हि प्रकृतौ देवता, अयमप्याग्नेयः, असमवेताभिधानादविकारेण प्रयोक्तव्यः'। अत्रोच्यते,—सत्यमग्नीषोमौ देवता प्रकृतौ, तौ तु अग्निश्च सोमश्च; तत्राग्निर्देवता* न त्वसमवेतः, अग्निप्रत्ययेन या अत्र देवता सा प्रतीयते; अयमिह वायुर्देवता-कार्ये श्रूयते, स देवताकार्ये श्रूयमाणो अग्निकार्यमपि करोति देवताप्रत्ययं†; तस्मात्तदर्थापत्तेस्तद्धर्मा स्यात् (१०।३।२५सू०),—तस्मात् यथादेवतं मनोतामन्त्रः प्रयोक्तव्य इति।

एवं प्राप्ते ब्रूमः,—'मनोतायां तु वचनादविकारः स्यात्' इति। वचनमिदं भवति, यद्यप्यन्यदेवत्यः पशुः, आग्नेय्येव मानोता कार्या इति, किमिव वचनं न कुर्यात्, नास्ति वचनस्यातिभारः। तस्मादविकारेण मनोतामन्त्रः प्रयोक्तव्य इति॥ (१०।४।२२अ०)॥

---

कण्वरथन्तरस्य सयोगौ नामाधिकरणम्॥

सू० पृष्ठार्थेऽन्यद्रथन्तरात् तद्योनिपूर्वत्वात् स्यादृचां प्रविभक्तत्वात्॥ ४३॥ (पू०)॥

भा० अस्ति वैश्वसोमः,—'वैश्वो वैश्वसोमेन यजेत' इति। तत्र श्रूयते,—'कण्वरथन्तरं पृष्ठं भवति' इति। उभयविकारः कण्वरथन्तर-

* 'तत्राग्निर्देवता' इति आदर्शपुस्तकपाठः।
† 'प्रत्ययञ्च' इति आदर्शपुस्तकपाठः।

मित्युक्तम्,—"अप्राकृते तद्विकाराद् विरोधाद्व्यवतिष्ठेरन्" (८।२।४८सू०) इति। तत्र संशयः,—किं रथन्तरयोनौ बृहद्योनौ वा अनियमेन कण्वरथन्तरं गेयम्, उत रथन्तरयोनौ, अथ वा स्वयोनौ? इति। किं प्राप्तं?,—चोदकेन अनियमः, लाघवं हि तथा भवति, ततः प्रयोगप्रादुर्भावः।

एवं प्राप्ते ब्रूमः,—'पृष्ठार्थे' यदेतत् 'अन्यत् रथन्तरात्', कण्वरथन्तरं श्रूयते, तद्रथन्तरयोनौ 'स्यात्'; ज्योतिष्टोमपूर्वको हि वैश्वस्तोमः, ज्योतिष्टोमे रथन्तरयोनौ पृष्ठं कृतं। 'ननु बृहद्योनावपि तत्र कृतं'। नैवम्, 'अर्थात् प्रविभक्तत्वात्',—अर्थात् प्रविभाग इह गम्यते, यथा 'रथन्तरयोनिर्भवति' इति। कुतः?। कण्वरथन्तरे रथन्तरशब्दः श्रूयते, तेन गम्यते रथन्तरविशेषः कण्वरथन्तरम् इति। अर्थान्तरे कण्वरथन्तरशब्दो भवेत् यदि रथन्तरधर्मा न भवेयुः, तेषु सत्सु यूपवदुपपद्यते; यथा 'औदुम्बरो यूपो भवति' इति, न हि औदुम्बरो यूपद्रव्यं प्रकृतौ सङ्कीर्तितं; धर्मनिमित्तस्तत्र यं शब्दः उपपद्यते। एवमिहापि धर्मनिमित्तः कण्वरथन्तरे रथन्तरशब्दो भवति, नान्यथेति॥

सू० स्वयोनौ वा सर्वाख्यत्वात्॥ ४४॥ (सि०)॥

भा० न चैतदस्ति,—रथन्तरयोनौ गीयेत—इति, किन्तर्हि,—'स्वयोनौ'। कुतः?। 'सर्वाख्यत्वात्' सर्वविशेषणविशिष्टस्य हि रथन्तरशब्दो वाचकः, प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनवतः सर्वस्य सस्तोभस्वरकाल्भ्यासस्य कण्वरथन्तरमित्याख्या भवति, तस्मात् योनिरपि विशेषणम्। अपि च अर्थान्तरे कण्वरथन्तरे रथन्तरशब्दः कल्प्यः स्यात्। तस्मात् स्वयोनौ गेयमिति॥

सू० यूपवदिति चेत् ॥ ४५ ॥ (आ०) ॥

भा० 'इति चेत्' पश्यसि,—स्वयोनौ गेयमिति रथन्तरशब्दः तेनोपपद्यते, स हि रथन्तरधर्मेषु सत्सु यूपवदुपपद्यते इति ॥

सू० न कर्मसंयोगात् ॥ ४६ ॥ (आ० नि०) ॥

भा० 'न' एतदेवं,—'कर्मसंयोगात्' काष्ठस्य यूपता, न हि, लोके यूप इति सञ्ज्ञातः कश्चित् वृक्षोऽस्ति; यत्र ते संस्काराः, स यूपः, तस्मात् 'औदुम्बरो यूपो भवति' इति संस्कारनिमित्तः, इह पुनरेवं-विशेषणविशिष्टः कण्वरथन्तरशब्दो लोक एवास्ति, नासौ कण्वानां रथन्तरं कण्वरथन्तरमित्येवं कृत्वा उच्यते, रथन्तरत्वे कण्वसम्बन्धे वा चास्य विधीयमाने वाक्यभेदः प्रसज्येत । तस्मात् सांविज्ञानिकः कण्व-रथन्तरशब्दः; अत एव स्वयोनौ गीयते ॥ (१०।४।२३अ०) ॥

---

कण्वरथन्तरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् ॥

सू० कार्यत्वादुत्तरयोर्यथाप्रकृति ॥ ४७ ॥ (पू०) ॥

भा० कण्वरथन्तर एव भवति संशयः,—'उत्तरयोर्गायति' इति । किं रथन्तरयोन्युत्तरयोः बृहद्योन्युत्तरयोर्वा गेयम्, उत स्वयोन्युत्तरयोः? इति । किं प्राप्तं?,—बृहद्योन्युत्तरयोर्वा रथन्तरयोन्युत्तरयोर्वा इति । कुतः?। चोदकानुग्रहात्; न तत्रैष दोषो भवति स्वयोनिविशिष्टं कण्वरथन्तरम् इति, उत्तरयोर्हि तत्कार्यं, तत्र स्वयोनिरवश्यं ज्ञातव्या भवति । तस्मात् प्रकरणमपेक्षितव्यमिति ॥

सू० समानदेवते वा तृचस्याविभागात् ॥४८॥ (सि०)॥

भा० न चैतदस्ति,—बृहतोरुत्तरयोः रथन्तरयोरुत्तरयोर्वा गेयम् —इति, किन्तर्हि,—त्र्ययोरुत्तरयोः। कुतः?। तृचशब्दात्, समानच्छन्दसि समानदेवताके च अविशेषितस्तृचशब्दो भवतीत्युक्तं। अतः श्रुत्या चोदको बाध्यत इति त्र्ययोरुत्तरयोर्गेयमिति ॥ (१०।४।२४अ०)॥

---

अग्निष्टुति स्तुतशस्त्रयोरविकाराधिकरणम् ॥

सू० ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् ॥ ४९ ॥ (सि०)॥

भा० अस्ति अग्निष्टुत् एकाहः; तत्र श्रूयते,—'आग्नेया ग्रहा भवन्ति' इति। तत्र सन्देहः,—किं प्राकृतयोः स्तोत्रशस्त्रयोर्यथादेवतमूहः, उत अविकारः? इति। ऊहबुद्धिं व्यावर्त्तयितुमिदमभिधीयते,—'ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात्', प्रधानकर्मत्वादिति। कस्य पुनरेषा बुद्धिः स्यात्, यं निवर्त्तयेत्?। यो मन्दधीर्मन्यते अभिधानं सेत्स्यतीति; मन्दधियामपि चोपदेशः क्रियमाणः फलवान् भवति। अपि च कश्चिदपेक्ष्य सर्वे मन्दधियः। अथ तु न परितोषः एवं, ततोऽन्यथा वर्ण्यते,—यत्तत् वृत्तमधिकरणं द्वितीयेऽध्याये, (१पा०५अ०) तस्येदं प्रयोजनसूत्रं,—'ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात्' इति। यदि संस्कारकर्मणी स्तोत्रशस्त्रे, किं भवति

प्रयोजनम्?। अग्निष्टुदेकाहे यथादेवतमूहः; अथ प्रधानकर्मत्वी, ततो 'ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात्' इति ॥ (१०।४।२५अ०) ॥

---

चातुर्मास्येषु आज्यभद्रस्याविकारेणावाहनाधिकरणम् ॥

सू० उभयपानात्पृषदाज्ये दध्नः स्यादुपलक्षणं निगमेषु पातव्यस्योपलक्षणात् ॥५०॥ (प्र० पू०) ॥

भा० सन्ति चातुर्मास्यानि,—'चातुर्मास्यैः स्वर्गकामो यजेत' इति; तत्रानुयाजान् प्रकृत्य समामनन्ति,—'पृषदाज्येनानुयाजान् यजति' इति। अस्ति तु प्रकृतौ आवाहनं,—'देवान् आज्यपान् आवह' इति; तदिह चोदकेन प्राप्तं। तत्र संशयः,—किमविकारेणावाहनं कर्त्तव्यम्, उत ऊहेन? इति। यदा ऊहेन, तदा किम् आज्यपान् दधिपान् इति कर्त्तव्यम्, उत दधिपान् इति, अथ वा पृषदाज्यपान् इति?। किं प्राप्तं?,—'दध्नः' अपि 'उपलक्षणं' 'स्यात्' आज्यस्यापि। कस्मात्?। 'उभयपानात्',—उभयं हि तत् देवतामुद्दिश्य त्यज्यते, यच्च त्यज्यते, तत्पीयत इति मन्त्रेणोक्तं, यच्च पातव्यं, तदुपलक्षितं, प्रकृतौ 'आज्यपान्' इति, इह आज्यस्यार्थे दधिसर्पिषी श्रूयेते,—'अथ पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्चैव दधि च, द्वन्द्वं वै मिथुनं प्रजननं, मिथुनमेवैतत् प्रजननं क्रियते' इति; तुल्यं दधि आज्येन उच्चार्यते; तस्मात् उभयमप्युपलक्षयितव्यं,—दधि च आज्यं चेति ॥

सू० न वा परार्थत्वाद्यज्ञपतिवत् ॥५१॥ (प्र०पू०नि०)॥

भा० 'न वा' एतदेवं,—दधि उपलक्षयितव्यमिति । कुतः ? । 'परार्थत्वात्',—परार्थं हि पातव्यं द्रव्यं, पातृणामुपलक्षणं, तच्चाज्येन चेदुपलक्ष्यते, कृतोऽर्थः इति न पुनर्दध्ना उपलक्षयितव्यम्, 'यज्ञपतिवत्', यथा, 'इमं यज्ञमवान्येव यज्ञपतिं वर्द्धान्' इति यज्ञपतिर्मनुष्याणां होतृणां प्रशंसार्थः, न स्वार्थं कीर्त्त्यत इति अविकारेण प्रयुज्यते, न सर्वान् यजमानान् प्रत्यादरः; एवमिहापि पातव्यं पातुर्लक्षणार्थं प्रयुज्यते, न स्वार्थं; तच्चैकेनापि येन-केनचिल्लक्षिताः पातार इति कृत्वा न द्वितीयः प्रयोक्तव्य इति ॥

सू० स्याद्वा आवाहनस्य तादर्थ्यात् ॥५२॥ (आ०)॥

भा० 'स्यात्' दध्नः उपलक्षणं, न यज्ञपतिवत्स्यात्; यज्ञपतिशब्दो हि न स्वार्थं उच्चार्यते, इडास्तुत्यर्थेन स उच्यते, आवाहनं पुनः स्मरणार्थं, तत्र पातापि स्मर्त्तव्यः, पेयमपि; तस्माच्चोदकानुग्रहाय पेयान्तरम् उपलक्षयितव्यमिति ॥

सू० न वा संस्कारशब्दत्वात् ॥५३॥ (आ० नि०)॥

भा० 'न वा' दधि उपलक्षयितव्यं, संस्कारशब्दोऽत्र विद्यते आज्यस्य, —'पृषदाज्येनानुयाजान् यजति' इति; पृषदाज्येन चित्रेणेत्यर्थः, संस्कारेण हि मिश्रणे संस्कृतं चित्रमाज्यं भवति; तां च चित्रतामस्य प्रत्यक्षतो दधि उत्पादयति । तस्मात् परार्थं (चित्रतासम्पादनार्थं) न पातव्यम्, अतो नोपलक्षयितव्यमिति ।

सू० स्याद्वा द्रव्याभिधानात् ॥ ५४ ॥ (आ०) ॥

भा० 'स्याद्वा' दधि उपलक्षणं, द्रव्यं हि दधि तुल्यमाज्येन, प्रधानभूतमुपदिश्यते,—इत्युक्तमस्माभिः,—'अथ पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्चैव दधि च, द्वन्द्वं वै मिथुनं प्रजननं, मिथुनमेवैतत् प्रजननं क्रियते' इति; किं पृषदाज्यं गृह्यते?,—सर्पिश्चैव दधि चेति,—सर्पिषा दध्ना च यागः कर्त्तव्य इत्यर्थः। पृषदाज्यमिति न द्रव्यान्तरमुच्यते; तस्मात् दधि उपलक्षयितव्यमिति ॥

सू० दध्नस्तु गुणभूतत्वादाज्यपा निगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ॥ ५५ ॥ (सि०) ॥

भा० न चैतदस्ति,—तुल्यं दधि आज्येन, प्रधानभूतमिति; ग्रहणे हि तत् तुल्यमाज्येन, न यागे, यागो हि आज्येन चित्रेण श्रूयते, तस्मात् 'श्रुतेराज्यप्रधानत्वात्' यागं प्रति गुणभूतं दधि स्यात्, न हि, ग्रहणे श्रूयमाणं यागे श्रुतं भवति इति, दधि ग्रहणे श्रूयमाणं न यागार्थं भवति, तत्र श्रुत्या आज्यं करणं, दधि वाक्येनेति। किमर्थं तर्हि तत्र दधिग्रहणं?। गृह्यमाणेन प्रत्यक्षतश्चित्रमाज्यं भवति इति; तस्मादाज्यपा निगमाः स्युर्न दध्न उपलक्षणं कर्त्तव्यमिति ॥

सू० दधि वा स्यात् प्रधानमाज्ये प्रथमान्त्यसंयोगात् ॥ ५६ ॥ (द्वि०पू०) ॥

भा० न चैतदस्ति,—'आज्यपा निगमा भवेयुरिति न दध्न उपलक्षणं

कर्त्तव्यम्' इति, दधिपाणिनैव कर्त्तव्यं, 'दधि' एवात्र 'प्रधानं'। कुतः?। 'आज्ये प्रथमान्यसंयोगात्',—प्रथमसंयोगः उपस्तरणम्, अन्यसंयोगोऽभिघारणं,—'यदि च यवे यजेत द्विरुपस्तृणीयात् सकृदभिघारयेत् ओषधयो वै प्रियङ्गव ओषधिष्वेव पशून् प्रतिष्ठापयति' इति। 'यदि प्रावृषि यजेत सकृदुपस्तृणीयात् द्विरभिघारयेत् वृष्ट्यैव पशून् अभिजिघर्त्ति'* इति, उपस्तरणमन्यत् तत्र निधापयितुं क्रियते, परार्थेन एव तत्र शब्दार्थः, न ग्रहणमात्रं, ग्रहणेनान्यस्याधिकरणसंस्कारे 'उपस्तृणाति' इति शब्दो वर्त्तते। तथा, 'अभिघारयति' इति न ग्रहणमात्रम् अभिघारणम्, अन्यस्याभिमुखेनाभिघारयति इति मन्यते, सोऽन्य आज्यसंयुक्तः कथं स्यात् इति। तदुपस्तरणाभिघारणशब्दाभ्यां दधि प्रधानभूतं गम्यते, आज्यमपि तस्य गुणभूतं। तस्माद्दध्न एवोपस्तरणं कर्त्तव्यं न आज्यस्येति ॥

सू॰ अपि वाऽज्यप्रधानत्वाद्गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दः स्यात् ॥ ५७ ॥ (द्वि॰पू॰नि॰) ॥

भा॰ 'अपि वा' नैतदेवं,—दधि प्रधानं, तदुपस्तरयितव्यम् इति; आज्यमेव प्रधानं, तद्धि प्रयोजनवत् यागसम्बन्धात्,—'पृषदाज्येनानुयाजान् यजति' इति, यत् तेनोपस्तीर्यते तत्र द्रव्यं निष्पद्यते, तथैवावक्तं भवति, दधि चोपस्तीर्णं, तत्र शब्दात् आधेयस्याधार-

* 'अभिजिघ्रति' इति पाठान्तरपुस्तकपाठः।

संस्कारोऽवगम्यते दधिसंस्कारः, न तु संस्कृतस्य प्रयोजनं दध्नः, प्रत्यक्षा तु चिकता निर्वर्त्यमाना लक्ष्यते, तथा च प्रयोजनं, पृषद्धि तदाज्यं श्रूयते। न च, यागे दधि करणं भवितुमर्हति वाक्यप्राप्तम् आज्ये श्रुतिप्राप्ते प्रत्यर्थिनि, तस्मादुपस्तरणमाज्यग्रहणार्थमेव, ततो दधिग्रहणं भविष्यतीति अर्थादाधेयाधारसम्बन्धे उपस्तरणमिव तद् भवतीति भाक्त उपस्तृणातिः प्रयुक्तः, तथाभिघारयतिः। तस्मात् पृषद् दिरित्येतस्य गुणस्यार्थे 'व्यपदेशे' 'भक्त्या' एष संस्कारशब्दः 'उपस्तृणाति', 'अभिघारयति', 'ओषधिष्वेव पशून् प्रतिष्ठापयति', 'दृष्टैव पशूनभिजिघर्त्ति' इति च। तस्मात् आज्यपा निगमा एव भवेयुरिति॥

सू॰ अपि वाख्याविकारत्वात् तेन स्यादुपलक्षणम्॥
॥५८॥ (सू॰ पू॰)॥

भा॰ 'अपि वा' इति पक्षव्यावृत्तिः, न आज्यपा निगमा भवेयुः, पृषदाज्यपानिति वक्तव्यं। कुतः?। आख्याविकार एव भवति, दधिसर्पिषोरत्र संसर्गः क्रियते, तत्र यो गुणः उपजायते तद्गुणयुक्तस्य संसृष्टस्य आख्याविशेषो भवति पृषदाज्यम् इति, यथा 'रागः खाण्डवः सुरा' इति। तत्र हि उपचरितमेकं शब्दं उपलक्षयामः। उपचाराच्च अभिधानाभिधेयसम्बन्धो गम्यते, तेन च यागनिर्वृत्तिः श्रूयते,— 'पृषदाज्येनानुयाजान् यजति' इति। तस्मादेवमुपलक्षयितव्यं,—पृषदाज्यपानिति॥

सू॰ न वा स्यात् गुणशास्त्रत्वात्॥५९॥ (सू॰पू॰नि॰)॥

भा॰ नैतदेवं स्यात्,—संसृष्टस्य रागवत् पृषदाज्यशब्दो वाचक उपचारादिति; सत्यमुपचरितोऽयं तत्र, स तूपचारो लोकादेवावगतः, स गुण आज्ये भवतीति गम्यते। कुतः?। आज्यशब्दः सर्पिषो वाचकः। पृषच्छब्दः चित्रस्य, तद्यथा पृषद्रज्जुः पृषन्मणिः पृषन्मृग इति; तयोरुच्चरितयोश्चित्राज्याभिधानं गम्यते, तस्मात् तत्रैव स उपचार उपपन्नः। अतश्चाज्यस्यैव उपलक्षणं चित्रमचित्रं वा आज्यम् आज्यशब्देनाभिधीयत एवेति ॥ (१०।४।२६अ०) ॥

इति भट्टश्रीशबरस्वामिविरचिते मीमांसाभाष्ये दशमस्याध्यायस्य चतुर्थः पादः ॥०॥

# मीमांसा—दर्शने

१० अध्याये ५ पादः ।



एकदेशग्रहणे प्राथमिकानामेव ग्रहणाधिकरणम् ॥

## सू० आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १ ॥ (सि०) ॥

भा० 'द्यावापृथिवीयमेककपालम्', 'आश्विनं द्विकपालं', 'वैष्णवं त्रिकपालम्' इत्यादि एकदेशवचनं; समस्तवचनमपि भवति,— 'आग्नेयमष्टाकपालं निर्वपेत्' इति। तथा 'द्विरात्रेण यजेत', 'त्रिरात्रेण यजेत', 'चतूरात्रेण यजेत', 'पञ्चरात्रेण यजेत', 'षड्रात्रेण यजेत', 'सप्तरात्रेण यजेत', 'अष्टरात्रेण यजेत', 'नवरात्रेण यजेत', 'दशरात्रेण यजेत', 'एकादशरात्रेण यजेत'—इत्येकदेशग्रहणं; समस्तग्रहणमपि भवति,—'द्वादशाहेन प्रजाकामं याजयेत्' । तथा, 'एकां सामिधेनीमन्वाह, 'तिस्रः सामिधेनीरन्वाह' इति एकदेशग्रहणं; समस्तग्रहणमपि भवति,—'पञ्चदश सामिधेनीरन्वाह' इति । तत्र संशयः,—किं सर्वेष्वेव आद्योपादानम् अन्त्यलोपश्च, उत विकल्पः? इति । किं प्राप्तम्? । 'आनुपूर्व्यवतां' (क्रमवताम्) एकदेशग्रहणे ब्रूमः,—'अन्त्यलोपः' आद्योपादानञ्च इति । किंकारणं? मुख्यमाद्यं, जघन्यम् अन्त्यं, मुख्यजघन्ययोरन्यतरस्मिन् लोप्तव्ये जघन्यो लुप्येत,

मुख्यो हि अनुग्रहीतव्यः । तदुक्तं,—'मुख्यं वापूर्वचोदनाल्लोकवत्' इति; 'आगमवत्' यथा,—समाजेषु समावेषु च ये आगन्तवो भवन्ति, ते पूर्वोपविष्टान् अनुपमृद्यैव निविशन्ते, एवमिहापि द्रष्टव्यम् ॥

सू॰ लिङ्गदर्शनाच्च ॥ २ ॥ (यु॰) ॥

भा॰ इतश्च आद्योपादानमन्त्यलोपश्च इति । कुतः ? । लिङ्गमप्येवं भवति,—'लुप्येत वा एतत् षष्ठमहो यत् पञ्चाहानुपयन्ति, लुप्येत वा एतत् षष्ठं कपालं यत् पञ्चकपालं निर्वपन्ति' इति षष्ठस्य लोपं दर्शयति, न प्रथमस्य ॥

सू॰ विकल्पो वा समत्वात् ॥ ३ ॥ (पू॰) ॥

भा॰ नैतदस्ति,—आद्योपादानम् इति, किन्तर्हि 'विकल्पः' । आद्यमन्त्यं वा उपादातव्यम् इति । कुतः ? । 'समत्वात्',—समो हि अन्त्यलोप आद्यलोपेन,—न हि आदिलोपे श्रुतिः, नो खल्वपि अन्त्यलोपे; मुख्ये जघन्ये वा उपादीयमाने प्राकृतमुपात्तं भवति, न हि विशेषश्रुतिरस्ति,—मुख्यमुपादातव्यमिति तस्मादनियम इति ॥

सू॰ क्रमादुपजनोऽन्ते स्यात् ॥ ४ ॥ (आ॰नि॰) ॥

भा॰ अथ यदुक्तं,—समाजेषु समावेषु चागन्तुर्जनो यथा वास्तव्यान् अनुपमृद्यैव निविशते एवमिहापि इति; युक्तं, यदा वास्तव्यैराक्रान्ते देशे आगन्तुर्जनो असम्भवादन्ते निविशते, इह तु अनाक्रान्ते चिन्त्यते,—के प्रथममाक्रमेयुरिति । तेनात्र न केषाञ्चित् क्रमो विरुद्ध इति ॥

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

**THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.,**

57 AND 59, LUDGATE HILL, LONDON, E. C.

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Uttara Naishadha, 12 fasci. ......Rs. | 7 | 8 |
| Chaitanya-chandrodaya, Náṭaka, 3 fasci. | 1 | 14 |
| Srauta sútra, Asvaláyana, 11 fasci. | 6 | 14 |
| ———— Láṭyáyana, 9 fasci. | 5 | 10 |
| Sankara Vijaya, 3 fasci. | 1 | 14 |
| Vaisheshika Darsana, 5 fasci. | 3 | 2 |
| Nyáya Darsana, 3 fasci. | 1 | 14 |
| Dasa Rúpa, 3 fasci. | 1 | 14 |
| Nárada Pancharátra, 4 fasci. | 2 | 8 |
| Kaushitaki Bráhmanopanishad, 2 fasci. | 1 | 4 |
| Sánkhyasára, 1 fasci. | 0 | 10 |
| Brihat Saṅhitá, 7 fasci. | 4 | 6 |
| Lalitavistara, 5 fasci. | 3 | 2 |
| Taittiríya Bráhmaṇa, 24 fasci. | 15 | 0 |
| Taittiríya Saṅhitá, 28 fasci. | 17 | 8 |
| Taittiríya Áraṇyaka, 11 fasci. | 6 | 14 |
| Maitri Upanishad, 3 fasci. | 1 | 14 |
| Asvaláyana Grihya Sútra, 4 fasci. | 2 | 8 |
| Mimáṅsá Darsana, 12 fasci. | 7 | 8 |
| Táṇdya Bráhmaṇa, 19 fasci. | 11 | 14 |
| Gopatha Bráhmana, 2 fasci. | 1 | 10 |
| Atharvana Upanishads, 5 fasci. | 3 | 2 |
| Agni Puráṇa, 9 fasci. | 5 | 10 |
| Sáma Veda Saṅhitá, 24 fasci. | 15 | 0 |
| Gopála Tápaní, 1 fasci. | 0 | 10 |
| Nrisiṅha Tápaní, 3 fasci. | 1 | 14 |
| Chaturvarga Chintámani, 17 fasci. | 10 | 10 |
| Gobhilíya Grihya Sútra, 6 fasci. | 3 | 12 |
| Piṅgala Chhandaḥ Sútra, 3 fasci. | 1 | 14 |
| Taittiríya Prátisákhya, 3 fasci. | 1 | 14 |
| Prithiráj Rásu by Chand Bardai, 2 fasci. | 1 | 4 |
| Rájatarangini, | 4 | 0 |
| Mahábhárata, vols. III. and IV., | 40 | 0 |
| Purana Sangraha, | 1 | 0 |
| Páli Grammar, 2 fasci. | 1 | 4 |
| Aitareya Aranyaka of the Rig Veda, 5 fasci. | 3 | 2 |
| Chhándogya Upanishad, English, 2 fasci. | 1 | 4 |
| Taittiríya, &c., Upanishads English, 2 fasci. | 1 | 4 |
| Sáṅkhya Aphorisms, English, 2 fasci. | 1 | 4 |
| Sáhitya Darpaṇa, English, 4 fasci. | 2 | 8 |
| Brahma Sútra, English, | 1 | 0 |
| Kátantra, 4 fasci. | 4 | 0 |
| Kámandakíya Nítisára, 4 fasci. | 2 | 8 |
| Bhámatí, 3 fasci. | 1 | 14 |
| Tabaqat i Nasiri, 8 fasci. | 8 | 0 |

| | Rs. | As. |
|---|---|---|
| Dictionary of Arabic Technical Terms, 20 fasci. | [illegible] | [illegible] |
| Risálah-i-Shamsiyah, (Appendix to Do. Do.), | 1 | [illegible] |
| Fihrist Túsí, 4 fasci. | [illegible] | [illegible] |
| Nukhbat-ul-Fikr, | 0 | 10 |
| Futúh-ul-Shám, Wáqidí, 9 fasci. | [illegible] | 10 |
| Futúh-ul-Shám, Azadí, 4 fasci. | [illegible] | [illegible] |
| Maghází of Wáqidí, 5 fasci. | [illegible] | [illegible] |
| Suyúti's Itqán, 10 fasci. | [illegible] | [illegible] |
| Isábah, 26 fasci., with supplement, | 19 | [illegible] |
| Táríkh-i-Fírúz Sháhí, 7 fasci. | 4 | [illegible] |
| Táríkh-i-Baihaqí, complete in 9 fasci. | [illegible] | 10 |
| Muntakhab-ut-Tawáríkh, vols. I. II. and III., complete in 15 fasci. | 9 | [illegible] |
| Wís o Rámin, 5 fasci. | [illegible] | [illegible] |
| Iqbálnámah-i-Jahángírí, complete in 3 fasci. | 1 | [illegible] |
| 'Alamgírnámah, 13 fasci., with index, | [illegible] | [illegible] |
| Pádsháhnámah, 19 fasci., with index, | 11 | [illegible] |
| Muntakhab-ul-Lubáb, by Kháfí Khán, 19 fasci., with index, | [illegible] | 12 |
| Áín-i-Akbarí, Persian text, 4to., 20 fasci. | [illegible] | [illegible] |
| Áín-i-Akbarí, English translation by H. Blochmann, M. A., vol. I, | [illegible] | [illegible] |
| Farhang-i-Rashídí, 14 fasci., complete, | 17 | [illegible] |
| Nizámí's Khiradnámah-i-Iskandarí, 2 fasci. complete, | [illegible] | [illegible] |
| Akbarnámah, 8 fasci. | [illegible] | [illegible] |
| Maásir-i-'Alamgírí, by Muhammad Sáqí, complete, 6 fasci., with index, | [illegible] | 12 |
| Haft Asmán, history of the Persian Masnawí | [illegible] | [illegible] |
| Tabaqát-i-Náçirí, English translation by Raverty, 8 fasci. | [illegible] | [illegible] |
| Tabaqát-i-Náçirí, Persian text, 5 fasci. | [illegible] | [illegible] |

## MISCELLANEOUS.

Journal of the Asiatic Society of Bengal from vols. XII to XVII, 1843-48, vols. XIX to XXI, 1850-52, to Subscribers at Re. 1 per number and to non-subscribers at Re. 1-8 per number; vols. XXVI, XXVII, 1857-58, and vols. XXIII to XLIV, 1864-75, to Subscribers at 1-8 per number and to non-subscribers at Rs. 2 per number.

| | Rs. | As. |
|---|---|---|
| Asiatic Researches, vols. VII. to XII. and vols. XVII. to XX. each, | 10 | [illegible] |
| Do. Do. Index, | [illegible] | [illegible] |
| Catalogue of Mammalia, | [illegible] | [illegible] |
| ——— of Fossil Vertebrata, | [illegible] | [illegible] |
| ——— of Sanskrit Manuscripts, | [illegible] | 0 |
| ——— of Arabic and Persian Manuscripts, | 1 | 0 |
| Tibetan Dictionary, | 10 | [illegible] |
| ——— Grammar, | [illegible] | 0 |
| Ross' Annals of 'Omán, | [illegible] | 0 |
| Notices of Sanskrit Manuscripts, 10 fasci. | [illegible] | 0 |
| Blochmann's Persian Prosody, | [illegible] | 0 |
| Istiláhát-i-Súfíyah. Edited by Dr. A. Sprenger, 8vo. | [illegible] | 0 |
| Jawámi' ul-'ilm ir-riyází, 168 pages with 17 plates, 4to. | [illegible] | [illegible] |
| Purána Sangraha. Edited by the Rev. K. M. Banerjea, No. 1, | [illegible] | 0 |
| Corcoran's Chinese Empire, in Urdu, Vols. I. and II., per vol. | [illegible] | 0 |
| Aborigines of India, by B. H. Hodgson, | [illegible] | 0 |
| History of the Afghans, Part 1, by Dorn, | [illegible] | 0 |
| Examination and Analysis of the Mackenzie Manuscripts, by the Rev. W. Taylor, | [illegible] | [illegible] |
| Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis, | 1 | [illegible] |
| 'Ináyah, a Commentary on the Hidáyah, Vols. II. IV., | 10 | 0 |
| Analysis of the Sher Chín, by Alexander Csoma de Körös, | 1 | 0 |
| Khazánat-ul-'ilm, | [illegible] | 0 |
| Sharáyat-ul-Islám, | [illegible] | 0 |
| Anís-ul-Musharrihín, | [illegible] | 0 |

# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 435.



## मीमांसादर्शनम् ।

## श्रीशबरस्वामिकृतभाष्यसहितम् ।

## उत्तरार्द्धम् ॥

---

## THE MI'MA'ṄSA' DARS'ANA,

WITH THE COMMENTARY OF

S'AVARA SVÁMIN.

EDITED BY

MAHES'ACHANDRA NYÁYARATNA.

FASCICULUS XV.

---

CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1880.

सू० लिङ्गमविशिष्टं सङ्ख्याया हि तत् वचनम् ॥ ५ ॥
(आ०नि०२) ॥

भा० अथ यदिदमुक्तं,—'लुप्येत वा एतत् षष्ठमहः' इति षष्ठस्य लोपं दर्शयति, नाद्यस्येति; तद् 'अविशिष्टं' विकल्पेऽपि, सङ्ख्याया हि षष्ठमिति पूरणवचनं भवति, यस्मिन् कस्मिंश्चिदपगते येन प्रथमेन मध्येन अन्त्येन वा सङ्ख्या पूर्यते, तत् षष्ठं; यथा षष्ठो ब्राह्मणो न दृश्यते इति, कनीयसि ज्येष्ठे मध्ये वा अदृश्यमाने भवति, एवमिहापि द्रष्टव्यम् ॥

सू० आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वात् वचनादन्त्यविधिः स्यात् ॥ ६ ॥ (पू०नि०) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति, 'आदितः' 'प्रवृत्तिः' भवितुमर्हति । कुतः? । 'आरम्भस्य तदादित्वात्', आरम्भो हि तेषाम् आनुपूर्व्यवताम् आदितो न्याय्यः, पूर्वेण हि उपक्रान्तो द्वितीयादिः कर्त्तव्यः, स इह प्रथममेव क्रियमाणः अनुपक्रान्तः केनचित् क्रियेत, पूर्वो हि पदार्थः क्रियमाण उत्तरं पदार्थमभिनिर्वर्त्तयति, यः पुनराद्यः पदार्थः सोऽनुपक्रान्त एवान्येन कर्त्तव्यः, तस्मिन्नेव प्रथममुपादीयमाने न अनुपक्रमदोषो भविष्यति। तस्मात् सर्वत्रैवं,— ये क्रमवन्तः आरब्धव्याः, ते प्रथमादुपक्रमितव्या इति ।

अपि च, प्रथमस्य निमित्तमुपसम्प्राप्तं, न च विरोधोऽस्ति तदादिषु कृतेषु, अन्येषां निमित्तेऽपि प्राप्ते, परिपूर्णत्वात् पदार्थानां,

लोपो न विरुद्धः; तस्मादाद्योपादानमन्त्यलोपश्च इति। अथैवं न्यायेन प्राप्ते, यत्र वचनं भवति, तत्रापनीय मध्यममपि, विधिर्भवति; यथा,—'अपवर्हिषः प्रयाजान् यजति'। 'अपवर्हिषावनुयाजौ यजति' इति। विना वचनेन, अन्त्यलोप एव न्याय्य इति॥ (१०।५। (१अ०)॥

---

एकत्रिके आद्ये तृचे गानाधिकरणम्॥

सू० एकत्रिके तृचादिषु माध्यन्दिने छन्दसां श्रुतिभूतत्वात्॥ ७॥ (पू०)॥

भा० अस्ति एकत्रिकः क्रतुः,-'अथैष एकत्रिकः। तस्यैकस्यां वहिष्पवमानं, तिसृषु होतुराज्यम्। एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः। एकस्यामच्छावाकस्य, तिसृषु माध्यन्दिनः पवमानः' इति। तदत्र माध्यन्दिने पवमाने संशयः,—किं तृचाद्यासु गानं कर्त्तव्यं, उत आद्ये तृचे? इति। किं प्राप्तं?,—'एकत्रिके' क्रतौ 'माध्यन्दिने' पवमाने तृचाद्यासु स्तोत्रियासु गानं स्यात्। कुतः?। 'छन्दसां श्रुतिभूतत्वात्', श्रुतिभूतानि हि त्रीणि छन्दांसि प्रकृतौ,—त्रिच्छन्दा आवापः, माध्यन्दिनः पवमानः पञ्चसामेति, तानि इह चोदकेनैव प्राप्तानि। तानि एवमुपसंहर्त्तुं शक्यन्ते, यदि तृचाद्यासु गानं; तस्मात् तृचाद्यासु इति॥

सू० आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात्॥ ८॥ (सि०)॥

भा० वाक्यस्य: पक्षं व्यावर्त्तयति,—आद्ये तृचे गानं कर्त्तव्यं। एष हि न्यायः, क्रम एवम् अनुगृहीतो भवति। 'इतरस्य' (छन्दोऽनुग्रहस्य) प्राकृतत्वादिह आनुमानिकत्वं भवति।

आह,—'ननु क्रमोऽपि प्राकृतत्वादानुमानिकः'। उच्यते,—उभयोरानुमानिकयोः क्रमानुग्रहो ज्यायान् भवति। कथं?। तत्र हि प्रथमे गायत्रे छन्दसि अभिनिर्वृत्ते द्वितीया स्तोत्रीया प्रारब्धा, प्रथमारम्भेण हि पदार्थः क्रियमाणः उत्तरं पदार्थमभिनियच्छति। अप्रवृत्ते कस्मिंश्चित् पदार्थे सर्वं वैकल्पिकं प्राप्नोति, न प्रवृत्ते; प्रवृत्ते हि ततोऽन्यद्ग्रहणत्वादप्राप्तं। प्रारब्धस्य च क्रिया प्राप्ता, तस्यामवस्थायां उभयप्राप्त्यभावादविकल्पः। अत्र किं तदेव प्रारब्धं परिसमाप्यताम्, अथान्यत् अप्राप्तमारभ्यताम्?—इति। तत् परिसमापयन् श्रुतं करोति, परित्यजन् श्रुतं जहाति इति प्रारब्धं परिसमापनीयं गम्यते। अथेदानीं तस्मिन् निर्वृत्ते वैकल्पिकं कृतार्थत्वादप्राप्तं, तस्मात् क्रमानुग्रहो न्याय्यो न छन्दोऽनुग्रह इति।

तत्राह,—'ननु गायत्रेण छन्दसा पूर्वं क्रियमाणेन उत्तरकालं त्रैष्टुभमप्युपक्रान्तं भवति'। उच्यते,—सत्यमुपक्रान्तं भवति, न तु द्वितीयां तृतीयामकृत्वा। अथ तयोः पूर्वे तृचे नैव छन्दसां प्रयोजनं; तस्मात् प्रत्यक्षत्वात् पूर्वया स्तोत्रीयया उत्तरयोः स्तोत्रीययोः क्रमस्य, क्रमानुग्रहो ज्यायान्न छन्दोऽनुग्रह इति॥

सू० यथानिवेशञ्च प्रकृतिवत् सङ्ख्यामात्रविकारत्वात्॥ ॥ ६ ॥ (यु०) ॥

मुख्यो हि अनुग्रहीतव्यः। तदुक्तं,—'मुख्यं वापूर्वचोदनाल्लोकवत्' इति; 'आगमवत्' यथा,—समाजेषु समाषेषु च ये आगन्तवो भवन्ति, ते पूर्वोपविष्टान् अनुपमृद्यैव निविशन्ते, एवमिहापि द्रष्टव्यम् ॥

सू० लिङ्गदर्शनाच्च ॥ २ ॥ (यु०) ॥

भा० इतश्च आद्योपादानमन्त्यलोपश्च इति। कुतः?। लिङ्गमप्येवं भवति,—'लुप्येत वा एतत् षष्ठमहो यत् पञ्चाहानुपयन्ति, लुप्येत वा एतत् षष्ठं कपालं यत् पञ्चकपालं निर्वपन्ति' इति षष्ठस्य लोपं दर्शयति, न प्रथमस्य ॥

सू० विकल्पो वा समत्वात् ॥ ३ ॥ (पू०) ॥

भा० नैतदस्ति,—आद्योपादानम् इति, किन्तर्हि 'विकल्पः'। आद्यमन्त्यं वा उपादातव्यम् इति। कुतः?। 'समत्वात्',—समो हि अन्त्यलोप आद्यलोपेन,—न हि आदिलोपे श्रुतिः, नो खल्वपि अन्त्यलोपे; मुख्ये जघन्ये वा उपादीयमाने प्राकृतमुपात्तं भवति, न हि विशेषश्रुतिरस्ति,—मुख्यमुपादातव्यमिति तस्मादनियम इति ॥

सू० क्रमादुपजनोऽन्ते स्यात् ॥ ४ ॥ (आ०नि०) ॥

भा० अथ यदुक्तं,—समाजेषु समाषेषु चागन्तुजनो यथा वास्तव्यान् अनुपमृद्यैव निविशते एवमिहापि इति; युक्तं, यदास्तव्यैराक्रान्ते देशे आगन्तुजनो असम्भवादन्ते निविशते, इह तु अनाक्रान्ते चिन्त्यते,—के प्रथममाक्रमेयुरिति। तेनाच न केषाञ्चित् क्रमो विरुद्ध इति ॥

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

**THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.,**

57 AND 59, LUDGATE HILL, LONDON, E. C.

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Uttara Naishadha, 12 fasci. | | |
| Chaitanya-chandrodaya, Náṭaka, 3 fasci. ... Rs. | 7 | 8 |
| Srauta sútra, Asvaláyana, 11 fasci. | 1 | 14 |
| ——— Láṭyáyana, 9 fasci. | 6 | 14 |
| Sankara Vijaya, 3 fasci. | 5 | 10 |
| Vaisheshika Darsana, 5 fasci. | 1 | 14 |
| Nyáya Darsana, 3 fasci. | 3 | 2 |
| Dasa Rúpa, 3 fasci. | 1 | 14 |
| Nárada Pancharatra, 4 fasci. | 1 | 14 |
| Kaushítaki Bráhmanopanishad, 2 fasci. | 2 | 8 |
| Sánkhyasára, 1 fasci. | 1 | 4 |
| Brihat Sañhitá, 7 fasci. | 0 | 10 |
| Lalitavistara, 5 fasci. | 4 | 6 |
| Taittiriya Bráhmaṇa, 24 fasci. | 3 | 2 |
| Taittiriya Sañhitá, 28 fasci. | 15 | 0 |
| Taittiriya Áraṇyaka, 11 fasci. | 17 | 8 |
| Maitri Upanishad, 3 fasci. | 6 | 14 |
| Asvaláyana Grihya Sútra, 4 fasci. | 1 | 14 |
| Mimáñsá Darsana, 12 fasci. | 2 | 8 |
| Tándya Bráhmaṇa, 19 fasci. | 7 | 8 |
| Gopatha Bráhmaṇa, 2 fasci. | 11 | 14 |
| Athavaṇa Upanishads, 5 fasci. | 1 | 10 |
| Agni Puráṇa, 9 fasci. | 3 | 2 |
| Sáma Veda Sañhitá, 24 fasci. | 5 | 10 |
| Gopála Tápaní, 1 fasci. | 15 | 0 |
| Nrisiñha Tápaní, 3 fasci. | 0 | 10 |
| Chaturvarga Chintámaṇi, 17 fasci. | 1 | 14 |
| Gobhiliya Grihya Sútra, 6 fasci. | 10 | 10 |
| Piñgala Chhandaḥ Sútra, 3 fasci. | 3 | 12 |
| Taittiriya Prátisákhya, 3 fasci. | 1 | 14 |
| Prithiráj Rásu by Chand Bardai, 2 fasci. | 1 | 14 |
| Rájataranginí, | 1 | 4 |
| Mahábhárata, vols. III. and IV., | 4 | 0 |
| Puráṇa Sangraha, | 40 | 0 |
| Páli Grammar, 2 fasci. | 1 | 0 |
| Aitareya Aranyaka of the Rig Veda, 5 fasci. | 1 | 4 |
| Chhándogya Upanishad, English, 2 fasci. | 3 | 2 |
| Taittiriya, &c., Upanishads, English, 2 fasci. | 1 | 4 |
| Sáñkhya Aphorisms, English, 2 fasci. | 1 | 4 |
| Sáhitya Darpaṇa, English, 4 fasci. | 1 | 4 |
| Brahma Sútra, English, | 2 | 8 |
| Kátantra, 4 fasci. | 1 | 0 |
| Kámandakíya Nítisára, 4 fasci. | 4 | 0 |
| Bhámatí, 5 fasci. | 2 | 8 |
| Tabaqat i Nasiri, 6 fasci. | 1 | 14 |
| | 8 | 0 |

*Arabic & Persian Series.*

Dictionary of Arabic Technical Terms, 20 fasci. ........................ Rs. [illegible]
Risálah-i-Shamsiyah, (Appendix to Do. Do.), ........................ [illegible] 4
Fihrist Túsi, 4 fasci. ........................ 2 0
Nukhbat-ul-Fikr, ........................ 0 10
Futúh-ul-Shám, Wáqidí, 9 fasci. ........................ [illegible] 10
Futúh-ul-Shám, Azadi, 4 fasci. ........................ [illegible]
Magházi of Wáqidí, 5 fasci. ........................ [illegible]
Suyúti's Itqán, 10 fasci. ........................ [illegible] 0
Isabah, 26 fasci., with supplement, ........................ 19 [illegible]
Táríkh-i-Fírúz Sháhí, 7 fasci. ........................ [illegible]
Táríkh-i-Baihaqí, complete in 9 fasci. ........................ [illegible] 10
Muntakhab-ut-Tawáríkh, vols. I. II. and III., complete in 15 fasci. ........................ 9 [illegible]
Wís o Rámín, 5 fasci. ........................ [illegible]
Iqbálnámah-i-Jahángírí, complete in 3 fasci. ........................ [illegible]
'Alamgírnámah, 13 fasci., with index, ........................ [illegible]
Pádsháhnámah, 19 fasci., with index, ........................ 11 14
Muntakhab-ul-Lubáb, by Kháfí Khán, 19 fasci., with index, ........................ [illegible]
Aín-i-Akbari, Persian text, 4to., 20 fasci. ........................ [illegible] 0
Aín-i-Akbari, English translation by H. Blochmann, M. A., vol. I, ........................ [illegible]
Farhang-i-Rashídí, 14 fasci., complete, ........................ 17 [illegible]
Nizámí's Khiradnámah-i-Iskandari, 2 fasci. complete, ........................ [illegible]
Akbarnámah, 8 fasci. ........................ 10 [illegible]
Maásir-i-'Alamgírí, by Muhammad Sáqí, complete, 6 fasci., with index, ........................ [illegible] 12
Haft Asmán, history of the Persian Masnawí, ........................ [illegible]
Tabaqát-i-Náçirí, English translation by Raverty, 8 fasci. ........................ [illegible]
Tabaqát-i-Náçirí, Persian text, 5 fasci. ........................ [illegible]

## MISCELLANEOUS.

Journal of the Asiatic Society of Bengal from vols. XII to XVII, 1843-48, vols. XIX to XXI, 1850-52, to Subscribers at Re. 1 per number and to non-subscribers at Re. 1-8 per number; vols. XXVI, XXVII, 1857-58, and vols. XXIII to XLIV, 1864-75, to Subscribers at 1-8 per number and to non-subscribers at Rs. 2 per number.

Asiatic Researches, vols. VII. to XII. and vols. XVII. to XX. each, ...... Rs. 10 [illegible]
  Do. Do. Index, ........................ [illegible]
Catalogue of Mammalia, ........................ [illegible]
——— of Fossil Vertebrata, ........................ [illegible]
——— of Sanskrit Manuscripts, ........................ [illegible]
——— of Arabic and Persian Manuscripts, ........................ [illegible]
Tibetan Dictionary, ........................ 10 [illegible]
——— Grammar, ........................ [illegible] 0
Ross' Annals of 'Omán, ........................ [illegible]
Notices of Sanskrit Manuscripts, 10 fasci. ........................ 10 0
Blochmann's Persian Prosody, ........................ [illegible] 0
Istiláhát-i-Súfiyah. Edited by Dr. A. Sprenger, 8vo. ........................ 1 0
Jawámi' ul-'ilm ir-riyází, 168 pages with 17 plates, 4to. ........................ 2 0
Purána Sangraha. Edited by the Rev. K. M. Banerjea, No. 1, ........................ 1 0
Corcoran's Chinese Empire, in Urdu, Vols. I. and II., per vol. ........................ 20 0
Aborigines of India, by B. H. Hodgson, ........................ [illegible]
History of the Afghans, Part 1, by Dorn, ........................ [illegible]
Examination and Analysis of the Mackenzie Manuscripts, by the Rev. W. Taylor, [illegible]
Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis, ........................ [illegible]
'Ináyah, a Commentary on the Hidáyah, Vols. II. IV., ........................ 16 0
Analysis of the Sher Chin, by Alexander Csoma de Körös, ........................ [illegible]
Khazánat-ul-'ilm, ........................ [illegible]
Sharáyat-ul-Islám, ........................ [illegible]
Anís-ul-Musharrihín, ........................ [illegible] 0

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, No. 435.



# मीमांसादर्शनम् ।
## श्रीशवरस्वामिकृतभाष्यसहितम् ।
## उत्तरार्द्धम् ॥

---

# THE MI'MA'NSA' DARS'ANA,

WITH THE COMMENTARY OF

S'AVARA SVA'MIN.

EDITED BY

Mahes'achandra Nyáyaratna.

FASCICULUS XV.

---

CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS,

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1880.

सू॰ त्रिक्रमविशिष्टं सङ्ख्याया हि तत् वचनम् ॥ ५ ॥ (आ॰नि॰२) ॥

भा॰ अथ यदिदमुक्तं,—'लुप्येत वा एतत् षष्ठमहः' इति षष्ठस्य लोपं दर्शयति, नाद्यस्येति; तद् 'अविशिष्टं' विकल्पेऽपि, सङ्ख्याया हि षष्ठमिति पूरणवचनं भवति, यस्मिन् कस्मिंश्चिदपगते येन प्रथमेन मध्येन अन्त्येन वा सङ्ख्या पूर्यते, तत् षष्ठं; यथा षष्ठो भ्रातॄणां न दृश्यते इति, कनीयसि ज्येष्ठे मध्ये वा अदृश्यमाने भवति, एवमिहापि द्रष्टव्यम् ॥

सू॰ आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वात् वचनादन्त्यविधिः स्यात् ॥ ६ ॥ (पू॰नि॰) ॥

भा॰ वाशब्दः पक्षं व्यावर्त्तयति, 'आदितः' 'प्रवृत्तिः' भवितुमर्हति । कुतः ? । 'आरम्भस्य तदादित्वात्', आरम्भो हि तेषाम् आनुपूर्व्यवताम् आदितो न्याय्यः, पूर्वेण हि उपक्रान्तो द्वितीयादिः कर्त्तव्यः, स इह प्रथममेव क्रियमाणः अनुपक्रान्तः केनचित् क्रियेत, पूर्वो हि पदार्थः क्रियमाण उत्तरं पदार्थमभिनियच्छति, यः पुनराद्यः पदार्थः सोऽनुपक्रान्त एवान्येन कर्त्तव्यः, तस्मिन्नेव प्रथममुपादीयमाने न अनुपक्रमदोषो भविष्यति। तस्मात् सर्वत्रैवं,—ये क्रमवन्तः आरब्धव्याः, ते प्रथमादुपक्रमितव्या इति ।

अपि च, प्रथमस्य निमित्तमुपसम्प्राप्तं, न च विरोधोऽस्ति तदादिषु कृतेषु, अन्त्यानां निमित्तेऽपि प्राप्ते, परिपूर्णत्वात् पदार्थानां,

लोपो न विरुद्धः; तस्मादाद्योपादानमन्त्यलोपश्च इति। अथैवं न्यायेन प्राप्ते, यत्र वचनं भवति, तत्रापनीय मध्यममपि, विधिर्भवति; यथा,—'अपवर्हिषः प्रयाजान् यजति'। 'अपवर्हिषावनुयाजौ यजति' इति। विना वचनेन, अन्त्यलोप एव न्याय्य इति॥ (१०।५। (१अ०)॥

---

एकत्रिके आद्ये तृचे गानाधिकरणम्॥

सू० एकत्रिके तृचादिषु माध्यन्दिने च्छन्दसां श्रुति-भूतत्वात्॥ ७॥ (पू०)॥

भा० अस्ति एकत्रिकः क्रतुः,—'अथैष एकत्रिकः। तस्यैकस्यां वहिष्पवमानं, तिसृषु होतुराज्यम्। एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः। एकस्यामच्छावाकस्य, तिसृषु माध्यन्दिनः पवमानः' इति। तदत्र माध्यन्दिने पवमाने संशयः,—किं तृचाद्यासु गानं कर्त्तव्यं, उत आद्ये तृचे? इति। किं प्राप्तं?,—'एकत्रिके' क्रतौ 'माध्यन्दिने' पवमाने तृचाद्यासु स्तोत्रियासु गानं स्यात्। कुतः?। 'छन्दसां श्रुतिभूतत्वात्', श्रुतिभूतानि हि त्रीणि छन्दांसि प्रकृतौ,—त्रिच्छन्दा आवापः, माध्यन्दिनः पवमानः पञ्चसामेति, तानि इह चोदकेनैव प्राप्तानि। तानि एवमुपसंहर्त्तुं शक्यन्ते, यदि तृचाद्यासु गानं; तस्मात् तृचाद्यासु इति॥

सू० आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात्॥ ८॥ (सि०)॥

भा० वाक्यम्: पत्तं व्यावर्त्तयति,—आद्ये तृचे गानं कर्त्तव्यं। एष हि न्याय:, क्रम एवम् अनुगृहीतो भवति। 'इतरस्य' (छन्दोऽनुग्रहस्य) प्राकृतत्वादिह आनुमानिकत्वं भवति।

आह,—'ननु क्रमोऽपि प्राकृतत्वादानुमानिक:'। उच्यते,—उभयोरानुमानिकयो: क्रमानुग्रहो ज्यायान् भवति। कथं?। तत्र हि प्रथमे गायत्रे छन्दसि अभिनिर्वृत्ते द्वितीया स्तोत्रीया प्रारब्धा, प्रथमारम्भेण हि पदार्थ: क्रियमाण: उत्तरं पदार्थमभि-नियच्छति। अप्रवृत्ते कस्मिंश्चित् पदार्थे सर्वं वैकल्पिकं प्राप्नोति, न प्रवृत्ते; प्रवृत्ते हि ततोऽन्यद्गृहीतत्वादप्राप्तं। प्रारब्धस्य च क्रिया प्राप्ता, तस्यामवस्थायां उभयप्राप्त्यभावादविकल्प:। अत्र किं तदेव प्रारब्धं परिसमाप्यताम्, अथान्यत् अप्राप्तमारभ्यताम्?—इति। तत् परिसमापयन् श्रुतं करोति, परित्यजन् श्रुतं जहाति इति प्रारब्धं परिसमापनीयं गम्यते। अथेदानीं तस्मिन् निर्वृत्ते वैकल्पिकं कृतार्थ-त्वादप्राप्तं, तस्मात् क्रमानुग्रहो न्याय्यो न छन्दोऽनुग्रह इति।

तत्राह,—'ननु गायत्रेण छन्दसा पूर्वं क्रियमाणेन उत्तरकालं त्रैष्टुभमप्युपक्रान्तं भवति'। उच्यते,—सत्यमुपक्रान्तं भवति, न तु द्वितीयां तृतीयामकृत्वा। अथ तयो: पूर्णे तृचे नैव छन्दसां प्रयोजनं; तस्मात् प्रत्यक्षत्वात् पूर्वया स्तोत्रीयया उत्तरयो: स्तोत्रीययो: क्रमस्य, क्रमानुग्रहो ज्यायान्न छन्दोऽनुग्रह इति॥

सू० यथानिवेशञ्च प्रकृतिवत् सङ्ख्यामात्रविकारत्वात्॥
॥ ९ ॥ (यु०) ॥

भा० इतस्याद्ये तृचे गेयम् इति। कुतः?। 'यथानिवेशं' 'प्रकृतिवत्' वचनेन प्राप्तासु स्तोत्रीयासु तिसृषु 'माध्यन्दिनः' इति वचना-मात्रस्य प्रत्याम्नायो न क्रमस्य। आह,—'ननु यथा क्रमस्य न प्रत्याम्नायः, एवं छन्दसामपि'। उच्यते,—सत्यम् एवम् एतत्, मुख्यस्तु क्रमानुग्रहः, जघन्यः छन्दसां। तस्मादपि आद्ये तृचे गातव्यमिति ॥ (१०।५।२अ०) ॥

---

एकस्यामृचि धूर्गानाधिकरणम् ॥

सू० त्रिकस्तृचे धुर्ये स्यात् ॥ १० ॥* (पू०) ॥

भा० अस्ति एकत्रिकः क्रतुः,—'अथैष एकत्रिकः'। तस्य एकस्यां बहिष्पवमानं, तिसृषु होतुराज्यम्। एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः। एकस्यामच्छावाकस्य तिसृषु माध्यन्दिनः पवमानः' इति। सन्ति तु धुरि सामानि। तेषु संशयः,—किं, तृचे गेयानि, उतैकस्याम् ऋचि? इति। किं प्राप्तं?—'त्रिकः' स्तोमः 'तृचे' 'स्यात्' धुरि सामसु। एवं तृचप्रापकश्चोदकोऽनुग्रहीष्यते। तस्मात् तृचे गेयमिति ॥

सू० एकस्यां वा स्तोमस्याशक्तिधर्मत्वात् ॥ ११ ॥ (सि०) ॥

---

* सर्व्वेष्वेव पुस्तकेषु 'त्रिकस्तृचेषु' इति पाठः प्रथमं लिखित आसीत्, स च 'त्रिकस्तृचे' इति कृत्वा पश्चात् संशोधितः। एवं आदर्शपुस्तके, 'धुर्ये' इति सूत्रे, 'धुरि' इति भाष्ये च पाठः, परन्तु, अन्येषु पुस्तकेषु सूत्रे 'धूर्य्ये' इति पाठः भाष्ये च क्वचित् 'धूरि' इति क्वचिच्च 'धुरि' इत्यनियत एव पाठः। व्याकरणानुसारेण आदर्शपुस्तकपाठ एव साधीयान्।

भा० 'एकस्यां वा' ऋचि गेयं, स्तोमस्य हि तथावृत्तिधर्मता भवति, वचनप्रामाण्यात्, इदं भवति वचनम् 'आवृत्तं धूर्षु स्तुवते, पुनरावृत्तं पृष्ठैरुपतिष्ठते'* इति; 'किमिव वचनं न कुर्यात्' । तस्मात् धुरि सामसु एकस्यामृचि गेयमिति ॥ (१०।५।३अ०) ॥

द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानाधिकरणम् ॥

सू० चोदनासु त्वपूर्व्वत्वाल्लिङ्गेन धर्म्मनियमः स्यात् ॥ १२ ॥ (सि०) ॥

भा० सन्ति द्विरात्रादयो अहर्गणाः,—'द्विरात्रेण यजेत' इत्येवमादयः । तेषु किं कृत्स्नस्य द्वादशाहस्य विध्यन्तः प्रवर्त्तते, उत प्रायणीयोदयनीयौ वर्जयित्वा दशरात्रस्य? इति । किं प्राप्तं?—अविशेषात् कृत्स्नस्येति ।

एवं प्राप्ते ब्रूमः,—'चोदनासु' तासु प्रायणीयोदयनीययोः पूर्वत्वेनासम्भवात् दशरात्रस्य विध्यन्तः प्रवर्त्तते । केन हेतुना?। 'लिङ्गेन' विध्यन्तो नियम्येत । किं लिङ्गं भवति?। एवमाह,—'यत् प्रथमं तत् द्वितीयं यत् द्वितीयं तत् तृतीयं जगतीमन्तर्गच्छति' इति;—एवं ज्ञापयति,—यत् प्रथमं द्विरात्रस्य, तत् द्वितीयं द्वादशाहस्य गायत्रं; यत् द्वितीयं द्विरात्रस्य, तत् तृतीयं त्रैष्टुभं जगतीमन्तर्गच्छति'—इति षडहतृतीयं जागतम् अहः अन्तरीयमाणं दर्शयन् दशरात्रस्य प्रवृत्तिं दर्शयति । 'यत् प्रथमम्' इति द्विरात्रस्य वादः, प्रकरणात्; 'तत्

* 'उपतिष्ठन्ते' इति पाठ्दर्शपुस्तकपाठः ।

तृतीयम्' इति द्वादशाहस्य, द्विरात्रे तृतीयाभावात्। अपि चेदमपरं लिङ्गं,—'गायत्रं प्रथममहस्त्रैष्टुभं द्वितीयं जगतीमन्तर्गच्छति' इति, अन्तराये षड़हतृतीयं आगतं दर्शयति। तस्मात् दशरात्रस्य प्रवृत्तिः॥

सू० प्राप्तिस्तु रात्रिशब्दसम्बन्धात्॥ १३॥ (उप०)॥

भा० 'द्विरात्रेण यजेत' इति रात्रशब्दः, इहापि 'दशरात्रः' इति स एव, तदेतस्मात् प्रकृतिलिङ्गात् दशरात्रस्य विध्यन्त इति प्राप्ते लिङ्गदर्शनम्॥ (१०।५।४अ०)॥

---

सप्तभिराधुनोति इत्यनेनाग्नौ धूननाद्यर्थानां मन्त्राणामनियमेनोपादानाधिकरणम्॥

सू० अपूर्वासु तु सङ्ख्यासु विकल्पः स्यात् सर्वासामर्थवत्त्वात्॥ १४॥

भा० अग्नौ तु आधूननार्था मन्त्राः,—'वेशीनां त्वापत्मन्नाधूनोमि' इत्येवमादयः, तान् प्रकृत्य श्रूयते,—'सप्तभिराधूनोति' इति। तथा अग्नौ वपनार्था मन्त्राः,—'या ओषधीः' इत्येवमादयः; तानपि प्रकृत्य श्रूयते,—'चतुर्दशभिर्वपति' इति। तत्र संशयः,—'किमाद्योपादानम्, उत अनियमः? इति। किं प्राप्तम्?,—आद्योपादानम्, "आदितो वा तन्न्यायत्वात्" (८सू०) इति।

एवं प्राप्ते ब्रूमः,—'अपूर्व्वासु तु सङ्ख्यासु' (अप्रकृतिपूर्विकासु) श्रूयमाणासु ब्रूमः, 'विकल्पः स्यात्', एवं 'सर्वासां' सङ्ख्यानाम् अर्थवत्त्वं

भविष्यति; अन्योपादाने हि केषाञ्चित् साम्नामुत्पत्तिरनर्थिकैव स्यात्! गम्यते च ताभिर्वपनं, प्रकरणात्, या हि प्रकृतिपूर्विका भवन्ति, तासां प्राकृतप्रयोगेणार्थवत्ता, आनर्थक्येन च कारणेन मुख्यातिक्रमः सङ्ख्यायाः॥ (१०।५।५अ०)॥

---

विवृद्धस्तोमकेऽप्राकृतानां साम्नामागमाधिकरणम्॥

सू॰ स्तोमविवृद्धौ प्राकृतानामभ्यासेन सङ्ख्यापूरणमविकारात् सङ्ख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात्॥ १५॥ (पू॰)॥

भा॰ इह विवृद्धस्तोमकाः क्रतव उदाहरणम्,—'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेन ओजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकामम्' इति। तत्रायं संशयः,—किं प्राकृतानां साम्नामभ्यासेन सङ्ख्या पूरयितव्या, उत अप्राकृतानामागमेन? इति। किं प्राप्तम्?—अनियमः, अविशेषात्। इति प्राप्ते ब्रूमः,—'स्तोमविवृद्धौ' 'अभ्यासेन' सङ्ख्या पूर्य्यते, एवं हि प्रकृतग्रहणम्, इतरथा अप्रकृतक्रियेति; सङ्ख्या हि प्राकृतानां प्रधानभूतानां साम्नां गुणभावेनोच्यते, न प्राधान्येन; न चान्यत् सामद्रव्यं श्रुत्या विधीयते, यावांश्च श्रुतस्यार्थस्योत्सर्गे दोषः, तावान् अश्रुतकल्पनायां। तस्मादभ्यसितव्यानि प्राकृतानि सामानि, यथा धुरि सामानीति॥

सू॰ आगमेन वाऽभ्यासस्याश्रुतित्वात् ॥ १६ ॥ (सि॰) ॥

भा॰ वाशब्दः पक्षं व्यावर्त्तयति । अप्राकृतानां साम्नां 'आगमेन' सङ्ख्या पूरयितव्या इति । कुतः ?। अभ्यासो न हि श्रूयते, एतावत श्रूयते,—'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्' इति, यावांश्च श्रुतस्योत्सर्गे दोषः, तावानश्रुतकल्पनायां ।

'ननु आगमोऽपि न श्रूयते'। उच्यते,—उभयस्मिन्नश्रूयमाणे आगमो न्याय्यः, एवमागमपूरिता सङ्ख्या समञ्जसा भविष्यति, इतरथा अभ्यासपूरिता असमञ्जसा स्यात्! तस्मादागमेन पूरयितव्येति ॥

सू॰ सङ्ख्यायाश्च पृथक्त्वनिवेशात् ॥ १७ ॥ (यु॰१) ॥

भा॰ इतश्चागमेनेति। कुतः ?। पृथक्त्वनिवेशिनी हि सङ्ख्या, यथा अष्टौ घटा इति, अभ्यासेनापृथक् स्यात्! तस्मादागमेन पूरयितव्या इति ॥

सू॰ पराक्शब्दत्वात् ॥ १८ ॥ (यु॰२) ॥

भा॰ इतश्चागमेनेति । कुतः ? । पराक्शब्दो हि भवति,—'पराक् बहिष्पवमानेन स्तुवन्ति' इति । स च अनभ्यासस्य वाचकः, यथा 'पराचीः सामिधेनीरन्वाह' इति अनभ्यस्ता इति गम्यते । तस्मादपि आगमः ॥

सू॰ उक्ताविकाराच्च ॥ १९ ॥ (यु॰३) ॥

भा॰ इतश्चागमः, एवमुक्तस्याविकारो भवति । किमिदम् 'अविकार:' इति ?। अपुनर्वचनं, तत्र जामितादोषो न भविष्यति, अभ्यासे हि स स्यात्,—'जामि वा एतद्यज्ञस्य क्रियते यदेकं भूयः क्रियेत' इति ॥

सू॰ अश्रुतित्वान्नेति चेत् ॥ २० ॥ (आ॰) ॥

भा॰ 'इति चेत्',—इति पुनर्यदुक्तम् आगमोऽपि नैव श्रूयते इति, तत् परिहर्त्तव्यम् ॥

सू॰ स्यादर्थचोदितानां परिमाणशास्त्रम् ॥ २१ ॥ (आ॰नि॰) ॥

भा॰ अर्थेन सामानि चोद्यन्ते । कतमेनार्थेन ?। 'एकविंशेन अतिरात्रेण प्रजाकामं याजयेत्' इत्येवमादीनां वाक्यानामर्थेन इति, न हि अनागम्यमानेषु सामसु एताः सङ्ख्याः सामञ्जस्येन सम्भवन्ति, तस्मात् 'अर्थचोदितानाम्' इदं परिमाणशासनं कृत्वा कृतार्थः शब्दः 'एकविंशेन अतिरात्रेण प्रजाकामं याजयेत्' इति अर्थप्राप्तमागमं न शक्नोति वारयितुं । तस्मादागमेन पूरणमिति ॥

सू॰ आवापवचनं चाभ्यासे नोपपद्यते ॥२२॥ (यु॰४)॥

भा॰ इतश्चागम इति पश्यामः, 'आवापवचनं' हि भवति,—'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहती अनुष्टुप्, अत्र हि एवावपन्ति,

अत एवोदपत्ति' इति; एतत् 'अभ्यासे' नावकल्पते। तस्मादप्यागम इति ॥

सू० साम्नां चोत्पत्तिसामर्थ्यात् ॥ २३ ॥ (यु०५) ॥

भा० इतश्चागमः। कुतः?। 'साम्नां' हि एवमुत्पत्तिरर्थवती भवति—
'दश सामसहस्राणि शतानि च चतुर्दश।
साङ्गानि सरहस्यानि यानि गायन्ति सामगाः।
अशीतिशतमाग्नेयं पवमानं चतुःशतं।
ऐन्द्रं स्यात् सप्तविंशानि* यानि गायन्ति सामगाः'॥ इति।
इतरथैषां साम्नां उत्पत्तिरनर्थिका स्यात्। तस्मादपि आगमः इति ॥

सू० धूर्येष्वपीति† चेत् ॥ २४ ॥ (आ०) ॥

भा० अथ यदुपवर्णितं, यथा धूरि-सामस्विति, तत् परिहर्त्तव्यम् ॥

सू० नावृत्तिधर्मत्वात् ॥ २५ ॥ (आ०नि०) ॥

भा० नैतदेवं युक्तं, धुरि-सामसु आवृत्तिधर्मकाणि हि तानि, वचनप्रामाण्यात्; इदं तत्र वचनम् 'आवृत्तं धूर्षु स्तुवते, पुनरावृत्तं पृष्ठैरुपतिष्ठते' इति, वचनात् तत्र क्रियते; तद्वदिह वचनं नास्ति, तस्माद् विषममेतदुपवर्णनम्। अत्र आगमेन सङ्ख्या पूरयितव्येति सम्यगेतदिति ॥ (१०।५।६अ०) ॥

---

* 'षड्विंशानि' इति आदर्शपुस्तकपाठः।

† सर्व्वत्रैव 'धूर्य्येषु' इत्येव पाठः। परन्तु पूर्व्वापरपाठसामञ्जस्याय 'धुर्य्येषु' इत्येव पठितुं युक्तम्। एष इव पाठो व्याकरणानुसारी। एवं भाष्ये 'धूरि' इत्यत्र 'धुरि' इति सम्यक् पाठः।

बहिष्पवमाने ऋगागमाधिकरणम् ॥

सू० बहिष्पवमाने तु ऋगागमः सामैकत्वात् ॥ २६ ॥

भा० त्रिवृद्बहुस्तोमकेषु क्रतुषु संशयः,—बहिष्पवमाने किं साम्नाम् आगमः, अभ्यासः? इति। पूर्वेण न्यायेनागमः इति।

एवं प्राप्ते ब्रूमः,—'बहिष्पवमाने तु' नैवम्, 'ऋगागमः' तत्र इति। कुतः?। 'सामैकत्वात्'। कथं?। यत् उत्तरयोः पवमानयोस्तृचाय तृचाय हिङ्करोति। अथ कस्माद् बहिष्पवमाने सकृदेव हिङ्करोतीति?। 'एकं हि तत्र सामेति ब्रूयात्, स्वारमेव गायत्रम्' इति वचनात्, सामैकत्वे ज्ञाते ऋगागमेन सङ्ख्या पूरयितव्येति, सामापि अभ्यसितव्यमिति ॥ (१०।५।७अ०) ॥

---

सामिधेनीष्वभ्यासावशिष्टागमेन सङ्ख्यापूरणाधिकरणम् ॥

सू० अभ्यासेन तु सङ्ख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् ॥ २७ ॥ (पू०) ॥

भा० स्तो दर्शपूर्णमासौ, तत्र काम्याः सामिधेनीकल्पाः 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य, चतुर्विंशतिमनुब्रूयात् ब्रह्मवर्चसकामस्य, एकविंशतिस्त्वानुब्रूयात् अन्नकामस्य, द्वाविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य, षड्विंशतिमनुब्रूयात् पशुकामस्य' इत्येवमादयः। तत्रायमर्थः सांशयिकः,—किं सामिधेनीष्वागमेन सङ्ख्या पूरयितव्या, उत अभ्यासेन, उत यावदुक्तमभ्यस्य शेषमागमेन? इति। किं प्राप्तं?—पूर्वेण

न्यायेनागम इति । अपि च अविशेषोऽर्थः, अभ्यासेन हि पूर्यमाणा न सामञ्जस्येन स्यात्, तस्मादागम इति ।

एवं प्राप्ते ब्रूमः,—'अभ्यासेन तु सङ्ख्यापूरणम्' इति । तुशब्दः पक्षव्यावर्त्तकः,—नागमः किन्तर्हि अभ्यासः । कुतः ? । 'अभ्यासप्रकृतित्वात्', —प्रकृतौ अभ्यासेन सङ्ख्या पूरिता,—'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति । कथं ?। 'पञ्चदश सामिधेन्यः' इति श्रुतिः, एकादश च समाम्नाताः; तत्र अभ्यासेनागमेन वा सङ्ख्यायां पूरयितव्यायां अभ्यास उक्तः,— 'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति, अनेन नियमेन प्रथमोत्तमयोरभ्यासः कर्त्तव्य इति, यावत्कृत्वस्तयोरभ्यासे क्रियमाणे पञ्चदशसङ्ख्या पूर्यते, तावत्कृत्वोऽभ्यसितव्यम्,—इत्येतदभिप्रायं त्रित्वं, तथा हि दृष्टार्थता, त्रिसङ्ख्याभिप्राये अदृष्टं कल्प्यं स्यात्! तस्मादिहापि तत्प्रकृतित्वात् यावत्कृत्वोऽभ्यस्यमानयोर्यथोदिता सङ्ख्या पूर्यते, तावत्कृत्वोऽभ्यसितव्यम् इति ॥

सू॰ अविशेषात् नेति चेत् ॥ २८ ॥ (आ॰) ॥

भा॰ इति यदुक्तं तत् परिहर्त्तव्यम् ॥

सू॰ स्यात् तद्धर्मत्वात् प्रकृतिवदभ्यस्येत आ सङ्ख्यापूरणात् ॥ २९ ॥ (आ॰नि॰) ॥

भा॰ 'स्यात्' अभ्यासः । कुतः ? । प्रकृतिधर्मत्वं हि विकृतेः, तस्मात् 'आ सङ्ख्यापूरणात्' अभ्यसितव्यम् । एवं 'प्रकृतिवत्' कृतं भविष्यति, चोदकानुरोधेन अभ्याससामञ्जस्यम् अभ्युपगन्तव्यं । तस्मादभ्यास इति ॥

सू॰ यावदुक्तं वा कृतपरिमाणत्वात् ॥ ३० ॥ (सि॰) ॥

भा॰ वाशब्दः पक्षं व्यावर्त्तयति । नैवम्, आ सङ्ख्यापूरणात् प्रथमोत्तमे अभ्यसितव्ये इति, यावदुक्तमभ्यस्य अवशिष्टानामागमेन पूरयितव्या सङ्ख्येति । कुतः ? । 'कृतपरिमाणत्वात्' अभ्यासस्य, कृतं हि अभ्यासस्य परिमाणं,—'त्रिः प्रथमामन्वाह, त्रिरुत्तमाम्' इति, त्रिसङ्ख्या चाभ्यासेन विवक्षिता, न पूरणी सङ्ख्या, तथा श्रुतिः परिगृहीता स्यात्, इतरथा लक्षणा ।

अथ यदुक्तं,—'दृष्टार्थता चैवं भवति' इति । नैतदेवम्, आदर्त्तव्यो हि त्रित्वानुरोधः, द्विचतुष्केणापि हि सङ्ख्या पूर्य्यते, तथापि प्रथमोत्तमयोस्त्रिरभ्यासोऽनुष्ठेयः, तेन सङ्ख्या पूरयितव्येति ; इहापि तेनैव अभ्यासेन सङ्ख्या पूर्य्यते, भवति हि सोऽप्यत्र सङ्ख्यापूरणः, प्रकृतौ प्रथमोत्तमे च त्रिरभ्यस्ते, सङ्ख्या च पूरिता ; इहापि तद्वदेव कर्त्तव्यं,— प्रथमोत्तमे च त्रिरभ्यसितव्ये, सङ्ख्या च पूरयितव्या, न प्रकृतावेष शब्दार्थो गम्यते,—अनेनाभ्यासेन सङ्ख्या पूरयितव्येति ; अभ्यासः कर्त्तव्य इति वचनादवगम्यते, सङ्ख्या पूरयितव्येति सामर्थ्यात् ; सा च प्रकृतौ अर्थादनेन पूरिता, यश्चार्थात् कृतः, न स चोदनार्थः ; तस्मात् न, अनेनाभ्यासेन सङ्ख्या पूरयितव्येति चोदक आह । एवं चेद् 'यावदुक्तम्' अभ्यस्य अवशिष्टानामागम इति ॥

सू॰ अधिकानाञ्च दर्शनात् ॥ ३१ ॥ (यु॰) ॥

भा॰ इतश्चागम इति, अधिकदर्शनं हि भवति,—'न जगत्या परिदध्यात्, यज्जगत्या परिदध्यात् तच्छन्दांसि गमयेत्, त्रिष्टुभा

परिदधाति' इति, अभ्यासे च जगतीपरिधानाशङ्का नावकल्पते । तस्मादप्यागम इति ॥

सू० कर्म्मस्वपीति चेत् ॥ ३२ ॥ (आ०) ॥

भा० इति चेत् पश्यसि,—यावदुक्तमभ्यस्य अधिका आगमयेदिति, धुरि-सामकर्म्मस्वपि एवमेव स्यादिति ॥

सू० न चोदितत्वात् ॥ ३३ ॥ (आ०नि०) ॥

भा० नैतदेवं, धुरि-सामकर्म्मसु युक्तं; चोदितस्तत्राभ्यासः,—'आवृत्तं धूर्षु स्तुवते, पुनरावृत्तं पृष्ठैरुपतिष्ठते' इतिं; इह तद्वचनं नास्ति, तस्माद्यावदुक्तम् अभ्यस्य अवशिष्टानामागमेन सङ्ख्या पूरयितव्येति ॥ (१०।५।८अ०) ॥

---

षोडशिनां प्राकृतत्वाधिकरणम् ॥

सू० षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ॥ ३४ ॥ (पू०) ॥

भा० अस्ति षोड़शी, ज्योतिष्टोमं प्रकृत्याम्नातः,—'य एवं विद्वानेतं षोड़शिनं गृह्णाति, भवत्यात्मना, परास्य भ्रातृव्यो भवति' इति । तत्र संशयः,—किमेष प्राकृतः, वैकृतः? इति ? कथं?। प्राकृतः, ज्योतिष्टोमं प्रकृत्य आम्नानात्, वैकृतो विकृतौ वचनात्, 'मध्यमेऽहं-स्त्रिरात्रस्य गृह्यते' इति । प्रकृतावपि वचनमस्त्येवेत्याशङ्क्य, 'अग्निष्टोमे राजन्यस्य गृह्णीयादतिरात्रे ब्राह्मणस्य' इति, विकृतावपि वचनसामर्थ्यात्

विकृतौ अतिरात्रे स्यादित्याशङ्क्यते । प्रकृतावाम्नानात्, प्रकृतौ च अतिरात्रस्य भावात् प्राकृतः इत्याशङ्का । तस्मात् संशयः ।

किं प्राप्तं?—'षोड़शिनो वैकृतत्वं' स्यात् । कुतः? । 'तत्र कृत्स्नविधानात्', विकृतावसौ कृत्स्नो विधीयते । कथं? । 'य एवं विद्वानेतं षोड़शिनं गृह्णीत' इत्यभिधाय 'मध्यमेऽहं त्रिरात्रस्य गृह्यते' इति विधीयते; प्रकरणाच्च वाक्यं बलीयः । एवं वाक्येन प्रकरणे बाधिते, 'अतिरात्रे ब्राह्मणस्य' इति वचनं वैकृते अतिरात्रे इति गम्यते, तेन यद्यपि ज्योतिष्टोमं प्रकृत्य विधानाद्विकृतावसौ न कृत्स्न आम्नातः, तथापि कृत्स्न एव विकृतौ विहितो भवति । तस्मात् विकृतिषु परिगणितासु षोड़शी ग्रहीतव्यो न प्रकृताविति ॥

सू० प्रकृतौ चाभावदर्शनात् ॥ ३५ ॥ (यु०१) ॥

भा० इतश्च वैकृत इति । कुतः? । प्रकृतौ अभावो दृश्यते । कथं? । 'द्वे संस्तुतानां विराजमतिरिच्येते' इति अभावे षोड़शिनः, द्वे स्तोत्रीये विराजमतिरिच्येते इति वर्णितं द्वितीयेऽध्याये (२।४। २६ सू०) । तस्मादपि वैकृतः षोड़शीति ॥

सू० अयज्ञवचनाच्च ॥ ३६ ॥ (यु०२) ॥

भा० इतश्च वैकृतः स्यात्, एवं हि भवति वचनं,—'न षोड़शी नाम यज्ञोऽस्तीत्याहुः' इति । न तावत् नास्ति षोडशी ज्योतिष्टोमे प्रकृतौ, इदं भवति वचनं, यदि ज्योतिष्टोमे नास्ति, एवमुपपद्यते; तस्मादपि वैकृत इति गम्यते ॥

सू० प्रकृतौ वा शिष्टत्वात् ॥ ३७ ॥ (सि०) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,—नैतदस्ति वैकृतः षोडशीति, प्राकृतः स्यात्। कुतः?। प्रकृत्यां हि ज्योतिष्टोमे आम्नातः, प्रकरणाच्च ज्योतिष्टोमेनैकवाक्यता स्यात्, सा विकृतावप्युच्यमानस्य नापैति। न हीदं वचनं प्रकृतौ प्रतिषेधकं, किन्तर्हि विकृतावुपदेशकं। तस्मात् प्रकृतौ शिष्टाप्रतिषिद्धत्वात् षोडशी भवितुमर्हति इति।

अपि च न केवलं प्रकरणमस्य साधकं, किन्तर्हि वाक्यमपि तथेति, 'अग्निष्टोमे राजन्यस्य गृह्णीयादतिरात्रे ब्राह्मणस्य' इति। न चेदं प्रकृतौ सम्भवत् वैकृतेऽतिरात्रे शक्यते कल्पयितुं ; तस्मात् प्राकृतः षोडशीति ॥

सू० प्रकृतिदर्शनाच्च ॥ ३८ ॥ (यु०) ॥

भा० प्रकृतौ भवति दर्शनमस्य षोडशिनः,—'तिस्रः संस्तुतानां विराजमतिरिच्यन्ते' इति, उक्थमेतत् षोडशिनि गृह्यमाणे तिसृणां स्तोत्रीयाणां दर्शनमवकल्पत इति। तस्मात् प्राकृतः षोडशीति ॥

सू० आम्नातं परिसङ्ख्यार्थम् ॥ ३९ ॥ (आ०नि०१) ॥

भा० अथ यदुक्तं, वैकृतस्तत्र कृत्नविधानादिति, तदुक्तं,—प्रकृतावप्रतिषेधकं तद्वचनमिति। 'अथ चोदकेन प्राप्तौ किमर्थं पुनरुच्यते' इति। अविशेषेण हि तद्वचनं प्रकृतावभिधाय 'अग्निष्टोमे राजन्यस्य, ब्राह्मणस्य चातिरात्रे' इति वाक्येनोक्तं, तद्विकारार्थमेवं प्राप्नोति

परिसङ्ख्यानं, तदर्थमुच्यते, अगतिरात्रेऽप्यग्निष्टोमेऽपि कथं गृह्येत?— 'मध्यमेऽहंत्रिरात्रस्य गृह्यते' इति॥

सू॰ उक्तमभावदर्शनम्॥ ४०॥ (आ॰ नि॰२)॥

भा॰ अथ यदुक्तं,—प्रकृतौ षोडशी न दृश्यते, 'द्वे संस्तुतानां विराजमतिरिच्येते' इति, तदुक्तम्,- अभावदर्शनात् वैकल्पिकः षोडशी, न विहितप्रतिषेधात् पक्षेऽतिरेकः इति॥

सू॰ गुणादयज्ञत्वम्॥ ४१॥ (आ॰नि॰३)॥

भा॰ अथ यदुक्तम्,—अयज्ञवचनात् न प्रकृतौ षोड़शीति, तदुक्तं,— शिष्टत्वात् प्रकृतौ गृह्यत इति। कथं त्वयज्ञवचनं?। वैकल्पिकत्वात्, पक्षे 'सः' यज्ञो नास्तीति भक्त्या अयज्ञ इत्युच्यते। तस्मात् प्राकृतः षोड़शीति। प्रयोजनं,—पूर्व्वपक्षे प्रकृतौ न गृह्यते, गृह्यते सिद्धान्ते॥ (१०।५।८अ॰)॥

---

आग्रयणादेव षोड़शिग्रहणाधिकरणम्॥

सू॰ तस्याग्रयणाद् ग्रहणम्॥ ४२॥ (सि॰)॥

भा॰ अस्ति षोड़शी,—"य एवं विद्वानेतं षोड़शिनं गृह्णाति, भवत्यात्मना परास्य भ्रातृव्यो भवति" इति। तत्रायमर्थः समधिगतः,— 'प्राकृतः षोड़शी' इति; अथेदानीम् इदं सन्दिह्यते,—किमसौ आग्रयणादुक्थ्याच्च गृहीतव्य इति, उत, आग्रयणादेव? इति। किं

प्राप्तं? "तस्याग्रयणात् ग्रहणम्"। कुतः?। वचनात्, 'आग्रयणात् गृह्णाति षोड़शिनम्' इति।

सू॰ उक्थ्याच्च वचनात् ॥ ४३ ॥ (पू॰) ॥

भा॰ गृह्णीम एतत्,—'आग्रयणाद् ग्रहीतव्यः षोड़शी' इति, किन्तु 'उक्थ्याच्च' ग्रहीतव्यः। कुतः?। 'वचनात्' वचनमिदं भवति,—'उक्थ्यात् गृह्णाति षोड़शिनम्' इति, किमिदं वचनं न कुर्यात्। तस्मादुक्थ्याग्रयणाभ्यां ग्रहीतव्य इति। (॥१०।५।१०अ०पू०) ॥ तदेतत् अपर्यवसितं तिष्ठतु तावत्, अथ इदानीमेतच्चिन्त्यते,—

---

तृतीयसवन एव षोड़शिग्रहणाधिकरणम् ॥

सू॰ तृतीयसवने वचनात् स्यात् ॥ ४४ ॥

भा॰ अस्ति ज्योतिष्टोमः, तत्र श्रूयते,—'यः षोड़शी गृह्यते इन्द्रियमेव वीर्य्यमात्मं धत्ते' इति। तत्र संशयः,—किं सवने-सवने ग्रहीतव्यः, उत, तृतीयसवने? इति। किं प्राप्तं?-सवने-सवने इति। कुतः?। प्रतिसवनं हि श्रूयते,—'गृह्णाति षोड़शिनम्' इति। शब्दलक्षणे च कर्म्मणि शब्दो नः प्रमाणं; तस्मात् सवने-सवने षोड़शी गृह्यते इति।

एवं प्राप्ते ब्रूमः,—'तृतीयसवने' 'स्यात्' अस्य ग्रहणम् इति। कुतः?। वचनात्, भवति हि वचनं,—'तृतीयसवने आग्रयणात् गृह्णाति षोड़शिनम्' इति, वचनं नः प्रमाणं, तस्मात् तृतीयसवने ग्रहीतव्य इति। अथ यदुक्तं,—प्रतिसवनं षोड़शिग्रहणम् इति,

तृतीयसवनग्रहणस्तुत्यर्थं तत्। कथं? । 'प्रातःसवने गृह्यः तेजो वै प्रातःसवनं, तेजस एव वज्रं निर्मिमीते; माध्यन्दिने सवने गृह्यः, तेजो वै माध्यन्दिनं सवनं, तेजस एव वज्रं निर्मिमीते; तृतीयसवने गृह्यः, पशवो वै तृतीयसवनं, पशुभ्य एव वज्रं निर्मिमीते; यत् प्रातःसवने गृह्णीयात् वज्र उत्तरे सवने व्यतिरिच्येत; यन्माध्यन्दिने मध्यतः, वज्रं निहन्यात्; तृतीयसवने गृह्यः,तत् सर्वेषु सवनेषु गृह्णाति न पूर्वे सवने आर्त्तिं नीत इति ॥ (१०।५।११अ०) ॥

सू० अनभ्यासे पराक्शब्दस्य तादर्थ्यात् ॥ ४५ ॥ (१०अधि०पू०यु०१) ॥

भा० स्थितात् उच्यते,—इतश्च पश्यामः,—उक्थ्याच्च ग्रहीतव्य इति। कुतः?। 'यत् पराञ्चमुक्थ्यान्निर्गृह्णाति षोड़शिनम्' इति। उक्थ्यान्निर्गृह्णातीति सम्बन्धः, न उक्थ्यात् पराञ्चम् इति। कुतः?। 'अनभ्यासे' पराक्शब्दो वर्त्तते। कुतः?। 'तादर्थ्यात्',–तादर्थ्यं हि अस्यावगम्यते,—'पराचीः सामिधेनीरन्वाह',—अनभ्यस्ताः सामिधेनी-रन्वाहेति यथा,* अनभ्यासवचनः सन् नोक्थ्येन सम्बध्यते, न हि भवति सम्बन्धः,–उक्थ्यादनभ्यस्तमिति, कथन्तर्हि उक्थ्यान्निर्गृह्णाति तमनभ्यस्तम् इति; तस्मादप्युक्थ्याग्रयणाभ्यां ग्रहीतव्य इति ॥

सू० उक्थ्याविच्छेदवचनत्वात् ॥ ४६ ॥ (१०अधि० पू०यु०२) ॥

---

* 'अन्वाहेति, तथा' इति क०स०पु० एवं का०इ०पु० पाठः। अयमेव पाठः साधीयान्।

भा० इतश्चोक्थादपि ग्रहीतव्य इति। कुतः ?। उक्थ्यविच्छेदवचनं भवति,—'विच्छिन्दन्ति ह वा एतदुक्थ्यं यदुक्थ्यानि षोड़शिनश्च ततः प्रणयन्ति' इति, प्रणयतिना सम्बन्धाद्विस्पष्टमपादानं दर्शयति; तस्मादुभाभ्यां ग्रहीतव्य इति ॥

सू० आग्रयणाद्वा पराक्शब्दस्य देशवाचित्वात् पुनराधेयवत् ॥ ४७ ॥ (१०अधि०उ०) ॥

भा० 'आग्रयणात्' एव 'वा' ग्रहीतव्यः, नोक्थ्यात्। कुतः ?। 'यदाग्रयणात् गृह्णाति षोड़शिनम्' इति वचनात्, न शक्यः आग्रयणात् कृत्स्नो गृह्यमाण उक्थ्यात् गृहीतुम् इति; अगतिका ह्येषा गतिः,—यत् कृत्स्नसंयोगे सति विकल्पसमुच्चयौ स्यातां; सत्यां हि गतौ न तौ आश्रयणीयौ स्तः; अस्ति चान्न गतिः। कथं ?। 'पराक्शब्दस्य देशवाचित्वात्',—दिग्देशकालवचनो हि पराक्शब्दो भवति, तथा सति उक्थ्यात् पराञ्चमिति सम्बन्धो भविष्यति, न कृत्स्नसंयोगो विरोत्स्यते; यथा, 'पराञ्चमन्याधेयात् पुनरादधाति' इति कालसंयोगे पञ्चमी, नापादाने; एवमिहापि द्रष्टव्यम्; तस्मादाग्रयणादेव ग्रहीतव्य इति ॥

सू० विच्छेदः स्तोमसामान्यात् ॥ ४८ ॥ (आ०नि०) ॥

भा० अथ यदुक्तं,—विच्छेदवचनादपादानदर्शनम् इति। नैतदेवं,—'विच्छेदः स्तोमसामान्यात्' भवति,—'विच्छिन्दन्ति वा एतदुक्थ्यं यदुक्थ्यानि षोड़शिनश्च ततः प्रणयन्ति' इति, एकविंशस्तोमत्वादुक्थ्य-

विग्रह इव षोड़शी इति, तत्र पूर्व्वयोर्विच्छिन्न एवोच्यते, ततः प्रचयन्ति इति। इयमपि कालसम्बन्ध एव पञ्चमी, नापादाने; तस्माद् आग्रयणादेव ग्रहीतव्यः षोड़शी॥ (१०।५।१०अधि० शेषः)॥

---

षोड़शिग्रहस्य स्तोत्रशस्त्रताधिकरणम्॥

## सू० उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात् सति हि संस्थान्यत्वम्॥ ४९॥ (पू०)॥

भा० षोड़शिनि प्रकृते इदमाम्नायते,—'अग्निष्टोमे राजन्यस्य गृह्णीयादुक्थ्ये वा ग्राह्यः' इति। तत्रायमर्थः सांशयिकः,—किम् अस्तोत्रशस्त्रः षोड़शी, उत, सस्तोत्रशस्त्रः? इति। किं प्राप्तम्?—अस्तोत्रशस्त्रः स्यात्। कुतः?। 'उक्थ्याग्निष्टोमसंयोगात्,' उक्थ्याग्निष्टोमसंयोगो भवति,—'अग्निष्टोमे राजन्यस्य गृह्णीयादुक्थ्ये वा ग्राह्यः' इति; अग्निष्टोमसंस्थे उक्थ्यसंस्थे च षोड़शी ग्रहीतव्य इत्युच्यते। एवमग्निष्टोमसंस्थोऽसौ क्रतुर्भवति, यद्यत्र स ग्रहो गृह्यते, यदि च न तत्र स्तोत्रं शस्त्रं वा क्रियते; सति हि स्तोत्रे शस्त्रे वा षोड़शिना स्तोमेन सन्तिष्ठेत! तत्राग्निष्टोमसंस्थो न स्यात्, उक्थ्यसंस्थस्य; तत्रेदं वचनम् उपरुध्येत,—'अग्निष्टोमे राजन्यस्य गृह्णीयादुक्थ्ये वा ग्राह्यः' इति!। अग्निष्टोमविशिष्टे ज्योतिष्टोमे स उच्यते, अग्निष्टोमस्यैवाङ्गं; न हि, यागः स्तुतशस्त्रयोरङ्गं भवति, फलवत्त्वात् यागस्य, अफलत्वाच्चेतरयोः; अग्निष्टोमस्यासौ ज्योतिष्टोमसंस्थो अनेन भवति, नान्यथा; तस्मादस्तोत्रशस्त्रः स्यात् इति॥

सू० सस्तुतशस्त्रो वा तदङ्गत्वात् ॥ ५० ॥ (सि०) ॥

भा० 'सस्तुतशस्त्रो वा' षोड़शी। कुतः?। 'तदङ्गत्वात्',—यागस्य हि स्तोत्रशस्त्रेऽङ्गभूते ग्रहग्रहणनिमित्ते। कथं?। 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इत्युपसम्प्राप्ते निमित्ते भवितव्यं नैमित्तिकेन; तस्मात् 'सस्तुतशस्त्रः' षोड़शी स्यात् ॥

सू० लिङ्गदर्शनाच्च ॥ ५१ ॥ (हे०) ॥

भा० लिङ्गमप्येतमर्थं दर्शयति,—'सस्तुतशस्त्रः षोड़शी' इति। कथम्?। 'ऊर्द्धा वा अन्ये यज्ञक्रतवः सन्तिष्ठन्ते तिर्य्यञ्चोऽन्ये, ये होतारमभिसन्तिष्ठन्ते, ते ऊर्द्धाः, ये वा अच्छावाकं, ते तिर्य्यञ्चः'। कथं कृत्वा एतल्लिङ्गं?। एतद् उक्तं भवति,—द्वये एव यज्ञक्रतवो भवन्ति ये होतारमभिसन्तिष्ठन्ते ये चाच्छावाकं; यदि सस्तोत्रशस्त्रः षोड़शीति तत एवं, अन्यथा अयं षोड़शी अध्वर्य्युमभिसन्तिष्ठेत! तस्मादपि सस्तोत्रशस्त्रः षोड़शी ॥

सू० वचनात् संस्थान्यत्वम् ॥ ५२ ॥ (आ०नि०) ॥

भा० अथ यदुक्तं,—सति हि संस्थान्यत्वम् इति; वचनादेवं भविष्यति। अग्निष्टोमान्तं यदुक्तं, तस्य वचनादयमन्योऽन्तो विधीयते; किमिव वचनं न कुर्य्यात्; तस्मादपि सस्तोत्रशस्त्र इति ॥ (१०।५।१२अ०) ॥

---

अङ्गिरसां द्विरात्रे षोड़शिनः परिसंख्याधिकरणम्।

सू० अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥ (पू०) ॥

भा० अस्ति अङ्गिरसां द्विरात्रः, तत्रेदमाम्नायते,—'वैखानसं पूर्व्वेद्युः साम भवति षोड़श्युत्तरे' इति। तत्रायमर्थः सांशयिकः,—किमत्र षोड़शिनो विधानम्, उत, प्राप्तस्य परिसङ्ख्यानम्?—इति। किं प्राप्तं?—अप्राप्तस्य विधानम्, आनुमानिकश्चोदकः, स विहिते न प्रापयति, विहितश्च 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यनेन वचनेन; तस्मात् चोदको न प्रापयतीति अप्राप्तस्य विधानमिति गम्यते॥

सू० अन्वयो वानारभ्यविधानात् ॥ ५४ ॥ (सि०) ॥

भा० 'अन्वयो वा'—'षोड़शिनोऽप्यस्मिन् क्रतौ परिसङ्ख्यार्थमिदं श्रवणं,—'वैखानसं साम पूर्वेद्युर्भवति षोड़श्युत्तरे' इति। कथम् अन्वयः?। 'अनारभ्यविधानात्'। कतमोऽनारभ्यविधिः?। 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति, तेन प्राप्ते उपसंहारः क्रियते,—यदेतत् द्विरात्रस्योत्तरे गृह्यते इति,—एतदङ्गिरसां द्विरात्रस्य गृह्यते, नान्यत्र इति।

अथ वा एवं प्राप्तम्,—"अभावादतिरात्रेषु गृह्यते" इति, यदेतत् प्राकृतमतिरात्रेषु षोड़शिग्रहणं, वैकल्पिकं तत् विकल्पेनैव सर्व्वद्विरात्रेषु प्राप्तं नियम्येत, 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति, तस्योपसंहारे कृतेऽन्यद्विरात्रेषु अभावः, अभावादङ्गिरसां द्विरात्रे नियतो गृह्यते षोड़शी उत्तरे इति। "अन्वयो वा अनारभ्य-

विधानात्”,—अन्वितानि षोड़शिना सर्व्वैर्द्विरात्रैरुत्तराणि अहानि, प्रत्यक्षश्रवणात् ‘उत्तरेऽहन् द्विरात्रस्य गृह्यते’ इति अनारभ्यविधानेन। ‘ननु उपसंहारः परिसङ्ख्या वा षोड़शी उत्तरे’ इति। उच्यते, न शक्यं प्रत्यक्षश्रवणं परिसङ्ख्यातुं विशेषवचनेन; त्रयो हि दोषाः प्रादुःस्युः,—स्वार्थग्रहणं, परार्थकल्पना, प्राप्तबाधश्च। न चोपसंहारः, भिन्नत्वाद्वाक्ययोः। किमर्थं तर्हीदं षोड़श्युत्तरे? इति। नैवैतद्विधानं षोड़शिनः, किन्तर्हि वैखानसस्य साम्नः, ‘वैखानसं तत् साम पूर्व्वेद्युर्भवति’ इति विधीयते, उत्तरे षोड़शीत्यनूद्यते, अनारभ्य-विधानेन प्राप्तत्वात्। तस्मात् प्राप्तस्य षोड़शिनो ग्रहणम् इति॥ (१०।५।१२ अ०)॥

---

नानाहीने षोड़शिग्रहणग्रहणाधिकरणम्॥

सू॰ चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यत इत्यभ्यासेन प्रतीयेत भोजनवत्॥ ५५॥ (पू॰)॥

भा॰ षोड़शिनं प्रकृत्य आमनन्ति, ‘चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यते’ इति। अत्रैषोऽर्थः सांशयिकः,—किमेकस्मिन्नहीने चतुर्थे दिवसे षोड़शी अभ्यसितव्यः, उत, एकस्मादहीनादहीनान्तरे चतुर्थे ऽहनि गृह्यते इत्येवमभ्यसितव्यः? इति। किं प्राप्तम्?—एकस्मिन्नभ्य-सितव्यः इति। कुतः?। अहीनस्यैकस्येत्युच्यते, नानाहीनेषु चेत् इष्यते, सा लक्षणा भवति, अस्मिन् पक्षे श्रुतिः। अपि च वीप्सानर्थक्यं नानाहीनेषु चेत् स्यात्, चतुर्थेऽहनि अहीनस्येत्येतावतैव तत् सिद्ध्यति; एकस्मिंस्तु वीप्सा अर्थवती भवति, तस्मादेकस्मिन्नहीने

अभ्यसितव्यः, भोजनवत्, यथा 'चतुर्थे चतुर्थेऽहनि देवदत्तो भुङ्क्ते' इति, चतुर्थे भुक्त्वा ततः चतुर्थे गम्यते एकस्मिन् पक्षे इति, एवमिहापि द्रष्टव्यम्। तस्मात् एकस्मिन्नहीने इति ॥

सू० अपि वा सङ्ख्यावत्त्वात् नानाहीनेषु गृह्यते पक्षवदेकस्मिन् संख्यार्थभावात् ॥ ५६ ॥ (सि०) ॥

भा० 'नानाहीनेषु' 'वा' चतुर्थेऽहनि 'गृह्यते', एवं सङ्ख्यावत् ग्रहणं भवति,—चतुर्थेऽहनि इति; एकस्मिन्नहीने एकं चतुर्थमहः, अन्यदष्टमं भवति। यदुक्तं,—श्रुतिशब्दो भविष्यतीति—'अहीनः' इति। भवति सा हि श्रुतिः, न च तया श्रुत्या किञ्चित् सिद्ध्यति, चतुर्थस्याभावात्। अस्मत्पक्षे लक्षणा, तया तु सिद्ध्यति। अपि च, न लक्षणा, सामान्याभिप्रायमेकवचनं। यदुक्तं,—वीप्सानर्थक्यम् इति। न, आनर्थक्यमापततीत्यशब्दार्थः कल्पनीयः। तस्मात् नानाहीनेषु ग्रहीतव्य इति, 'पक्षवत्', यथा,—'पञ्चम्यां पञ्चम्यां भुङ्क्ते' इति पक्षान्तरं गम्यते, एवमिहापि द्रष्टव्यः। तस्मान्नानाहीनेषु ग्रहीतव्य इति ॥

सू० भोजने तत्सङ्ख्यं स्यात् ॥ ५७ ॥ (आ०नि०) ॥

भा० यत्तु भोजनवदित्युक्तम्, अर्थात् तत् तस्माच्चतुर्थादप्यन्यच्चतुर्थं तत्र कल्प्यते; चतुर्थादारभ्य यान्यहानि, तेषां चतुर्थम् अहीनस्य तत् अष्टमं; शब्दलक्षणे कर्मणि शब्दाभिहितं गम्यते, न लोकाभि-

प्रायः। तस्मात् युक्तं भोजने लोकाभिप्रायानुष्ठानम्, अहीने तु शब्दाभिहितं गम्यते ॥ (१०।५।१४ अ०) ॥

---

विकृतौ जगत्सामाग्रयणायतनतायाः अधिकरणम् ॥

(प्रथमवर्णकम्)।

सू० जगत्साम्नि सामाभावात् ऋक्तः साम तदाख्यं स्यात् ॥ ५८ ॥

भा० ज्योतिष्टोमे श्रूयते,—'यदि रथन्तरसामा सोमः स्यादैन्द्र-वायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रान्' इति। 'आग्रयणाग्रान्' इत्येतदुदाहरणं; तत्र संशयः,—किम् आग्रयणायतनायाः प्रकृतौ निवेशः, उत विकृतौ? इति। किं प्राप्तं?—प्रकरणानुग्रहात् प्रकृतौ इति, 'यदि जगत्सामा'* इति ज्योतिष्टोम एवोच्यते, येनकेनचिदभिसम्बन्धेन गुणेन क्रियया वा।

एवं प्राप्ते ब्रूमः,—'जगत्साम्नि' श्रूयमाणेऽपि 'ऋक्तः साम तदाख्यम्' इति अध्यवसीयते। कुतः?। 'सामाभावात्' न हि, कृत्स्नेऽपि सामवेदे जगन्नाम सामास्ति, तस्माद्यच्च जगत्यामुत्पन्नं साम स जगत्सामा, स विषुवान्। 'ननु, 'शुक्राग्रो विषुवान्' इत्युच्यते'। नैष दोषः, स कामाय भविष्यति। तस्माद्विकृतौ विषुवति निवेश इति ॥

---

* 'यदि जगत्सामाऽस्य' इति का० स० पु० एवं क० सं० प० पाठः।

जगत्सामेतिशब्देन विषुवतो ग्रहणाधिकरणम् ॥

(द्वितीयवर्णकम्) ।

एवं वा,—

सू० जगत्साम्नि सामाभावात् ऋक्तः साम तदाख्यं स्यात् ॥ ५८ ॥

भा० 'यदि जगत्सामा आग्रयणाग्रान् ग्रहान् गृह्णीयात्' इत्येतदेव उदाहरणं। तत्र संशयः,*—किम् अन्यतरसामा जगत्सामा,—रथन्तरसामा बृहत्सामा वा?†(१) किमुभयसामा जगत्सामा? (२) किं रथन्तरसामा जगत्सामा?(३) किं यत्र जगत्यामुत्पन्नं साम जगत्सामा?(४) इति। किं प्राप्तम्?—अन्यतरसामा इति। कुतः?। विशेषानवगमात्, ज्योतिष्टोमस्य प्रकृतत्वात्, तस्य च अन्यतरसामत्वात्, एवं प्राप्तम्(१)। अथवा उभयसामा जगत्सामा, जगच्छब्दः‡ कृत्स्नवाची, कृत्स्नप्रकृता च ज्योतिष्टोमे उभयसामत्वे, अन्यतरसामत्वे जगच्छब्दस्याविशेषणत्वात् अविवक्षा प्रसज्येत। तस्मादुभयसामा(२)। अथ वा रथन्तरसामा जगत्सामा, तत्र हि ऋचि जगच्छब्दो विद्यते,—'ईशानमस्य जगतः स्वर्दृशम्' इति। यदि चोभयसामा

---

* "जगच्छामकं साम यस्य सोमयागस्य सोऽसौ जगत्सामेति, तत्र जगद्विशेषणेन विशेष्यमाणे साम्नि चतुर्धा संशयः" इति माधवः ।

† "बृहता रथन्तरेण वा इति, ज्योतिष्टोमस्यान्यतरसामसाध्यत्वावगमात्" इति माधवः ।

‡ "यद्यपि सर्व्वत्रोपाधिना जगतीशब्देन तद्युक्तावयवमुपलक्ष्य सामोपलक्षणीयं, तथापि उपेक्ष्यते यतो वैदिको जगच्छब्दो जगतीपर्य्यायवचनात् चतुर्थः पक्षो राद्धान्तः" इति माधवः ।

जगत्सामा भवेत्, कृतकरो विधिरनर्थकः स्यात्! तेन नैतयोः समुच्चयः प्रकृतौ; तस्माद् रथन्तरसामैव जगत्सामा(१) इति।

एवं प्राप्ते ब्रूमः,—यत्र जगत्यामुत्पन्नं साम, स जगत्सामा इति। तथा हि श्रुतिः, इतरथा रथन्तरसामनि अध्यवसीयमाने द्वया पदं लक्ष्यते, परेण साम, सैषा लक्षितलक्षणा स्यात्। तस्मात् जगत्यां यत्र साम, स जगत्सामा, 'ककुभः' जगदाख्यं साम स्याद्विषुवति। 'ननु ऋक्कामो विषुवानित्युच्यते'। नैष दोषः, स कामाय भविष्यति; तस्माद्विषुवति विकृतौ निवेश इति॥ (१०।५।१५अ०)॥

---

संसवे उपवत्यपियवत्योरभावाधिकरणम्॥

सू० उभयसाम्नि नैमित्तिकं विकल्पेन समत्वात् स्यात्॥ ५९॥ (१म पू०)॥

भा० सन्ति उभयसामानः क्रतवः,—'संसव उभे कुर्य्यात्', अपचितावपि एकाहे श्रूयते,—'उभे बृहद्रथन्तरे कुर्य्यात्' इति। तत्रास्ति रथन्तरनिमित्तकं बृहन्निमित्तकञ्च,—'उपवतीं रथन्तरपृष्ठस्य प्रतिपदं कुर्य्यादपियवतीं* बृहत्पृष्ठस्य' इति। तत्रैषोऽर्थः सांशयिकः, —किं रथन्तरनिमित्तकं बृहन्निमित्तकं वा कार्य्यं,—विकल्पः?(१) अथ वा रथन्तरनिमित्तकं कर्त्तव्यं?(२) अथ वा अन्यनिमित्तकमेव कर्त्तव्यं?(३)। किं प्राप्तम्?,—अन्यतरनिमित्तकं कर्त्तव्यं,—विकल्पः?

---

* न्यायमालायां "अपवतीं" इति पाठः।

इति । कुतः ? । समा प्राप्तिः, विरुद्धश्च समुच्चयः, न हि, विनिगमनायां हेतुरस्ति,—एवंनिमित्तकं कर्त्तव्यं, न एवंनिमित्तकम् इति; न च, द्वे प्रतिपदौ शक्येते कर्त्तुं ; तस्माद्विकल्पः ॥

सू० मुख्येन वा नियम्येत ॥ ६० ॥ (२य पू०) ॥

भा० यदुक्तं,—समा प्राप्तिर्नास्ति विनिगमनायां हेतुरिति, अस्तीति ब्रूमः, मुख्यत्वं नाम रथन्तरस्य प्रथमाधीतत्वं; तदुक्तं,—"मुख्यं वा पूर्वचोदनात् लोकवत्" (१२।२।८सू०) इति ॥

सू० निमित्तविघाताद् वा क्रतुयुक्तस्य कर्म स्यात् ॥ ॥ ६१ ॥ (सि०) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति । द्वयोरपि निमित्तयोर्विघातः स्यात्, क्रतुनिमित्तमेवाश्रीयते, तथा सति नैतद्रथन्तरपृष्ठं, न बृहत्पृष्ठं, बृहद्रथन्तराभ्यामुभाभ्यां तत्र पृष्ठनिर्वृत्तिः । तस्मात् नोपवती प्रतिपत्, नाग्रियवती, अन्यैव क्रतुनिमित्ता भवितुमर्हति इति ॥ (१०।५।१६अ०) ॥

---

ऐन्द्रवायवस्य सर्व्वोद्रावप्रतिकर्षोधिकरणम् ॥

सू० ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् ॥ ॥ ६२ ॥ (पू०) ॥

भा० ज्योतिष्टोमे श्रूयते,—'वाक् वा ऐन्द्रवायवो यत् ऐन्द्रवायवाग्रा

ग्रहा* गृह्यन्ते वाचमेवावरुन्धे’ इति । तत्र संशयः,—किम् ऐन्द्रवायवस्य सर्वादितः प्रतिकर्षः स्यात्, उपांश्वन्तर्यामाभ्यामपि पूर्वं ग्रहीतव्यः, उत शुक्रामन्थिभ्यां पूर्वं ग्रहणम्? इति । किं प्राप्तम्?,—‘ऐन्द्रवायवस्य’ सर्वादितः ‘प्रतिकर्षः’ इति । कुतः? । ‘अग्रवचनात्’, अग्रता अत्र विधीयते,—‘ऐन्द्रवायवाग्रं गृह्णाति’ इति, ऐन्द्रवायवमग्रे कुर्य्यादेषाम् इति । अविशेषात् सर्वे एव ऐन्द्रवायवाग्राः कर्त्तव्याः, यदि आदितः प्रतिकर्षो न क्रियेत, उपांश्वन्तर्यामौ ऐन्द्रवायवाग्रौ न स्यातां! आदितस्तु प्रतिकर्षे क्रियमाणे सर्वे ऐन्द्रवायवाग्राः कृता भवन्ति । न चात्र ऐन्द्रवायवस्याग्रता विधीयते, यदि विधीयेत, यान् कांश्चित् प्रति ऐन्द्रवायवस्य अग्रतायां कृतं कर्त्तव्यं स्यात्! अथ पुनरन्येषां ग्रहाणामैन्द्रवायवाग्रता धर्म उच्यते, तस्मात् सर्वेषां धर्मः कर्त्तव्य इत्यादितः प्रतिकर्षः स्यात्। कथं पुनरवगम्यते,—सर्वेषामेवायं धर्मः? इति । ‘ऐन्द्रवायवाग्रान् कुर्य्यात्’ इतिनिर्देशात्, नात्र ग्रहस्य कर्त्तव्यता उच्यते, तदग्रता कर्त्तव्या इति श्रूयते । अग्रता परार्था न स्वार्था विज्ञायते; तस्मात् सर्वादितः प्रतिकर्षः स्यात् ॥

सू० अपि वा धर्माविशेषात् तद्धर्माणां स्वस्थाने प्रकरणादग्रत्वमुच्यते ॥ ६३ ॥ (सि०) ॥

भा० ‘अपि वा’ इति पक्षव्यावृत्तिः;—न सर्वादितः प्रतिकर्षः स्यात्, किन्तर्हि स्वस्थानस्य ग्रहणं । कुतः? । नात्र तदग्रता

---

* “मन्त्रकाण्डब्राह्मणकाण्डयोर्ग्रहाणामयं पाठक्रमः,-उपांशुग्रहः प्रथमः, अन्तर्यामग्रहो द्वितीयः. ऐन्द्रवायवो ग्रहस्तृतीयः, मैत्रावरुणश्चतुर्थ इत्यादि” इति न्यायमाला ।

विधीयते, वाक्यं हि तदा अनुग्रह्यते, किन्तर्हि तद्ग्रहाणां ग्रहणं विधीयते, तथा हि श्रुतिरनुगृहीता भवति,—यदि रथन्तरसामा सोमः स्याद् ये ऐन्द्रवायवाग्रा ग्रहाः समाम्नातास्तेषामनेनानुपूर्व्येण ऐन्द्रवायवादितया धर्मविशेषेण तद्धर्माणां प्रकृतानां ग्रहणं विधीयते, स्वे स्थाने ये ग्रहा ऐन्द्रवायवाग्राः, तान् प्रकृत्य ग्रहणविधिरिति न सर्वादितः प्रतिकर्ष इति ॥

सू॰ धारासंयोगाच्च ॥ ६४ ॥ (यु॰) ॥

भा॰ अपि च, धारासंयोगो भवति ऐन्द्रवायवादिवाक्ये, 'अच्छा अव्यवच्छिन्नया धारया गृह्णाति' इति, तस्माद्धाराग्रहास्ते, तद्ग्राम् अधिकृत्य ग्रहणं विधीयते इति ॥ (१०।५।१७अ॰) ॥

---

कामसंयोगेऽपि ऐन्द्रवायवस्यादावप्रतिकर्षाधिकरणम् ॥

सू॰ कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात्
॥ ६५ ॥ (पू॰) ॥

भा॰ अथ यत्र कामसंयोगे वचनं,—'ऐन्द्रवायवस्य ऐन्द्रवायवाग्राम् ग्रहान् गृह्णीयाद्, यः कामयेत यथापूर्वं प्रजाः प्रकल्पेरन्' इति। तत्र किं, सर्वादितः स प्रतिकर्षः, उत तत्रापि स्वक्रमस्यस्य ग्रहणम्? इति। किं प्राप्तं?,—पूर्वेणाधिकरणेन स्वक्रमस्थस्य इति।

तथा प्राप्ते ब्रूमः,—'कामसंयोगे तु' सर्वादितः 'प्रतिकर्षः स्यात्'। कुतः?। 'वचनात्',—वचनं हि भवति,—'ऐन्द्रवायवाग्राम् ग्रहान् गृह्णीयाद् यः कामयेत यथापूर्वं प्रजाः प्रकल्पेरन्' इति। तत्

सर्वादितः प्रतिकर्षेऽर्थवत् अग्रतायां विधीयमानायाम्; अप्रवृत्ति-विशेषकरं तत् ग्रहाणां ग्रहणे विधीयमाने। तस्मात् सर्वादितः प्रतिकर्ष इति ॥

सू० तद्देशानां वाग्रसंयोगात् तद्युक्तं कामशास्त्रं स्यात् नित्यसंयोगात् ॥ ६६ ॥ (सि०) ॥

भा० न चैतदस्ति, यदुक्तं सर्वादितः प्रतिकर्ष इति। स्वक्रमस्यस्य ग्रहणे क्रमानुग्रहो भविष्यति, तस्मात् स्वक्रमस्थस्य इति। यदुक्तम्,—अग्रताभिधानादादितः प्रतिकर्ष इति, तन्न, 'तद्देशानां' (धारादेशानाम्) ऐन्द्रवायवाग्राणामयमुपदेशः, तद्युक्तानां तदग्राणां ग्रहणेन कामः साध्येत, श्रुतिरेवमनुगम्यते, त्वत्पक्षे वाक्यं, श्रुतिश्च वाक्याद्बलीयसी। अथ यदुक्तम्,—'अप्रवृत्तिविशेषकरं ग्रहणविधौ' इति। तत्र संयोग-पृथक्त्वात्, एकोऽत्र नित्यस्य कामसंयोगः,—ग्रहणेन कामं साधयेत्, अपरो नित्यसंयोगः,—ये ऐन्द्रवायवाग्रा ग्रहास्तान् गृह्णीयादिति। तस्मादस्ति प्रवृत्तिविशेषः, अतस्तद्देशसंयुक्ते कामसाधनमेतत्। तस्मात् स्वक्रमस्थस्य ग्रहणम् इति ॥ (१०।५।१८अ०) ॥

---

आश्विनाग्रादीनां ग्रहाणां प्रतिकर्षाधिकरणम् ॥

सू० परेषु चाग्रशब्दः पूर्ववत् स्यात् तदादिषु ॥ ६७ ॥ (सि०) ॥

भा० अस्ति ज्योतिष्टोमः, तत्र ऐन्द्रवायवात् परे ग्रहाः कामाय श्रूयन्ते',—'आश्विनाग्रान् गृह्णीयादामयाविनः। शुक्राग्रान् गृह्णीयात्

अभिचरतः। मंथ्यग्रान् गृह्णीयादभिचर्यमाणस्य' इति। तत्र संशयः, किमेतेष्वपि स्वक्रमस्थानां ग्रहणम्, उत सर्वादितः प्रतिकर्षः कर्त्तव्यः? इति। किं प्राप्तं,—'परेषु च' ऐन्द्रवायवात्, परेष्वेवमादिषु ग्रहणेषु अग्रशब्दः 'पूर्ववत् स्यात्' स्वक्रमस्थग्रहणम् इति। यस्य यस्याग्रता श्रूयते, तद्ग्रणां कामसंयोग इति॥ (पू०)॥

सू० प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात्॥ ॥ ६८॥ (सि०)॥

भा० प्राक् ऐन्द्रवायवात्, 'प्रतिकर्षः' स्यात्। कुतः?। न हि अत्र नित्यार्थेन कामस्य संयोगो भवति। यदि हि नित्ये कामो भवेत्, आश्विनाग्रान् मंथ्यग्रान्—इत्यग्रशब्दोऽस्य नोपपद्येत, न हि, तस्मिन् वचने सति प्रवृत्तेः कश्चिद्विशेष उपलभ्यते, प्रागैन्द्रवायवात् पुनः प्रतिकर्षे वचनमर्थवत् भवति। अपि च प्रकृतास्ते ग्रहाः, तेषामाश्विनाग्रता शुक्राग्रता विधीयते। तस्मात् आदितः 'प्रतिकर्षः' इति॥

सू० प्रतिकर्षञ्च दर्शयति॥ ६९॥ (यु०)॥

भा० 'धारयेयुस्तं यं कामाय गृह्णीयुः, ऐन्द्रवायवं गृहीत्वा सादयेत् तं यं कामाय गृह्णीयुः' इति कामाय गृहीते धार्यमाणे ऐन्द्रवायवस्य ग्रहणं दर्शयति। तस्मात् सर्वादितः प्रतिकृष्टव्य इति॥ (१०।५।१८अ०)॥

—

आश्विनादीनां ग्रहाणामैन्द्रवायवस्य पुरस्तात् प्रतिकर्षाधिकरणम् ।

सू० पुरस्तादैन्द्रवायवस्याग्रस्य* कृतदेशत्वात् ॥ ७० ॥ (सि०) ॥

भा० अस्ति ज्योतिष्टोमः, तत्रैन्द्रवायवात् परे ग्रहाः क्रमाय श्रूयन्ते,—'आश्विनाग्रान् गृह्णीयादामयाविनः । शुक्राग्रानभिचरतः । मंथ्यग्रानभिचर्यमाणस्य'† इति । तेषां स्वक्रमस्थानां ग्रहणं, प्रतिकर्ष इति समधिगतमेतत् । अथेदानीमिदं सन्दिह्यते,—किं सर्वादितः प्रतिकर्षः, यतःकुतश्चिद्वा, उत ऐन्द्रवायवस्य पुरस्तात् प्रतिकर्षः? इति । किं प्राप्तम्? नियमकारिणः शास्त्रस्य अभावादनियम इति ।

एवं प्राप्ते ब्रूमः,—'पुरस्तादैन्द्रवायवस्य' प्रतिकर्ष इति । कुतः?। 'अग्रस्य कृतदेशत्वात्', एषोऽग्रस्य देशो विज्ञातः,—यत् उपांश्वन्तर्यामाभ्यामूर्द्ध्वं, पुरस्ताच्च ऐन्द्रवायवस्य । कथमिव कृत्वा?। पूर्वेण वचनेन ऐन्द्रवायवाग्राः ग्रहाः प्रकृताः,—'यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इति, तत्रैन्द्रवायवाग्रानुद्दिश्य तेषां ग्रहणं विहितं, तेनैव विहितत्वात् न पुनराश्विनाग्रेषु शुक्राग्रेषु मन्थ्यग्रेषु च ग्रहणं विधीयते, अतो वाक्येन तदग्रता विधीयते । सा पुनरैन्द्रवायवाग्राणां प्रकृतत्वात् अभिचरतः शुक्राग्रान् किं कुर्यात्?—'गृह्णीयात्' इति प्रकृतेनाभिसम्बध्यते । शुक्राग्रान् ग्रहानिति नास्ति सम्बन्धो ग्रहणशब्दाभावात् । केन तर्हि सम्बन्धः?। प्रकृतेनैन्द्रवायवाग्रशब्देन, शुक्राग्रान् गृह्णीयात् ऐन्द्रवायवाग्रानिति ।

---

* 'पुरस्तादैन्द्रवायवादग्रस्य' इति पादर्शपुस्तकपाठः ।

† पूर्वोद्धृतपाठादन्यरूपोऽयं पाठः (See L. 1. p. 513.) ।

के ते ग्रहाः? इति—तयोक्तं। तस्मात् "ऐन्द्रवायवस्य पुरस्तात् प्रतिकर्षः" इति ॥

सू॰ तुल्यधर्म्मत्वाच्च ॥ ७१ ॥ (यु॰१) ॥

भा॰ तुल्यधर्म्माश्चैते ऐन्द्रवायवाद्याः, तत्र धारासंयोगो दृश्यते, तस्मात् धाराग्रहानुद्दिश्य एतद्यता विधीयते ॥

सू॰ तथा च लिङ्गदर्शनम् ॥ ७२ ॥ (यु॰२) ॥

भा॰ 'धारयेयुस्तं यं कामाय गृह्णीयुः, ऐन्द्रवायवं गृहीत्वा सादयेत्, अथ तं सादयेद् यं कामाय गृह्णीयुः'* इति काम्यस्य धारणानन्तरम् ऐन्द्रवायवस्य ग्रहणं दर्शयति; तस्मादैन्द्रवायवस्य पुरस्तात् प्रतिकर्ष इति ॥ (१०।५।२०अ॰) ॥

---

सादनस्यापि प्रतिकर्षाधिकरणम् ॥

सू॰ सादनं चापि शेषत्वात् ॥ ७३ ॥ (सि॰) ॥

भा॰ इदमाम्नायते,—'आश्विनाग्रान् गृह्णीयादामयाविनः, शुक्राग्रान् गृह्णीयादभिचरतः, मन्थ्यग्रान् गृह्णीयादभिचर्य्यमाणस्य' इति। 'पुरस्तात् ऐन्द्रवायवस्य प्रतिकर्षः' इत्युक्तं। तत्रायमर्थः सांशयिकः,—किं सादनमपि प्रतिकृष्यते, न? इति। अवचनान्नेति ब्रूमः, शब्दप्रमाणका वयं, शब्दश्च ग्रहणस्य प्रतिकर्षमाह, न सादनस्य; तस्मान्न सादनं प्रतिकृष्यत इति।

एवं प्राप्ते ब्रूमः,—'सादनम्' 'अपि' प्रतिकृष्यत इति। कुतः?।

---

* पूर्व्वोद्धृतपाठादन्यरूपोऽयं पाठः (See L. 16. p. 513.)।

ग्रहणशेषो हि सादनं, ग्रहणं हि प्रदानार्थं, तदनेकस्य द्रव्यस्य युगपत् प्राप्तम् असादयित्वा न शक्यं युगपत् होमार्थं कर्त्तुं; सादनेन ग्रहणं होमयोग्यं भवति, तस्मात् ग्रहणशेषः सादनमिति ग्रहणे प्रतिकृष्यमाणेऽवश्यं प्रतिकृष्टव्यमिति ॥

सू० लिङ्गदर्शनाच्च ॥ ७४ ॥ (यु०) ॥

भा० लिङ्गमपि दृश्यते,—यथा सादनं प्रतिकृष्यते इति । किं लिङ्गं ?। 'धारयेयुस्तं यं कामाय गृह्णीयुः, ऐन्द्रवायवं गृहीत्वा सादयेत्, अथ तं सादयेद् यं कामाय गृह्णीयुः' इति सादनस्यापि प्रतिकर्षं दर्शयति ॥ (१०।५।२१अ०) ॥

---

प्रदानस्याप्रतिकर्षाधिकरणम् ॥

सू० प्रदानस्यापि सादनवद् ॥ ७५ ॥ (पू०) ॥

भा० इदमाम्नायते,—'आश्विनाग्रान् गृह्णाति आमयाविनः । उपांश्वग्रानभिचरतः । मन्थ्यग्रानभिचर्यमाणस्य' इति । तत्र ग्रहणे प्रतिकृष्यमाणे सादनं प्रतिकृष्यते इत्युक्तं । अथेदानीमिदं सन्दिह्यते,—ग्रहणे प्रतिकृष्यमाणे प्रदानं प्रतिकृष्यते, न ? इति । किं प्राप्तं ?—प्रतिकृष्यते इति । कुतः ?। सम्बन्धात्—सम्बद्धं हि ग्रहणं प्रदानस्य, प्रदातुं हि तत् गृह्यते, तथा हि दृष्टार्थं तत् भवति, इतरथा यत् सादनादूर्द्ध्वं तत् अदृष्टार्थं भवेत्, न चेदमदृष्टार्थं । तस्मादितरस्मिन् काले प्रदानं क्रियते, तत्र ग्रहणं कर्त्तव्यम्; एवं चेत्, यत्र ग्रहणं तत्र प्रदानमपि भवितुमर्हतीति सम्बन्धात्,

'यादनवत्',—यथा ग्रहणे प्रतिकृष्यमाणे सादनं प्रतिकृष्यते, एवं प्रदानमपि इति ॥

सू० न वा प्रधानत्वात् शेषत्वात् सादनं तथा ॥
॥ ७६ ॥ (सि०) ॥

भा० न चैतदस्ति, प्रदानं प्रतिकृष्यत इति, प्रधानं हि तत्, न हि तत् ग्रहणस्योपकारकं; तस्मान्न प्रतिकृष्यते। यदुक्तं,—'सादनवत्' इति, शेषो हि सादनं, तस्मात् प्रतिकृष्यते ॥ (१०।५।२२अ०) ॥

---

त्र्यनीकायामैन्द्रवायवाग्रतोक्तेः समानविध्यर्थताधिकरणम् ॥

सू० त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥
॥ ७७ ॥ (पू०) ॥

भा० अस्ति द्वादशाहे त्र्यनीका,*—'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रं, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्' इति। तत्र प्रथमद्वितीययोरह्नोरैन्द्रवायवाग्रता शुक्राग्रता च श्रूयते†। सा चोदकेनैव तयोः प्राप्ता, रथन्तरसामत्वात् वृहत्सामत्वाच्च। तत्र सन्देहः,—किम् उदितम् अनुवदितुं पुनः श्रूयते?(१) किम् अन्यत् परिसंख्यातुम्?(२) उत अर्थवादार्थम्?(३) अथवा समानविध्यर्थं?(४)। किं प्राप्तम्?—अर्थवादाय इति।

---

* "त्रीणि अनीकानि यस्याः ऐन्द्रवायवशुक्राग्रयणरूपाणि यस्यां सा" इति माधवः।
† विधीयते इति क्वचित् पाठः।

ग्रहणप्रयोगो हि सादनं, ग्रहणं हि प्रदानार्थं, तदनेकस्य द्रव्यस्य युगपत् प्राप्तम् असादयित्वा न शक्यं युगपत् होमार्थं कर्त्तुं; सादनेन ग्रहणं होमयोग्यं भवति, तस्मात् ग्रहणशेषः सादनमिति ग्रहणे प्रतिकृष्यमाणेऽवश्यं प्रतिकष्टव्यमिति ॥

सू॰ लिङ्गदर्शनाच्च ॥ ७४ ॥ (यु॰) ॥

भा॰ लिङ्गमपि दृश्यते,—यथा सादनं प्रतिकृष्यते इति । किं लिङ्गं ? । 'धारयेयुस्तं यं कामाय गृह्णीयुः, ऐन्द्रवायवं गृहीत्वा सादयेत्, अथ तं सादयेद् यं कामाय गृह्णीयुः' इति सादनस्यापि प्रतिकर्षं दर्शयति ॥ (१०।५।२१अ॰) ॥

---

प्रदानस्याप्रतिकर्षाधिकरणम् ॥

सू॰ प्रदानञ्चापि सादनवद् ॥ ७५ ॥ (पू॰) ॥

भा॰ इदमाम्नायते,—'आश्विनाग्रान् गृह्णाति आमयाविनः । शुक्राग्रानभिचरतः । मन्थ्यग्रानभिचर्य्यमाणस्य' इति । तत्र ग्रहणे प्रतिकृष्यमाणे सादनं प्रतिकृष्यते इत्युक्तं । अथेदानीमिदं सन्दिह्यते,— ग्रहणे प्रतिकृष्यमाणे प्रदानं प्रतिकृष्यते, न ? इति । किं प्राप्तं ?— प्रतिकृष्यते इति । कुतः ? । सम्बन्धात्—सम्बद्धं हि ग्रहणं प्रदानस्य, प्रदातुं हि तत् गृह्यते, तथा हि दृष्टार्थं तत् भवति, इतरथा यत् सादनादूर्द्धं तत् अदृष्टार्थं भवेत्, न चेदमदृष्टार्थं । तस्मादितरस्मिन् काले प्रदानं क्रियते, तत्र ग्रहणं कर्त्तव्यम्; एवं चेत्, यत्र ग्रहणं तत्र प्रदानमपि भवितुमर्हतीति सम्बन्धात्,

'सादनवत्',—यथा ग्रहणे प्रतिकृष्यमाणे सादनं प्रतिकृष्यते, एवं प्रदानमपि इति ॥

सू० न वा प्रधानत्वात् शेषत्वात् सादनं तथा ॥
॥ ७६ ॥ (सि०) ॥

भा० न चैतदस्ति, प्रदानं प्रतिकृष्यत इति, प्रधानं हि तत्, न हि तत् ग्रहणस्योपकारकं; तस्मान्न प्रतिकृष्यते । यदुक्तं,—'सादनवत्' इति, शेषो हि सादनं, तस्मात् प्रतिकृष्यते ॥ (१०।५।२२अ०) ॥

---

त्र्यनीकायामैन्द्रवायवाग्रतोक्तेः समानविध्यर्थताधिकरणम् ॥

सू० त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥
॥ ७७ ॥ (पू०) ॥

भा० अस्ति द्वादशाहे त्र्यनीका,*—'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, इत्थं चाह, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रं, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्' इति । तत्र प्रथमद्वितीययोरह्नोरैन्द्रवायवाग्रता शुक्राग्रता च श्रूयते† । सा चोदकेनैव तयोः प्राप्ता, रथन्तरसामत्वात् बृहत्सामत्वाच्च । तत्र सन्देहः,—किम् उदितम् अनुवदितुं पुनः श्रूयते?(१) किम् अन्यत् परिसङ्ख्यातुम्?(२) उत अर्थवादार्थम्?(३) अथवा समानविध्यर्थं?(४) । किं प्राप्तम्?—अर्थवादाय इति ।

---

* "त्रीणि अनीकानि अग्राणि ऐन्द्रवायवशुक्राग्रयणरूपाणि यस्यां सा" इति माधवः ।
† विधीयते इति क्वचित् पाठः ।

कुतः?। उदितम् अनुवदितुं हि उच्यमाने प्रवृत्तिविशेषक्रिया नास्ति; त्रिदोषा परिसङ्ख्या, तस्मादर्थवादाय इति। कः पुनरत्र गुणवादः?। चोदितमात्रवचनत्वं हि तृतीयेऽहनि न्याय्यं। कथमिव?। प्रथम-द्वितीययोरह्नोरैन्द्रवायवाग्रता शुक्राग्रता च उदिता, न तृतीयेऽहनि, तत्र आग्रयणाग्रता न्याय्या इति॥

सू० अपि वाऽहर्गणेष्वग्निवत् समानविधानं स्यात्॥
॥ ७८॥ (सि०)॥

भा० अपि वेति पक्षव्यावृत्तिः,—न गुणार्थं श्रवणं, समानविध्यर्थमिति। न शक्यं वदितुं चोदकेन प्राप्तं, तत्र पुनर्वचनमनर्थकं, तस्मात् तदन्यार्थं इति। कथन्तर्हि शक्यं?। वाक्येनेदं ज्योतिष्टोमे रथन्तरसामत्वं प्रवृत्तं चोदकेन प्राप्यते, तस्मात् समानविधिकं करिष्यामि इति पुनरुच्यते, 'अग्निवत्', यथा 'अथातोऽग्निष्टोमेनैवानुयजति, तमुक्थ्येन, तमतिरात्रेण, तं चतूरात्रेण, तं पञ्चरात्रेण, तं षड्रात्रेण, तं सप्त-रात्रेण, तमष्टरात्रेण, तं नवरात्रेण, तं दशरात्रेण, तमेकादशरात्रेण' इति। प्रयोजनं पक्षयोर्न,* न परिसङ्ख्या भवतीति॥ (१०।५।२२अ०)॥

---

व्यूढद्वादशाहस्य समूढविकारत्वाधिकरणम्॥

सू० द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत् समानविधानं स्यात्॥ ७९॥ (पू०)॥

भा० द्विविधो द्वादशाहः,—व्यूढः समूढश्च; समूढस्तावत्,

* "प्रयोजनं द्वादशाहविकृतिषु क्व-चापि रथन्तरादिनिमित्ताभावेऽपि ऐन्द्रवायवाग्रताविधिः" इति माधवः।

'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, इत्यमं पादः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रं, अथाग्रयणाग्रम्' इति। अथ व्यूढः,—'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानां अह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, अथ ऐन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे' इति। तत्र सन्देहः,—किमुभयप्रकारमपि द्वादशाहं प्रकृत्य धर्मा आम्नाताः, उत समूढं प्रकृत्य आम्नातास्तद्विकारो व्यूढः? इति। किं प्राप्तं?—'द्वादशाहस्य व्यूढसमूढत्वं' 'समानविधानं' स्यात्?। कुतः?। उभयप्रकारस्य प्रकृतत्वात्, न गम्यते विशेषः, कस्य धर्माः, कस्य नेति। तस्मात् समानविधानौ। 'पृष्ठवत्',—यथा बृहद्रथन्तरे पृष्ठे प्रकरणस्य तुल्यत्वात् समानधर्मणी, एवं व्यूढसमूढं स्यात् इति॥

## सू॰ व्यूढो वा लिङ्गदर्शनात् समूढविकारः॥८०॥ (सि॰)॥

भा॰ वाशब्दः पक्षं व्यावर्त्तयति। न व्यूढसमूढौ समानविधानौ, किन्तु 'व्यूढः' 'समूढविकारः' स्यात्। कुतः?। 'लिङ्गदर्शनात्'-लिङ्गमिदं भवति,—'ऐन्द्रवायवस्य वा एतदायतनं यच्चतुर्थमहः' इति व्यूढे श्रूयते, न च व्यूढे चतुर्थेऽहनि ऐन्द्रवायवाग्रता, का तर्हि?—आग्रयणाग्रता। तत्र 'ऐन्द्रवायवस्य वा एतदायतनम्' इति वचनं नावकल्पते; यदि व्यूढः समूढविकारः, ततः प्रकृतिमपेक्ष्योपपद्यते वादः,—ऐन्द्रवायवस्य

एतदायतनं प्राप्तं, तत्र भाष्यमुच्यते इति । तस्मात् 'लिङ्गदर्शनात्' 'व्यूढः' 'समूढविकारः' इति ॥

सू० कामसंयोगात् ॥ ८१ ॥ (यु०) ॥

भा० 'यः कामयेत बहुरसां प्रजायेय' इति, काम्यो वा नैमित्तिको वा नित्यमर्थं विहत्य निविशते, यथाऽग्न्यामये मुद्गौदनभोजनं निवातशय्या चेति ॥

सू० तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ ८२ ॥ (प्रयो०) ॥

भा० इदं प्रयोजनसूत्रं । 'तस्य' उभयप्रकारस्याहर्गणेषु 'प्रवृत्तिः' अविशेषेण, 'ऐककर्म्यात्' यथा पूर्वः पक्षः; यथा तर्हि सिद्धान्तः, यत्र वचनं लिङ्गञ्च तत्र व्यूढः प्रवर्त्तते, अन्यत्राविशेषेण समूढ इति ॥ (१०।५।२४ अ०) ।

---

संवत्सरस्थेऽनीकानां विहत्याधिकरणम् ॥

सू० एकादशिनवत् त्र्यनीका परिवृत्तिः स्यात् ॥ ॥ ८३ ॥ (पू०) ॥

भा० द्वादशाहे समाम्नायते,—'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाहः, अथेतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रं, अथ ऐन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथ आग्रयणाग्रं' इति, तत् गवामयने चोदकेन प्राप्तं, तत्र बहूनि त्र्यनीकानि परिवर्त्तयितव्यानि, तत्रार्थप्राप्तोऽभ्यासः । अथेदानीम् अभ्यासे सन्देहः,—किं

दण्डकलितवत् अभ्यासः कर्त्तव्यः, उत संख्यानविवृद्धिः? इति। कथं दण्डकलितवत् स्यात् कथं वा संख्यानविवृद्धिः? इति। यदि अह्नामधिकारस्तत आद्येषु नवसु अहःसु परिसमाप्तेषु शिष्टेष्वपि त्र्यनीकां चोदकः प्रापयतीति उपस्थितमिदं भवतीति,—'ऐन्द्रवायवाग्रं प्रथममहः अथ शुक्राग्रम्' इति। तेष्वपि नवसु परिसमाप्तेषु पुनरिदम् एवोपतिष्ठते,—'ऐन्द्रवायवाग्रं प्रथममहः' इति। एवं दण्डकलितवदावृत्तिः*। अथाहरधिकारो नास्ति, ततः प्रायणीयो-दयनीययोरन्तरं नवभिरनीकैः पूरितमिति गवामयनेऽपि नवभिरनीकैः पूरयितव्यं स्यात्, तत्र पूर्णे पुनरावृत्तिर्नास्तीति दण्डकलितवत् न स्यात्, न च, संख्या विना तदन्तरं पूर्य्यते इति संख्यानविवृद्धिः आगतेति।

किं पुनः प्राप्तं?—दण्डकलितवदावृत्तिरिति। तत्र एतद्वर्ण्यते,—अहरधिकारोऽस्तीति; एवं हि आम्नायते,—'ऐन्द्रवायवाग्रं प्रथममहः अथ शुक्राग्रं', प्रकृतत्वादहरिति गम्यते, तस्मादहरधिकारः, अतो-

* "अस्ति समूढस्य द्वादशाहस्य विकृतिर्गवामयनं संवत्सरसत्रं, तत्र त्र्यनीका चोदकेन प्राप्ता,—"त्रीणि अनीकानि ऐन्द्रवायवाग्रशुक्राग्रमन्थ्यग्राणि यस्यां सा त्र्यनीका, तथा च त्रिः परिवृत्त्या द्वादशाहान्तयोः प्रायणीयोदयनीययोरह्नोः मध्ये वर्त्तमानेषु दशसु अहःसु दशमव्यतिरिक्तानि नवसंख्याकानि अहानि पूरितानि, अतः संवत्सरसत्रेऽपि प्रायणीयोदयनीयमध्यवर्त्तीनि पूरयितव्यानि, तत्पूरणञ्च यथोक्तयो-रिव परिवृत्त्योः नवदिवसयुक्तयोः अनीकयोः समूढाहनिरन्तरेण न सिध्यति इत्या-वृत्तिः प्राप्ता, तस्याश्च द्वैविध्यं विद्यते,—यथा दण्डस्याष्टाग्रा भूमौ चाकलितायां आदिमध्यावसानभागैः स्पृष्टं तत्तद्देशं पुनः पुनरावर्त्तयति, न त्वेकैकं सर्वं, तथा नवदिवसानामावृत्तिः इत्येकः प्रकारः। यथा अध्येतारः प्रपाठकमावर्त्तयितुकामा एकैकं नाममसकृत् पठन्ति, तथा नवदिवससमूहवर्त्तिनामेकैकस्याह्नोऽसकृदनुष्ठानमित्यपरः" इति [illegible]।

ऽवगच्छामः,—दण्डकलितवदावृत्तिरिति। आवृत्तिन्यायानां दण्डकलितं न्याय्यं, तथा क्रमानुग्रहो भवति। तद्यथा,—कश्चिदुच्यते अनुवाकः त्रिः पठ्यतामिति, दण्डकलितवदसौ पठ्यते, क्रमानुग्रहाय; एवमिहापि द्रष्टव्यं। यथा अस्मिन्नेव गवामयने एकादशिनी अभ्यस्यमाना दण्डकलितवदभ्यस्यते, न स्वस्थानविवृद्धेति॥

सू॰ स्वस्थानविवृद्धिर्वा अह्नामप्रत्यक्षसङ्ख्यत्वात्॥
॥८४॥ (सि॰)॥

भा॰ 'स्वस्थानविवृद्धिर्वा', न दण्डकलितवदावृत्तिः। तत्र इदं वर्ण्यते,—नाहरधिकार इति। कुतः?। 'अह्नामप्रत्यक्षसङ्ख्यत्वात्',—अप्रत्यक्षा अह्नां सङ्ख्या नवानामह्नामिति, ऐन्द्रवायवाग्रमिति च विधीयमानम् इति। कथं अहर्न विधीयते? इति। वाक्यभेदप्रसङ्गात्,—ऐन्द्रवायवाग्रं प्रथमं भवति, तच्च अहः, नाहःसङ्घात इति वाक्यं भिद्येत! तस्मादनुवादमात्रमहर्ग्रहणं। एवं चेत्, क्रमानुग्रहाय स्वस्थानविवृद्धिराश्रयणीया। आग्रयणाग्राम् कृत्वा ऐन्द्रवायवाग्रा कर्त्तव्या इति॥

सू॰ पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात् त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात्॥८५॥ (यु॰)॥

भा॰ इतश्च पश्यामः, स्वस्थानविवृद्धिः इति। कुतः?। उत्तरस्मिन् पञ्चके 'पृष्ठ्यावृत्तौ' आग्रयणाग्रताया दर्शनं भवति 'त्रयस्त्रिंशे' ऽहनि। कथं?। 'जगतीं वै छन्दांसि प्रत्यवरोहन्ति आग्रयणं वै ग्रहाः, इदन्तु पृष्ठानि, त्रयस्त्रिंशं स्तोमाः' इति, तदेतत् स्वस्थानविवृद्धाववकल्पते, न

दण्डकलितवदावृत्तौ। कथं?। पूर्व्वस्मिन् पक्षसि त्र्यनीका चितिः परिवर्त्तते, तस्मिन्नावृत्तैव सा आग्रयणाग्रेषु परिसमाप्यते, उत्तरमपि पक्षो व्यावृत्तमिति कृत्वा आग्रयणाग्रेषु आरभ्यते। तत्र प्रथमे नवम-भागे त्रयस्त्रिंशमहरिति कृत्वा तदाग्रयणाग्रं भवति, तत्रैतद्दर्शनम् उपपद्यते; दण्डकलितवत् पुनरावृत्तौ सत्यां तत् ऐन्द्रवायवाग्रं स्यात्। कथं?। त्रिवृत आरभ्य नवकैरहःसु सङ्ख्यमानेषु पूर्व्वस्मिन् पक्षसि सप्त परिक्षिप्यन्ते, तत्र सप्तमे ऐन्द्रवायवाग्रता, शुक्राग्रो विषुवान्, आग्रयणाग्रः प्रथमः स्वरसामा, ततो विश्वजिदिति त्र्यनीका समाप्ता, त्रयस्त्रिंशमहरैन्द्रवायवाग्रं प्राप्नोति तत्रैतद्दर्शनं विरुध्यते, तस्मात् स्वस्थानविवृद्धिः इति॥

सू० वचनात् परिवृत्तिरैकादशिनेषु॥ ८६॥ (आ०नि०)॥

भा० अथ यदुक्तम्,—ऐकादशिनवत् इति। युक्तं, यत् 'ऐकादशिनेषु' दण्डकलितवदावृत्तिरिति, वचनं हि तद्भवति, 'वारुणमन्ततः पुनः पर्य्यावृत्तेषु आग्नेयमेव प्रथमेऽहनि आलभेत' इति वचनात् दण्ड-कलितवदावृत्तिः पुनःपर्य्यावृत्तेष्विति, सा द्वादशाहे असम्भवन्ती गवामयनं विशति; किमिव वचनं न कुर्य्यात्, न हि वचनस्याति-भारोऽस्ति॥

सू० लिङ्गदर्शनाच्च॥ ८७॥ (हे०)॥

भा० लिङ्गं खलु अप्येवमर्थं दर्शयति,*—यथा दण्डकलितवत्

* अत्र 'दर्शयति। किं' इति आदर्शपुस्तकपाठः।

ऐकाहिका आवर्त्तन्ते इति, 'प्राणा वा एकाहिका यदेकाहिनीभिरीयुरहानि अतिरिच्यन्ते पशवो वा' इति। सख्यानविवृद्धौ नाह्नतिरेकः, इष्टकक्लृप्तवदावृत्तौ न्यूनता अतिरिक्तता वा भवति। तस्मादपि पश्यामः,—ऐकाहिकेषु इष्टकक्लृप्तवदावृत्तिरिति। (१०।५।२५अ०)॥

---

व्यूढे मन्त्राणां छन्दोव्यतिक्रमाधिकरणम्॥

सू० छन्दोव्यतिक्रमात् व्यूढे भक्ष-पवमान-परिधि-कपालस्य मन्त्राणां यथोत्पत्तिवचनमूहवत् स्यात्॥ ८८॥

भा० अस्ति द्वादशाहः समूढो व्यूढश्च, तत्र व्यूढः,—'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, अथेतरेषां दशानामह्नाम् ऐन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्, अथ द्वे आग्रयणाग्रे, तथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे' इति।

तत्र व्यूढे इदं समामनन्ति,—'छन्दांसि वाऽन्योन्यस्य लोकमभिध्यायन्ति गायत्री त्रिष्टुभः त्रिष्टुप् जगत्याः जगती गायत्र्याः' इति। तत्र सन्ति भक्ष-पवमान-परिधि-कपालानि,—भक्षास्तावत् 'भक्षे हि मा विश दीर्घायुत्वाय शन्तनुत्वाय एहि वसो पुरोवसो प्रियो मे हृदये भवाश्विनोर्बाहुभ्यां सध्यासं वसुमद्गणस्य रुद्रवत् गणस्यादित्यवत् गणस्य सोमदेवते मतिविदः प्रातःसवनस्य माध्यन्दिनसवनस्य तृतीयसवनस्य गायत्रच्छन्दसस्त्रिष्टुप्छन्दसो

जगतीच्छन्दसो अग्निहुत इन्द्रपीतस्य मधुमत उपहूत उपहूतस्य भक्षयामि' इति। तथा पवमानः,—'श्येनोऽसि गायत्रच्छन्दाः सुपर्णोऽसि त्रिष्टुप्छन्दाः सघासि जगतीच्छन्दाः अनु मारभे स्वस्ति मायं पारय' इति च (?)। तथा परिधयः,—'गायत्रो मध्यमः परिधिः त्रैष्टुभो दक्षिणो जागत उत्तरः' इति। तथा कपालानि,—'अष्टाकपालः प्रातःसवने एकादशकपालो माध्यन्दिनीयो द्वादशकपालस्तार्त्तीयसवनिकः' इति। तत्र सन्देहः,—किं छन्दोव्यतिक्रमे व्यतिक्रमो भक्षमन्त्राणां, भक्षणस्य च, पवमानमन्त्राणां पवमानस्य च, तथा परिधीनां कपालानाञ्च, अथ वा मन्त्राणां छन्दोव्यतिक्रमः? इति। किं प्राप्तं?,—मन्त्राणां मन्त्रार्थानाञ्च। कुतः?। अविशेषवचनात्, अविशेषेण भवति वचनं,—'छन्दांसि वा अन्योन्यस्य लोकमभिध्यायन्ति गायत्री त्रिष्टुभः त्रिष्टुप् जगत्याः जगती गायत्र्याः' इति; न विशेषः श्रूयते मन्त्राणां व्यतिक्रमः इति। तस्मान्मन्त्राणां अर्थानाञ्च इति; अतो मध्यमः परिधिर्दक्षिणस्थाने स्थापयितव्यः, दक्षिण उत्तरस्य, उत्तरो मध्यमस्य इति; अष्टाकपालो माध्यन्दिनीयः कार्य्यः, एकादशकपालः तार्त्तीयसवनिकः द्वादशकपालः प्रातःसवनीय इति; तथा प्रातःसवनीयस्य भक्षो माध्यन्दिनस्य भक्षणस्य स्थाने भक्षयितव्यः, माध्यन्दिनः तार्त्तीयसवनिकस्य, तार्त्तीयसवनः प्रातःसवनीयस्येति; तथा वहिःपवमानो माध्यन्दिनस्य पवमानस्य लोके माध्यन्दिनः आर्भवस्य, आर्भवो वहिःपवमानस्य इति।

एवं प्राप्ते ब्रूमः,—नाविशेषेण च्छन्दसां व्यतिक्रमः स्यात्,

मन्त्रगतो हि एष व्यतिक्रमः, मन्त्रगतान्येव व्यतिक्रमेयुः। किं कारणं?। शक्यन्ते मन्त्रगतानि विपर्य्यसितुं भक्षादयः पुनर्विपर्य्यस्ता अविपर्यस्ता अपि त एव इति। माध्यन्दिनस्य भक्षस्य कालेऽपि प्रातःसवनीयो भक्षो भक्ष्यमाणो नैव त्रैष्टुभः कृतः स्यात्, एवं सर्वत्र। कथं?। स्वकालेऽपि हि असौ न गायत्रः, गायत्री हि त्रिष्टुभः स्थानमभ्येति नागायत्री; न भक्षादयो गायत्रादयः। तस्मादसम्भवो भक्षादीनां व्यतिक्रमणस्य। मन्त्रगतानि तु छन्दांसि शक्नुवन्ति अन्योन्यस्य लोकं व्यतिक्रमयितुं। तस्मान्मन्त्रगतानां छन्दसां व्यतिक्रमः इति॥

इति भट्टश्रीशबरस्वामिविरचिते मीमांसाभाष्ये दशमाध्यायस्य पञ्चमः पादः॥०॥

# मीमांसा—दर्शने

१० अध्याये ६ पादः ।

रथन्तरादीनां साम्नां तृचे गानाधिकरणम् ।१

सू॰ एकार्थस्थानि यज्ञे स्युः स्वाध्यायवत् ॥ १ ॥ (पू॰) ॥

भा॰ सामानि उदाहरणं;—रथन्तरं बृहत् वैरूपं वैराजं शाक्वरं रैवतम् इति । तत्र संशयः,—किमेकस्यामृचि गानं कर्त्तव्यम्, उत, तृचे? इति । किं प्राप्तम्? । 'एकार्थस्थानि यज्ञे स्युः',-एकस्यामृचि गातव्यानि, एवं स्वाध्याये गीतानि, यथा स्वाध्याये गीतानि, तथा कर्मणि गातव्यानि; कर्मणि स्वाध्याये च अवैलक्षण्यं न्याय्यं, कर्माणि कर्त्तुं स्वाध्यायमभ्यस्यन्ति, अतो यथा अभ्यस्तं तत्र* प्रयोक्तव्यं । तस्मादेकस्याम् ऋचि गीयेरन् । एकर्चोत्पत्तीनि उदाहरणं, न तृचोत्पत्तीनि, यथाह-सिमा-सन्तनि-यतयएवागपत्य(?)-शाक्वरवर्णम् इति ॥

सू॰ तृचे वा लिङ्गदर्शनात् ॥ २ ॥ (सि॰) ॥

भा॰ न चैतदेवम्,—एकस्यामेव गातव्यानि इति । कुतः? । 'लिङ्गदर्शनात्',—लिङ्गं भवति, एवमाह,—'अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौति द्व्यक्षरेण उत्तरयोः' इति; न हि एकस्यामृचि प्रथमोत्तरासम्बन्धो भवति । तस्मात् तृचे गातव्यानि इति ।

* 'तथा' इति पाठो भवितुं युक्तः ।

अथेदमपरं लिङ्गम्,—'ऋक् साम उवाच मिथुनीसम्भवावेति, सोऽब्रवीत् न वै त्वं ममात्समसि आयात्ने वेद्वो मे* महिमेति ते द्वे भूत्वा ऊचतुः, सोऽब्रवीन्नैव वां ममात्वं स्थो आयात्ने वेद्वो मे महिमेति, तास्तिस्रो भूत्वा ऊचुः, सोऽब्रवीत् सम्भवाम' इति तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इति।

आह,—'लिङ्गमिदं, प्राप्तिर्वक्तव्यताम्' इति। तदभिधीयते,—कृत्स्नेऽपि ऋग्वेदे न 'प्रथमा' नाम काचिदृगस्ति, तथा 'उत्तरे' इति, व्यवस्थाकृतं प्रथमात्वम्, उत्तरात्वम् इति प्रथमाया ऋचः-प्रष्टाचरेण प्रस्तोतव्यं, द्व्यचरेण चोत्तरयोरिति तस्मिन् वचने सति ऋचस्त्रित्व-मापद्यते। तथा, यद्यपि अनुवादस्वरूपोऽयं शब्दः,—'तस्मादेकं साम तृचे क्रियते स्तोत्रीयम्' इति, तथापि 'ऋक् साम उवाच' इति—पुरस्तादर्थवादप्ररोचनया विदधातीति गम्यते। तदुक्तं,—"वचनानि त्वपूर्वत्वात्" (१।५।२१सू०) इति॥ (१०।६।१अ०)॥

---

स्वरहदशब्देन वीक्षणस्य कालार्थताधिकरणम्॥

सू० स्वरहश्चं प्रति वीक्षणं कालमात्रं परार्थत्वात्॥
॥ ३॥

भा० 'ईश्वरं वै रथन्तरमुद्गातुश्चक्षुः। प्रमथिता रथन्तरे प्रस्तूयमाने सम्मीलेत् स्वर्हृशं प्रति वीक्षेत'। अत्र संशयः,—किं स्वर्हृशं प्रति वीक्षणं अङ्गप्रयोजनसम्बन्धः, उत काल्लार्थः संयोगः? इति। तत एतावत्

---

* 'मम' इति क० सं० पु० पाठः।

तावन्नः परीक्ष्यं,—किं 'रथन्तरे प्रस्तूयमाने समीक्षेत' इत्यस्य शेषः 'खर्ट्ट्मं प्रति वीक्षेत' इति, उत, खर्ट्ट्ममित्येवमादि पृथग्वाक्यम्? इति । किं प्राप्तम्?—अङ्गप्रयोजनसम्बन्ध इति पृथग्वाक्यम् इति । कुतः? । भेदेनावगमात्,—भिन्नमिदमुपलभ्यते,—'खर्ट्ट्मं प्रति वीक्षेत' इति । 'ननु अभिन्नमपि लक्ष्यते,—'रथन्तरे प्रस्तूयमाने समीक्षेत' इति विधाय, 'खर्ट्ट्मं प्रति वीक्षेत' इत्यनुवदति' इति । उच्यते,—उभयावगतौ भेदो ग्रहीतव्यः, स भेदो ग्रह्यमाणेन तेन विरुध्यते, अन्यतरगतिस्तु विध्यनुवादयोर्विरोधात्, तत्र विधिर्न्याय्यो अपूर्वत्वात्, "वादमात्रं हि अनर्थकं" (१।२।१८सू०) । विध्यवगमाच्च,—विधिश्चावगम्यते, 'वीक्षेत' इति, श्रुतिश्चैवमनुग्रह्यते, 'खर्ट्ट्मं प्रति वीक्षेत' इति खर्ट्टक्शब्दं प्रति वीक्षणार्थो विधीयते, खर्ट्टक्शब्देन सह वीक्षणस्य साक्षात्सम्बन्धः, इतरथा खर्ट्टक्शब्दः कालं लक्षयेत्, श्रुतिलक्षणाविषये च श्रुतिर्न्याय्या । तस्मात् अङ्गप्रयोजनसम्बन्धः ।

अथ वा, 'खर्ट्ट्मं प्रति वीक्षेत' इत्येवमङ्गप्रयोजनसम्बन्धः, खर्ट्टक्शब्दो वीक्षणस्य साधनमिति, तथा लिङ्गमप्यनुगृहीतं भवति, खर्ट्टक्शब्दश्रवणात् साधनमपि । तस्मादङ्गप्रयोजनसम्बन्ध एवेति ।

एवं प्राप्ते ब्रूमः, 'खर्ट्ट्मं प्रति वीक्षणं कालमात्रं' स्यात् 'परार्थत्वात्', नैतदेवम् अङ्गप्रयोजनसम्बन्धः इति, किन्तर्हि खर्ट्टक्शब्देन वीक्षणस्य कालार्थः सम्बन्धः स्यात् । कुतः? । 'परार्थत्वात्' साम्नः, 'रथन्तरं पृष्ठं भवति' इति पृष्ठस्तुतौ हि साम विनियुज्यते, तच्च साम पदानां स्तुतिं निर्वर्त्तयतां संश्लेषादिभिर्विशेषैः स्तुतिपदाक्षराणि उपदर्शयत् स्तुतिमभिनिर्वर्त्तयतीत्युच्यते । एवं चेत् साम्नि स्तुतौ

विनियुज्यमाने यानि, तानि परस्परसव्यपेक्षाणि स्वकपदानि स्तुतौ विनियुक्तानि सम्भवन्तीत्यतः स्वर्द्दृक्शब्दस्य तन्मध्यपाठात् स्तुतौ विनियोग उक्तो भवतीत्यतः परार्थत्वादिह कालार्थः संयोग इति अध्यवसीयते ।

'ननु मन्त्रे समाख्यानमात्रं, रथन्तरोपदेशाच्च पदोपदेशमानुमानिकं वाधित्वा एतद्वाक्यं प्रत्यक्षमङ्गप्रयोजनसम्बन्धमेव प्रकल्पयेदिति' ।

उच्यते, तद्धि वाधकं भवति, यदवाधमानमप्रयोजनं भवति, न चैतदवाधमानमनर्थकं, क्रियासु कालपरिच्छेदेनार्थवत्त्वात् । 'मन्त्रे समाख्यानसामर्थ्यात्, सामोपदेशाच्च स्तुतिसम्बन्धः साक्षात्, वाक्यात् क्रियाकारकसम्बन्धः । 'उभयोः प्रमाणावगतत्वात् उभयसम्बन्धो न विरुध्यते'—इति यद्युच्येत । तन्न, यो हि मन्त्रवाक्याद् व्यवच्छिन्नस्य क्रियाकारकसम्बन्धमवगच्छति, नासौ सकृदुच्चरितस्य स्तुतिसम्बन्धमप्यवगच्छति; यद्यवगच्छेत्, पुनरुच्चारयेत्, नान्यथा; तस्मात् तस्यामेव स्तुतौ क्रियासम्बन्धे कारकसम्बन्धः, न स्तुतिसम्बन्धे, कारकविशेषणाभावात् । तदेवं मन्त्राख्यानस्य सामोपदेशवाक्यस्य 'स्वर्द्दृशं प्रति वीक्षेत' इत्यस्याविरोधे साधिते कालार्थः संयोग इति, अत उच्यते, कालार्थः संयोग इति ।

अथ यदुक्तं,—भेदाभेदयोर्भेदो गृहीतव्यः, विध्यनुवादयोः विधिर्ज्यायान् विधिप्रत्ययदर्शनाच्चैवमेव अवगम्यते—इति । अत्र ब्रूमः, सत्यं, विध्यनुवादयोर्विधिर्ज्यायान्, अपूर्वार्थप्रकल्पकत्वात् इति, यदि तु प्रमाणान्तरप्राप्तिर्नावगम्यते; यत्र तु पदान्तरादर्थाद्वा प्राप्तिरवगम्यतेऽर्थस्य, तत्र प्रमाणान्तरप्रतीतत्वात् शब्द उच्चरन् अनुवाद

इत्यवगम्यते। अत च स्वार्थप्रवृत्त्या पुरुषस्य दर्शनमस्ति, नापश्यन् पुरुषं क्रियासु व्यापारमुपगन्तुमुत्सहते,—इत्यर्थप्राप्ते विधिप्रत्ययोऽप्यनुवाद इत्यवगम्यते। 'ननु 'रथन्तरे प्रस्तूयमाने सम्मीलेत्' इति प्रत्यक्ष-वाक्यमर्थप्राप्तं पुरुषस्य दर्शनं वाधेत, यथा प्रजापतिव्रतानि पौरुषेयीं स्वेच्छाप्रवृत्तिं वचनसामर्थ्यात् निरुन्धन्ति तद्वत् इति'। नेत्यवगम्यते। कथं ?। क्रियाप्रारम्भसम्बन्धात् 'रथन्तरे प्रस्तूयमाने' इत्युच्यते, तदतीते प्रस्तावे वचनार्थस्य कृतार्थत्वादर्थप्राप्तं न वार-यितुमर्हति।

अथ यदुक्तं,—'स्वर्दृक्शब्देनोक्षणयोर्वाक्येन सम्बन्धः—इति, वाक्यार्थत्वात् दृशिप्रयोगाच्च लिङ्गात् दर्शनक्रियासामर्थ्यमस्ति' इति। अत्र ब्रूमः,—प्रतिशब्दः कर्मप्रवचनीयत्वात् स्वर्दृक्शब्दस्य लक्षणतामाचष्टे श्रुत्यैव, श्रुतिश्च लिङ्गवाक्ययोर्वाधिका समधिगतैव। अथ वा, नाच वाक्यं वाध्येत, वाक्यं हि सम्बन्धप्रत्यायकं, यथासम्भवमनेकविधः सम्बन्धो वाक्यात् गम्यते,—क्वचित् क्रियाकारकसम्बन्धः, क्वचिद्वि-शेषणविशेष्यसम्बन्धः, क्वचिल्लक्ष्यलक्षणसम्बन्धः,—इत्येवंप्रकाराः सम्बन्ध-विशेषा इति। तचेह लक्ष्यलक्षणसम्बन्धः प्रयोजनप्रयुक्त इति गृह्यत एव सम्बन्धविशेष इति, न वाक्यं वाध्यते। यथा लोके, 'वृक्षं प्रति विद्योतते' इति न विद्योतनस्य वृक्षस्य च साध्यसाधनभावो गम्यते इति। अन्यतः प्रवृत्तस्य विद्योतनस्य वृक्षश्चिह्नभावाय उपादीयते इति; तद्वदिहापि पुरुषार्थतया प्रवृत्तस्य दर्शनस्य स्वर्दृक्शब्दो लक्षणतया उपादीयत इति न वाक्यानर्थक्यं; न हि लक्ष्यलक्षणयोरनुपार्य्यमाणयोः सम्बन्धोऽवगम्यते इति।

यदपि,—दृशिप्रयोगात् लिङ्गानुग्रह इति, तदपि न समर्थमिवे- क्षितस्यार्थस्य पश्यामः,—स्वार्थो हि दृशिः प्रयुज्यमानो दर्शनमव- गमयेत् न परार्थः, स्वर्दृकशब्दे तु सोपपदो दृशिः कर्तृत्वे गुणभूतोऽवगम्यते, कर्त्ता तु प्रधानभूतः। न च कर्त्ता प्रत्याय्यमानो वीक्षणलिङ्गत्वेन कल्प्यते, दृशेरत्यन्तपारतन्त्र्यात्, कर्त्रभिधानस्य सन् अयं नैव वीक्षतिना सामर्थ्येन सम्बन्धमुपैति। यदि तावदयमर्थ उपदिश्यते,—स्वर्दृशं वीक्षेत इति, कोऽसौ स्वर्दृक्, यं प्रति वीक्षण- मुपदिष्टम्?—इत्यविजानन्तो नैव क्रियामध्यवस्येम। अथायमर्थः,— स्वर्दृशा वीक्षणं निर्वर्त्तयेत् इति, तथाप्यप्रज्ञानात् स एव दोषः। तदेवम्प्रकारे सम्बन्धे आम्नातेनाभ्युपगम्यमाने न लिङ्गं न च वाक्यम् अनुष्ठास्यते, स्वशब्दसम्बन्धेऽनुवीक्षणस्य एतदुच्चारणकाले 'वीक्षेत'—इति भवति कथाचित् युक्त्या सम्बन्धः, स्तुतिसम्बन्धश्च कर्त्रभिधानस्यापि सतो न विरुध्यते। सामानाधिकरण्यात् ईशानेन विशेषणविशेष्यभावसम्बन्ध- मभ्युपैति,—'ईशानं स्वर्दृशं तस्थुषः' इति। अतो वदामः,—स्तुत्यर्थस्य सतः 'स्वर्दृशं प्रति वीक्षेत' इत्यत्र काकार्थः सम्बन्ध इति।

किं भवति प्रयोजनम्?। मन्त्राग्निसम्बन्धे सति, यदा, 'रथ- न्तरमुत्तरयोर्गायति' इत्यतिदेशः, तदा एतदुपतिष्ठते,—'रथन्तरे प्रस्तूयमाने सम्मीलेत्' इति। उत्तरयोस्तु स्वर्दृक्शब्दाभावा- दृशनानियमः पूर्वपक्षे, सिद्धान्ते तु स्वशब्दसम्बन्धे सति तावति भागे काकाशनात् 'स्वर्दृशं प्रति वीक्षेत' इति नियमः सिद्धो भवति॥ (१०।३।२अ०)॥

———

गवामयनिके पृष्ठ्यषडहे बृहद्रथन्तरयोर्विभागाधिकरणम् ॥

## सू० पृष्ठ्यस्य युगपद्विधेरेकाहवत् द्विसामत्वम् ॥ ॥ ४ ॥ (पू०) ॥

भा० इदमाम्नायते,—'पृष्ठ्यः षड़हो बृहद्रथन्तरसामा' इति । तत्र अयमर्थः सांशयिकः,—किमहरहर्द्विसामकं कर्त्तव्यम्, उत केषुचिदहःसु रथन्तरं केषुचिद् बृहत् ? इति । कुतः संशयः ? । यद्येते समस्ते सामनी, यदि विभक्ते, उभयथा 'पृष्ठ्यः षड़हो बृहद्रथन्तरसामा' इति शब्दोऽवकल्पते । तत्रैव विचारः,—किं द्वन्द्वगर्भो बहुव्रीहिरयं,—बृहद्रथन्तरे सामनी यस्य इति, उत, अनेकपदो बहुव्रीहिः,—बृहदस्य, रथन्तरमस्य ?—इति । यदि द्वन्द्वगर्भो बहुव्रीहिः, प्रत्यहं समस्ते सामनी, अनेकपदे बहुव्रीहौ विभक्ते इति ।

किं तावत् प्राप्तं ?—समस्ते इति । तत एतद् वर्ण्यते,—द्वन्द्वगर्भो बहुव्रीहिरिति । कुतः ? । बृहद्रथन्तरशब्दयोरानन्तर्य्यात् वृत्तिपक्षस्याश्रितत्वात्,* वृत्तिपक्षे च समासस्य नित्यत्वात् । द्वन्द्वे च स्वार्थाभिधानात् श्रुत्युपदेशोऽन्तरङ्गता च; इतरथा च उभयमपि बाध्येत । अतो द्वन्द्वगर्भो बहुव्रीहिः, एवं चेत्, प्रत्यहं समस्ते सामनी भवेतां । कुतः ? । इतरेतरयोगद्वन्द्वस्य भावात्, यत्र रथन्तरं तत्र बृहत्सहितं, स एष युगपद्विधिर्यदितरेतरयोगः, तस्मात् प्रत्यहं समस्ते इति । 'एकाहवत्',—यथा 'ज्योगामयाविन

---

* अत्र "वृत्तिशब्देन समासं ब्रवीतीति बृहद्रथन्तरयोः शब्दयोः समासस्याबहुभयश्रितः" इति तन्त्रवार्त्तिकमनुसन्धेयम् ।

उभे कुर्यात् संभवे उभे कुर्यात्, अपचितावपि एकाहे बृहद्रथन्तरे कुर्यात् इति ॥

सू॰ विभक्ते वा समस्तविधानात् तद्विभागे वि-
प्रतिषिद्धम् ॥ ५ ॥ (सि॰) ॥

भा॰ न चैतदस्ति,—अहरहर्द्विसामकम् इति, केषुचिदहःसु रथन्तरं, केषुचित् बृहत्, न समस्ते सामनी विधीयेते। कुतः?। यद्युभयोरपि पक्षयोर्बृहद्रथन्तरसामेतिशब्दोऽवकल्पते, 'विभक्ते' सामनी इति न्याय्यं। कुतः?। प्रकृतावेकेन साम्ना पृष्ठं साधितं, विकृतावपि एकेन साधितव्यं चोदकानुग्रहाय, तथा च सति बृहन्निमित्तं रथन्तर-निमित्तञ्च सकलमभिनिर्वर्त्तयिष्यते।

'अथ बृहद्रथन्तरसमुदायः पृष्ठं साधयति, न बृहत्साधनं न रथन्तरं साधनमिति तन्निमित्तं न प्रकल्पेत, तच्च चोदकोपरोधः स्यात्'। न केवलं, तन्निमित्तं न प्रकल्पते, बृहत्पृष्ठतापि न प्रकल्पते, रथन्तरपृष्ठतापि, तच्च वैषम्यात् स्यादन्यदेव प्रयोगान्तरम्।

अपि च समस्तं पृष्ठमित्युपचर्य्यमाणं लक्षितं बृहत्पृष्ठं भवति, रथन्तरं पृष्ठं भवति इति, तत्समुदायाभिधाने लिङ्गम्। अपि च बृहत्शब्दः सामशब्देन सम्बन्धमपेक्ष्यमाणो न रथन्तरशब्देन सम्बद्धः स्यात्। आनन्तर्य्यञ्च तुल्यं रथन्तरशब्दस्य सामशब्देन। अपि च वृत्तिपक्षाश्रये सुतरां द्वन्द्वपदेन असामर्थ्यं, न चैष नियोगो वृत्तिपक्षे नित्यः समास इति, विभाषां हि स्म भगवान् पाणिनिरधीते। सामशब्दश्रुतिश्च बृहद्रथन्तरयोर्लक्षणतामाचष्टे। तस्मादसमस्ते सामनी स्याताम् इति।

एतच्चोक्तमेव विभागेऽपि शब्दोरविप्रतिषिद्धो ह्यद्द्रथन्तरसामशब्द इति। यथा, 'मासं घृततैलाभ्यां देवदत्तो भोजयितव्यः' इत्युक्तोऽर्द्धं मासं घृतेनार्द्धं मासं तैलेन,—एवमपि शब्दोऽवकल्पते। एकाहे तु एकत्वादेव विभागासम्भवात् 'समस्ते ज्योतिष्टोमयाविन उभे कुर्य्यात्' इति॥ (१०।६।३अ०)॥

---

प्रायणीयोदयनीययोरैकादशिनानां विभागाधिकरणम्॥

सू० समासस्त्वैकादशिनेषु तत्प्रकृतित्वात्॥ ६॥ (पू०)॥

भा० इदमाम्नायते,—'ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेत' इति। तत्र संशयः,—किमेकादश प्रायणीये पुनस्ते एव एकादश उदयनीये, आहोस्वित् केचित् पशवः प्रायणीये केचित् उदयनीये? इति। समानत्वात् निर्देशस्य, संशयः। किं प्राप्तं?—तुशब्दः संशयनिवृत्त्यर्थः,—'समासः' एव 'ऐकादशिनेषु',—सर्वे प्रायणीये, सर्वे पुनः उदयनीये भवितुमर्हन्ति। कुतः?। 'तत्प्रकृतित्वात्',-प्रकृतौ ज्योतिष्टोमे समस्तानाम् ऐकादशिनानाम् आलम्भः, इहापि समासश्चोदकः प्रापयति। अपि च लक्षणत्वेन प्रायणीयमुदयनीयं वा अहः श्रूयते, तत्र प्रायणीये सर्व्वे विहिता भवन्ति, न गम्यते विशेषः,—के इह ऐकादशिनानां विहिताः? इति, तथोदयनीये; तस्मात् समासस्तत्र॥

सू० विहारप्रतिषेधाच्च॥ ७॥ (यु०)॥

भा० विहारप्रतिषेधश्चायं,—'ऐकादशिनान् प्रायणीयोदयनीययो-

रतिरात्रयोरालभेरन्' इति, 'अश्वहन्येकैकमालभेत' इति विहारः प्राप्तः। तत्र एकः पशुः प्रायणीये प्राप्त एव अन्येऽन्येषु अहःसु। ततोऽनेन किं क्रियते?—येऽन्येषु अहःसु, ते प्रतिषिध्यन्ते, प्रायणीये च ते सर्वे भवन्ति इति, तथोदयनीये; तस्मात् सर्वे प्रायणीये भवितुमर्हन्तीति॥

सू० श्रुतितो वा लोकवद्विभागः स्यात्॥८॥ (सि०)॥

भा० वाशब्देन पक्षं व्यावर्त्तयति,—नैतदस्ति समास इति, 'विभागः स्यात्'। कुतः?। द्वित्वश्रुतितः,—द्वित्वश्रुतिर्हि भवति,—'प्रायणीयोदयनीययोः' इति। सा च इदानीमुपादेयत्वेन, न लक्षणतया। कुतः?। एकादशिनीविधौ सन्निहिते वचनादेकादशिनीं विधाय पुनः श्रुत्या तां लक्षयित्वा प्रयोजनविधित्सया एतदभिधीयते,—'प्रायणीयोदयनीययोः' इति, तत्र द्वन्द्वभाविनोः प्राधान्यात् सत्यामपेक्षायां भवति समासः। समासे च इतरेतरयोगात् न एकादशिनी केवले प्रायणीये, सा उदयनीययुक्ते भवितुमर्हति, तद्वत् उदयनीयेऽपि। तस्मात् समुदाये वाक्यपरिसमाप्तिः। यदि पुनर्नोपादेयत्वेन अश्रोष्येतां, तत्र द्वन्द्वभाविनोरप्राधान्यम्, अप्राधान्येऽसत्याम् आकाङ्क्षायां न समासो भविष्यति। तत्र प्रत्येकं वाक्यपरिसमाप्तिः स्यात्, उपादेयत्वेन तु एतत् श्रूयते। तस्माद्विभाग इति। 'लोकवत्' यथा, 'लोके शतं देवदत्तयज्ञदत्तयोः दीयताम्' इत्युक्ते समासार्थो विधीयते, यदेतत् शतं, तदेतयोर्दीयताम् इति। द्वन्द्वश्रुतिविधानसामर्थ्यात् शतं विभज्यते, एवमेकादशिन्यपि विभज्येत इति॥

सू० विहारप्रकृतित्वाच ॥ ९ ॥ (यु०) ॥

भा० इतश्च विभागः । कुतः ? । विहारः प्रकृतः,—'एकादशिन्या-ग्न्यहमेकैकमालभेत' इति । तस्यैव विकारः,—'ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभेत' इति । यावत्शक्यं तावद्विहारस्यानुग्रहीतव्यम् ॥

सू० विशये च तदासत्तेः ॥ १० ॥ (आ०नि०) ॥

भा० इदं पक्षोत्तरं सूत्रं;—'आह,—यदि विहारोऽभिप्रेयते, क्व एकत्र पञ्च आलब्धव्याः, एकत्र षट्, तत्रैकदेशो न निर्णीयते,—किं प्रायणीये किमुदयनीये ? इति; अनिर्णयेनानध्यवसानम्, अनध्यवस्यतोऽप्रवृत्तिः, तत्रोपदेशवैयर्थ्यं स्यात्' इति । अत्रोच्यते,—'विशये' (एतस्मिन् संशये) प्रकृत्यासत्तिः मुख्येनानुग्रहीष्यते,—तत्र प्रायणीये पञ्च आलभ्यन्ते, षट् उदयनीये इति अध्यवस्यामः ॥

सू० त्रयस्तथेति चेत् ॥ ११ ॥ (आ०) ॥

भा० 'इति चेत्' पश्यसि प्रत्यासत्तिर्मुख्येनानुग्रहीतव्या इति । तस्मात् त्रय एव प्रायणीये आलब्धव्या, यावत्तु बहुवचनमविरुद्धं भवतीति स्थितायां प्रतिज्ञायां सूत्रेण प्रतिचोदयति एवं ॥

सू० न समत्वात् प्रयाजवत् ॥ १२ ॥ (आ०नि०) ॥

भा० न एतदेवं । कुतः ? । 'समत्वात्', यदा प्रायणीयोदयनीययो-रितरेतरापेक्षयोरैकादशिना विधीयन्ते, न सर्व्वेऽन्यतरस्मिन् केवले कर्त्तव्यास्तदपेक्षया कार्त्स्न्यं बाधितं भवति । तत्र यावद्भिरन्यतरस्य

भवद्भिरवश्यं बाधितव्यं तावद्भिरनुज्ञातो बाधः। अत एव साम्येनैव विभागः प्रयाजानामिव, यथा षड़ाग्नेयाः प्रयाजाः प्रथमोत्तमयोर्विकारभूताः साम्येन प्रविभज्यन्ते, एवमिहापि यावत्सु साम्यं भवति, तावतः साम्येन विभज्य अभ्यधिक उदयनीये आवत्स्यते प्रत्यासत्तिर्मुख्येनानुग्रहीष्यते इति तस्माददोषः॥ (१०।६।४अ०)॥

---

'विश्वजित् सर्वपृष्ठः' इत्यनैकस्यैव पृष्ठदेशे निवेशाधिकरणम्॥

सू॰ सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात्॥ १३॥ (पू॰)॥

भा॰ इदमाम्नायते,—'विश्वजित् सर्वपृष्ठः'* इति। तत्रायमर्थः सांशयिकः,—किं सर्वेषां पृष्ठदेशे निवेशः, उतैकस्य पृष्ठदेशे अन्येषामन्यत्र? इति। किं प्राप्तं?—सर्वपृष्ठे एतस्मिन् सर्वेषां साम्नां पृष्ठदेशे निवेशः। कः पुनः पृष्ठदेशः?। ऊर्द्धं माध्यन्दिनपवमानात्, प्राक् मैत्रावरुणसाम्नः, इदमन्तरालं पृष्ठदेशः, स एवैको देशः स्यात् सर्वेषां साम्नां। कुतः?। 'पृष्ठशब्दात्', पृष्ठकार्य्ये वर्त्तमानस्य वा अयं कृतो देशः। तस्मात् सर्वेषां पृष्ठदेशे निवेशः॥

सू॰ विधेस्तु विप्रकर्षः स्यात्॥ १४॥ (सि॰)॥

भा॰ तुशब्दः पक्षं व्यावर्त्तयति,—एवं न्यायेन प्राप्तं वचनादन्यथा भवितुमर्हति। एकस्य पृष्ठकार्य्ये विधिरन्येषां परिसामकार्य्ये। कथं?।

---

* "षड़हस्तु शमेव रथन्तरं बृहद्वैरूप्यमित्यादिभिः षड्भिः सामभिः पृष्ठस्तोत्रं सम्पादितं, तानि सर्वाणि पृष्ठसामानि यस्मिन् विश्वजिति सोऽयं सर्वपृष्ठः" इति माधवः। माध्यन्दिनपवमानमैत्रावरुणसाम्नोरन्तराले पृष्ठस्तोत्रदेश इति॥

'पवमाने रथन्तरं करोति आर्भवे बृहत् मध्य इतराणि वैरूपं होतुः पृष्ठं वैराजं ब्रह्मसाम शाकरं मैत्रावरुणसाम रैवतमच्छावाकसाम' इति। एवमेकस्य पृष्ठकार्य्ये विधानमर्थवत् भविष्यति, यदीतरेषां सामकार्य्ये निवेशः; इतरथा एकस्य पृष्ठकार्य्ये विधानं नोपपद्यते, तस्मा भूदित्यतः पश्यामः एकस्य पृष्ठकार्य्ये निवेशः, अन्येषां परि-सामकार्य्ये इति॥ (१०।६।५अ०)॥

---

वैरूपसामवैराजसाम्नोः पृष्ठकार्य्ये निवेशाधिकरणम्॥

सू० वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात्॥ १५॥ (पू०)॥

भा० अस्ति ज्योतिष्टोमः, तत्रोक्थ्यः षोड़शी च संस्थाविशेषः। तत्र श्रूयते,—'उक्थ्यो वैरूपसामा एकविंशः षोड़शी वैराजसामा' इति। तत्रायमर्थः सांशयिकः,—किं वैरूपं वैराजञ्च कृत्स्ने क्रतौ निविशेते, उत पृष्ठकार्य्ये? इति। किं प्राप्तं?—कृत्स्ने क्रतौ वैरूपमेकं साम स्यात्, षोड़शिनि वैराजं। कुतः?। कृत्स्न-'क्रतुसंयोगात्',—अविशेषेण कृत्स्ने क्रतौ वैरूपसाम विधीयते, वैराजञ्च, तन्न विशेषेऽवस्थातुमर्हति पृष्ठकार्य्ये, 'त्रिवृद्वत्',—यथा, 'त्रिवृदग्निष्टोमः', त्रिवृत्स्तोमः कृत्स्ने क्रतौ भवति, एवमिमे अपि सामनी कृत्स्नयोः क्रत्वोर्भवेतां। यथा वा, 'धेनुरथैष भूर्वैश्यदेवः त्रिवृदेव सर्वस्तस्य विश्ववत्यः स्तोत्रिया धेनुर्दक्षिणा' इति कृत्स्नस्य क्रतुदाक्षिण्यस्य कार्य्ये धेनुः संयोगात्, एवमिमे अपि सामनी भवितुमर्हतः॥

सू॰ पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ॥१६॥ (सि॰)॥

भा॰ पृष्ठकार्य्ये वा सामनी विधीयेते। कथं?। वैरूपसामा वैराजसामेति सामशब्देन प्रकृतिलिङ्गेन बहुव्रीहिरवगम्यते, न वैरूपं साम विधीयते वैराजञ्च, किन्तर्हि, वैरूपसामता वैराजसामता च क्रतोः। क्रतुसंयोगो हि भवति न स्तोत्रसंयोगः, एकस्मिन्नपि च स्तोत्रे वैरूपे वैराजे च भवति वैरूपसामता वैराजसामता च क्रतोः। कुतः?। यदि हि स्तोत्रे साम विधीयते स्तोत्राविशेषात् सर्वस्तोत्रेषु* भवेत् न त्वेतदेवं, तस्मादेकस्मिन् स्तोत्रे वैरूपे वैराजे च भवति, वैरूपसामता वैराजसामता च इति। यदैकस्मिंस्तदा पृष्ठकार्य्ये स्याताम्, वैरूपसामता हि गुणो विधीयमानः, वैराजसामता च एवंजातीयकस्य गुणस्य कार्य्ये भवितुमर्हति, प्रकृतौ च बृहत्सामता रथन्तरसामता चैवंजातीयका। तदिह प्रकृतिलिङ्गसंयोगेन वैरूपसामतया वैराजसामतया च पृष्ठकार्य्ये वृत्तिरवगम्यते 'यस्य लिङ्गमर्थसंयोगादभिधानवत्' इत्यनेन न्यायेन। तस्मादिमे सामनी पृष्ठकार्य्ये निविशेयातामिति॥

सू॰ चित्रवदिति चेत्॥१७॥ (आ॰)॥

भा॰ 'इति चेत्' इति यदुक्तं,—यथा 'चित्रदग्निष्टोमः' इति चित्रत्वं कृत्स्ने क्रतौ निविशते, एवमिहापीति; तत्परिहरणीयम्,—

सू॰ न प्रकृतावकृत्स्नसंयोगात्॥१८॥ (आ॰ नि॰)॥

---

* अत्र आ॰ सो॰ पु॰ इर्व क॰ सं॰ पुस्तके सर्वपदं नास्ति।

भा० नैतदेवं,—इह वैरूपवैराजयोः प्रकृतिलिङ्गेनाहःक्लृप्तसंयोगो गम्यते, नैवं चित्रति कश्चित् प्रकृतिलिङ्गेन संयोगोऽस्ति येनाहःक्लृप्तता अवगम्येत। ततः विशेषस्त्रिवृतः सामर्थ्यात् ॥

सू० विधित्वान्नेति चेत् ॥ १९ ॥ (आ०) ॥

भा० 'इति चेत्' इति यदुक्तं,—यथा धेनुविधिर्भुवि क्लृप्तस्य क्रतुदाक्षिण्यस्य कार्य्ये भवति, एवं सामनी अपीति ॥

सू० स्यात् विषये तन्न्यायत्वात् कर्माविभागात् ॥
॥ २० ॥ (आ० नि०) ॥

भा० 'स्यात्' धेनुः भुवि क्लृप्तस्य क्रतुदाक्षिण्यस्य निवर्त्तयित्री, सा हि क्लृप्तं क्रतुदाक्षिण्यं निवर्त्तयेत् किं वा न?–इत्येतस्मिन् संशये एवं न्याय्यं क्लृप्तं निवर्त्तयेत्। कुतः?। 'कर्माविभागात्' अविभक्तं हि दक्षिणाकार्य्यं* कार्त्स्न्येन वा दाक्षिण्येन क्रियेत धेन्वा वेति। दक्षिणाकार्य्ये हि धेनुः श्रूयते,—'धेनुर्दक्षिणा' इति, अतस्तत्र युक्तम्, इह प्रकृतिलिङ्गसंयोग इत्यपदिष्टो हेतुः। तस्मादेतदपि विषमम् ॥

सू० प्रकृतेश्चाविकारात् ॥ २१ ॥ (यु०) ॥

भा० इतश्च न क्लृप्तक्रतुसंयोगः। कुतः?। 'प्रकृतेः' 'अविकारात्'। एवं खलु प्राकृतमविकृतं भविष्यति, तत्र चोदकोऽनुग्रहीष्यते। अतोऽपि न क्लृप्तक्रतुसंयोगः साम्नोरिति ॥ (१०।६।६ अ०) ॥

---

* 'दक्षिणाकार्य्ये' इति चादर्शपुस्तकपाठः।

सू० पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ॥१६॥ (सि०)॥

भा० पृष्ठकार्य्ये वा सामनी विधीयेते। कथं?। वैरूपसामा वैराजसामेति सामशब्देन प्रकृतिलिङ्गेन बहुव्रीहिरवगम्यते, न वैरूपं साम विधीयते वैराजञ्च, किन्तर्हि, वैरूपसामता वैराजसामता च क्रतोः। क्रतुसंयोगो हि भवति न स्तोत्रसंयोगः, एकस्मिन्नपि च स्तोत्रे वैरूपे वैराजे च भवति वैरूपसामता वैराजसामता च क्रतोः। कुतः?। यदि हि स्तोत्रे साम विधीयते स्तोत्राविशेषात् सर्वस्तोत्रेषु* भवेत् न त्वेतदेवं, तस्मादेकस्मिन् स्तोत्रे वैरूपे वैराजे च भवति, वैरूपसामता वैराजसामता च इति। यदैकस्मिंस्तदा पृष्ठकार्य्ये स्यातां, वैरूपसामता हि गुणो विधीयमानः, वैराजसामता च एवंजातीयकस्य गुणस्य कार्य्ये भवितुमर्हति, प्रकृतौ च बृहत्सामता रथन्तरसामता चैवंजातीयका। तदिह प्रकृतिलिङ्गसंयोगेन वैरूपसामतया वैराजसामतया च पृष्ठकार्य्ये वृत्तिरवगम्यते 'यस्य लिङ्गमर्थसंयोगादभिधानवत्' इत्यनेन न्यायेन। तस्मादिमे सामनी पृष्ठकार्य्ये निविशेयातामिति॥

सू० त्रिवृद्वदिति चेत्॥ १७॥ (आ०)॥

भा० 'इति चेत्' इति यदुक्तं,—यथा 'त्रिवृदग्निष्टोमः' इति त्रिवृत्त्वं कृत्स्ने क्रतौ निविशते, एवमिहापीति; तत्परिहरणीयम्,—

सू० न प्रकृतावकृत्स्नसंयोगात् ॥१८॥ (आ० नि०)॥

* सव आ० सो० पु० एवं क० सं० पुस्तके सर्वपदं नास्ति।

भा० नैतदेवं,—इह वैरूपवैराजयोः प्रकृतिलिङ्गेनाहत्वसंयोगो गम्यते, नैवं चित्वति कश्चित् प्रकृतिलिङ्गेन संयोगोऽस्ति येनाहत्वता अवगम्येत। ततः विशेषस्तिष्ठतः शामभ्यां ॥

सू० विधित्वान्नेति चेत् ॥ १९ ॥ (आ०) ॥

भा० 'इति चेत्' इति यदुक्तं,—यथा धेनुविधिर्भुवि कृत्स्नस्य क्रतुदाक्षिण्यस्य कार्य्ये भवति, एवं सामनी अपीति ॥

सू० स्यात् विशये तन्न्यायत्वात् कर्माविभागात् ॥
॥ २० ॥ (आ० नि०) ॥

भा० 'स्यात्' धेनुः भुवि कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्त्तयित्री, सा हि कृत्स्नं क्रतुदाक्षिण्यं निवर्त्तयेत् किं वा न?–इत्येतस्मिन् संशये एवं न्याय्यं कृत्स्नं निवर्त्तयेत्। कुतः?। 'कर्माविभागात्' अविभक्तं हि दक्षिणाकार्य्यं* कार्त्स्न्येन वा दाक्षिण्येन क्रियेत धेन्वा वेति। दक्षिणाकार्य्ये हि धेनुः श्रूयते,—'धेनुर्दक्षिणा' इति, अतस्तच युक्तम्, इह प्रकृतिलिङ्गसंयोग इत्यपदिष्टो हेतुः। तस्मादेतदपि विषमम् ॥

सू० प्रकृतेश्चाविकारात् ॥ २१ ॥ (यु०) ॥

भा० इतश्च न कृत्स्नक्रतुसंयोगः। कुतः?। 'प्रकृतेः' 'अविकारात्'। एवं खलु प्राकृतमविकृतं भविष्यति, तच चोदकोऽनुग्रहीष्यते। अतोऽपि न कृत्स्नक्रतुसंयोगः साम्नोरिति ॥ (१०।६।६अ०) ॥

---

* 'दक्षिणाकार्य्ये' इति पादर्शपुस्तकपाठः।

'त्रिवृदग्निष्टोमः' इत्यत्र स्तोमगतसङ्ख्याविकाराधिकरणम् ॥

सू० त्रिवृति सङ्ख्यात्वेन सर्वसङ्ख्याविकारः स्यात् ॥२२॥ (पू०) ॥

भा० एवं श्रूयते,—'त्रिवृदग्निष्टोमः' इति। तत्र संशयः,—किं त्रिवृत्सङ्ख्या अग्निष्टोमस्य साधनमात्रे, उत स्तोमविषया नियम्यते? इति। किं प्राप्तं?। त्रिवृत् भवतीति श्रूयमाणे सङ्ख्यामात्रविकारः स्यात्। कुतः?। त्रिवृत्शब्दो लोके त्रित्वसम्बन्धे प्रयुक्तः, यथा त्रिवृद्रज्जुस्त्रिवृन्मणिरिति, इहापि 'त्रिवृदग्निष्टोमः' इति त्रित्वसम्बन्धोऽग्निष्टोमः कार्य्य इत्युच्यते। तत्र त्रित्वमग्निष्टोमसाधनपरिच्छेदद्वारेण तत्सम्बन्धमित्युक्तं भवति, न साक्षात्, गुणत्वात् सङ्ख्यायाः। न चेह सङ्ख्येयविशेषः कश्चित् तदीय उपादीयते। तदविशेषात् यावान् कश्चिदग्निष्टोमसम्बन्धः सङ्ख्यया परिच्छेत्तव्यः सर्वं परिसञ्चीत सङ्ख्यात्वेन सामान्येन तत्सङ्ख्यां विकुर्य्यात्; यथा दधिघृतशालिभिर्देवदत्तो भोजयितव्यो देवदत्तवद् यज्ञदत्तस्तैलेनेत्युक्ते स्नेहनसामान्यात् तैलं स्नेहनकार्य्ये एव विनियुज्यते, न ओदनकार्य्ये; इत्येवं सङ्ख्यापि सङ्ख्याकार्य्य एव विनियुज्यते ॥

सू० स्तोमस्य वा तल्लिङ्गत्वात् ॥ २३ ॥ (सि०) ॥

भा० न चैतदस्ति सर्वसङ्ख्याविकार इति, किन्तर्हि स्तोमगतामेव सङ्ख्यां विकुर्य्यात्। कथं?। स्तोमविषये त्रिवृच्छब्दस्यान्यत्र दर्शनात्, यथा 'त्रिवृद्बहिःपवमानः' इत्यत्र स्तोमविषयता परिच्छिन्ना, एवं 'त्रिवृदग्निष्टोमः' इत्यत्रापि स एव शब्द उच्चरितस्तमेव सम्बन्धिनमनु-

मानात् बुद्धौ सन्निधापयेत्, अतः सोमलिङ्गत्वात् तद्गतामेव सङ्ख्यां विकुर्य्यात्।

अत्राभिधीयते, नैतद्युक्तं,—'सङ्ख्याशब्दा हि अनियतवृत्तयो भवन्ति ते हि येन येन सम्बध्यन्ते सङ्ख्येयेन तं तं परिसञ्चक्षते। तथा चोपदर्शितमेव त्रिवृद्रज्जुस्त्रिवृन्मणिरिति। तस्माद्बहिःपवमानेन सामानाधिकरण्यात् स्तोत्रं परिसञ्चष्टे, अन्यत्रापि यो यः परिसङ्ख्यातव्यो भविष्यति, तं तं परिसङ्ख्यास्यतीत्यतः सोमलिङ्गत्वमप्यहेतुर्नियमस्य' इति।

अत्राभिधीयते,—अयमिह त्रिवृच्छब्दोऽतीत्य लौकिकमर्थं, विशिष्टसङ्ख्यासङ्ख्येये आचरितः, यथा 'त्रिवृद्बहिःपवमानः' इति स्तोमविषयिण्यां नवसङ्ख्यायां 'त्रिवृद्बहिःपवमानः' इत्यभिधाय नव स्तोत्रिया उच्यन्ते, तेन तासु वर्त्तत इति गम्यते, तथा परस्मिन्नपि दृश्यते,-'चयस्त्रिकपालास्त्रिवृता स्तोमेन सम्मिता नव प्रकृतिरग्निष्टोमस्य' इति नवानां कपालानां त्रिवृता स्तोमेन समानं वदन् त्रिवृच्छब्दस्य तत्र प्रसिद्धिं दर्शयति इति, अतः प्रसिद्धवदाचारात्, सामानाधिकरण्यदर्शनाच्च अयमस्यार्थ इति निश्चीयते, लोकेऽपि सामानाधिकरण्यप्रयोगाद्वा आचाराद्वा अर्थावधानं भवति, यथाऽयं देवदत्त इति। तस्मादयं त्रिवृच्छब्दो विशिष्टसङ्ख्यासङ्ख्येयविषयोऽन्यत्र दृष्ट इति इहापि प्रयुज्यमानो यत्र दृष्टस्तमेव लिङ्गात् बुद्धौ सन्निधापयतीत्यत स्तोमविषयो नियम्येत। यदुक्तं,—'सङ्ख्या ह्यनियतविषया सर्वत्र सम्बन्धमुपयाति; एतत् अवयवार्थनिराकरणात् समुदायाङ्गीकरणाच्च परिहृतमेवेति। एवं चान्यगतानां सङ्ख्यानामनिवृत्तौ चोदकानुग्रहो भविष्यतीति॥ (१०।६।७अ०)॥

उभयसाम्नि बृहद्रथन्तरयोः समुच्चयाधिकरणम् ।

सू० उभयसाम्नि विश्वजिद्वद्विभागः स्यात् ॥ २४ ॥ (पू०) ॥

भा० सन्ति उभयसामानः क्रतवः,—'संस्तव उभे कुर्य्यादपचिता-वप्येकाहे उभे कुर्य्यात्' इति । तत्र संशयः,—किं बृहद्रथन्तरे विभक्ते भवतः, उत समस्ते? इति। कुतः? समस्तता अवगम्यते, कुतो वा व्यस्तता? इति। उच्यते, एतदेव वचनमुभयमर्थमुद्भासयति । कथम्? । उभाभ्यां क्रतुः सम्बन्धयितव्यः, ते यदि समस्ते अथ वा व्यस्ते भवतः, उभयथापि क्रतुनाभ्यां सम्बन्धो भवति; तत्रोभयथा प्रतिभाति वचने । किं युक्तं? । व्यस्ते इति। कुतः?। प्रकृतौ हि बृहद्रथन्तराभ्यामन्यतरेण पृष्ठं साधितमिहापि प्रकृति-वचोदकानुग्रहायान्यतरेण साधयितव्यं अवगम्यते । एवञ्च पृष्ठ-सम्बद्धानां कर्म्मणां कार्त्स्न्येन प्रवृत्तौ चोदकोऽनुगृहीष्यते, उभयोः पृष्ठं साधयतोरन्योन्येन विहितत्वात् प्रयोगान्तरमापद्येत, न रथन्तरं पृष्ठं न बृहत्पृष्ठमिति उभयथापि वचनार्थोपपत्तौ न चोदकबाधायां कारणमस्ति, तस्मात् यथा न विश्वजिति बृहदादीनां सर्वेषामेकत्र निवेशः, एवमिहापीति ॥

सू० पृष्ठार्थे वा अतदर्थत्वात् ॥ २५ ॥ (सि०) ॥

भा० नैतदस्ति,—विभक्ते इति, किन्तर्हि समस्ते सामनी स्याताम् । कुतः?। प्रकृतौ हि बृहद्रथन्तराभ्यां विकल्पमानाभ्यां पृष्ठं साधितम्, इह इदानीं विकृतौ तयोरधिगतदेशयोर्विकल्परूपेणैव प्राप्तयोः

केवलमेतद्वचनं सामस्त्यविधानार्थम् 'उभे' बृहद्रथन्तरे 'कुर्य्यात्' इति, एवञ्च सामस्त्यं भवति, यदि ते सामनी परस्परं न जहीतः, उपादेयत्वेन सामयोः श्रुतत्वात् द्वित्वश्रुतिः समासश्रुतिश्च विवक्षितैव, तेन यत्र बृहत्, तत्र रथन्तरसहितं, न केवलम् इति।

तत्रैतत् स्यात्,—'प्रधानक्रियापेक्षम् अनयोः साहित्यं, तत्र व्यस्तयोरपि क्रियमाणयोः साहित्यं न विरुध्यते; यथा देवदत्तयज्ञदत्तयोः पाकेन समस्तयोरपि संयोगे उच्यमाने एकः किञ्चित्करोति अपरोऽपि किञ्चित्, न यदेकेन कृतं, तदेव अपरः करोति, तद्वदेकं साम किञ्चित् स्तोत्रमभिनिर्वर्त्तयिष्यति द्वितीयमप्यपरं। प्रधानोपकारापेक्षं साहित्यमिति समस्तसंयोगो न विरोत्स्यते' इति।

तत्राभिधीयते,—यत्र परस्परसव्यपेक्षयोर्योगो भवति, तत्रैतदेवं न्याय्यं, येन क्रियावयवेन आरम्भेण मध्येन अवसानेन वा योगः, तेन सहितयोर्न पृथक्त्वः। कुतः?। यथैवानेन उपकर्त्तव्यमित्यवगम्यते, एवमितरसहितेनेति। यत्तु,—लोके कारकसामस्त्येऽप्यभिहिते भेदेन व्यापारदर्शनमिति*, अर्थासम्भवादसौ, न हि उखायामधिश्रीयमाणायां भूयोऽधिश्रयणं शक्यते कर्त्तुमित्यर्थविरोधात् न करोति, न तु शब्देनासौ तत्र न चोदितः; यद्यत् कर्त्तव्यं तत्तत्सहिताभ्यामेव नान्यथा। इह तु नासम्भवः,—बृहद्रथन्तरयोर्हि एकसंस्कारत्वेन विनियोगात्, ते च शक्नुतः सहिते पृष्ठं संस्कर्त्तुमित्यतः तयोः साहित्यमेव युक्तं। यदुक्तम्,—उभयथा सम्भवे चोदकानुग्रहो न्याय्य

---

* 'दर्शनमिति' इति का० श्री० पु० पाठः।

इति धर्मकार्त्स्न्येन निमित्तविघातश्च न भविष्यति; तत्र प्रत्यक्षात् समस्तविधानात् चोदके बाध्यमाने न दोषो भवति ॥

सू॰ लिङ्गदर्शनाच्च ॥ २६ ॥ (यु॰) ॥

भा॰ लिङ्गञ्च दर्शयति,—यथा समस्तयोः प्रयोगो न व्यस्तयोरिति। किं लिङ्गम्? । एवमाह,—'महाव्रतौ वै बृहद्रथन्तरे निधनेन समाप्येते यत् महाव्रतौ सम्प्रच्छेरते न स्वर्ग विभग्नं प्रभग्नम्' इति निधनभेदवचनादेकस्थानता अवगम्यते । यदि भिन्नदेशे स्याताम् अर्थादेव तत्र निधनभेदः सिद्धः; अथ तु सहिते भवतः, ततो निधनभेदवचनमर्थवत् भवति; तस्मादप्यभेदः। तथा अपरं लिङ्गं— 'पूर्वाह्णो वै रथन्तरम्, अपराह्णो बृहत्' इति एकेनाह्ना अभि-सम्बन्धादेकस्थानतां दर्शयति । तस्मात् समस्तयोः पृष्ठदेशे निवेश इति ॥ (१०।६।८अ॰) ॥

---

मध्वशनघृताशनयोः षडहान्तेऽनुष्ठानाधिकरणम् ॥

सू॰ पृष्ठे रसभोजनमावृत्ते संस्थिते त्रयस्त्रिंशेऽहनि स्यात् तदानन्तर्य्यात् प्रकृतिवत् ॥२७॥ (पू॰) ॥

भा॰ क्वचित् कर्मविशेषे श्रूयते,—'पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भः' इति। द्वादशाहे वचनं,—'संस्थिते पृष्ठ्ये षडहे मधु आशयेत् घृतं वा' इति। तदिदं मध्वशनं घृताशनञ्च चोदकप्राप्तं सत् सन्दिह्यते,— किं त्रयस्त्रिंशान्ते कर्त्तव्यम्, उत षडहान्ते? इति। किं प्राप्तं?। ततः सूत्रेणैवोपक्रमः,—'पृष्ठे रसभोजनमावृत्ते' षडहे 'त्रयस्त्रिंशेऽहनि'

'संस्थिते' कार्यं। कुतः ?। 'तदानन्तर्यात्',—प्रकृतौ त्रयस्त्रिंशानन्तरं रसभोजनं दृष्टं, प्रकृतिवदिहापि कुर्वाणो यदि त्रयस्त्रिंशानन्तरं करोति, चोदकमनुगृह्णाति। अथ तन्यस्याक्षोऽनन्तरं कुर्यात्, चोदकं बाधेत! आनन्तर्यं हि क्रमः, स च विशेषसम्बन्धे कारणमिति समधिगतं। एतदानन्तर्यञ्च रसभोजनस्य, त्रयस्त्रिंशेन सह दृष्टमित्यतः त्रयस्त्रिंशानन्तरं क्रियत इति॥

## सू॰ अन्ते वा कृतकालत्वात्॥ २८॥ (सि॰)॥

भा॰ न चैतदस्ति,—त्रयस्त्रिंशानन्तरं रसभोजनम् इति, किन्तर्हि षड़हान्ते स्यात्। कुतः ?। 'संस्थिते षड़हे' इत्युच्यते, न, संस्थिते त्रयस्त्रिंशे—इति; षड़हाभिगमलक्षिते पर्य्यवसाने, न त्रयस्त्रिंशाद्युपलक्षिते, षड़हस्य षड़हःसु पर्य्यवसितो भवति, न एकस्मिन् त्रयस्त्रिंशेऽहनि। यदुक्तं,—त्रयस्त्रिंशानन्तर्यदर्शनात् प्रकृतिवदिहापि तदानन्तर्य्ये एव भोजनेन भवितव्यमिति। नैतद्युक्तं,—तत्र ह्यर्थात् त्रयस्त्रिंशानन्तर्यं दृष्टं। कुतः?। तस्मिन्नहनि तत्र द्वादशाहे षड़हः पर्यवसित इति। इहापि यत्र पर्यवस्यति तत्र भोजनं भविष्यति; ततः षड़हावसानलक्षितेन भोजनस्य सम्बन्धः,—संस्थिते षड़हे इति; न, त्रयस्त्रिंशावसानलक्षितेन इति। यत्तु,—क्रमः कारणं विशेषसम्बन्धे—इति। सत्यं कारणं, न तु बलीयसा प्रमाणेन यत्र विरुध्यते; इह तु वाक्येन षड़हावसाने विधीयते इत्युक्तं; तस्माद्वाक्येन विशेषसम्बन्धे सति न आनन्तर्यमात्रं कारणम्; अतः षड़हान्ते भोजनं स्यादिति॥ (१०।६।८अ॰)॥

षड्हावृत्तावपि मध्वशनघृताशनयोः सकृदनुष्ठानाधिकरणम् ॥

सू० अभ्यासे च तदभ्यासः कर्म्मणः पुनः प्रयोगात् ॥
॥ २९ ॥ (पू०) ॥

भा० 'आवृत्तं पृष्ठ्यं षड़हमुपयन्ति' इति श्रूयते, तत्रैतत् चोदकेन प्राप्यते,—'संस्थिते पृष्ठ्ये षड़हे मध्वाशयेत् घृतं वा' इति, तत् सन्दिह्यते,—किं षड़हावृत्त्या आवर्त्तेत भोजनम्, उत, षड़हान्ते सकृदेव क्रियेत? इति। किं प्राप्तं?। षड़हावृत्तौ सत्याम् आवर्त्तेत भोजनं। कुतः?। 'कर्मणः' 'पुनः' पुनः 'प्रयोगात्,' यद्धि कर्म पुनरावर्त्तते, तदावृत्त्या यदपि तत्सम्बद्धं तदप्यावर्त्तेत, यथा सोमक्रयादि षड़हसम्बद्धमावर्त्तते, एवं षड़हसम्बन्धि भोजनमप्यावर्त्तेत* इति ॥

सू० अन्ते वा कृतकालत्वात् ॥ ३० ॥ (सि०) ॥

भा० न चैतदस्ति,—यदुक्तं,–षड़हावृत्त्या भोजनमप्यावर्त्तेत—इति, किन्तर्हि षड़हान्ते सकृदेवानुष्ठीयेत। कुतः?। 'कृतकालत्वात्', कृतो हि भोजनस्य कालः,—'संस्थिते षड़हे' इति। संस्थानं पर्य्यवसानं, षड़हगतस्य व्यापारस्योपरमः, न च, पुनः षड़हं कुर्व्वाणः षड़हगताद् व्यापारादुपरत इत्युच्यते, न च, अनुपरतौ कर्त्तुः, षड़हः सन्तिष्ठते; संस्था हि क्रियां प्रति औदासीन्यं, व्यापारान्तरकरणं वा, पूर्व्वस्मात् कर्म्मणः। न च पुनः षड़हं कुर्वाण औदासीन्यं भजते,

* भोजनमप्यावर्त्तेत इति सर्व्वत्र पाठो न सम्यक्।

न च व्यापारान्तरं करोति, तस्यैव कर्म्मण आवृत्तिं करोति; अतोऽपर्यवसितः। अपर्यवसिते च संख्याभावात् अभुक्तमेव प्राशनमिति न क्रियते।

यदुक्तं,—यथा अन्ये षड़हधर्म्मा स्तोत्रशस्त्रादय आवर्त्तन्ते, तद्वत् प्राशनमप्यावर्त्तेत—इति; नैतद्युक्तं, ते हि अहःसम्बद्धाः, तेषाम् अह्नामावृत्तिरिति स्तोत्रादीनामावृत्तिरिति युक्तं, न हि तेऽहःसु अवसानसंयोगेन चोद्यन्ते; इह तु अवसानसंयोगेन भोजनस्य चोदना—इत्युक्तो हेतुः; तस्मान्न भोजनस्यावृत्तिर्युक्तेति।

अपि च यद्येतत् भोजनं षड़हाङ्गं भवेत्, ततः प्रधानावृत्त्या आवर्त्तेत, न चैतदङ्गं। कुतः?। अङ्गत्वप्रख्यापकस्य कारणस्याभावात्, प्रकरणादङ्गता स्यात्, वाक्यसंयोगाद्वा, प्रत्यक्षोपकारदर्शनाद्वा; एतेषाञ्च इह न किञ्चित् कारणं पश्यामः। प्रकरणं तावत् द्वादशाहस्य, न षड़हस्य। वाक्यसंयोगोऽपि 'संस्थिते षड़हे' इति षड़हस्य संस्थायां भोजनमाचष्टे, संस्थितस्यैवं षड़हो भवति, यद्यस्य न किञ्चिदपरम् अङ्गजातं परिशिष्यते। न च, मध्वशनघृताशने प्रत्यक्षेणोपकुरुतः षड़हस्य। कुतः?। निवृत्ते करणात्, कामं यथा च यावत्या च तर्पणमात्रया कर्त्तॄणां यानि पुरस्तात् कर्म्माणि वर्त्तन्ते, तेषां सामर्थ्योपजननेनोपकुर्यात्; नातिवृत्तस्य षड़हस्य इति। यान्यपि क्रमादीनि कारणानि, तान्यपि प्रमाणान्तरसम्बन्धमुपादाय विशेषसम्बन्धे कारणानि भवन्ति, न केवलानि। तस्मात् षड़हावसानलक्षिते काले पुरुषाणां भोजनक्रिया विधीयते—इत्यतो नावर्त्तेत भोजनम् इति॥ (१०।६।१०अ०)॥

गवामयने मध्वश्नव्रताश्नयोः प्रतिमासमाद्यत्त्यधिकरणम् ॥

सू० आवृत्तिस्तु व्यवाये कालभेदात् स्यात् ॥ ३१ ॥

भा० गवामयने श्रूयते,—'चत्वारोऽभिप्लवाः षड़हाः पृष्ठ्यः षड़हः स मासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमः'। तत्रैतत् चोदकेन प्राप्तं,—'संस्थिते पृष्ठ्ये षड़हे मध्वाश्नयेत् घृतं वा' इति। तत्र सन्दिह्यते,—किं प्रतिमाससमाप्ते रसभोजनम्, उत, सर्व्वान्ते सकृदेव कार्यम्?—इति। किं पुनर्युक्तम्?। उक्तेन न्यायेन सकृदिति। सर्व्वान्ते ह्यसौ षड़हगतात् व्यापारादुपरमते, न प्राक्, अर्वागसौ कृत्वापि षड़हं, पुनः षड़हाय प्रयतत एव। न चासौ षड़हः संस्थितो भवति, यदि पुनस्तदर्थं प्रयतत एव। सर्व्वान्ते तु न पुनः प्रयतते,—इत्यतः सर्व्वान्ते कुर्यादित्येवं प्राप्तं। एवं प्राप्ते ब्रूमः,—"आवृत्तिस्तु व्यवाये कालभेदात्स्यात्",—'आवृत्तिः' रसभोजनस्य स्यात्, न सकृत् क्रिया। कुतः?। निमित्तावृत्तेः, षड़हसंस्था निमित्तं, स च षड़हः पुनरावर्त्तते, तस्मिन्नावर्त्तमाने संस्था निमित्तमावर्त्तते,—इत्यत आवर्त्तेत।

यदुक्तं,—सर्वान्ते हि असौ षड़हादुपरतो भवति, न प्राक्, कृत्वाऽप्यसौ पुनः तदर्थं प्रयतत एव—इति। अत्राभिधीयते,—यद्यप्यसौ पुनः प्रवर्त्तते, तथापि तं परिसमाप्य पुनरारभते, पुनश्च* परिसमापयति, न यथावृत्ते षड़हे; तत्र ह्यनुपरतस्य पृष्ठ्यस्यावृत्तिः। इह चतुर्भिरभिप्लवैर्व्यवधीयते; तेनोत्तरक्रियान्तरव्यवधानात् पृष्ठ्यगतो

* 'पुनरन्तं' इति चादर्शपुस्तकपाठः।

व्यापारः पर्यवसित इति गम्यते विशेषः। न च, तस्मिन्नपर्यवसिते क्रियान्तरं शक्यं कर्त्तुम्, उभयप्रकारत्वान्तः क्रियायाः,—कृत्वा चौदासीन्यं, क्रियान्तरव्यवधानहेतुकमेव। तस्मात् प्रतिमासं सव्यवधानः पृष्ठ्य आवर्त्तते, तस्मिन्नावर्त्तमाने संख्यानिमित्तं भोजनमप्यावर्त्तते इति, अतः प्रतिमासमावर्त्तत इति॥ (१०।६।११अ०)॥

---

द्वादशाहे सत्रिभिरपि मध्वशनाधिकरणम्॥

सू॰ मधु न दीक्षिता ब्रह्मचारित्वात्॥३२॥ (पू॰)॥

भा॰ द्वादशाहे श्रूयते,—'संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वा' इति। तत्र संशयः,—किं सत्रिभिर्मधु भक्षयितव्यं, न? इति। किं प्राप्तं?। नेति। कुतः?। 'दीक्षिताः' हि ते ब्रह्मचारिणः, ब्रह्मचारिणाञ्च मधु प्रतिषिध्यते,—'मधु मांसञ्च वर्जयेत्' इति। तस्मान्न प्राश्नीयुरिति। 'ननु एतद्वचनं, सामान्यं प्रतिषेधं बाधेत'। न बाधते इति ब्रूमः। कथं?। यद्यबाधमानमेतत्, द्वादशाहेऽनर्थकं भवेत्, ततो बाधेत; न त्वनर्थकं। कथम्?। उभयविधं द्वादशाहं अङ्गीकृत्योभयमशितव्यं घृतं मधु वा, तत्र सत्रिणां घृतप्राशनं भविष्यति, अहीने मधुनः प्राशनम् ऋत्विजाम्, एवमुभयं द्वादशाहसम्बद्धं भविष्यति विषयभेदेन। न च विरुद्धस्याचारो भविष्यतीति। तस्मान्न प्राश्नीयुरिति॥

सू॰ प्राश्नीत वा यज्ञार्थत्वात्॥३३॥ (सि॰)॥

भा॰ न चैतदस्ति,—सत्रिभिर्मधु न भक्षयितव्यमिति, किन्तर्हि भक्षयितव्यं। कथम्?। अविशेषेण उच्यते कर्ममात्रस्य, उभयप्रकारमङ्गीकृत्य

द्वादशाहं, 'संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वा' इति। उभयं विकल्पेन, न कर्त्तव्यवस्थया; तस्मात् सत्त्रिणोऽपि मधु भक्षयेयुः।

यदुक्तं,—विषयभेदेनार्थवत्त्वात् न बाधो न्याय्यः, द्वादशाहाङ्गभावश्चैवं सति न विरोत्स्यते—इति। अत्रोच्यते,—षडहे अतिक्रान्ते सत्त्रसम्बद्धेऽहीनसम्बद्धे वा अविशेषेण मध्वशने घृताशने चोद्यमानेऽत्र केन व्यवस्थां ब्रूमः?। विरोधेनेति चेत्। न, विषयभेदेन विधिप्रतिषेधयोः समाम्नानात्, पुरुषार्थेन प्रतिषेधः, कर्म्माङ्गत्वेन विधानं। यदि च प्रतिषेधबलीयस्त्वमिहाङ्गीक्रियते, वचनमनर्थकमेव स्यात्। पक्षेऽर्थवत्तेति चेत्। न। नानाविषयत्वात्, तुल्यार्थयोर्हि तुल्यविषययोर्विकल्पो भवति, न, नानार्थयोः, नानार्थता चेहाधिगम्यते। कुतः?। विधेः कर्मसाद्गुण्यप्रयोजनत्वात्। प्रतिषेधस्यापि नियमानुष्ठानात् पुरुषस्यादृष्टसिद्धिरिति। तस्मात् प्राश्नीयुरिति॥ (१०। ६।१२अ०)॥

---

मानसस्य दशमाहाङ्गताधिकरणम्॥

## सू० मानसमहरन्तरं स्यात् भेदव्यपदेशात्॥ ३४॥ (पू०)॥

भा० द्वादशाहे श्रूयते,—'अनया त्वा पात्रेण* समुद्रस्यया प्रजापतये युष्टं गृह्णामीति प्राजापत्यं मनो ग्रहं गृह्णाति' इति। तत्र संशयः,—किं मानसमहर्द्वादशाहात् अहरन्तरम्, उत, अहरङ्गम्?

---

* "अपां त्वा पृथिव्या पात्रेण" इति न्यायमालायां पाठः। "वचनार्थः, पृथिवी पात्रं, समुद्रः सोमः, प्रजापतिर्देवता, एवंविशिष्टस्य ग्रहस्य ग्रहणे मनः साधनं, तदिदं मानसम्" इति न्यायमाला॥

इति। तत्र इह कानिचित् भेदकारणानि प्रतिभान्ति, तानि निराचिकीर्षन् आचार्य्य उपन्यस्यति,—'मानसमहरन्तरं स्यात्' इति। कुतः?। भेदेन व्यपदेशात्,—द्वादशाहात् भेदेन व्यपदिश्यते। कथं?। 'वाग्वै द्वादशाहो मनो मानसम्' इति द्वादशाहानन्तर्भूतं मानसं व्यपदिशति; 'वाग्वै द्वादशाहः' इति वाक्संस्तवात्, 'मनो मानसम्' इति च मनःसंस्तवात्। यथा वाङ्मनसयोर्भेदो वस्तुतोऽवगम्यते, एवमेतयोरपि द्वादशाहमानसयोः, यतः पृथक्त्वे सति भेदेन व्यपदेशो भवति,नान्यथा; अतो भिद्यते एतदहरिति व्यपदेशाद्गम्यते॥

## सू॰ तेन च संस्तवात्॥ ३५॥ (यु॰१)॥

भा॰ इतश्च अहरन्तरमिति। कुतः?। 'तेन च' मानसेनाह्ना द्वादशाहः संस्तूयते। कथं?। 'विधूतानि ह वै द्वादशाहस्य गतरसानि छन्दांसि, तानि मानसेनैव आप्याययन्ति' इति, द्वादशाहस्य यानि गतरसानि छन्दांसि, तानि मानसेनाप्याययन्ति इति ब्रुवन् भिन्नं द्वादशाहात् दर्शयति। कथं?। 'संस्तवात्', न हि तेनैवात्मना तस्य संस्तुतिर्भवति। कुतः?। अत्यन्तभेदात् स्तुतिस्तुत्ययोः, न हि देवदत्तो देवदत्तेन स्तूयते, भिन्नैः शिरःपाण्यादिभिः संस्तूयते। तद्वदिहापि द्वादशाहो मानसेन स्तूयत इति संस्तवात् भेदोऽधिगम्यते इति॥

## सू॰ अहरन्ताच्च परेण चोदना॥ ३६॥ (यु॰२)॥

भा॰ इतश्च अहरन्तरमेवेति गम्यते। कुतः?। द्वादशाह्निकात् 'अहरन्तात्' 'परेण' चोद्यते,—पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय

प्रसर्पन्ति' इति। नवहि द्वादशाहिकस्याङ्गो गुणविधिर्भवेत् द्वादशाहिकी पत्नीसंयाजान्तता स्यात्; अथ त्वहरन्तरं भवति, ततो द्वादशाहिकानामयं धर्मो नान्यस्येति न दोषो भविष्यति, अतोऽपि वैलक्षण्यात् अहरन्तरसिद्धिरिति गम्यते॥

सू॰ पक्षे सङ्ख्या सहस्रवत्॥ ३७॥ (आ॰नि॰)॥

भा॰ परिचोदनापरिहारोऽयं। किमियं परिचोदना?—'नन्वेवं 'द्वादशाहः' इति त्रयोदशसु अहःसु नोपपद्यते'। अत्रोच्यते, यदा प्रमाणान्तरेण शब्दः एतावति अर्थे प्रयुक्त इति गम्यते, तदा सङ्ख्यासन्निकर्षात् त्रयोदशसु गुणवृत्त्या प्रयोगः भेत्स्यति। यथा 'अतिरात्रः सहस्रम् अहानि अतिरात्रेण सहस्रसाध्येन यजेत' इति अधिकेऽपि सहस्रे सहस्रशब्दो दृष्टः, तद्वदिहापि अधिके भविष्यति। अथ वा कर्मगण-नामधेयमेतत्, 'द्वादशाहः' इति यावन्ति कर्माणि अङ्गीकृत्य प्रयुक्तस्तावतां वाचक इति निश्चीयते। सर्वाणि प्रकरणादङ्गीकृत्य प्रयोगात् सर्वेषां वाचको भविष्यतीति न दोषः॥

सू॰ अहरङ्गं वांऽशुवचोदनाभावात्॥ ३८॥ (सि॰)॥

भा॰ दशमस्याङ्गो गुणस्य विधिः स्यात्, न अहरन्तरचोदना। कुतः?। अहरन्तरप्रकल्पकस्य वचनस्याभावात्। कथं?। एवं तावत् श्रूयते, 'अनया त्वा पात्रेण समुद्रंरसया प्रजापतये जुष्टं गृह्णामीति प्राजापत्यं मनो ग्रहं गृह्णाति' इति, दशममहरङ्गीकृत्य ग्रहचोदनैषा, 'गृह्णाति' इति संस्कारविधानात्, न च संस्कारभेदे कर्मभेदो भवति, अचोदकाश्च संस्कारा इत्युक्तं,—"चैवतु द्रव्यं चिकीर्ष्यते गुणस्तत्र"

(२।६।३अ०) कर्म न प्रधानम् इति। यथा अंशदाभ्यौ विधीयमानौ न कर्म भिन्तः, यस्मिन् कर्मणि भवतः तथापरौ ग्रहाभ्यासाविति विज्ञायेते न कर्मान्तरे इति। यदि च अहरङ्गमेतत् भवति, न कर्मान्तरम्, एवमल्पीयसी एव अदृष्टानुमानप्रसङ्गकल्पना भविष्यति, प्रकृतसम्बन्धश्च, न अप्रकृतप्रक्रिया क्रियान्तरस्य, अतो न अहरन्तरं; दशमे एव अहनि गुणविधिरिति ॥

सू० दशमविसर्गवचनाच्च ॥ ३९ ॥ (यु०१) ॥

भा० इतश्च न अहरन्तरं, तत्रैव गुणविधिः। कुतः?। 'दशमविसर्गवचनात्', दशमविसर्गवचनं हि भवति,—'एष वै दशमस्याह्नो विसर्गो यन्मानसम्' इति; एष दशमस्य 'विसर्गो'ऽन्तो यन्मानसमिति ब्रुवन्, अन्तोऽयमन्तवतो दशमस्य, न स्वतन्त्रमेतत् कर्मेति दर्शयति; तस्मादपि दशमस्याङ्गं, नार्थान्तरमिति गम्यते ॥

सू० दशमेऽहन्निति च तद्गुणशास्त्रात् ॥४०॥ (यु०२) ॥

भा० इतश्चाङ्गं। कथं?। एवं गुणशास्त्रं युक्तं भविष्यति,—'दशमेऽहनि* मानसाय प्रसर्पन्ति' इति, 'दशमेऽहनि सार्पराज्ञीभिर्ऋग्भिः स्तुवन्ति' इति दशमस्याह्नः प्रधानभावेन निर्देशात् अहराधेयभावेन, ततस्तोत्रस्य गुणोऽयं† दशमस्य, नार्थान्तरमिति गम्यते ॥

सू० सङ्ख्यासामञ्जस्यात् ॥ ४१ ॥ (यु०३) ॥

---

* सूत्रानुसारेण 'दशमेऽहन्' इति पाठो भवितुं युक्तः।

† 'गुणोपदेशोऽयम्' इति क० सं० पु० पाठः।

भा० यदि च गुणोऽयम्, एवं सङ्ख्या समञ्जसा भविष्यति,—'द्वादशाहः' इति, इतरथा, चयोदशसु 'द्वादशाहः' इत्यसमञ्जसं सङ्ख्यावचनं स्यात्, अवाच्यत्वात्। यदुक्तं,—गुणवृत्त्या अहश्शब्दवद् भविष्यतीति, तदनुपपन्नं*। कुतः?। तत्र हि प्रमाणान्तरेण सङ्ख्यावगमात् अधिके अहश्शब्दो गौण्या वृत्त्या प्रयुक्त इति निश्चीयते; न त्विह सङ्ख्यातिरिक्ते प्रमाणमस्ति, येन गौणीयं वृत्तिराश्रीयेत। यदप्येतत् 'अनया त्वा पात्रेण' इति वचनं, तदपि ग्रहसंस्कारविधानात् दशमेऽहनि यागाभ्यासं विधत्ते, न कर्मान्तरम् इति समधिगतम्। एवञ्चेत्, न एतत् प्रत्यक्षवचनमहरन्तरप्रकल्पकं, नान्यत् प्रमाणान्तरं प्रापकं, येन सङ्ख्येयेऽतिरिक्ते शब्दप्रयोग इत्यध्यवस्यामः। तस्मात् न इह गौण्या वृत्त्या प्रयोग इति।

यदपि, कर्मगण-नामधेयत्वात् प्रकरणवशेन तावताम् अङ्गीकरणात् नामधेयरूपेण चावृत्तिर्भविष्यतीति, तदपि न युक्तं, सत्यं, कर्मगण-नामधेयमेतत्, न त्वयथार्थसमन्वयेन, द्वादशैतानि कर्माणि अहोभिः परिमितानि एकत्र समाहृतानि इत्यनेन रूपेण तत्कर्मगणस्य नामधेयं, न वर्णानुपूर्व्यमात्रेण इति, तथा हि सर्वेष्वेव कर्मनामधेयेषु अर्थसमन्वयेनानुवादभूतो नामशब्दो वर्त्तते, न लौकिकार्थतिरस्कारेण परिभाषामात्रेण वृद्धिगुणवत्। यथा, अग्निहोत्रं, श्येनः, ज्योतिष्टोमः इति; एवं 'द्वादशाहः' इत्यर्थान्वयेन नामधेयं, न अर्थाभावेन इति। तस्मात् अपरिचोदनैषा॥

---

* 'तदुपपन्नम्' इति क० सं० पु० पाठः।

सू॰ पश्वतिरेके चैकस्य भावात् ॥ ४२ ॥ (यु॰४) ॥

भा॰ इतश्चाहरङ्गमिति विज्ञायते। कुतः?। पश्वतिरेकेण 'एकस्य' अतिरेकं दर्शयति, न द्वयोः। कथं?। 'यः पश्वुरतिरिच्येत स ऐन्द्राग्नः कार्यः' इति एकादशिनीं द्वादशाहे विधाय विहृतायामेकस्यातिरेकं दर्शयति, तत्र तावदतिरिच्यते, एको न भवति। कथं?। एकादश पशवः, द्वादश अहानि, एकस्यातिरेकं ब्रुवन् द्वादशैतानि अहानीति गमयति। यदि त्रयोदश अहानि स्युर्द्वयोरभावः स्यात्, नैकस्येति। तस्मादप्यहरङ्गं न कर्मान्तरम् इति ॥

सू॰ स्तुतिव्यपदेशमङ्गेन विप्रतिषिद्धं* व्रतवत् ॥ ४३ ॥ (आ॰नि॰१) ॥

भा॰ अस्मिन् सूत्रे द्वयोः सूत्रयोः परिहार उच्यते। यदुक्तं,— मानसमहरन्तरं भेदेन व्यपदेशात्, तेन च मानसेन संस्तवात् भेदः, न हि आत्मनैव आत्मा संस्तूयते—इति। अत्राभिधीयते, नैतत् विप्रतिषिद्धम्, अङ्गेनापि समुदायस्य स्तुतिर्दृष्टा, यथा महाव्रतधर्मेण संवत्सरसत्रस्य,—'यन्ति वा एते मिथुनाद् ये संवत्सरमुपयन्ति। अन्तर्वेदि मिथुनौ सम्भवतस्तेनैव मिथुना न यन्ति' इति समुदायदोषमभिधाय तदवयवभूतस्य महाव्रतस्य धर्मेणानुजिघृक्षन् समुदायस्य अवयवधर्मेण स्तुतिं दर्शयति। लोकेऽपि अवयवधर्मेणावयवी संस्तूयत एवेति, यथा दीर्घैः केशैः शोभनो देवदत्त इति। तद्वदिहापि द्वादशाहः संस्ताविष्यते इति न दोषः।

---

* एवमेव सर्वत्र पाठः। तत्र 'स्तुतिव्यपदेशम्' इति क्लीवत्वं चिन्त्यम्। 'न विप्रतिषिद्धम्' इति पाठस्तु भवितुं युक्तः।

सू० वचनादतदन्तत्वम् ॥ ४४ ॥ (आ० नि०१) ॥

भा० यदुक्तं, अर्थान्तरमेतत्, एवं द्वादशाहधर्मविलक्षणं मानसान्तता युक्ता भविष्यति, न तदङ्गत्वे,* पत्नीसंयाजान्तता भवेत् इति। अत्र वदामः, 'वचनात् अतदन्तत्वं' भविष्यति, द्वादशाहिकानाम् अह्नां सामान्येन पत्नीसंयाजान्तता, विशेषेण तु दशमस्याह्नो मानसान्तता उच्यते,—'पत्नीः संयाज्य प्राञ्च उदेत्य मानसाय प्रसर्पन्ति' इति, नास्ति वचनस्यातिभारः; तस्मादप्यदोषः। अतो दशमस्याह्नो मानसमङ्गं न स्वतन्त्रम् इति॥ (१०।६।१२ अ०)॥

---

सत्रस्य बहुकर्तृकताधिकरणम् ॥

सू० सत्रमेकः प्रकृतिवत् ॥ ४५ ॥ (पू०) ॥

भा० इह द्वादशाहप्रभृतीनि सत्राणि उदाहरणं। तत्र संशयः,— किं सत्रमेकः प्रयुञ्जीत, उत बहवः?। किं प्राप्तम्?—'एकः'। कुतः?। 'प्रकृतिवत्' ज्योतिष्टोमे एकः कर्त्ता, तत्प्रकृतित्वात् चोदकानुग्रहाय सत्रम् एक एव प्रयुञ्जीत—इति। ननु बहवः श्रूयन्ते, 'य एवंविद्वांसः सत्रमासते, य एवंविद्वांसः सत्रमुपयन्ति' इति। उच्यते। कामिनां सत्रं विधीयते, ते च परस्परनिरपेक्षा बहव एव, ते यद्येकैकश्येनापि कुर्व्वन्ति तथापि सत्रक्रियामभिसमीक्ष्य बहव एव कुर्व्वन्तीति बहुवचनं भविष्यति। यथा लोके पृथक्त्वेनापि कुर्व्वाणानां बहुवचनं दृश्यते,—देवश्चेत् वर्षेत्, बहवः कृषिं कुर्युः;

---

* युक्ता भविष्यति। 'तदङ्गत्वेन' इति क० सं० पु० पाठः।

वस्त्रं चेत् सम्पद्येत, बहवो ब्राह्मणा यजेरन्—इति। तथा वेदेऽपि प्रयोगदर्शनं,—'यथाकुटुम्बाय पृष्ठशमनीयेन यजेरन्' इति एवमत्रापि 'आसीरन्' 'उपेयुः' इति बहुवचनं भविष्यति इति॥

सू० वचनात् तु बहूनां स्यात्॥ ४६॥ (सि०)॥

भा० नैतदस्ति,—एको यजेत, न बहवः—इति; किन्तर्हि?—बहवो यजेरन्। कुतः?। 'वचनात्', वचनमिदं भवति,—'आसीरन्' 'उपेयुः' इति, बहुत्वसम्बद्धः प्रयोगो विधीयते, स प्रत्यक्षवचनात् चोदकप्राप्तामेककर्तृकतां बाधेत इति॥

सू० अपदेशः स्यादिति चेत्॥ ४७॥ (आ०)॥

भा० यदुक्तं,—सामान्यक्रियासम्बन्धमभिसमीक्ष्य लोकवत् बहुवचनशब्दप्रयोगो भविष्यति, यथा कृषिं कुर्युरिति, वेदेऽपि दर्शनं,—'पृष्ठशमनीयेन यजेरन्' इति बहुवचनं भवति, एवमत्रापि—इति; तत्परिहर्त्तव्यम्॥

सू० नैकव्यपदेशात्॥ ४८॥ (आ०नि०)॥

भा० नैतत् सत्त्रे उपपद्यते, एककर्तृकम्* इति। कुतः?। 'एकव्यपदेशात्'। कथं?। एवमाह,—'एष वै कुणपमत्ति यः सत्त्रे प्रतिगृह्णाति; एक एव यजेत' इति, सत्त्रमपोद्य अन्यस्यैककर्तृकतां विदधत् तस्य बहुकर्तृकतां गमयति। यत्तु लोकवदिति, तन्न युक्तं, लोकेऽन्यतः प्रवृत्तस्यार्थस्य अनुवादभूतः शब्द उच्चार्य्यमाणः सामान्यक्रिया-

* 'एककर्तृकता' इति का० मौ० पु० पाठः।

सम्बन्धाभिसमीक्षया उच्चरित इति गम्यते । यदपि उदवसानीयवदिति, तदपि उदवसानीये युक्तं, तत्र हि भिन्नानि उदवसानानि उपलक्ष्य क्रियामात्रं विधीयते, तद्बहुत्वञ्च समानकर्तृकत्वादेव प्राप्तमनूद्यते—इत्युक्तमेव। इह तु शब्दपूर्व्विका क्रियाप्रवृत्तिः, शब्दश्च बहुत्वविशिष्टं प्रयोगं सत्त्रिभिरभिसम्बध्नाति, अतः शब्दप्रामाण्यादुपादीयमानायां क्रियायां बहुत्वं विवक्षितमिति बहवः प्रयुञ्जीरन्निति ॥

सू॰ सन्निवापञ्च दर्शयति ॥ ४९ ॥ (यु॰१) ॥

भा॰ इतश्च बहव एव यजेरन् इति । कुतः ?। सन्निवापदर्शनात्, बहूनाम् अग्नीनाम् एकत्र सन्निवापमाह,—'पञ्चभिः पशुभिर्यक्ष्यमाणाः सन्निवपेरन्, सावित्राणि होष्यन्तः सन्निवपेरन्' इति ; यदि संहत्य कुर्वन्ति, एवमग्नीनां सन्निवाप उपपद्यते ; अथ तु एकैकश्येन कुर्युः, सन्निवापदर्शनं नोपपद्यते ; तस्मादपि गम्यते बहूनां सत्त्रमिति ॥

सू॰ बहूनामिति चैकस्मिन् विशेषवचनं व्यर्थम् ॥
॥ ५० ॥ (यु॰२) ॥

भा॰ इतश्च पश्यामः सम्भूय प्रयोग इति। कुतः?। एवं श्रूयते,—'यो वै बहूनां यजमानानां गृहपतिः, स सत्त्रस्य प्रत्येता, स हि भूयिष्ठामृद्धिमाप्नोति' इति, एकस्मिन् गृहपतौ बहुभिर्यजमानैः सह प्रवृत्ते फलविशेषं ब्रुवन् बहूनां सहप्रयोगं दर्शयति ; इतरथा एकस्मिन् यजमाने कर्तुरेकत्वात् फलैकत्वाच्च सामान्यविशेषभावानुपपत्तेः फलविशेषवचनं व्यर्थं स्यात्, अस्ति तु फलविशेषवचनं ; तस्मादपि गम्यते बहव एव यजेरन्निति ॥ (१०।६।१४अ०)॥

---

सत्रे यजमानानामेव ऋत्विक्त्वाधिकरणम् ॥

सू॰ अन्ये स्युर्ऋत्विजः प्रकृतिवत् ॥ ५१ ॥ (पू॰) ॥

भा॰ इह सत्राण्येवोदाहरणं; तेषु बहवः कर्त्तार इत्युक्तम्। इदम् इदानीं सन्दिह्यते,—किं त एव सत्रिण ऋत्विजः, उत, अन्ये उपादातव्याः? इति। किं प्राप्तम्?—अन्ये उपादातव्या ऋत्विजः। कुतः?। ज्योतिष्टोमे हि प्रकृतौ अन्ये कर्त्तार उपादेयाः समाम्नाताः, तद्वदिहापि सत्रिभिः प्रकृतिवत् कुर्वाणैः चोदकानुग्रहाय 'अन्ये' एवोपादेया इति; एवं प्रकृतिवत् कृतं भविष्यतीति ॥

सू॰ अपि वा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात् तेषां स्यात् यजमानत्वम् ॥ ५२ ॥ (सि॰) ॥

भा॰ नैतदस्ति,—अन्ये ऋत्विज इति, 'यजमानाः' एव ऋत्विजः 'स्युः'। कुतः?। 'ऋत्विजामभिधानसंयोगात्',—यजमानसंस्कारो हि दीक्षापदार्थोऽध्वर्य्वादिसमाख्यासंयोगेन कर्मनिमित्तेन प्रसिद्धिरूपेणाभिधाय विधीयमानो यजमानानां तेषां आध्वर्यवादिसम्बन्धमवबोधयति। कथं?। यदि ते तान् पदार्थान् कुर्वन्ति एवं ते नैमित्तिकीभिराख्याभिर्युज्यन्ते नान्यथेति, अतोऽवगम्यते अस्ति तैः पदार्थैरभिसम्बन्ध इति। किं तद्वचनम्?। 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति ततो होतारं तत उद्गातारम्' इत्युपक्रम्य सर्वर्त्विजः उपक्रान्ता दीक्षासम्बन्धेन; तस्माद्गम्यते यजमाना एव आर्त्विज्ये युज्यन्ते इति ॥

सू॰ कर्तृसंस्कारो वचनादाधातृवदिति चेत् ॥ ५३ ॥ (आ॰) ॥

भा॰ 'इति चेत्' मन्यसे,—यजमाना एव ऋत्विजः स्युरिति, तच्च युक्तं, प्रकृतौ हि यजमानादन्ये श्रूयन्ते, प्रकृतिवदिहापि यजमानेभ्यो-ऽन्यैरेव भवितव्यमिति पूर्व्व एव पक्षो व्यपदिश्यते, केवलं तु पूर्व्वोक्तस्य परिहारो वक्तव्यः, स उच्यते,—'कर्तृसंस्कारो वचनादाधातृवत्' भविष्यति। कथम्?। एतावदेव श्रूयते,—'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इति, तत् यदि भिन्ना अपि कर्त्तारो भवन्ति तान् आत्मीयाभिः मन्त्राभिरुपलक्ष्य वचनसामर्थ्यात् दीक्षासंस्कारस्तेषां विधीयते इति नानुपपन्नं, 'आधातृवत्',-यथा ऽन्यत्राप्यृत्विजां संस्कारो विधीयते आधाने,—'यस्तं योऽग्निमाधास्यन् स्यात् स एतां रात्रिं व्रतञ्चरेत्' इति, 'न मांसम् अश्नीयान्न स्त्रियमुपेयात्' इति वचनादध्वर्योर्नियमो विधीयते, तथा ज्योतिष्टोमे 'सर्वर्त्विज उपवसन्ति' इति ऋत्विजामुपवासो विधीयते, तद्वदिहापि ऋत्विजामेष संस्कारो भविष्यति॥

सू॰ स्याद्विशये तन्न्यायत्वात् प्रकृतिवत् ॥ ५४ ॥ (आ॰नि॰) ॥

भा॰ नैतदस्ति,—अन्ये ऋत्विज इति, किन्तर्हि यजमाना एव ऋत्विजः स्युः। कुतः?। एतस्मिन् संशये,—त एव वा यजमाना ऋत्विजः, अन्ये वा भिन्नाः? इति, त एवेति न्याय्यम्, उक्तोऽत्र न्यायः,— 'अपि वा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात्' इति, अनेन न्यायेन पश्यामः,—ते एवेति। यदुक्तम्,—आधानवत्संस्कार

ऋत्विजां भविष्यति—इति, तदनुपपन्नं। कथम्?। अप्राकृतप्रयोजना वा दीक्षा ऋत्विजां विधीयते, प्रकृतिवद्वा प्राकृतकार्य्यका सती यजमानबहुत्वात् क्रमपरतया सङ्कीर्त्त्येत; प्राप्तायाः सङ्कीर्त्तनं लघीयः, क्रममात्रविधानात्, ऋत्विक्संस्कारे सति अदृष्टकल्पना, अधिकार्थविधानञ्च। तस्मात् प्राप्तायाः चोदकेन सङ्कीर्त्तनं, न अप्राप्तविधानमिति। यत्तु,—यथा ऋत्विजामुपवासविधानम्, आधातुश्च व्रतविधानं, तद्वदिहापि—इति, तत्र युक्तं, विस्पष्टं वचनं,—'ऋत्विज उपवसन्ति', 'स तां* रात्रिं व्रतञ्चरेत्' इति। न च तत्र अपूर्व्वत्वात् प्राप्त्याशङ्का; तस्मात् तत्र विधानम्॥

सू० स्वाम्याख्याः स्युर्गृहपतिवदिति चेत्॥ ५५॥ (आ०)॥

भा० परिचोदनासूत्रमेतत्। अथ कस्मात् न 'स्वाम्याख्याः' एता अध्वर्य्वाद्या भवन्ति गृहपतिवत्? इति। किमेवं भविष्यति?। एवं चोदकप्राप्ताऽन्यकर्तृकता न वाधिता भविष्यति। अध्वर्य्वाद्याश्च समाख्या गृहपतिवत् यजमानाभिधानतयाऽर्थवत्यो भविष्यन्तीति स्थिते अर्थे सूत्रेण परिचोदयति॥

सू० न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्म्मेण॥ ५६॥ (आ०नि०)॥

भा० नैतत् युक्तं,—'स्वाम्याख्या एता गृहपतिवत्' इति। कुतः?।

---

* [illegible] र्व्वत्र पाठः। परन्तु पूर्व्वापरपाठसाम्याय "एतां" इति पठितुं युक्त[illegible]

सू० कर्तृसंस्कारो वचनादाधातृवदिति चेत् ॥ ५३ ॥ (आ०) ॥

भा० 'इति चेत्' मन्यसे,—यजमाना एव ऋत्विजः स्युरिति, तन्न युक्तं, प्रकृतौ हि यजमानादन्ये श्रूयन्ते, प्रकृतिवदिहापि यजमानेभ्योऽन्यैरेव भवितव्यमिति पूर्व्व एव पक्षो व्यपदिश्यते, केवलं तु पूर्व्वोक्तस्य परिहारो वक्तव्यः, स उच्यते,—'कर्तृसंस्कारो वचनादाधातृवत्' भविष्यति। कथम्?। एतावदेव श्रूयते,—'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इति, तत् यदि भिन्ना अपि कर्त्तारो भवन्ति तान् आत्मीयाभिः सञ्ज्ञाभिरुपलक्ष्य वचनसामर्थ्यात् दीक्षासंस्कारस्तेषां विधीयते इति नानुपपन्नं, 'आधातृवत्',—यथा ऽन्यत्राप्यृत्विजां संस्कारो विधीयते आधाने,—'यस्तं योऽग्निमाधास्यत् स्यात् स एतां रात्रिं व्रतञ्चरेत्' इति, 'न मांसम् अश्नीयान्न स्त्रियमुपेयात्' इति वचनादध्वर्य्योर्नियमो विधीयते, तथा ज्योतिष्टोमे 'सर्वर्त्विज उपवसन्ति' इति ऋत्विजामुपवासो विधीयते, तद्वदिहापि ऋत्विजामेष संस्कारो भविष्यति॥

सू० स्याद्विशये तन्न्यायत्वात् प्रकृतिवत् ॥ ५४ ॥ (आ०नि०) ॥

भा० नैतदस्ति,—अन्ये ऋत्विज इति, किन्तर्हि यजमाना एव ऋत्विजः स्युः। कुतः?। एतस्मिन् संशये,—त एव वा यजमाना ऋत्विजः, अन्ये वा भिन्नाः? इति, त एवेति न्याय्यम्, उक्तोऽत्र न्यायः,—'अपि वा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात्' इति, अनेन न्यायेन पश्यामः,—ते एवेति। यदुक्तम्,—आधानवत्संस्कार

ऋत्विजां भविष्यति—इति, तदनुपपन्नं। कथम्?। अप्राकृतप्रयोजना वा दीक्षा ऋत्विजां विधीयते, प्रकृतिवद्वा प्राकृतकार्यका सती यजमानबहुत्वात् क्रमपरतया सङ्कीर्त्त्येत; प्राप्तायाः सङ्कीर्त्तनं लघीयः, क्रममात्रविधानात्, ऋत्विक्संस्कारे सति अदृष्टकल्पना, अधिकार्थ-विधानञ्च। तस्मात् प्राप्तायाः चोदकेन सङ्कीर्त्तनं, न अप्राप्तविधान-मिति। यत्तु,—यथा ऋत्विजामुपवासविधानम्, आधातुश्च व्रत-विधानं, तद्वदिहापि—इति, तत्र युक्तं, विस्पष्टं वचनं,—'ऋत्विज उपवसन्ति', 'स तां* रात्रिं व्रतञ्चरेत्' इति। न च तत्र अपूर्वत्वात् प्राप्त्याशङ्का; तस्मात् तत्र विधानम्॥

सू० स्वाम्याख्याः स्युर्गृहपतिवदिति चेत्॥ ५५॥ (आ०)॥

भा० परिचोदनासूत्रमेतत्। अथ कस्मात् न 'स्वाम्याख्याः' एता आध्वर्य्वाद्या भवन्ति गृहपतिवत्? इति। किमेवं भविष्यति?। एवं चोदकप्राप्ताऽन्यकर्त्तृकता न वाधिता भविष्यति। आध्वर्य्वाद्याश्च समाख्या गृहपतिवत् यजमानाभिधानतयाऽर्थवत्यो भविष्यन्तीति स्थिते अर्थे सूत्रेण परिचोदयति॥

सू० न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्म्मेण॥ ५६॥ (आ०नि०)॥

भा० नैतत् युक्तं,—'स्वाम्याख्या एता गृहपतिवत्' इति। कुतः?।

* अत्र 'तां' इति सर्व्वत्र पाठः। परन्तु पूर्व्वापरपाठसाम्याय "एतां" इति पठितुं युक्तम्।

सू० कर्तृसंस्कारो वचनादाधातृवदिति चेत् ॥ ५३ ॥ (आ०) ॥

भा० 'इति चेत्' मन्यसे,—यजमाना एव ऋत्विजः स्युरिति, तन्न युक्तं, प्रकृतौ हि यजमानादन्ये श्रूयन्ते, प्रकृतिवदिहापि यजमानेभ्योऽन्यैरेव भवितव्यमिति पूर्व्व एव पक्षो व्यपदिश्यते, केवलं तु पूर्व्वोक्तस्य परिहारो वक्तव्यः, स उच्यते,—'कर्तृसंस्कारो वचनादाधातृवत्' भविष्यति। कथम्?। एतावदेव श्रूयते,—'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इति, तत् यदि भिन्ना अपि कर्त्तारो भवन्ति तान् आत्मीयाभिः सञ्ज्ञाभिरुपलक्ष्य वचनसामर्थ्यात् दीक्षासंस्कारस्तेषां विधीयते इति नानुपपन्नं, 'आधातृवत्',-यथाऽन्यत्राप्यृत्विजां संस्कारो विधीयते आधाने,—'यस्तं भोऽग्निमाधास्यत् स्यात् स एतां रात्रिं व्रतञ्चरेत्' इति, 'न मांसम् अश्नीयान्न स्त्रियमुपेयात्' इति वचनादध्वर्य्योर्नियमो विधीयते, तथा ज्योतिष्टोमे 'सर्वत्विंज उपवसन्ति' इति ऋत्विजामुपवासो विधीयते, तद्वदिहापि ऋत्विजामेष संस्कारो भविष्यति ॥

सू० स्याद्विशये तन्न्यायत्वात् प्रकृतिवत् ॥ ५४ ॥ (आ०नि०) ॥

भा० नैतदस्ति,—अन्ये ऋत्विज इति, किन्तर्हि यजमाना एव ऋत्विजः स्युः। कुतः?। एतस्मिन् संशये,—त एव वा यजमाना ऋत्विजः, अन्ये वा भिन्नाः? इति, त एवेति न्याय्यम्, उक्तोऽत्र न्यायः,— 'अपि वा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात्' इति, अनेन न्यायेन पश्यामः,—ते एवेति। यदुक्तम्,—आधानवत्संस्कार

ऋत्विजां भविष्यति—इति, तदनुपपन्नं। कथम्?। अप्राकृतप्रयोजना वा दीक्षा ऋत्विजां विधीयते, प्रकृतिवद्वा प्राकृतकार्यका सती यजमानबहुत्वात् क्रमपरतया सङ्कीर्त्त्येत; प्राप्तायाः सङ्कीर्त्तनं लघीयः, क्रममात्रविधानात्, ऋत्विक्संस्कारे सति अदृष्टकल्पना, अधिकार्थविधानञ्च। तस्मात् प्राप्तायाः चोदकेन सङ्कीर्त्तनं, न अप्राप्तविधानमिति। यत्तु,—यथा ऋत्विजामुपवासविधानम्, आधातुश्च व्रतविधानं, तद्वदिहापि—इति, तत्र युक्तं, विस्पष्टं वचनं,—'ऋत्विज उपवसन्ति', 'स तां* रात्रिं व्रतञ्चरेत्' इति। न च तत्र अपूर्वत्वात् प्राप्त्याशङ्का; तस्मात् तत्र विधानम्॥

सू॰ स्वाम्याख्याः स्युर्गृहपतिवदिति चेत् ॥ ५५ ॥ (आ॰) ॥

भा॰ परिचोदनासूत्रमेतत्। अथ कस्मात् न 'स्वाम्याख्याः' एता अध्वर्य्वाद्या भवन्ति गृहपतिवत्? इति। किमेवं भविष्यति?। एवं चोदकप्राप्ताऽन्यकर्तृकता न वाधिता भविष्यति। अध्वर्य्वाद्याश्च समाख्या गृहपतिवत् यजमानाभिधानतयाऽर्थवत्यो भविष्यन्तीति स्थिते अर्थे सूत्रेण परिचोदयति॥

सू॰ न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्म्मेण ॥ ५६ ॥ (आ॰नि॰) ॥

भा॰ नैतत् युक्तं,—'स्वाम्याख्या एता गृहपतिवत्' इति। कुतः?।

* अत्र 'तां' इति सर्व्वत्र पाठः। परन्तु पूर्व्वापरपाठसाम्याय "एतां" इति पठितुं युक्तम्।

'प्रसिद्धग्रहणत्वात्',—आध्वर्यवादि कर्म कुर्वाणेषु हि कर्तृषु कर्मनिमित्ता एता आख्याः प्रसिद्धाः, न याजमानं कुर्वाणेषु, यजमानानाम् आभिः क्रियाभिरसंयुक्तानां भविष्यन्तीत्यनुपपन्नं। कथं गृहपतिरित्याख्या?। उच्यते,—असंयुक्तस्य ऋत्विग्धर्मेण स्वामिन एवाख्या गृहपतिरिति। अपि च अवयवप्रसिद्ध्यापि गृहपतिशब्दस्य पतिर्गोप्ता इति यजमानाभिधेयता उपपद्यते; प्रकृतावपि स्वामिनि चार्थं प्रयुक्तः,—'गृहपतिर्दधेत इति। न त्वध्वर्य्वाद्याः स्वामिनि केनचिदपि प्रकारेण तत्क्रियासंयुक्ता उपपद्यन्ते,—इत्यन्यक्रियासम्बन्धात् ता भिद्यन्ते इति। बहूनामिति च तुल्येषु विशेषवचनं नोपपद्यते।

इतश्च आर्त्विज्येषु यजमाना एव। कुतः?। एवमाह,—'यो वै बहूनां यजमानानां गृहपतिः सचस्य प्रत्येता स हि भूयिष्ठामृद्धिमार्घ्नोति' इति एकस्मिन् गृहपतिरितिविशेषवचनम् असमानत्वे सति उपपद्यते, नान्यथा, यदि सर्वे गृहपतिकर्म कुर्युर्न कर्मान्तरं, ततो विशेषाभावात् गृहपतौ विशेषवचनानुपपत्तिः स्यात्! अथ तु इतरे उभयं कुर्वन्ति, गृहपतिर्याजमानमेव, ततो विशेषवचनं युक्तं भवति। तस्माद्विशेषवचनात् ते एव ऋत्विज इति गम्यते॥

## सू० दीक्षितादीक्षितव्यपदेशश्च नोपपद्यते अर्थयोर्नित्यभावित्वात्॥ ५७॥ (सि०यु०१)॥

भा० इतश्च स्वयंकर्तृकाणि सत्राणीत्यवगम्यते। कुतः?। दीक्षितादीक्षितव्यपदेशात्,—एवमाह,—'दीक्षिताः सत्त्रैर्यजन्ते अदीक्षिता अहीनैर्यजन्ति' इति, एतौ च नियतावेवार्थौ,—'दीक्षिताः स्वार्थं

यजन्ते, याजकाय अपि अदीक्षिता याजयन्ति' इति, अहीने सत्रे चैतयोरर्थयोर्विशेषाभावात् व्यपदेशानुपपत्तिः स्यात्! अथ तु सत्रे यावत्कार्यं तत्सर्वं दीक्षितैरेव क्रियते, अहीने चादीक्षितैः,ततो व्यपदेश उपपद्यते, नान्यथा। अतो व्यपदेशादवगच्छामः,—अस्ति सत्रे स्वयं-कर्तृत्वमिति।

सू॰ अदक्षिणत्वाच्च ॥ ५८ ॥ (सि॰यु॰२) ॥

इतश्च स्वयंकर्तृकं सत्रं। कुतः?। 'अदक्षिणत्वात्' अदक्षिणानि सत्राणि आहुः, न ह्यत्र गौर्दीयते न वासो न हिरण्यमिति दक्षिणा-भावदर्शनं स्वयंकर्तृकत्वे उपपद्यते,नान्यथा,परकर्तृकत्वे हि दक्षिणाभावो नोपपद्यते, न हि कश्चित्, ऋते स्वार्थात्, परार्थे परः प्रवर्त्तते; तस्मादपि गम्यते स्वयंकर्तृकाणि सत्राणीति ॥ (१०।६।१५अ॰) ॥

---

सत्राहीनयोर्विवेकाधिकरणम् ॥

सू॰ द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात् ॥ ॥ ५९ ॥ (सि॰१) ॥

भा॰ द्वादशाह एवोदाहरणं। उक्तञ्च पूर्वं सत्रमहीनश्च द्वादशाह इति; तस्येदानीं द्विप्रकारस्य लक्षणमन्वाख्यायते,—एवंलक्षणको द्वादशाहः सत्रम्, एवंलक्षणकोऽहीन इति। तद्विवेकज्ञानार्थमिद-मुच्यते,–आसनोपायिचोदनया 'यजमानबहुत्वेन च' सत्रत्वमवगम्यते।

इते चोदने 'आसते', 'उपयन्ति' इति हि नित्यं सत्रसम्बद्धे दृष्टे,—'य एवं-विद्वांसः सत्रमासते', 'य एवं-विद्वांसः सत्रमुपयन्ति' इति; 'यजमानबहुत्वेन च',—'चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्' इति। तत्सहचरितलिङ्गदर्शनात् सहचरिते प्रत्ययो भवतीति॥

सू० यजतिचोदनादहीनत्वं स्वामिनां चाऽस्थितपरिमाणत्वात्॥ ६०॥ (सि०२)॥

भा० अथ किंलक्षणकोऽहीनः? इति, तदुच्यते,—यत्र यजतिचोदना, अनियतञ्च कर्तृपरिमाणं तत्र 'अहीनः' इति निश्चीयते; अहीनानां यजतिचोदनया विधानं,—'द्विरात्रेण यजेत' इत्येवमादि। कर्तृपरिमाणञ्च एषामनियतं, सत्राणान्तु नियतं परिमाणं बहवः। एवंलक्षणस्य च लक्षणे लक्षितं प्रयोजनं नान्यत्मृग्यमिति॥ (१०।६।१६ अ०)॥

---

पौण्डरीके सहस्रस्यैव दक्षिणादानाधिकरणम्॥

सू० अहीने दक्षिणाशास्त्रं गुणत्वात् प्रत्यहं कर्म भेदः* स्यात्॥ ६१॥ (पू०)॥

भा० अस्ति पौण्डरीक एकादशरात्रः,—'पौण्डरीकेण एकादशरात्रेण स्वाराज्यकामो यजेत' इति। तत्र श्रूयते,—'अयुतं पौण्डरीके दद्यात् अश्वसहस्रमेकादशम्' इति। तत्र सन्दिह्यते,—किं प्रत्यहं

* 'कर्मभेदात्' इति पाश्चात्यपुस्तकपाठः।

अयुतम्* अश्वसहस्रञ्च दातव्यम्, उत, एकमेवायुतमश्वसहस्रञ्च सकृत्? इति। किं प्राप्तम्?—'अहीने दक्षिणाशास्त्रं' 'प्रत्यहं' भिद्येत। कुतः?। गुणत्वात् दक्षिणायाः, प्रधानत्वाच्च अह्नां, समुदायशब्देन समुदायीनि अहानि उपलक्ष्य दक्षिणा गुणो विधीयमानः प्रतिप्रधानं भिद्येत, यथा गणाय स्नानम्, उपलेपनं वा विधीयमानं गणिनां भवति, एवमत्रापि द्रष्टव्यं। प्रतिकर्मावसायी च चोदक एवमनुग्रहीष्यते, दक्षिणाभूयस्त्वाच्च फलभूयस्त्वं भविष्यति। अतोऽवगम्यते भेद इति॥

सू॰ सर्वस्य वैककर्म्यात्॥ ६२॥ (१ आ॰)॥

भा॰ न चैतदस्ति,—प्रत्यहं दक्षिणाभेद इति, एकमेवायुतं सहस्रं च दीयते। कुतः?। 'वैककर्म्यात्',—एकं हि दक्षिणानां कार्यम्,—ऋत्विगानमनम्; आनतिश्च साङ्गक्रतुनिर्वृत्तये कृतेति अन्तरा न तया प्रयोजनमस्तीति न भूयः क्रियते। यत्तु,-अङ्गभूयस्त्वेन फलभूयस्त्व-मिति, तत् अङ्गत्वे प्रज्ञाते भवति, नान्यथा; समुदायाङ्गञ्च दक्षिणा, न अवयवाङ्गमित्युक्तं। अथ यदुक्तं,—प्रतिकर्मावसायी चोदकः प्रतिकर्म प्रापयति,—इति। प्रत्यक्षवचनात् समुदायाङ्गीकरणेन च दक्षिणानां विधानमिति चोदको बाधित इति न दोषः॥

सू॰ पृषदाज्यवद्वाऽह्नां गुणशास्त्रं स्यात्॥ ६३॥ (१ आ॰ नि॰)॥

भा॰ न चैतत्,—सकृदेव दातव्यमिति, किं तर्हि, भेदेन। कुतः?।

---

* अश्वामिति शेषः।

प्रत्यहं दक्षिणानां प्राप्तानामयं विशेष उच्यमानः प्रत्यहमेव भवितु-मर्हतीति। 'पृषदाज्यवत्',—यथा 'पृषदाज्येनानुयाजान् यजति' इति पृषत्ता गुणो विधीयमानः प्रत्यनुयाजं भिद्यते, एवमत्रापि द्रष्टव्य-मिति ॥

सू० ज्योतिष्टोम्यस्तु दक्षिणाः सर्वासामेककर्मत्वात् प्रकृतिवत् तस्मात्तासां विकारः स्यात् ॥ ६४ ॥

(२आ०) ॥

भा० न चैतदस्ति,—भेद इति, किन्तर्हि, तन्त्रेण सकृदेव। कथं ?। 'ज्योतिष्टोम्यो' हि 'दक्षिणाः' साङ्गं कर्माभिमङ्गीकृत्य दीयन्ते, तथाभूतानाञ्च तासां समुदायानत्यर्थानां प्राप्तानामयं विशेष उच्यते,—'सहस्रमयुतम्' इति, विशेष उच्यमानः, या इह दक्षिणा दीयन्ते, तासामयं विकार इति गमयति, एकत्वम् आनतेः, न वारयति; तस्मात्सकृत् दातव्यमिति। यत्तु,—अनुयाजवत्—इति, युक्तं, यत् अनुयाजेषु द्रव्यस्य भेद इति, यागे हि द्रव्यं गुणभूतं चोद्यते, तत् यागानां भेदादन्यस्य क्रियमाणं न अन्यस्य उपकरोतीति भिद्यते; इह त्वेका आनतिरित्युक्तं; तस्माद्विषमो दृष्टान्त इति ॥

सू० द्वादशाहे वचनात् प्रत्यहं दक्षिणाभेदस्तत्प्रकृति-त्वात् परेषु तासां संख्याविकारः स्यात् ॥ ६५ ॥

(२आ०सि०) ॥

भा० न चैतदस्ति,—सकृद्दातव्यमिति; प्रत्यहमयं विशेषो भिद्यते।

कुतः ?। द्वादशाहे हि प्रत्यक्षं वचनम्,—'अन्वहं द्वादशशतं ददाति' इति; पौण्डरीकश्च द्वादशाहप्रकृतिः, तस्मात् पौण्डरीके प्रत्यक्षं चोदक-प्राप्त्या प्रसक्तानां दक्षिणानामयं विशेष उच्यमानः तथैव कर्मावयव-सम्बद्धानां विकार इति गम्यते, ततो भेदेन दक्षिणानां विशेष इति ॥

सू॰ परिक्रयाविभागाद्वा समस्तस्य विकारः स्यात् ॥ ॥ ६६ ॥ (सि॰) ॥

भा॰ न चैतदस्ति,—दक्षिणाभेद इति, किन्तर्हि, सकृदेव दक्षिणा दीयेतेति । कुतः ?। 'परिक्रयाविभागात्',–समस्ता दक्षिणा विक्रियेरन्, कृत्स्नं हि क्रतुमङ्गीकृत्य दक्षिणा विधीयन्ते । कथं ?। तावतः पुरुषार्थ-त्वात्; यत् फलवत्, तत् पुरुषस्य चिकीर्षितं, तच्च कुर्वाणस्य, सहायान् उपाददानस्य अयं विशेष उच्यते परिक्रयः; न चावयवः फलवान्, समुदायात् फलनिष्पत्तेः, समुदायं चाङ्गीकृत्य परिक्रयः क्रियमाणः, आ समुदायनिर्वृत्तेः, परिक्रयः कृत इति अन्तरा न भूयः क्रियते ।

अपि च, पौण्डरीकशब्दसंयोगेन परिक्रयविशेष उच्यमानः तच्छब्दवाच्यस्यैव भवतीति गम्यते, समुदायश्च पौण्डरीकशब्दवाच्यो न अवयवः, स हि समुदायशब्देन लक्ष्यते, तत्र लक्षणैव दोषः; असम्भवे हि लक्षणा आश्रीयते, न च, इहासम्भवः; अतः समुदाय-मङ्गीकृत्य सकृदेव ऋत्विजो भ्रियेरन्निति; तस्मात्सकृत्परिक्रय इति, सकृद्दाने च प्रयोगवचनानुग्रहः, प्रयोगप्राग्भावाच्च महाविषयता शास्त्रस्येति, तस्मादप्येतदेव न्याय्यमिति ॥

सू॰ भेदस्तु गुणसंयोगात् ॥ ६७ ॥ (आ॰नि॰) ॥

भा॰ यदुक्तं,—'द्वादशाहप्रकृतित्वात् पौण्डरीकस्य,तत्र च द्वादशाहे

दक्षिणाभेदात् तथाभूताया एवेह विशेष उच्यते'—इति, तत् परिहर्त्तव्यं। अत्रोच्यते,—तत्राप्येकत्वात् क्रतोः, एक एव परिक्रयः। 'भेदस्तु' वचनात् सुत्या सम्बन्धप्रयोजनो दक्षिणासंस्कारप्रयोजनश्च, न तस्मिन् भिद्यमाने परिक्रयैकत्वं भिद्यत इति ॥ (१०।६।१७अ०) ॥

---

पौण्डरीके सर्व्वासां दक्षिणानां विभज्य नयनाधिकरणम्।

सू॰ प्रत्यहं सर्वसंस्कारः प्रकृतिवत्सर्वासां सर्वशेषत्वात् ॥ ६८ ॥ (१म पू॰) ॥

भा॰ पौण्डरीक एवोदाहरणं; तच्चैतत्समधिगतं,—सकृदेव परिक्रय इति। अस्ति तु प्रकृतौ, 'माध्यन्दिने सवने दक्षिणा नीयन्ते' इति। तत्र संशयः,—किं सर्वासां कार्त्स्न्येन प्रत्यहं नयनम्, उत, सकृन्नयनम्, अथ वा प्रविभज्य नयनम्? इति। किं प्राप्तं?,—'प्रत्यहं' 'सर्वासां' 'संस्कारः' स्यात्। कुतः?। 'प्रकृतिवत्' प्रकृतौ हि सकला दक्षिणा तस्मिन् काले संस्कृताः, इहापि तद्वदेव सकलाः संस्कर्त्तव्या इति। कथम्?। अह्नां प्राधान्यात्, तद्गुणभावाच्च दक्षिणानां, सर्वा एताः सर्वेषाम् अह्नां शेषभूताः, शेषभूतस्य चार्थस्य यः संस्कारः, स तेन तेन अह्ना प्रयुज्यते इति, तस्मात् 'प्रत्यहं' 'सर्वसंस्कारः'।

सू॰ एकार्थत्वान्नेति चेत् ॥ ६९ ॥ (२य पू॰) ॥

भा॰ न चैतदस्ति,—'प्रत्यहं सर्वसंस्कारः' इति, किन्तर्हि सकृदेव संस्कारः स्यात्। कुतः?। 'एकार्थत्वात्' दक्षिणानाम्, एकं कार्यम् आनमनं, तासाञ्च नयनादिसंस्कारसंस्कृतानां प्रत्यर्पणं कार्यम्, एकस्मिन्नपि च अहनि तत्संस्कारसंस्कृतासु दीयमानासु कृतः सोऽहनार्थ इति

भूयः संस्कारेण प्रयोजनं नास्ति । तस्मात् सकृत् संस्क्रियेरन्निति ॥

सू० स्यादुत्पत्तौ कालभेदात् ॥ ७० ॥ (२य पू० नि०) ॥

भा० नचैतदस्ति,—सकृत्संस्कार इति, किन्तर्हि प्रत्यहं । कुतः ? । 'उत्पत्तौ कालभेदात्',—उत्पत्तौ दक्षिणानां विशिष्टकालसम्बन्धः श्रूयते,—'तस्मात् त्रिष्टुभो लोके माध्यन्दिने सवने दक्षिणा नीयन्ते' इति, सर्वास्त्वेता सर्वेषाम् अह्नां शेषभूताः, तेषाञ्चाह्नां माध्यन्दिनानि सवनानि भिद्यन्ते, तत्र च अगम्यमानविशेषत्वात् यस्य माध्यन्दिने सवने न संस्क्रियेरन्, तस्यैव संस्कारलोपः स्यात्, प्रयोगभेदात्; न च अन्यतरत्र* संस्क्रियमाणा अन्यत्र संस्कृता भवन्ति, तस्मात् भेदेन संस्क्रियेरन्निति ॥

सू० विभज्य तु संस्कारवचनात् द्वादशाहवत् ॥ ७१ ॥ (सि०) ॥

भा० न चैतदस्ति,—समस्तानां प्रत्यहं संस्कार इति, किन्तर्हि 'विभज्य' संस्क्रियेरन् । कुतः ? । वचनात्,—द्वादशाहे प्रत्यहं नयनादि-संस्कारो वचनात् क्रियते,—'अन्वहं द्वादशशतं ददाति' इति । पौण्डरीकस्य द्वादशाहप्रकृतिः, न ज्योतिष्टोमप्रकृतिः, तस्मात् परि-क्रयैकत्वेऽपि सति वचनात् भेदेन संस्कार इति ॥ (१०।६।१८ अ०) ॥

---

'मनोः ऋचः' इत्यनेन यावदर्थमृचामुपादानाधिकरणम् ॥

सू० लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्यात् लिङ्गस्य सर्वगामित्वादाग्नेयवत् ॥ ७२ ॥ (पू०) ॥

भा० क्वचित् कर्मविशेषे श्रूयते,—'मनोः ऋचः सामिधेन्यो भवन्ति'

---

* 'अन्यत्र' इति का० ह० पु० पाठः ।

इति। तत्र संशयः,—किं, यावत्यो मनुलिङ्गा ऋचः, ताः सर्वा दाशतयीभ्यः आनीय सामिधेनीषु विनियोक्तव्याः, उत काश्चिदेव, न सर्वाः? इति। किं प्राप्तं?,—सर्वा एवंलिङ्गा उपादेयाः। कुतः?। 'लिङ्गस्य सर्वगामित्वात्', इत्येतावत् श्रूयते—'मनोः ऋचः सामिधेन्यो भवन्ति' इति। मनुशब्दसंयोगो हि लक्षणम् ऋचामुपादीयमानानां, मनुसम्बन्धेन च शब्द उपलक्षयन् यावतीषु सम्भवेत्, तावतीः अविशेषात् शक्नोति उपलक्षयितुम्, एतच्च वचनं लिङ्गमात्रसम्बन्धेन विनियोजकं, न इयत्तापरिच्छिन्नानां विशेषकं। तस्मात् अविशेषात् सर्वास्तल्लिङ्गवत्यः उपादेयाः, 'आग्नेयवत्', यथा, ऋजीषाणामाग्नेयेन संवत्सरमुपधाने, 'आसीत सूक्तेन सूक्तस्य अविच्छेदाय' इति आग्नेयेन सूक्तेनेत्युक्तं,—यावन्ति आग्नेयानि सूक्तानि दाशतयानि, सर्वैरिष्टका उपधीयन्ते, एवमिहापि मनुलिङ्गाभिः सामिधेनीकार्यं कर्त्तव्यमिति। यथा वा, अहर्गणे 'ऋजीषमप्सु प्रास्यति' इति, सर्वेषामह्नां यत् ऋजीषम्, अविशेषात् तत् सर्वं प्रास्यते, तद्वदिहापि अविशेषात् सर्वासामुपादानमिति ॥

सू॰ यावदर्थं वा अर्थशेषत्वादल्पेन परिमाणं स्यात् तस्मिंश्च लिङ्गसामर्थ्यम् ॥ ७३ ॥ (सि॰) ॥

भा॰ न चैतदस्ति,—सर्वासां मनुलिङ्गानां दाशतयीनामागम इति, किन्तर्हि 'यावदर्थम्' उपादेया इति। कुतः?। 'अर्थशेषत्वात्',—कार्यशेषभावेन हि सामिधेनीनामुपादानं, तच्च कार्य्यम् अल्पाभिरपि सिध्यतीति, सिद्धत्वात्कार्य्यस्य, यद्यपि अचिताः सन्ति अपरा ऋचः, तथापि प्रयोजनाभावात् नैवोपादीयन्ते इति।

ननु 'कार्य्यशेषभावः सर्व्वत्र वाचनिकः, इहापि प्रत्यक्षवचनात् लिङ्गपरिच्छिन्नाः सामिधेन्यो विधीयन्ते इति सर्वासां विधानं भविष्यति' इति। अत्राभिधीयते,—सत्यं सर्वत्र वाचनिकः शेषभावः, न त्विह सामिधेन्यो विधीयन्ते, किन्तर्हि चोदकप्राप्तानाम् इयत्तापरिच्छिन्नानां केवलमनेन विशेष उच्यते,—'मनोः ऋचः' इति; योऽयं विशेष उच्यमानो यावत्य उपन्यस्ताः, ता एव विशेष्य कृतार्थत्वात् व्यावर्त्तन्ते, नापरा अपि तल्लिङ्गाः प्रसज्यन्ते। तस्माल्लिङ्ग-वतीनां नियतानामुपादानं न सर्व्वासाम् इति। न च, लिङ्गवतीनां भावात् गुणानुरोधेन प्रधानावृत्तिर्न्याय्या। एवञ्च लाघवं प्रयोगप्रादुर्भावश्च भविष्यति इति। अपि च अस्मिन् पक्षे लिङ्गमपि समर्थमेव। कथं?। लिङ्गं हि लक्षणत्वेन सामिधेनीनामुच्यते; तत्र यद्यपि न तल्लिङ्गाः सर्व्वा उपादीयन्ते, यास्त्विह प्रयुज्यन्ते ताः तल्लिङ्गा एव नान्यलिङ्गाः, तथापि लिङ्गमनुगृहीतमेव न वाधितमिति। तस्माद् यावदर्थमुपादानं न सर्वासामिति।

सू॰ आग्नेये कृत्स्नविधिः ॥ ७४ ॥ (१म अा॰ नि॰) ॥

भा॰ यदुक्तं,—'यथा आग्नेयैः सूक्तैरिष्टका उपदधाति'—इत्युक्ते सर्वाणि लिङ्गविशिष्टानि उपादीयन्ते, न कानिचित्, एवमत्रापि द्रष्टव्यम्-इति, तत्परिहर्त्तव्यम्। अत्रोच्यते,—युक्तम् आग्नेयेषु कृत्स्नविधानं। कुतः?। इष्टकाबहुत्वात्, प्रतिसूक्तम् 'उपदधाति' इति वचनात्, बह्वीनामुपधेयानां सूक्ताल्पत्वात् कार्त्स्न्येनोपादानमविरुद्धम्, इह तु इयत्तापरिमितानां विशेष उच्यते,—इत्युपदिष्टो हेतुः; तस्मादयम् इह चदृष्टान्त इति॥

सू० ऋजीषस्य प्रधानत्वादहर्गणे सर्वस्य प्रतिपत्तिः स्यात् ॥ ७५ ॥ (२य आ० नि०) ॥

भा० यदप्युक्तम्—'अहर्गणे यथा ऋजीषस्य कृत्स्नस्य अप्सु प्रासनम्, एवमत्रापि अविशेषात् सर्व्वासामुपादानम्'—इति, तत् परिहर्त्तव्यम्; अत्रोच्यते,—'ऋजीषस्य प्रधानत्वात्' युक्तम्, ऋजीषस्य अविशेषात् प्रतिपत्तिरियम् अभिधीयते, सा सर्व्वस्य ऋजीषस्य* स्यात्, यस्य न क्रियेत, तस्य संस्कारपरिलोपः स्यात्; तस्मात् सर्व्वेषामह्नां यत् ऋजीषं, तत् सर्व्वं प्रास्यते; इह तु अर्थशेषत्वादित्युपदिष्टो हेतुः; तस्मात् विषमम् एतत् ऋजीषेणेति ॥ (१०।६।१८अ०) ॥

---

वाससि मानोपावहरणयोरनुष्ठानाधिकरणम् ॥

सू० वाससि† मानोपावहरणे प्रकृतौ सोमस्य वचनात् ॥ ७६ ॥

भा० ज्योतिष्टोमे मानोपावहरणे समाम्नाते; तत्र संशयः,—किं यत्र-क्वचित् मानं, येन-केनचित् उपावहरणं कार्य्यम्, उत, वाससि मानं वाससा चोपावहरणम्? इति। किं प्राप्तम्?,—अर्थात् यत्र-क्वचिन्मानं, येन-केनचिदुपावहरणम्; एवञ्च अनियमे लाघवं प्रयोगप्रादुर्भावस्य भविष्यति इति।

एवं प्राप्ते ब्रूमः,—वाससि मानं वाससा च उपावहरणञ्च कार्य्यं। कुतः?। 'वचनात्' वचनमिदं भवति,—'वाससि मिनोति, वाससा च उपावहरति' इतिवचनस्य सामर्थ्यात् नियम्येत ॥(१०।६।२०अ०) ॥

---

* सर्व्वेर्जीषस्य इति का० ह० पु० पाठः।

† 'वाससा' इति क० सं० पु० एवं का० ह० पु० पाठः। उभयप्राप्तौ चधिकरण-कारेण करणस्य बाधितत्वात् 'वाससि' इत्येव पाठः सम्यगिव प्रतिभाति।

अथ वा, नैवाच संशयः, वचनात् वाससि मानं वाससा चोपावहरणम्,—एवं प्राप्तम् उत्तरविवक्षया कीर्त्त्यते, विशेषं चिन्तयितुं; यच्च प्राप्तम् उत्तरविवक्षया कीर्त्त्यते, न तत्र पूर्वोत्तरपक्षाभ्यां प्रयोजनमिति ॥

---

अहर्गणेऽर्थात् वासोन्तरोत्पादनाधिकरणम् ॥

सू० तथाहर्गणेऽर्थाद्वासः प्रकृतिः स्यात् ॥ ७७ ॥

भा० अस्ति द्वादशाहः, तत्र चोदकप्राप्तम् उपावहरणं,—'वाससा उपावहरति' इति। तत्र संशयः,—किमुपावहरणार्थम् अन्यद्वास उत्पाद्यम्, उत, न? इति। किं प्राप्तं?,—नोत्पाद्यं। कुतः?। न वचनमस्ति,—अन्यत् भेदेनोत्पाद्यमिति, वचनादृते न प्रतीमो भेदेन उत्पत्तिं, तस्मात् न उत्पाद्यमिति।

एवं प्राप्ते ब्रूमः,—'अहर्गणे अर्थाद्वासः' उत्पाद्यं। कथम्?। अहर्बहुत्वात्, बहूनि अहानि, तत्र चोदकेनैतत् प्राप्यते,—'वाससा उपावहरति' इति। भेदेन च अनुत्पाद्यमाने उपावहरणार्थं एव न सिध्येत्! तस्मात् उत्पादयितव्यमिति ॥ (१०।१।२१अ०) ॥

---

उपावहरणार्थमेव वासोन्तरोत्पादनाधिकरणम् ॥

सू० मानं प्रत्युत्पादयेत् प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७८ ॥ (पू०) ॥

भा० तत्रैवाहर्गणे चिन्त्यते,—उक्तमेतत्,—अर्थात् वास उत्पाद्यम्-इति। तत्र संशयः,—किं मानं प्रति उत्पाद्यम्, उत उपावहरणं प्रति उत्पाद्यम्? इति। किं प्राप्तं?,—मानं प्रति उत्पाद्येत।

कुतः ?। प्रकृतौ तेन दर्शनादुपावहरणस्य,—ज्योतिष्टोमे यस्मिन् मीयते तेनैव उपावहरणं क्रियते, प्रकृतिवच्च विकृतौ, चोदकानुग्रहाय तस्मिन्नेव काले उत्पाद्यमिति ॥

सू० हरणे वा श्रुत्यसंयोगादर्थाद्विकृतौ तेन ॥ ७९ ॥ (सि०) ॥

भा० न चैतदस्ति,—मानं प्रति उत्पाद्यम् इति, किन्तर्हि, हरणं प्रति उत्पाद्यं। कथं ?। 'श्रुत्यसंयोगात्',—न हि श्रूयते,—मानं प्रति उत्पाद्यम्—इति; श्रुत्यभावाच्च नैकान्ततोऽध्यवसीयते,—अर्थेनेति; यस्य चार्थः प्रयोजकः, तत्प्रयोजनप्रयुक्तत्वात् तत्काल एव न्याय्यः, न अन्यकालः—इति; हरणकाले चानेन प्रयोजनमिति हरणे एव न्याय्यम् उत्पादयितुमिति। यदुक्तं,—'प्रकृतौ माने यत् वाससा हरणे दर्शनात्, इह चोदकानुग्रहाय तत्कालमेवोत्पाद्यम्'—इति, तत्परिहर्त्तव्यम्,—अभोच्यते,-न श्रूयते,—तेनैव वाससा उपावहरणं कर्त्तव्यमिति, किन्तु अर्थात् तेन क्रियते, एकत्वात् अर्थस्य, न हि तद्वासोऽन्यत्र व्यापृतमिति तेनैव क्रियते; यच्च अर्थात् कृतं, न तत् चोदकः प्रापयति, अवाचनिकत्वात्; न च, इह तदेव वास उभयार्थं सम्भवति, अद्दर्शत्वात्; तस्मात् हरणकाले एव उत्पाद्यमिति ॥ (१०।६।२२ अ०) ॥

इति भट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये दशमस्याध्यायस्य षष्ठः पादः ॥०॥

---

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

**THE SOCIETY'S LONDON AGENTS, MESSRS. TRUBNER & CO.**

57 AND 59, LUDGATE HILL, LONDON, E. C.

---

## BIBLIOTHECA INDICA.

*Sanskrit Series.*

| | | | |
|---|---|---|---|
| Chaitanya-chandrodaya, Nátaka, 3 fasci. | Rs. | 1 | 14 |
| Srauta Sútra, As'valáyana, 11 fasci. | | 6 | 14 |
| ———— Látyáyana, 9 fasci. | | 5 | 10 |
| S'ankara Vijaya, 3 fasci. | | 1 | 14 |
| Dasa-rúpa, 3 fasci. | | 1 | 14 |
| Kaushítaki Bráhmanopanishad, 2 fasci. | | 1 | 4 |
| Sánkhya-sára, 1 fasci. | | 0 | 10 |
| Lalita-vistara, 6 fasci. | | 3 | 12 |
| Taittiríya Bráhmana, 24 fasci. | | 15 | 0 |
| Taittiríya Sañhitá, 31 fasci. | | 19 | 6 |
| Taittiríya Aranyaka, 11 fasci. | | 6 | 14 |
| Maitri Upanishad, 3 fasci. | | 1 | 14 |
| As'valáyana Grihya Sútra, 4 fasci. | | 2 | 8 |
| Mímáñsá Darsana, 14 fasci. | | 8 | 12 |
| Tándya Bráhmana, 19 fasci. | | 11 | 14 |
| Gopatha Bráhmana, 2 fasci. | | 1 | 10 |
| Atharvana Upanishads, 5 fasci. | | 3 | 2 |
| Agni Puráṇa, 14 fasci. | | 8 | 12 |
| Sáma Veda Sañhitá, 37 fasci. | | 23 | 12 |
| Gopála Tápani, 1 fasci. | | 0 | 10 |
| Nrisiñha Tápani, 3 fasci. | | 1 | 14 |
| Chaturvarga Chintámani, 36 fasci. | | 22 | 8 |
| Gobhilíya Grihya Sútra, 10 fasci. | | 6 | 4 |
| Pingala Chhandah Sútra, 3 fasci. | | 1 | 14 |
| Taittiríya Prátis'ákhya, 3 fasci. | | 1 | 14 |
| Prithiráj Rásu, by Chand Bardai, 4 fasci. | | 2 | 8 |
| Rájatarangini, | | 4 | 0 |
| Mahábhárata, vols. III. and IV., | | 40 | 0 |
| Puráṇa Sangraha, | | 1 | 0 |
| Páli Grammar, 2 fasci. | | 1 | 4 |
| Aitareya Aranyaka of the Rig Veda, 5 fasci. | | 3 | 2 |
| Chhándogya Upanishad, English, 2 fasci. | | 1 | 4 |
| Sáñkhya Aphorisms, English, 2 fasci. | | 1 | 4 |
| Sáhitya Darpana, English, 4 fasci. | | 2 | 8 |
| Brahma Sútra, English, | | 1 | 0 |
| Kátantra, 6 fasci. | | 6 | 0 |
| Kámandakíya Nítisára, 4 fasci. (Fasci. 1, out of stock.) | | 2 | 8 |
| Bhámatí, 7 fasci. | | 4 | 6 |
| Aphorisms of Sándilya, English, Fasci. I., | | 10 | 0 |
| Váyu Puráṇa, 3 fasci. | | 1 | 14 |

Dictionary of Arabic Technical Terms, 20 fasci., complete, ........ Rs. 21 [illegible]
Risálah-i-Shamsiyah, (Appendix to Do. Do.), ........ 1 [illegible]
Fihrist Túsí, 4 fasci. ........ [illegible] 0
Nukhbat-ul-Fikr, ........ [illegible] [illegible]
Futúh-ul-Shám, Wáqidí, 9 fasci. ........ [illegible] [illegible]
Futúh-ul-Shám, Azadí, 4 fasci. ........ [illegible] [illegible]
Maghází of Wáqidí, 5 fasci. ........ [illegible] [illegible]
Isábah, 28 fasci., with supplement, ........ 20 [illegible]
Táríkh-i-Fírúz Sháhí, 7 fasci. ........ 4 [illegible]
Táríkh-i-Baihaqí, complete in 9 fasci. ........ [illegible] [illegible]
Muntakhab-ut-Tawáríkh, vols. I. II. and III., complete in 15 fasci. ........ 9 [illegible]
Wís o Rámín, 5 fasci. ........ [illegible] [illegible]
Iqbálnámah-i-Jahángírí, complete in 3 fasci. ........ [illegible] [illegible]
'Álamgírnámah, 13 fasci., with index, ........ [illegible] [illegible]
Pádsháhnámah, 19 fasci., with index, ........ 11 14
Muntakhab-ul-Lubáb, by Kháfí Khán, 19 fasci., with index, ........ 12 12
Áín-i-Akbarí, Persian text, 4to., 22 fasci. ........ 27 [illegible]
Áín-i-Akbarí, English translation by H. Blochmann, M. A., vol. I, ........ [illegible] [illegible]
Farhang-i-Rashídí, 14 fasci., complete, ........ [illegible] [illegible]
Nizámí's Khiradnámah-i-Iskandarí, 2 fasci. complete, ........ [illegible] [illegible]
Akbarnámah, 17 fasci. with Index, ........ 20 [illegible]
Maásir-i-'Álamgírí, by Muhammad Sáqí, complete, 6 fasci., with index, ........ 3 12
Haft Ásmán, history of the Persian Masnawí, ........ [illegible] [illegible]
Tabaqát-i-Náçirí, English translation, by Raverty, 10 fasci. ........ 10 [illegible]
Tabaqát-i-Náçirí, Persian text, 5 fasci. ........ [illegible] [illegible]

## MISCELLANEOUS.

Journal of the Asiatic Society of Bengal from vols. XII to XVII, 1843-48, vols. XIX to XXI, 1850-52, to Subscribers at Re. 1 per number and to non-subscribers at Re. 1-8 per number; vols. XXVI, XXVII, 1857-58, and vols. XXXIII to XLVII, 1864-78, to Subscribers at 1-8 per number and to non-subscribers at Rs. 2 per number.

Asiatic Researches, vols. VII. to XI. and vols. XVII. to XX. each, ........ Rs. 16 [illegible]
Do. Do. Index, ........ 5 [illegible]
Catalogue of Fossil Vertebrata, ........ [illegible] [illegible]
——— of Arabic and Persian Manuscripts, ........ [illegible] [illegible]
Tibetan Dictionary, ........ 10 0
——— Grammar, ........ 8 0
Notices of Sanskrit Manuscripts, 14 fasci. ........ 14 [illegible]
Istiláhát-i-Súfiyah. Edited by Dr. A. Sprenger, 8vo. ........ 1 [illegible]
Jawámí' ul-'ilm ir-riyází, 168 pages with 17 plates, 4to. ........ [illegible] [illegible]
Aborigines of India, by B. H. Hodgson, ........ [illegible] [illegible]
Examination and Analysis of the Mackenzie Manuscripts, by the Rev. W. Taylor, ........ [illegible] [illegible]
Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis, ........ 1 [illegible]
'Ináyah, a Commentary on the Hidáyah, Vols. II. IV., ........ 16 [illegible]
Analysis of the Sher Chin, by Alexander Csoma de Körös, ........ [illegible] [illegible]
Khazánat-ul-'ilm, ........ [illegible] [illegible]
Sharáyat-ul-Islám, ........ [illegible] [illegible]
Anís-ul-Musharrihín, ........ [illegible] [illegible]
Catalogue Raisonné of the Society's Sanskrit MSS. Part I, Grammar, ........ [illegible] [illegible]

# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, No. 470.



# मीमांसादर्शनम् ।

## श्रीशबरस्वामिकृतभाष्यसहितम् ।

## उत्तरार्द्धम् ।

---

# THE MI'MA'ÑSA' DARS'ANA,

WITH THE COMMENTARY OF

S'AVARA SVÁMIN.

EDITED BY

Mahes'achandra Nyáyaratna.

FASCICULUS XVI.

---

CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1881.

# मीमांसा-दर्शने

१० अध्याये ७ पादः ।



ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदाधिकरणम् ॥

सू० पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥ (पू०)॥

भा० अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः,—'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्र संशयः,—किं कृत्स्नः पशुरेकं हविः, उत प्रत्यङ्गं हविर्भेदः ?—इति । किं प्राप्तं ?। कृत्स्नः पशुरेकं हविः—इति । कुतः ?। समस्तस्य 'चोदितत्वात्',—समस्तो हि पशुरग्नीषोमौ प्रति चोद्यते, न पृथक् अङ्गानाम् अग्नीषोमीयता । तस्मात् पश्वाकृतिकात् द्रव्यात् अवदाय अग्नीषोमाभ्यां दातव्यम् । अङ्गहविष्ट्वे पशुशब्दे लक्षणा स्यात्; तस्मात् कृत्स्नः पशुरेकं हविः । तच्च दर्शयति,—'अथो खल्वाहुः कापेया दक्षिणस्य पूर्वं पदस्यावदेयं, तत्सर्वस्य पशोरवत्तं भवति इति । अथो खल्वाहुः गोपायना दक्षिणस्य पूर्वं पदस्यावदेयं, तत्सर्वस्य पशोरवत्तं भवति' इति कृत्स्नस्य पशोरवदानं दर्शयति । तस्मादपि कृत्स्नः पशुरेकं हविरिति ॥

सू० प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्प्रकल्पनत्वात् ॥ २ ॥ (सि०) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,—नैतदस्ति,—कृत्स्नः पशुरेकं हविः-

इति; किन्तर्हि, 'प्रत्यक्षं' हविर्भेदः। कुतः?। 'पृथक्प्रकल्पनत्वात्',—पृथगङ्गानि प्रकल्प्यन्ते,—'हृदयस्याग्रेऽवद्यति जिह्वाया अवद्यति वक्षसोऽवद्यति श्रोण्योरवद्यति पार्श्वयोरवद्यति गुदस्यावद्यति;* हृदयाकृतिकादिभ्योऽवदानं श्रूयते, नैतत् अविशसिते पशौ सम्भवति। तस्मात् हृदयाद्यर्थेन विशसितव्यः पशुः, तस्मिंश्च विशस्यमाने पश्वाकृतिर्न भवति; तदेवम् आपतति,—पश्वाकृत्या यागस्य क्रियमाणस्योपकुर्य्यात्, तां पश्वाकृतिम् अन्तर्धाय च न शक्यते साक्षात् यागद्रव्यं परिच्छेत्तुं; तस्मात् प्रणाड्या सा आकृतिः उपकर्त्तुम् अर्हतीति पश्वाकृतिकस्य द्रव्यस्य हृदयादीनि यानि, तानि हवींषि, तेभ्योऽवदाय प्रदातव्यमिति, 'चमसवत्',—यथा, सोमे 'ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति; आश्विनं गृह्णाति' इति पृथक्कल्पनत्वात् सोमरसो हविः न सोमलता, एवम् अत्रापि द्रष्टव्यं। समस्तचोदना तु अनेकहविष्ट्वेऽपि प्रणाड्या अवकल्पत एव। अथ यद्दर्शनमुक्तं, तत् सुतरामनेकहविष्ट्वे उपपद्यते। कथं?। कृत्स्नस्य पशोरवदानम् अन्येन अनुजिघृक्षन् न कृत्स्नस्य पशोरवदीयते—इति दर्शयति॥ (१०।७।१अ०)॥

---

पशोर्हृदयादिभिरेवाङ्गविशेषैः यागानुष्ठानाधिकरणम्॥

सू० हविर्भेदात् कर्म्मणोऽभ्यासः तस्मात्तेभ्योऽवदानं स्यात्॥ २॥ (पू०)॥

भा० प्रत्यक्षं हविर्भेद इत्येतत् समधिगतम्। इदमिदानीं सन्दिह्यते,—

---

* अत्र 'इति' इतिपदं पतितमिव प्रतिभाति। क० स० पु० पुस्तके एवं का० च० पुस्तके च 'जिह्वाया अवद्यति वक्षसोऽवद्यति' इत्यंशो नास्ति। एवं चादर्शपुस्तके 'गुदस्य' इत्यत्र 'गुदायाः' इति पाठः।

किं, येन-केनचिदङ्गेन हविषा यागो निर्वर्त्तयितव्यः, उत, सर्वेभ्यो-ऽवदातव्यम्, अथ वा परिसङ्ख्या,—केनचित्?—इति। किं प्राप्तं?। सर्वेभ्यो-ऽवदातव्यम् इत्यवदानकर्म्म अभ्यसितव्यम् इति। कुतः?। 'हविर्भेदात्',—भिन्नानि हवींषि हृदयादीनि यानि अवदाने सङ्कीर्त्तितानि, अवशिष्टानि च पश्वाकृत्या प्रणाड्या परिच्छिन्नानि, तेभ्यः सर्वेभ्यो-ऽवदातव्यं, पश्वाकृत्या हि केचिद्विशेषाः परिच्छिद्यन्ते, तत् यदि एकस्मात् अङ्गात् अवदीयेत, न पश्वाकृतिपरिच्छिन्नाः सर्वे विशेषा उपसंगृह्येरन्, तच्च पश्वाकृत्या अङ्गभावो न कृतः स्यात्, अनेक-विशेषणविशिष्टं हि मांसराशिं परिच्छिन्दती अङ्गभावं नीता भवति, नान्यथा; एकहविष्ट्वे हि पश्वाकृतिपरिच्छिन्नाङ्गराशेः सर्वावदाना-नभ्यासेनैव यथाश्रुतादेव अवत्तं भवति। पृथक्प्रकल्पितेषु अङ्गेषु एकस्मादङ्गात् अवद्यन् कांश्चित् विशेषान् जह्यात्, अभ्यस्यंस्तु अवदानानि सर्वान् विशेषान् परिगृह्णाति;—'तस्मात्' सर्वेभ्योऽवदातव्यमिति।

आह,—'ननु पश्वाकृतिपरिच्छिन्नानां विशेषाणां यागार्थत्वात् अन्यतमेन यागः सिध्येत्'। उच्यते,—सिध्येदेव, यदि विशेषाणां यागसम्बन्धः श्रूयेत; पश्वाकृतेस्तु श्रूयते; तस्माद्विशेषेषु गृह्यमाणेषु अङ्गभावः कृतो भवतीति तदर्थं प्रयोगवचनेन विशेषा गृह्यन्ते, नावगम्यते विशेषः,—को वा विशेषो गृहीतः को वा नेति, अतः सर्वे गृह्यन्ते प्रयोगवचनानुग्रहाय, यस्य विशेषो न गृहीतः तेन विनापि यथाश्रुतमेव भवतीति कल्प्यमाने तस्य पश्वाकृत्या परिच्छेदे न कश्चिदप्यधिकोऽर्थोऽङ्गीकृतो भवतीति अनादरस्तं प्रत्याश्रितः स्यात्। तस्मात् सर्वेभ्योऽवदेयं हृदयादिभ्योऽवशिष्टाच्चेति॥

कुतः ?। प्रकृतौ तेन दर्शनादुपावहरणस्य,—ज्योतिष्टोमे यस्मिन् मीयते तेनैव उपावहरणं क्रियते, प्रकृतिवच्च विकृतौ, चोदकानुग्रहाय तस्मिन्नेव काले उत्पाद्यमिति ॥

सू० हरणे वा श्रुत्यसंयोगादर्थाद्विकृतौ तेन ॥ ७९ ॥ (सि०) ॥

भा० न चैतदस्ति,—मानं प्रति उत्पाद्यम् इति, किन्तर्हि, हरणं प्रति उत्पाद्यं। कथं ?। 'श्रुत्यसंयोगात्',—न हि श्रूयते,—मानं प्रति उत्पाद्यम्—इति; श्रुत्यभावाच्च नैकान्ततोऽध्यवसीयते,—अर्थैवेति; अस्य चार्थः प्रयोजकः, तत्प्रयोजनप्रयुक्तत्वात् तत्काल एव न्याय्यः, न अन्यकालः—इति; हरणकाले चानेन प्रयोजनमिति हरणे एव न्याय्यम् उत्पादयितुमिति। यदुक्तं,—'प्रकृतौ माने यत् वाससः हरणे दर्शनात्, इह चोदकानुग्रहाय तत्कालमेवोत्पाद्यम्'—इति, तत्परिहर्त्तव्यम्,—अथोच्यते,-न श्रूयते,—तेनैव वाससा उपावहरणं कर्त्तव्यमिति, किन्तु अर्थात् तेन क्रियते, एकत्वात् अश्वः, न हि तदा सोऽन्यत्र व्यापृतमिति तेनैव क्रियते; यच्च अर्थात् कृतं, न तत् चोदकः प्रापयति, अवाचनिकत्वात्; न च, इह तदेव वास उभयार्थं सम्भवति, अहर्वकृत्वात्; तस्मात् हरणकाले एव उत्पाद्यमिति ॥ (१०।६।२२ अ०) ॥

इति भट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये दशमस्याध्यायस्य षष्ठः पादः ॥०॥

---

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

**THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.**

57 and 59, Ludgate Hill, London, E. C.

## BIBLIOTHECA INDICA.

*Sanskrit Series.*

| | | | |
|---|---|---|---|
| Chaitanya-chandrodaya, Nátaka, 3 fasci. | Rs. | 1 | 14 |
| Srauta Sútra, *As'valáyana*, 11 fasci. | | 6 | 14 |
| ——— Látyáyana, 9 fasci. | | 5 | 10 |
| S'ankara Vijaya, 3 fasci. | | 1 | 14 |
| Daśa-rúpa, 3 fasci. | | 1 | 14 |
| Kaushitaki Bráhmanopanishad, 2 fasci. | | 1 | 4 |
| Sánkhya-sára, 1 fasci. | | 0 | 10 |
| Lalita-vistara, 6 fasci. | | 3 | 12 |
| Taittiriya Bráhmaṇa, 24 fasci. | | 15 | 0 |
| Taittiriya Sañhitá, 31 fasci. | | 19 | 6 |
| Taittiriya Araṇyaka, 11 fasci. | | 6 | 14 |
| Maitri Upanishad, 3 fasci. | | 1 | 14 |
| *As'valáyana* Grihya Sútra, 4 fasci. | | 2 | 8 |
| Mímáñsá Darsana, 14 fasci. | | 8 | 12 |
| Táṇḍya Bráhmaṇa, 19 fasci. | | 11 | 14 |
| Gopatha Bráhmaṇa, 2 fasci. | | 1 | 10 |
| Atharvana Upanishads, 5 fasci. | | 3 | 2 |
| Agni Puráṇa, 14 fasci. | | 8 | 12 |
| Sáma Veda Sañhitá, 37 fasci. | | 23 | 12 |
| Gopála Tápaní, 1 fasci. | | 0 | 10 |
| Nrisiñha Tápaní, 3 fasci. | | 1 | 14 |
| Chaturvarga Chintámani, 36 fasci. | | 22 | 8 |
| Gobhiliya Grihya Sútra, 10 fasci. | | 6 | 4 |
| Piñgala Chhandah Sútra, 3 fasci. | | 1 | 14 |
| Taittiriya Prátis'ákhya, 3 fasci. | | 1 | 14 |
| Prithiráj Rásu, by Chand Bardai, 4 fasci. | | 2 | 8 |
| Rájataraṅgiṇi, | | 4 | 0 |
| Mahábhárata, vols. III. and IV., | | 40 | 0 |
| Puráṇa Sangraha, | | 1 | 0 |
| Páli Grammar, 2 fasci. | | 1 | 4 |
| Aitareya Araṇyaka of the Rig Veda, 5 fasci. | | 3 | 2 |
| Chhándogya Upanishad, English, 2 fasci. | | 1 | 4 |
| Sánkhya Aphorisms, English, 2 fasci. | | 1 | 4 |
| Sahitya Darpana, English, 4 fasci. | | 2 | 8 |
| Brahma Sútra, English, | | 1 | 0 |
| Kátantra, 6 fasci. | | 6 | 0 |
| Kámandakiya Nitisára, 4 fasci. (Fasci. 1, out of stock.) | | 2 | 8 |
| Bhámatí, 7 fasci. | | 4 | 6 |
| Aphorisms of Sandilya, English, Fasci. 1., | | 10 | 0 |
| Vayu Purána, 3 fasci. | | 1 | 14 |

### *Arabic & Persian Series.*

| | | |
|---|---|---|
| Dictionary of Arabic Technical Terms, 20 fasci., complete, ........................ Rs. | 25 | 8 |
| Risálah-i-Shamsiyah, (Appendix to Do. Do.), .................................... | 1 | 4 |
| Fihrist Túsí, 4 fasci. .................................................................. | 3 | 0 |
| Nukhbat-ul-Fikr. ....................................................................... | 0 | 10 |
| Futúh-ul-Shám, Wáqidí, 9 fasci. ................................................ | 3 | 10 |
| Futúh-ul-Shám, Azadí, 4 fasci. .................................................. | 2 | 8 |
| Maghází of Wáqidí, 5 fasci. ....................................................... | 3 | 2 |
| Isábah, 28 fasci., with supplement, ............................................. | 20 | 11 |
| Táríkh-i-Fírúz Sháhí, 7 fasci. .................................................... | 4 | 0 |
| Táríkh-i-Baihaqí, complete in 9 fasci. .......................................... | 5 | 10 |
| Muntakhab-ut-Tawáríkh, vols. I. II. and III., complete in 15 fasci. ........... | 9 | 6 |
| Wís o Rámín, 5 fasci. ................................................................ | 2 | 2 |
| Iqbálnámah-i-Jahángírí, complete in 3 fasci. .................................. | 1 | 14 |
| 'Álamgírnámah, 13 fasci., with index, .......................................... | 8 | 2 |
| Pádsháhnámah, 19 fasci., with index, .......................................... | 11 | 14 |
| Muntakhab-ul-Lubáb, by Kháfí Khán, 19 fasci., with index, .................... | 12 | 12 |
| Áín-i-Akbarí, Persian text, 4to., 22 fasci. .................................... | 27 | 8 |
| Áín-i-Akbarí, English translation by H. Blochmann, M. A., vol. I, ............ | 12 | 8 |
| Farhang-i-Rashídí, 14 fasci., complete, ....................................... | 17 | 8 |
| Nizámí's Khiradnámah-i-Iskandarí, 2 fasci. complete, ........................ | 2 | 0 |
| Akbarnámah, 17 fasci. with Index, .............................................. | 20 | 0 |
| Maásir-i-'Álamgírí, by Muhammad Sáqí, complete, 6 fasci., with index, ....... | 3 | 12 |
| Haft Ásmán, history of the Persian Masnawí, .................................. | 1 | 8 |
| Tabaqát-i-Náçirí, English translation, by Raverty, 10 fasci. ................. | 10 | 0 |
| Ṭabaqát-i-Náçirí, Persian text, 5 fasci. ....................................... | 3 | 2 |

## MISCELLANEOUS.

Journal of the Asiatic Society of Bengal from vols. XII to XVII, 1843-48, vols. XIX to XXI, 1850-52, to Subscribers at Re. 1 per number and to non-subscribers at Re. 1-8 per number; vols. XXVI. XXVII. 1857-58, and vols. XXXIII to XLVII, 1864-78, to Subscribers at 1-8 per number and to non-subscribers at Rs. 2 per number.

| | | |
|---|---|---|
| Asiatic Researches, vols. VII. to XI. and vols. XVII. to XX. each, ....Rs. | 10 | 0 |
| Do. Do. Index, .............................................................. | 5 | 0 |
| Catalogue of Fossil Vertebrata, ................................................ | 2 | 0 |
| ——— of Arabic and Persian Manuscripts, ..................................... | 1 | 0 |
| Tibetan Dictionary, ............................................................ | 10 | 0 |
| ——— Grammar, ................................................................ | 8 | 0 |
| Notices of Sanskrit Manuscripts, 14 fasci. .................................... | 14 | 0 |
| Istiláhát-i-Súfiyah. Edited by Dr. A. Sprenger, 8vo. ........................ | 1 | 0 |
| Jawámi' ul-'ilm ir-riyází, 168 pages with 17 plates, 4to. .................... | 2 | 0 |
| Aborigines of India, by B. H. Hodgson, ........................................ | 3 | 0 |
| Examination and Analysis of the Mackenzie Manuscripts, by the Rev. W. Taylor, | 2 | 0 |
| Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis, ................ | 1 | 0 |
| 'Ináyah, a Commentary on the Hidáyah, Vols. II. IV., ........................ | 16 | 0 |
| Analysis of the Sher Chín, by Alexander Csoma de Körös, ..................... | 1 | 0 |
| Khazánat-ul-'ilm, ................................................................ | 1 | 0 |
| Sharáyat-ul-Islám, ............................................................. | 4 | 0 |
| Anís-ul-Musharrihín, ............................................................ | 3 | 0 |
| Catalogue Raisonné of the Society's Sanskrit MSS. Part I, Grammar, ......... | 2 | 0 |

# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, No. 470.



# मीमांसादर्शनम् ।
## श्रीशवरस्वामिकृतभाष्यसहितम् ।
## उत्तरार्द्धम् ।

---

# THE MI'MA'ÑSA' DARS'ANA,

WITH THE COMMENTARY OF

S'AVARA SVA'MIN.

EDITED BY

Mahes'achandra Nyáyaratna.

FASCICULUS XVI.

---

CALCUTTA:

PRINTED BY J. W. THOMAS, BAPTIST MISSION PRESS.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1881.

# मीमांसा-दर्शने

## १० अध्याये ७ पादः ।



ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदाधिकरणम् ॥

सू० पशोरेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥(पू०)॥

भा० अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः,—'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्र संशयः,—किं कृत्स्नः पशुरेकं हविः, उत प्रत्यङ्गं हविर्भेदः ?—इति । किं प्राप्तं ?। कृत्स्नः पशुरेकं हविः—इति । कुतः ?। समस्तस्य 'चोदितत्वात्',—समस्तो हि पशुरग्नीषोमौ प्रति चोद्यते, न पृथक् अङ्गानाम् अग्नीषोमीयता । तस्मात् पश्वाकृतिकात् द्रव्यात् अवदाय अग्नीषोमाभ्यां दातव्यम् । अङ्गहविष्ट्वे पशुशब्दे लक्षणा स्यात्; तस्मात् कृत्स्नः पशुरेकं हविः । तच्च दर्शयति,—'अथो खल्वाहुः कापेया दक्षिणस्य पूर्वं पदस्यावदेयं, तत्सर्वस्य पशोरवत्तं भवति इति । अथो खल्वाहुः गोपायना दक्षिणस्य पूर्वं पदस्यावदेयं, तत्सर्वस्य पशोरवत्तं भवति' इति कृत्स्नस्य पशोरवदानं दर्शयति । तस्मादपि कृत्स्नः पशुरेकं हविरिति ॥

सू० प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्प्रकल्पनत्वात् ॥ २ ॥ (सि०) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,—नैतदस्ति,—कृत्स्नः पशुरेकं हविः-

इति; किन्तर्हि, 'प्रत्यङ्गं' हविर्भेदः। कुतः?। 'पृथक्प्रकल्पनत्वात्',—पृथगङ्गानि प्रकल्पन्ते,—'हृदयस्याग्रेऽवद्यति जिह्वाया अवद्यति वक्षसोऽवद्यति दोष्णोरवद्यति पार्श्वयोरवद्यति गुदस्यावद्यति;* हृदयाहुतिकादिभ्योऽवदानं श्रूयते, नैतत् अविशसिते पशौ सम्भवति। तस्मात् हृदयाद्यर्थेन विशसितव्यः पशुः, तस्मिंश्च विशस्यमाने पश्वाहुतिर्न भवति; तदेवम् आपतति,—पश्वाहुत्या यागस्य क्रियमाणस्योपकुर्य्यात्, तां पश्वाहुतिम् अन्तर्धाय च न शक्यते साक्षात् यागद्रव्यं परिच्छेत्तुं; तस्मात् प्रणाड्या सा आहुतिः उपकर्त्तुम् अर्हतीति पश्वाहुतिकस्य द्रव्यस्य हृदयादीनि यानि, तानि हवींषि, तेभ्योऽवदाय प्रदातव्यमिति, 'ग्रहवत्',—यथा, सोमे 'ऐन्द्रवायवं गृह्णाति, मैत्रावरुणं गृह्णाति; आश्विनं गृह्णाति' इति पृथक्कल्पनत्वात् सोमरसो हविः न सोमलता, एवम् अत्रापि द्रष्टव्यं। समस्तपोर्हना तु अङ्गहविष्ट्वेऽपि प्रणाड्या अवकल्पत एव। अथ यद्दर्शनमुक्तं, तत् सुतरामनेकहविष्ट्वे उपपद्यते। कथं?। कृत्स्नस्य पशोरवदानम् अन्येन अनुजिघृक्षन् न कृत्स्नस्य पशोरवदीयते—इति दर्शयति ॥ (१०।७।१अ०) ॥

---

पशोर्हृदयादिभिरेवाङ्गविशेषैः यागानुष्ठानाधिकरणम् ॥

सू० हविर्भेदात् कर्म्मणोऽभ्यासः तस्मात्तेभ्योऽवदानं स्यात् ॥ ३ ॥ (पू०) ॥

भा० प्रत्यङ्गं हविर्भेद इत्येतत् समधिगतम्। इदमिदानीं सन्दिह्यते,—

---

* अत्र 'इति' इतिपदं पतितमिव प्रतिभाति। क० स० पु० पुस्तके एवं का० ए० पुस्तके च 'जिह्वाया अवद्यति वक्षसोऽवद्यति' इत्यंशो नास्ति। एवं आदर्शपुस्तके 'गुदस्य' इत्यत्र 'गुदस्य' इति पाठः।

किं, येन-केनचिदङ्गेन हविषा यागो निर्वर्त्तयितव्यः, उत, सर्वेभ्यो-ऽवदातव्यम्, अथ वा परिसङ्ख्या,—केनचित्?—इति। किं प्राप्तं?। सर्वेभ्यो-ऽवदातव्यम् इत्यवदानकर्म्म अभ्यसितव्यम् इति। कुतः?। 'हविर्भेदात्', —भिन्नानि हवींषि हृदयादीनि यानि अवदाने सङ्कीर्त्तितानि, अवशिष्टानि च पश्वाकृत्या प्रणाड्या परिच्छिन्नानि, तेभ्यः सर्वेभ्यो-ऽवदातव्यं, पश्वाकृत्या हि केचिद्विशेषाः परिच्छिद्यन्ते, तत् यदि एकस्मात् अङ्गात् अवदीयेत, न पश्वाकृतिपरिच्छिन्नाः सर्वे विशेषा उपसंगृह्येरन्, तच पश्वाकृत्या अङ्गभावो न कृतः स्यात्, अनेक-विशेषणविशिष्टं हि मांसराशिं परिच्छिन्दती अङ्गभावं नीता भवति, नान्यथा; एकहविष्ट्वे हि पश्वाकृतिपरिच्छिन्नाङ्गराशेः सर्वावदाना-नभ्यासेनैव यथाश्रुतादेव अवत्तं भवति। पृथक्प्रकल्पितेषु अङ्गेषु एकस्मादङ्गात् अवद्यन् कांश्चित् विशेषान् जह्यात्, अभ्यस्यंस्तु अवदानानि सर्वान् विशेषान् परिगृह्णाति;—'तस्मात्' सर्वेभ्योऽवदातव्यमिति।

आह,—'ननु पश्वाकृतिपरिच्छिन्नानां विशेषाणां यागार्थत्वात् अन्यतमेन यागः सिध्येत्'। उच्यते,—सिध्येदेव, यदि विशेषाणां यागसम्बन्धः श्रूयेत; पश्वाकृतेस्तु श्रूयतेः; तस्माद्विशेषेषु गृह्यमाणेषु अङ्गभावः कृतो भवतीति तदर्थं प्रयोगवचनेन विशेषा गृह्यन्ते, नावगम्यते विशेषः,—को वा विशेषो गृहीतः को वा नेति, अतः सर्वे गृह्यन्ते प्रयोगवचनानुग्रहाय, यस्य विशेषो न गृहीतः तेन विनापि यथाश्रुतमेव भवतीति कल्प्यमाने तस्य पश्वाकृत्या परिच्छेदे न कश्चिदप्यधिकोऽर्थोऽङ्गीकृतो भवतीति अनादरस्तं प्रत्याश्रितः स्यात्। तस्मात् सर्वेभ्योऽवदेयं हृदयादिभ्योऽवशिष्टाच्चेति ॥

सू० आज्यभागवद्वा निर्द्देशात् परिसङ्ख्या स्यात् ॥ ४ ॥ (उ०) ॥

भा० हृदयादिभ्योऽवदातव्यं नावशिष्टात्। कुतः?। तेषां 'निर्द्देशात्', —निर्द्दिश्यन्ते हृदयादीनि,—'एकादश वैतानि पशोरवदानानि' इति। तत्र प्राप्तत्वादेवैषामेष विधिर्न सम्भवति इति; आनर्थक्यात् नानुवादः; निर्गुणस्य पुनःश्रवणमिति इतरेषामश्रुतानां परिसङ्ख्यायकं भवति। यथा, न गन्तव्यं न भोक्तव्यमिति च विस्पष्टं प्रतिषेधः, एवमेव परिसङ्ख्यायां प्रतिषेधः क्रियते; 'आज्यभागवत्',—यथा गृहमेधीये, पञ्चमे पक्षे आज्यभागग्रहणं परिसङ्ख्यार्थमित्युक्तम्, एवमिहापि प्राप्नोति। तस्मात् परिसङ्ख्येति ॥

सू० तेषां वा द्व्यवदानत्वं विवक्षन्नभिनिर्द्दिशेत् पशोः पञ्चावदानत्वात् ॥ ५ ॥ (पुनः पू०) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,—न चैतदस्ति,—परिसङ्ख्येति, तत्र हि त्रयो दोषाः,—स्वार्थप्रहाणं, परार्थकल्पना, प्राप्तबाधश्च*। यदुक्तं,—निर्द्देशादिति, नैतदेवं, 'तेषां' (हृदयादीनां) 'द्व्यवदानत्वं विवक्षन् अभिनिर्द्दिशेत्', नैवं वचनव्यक्तिर्भवति,—एकादशैव पशोरवदानानि, नाभ्यधिकानि, यानि अवदानानि तानि द्विर्द्विरवद्यति—इति, कथन्तर्हि, एकादश द्विर्द्विरवद्यति—इति। कुतः?। नात्र अवदानम् अनूद्यते, अप्राप्तत्वात्। कथम् अप्राप्तिः?। 'पशोः पञ्चावदानत्वात्', पञ्चावदानत्वं हि पशोः श्रूयते; तस्मात् नानुवादः,—एतानि द्विर्द्विरवद्यतीति;

* सर्व्वेष्वेव पुस्तके 'बाध' इत्येव पाठः न तु बाध इति ।

एतेषां द्विरवदानं विधाय कृतार्थः शब्दो भवति, अवशिष्टानां त्यागं न वारयति। तस्मात् सर्वेभ्योऽवदेयमिति॥

सू॰ अंसशिरोनूकसक्थिप्रतिषेधश्च तदन्यपरिसङ्ख्याने-ऽनर्थकः स्यात् प्रदानत्वात्* तेषां निरवदान-प्रतिषेधः स्यात्॥ ६॥ (यु॰)॥

भा॰ इतश्च न परिसङ्ख्या। कुतः?। अंसशिरोनूकसक्थिप्रति-षेधात्, एवमेतेषां प्रतिषेध उपपद्यते, यदि न परिसङ्ख्यानं भवति, भवति च सः;—'नांसयोरवद्यति न शिरसो नानूकस्य नापरसक्थ्योः'—इति। परिसङ्ख्याने अंसशिरोनूकसक्थ्नां प्रतिषेधोऽनर्थकः स्यात्। अथ तु न परिसङ्ख्या, ततः 'प्रदानत्वात्' यानि अंसादीनि, 'तेषां' निरवदानं प्रतिषिध्यते। किमिदं निरवदानम्? इति। निष्कृष्य तस्मात् अङ्गात् अवदानं निरवदानं, 'द्विरवद्यति' इति तत् प्रतिषिध्यते इति, अतः सर्वैरेवाङ्गैः इज्या क्रियते इति॥

सू॰ अपि वा परिसङ्ख्या स्यादनवदानीयशब्दत्वात्॥ ॥ ७॥ (सि॰)॥

भा॰ अपि वेति पक्षव्यावृत्तिः,—'परिसङ्ख्या' एव 'स्यात्', नैव सर्वेभ्योऽवदातव्यं। कुतः?। पुनःश्रवणस्यार्थवत्त्वात्। 'ननु' त्रिदोषा परिसङ्ख्येत्युक्तं। उच्यते,—नायमयं दोषो भवति। कथम्?। अवदानं हि चोदकेन होमार्थं प्राप्नोति, इह तस्य हृदयादिभिः सम्बन्धः क्रियते; तेन हृदयादीनि वाक्येन होमसम्बद्धानि भवन्ति, नान्यानि

---

* 'प्रदानव्यःपत्यात्' इति पादर्भपुस्तकपाठः।

अङ्गानि पश्वाकृतेर्दैवतासम्बन्धीनि। न च, एतस्मिन् प्रत्यक्षे हृदया-दिवाक्ये सति पश्वाकृतेर्दैवतासम्बन्धोऽन्येषाम् अङ्गानां होमसाधनत्वेनोपपद्यते, हृदयादिष्वपि एवमाकृतिकात् उद्ध्रियमाणेषु आकृतेर्दैवतासम्बन्ध उपपद्यत एव। तस्मादन्यानि अङ्गानि परिसङ्ख्यायन्ते।

अपि च अनवदानीयशब्दो भवति,—'मातृत्यान् अनवदानीयान् सुरायशांश्च आजिसृत्भ्यो हरति' इति। यदि परिसङ्ख्या, ततः किञ्चिदङ्गमनवदानीयं भवति, इतरथा सर्वम् अवदानीयं स्यात्, अनवदानीयशब्दो नोपपद्येत; तस्मात् परिसङ्ख्येति। 'ननु उटङ्खुराभिप्रायमनवदानीयं भविष्यति'। नेत्युच्यते, अनवदानीयं हि तत्, अनवदानीयहरणे 'आजिसृत्भ्यः' इति चतुर्थी नोपपद्यते; न हि, उटङ्खुरेण आजिसृतोऽभिप्रेयन्ते। 'स्यादेतत्, परिक्रयार्थं तत् भविष्यतीति'। उक्तमेतत्,—न देवताद्रव्येण स्वकार्याणि कर्त्तव्यानि—इति। तस्मान्न उटङ्खुराभिप्रायम्॥

सू० अब्राह्मणे च दर्शनात्॥ ८॥ (यु०१)॥

भा० इतश्च परिसङ्ख्येति। कुतः?। 'अब्राह्मणे' हि भक्षं दर्शयति। कथं?। 'ककुभो राजपुत्रः प्राश्नाति भुवगोप'—इति ककुभो भक्षं दर्शयति। इतरथा यागे प्रवृत्तस्यादर्शनं स्यात्, सर्वप्रदानं भवेत्, निरवदानप्रतिषेधात्। तस्मादपि परिसङ्ख्येति॥

सू० शृताशृतोपदेशाच्च तेषामुत्सर्गवदयज्ञशेषत्वम्॥९॥ (यु०२)॥

भा० इतश्च परिसङ्ख्येति। कुतः?। 'शृताशृतोपदेशात्',—शृता-

हूतोपदेशो हि भवति,—'इयानि अङ्गानि अभिहृयति हुतानि अहुतानि च' इति। यदि न परिसङ्ख्या, सर्व्वेषां अपणं स्यात्, अहुतदर्शनं नोपपद्येत। परिसङ्ख्याने तु सति हृदयादिभ्योऽन्येषाम् 'अयश्चश्रेपणं', यथा 'पर्य्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति; तेषां तत्र अपणं न स्यात्, अहुतदर्शनं चोपपद्यते। तस्मादपि परिसङ्ख्येति॥ (१०।७।२अ०) ॥

---

ज्योतिष्टोमेऽनिड्याशेषैरङ्गैः स्विष्टकृदोमाधिकरणम् ॥

सू० इड्याशेषात् स्विष्टकृदिज्येत प्रकृतिवत् ॥ १० ॥ (पू०) ॥

भा० अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः,—'यो दीक्षितो यदग्नीषोमीयं पशुमालभेत'—इति। अस्ति तत्र चोदकप्राप्तः स्विष्टकृत्; इहैवं श्रूयते,—'अङ्गैः स्विष्टकृतं यजति'—इति। तत्र संशयः,—किम्, इड्याशेषेभ्यः त्रिभ्यः अङ्गेभ्यः स्विष्टकृता यष्टव्यं, उत, अनिड्याशेषेभ्यः?। किं प्राप्तम्?। इड्याशेषेभ्यः इति। कुतः?। एवं प्रकृतिवत् शब्दानुग्रहो भविष्यति, त्रीणि अङ्गानि यानि इड्याशेषभूतानि, तेभ्य इड्यायां क्रियमाणायां विशब्दोऽप्यनुगृहीतो भवति ॥

सू० चराङ्गैर्वा शरवत् विकारः स्यात् ॥ ११ ॥ (सि०) ॥

भा० अनिड्याशेषैरङ्गैरिज्येत, एष 'विकारः स्यात्', न त्रीणि यानि-कानिचिदङ्गानि। यदि यैः—कैश्चित्त्रिभिरङ्गैरिज्या कर्त्तव्येत्यभ्युप-

गम्येत, तवाङ्गैरिति न विधीयेत, प्राप्तत्वादेव, त्रित्वार्थं* विधानं स्यात् —'त्रिभिरिज्येत' इति, तच त्रिशब्दोऽङ्गशब्देनासमर्थ एव स्यात्, असामर्थ्ये समासो नोपपद्येत।

अपि च असत्यां त्रयाणाम् अङ्गानामेकस्यां साधारण्यां क्रियायाम् एकस्मिन् वा साधारणे गुणे त्रिशब्दस्याङ्गशब्देन विशेषणविशेष्यसम्बन्धाभावात् सामर्थ्यं न विद्यते,—यानि त्रीणि अङ्गानि त्रित्वसम्बद्धानि तानि अङ्गानीति; असति विशेषे व्यवहाराभावात् साकाङ्क्षं भवति, कतमानि त्र्यङ्गानीति। 'त्वत्पक्षेऽपि कथं ?'। तदुच्यते,—समाहार एव समासः, येषां समाहार उक्त एकक्रियागुणसम्बन्धो वा, तानि त्र्यङ्गानि, एषाञ्च समाहार उच्यते,—'यत् दोष्णः पूर्वार्द्धादवद्यति, गुदस्य मध्यतः, श्रोण्या जघनतः' इति; समवदानं समाहारः, एकेन धर्मिणा गुणेन सम्बन्धः, एकया च समवद्यतिक्रियया; तस्मात् एतानि त्र्यङ्गानि, एतानि चानिज्याशेषाणि। अतो वचनप्रामाण्यात् अनिज्याशेषैस्त्र्यङ्गैः स्विष्टकृदिज्येतेति। 'शरवत्',—यथा, 'शरमयं बर्हिः'—इति वचनप्रामाण्यात् शरैः कुशा बाध्यन्ते, एवमिहापि इज्याशेषता बाधिष्यते इति।

आह,—'इज्याशेषाणां प्रतिपत्तिरेषा, न च, अन्येन इज्यायां क्रियमाणायामेतत् प्रतिपादितं भवति, तस्मात् इज्याशेषाणां कार्ये अवर्त्तमानानि न इज्याशेषविकारभूतानि भवितुमर्हन्ति'—इति। अत्रोच्यते,—यद्यपि प्रतिपाद्यन्ते तथापि नान्यथा, तस्यां निर्वृत्तौ इज्याशेषैः कर्त्तव्यायामनिज्याशेषाणि विधीयन्ते,—एतानि तत्र प्रति-

* 'त्रित्वार्थविधानम्' इति चाद्शपुस्तकपाठः।

पादयितव्यानि, एतान्यपि हि कृतकार्य्याणि प्रतिपादयितव्यान्येव; यानि तु शेषभूतानि तानीह प्रतिषिद्धानि यथाकाममन्यत्र प्रतिपादयिष्यन्ते इति॥ १०।७।११अ० ॥

---

अध्रूध्न्या इडाभक्षविकारताधिकरणम् ॥

सू० अध्रूध्नी तु होतुः चमसवत् इडाभक्षविकारः स्यात् ॥ १२ ॥ (पूर्व्वपक्षे सू०) ॥

भा० अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः,—'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति। तत्रेदमाम्नायते,—'अध्रूध्नीं होत्रे हरन्ति'*—इति। तत्रायमर्थः सांशयिकः,—किम् अध्रूध्नी† होतृभक्षस्य विकारः, उत अविकारो होतुर्नियम्यते?—इति। कथं विकारः स्यात्, कथं नियम्यते?—इति। यदि अध्रूध्नी विधीयते, 'होत्रे हरन्ति' इत्येतदनूद्यते, ततो विकारः; अथ अध्रूध्नीमुद्दिश्य 'होत्रे हरन्ति'—इति विधीयते, ततो नियमः। किं प्राप्तं?। 'होतुः' भक्षस्य 'विकारः स्यात्'। कुतः?। अपूर्व्वा अध्रूध्नी अदेवतशेषत्वात्, इड़ाभक्षे न प्राप्ता, सा न शक्या अनुवदितुम्, अतो विधीयते, होतृभागहरणेऽध्रूध्नी भवन्ती होतृहरणे प्रत्यक्षा, आनुमानिकम् इड़ाभक्षं निवर्त्तयति इति। 'चमसवत्',—यथा अनिज्याशेषैश्चमसैः इज्याशेषाणि निवर्त्तन्ते, तद्वत् ॥

---

* 'हरति' इति चादर्शपुस्तकपाठः।

† "अध्रूध्नी हृदयादिभ्योऽन्यदङ्गम" इति माधवः।

सू० शेषे वा समवैति तस्माद्रथवन्नियमः स्यात् ॥ १३ ॥
(पूर्व्वपक्षे उ०) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,—इड़ाभक्षविकारः—इति। कथं स्यादिड़ाभक्षविकारः, यद्यपूर्वा अध्र्वूभी स्यात्?। सा हि इड़ायां 'समवैति'। कथम्?। 'अनस्थिभिरिड़ां वर्द्धयन्ति' इति तस्याः हरणं प्राप्तं, होतृसम्बन्धो न प्राप्तः, स विधीयते,—याम् इमाम् अध्र्वूभीं हरन्ति, तां होत्रे नान्यस्मै इति, होत्रे सर्व्वं भक्षं कुर्वन्तीति। अपि च 'होत्रे हरन्ति'—इत्यानन्तर्यात् एकवाक्यता प्रत्यक्षा, इतरस्मिन् पक्षे, 'अध्र्वूभीं हरन्ति' इति च होतृशब्दव्यवधानात् कल्पयितव्या भवेत्। तस्मात् भागे 'नियमः', 'रथवत्', यथा, 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति रथस्य वाक्यान्तरेण प्राप्तत्वात् अव्यवधानाच्च अध्वर्युभागे नियमः, एवमिहापि होतृभागे नियमः—इति ॥

सू० अशास्त्रत्वात्तु नैवं स्यात् ॥ १४ ॥ (सि०) ॥

भा० तुशब्दः पक्षं व्यावर्त्तयति,—न भागे नियमः, इड़ाभक्षविकारः—इति। कुतः?। नास्ति शास्त्रं, येन इड़ामध्ये अध्र्वूभी स्यात्, नन्विदम् उक्तम्,—'अनस्थिभिरिड़ां वर्द्धयन्ति'—इति। उच्यते,—अनुवादस्वरूपत्वादस्य, प्राप्तत्वाच्च अनस्थिकानां वचनान्तरेण,—'अथ यद्भूम्परिशिष्यते तत्समवत्त धान्याम् आनयति तत् हृदयं प्रास्यति जिह्वां वक्षस्तनिममस्तेस्तेष्या(?) वनिष्ठुम्'* इति, अनुवाद इति मन्यते,

* आदर्शपुस्तके "अथ यद्युपरि सिच्यते" इति पाठो, अन्ते च "वक्षस्तनिममस्त्वा वनिष्ठुम्' इति पाठः। मूलपुस्तकाप्राप्त्या कोऽसौ पाठः साधुरिति नाधुना निर्णेतुं शक्यते।

न चात्र अध्रूध्नी कीर्त्त्यते; तस्मादप्राप्ता; अप्राप्ता चेत् होतृहरणमुद्दिश्य विधीयते। यत्तु,—व्यवधानात् अप्राप्तैव एकवाक्यता कल्पयितव्या—इति; अपूर्वत्वात् अध्रूध्न्या अनुवादाभावेऽनर्थकत्वपरिहाराय कल्पयिष्यामः; एवञ्च स्वपदगतं हरणं विहितं भविष्यति इति; इतरथा तु होत्रेऽध्रूध्नीसम्बन्धो विधीयेत, न स्वपदगतहरणं; तस्मादपि भक्षविकारः ॥

सू॰ अपि वा दानमात्रं स्यात् भक्षशब्दानभिसम्बन्धात् ॥ १५ ॥ (द्वि॰पू॰) ॥

भा॰ 'अपि वा' इति पक्षव्यावृत्तिः;—यदा एवं,—न वचनान्तरेण इडाभक्षेऽध्रूध्नी प्राप्ता, साऽपूर्वा हर्त्तव्या विधीयते, न तर्हि भक्षविकारः; दानमात्रमेतत् होत्रे 'अध्रूध्नीं हरन्ति' इति। नात्र भक्षशब्देन अभिसंयोगो विधीयते। तस्मान्न भक्षविकार इति ॥

सू॰ दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्यात् शेषं प्रत्यविशिष्टत्वात् ॥ १६ ॥ (उ॰) ॥

भा॰ तुशब्दः पक्षं व्यावर्त्तयति,—दानमात्रमेतत् न भक्षविकारः—इति; नैतद्दानं, 'दातुः' अभावात्, यजुर्हि एवंसंकल्पितः,—यागं वर्जयित्वा नान्यत् स्वकार्य्यम् अनेन कार्य्यमिति। तेन स्वाम्यभावात्* दानं नास्ति। कथं स्वाम्यभावः?। 'शेषं प्रत्यविशिष्टत्वात्',—शेषं प्रति यथा यजमानस्तथा होता, उभावपि न प्रभवतो द्रव्यस्येति नास्ति दानं। 'अथ कथं भक्षस्य दानभिसंयोगे भक्षः?'।

* 'स्वाम्याभावात्' इति बा॰ दर्भपुस्तके एवं क॰ सं॰ मू॰ पु॰ पाठः। एवमेव परत्रापि पाठः।

चतुर्थी तादर्थ्ये भवति, होचर्था अध्वर्युः, तया होता अभिप्रेयते, होत्रे सा होतुरुपकरोति, सा भक्ष्यमाणा सामर्थ्यजननस्य दृष्टस्य लाभाय यथा च यावत्या च मात्रया उपकारिणी भवति, तत्र चतुर्थीश्रुतिरनुगृह्यते, इतरथा हि अदृश्यमाने उपकारे चतुर्थी-श्रुतिर्बाध्येत। तस्मादिडाभक्षविकारः—इति ॥ (१०।७।४अ०) ॥

---

वनिष्ठुभक्षविकारताधिकरणम् ॥

सू० अग्नीधश्च वनिष्ठुरध्वर्युवत् ॥ १७ ॥

भा० तत्रैवाग्नीषोमीये पशौ श्रूयते,—'वनिष्ठुरग्नीधे'* इति; तत्र अधिकरणप्रदेशः, तत्र यः संशयः, स इहापि;—किं वनिष्ठुरग्नीधे, विकारो भक्षस्य, उत तस्य भागनियमः?—इति। ततः स एव पूर्वपक्षः,—अपूर्व्वत्वात् विधीयते, तस्माद्विकारः—इति। तस्य तदेव उत्तरं,—वचनान्तरेण प्राप्तत्वात् भागनियमः—इति। ततस्तदेवोच्यते,—'अनस्थिभिरिडां वर्द्धयन्ति' इति अनुपात्तत्वात् अप्राप्तो वनिष्ठु-र्विधीयते,—इति।

अत्राह,—'ननु वनिष्ठुरपि तत्र सङ्कीर्त्तनात् प्राप्त एव'—इति। अत्रोच्यते,—'वनिष्ठुं प्रास्यति'—इत्येतावत्तत्र, तेन इडायां प्रासनमात्रं तस्य विधीयते इडासंस्कारार्थेन; नासौ इडा न तस्य भक्षशब्दसंयोगः; तस्मात् प्रासनमात्रं, न तस्य भक्षे प्राप्तिः; पूर्व्वस्मिन् वचने

---

* "वनिष्ठुरपि हृदयादिव्यतिरिक्तमङ्गम्" इति माधवः।

न चतुर्थीसम्बन्धः,—तस्यैतदग्नीधे इति; चतुर्थीसम्बन्धेन भक्षणं विधीयते; तस्मात् पूर्वेण अधिकरणेन अतुल्याशङ्कायां तुल्यता सूत्रेणातिदिश्यते, सर्वेष्वेव अधिकरणप्रदेशेषु अतुल्याशङ्का निवर्त्यते॥ (१०।७।५अ०)॥

---

मैत्रावरुणस्यापि शेषभक्षाविलाधिकरणम्॥

सू० अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम्॥ १८॥ (पू०)॥

भा० अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः,—'यो दीक्षितो यदग्नीषोमीयं पशुमालभते'—इति। अस्ति तत्र मैत्रावरुण ऋत्विक्, तं प्रति सन्देहः,—किं तस्य चोदकप्राप्तः शेषभक्षोऽस्ति, न?—इति। किं प्राप्तम्?। अप्राकृतोऽसौ, न तस्य भक्षे क्रियमाणे प्रकृतिवत् कृतं भवति; तस्मात् 'अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम्'॥

सू० स्याद्वा होत्रध्वर्युविकारत्वात्तयोः कर्माभिसम्बन्धात्॥ १९॥ (सि०)॥

भा० 'स्याद्वा' मैत्रावरुणभक्षः, प्रैषेषु असौ अध्वर्युविकारः, अनुवचनेषु होतुः, 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाह'—इति, अतस्तस्य 'तयोः कर्माभिसम्बन्धात्' अर्थापत्त्या भक्षं लभते; तस्मात् सभक्षः स्यादिति॥ (१०।७।६अ०)॥

---

मैत्रावरुणस्यैकभागताधिकरणम् ॥

सू० द्विभागः स्याद् द्विकर्मत्वात् ॥ २० ॥ (पू०) ॥

भा० अथेदानीं मैत्रावरुणमेव प्रति भवति सन्देहः,—किं द्विभागो मैत्रावरुणः, उत एकभागः?—इति। किं प्राप्तं?। 'द्विभागः स्यात्',-अध्वर्युविकारत्वादध्वर्युभागं प्राप्नोति, होतृविकारत्वात् होतृभागं प्राप्नोति; तस्माद् द्विभागः स्यात् इति ॥

सू० एकत्वाद्वैकभागः स्यात् भागस्याश्रुतिभूतत्वात् ॥ २१ ॥ (सि०) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,—न द्विभागः स्यात्, 'एकभागो' भवेदिति। कुतः?। 'भागस्याश्रुतिभूतत्वात्'—इति, न इह अध्वर्युभागो मैत्रावरुणस्य श्रूयते, नापि होतृभागः; यदि हि उभौ श्रूयेयातां, एकेन भागेन कृतेऽपि संस्कारे द्वितीयोऽपि वचनप्रामाण्यात् स्यात्, चोदकेन तयोः प्राप्तिर्गम्यते, तत्रैकत्वान्मैत्रावरुणस्य, एकेनैव भागेन यावती प्राकृती भक्तिः, सा कृतेति द्वितीयभागं चोदको न प्रापयति; तस्मात् एकभागः स्यात्—इति ॥ (१०।७।७अ०) ॥

---

प्रतिप्रस्थातुर्भक्षाभावाधिकरणम् ॥

सू० प्रतिप्रस्थातुश्च वपाश्रपणात् ॥ २२ ॥ (पू०) ॥

भा० अग्नीषोमीये एव पशौ प्रतिप्रस्थाता नाम ऋत्विक् श्रूयते;

तं प्रति सन्देहः,—किं तस्य शेषभक्षो भवेत्, न? इति। किं प्राप्तं?। भवेदिति। कुतः?। वपां हि अपयन्नध्वर्युकर्म्म करोति, 'प्रतिप्रस्थाता वपां अपयति'—इति; तस्मात् स्यादस्य भक्ष इति॥

सू॰ अभक्षो वा कर्मभेदात्तस्याः सर्वप्रदानत्वात् ॥ २३ ॥ (सि॰) ॥

भा॰ 'अभक्षः' स्यात् प्रतिप्रस्थाता। कुतः?। यस्मिन् यागे स अध्वर्योर्विकारः, तस्य द्रव्यशेषो नास्ति, वपामसौ अपयति, 'तस्याः' सर्व्वप्रदानत्वं, तत्र शेषाभावात् किं भक्षयेत्? यत्र शेषोऽस्ति हृदयादिषु अंशेषु, न तत्र असौ अध्वर्योर्विकारः। अन्यद्धि वपापूर्व्वम् अङ्गापूर्व्वात्, चोदकेन च यस्य अपूर्व्वस्य शेषः प्रतिपाद्यते, तस्य तत्कर्म्मकरे भक्षः, एवं हि तस्योपकारको भवति इति; अन्यकर्म्मकरे भक्षयति तदुपकाराभावादनर्थं स्यात्; तस्मात् न अन्यकर्म्मणि भक्षणं चोदकः प्रापयति इति।

ननु—'अङ्गेष्वपि प्रतिप्रस्थाता अध्वर्युविकारः, स हि अवदानं करोति,—'दक्षिणतो निधाय प्रतिप्रस्थाता अवद्यति'—इति। यस्यां शाखायामेतन्नास्ति, तत्रैषा विचारणा। अथ वा अन्यकार्य्यम् एतत् अवदानम्, अन्यकार्य्यकं प्राकृतं; तत्र प्रकृतौ यजतिशब्देन प्रदानारम्भेऽवदाने गृहीते दिसङ्ख्या केवला श्रूयते, नावद्यत्यर्थः; इह पुनः प्रतिप्रस्थातुरवदानं चोद्यते, नारम्भः, यदवदानं भविष्यति, स प्रदानारम्भः; तत्र प्रकृतौ प्रदाने चिकीर्षिते अर्थादध्वर्युरचोदितोऽवदानं निर्वर्त्तयति, तेन वा अन्येन वा तत् कर्त्तव्यं,

सन्निधानात् अध्वर्युरेव करोति, न नियोगतस्तत् तत्राध्वर्युकर्म्म; यथार्थात् कृतं, न तत् चोदकः प्रापयति; अर्थादेव तत् इहाध्वर्युणा अन्येन वा कर्त्तव्यं, प्रतिप्रस्थातुर्वचनं नियमार्थं; तस्मात् न, अवचनमपि प्रतिप्रस्थाता अध्वर्युकर्मणि वर्त्तते—इति न अस्याङ्गेषु भक्तः स्यात् ॥ (१०।७।८अ०) ॥

---

'आज्यभागौ यजति' इत्यनेन अपूर्व्वगृहमेधीयविधानाधिकरणम् ॥

सू० विकृतौ प्राकृतस्य विधेर्ग्रहणात् पुनःश्रुतिरनर्थिका स्यात् ॥ २४ ॥ (१म पू०) ॥

भा० चातुर्म्मास्येषु श्रूयते,—'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनं' इति। तत्रेदं समामनन्ति,—'आज्यभागौ यजति' इति। तत्र संशयः,—किं चोदकेन प्राप्तयोराज्यभागयोरनुवादमात्रमेतत्, किं वा, चोदकेन अनेन च द्वाभ्यामेकं कर्म्म चोद्यते, किं वा, अर्थवादार्थं ग्रहणम्, उत अधिकयोः कर्म्मान्तरयोरुत्पत्तिः, अथ परिसङ्ख्यार्थं, अथ वा आज्यभागौ वर्जयित्वा अन्यच्चोदकः प्रापयति, अथ वा चोदकेन आज्यभागावेव प्राप्येते, चोदक एव वा नास्ति, अपूर्वो गृहमेधीयः?—इति। किं प्राप्तम्?। 'विकृतौ' एतस्यां प्राकृतयोराज्यभागयोः प्राप्तयोर्गृह्यमाणयोः पुनःश्रवणम् अनर्थान्तरं स्यात्, अनुवादमात्रमेव सुहृद्भूत्वा आचार्य्य उपदिशति स्म,—न अर्थान्तरशङ्कया खेदितव्यं मनः, ज्ञातमेतत् अनुवादमात्रमेतदित्यन्वेष्यतामिति। कथम्?। तद्धि गम्यते, अन्यच्च नावगम्यते इति।

यथा अस्मिन् गृहे ये ब्राह्मणास्ते आनीयन्तां,—देवदत्तो यज्ञदत्तो विष्णुमित्र इति भवन्ति लोकेऽनुवादमात्रस्य प्रकारः, एवमेतदपीति।

सू॰ अपिवाग्नेयवत् द्विशब्दत्वं स्यात् ॥२५॥ (२य पू॰)॥

भा॰ यदि हि एतावदेवास्य सामर्थ्यं गम्येत उदितमनुवदितुं, ततोऽस्य नान्योऽर्थः स्यात्, अथ तु अन्यदपि कर्त्तुमस्य सामर्थ्यमस्ति, ततः कथमर्थान्तरशङ्का न भवति इति। अस्ति च सामर्थ्यं,—चोदकेन अनेन च द्वाभ्यां संहत्यैकोऽर्थ उच्यते, गृहमेधीयो हि भवति प्रकृतिवत्। किं तत् सादृश्यं?। 'आज्यभागौ यजति' इति, प्रकृताविदं श्रूयते,—'आज्यभागौ यजति', एवं प्राकृतेन यागेन स्वकार्यं करोति इति, इह पुनः 'आज्यभागौ यजति' इति स प्रकारोऽतिदिश्यते,—एवमनेन प्रकारेण यागः स्वकार्यं करोति, यथा द्वाभ्यां शब्दाभ्याम् एकोऽर्थ उच्यते; 'आग्नेयवत्',—आवाहने 'अग्निमग्न आवह' इति य एवं सम्बोध्यते, स एवोच्यते,—'आत्मानमावह' इति। यथा वा, 'एष दण्डः, दण्डेन प्रहर' इति द्वाभ्यामेक एव दण्ड उच्यते; एवमिहापि प्राकृतौ, 'आज्यभागौ यजति' इति विकृतावपरेण आज्यभागवचनेन तद्धर्मां गृहमेधीयं करोति इति वाक्यं पूर्य्यते,* न यागान्तरं चोद्यते, नापि चोदकप्राप्तस्य अनुवादमात्रमिति॥

सू॰ न वा शब्दपृथक्त्वात् ॥२६॥ (३य पू॰)॥

भा॰ वाशब्दः पक्षं व्यावर्त्तयति; नैतत् आग्नेयावाहनेन तुल्यं, तत्र

---

* 'पूर्य्येते' इति क॰ ख॰ पाठो न सम्यगिव प्रतिभाति।

सन्निधानात् अध्वर्युरेव करोति, न नियोगतस्तत् तत्राध्वर्युकर्म्म; यथार्थात् कृतं, न तत् चोदकः प्रापयति; अर्थादेव तत् दृष्टाध्वर्युणा अन्येन वा कर्त्तव्यं, प्रतिप्रस्थातुर्वचनं नियमार्थं; तस्मात् न, अन्यत्रापि प्रतिप्रस्थाता अध्वर्युकर्मणि वर्त्तते—इति न अस्याङ्गेषु भवः स्यात्॥ (१०।७।८अ०)॥

---

'आज्यभागौ यजति' इत्यनेन अपूर्व्वगृहमेधीयविधानाधिकरणम्॥

सू॰ विकृतौ प्राकृतस्य विधेर्ग्रहणात् पुनःश्रुतिरनर्थिका स्यात्॥ २४॥ (१म पू॰)॥

भा॰ चातुर्मास्येषु श्रूयते,—'मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनं' इति। तत्रेदं समामनन्ति,—'आज्यभागौ यजति' इति। तत्र संशयः,—किं चोदकेन प्राप्तयोराज्यभागयोरनुवादमात्रमेतत्, किं वा, चोदकेन अनेन च द्वाभ्यामेकं कर्म्म चोद्यते, किं वा, अर्थवादार्थं ग्रहणम्, उत अधिकयोः कर्मान्तरयोरुत्पत्तिः, अथ परिसङ्ख्यार्थं, अथ वा आज्यभागौ वर्जयित्वा अन्यच्चोदकः प्रापयति, अथ वा चोदकेन आज्यभागावेव प्राप्येते, चोदक एव वा नास्ति, अपूर्व्वो गृहमेधीयः?—इति। किं प्राप्तम्?। 'विकृतौ' एतयोः प्राकृतयोराज्यभागयोः प्राप्तयोर्गृह्यमाणयोः पुनःश्रवणम् अनर्थान्तरं स्यात्, अनुवादमात्रमेव सुहृद्भूत्वा आचार्य्य उपदिशति स्म,—न अर्थान्तरशङ्कया खेदितव्यं मनः, ज्ञातमेतत् अनुवादमात्रमेतदित्यन्वेषिव्यतामिति। कथम्?। तद्धि गम्यते, अन्यच्च नावगम्यते इति।

यथा अस्मिन् गृहे ये ब्राह्मणास्ते आनीयन्तां,—देवदत्तो यज्ञदत्तो विष्णुमित्र इति भवन्ति लोकेऽनुवादमात्रस्य कर्त्तारः, एवमेतदपीति।

सू० अपिवाग्नेयवत् द्विशब्दत्वं स्यात् ॥२५॥ (२य पू०)॥

भा० यदि हि एतावदेवास्य सामर्थ्यं गम्येत उदितमनुवदितुं, ततोऽस्य नान्योऽर्थः स्यात्, अथ तु अन्यदपि कर्त्तुमस्य सामर्थ्यमस्ति, ततः कथमर्थान्तरग्रहणं न भवति इति। अस्ति च सामर्थ्यं,—चोदकेन अनेन च द्वाभ्यां संहत्यैकोऽर्थ उच्यते, गृहमेधीयो हि भवति प्रकृतिवत्। किं तत् सादृश्यं?। 'आज्यभागौ यजति' इति, प्रकृताविदं श्रूयते,—'आज्यभागौ यजति', एवं प्राकृतेन यागेन स्वकार्यं करोति इति, इह पुनः 'आज्यभागौ यजति' इति स प्रकारोऽतिदिश्यते, —एवमनेन प्रकारेण यागः स्वकार्यं करोति, यथा द्वाभ्यां शब्दाभ्याम् एकोऽर्थ उच्यते; 'आग्नेयवत्',—आवाहने 'अग्निमग्न आवह' इति य एवं सम्बोध्यते, स एवोच्यते,—'आत्मानमावह' इति। यथा वा, 'एष दण्डः, दण्डेन प्रहर' इति द्वाभ्यामेक एव दण्ड उच्यते; एवमिहापि प्राकृतौ, 'आज्यभागौ यजति' इति विकृतावपरेण आज्यभागवचनेन तद्धर्म्मं गृहमेधीयं करोति इति वाक्यं पूर्य्यते,* न यागान्तरं चोद्यते, नापि चोदकप्राप्तस्य अनुवादमात्रमिति॥

सू० न वा शब्दपृथक्त्वात् ॥२६॥ (३य पू०)॥

भा० वाशब्दः पक्षं व्यावर्त्तयति; नैतत् आग्नेयावाहनेन तुल्यं, तत्र

* 'पूर्य्येते' इति क० ख० पाठो न सम्यगिव प्रतिभाति।

हि 'अग्ने आवह'—इत्येतावता आवोढा अग्निरुक्तः, 'अग्निमावह'—इत्येतावता वोढव्योऽग्निरुच्यते, न ताभ्यामेकोऽर्थः क्रियते ; इह तु 'प्रकृतिवत्'—इत्येकेनैव वचनेन आज्यभागवत्ता अवगम्यते ; पुनः 'आज्यभागौ यजति' इति कृतकरं शास्त्रमनर्थकं स्यात्। तस्मादनुवादमात्रमित्यध्यवसातव्यं। ननु 'अनुवादोऽनर्थकः'। नेत्युच्यते, अर्थवादार्थेन भविष्यति,—'आज्यभागौ यजति यज्ञतायाः' इति, यदेतत् प्रकृतिवत् करोति, तथा कुर्व्वन् आज्यभागौ पच्यति,* तत्र यज्ञता सम्पत्स्यते इति ॥

सू॰ अधिकं वार्थवत्त्वात् स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥ (४र्थ पू॰) ॥

भा॰ अथ वा अधिकयोः कर्मान्तरयोरुत्पत्तिः, न, अनुवाद इति,—आज्यभागावत्र क्रियेते एवेति, किन्तर्हि उपदिश्येते यागावत्र कर्त्तव्याविति। कुतः?। अनुवादमात्रं हि अनर्थकं,शब्दपृथक्त्वाच्च ताभ्यामेकं कर्मोच्यते । 'अथ कस्मात् न, अर्थवादार्थता गुणार्थता विकारार्थता वा भवति? इति। उच्यते, अर्थवादासङ्कीर्त्तनात् नात्रार्थवादार्थता। 'नन्वत्र 'यज्ञतायाः' इत्यर्थवादः सङ्कीर्त्यते'। उच्यते, न वाक्यान्तरेण विहितेऽर्थे वाक्यान्तरेण अर्थवादेन किञ्चित् प्रयोजनमस्ति । तस्माद्यागान्तरविधानार्थं एवायं नार्थवादः। 'ननु यागान्तरं नास्ति आज्यभागसंज्ञकं'। उच्यते, आज्यभागधर्मकं भविष्यति। न च,

---

* 'यक्ष्यति' इति का॰ क्षी॰ पु॰ पाठः।

गुणसङ्कीर्त्तनमस्ति, यथा 'अग्नुमन्तौ आज्यभागौ यजति' इति। नचान्यो वचनप्रकारोऽस्ति, यथा 'नान्यामाहुतिं पुरस्तात् जुहुयात्' इति प्रतिषिद्धप्रतिप्रसवार्थं 'यदन्यामाहुतिं पुरस्तात् जुहुयात्' इति छिन्दित्वा 'स्रुवेणाधारयति' इति वचनम्; 'तेषु'* हि सत्सु एवमर्थवत्ता स्यात्। तस्मात् कर्म्मान्तरवचनम्, 'अपूर्व्वत्वात्', एवमपूर्व्वमर्थं करिष्यति, इतरथा न विशिष्टोत्पत्तिः स्यात्, किं पुनरत्र कर्म्मान्तरे लक्षणमिति?। "एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्"—इति। अतः क्रमेण प्रधानयागादुपरिष्टादपरौ यागौ आज्यभागधर्म्मकौ विधीयेते, अप्राप्तौ प्राप्येते इत्यर्थः॥

सू॰ प्रतिषेधः स्यादिति चेत्॥ २८॥ (५म पू॰)॥

भा॰ इति चेत् पश्यसि,—कर्म्मान्तरचोदनेति; तन्न, तस्य 'आज्यभागौ' इति नामसङ्कीर्त्तने सति अनाज्यभागौ न शक्यौ प्रतिपत्तुं; तद्धर्म्मकत्वे सति लक्षणशब्दः, 'आज्यभागौ' इति विशेषस्य अविवक्षा स्यात्, तस्मात् न कर्म्मान्तरवचनं, किन्तु परिसङ्ख्यया प्रतिषेधः स्यात्, यथा 'पञ्च पञ्चनखा भक्ष्याः' इति शशादीनां पञ्चानां कीर्त्तनात् अन्येषां भक्षणं प्रतिषिध्यते इत्ययमर्थो वाक्येन गम्यत इति, एवमिहापि अन्येषामङ्गानां प्रतिषेधो भविष्यति इति॥

सू॰ नाश्रुतत्वात्॥ २९॥ (५म पू॰नि॰)॥

भा॰ न हि अत्र प्रतिषेधवाचि किञ्चित्पदं श्रूयते, नापि इतराङ्ग-

* 'एतेषु' इति क॰ ख॰ पु॰ पाठः।

वचनं, न च असम्प्रतिपन्नपदार्थको वाक्यार्थः प्रमाणं भवति, पदार्थो हि वाक्यार्थस्य मूलं, नास्य पृथक् सिद्धिरस्तीति; तदुक्तं, "तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्" (१।१।२ ५।सू०) इति। तस्मान्न प्रतिषेधः, तत्र हि त्रयो दोषाः,—स्वार्थग्रहणं,परार्थकल्पना, प्राप्तबाधश्च। तस्मात् कर्म्मान्तरवचनमेतदिति॥

सू० अग्रहणादिति चेत्॥३०॥(ईष्ठ पू०)॥

भा० 'इति चेत्' पश्यसि,—कर्म्मान्तरचोदनेति; उक्तश्च दोषः, स एव महान्। तस्मात् किं भवतु?—आज्यभागयोः स्वशब्देन ग्रहणम्, अन्येषां अङ्गानां चोदकेन; स्वशब्देनाज्यभागौ गृहीतौ दृष्ट्वा चोदकस्तौ न प्रापयति, अन्यानि अङ्गानि अगृहीतानि प्रापयिष्यति इति। किमेवं भविष्यति? इति। संहत्यकारिता न कल्पयिष्यते, चोदकप्राप्तयो-र्वाक्यान्तरेणार्थवादवचनमनर्थकं न प्रतिज्ञातं भविष्यति; विस्पष्टं सञ्ज्ञाग्रहणेन पुनः-श्रुतिरित्येतन्न कर्म्मान्तरं कल्पयिष्यते; यथा देवदत्तोऽत्र तिष्ठतीत्युक्ते न तिष्ठन्नेव तिष्ठतीत्युक्तः, एतावता देवदत्ताख्योऽयमभिधीयत इति गम्यते; न च परिसङ्ख्या त्रिदोषा सती कल्पिता भविष्यति। तस्मात् चोदकेन अगृहीतावाज्यभागौ गृहीताविति।

आह,—'कस्मादिदं गौरवमाश्रितं; यदि हि प्रत्यक्षमाज्यभागौ न गृहीतौ स्यातां, चोदक एव तौ शक्नुयात् ग्रहीतुं, प्रत्यक्षवचनेन चोदकग्रहणाशक्तौ गौरवे किं प्रयोजनम्?' इति। उच्यते,—न गौरवस्य किञ्चित् साधु प्रयोजनं, न तु गौरवेण यत् कृतं तन्न कृतं

भवति। गौरवन्तु दोषोऽस्ति, न तु दोषेऽपि सति चोदक आज्यभागौ गृह्णाति, यः परिहारेण यथा ग्रामं गच्छति, परिहारदोषमसौ प्राप्नोति, न तु ग्रामगमनं न भवति। तस्मात् 'अग्रहणात्' आज्यभागयोर्ग्रहणमिति ॥

सू॰ न तुल्यत्वात् ॥ ३१ ॥ (६ष्ठ पू॰नि॰) ॥

भा॰ नैतदेवं; यदि हि चोदकः पृथक् पृथक् प्राकृतान् पदार्थान् अपेक्षेत, तत्र आज्यभागौ गृहीताविति कृत्वा तौ नापेक्षेत, अन्यांश्च गृह्णीयात्, न त्वसौ पृथक् पृथक् पादार्थानपेक्षते किन्तु प्राकृतमपूर्वम् अपेक्षते यद्वत् तेन, तद्वदनेनेति, तस्मिन्नपेक्ष्यमाणे आज्यभागवत्तापि अपेक्षिता भवति। तत्रैतदेवमागच्छति,—कृतकरं शास्त्रमनर्थकं भवतीति। तस्मादन्यैरङ्गैः 'तुल्यत्वात्' न चोदकेनागृहीतयोराज्यभागयोर्ग्रहणमिति ॥

सू॰ तथा तद्ग्रहणे स्यात् ॥ ३२ ॥ (७म पू॰ एवं तस्य नि॰) ॥

भा॰ अथ यदुच्येत,—आज्यभागावेव चोदकेन गृहीतौ प्रकृतिवत् गृहमेधीयो भवति। कथमाज्यभागौ यजति?—एवमिति; यथा 'सप्तदश सामिधेन्यो भवन्ति अध्वरकल्पादिषु' इतिवाक्यशेषात् न अन्यासु इष्टिषु साप्तदश्यं; यथा 'शिंशपामानय वृक्षम्' इति नान्योऽपि वृक्ष आनीयते, शिंशपैव वृक्षशब्देन गृहीता भवति; एवमिहापि चोदकेनाज्यभागावेव गृहीताविति द्रष्टव्यम्। एवं प्राप्ते

वचनं, न च असम्प्रतिपन्नपदार्थको वाक्यार्थः प्रमाणं भवति, पदार्थो हि वाक्यार्थस्य मूलं, नास्य पृथक् सिद्धिरस्तीति; तदुक्तं, "तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्" (१।१।२ ५।सू०) इति। तस्मान्न प्रतिषेधः, तत्र हि त्रयो दोषाः,—स्वार्थग्रहणं,परार्थकल्पना, प्राप्तबाधश्च। तस्मात् कर्मान्तरवचनमेतदिति॥

सू० अग्रहणादिति चेत्॥३०॥(६ष्ठ पू०)॥

भा० 'इति चेत्' पश्यसि,—कर्मान्तरचोदनेति; उक्तस्तत्र दोषः, स एव महान्। तस्मात् किं भवतु?—आज्यभागयोः स्वशब्देन ग्रहणम्, अन्येषां अङ्गानां चोदकेन; स्वशब्देनाज्यभागौ गृहीतौ दृष्ट्वा चोदकस्तौ न प्रापयति, अन्यानि अङ्गानि अगृहीतानि प्रापयिष्यति इति। किमेवं भविष्यति? इति। संहत्यकारिता न कल्पयिष्यते, चोदकप्राप्तयो-र्वाक्यान्तरेणार्थवादवचनमनर्थकं न प्रतिज्ञातं भविष्यति; विस्पष्टं सञ्ज्ञाग्रहणेन पुनः-श्रुतिरित्येतन्न कर्मान्तरं कल्पयिष्यते; यथा देवदत्तोऽत्र तिष्ठतीत्युक्ते न तिष्ठत्येव तिष्ठतीत्युक्तः, एतावता देवदत्ताख्योऽयमभिधीयत इति गम्यते; न च परिसङ्ख्या त्रिदोषा सती कल्पिता भविष्यति। तस्मात् चोदकेन अगृहीतावाज्यभागौ गृहीताविति।

आह,—'कस्मादिदं गौरवमाश्रितं; यदि हि प्रत्यक्षमाज्यभागौ न गृहीतौ स्यातां, चोदक एव तौ शक्नुयात् ग्रहीतुं, प्रत्यक्षवचनेन चोदकग्रहणाशक्तौ गौरवे किं प्रयोजनम्?' इति। उच्यते,—न गौरवस्य किञ्चित् साधु प्रयोजनं, न तु गौरवेण यत् कृतं तन्न कृतं

भवति। गौरवन्तु तु दोषोऽस्ति, न तु दोषेऽपि सति चोदक आज्यभागौ गृह्णाति, यः परिहारेण यथा ग्रामं गच्छति, परिहारदोषमसौ प्राप्नोति, न तु ग्रामगमनं न भवति। तस्मात् 'अग्रहणात्' आज्यभागयोर्ग्रहणमिति॥

सू॰ न तुल्यत्वात्॥ ३१॥ (६ष्ठ पू॰नि॰)॥

भा॰ नैतदेवं; यदि हि चोदकः पृथक् पृथक् प्राकृतान् पदार्थान् अपेक्षेत, तत्र आज्यभागौ गृहीताविति कृत्वा तौ नापेक्षेत, अन्यांश्च गृह्णीयात्, न त्वसौ पृथक् पृथक् पादार्थानपेक्षते किन्तु प्राकृतमपूर्वम् अपेक्षते यद्वत् तेन, तद्वदनेनेति, तस्मिन्नपेक्ष्यमाणे आज्यभागवत्तापि अपेक्षिता भवति। तत्रैतदेवमागच्छति,—कृतकरं शास्त्रमनर्थकं भवतीति। तस्मादन्यैरङ्गैः 'तुल्यत्वात्' न चोदकेनागृहीतयोराज्य-भागयोर्ग्रहणमिति॥

सू॰ तथा तद्ग्रहणे स्यात्॥ ३२॥ (७म पू॰ एवं तस्य नि॰)॥

भा॰ अथ यदुच्येत,—आज्यभागावेव चोदकेन गृहीतौ प्रकृतिवत् गृहमेधीयो भवति। कथमाज्यभागौ यजति?—एवमिति; यथा 'सप्तदश सामिधेन्यो भवन्ति अध्वरकल्पादिषु' इतिवाक्यशेषात् न अन्यासु इष्टिषु साप्तदश्यं; यथा 'शिंशपामानय वृक्षम्' इति नान्योऽपि वृक्ष आनीयते, शिंशपैव वृक्षशब्देन गृहीता भवति; एवमिहापि चोदकेनाज्यभागावेव गृहीताविति द्रष्टव्यम्। एवं प्राप्ते

ब्रूमः,—"तथा तद्ग्रहणे* स्यात्", तुल्यमग्रहणेन 'तत्'† ग्रहणं, पृथक्-पदार्थापेक्षिणि चोदके स्यात् अग्रहणमन्येषामङ्गानां, प्राकृता-पूर्वापेक्षिणि तु नैतदुपपद्यत इति ॥

सू० अपूर्वतान्तु दर्शयेत् ग्रहणस्यार्थवत्त्वात् ॥ ३३ ॥ (सि०) ॥

भा० एवं तर्ह्यपूर्वो गृहमेधीयः । कुतः? । 'ग्रहणस्य अर्थवत्त्वात्', एवं ग्रहणम् 'आज्यभागौ यजति' इति अर्थवद्भविष्यति, पूर्ववत्त्वे तत् अनर्थकं स्यात्, आज्यभागाभ्यां प्रत्यक्षभूताभ्यां गृहमेधीयो निराकाङ्क्षो न चोदकेन अन्यानि अङ्गानि गृह्णातीति, यस्यान्तु विकृतावपूर्वं किञ्चिदङ्गमुक्तं, न तेन सह एकवाक्यतामगत्वा प्राकृतानि अङ्गानि गृह्णातीति । कुतः? । केन प्रकारेण कुर्य्यादिति तस्याकाङ्क्षा, न किं कुर्य्यादिति, प्रकृतौ चाङ्गवत्ता नाम प्रकारो विदितः प्रयोगवचनेन च आकाङ्क्ष्यते, न तु विकृतावङ्गवत्ता क्लृप्ता, सा कल्पयित्वा आकाङ्क्षिता भवति, न च क्लृप्तामुज्झित्वा कल्पनीयसम्बन्धो न्याय्यः, तस्मात् तत्रापि चोदकेन अङ्गानि गृह्यन्त इति । गृहीतेषु च प्राकृतेषु वैकृतानामङ्गानां विधानमनर्थकं मा भूदिति तेषामङ्गानां कल्पयित्वा सर्व्वाङ्गोपसंहारिणा प्रयोगवचनेन संग्रहः क्रियत एवेति ॥ (१०।७।९अ०) ॥

———

* 'तत् ग्रहणे' इति क० ख० पु० पाठः ।
† 'तद्ग्रहणं' इति क० ख० पु० पाठः ।

गृहमेधीये स्विष्टकृदाद्यनुष्ठानाधिकरणम् ॥

सू० ततोऽपि यावदुक्तं स्यात् ॥ ३४ ॥

भा० गृहमेधीय एवोदाहरणं। तत्रैषोऽर्थः समधिगतः,—आज्य-भागाभ्यामेतत् निराकाङ्क्षम् अन्याङ्गानि न गृह्णाति इति। तदुच्यते,—किमेष एवोत्सर्गः,—सर्वाण्येवान्यानि अङ्गानि न गृह्णाति इति?। एवं खलु प्राप्ते,—उच्यते,—"ततोऽपि यावदुक्तं स्यात्", 'ततः' एवमुक्तं,—अङ्गानि नान्यानि गृह्णाति इति अगम्यमाने विशेषे न गृह्णीयात्; गम्यते चात्र विशेषः प्रत्यक्षविहितत्वादाज्यभागयोरिति। अतो यस्य यस्य प्रत्यक्षवचनः सर्वेषु तेषु पुनर्गम्यते विशेषस्तस्मात् 'यावदुक्तं स्यात्', यथा 'अग्नये समवद्यति' इति, 'इडामुपह्वयति' इति॥ (१०।७। १७अ०)॥

---

'गृहमेधीये प्राशित्रादिभक्षणाभावाधिकरणम् ॥ (कृत्वा-चिन्ता)।

सू० स्विष्टकृद्भक्षप्रतिषेधः स्यात् तुल्यकारणत्वात्॥३५॥ (सि०)॥

भा० अस्ति गृहमेधीयः, तत्रैषोऽर्थः समधिगतः,—अपूर्वो गृहमेधीय इति। तत्रेदमामनन्ति,—'अग्निं स्विष्टकृतं यजति' इति। तत्रेदं सन्दिह्यते,—किमन्येषां शेषकार्य्याणां भक्षणस्य च परिसङ्ख्यायकः स्विष्टकृच्छब्दः, उत न? इति।

आह,—'ननु अपूर्व्वत्वाद्गृहमेधीयस्य नैव शेषभक्षा विद्यन्ते'। अत्रोच्यते,—'पूर्ववान् गृहमेधीय इति कृत्वा—चिन्तेयम्। पूर्वस्य अधि-

मैत्रावरुणस्यैकभागताधिकरणम् ॥

सू॰ द्विभागः स्याद् द्विकर्मत्वात् ॥ २० ॥ (पू॰) ॥

भा॰ अथेदानीं मैत्रावरुणमेव प्रति भवति सन्देहः,—किं द्विभागो मैत्रावरुणः, उत एकभागः?—इति। किं प्राप्तं?। 'द्विभागः स्यात्',-अध्वर्युविकारत्वादध्वर्युभागं प्राप्नोति, होतृविकारत्वात् होतृभागं प्राप्नोति; तस्माद् द्विभागः स्यात् इति ॥

सू॰ एकत्वादेकभागः स्यात् भागस्याश्रुतिभूतत्वात् ॥ २१ ॥ (सि॰) ॥

भा॰ वाशब्दः पक्षं व्यावर्त्तयति,—न द्विभागः स्यात्, 'एकभागो' भवेदिति। कुतः?। 'भागस्याश्रुतिभूतत्वात्'—इति, न इह अध्वर्युभागो मैत्रावरुणस्य श्रूयते, नापि होतृभागः; यदि हि उभौ श्रूयेयातां, एकेन भागेन कृतेऽपि संस्कारे द्वितीयोऽपि वचनप्रामाण्यात् स्यात्, चोदकेन तयोः प्राप्तिर्गम्यते, तत्रैकत्वान्मैत्रावरुणस्य, एकेनैव भागेन यावती प्राकृती शक्तिः, सा कृतेति द्वितीयभागं चोदको न प्रापयति; तस्मात् एकभागः स्यात्—इति ॥ (१०।७।७अ॰) ॥

---

प्रतिप्रस्थातुर्भक्षाभावाधिकरणम् ॥

सू॰ प्रतिप्रस्थातुश्च वपाश्रपणात् ॥ २२ ॥ (पू॰) ॥

भा॰ अग्नीषोमीये एव पशौ प्रतिप्रस्थाता नाम ऋत्विक् श्रूयते;

तं प्रति सन्देहः,—किं तस्य शेषभक्षो भवेत्, न? इति। किं प्राप्तं?। भवेदिति। कुतः?। वपां हि अपयन्नध्वर्युकर्म्म करोति, 'प्रतिप्रस्थाता वपां अपयति'—इति; तस्मात् स्यादस्य भक्षः इति ॥

सू॰ अभक्षो वा कर्मभेदात्तस्याः सर्वप्रदानत्वात् ॥ २३ ॥ (सि॰) ॥

भा॰ 'अभक्षः' स्यात् प्रतिप्रस्थाता। कुतः?। यस्मिन् यागे स अध्वर्य्योर्विकारः, तस्य द्रव्यशेषो नास्ति, वपामसौ अपयति, 'तस्याः' सर्व्वप्रदानत्वं, तच शेषाभावात् किं भक्षयेत्? यत्र शेषोऽस्ति हृदयादिषु अंशेषु, न तत्र असौ अध्वर्य्योर्विकारः। अन्यद्धि वपापूर्व्वम् अङ्गापूर्व्वात्, चोदकेन च यस्य अपूर्व्वस्य शेषः प्रतिपाद्यते, तस्य तत्कर्म्मकरे भक्षः, एवं हि तस्योपकारको भवति इति; अन्यकर्म्मकरे भक्षयति तदुपकाराभावादनङ्गं स्यात्; तस्मात् न अन्यकर्म्मणि भक्षणं चोदकः प्रापयति इति।

ननु—'अङ्गेष्वपि प्रतिप्रस्थाता अध्वर्युविकारः, स हि अवदानं करोति,—'दक्षिणतो निधाय प्रतिप्रस्थाता अवद्यति'—इति। यस्यां शाखायामेतन्नास्ति, तत्रैषा विचारणा। अथ वा अन्यकार्य्यम् एतत् अवदानम्, अन्यकार्य्यकं प्राकृतं; तत्र प्रकृतौ यजतिशब्देन प्रदानारम्भेऽवदाने गृहीते द्विसङ्ख्या केवला श्रूयते, नावद्यत्यर्थः; इह पुनः प्रतिप्रस्थातुरवदानं चोद्यते, नारम्भः, यदावदानं भविष्यति, स प्रदानारम्भः; तत्र प्रकृतौ प्रदाने चिकीर्षिते अर्थादध्वर्युरचोदितोऽवदानं निर्वर्त्तयति, तेन वा अन्येन वा तत् कर्त्तव्यं,

सन्निधानात् अध्वर्युरेव करोति, न नियोगतस्तत् तत्राध्वर्युकर्म्म; यथार्थात् कृतं, न तत् चोदकः प्रापयति; अर्थादेव तत् इहाध्वर्युणा अन्येन वा कर्त्तव्यं, प्रतिप्रस्थातुर्वचनं नियमार्थं; तस्मात् न, अवचनपि प्रतिप्रस्थाता अध्वर्युकर्मणि वर्त्तते—इति न अस्याङ्गेषु भचः स्यात् ॥ (१०।७।८अ०) ॥

---

'आज्यभागौ यजति' इत्यनेन अपूर्व्वगृहमेधीयविधानाधिकरणम् ॥

सू० विकृतौ प्राकृतस्य विधेर्ग्रहणात् पुनःश्रुतिरनर्थिका स्यात् ॥ २४ ॥ (१म पू०) ॥

भा० चातुर्मास्येषु श्रूयते,—'मरुद्भ्यो गृहमेधिभ्यः सर्व्वासां दुग्धे सायमोदनं' इति। तत्रेदं समामनन्ति,—'आज्यभागौ यजति' इति। तत्र संशयः,—किं चोदकेन प्राप्तयोराज्यभागयोरनुवादमात्रमेतत्, किं वा, चोदकेन अनेन च द्वाभ्यामेकं कर्म्म चोद्यते, किं वा, अर्थवादार्थं ग्रहणम्, उत अधिकयोः कर्म्मान्तरयोरुत्पत्तिः, अथ परिसङ्ख्यार्थं, अथ वा आज्यभागौ वर्जयित्वा अन्यच्चोदकः प्रापयति, अथ वा चोदकेन आज्यभागावेव प्राप्येते, चोदक एव वा नास्ति, अपूर्व्वो गृहमेधीयः?—इति। किं प्राप्तम्?। 'विकृतौ' एतस्यां प्राकृतयोराज्यभागयोः प्राप्तयोर्गृह्यमाणयोः पुनःश्रवणम् अनर्थान्तरं स्यात्, अनुवादमात्रमेव सुहृद्भूत्वा आचार्य्य उपदिशति स्म,—न अर्थान्तरशङ्कया खेदितव्यं मनः, ज्ञातमेतत् अनुवादमात्रमेतदित्यन्यच्चिन्त्यतामिति। कथम्?। तद्धि गम्यते, अन्यच्च नावगम्यते इति।

यथा अस्मिन् गृहे ये ब्राह्मणास्ते आनीयन्तां,—देवदत्तो यज्ञदत्तो विष्णुमित्र इति भवन्ति लोकेऽनुवादमात्रस्य प्रकारः, एवमेतदपीति।

सू॰ अपिवाग्नेयवत् द्विशब्दत्वं स्यात्॥२५॥ (२य पू॰)॥

भा॰ यदि हि एतावदेवास्य सामर्थ्यं गम्येत उदितमनुवदितुं, ततोऽस्य नान्योऽर्थः स्यात्, अथ तु अन्यदपि कर्त्तुमस्य सामर्थ्यमस्ति, ततः कथमर्थान्तरप्राप्ता न भवति इति। अस्ति च सामर्थ्यं,—चोदकेन अनेन च द्वाभ्यां संहत्यैकोऽर्थ उच्यते, गृहमेधीयो हि भवति प्रकृतिवत्। किं तत् सादृश्यं?। 'आज्यभागौ यजति' इति, प्रकृताविदं श्रूयते,—'आज्यभागौ यजति',एवं प्राकृतेन यागेन स्वकार्यं करोति इति, इह पुनः 'आज्यभागौ यजति' इति स प्रकारोऽतिदिश्यते, —एवमनेन प्रकारेण यागः स्वकार्यं करोति, यथा द्वाभ्यां शब्दाभ्याम् एकोऽर्थ उच्यते; 'आग्नेयवत्',—आवाहने 'अग्निमग्न आवह' इति च एवं सम्बोध्यते, स एवोच्यते,—'आत्मानमावह' इति। यथा वा, 'एष दण्डः, दण्डेन प्रहर' इति द्वाभ्यामेक एव दण्ड उच्यते; एवमिहापि प्राकृतौ, 'आज्यभागौ यजति' इति विकृतावपरेण आज्यभागवचनेन तद्वन्तं गृहमेधीयं करोति इति वाक्यं पूर्य्यते,* न यागान्तरं चोद्यते, नापि चोदकप्राप्तस्य अनुवादमात्रमिति॥

सू॰ न वा शब्दपृथक्त्वात्॥२६॥ (३य पू॰)॥

भा॰ वाशब्दः पक्षं व्यावर्त्तयति; नैतत् आग्नेयावाहनेन तुल्यं, तत्र

* 'पूर्य्येते' इति क॰ ख॰ पाठो न सम्यगिव प्रतिभाति।

हि 'अग्ने आवह'—इत्येतावता आवोढा अग्निरुक्तः, 'अग्निमावह'—इत्येतावता वोढव्योऽग्निरुच्यते, न ताभ्यामेकोऽर्थः क्रियते ; इह तु 'प्रकृतिवत्'—इत्येकेनैव वचनेन आज्यभागवत्ता अवगम्यते ; पुनः 'आज्यभागौ यजति' इति कृतकरं शास्त्रमनर्थकं स्यात्। तस्मादनुवादमात्रमित्यध्यवसातव्यं। ननु 'अनुवादोऽनर्थकः'। नेत्युच्यते, अर्थवादार्थेन भविष्यति,—'आज्यभागौ यजति यज्ञतायाः' इति, यदेतत् प्रकृतिवत् करोति, तथा कुर्व्वन् आज्यभागौ पश्यति,* तत्र यज्ञता सम्पत्स्यते इति ॥

सू॰ अधिकं वार्थवत्त्वात् स्यादर्थवादगुणाभावे वचनादविकारे तेषु हि तादर्थ्यं स्यादपूर्वत्वात् ॥ २७ ॥ (४र्थ पू॰) ॥

भा॰ अथ वा अधिकयोः कर्मान्तरयोरुत्पत्तिः, न, अनुवाद इति,—आज्यभागावत्र क्रियेते एवेति, किन्तर्हि उपदिश्येते यागावत्र कर्त्तव्याविति। कुतः?। अनुवादमात्रं हि अनर्थकं, शब्दपृथक्त्वाच्च द्वाभ्यामेकं कर्मोच्यते। 'अथ कस्मात् न, अर्थवादार्थता गुणार्थता विकारार्थता वा भवति? इति। उच्यते, अर्थवादासङ्कीर्त्तनात् नात्रार्थवादार्थता। 'नन्वत्र 'यज्ञतायाः' इत्यर्थवादः सङ्कीर्त्यते'। उच्यते, न वाक्यान्तरेण विहितेऽर्थे वाक्यान्तरेण अर्थवादेन किञ्चित् प्रयोजनमस्ति। तस्माद्यागान्तरविधानार्थं एवायं नार्थवादः। 'ननु यागान्तरं नास्ति आज्यभागसंज्ञकं'। उच्यते, आज्यभागधर्मकं भविष्यति। न च,

---

* 'यक्ष्यति' इति का॰ क्री॰ पु॰ पाठः।

गुणसङ्कीर्त्तनमस्ति, यथा 'अग्नुमन्तौ आज्यभागौ यजति' इति। नचान्यो वचनप्रकारोऽस्ति, यथा 'नान्यामाहुतिं पुरस्तात् जुहुयात्' इति प्रतिषिद्धप्रतिप्रसवार्थं 'यदन्यामाहुतिं पुरस्तात् जुहुयात्' इति भिन्द्वा 'स्रुवेणाधारयति' इति वचनम्; 'तेषु'* हि सत्सु एवमर्थवत्ता स्यात्। तस्मात् कर्म्मान्तरवचनम्, 'अपूर्व्वत्वात्', एवमपूर्व्वमर्थं करिष्यति, इतरथा न विशिष्टोत्पत्तिः स्यात्, किं पुनश्च कर्म्मान्तरे लक्षणमिति?। "एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्"— इति। अतः क्रमेण प्रधानयागादुपरिष्टादपरौ यागौ आज्यभागधर्म्मकौ विधीयेते, अग्नातौ श्राप्येते इत्यर्थः॥

सू० प्रतिषेधः स्यादिति चेत्॥ २८॥ (पूम पू०)॥

भा० इति चेत् पश्यसि,-कर्म्मान्तरचोदनेति; तन्न, तस्य 'आज्यभागौ' इति नामसङ्कीर्त्तने सति अनाज्यभागौ न शक्यौ प्रतिपत्तुं; तद्धर्म्मकत्वे सति लक्षणशब्दः, 'आज्यभागौ' इति विशेषस्य अविवक्षा स्यात्, तस्मात् न कर्म्मान्तरवचनं, किन्तु परिसङ्ख्यया प्रतिषेधः स्यात्, यथा 'पञ्च पञ्चनखा भक्ष्याः' इति शशादीनां पञ्चानां कीर्त्तनात् अन्येषां भक्षणं प्रतिषिध्यते इत्ययमर्थो वाक्येन गम्यत इति, एवमिहापि अन्येषामङ्गानां प्रतिषेधो भविष्यति इति॥

सू० नाश्रुतत्वात्॥ २९॥ (पूम पू० नि०)॥

भा० न हि अत्र प्रतिषेधवाचि किञ्चित्पदं श्रूयते, नापि इतराङ्ग-

* 'एतेषु' इति क० ख० पु० पाठः।

वचनं, न च असम्प्रतिपन्नपदार्थको वाक्यार्थः प्रमाणं भवति, पदार्थो हि वाक्यार्थस्य मूलं, नास्य पृथक् सिद्धिरस्तीति; तदुक्तं, "तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्" (१।१।२५।सू०) इति। तस्मान्न प्रतिषेधः, तत्र हि त्रयो दोषाः,—स्वार्थग्रहणं, परार्थकल्पना, प्राप्तबाधश्च। तस्मात् कर्म्मान्तरवचनमेतदिति॥

सू० अग्रहणादिति चेत्॥३०॥ (६ष्ठ पू०)॥

भा० 'इति चेत्' पश्यसि,—कर्म्मान्तरचोदनेति; उक्तस्त्र दोषः, स एव महान्। तस्मात् किं भवतु?—आज्यभागयोः स्वशब्देन ग्रहणम्, अन्येषां अङ्गानां चोदकेन; स्वशब्देनाज्यभागौ गृहीतौ दृष्ट्वा चोदकस्तौ न प्रापयति, अन्यानि अङ्गानि अगृहीतानि प्रापयिष्यति इति। किमेवं भविष्यति? इति। संहत्यकारिता न कल्पयिष्यते, चोदकप्राप्तयो-र्वाक्यान्तरेणार्थवादवचनमनर्थकं न प्रतिज्ञातं भविष्यति; विस्पष्टं सञ्ज्ञाग्रहणेन पुनः-श्रुतिरित्येतन्न कर्म्मान्तरं कल्पयिष्यते; यथा देवदत्तोऽत्र तिष्ठतीत्युक्ते न तिष्ठन्नेव तिष्ठतीत्युक्तः, एतावता देवदत्ताख्योऽयमभिधीयत इति गम्यते; न च परिसङ्ख्या विदोषा सती कल्पिता भविष्यति। तस्मात् चोदकेन अगृहीतावाज्यभागौ गृहीताविति।

आह,—'कस्मादिदं गौरवमाश्रितं; यदि हि प्रत्यक्षमाज्यभागौ न गृहीतौ स्यातां, चोदक एव तौ शक्नुयात् ग्रहीतुं, प्रत्यक्षवचनेन चोदकग्रहणाशक्तौ गौरवे किं प्रयोजनम्?' इति। उच्यते,—न गौरवस्य किञ्चित् साधु प्रयोजनं, न तु गौरवेण यत् कृतं तन्न कृतं

भवति। गौरवस्य तु दोषोऽस्ति, न तु दोषेऽपि सति चोदक आज्यभागौ गृह्णाति, यः परिहारेण यथा ग्रामं गच्छति, परिहारदोषमसौ प्राप्नोति, न तु ग्रामगमनं न भवति। तस्मात् 'अग्रहणात्' आज्यभागयोर्ग्रहणमिति ॥

सू० न तुल्यत्वात् ॥ ३१ ॥ (६ष्ठ पू०नि०) ॥

भा० नैतदेवं; यदि हि चोदकः पृथक् पृथक् प्राकृतान् पदार्थान् अपेक्षेत, तत्र आज्यभागौ गृहीताविति कृत्वा तौ नापेक्षेत, अन्यांश्च गृह्णीयात्, न त्वसौ पृथक् पृथक् पादार्थानपेक्षते किन्तु प्राकृतमपूर्वम् अपेक्षते यद्वत् तेन, तद्वदनेनेति, तस्मिन्नपेक्ष्यमाणे आज्यभागवत्तापि अपेक्षिता भवति। तत्रैतदेवमागच्छति,—कृतकरं शास्त्रमनर्थकं भवतीति। तस्मादन्यैरङ्गैः 'तुल्यत्वात्' न चोदकेनागृहीतयोराज्य-भागयोर्ग्रहणमिति ॥

सू० तथा तद्ग्रहणे स्यात् ॥ ३२ ॥ (७म पू० एवं तस्य नि०) ॥

भा० अथ यद्युच्येत,—आज्यभागावेव चोदकेन गृहीतौ प्रकृतिवत् गृहमेधीयो भवति। कथमाज्यभागौ यजति?—एवमिति; यथा 'सप्तदश सामिधेन्यो भवन्ति अध्वरकल्पादिषु' इतिवाक्यशेषात् न अन्यासु इष्टिषु साप्तदश्यं; यथा 'शिंशपामानय वृक्षम्' इति नान्योऽपि वृक्ष आनीयते, शिंशपैव वृक्षशब्देन गृहीता भवति; एवमिहापि चोदकेनाज्यभागावेव गृहीताविति द्रष्टव्यम्। एवं प्राप्ते

ब्रूमः,—"तथा तद्ग्रहणे* स्यात्", तुल्यमग्रहणेन 'तत्'† ग्रहणं, पृथक्-पदार्थापेक्षिणि चोदके स्यात् अग्रहणमन्येषामङ्गानां, प्राकृता-पूर्वापेक्षिणि तु नैतदुपपद्यत इति ॥

सू० अपूर्वतान्तु दर्शयेत् ग्रहणस्यार्थवत्त्वात् ॥ ३३ ॥ (सि०) ॥

भा० एवं तत्पूर्व्वो गृहमेधीयः। कुतः?। 'ग्रहणस्य अर्थवत्त्वात्', एवं ग्रहणम् 'आज्यभागौ यजति' इति अर्थवद्भविष्यति, पूर्व्ववत्त्वे तत् अनर्थकं स्यात्, आज्यभागाभ्यां प्रत्यक्षभूताभ्यां गृहमेधीयो निराकाङ्क्षो न चोदकेन अन्यानि अङ्गानि गृह्णातीति, यस्यान्तु विकृतावपूर्व्वं किञ्चिदङ्गमुक्तं, न तेन सह एकवाक्यतामगत्वा प्राकृतानि अङ्गानि गृह्णातीति। कुतः?। केन प्रकारेण कुर्य्यादिति तस्याकाङ्क्षा, न किं कुर्य्यादिति, प्रकृतौ चाङ्गवत्ता नाम प्रकारो विदितः प्रयोगवचनेन च आकाङ्क्ष्यते, न तु विकृतावङ्गवत्ता क्लृप्ता, सा कल्पयित्वा आकाङ्क्षिता भवति, न च क्लृप्तामुज्झित्वा कल्पनीयसम्बन्धो न्याय्यः, तस्मात् तत्रापि चोदकेन अङ्गानि गृह्यन्त इति। गृहीतेषु च प्राकृतेषु वैकृतानामङ्गानां विधानमनर्थकं मा भूदिति तेषामङ्गानां कल्पयित्वा सर्व्वाङ्गोपसंहारिणा प्रयोगवचनेन संग्रहः क्रियत एवेति॥ (१०।७।९अ०)॥

---

* 'तत् प्रहणे' इति क० ख० पु० पाठः।
† 'तद्ग्रहणं' इति क० ख० पु० पाठः।

गृहमेधीये स्विष्टकृदाद्यनुष्ठानाधिकरणम् ॥

सू० ततोऽपि यावदुक्तं स्यात् ॥ ३४ ॥

भा० गृहमेधीय एवोदाहरणं। तत्रैषोऽर्थः समधिगतः,—आज्य-भागाभ्यामेतत् निराकाङ्क्षम् अन्याङ्गानि न गृह्णाति इति। तदुच्यते,—किमेष एवोत्सर्गः,—सर्वाण्येवान्यानि अङ्गानि न गृह्णाति इति? । एवं खलु प्राप्ते,—उच्यते,—"ततोऽपि यावदुक्तं स्यात्", 'ततः' एवमुक्तं,—अङ्गानि नान्यानि गृह्णाति इति अगम्यमाने विशेषे न गृह्णीयात्; गम्यते चात्र विशेषः प्रत्यक्षविहितत्वादाज्यभागयोरिति। अतो यस्य यस्य प्रत्यक्षवचनः सर्वेषु तेषु पुनर्गम्यते विशेषस्तस्मात् 'यावदुक्तं स्यात्', यथा 'अग्नये समवद्यति' इति, 'इडामुपह्वयति' इति॥ (१०।७। १७अ०) ॥

---

'गृहमेधीये प्राशित्रादिभक्षाभावाधिकरणम् ॥ (क्त्वा-चिन्ता)।

सू० स्विष्टकृद्भक्षप्रतिषेधः स्यात् तुल्यकारणत्वात्॥३५॥ (सि०) ॥

भा० अस्ति गृहमेधीयः, तत्रैषोऽर्थः समधिगतः,—अपूर्वो गृहमेधीय इति। तत्रेदमामनन्ति,—'अग्निं स्विष्टकृतं यजति' इति। तत्रेदं सन्दिह्यते,—किमन्येषां शेषकार्य्याणां भक्षणस्य च परिसङ्ख्यायकः स्विष्टकृच्छब्दः, उत न? इति।

आह,—'ननु अपूर्व्वत्वाद्गृहमेधीयस्य नैव शेषभक्षा विद्यन्ते'। अत्रोच्यते,—'पूर्व्ववान् गृहमेधीय इति कृत्वा—चिन्तेयम्। पूर्वस्य अधि-

करणस्य प्रयोजनं चिन्त्यते,—यदि परिसङ्ख्या भवेत्, आज्यभागाभ्यां यागाः परिसङ्ख्यायेरन् नान्ये इति। इदमपि प्रयोजनं भवति,—स्विष्टकृच्छ्रवणेन शेषभक्षाः परिसङ्ख्यायन्ते, न? इति। किं प्राप्तं?। स्विष्टकृति श्रूयमाणे परिसङ्ख्या स्याद्भक्षाणां। कुतः?। 'तुल्य-कारणत्वात्',—तुल्यं हि कारणं स्विष्टकृतो भक्षाणाञ्च; उभयमपि शेषसंस्कारार्थं, तत्र वचनादयं शेषसंस्कारो भवति, नान्य इति प्रतिषिध्येरन् भक्षाः॥

सू० अप्रतिषेधो वा दर्शनादिडायां स्यात्॥ ३६॥ (पू०)॥

भा० यथैव स्विष्टकृत्श्रवणेऽन्येषां शेषकार्य्याणामदर्शनमिति शेषभक्षा न सन्तीति उच्यते, एवं भक्षणदर्शनात् भक्षाः सन्तीति गम्यते; दर्शनादर्शनयोश्च दर्शनं प्रमाणं। किं तद्दर्शनम्?। 'इडामुपह्वयति' इति उपह्वानं अनुज्ञापनं, तत् सति भक्षणे भवति, नासति; तस्मात् न प्रतिषेधः॥

सू० प्रतिषेधो वा विधिपूर्वस्य दर्शनात्॥ ३७॥ (उ०)॥

भा० 'प्रतिषेधो वा', तुल्यकारणेन हि प्रत्यक्षश्रुतेन आनुमानिकं वाध्यते। अथ यद्दर्शनमुक्तं, तद्विधिपूर्वस्य भक्षस्य भविष्यति, एवं ह्याम्नायते, 'अथ इडामेवावद्यति न प्राशित्रमुपह्वय प्राश्नाति' इति तस्य दर्शनं। अस्या-चिन्तायाः प्रयोजनं न वक्तव्यं, पूर्वाधिकरणस्य हि

तत् प्रयोजनं, न च प्रयोजनस्य प्रयोजनमुच्यते यत् प्रयोक्तव्यं तच्च पूर्वाधिकरणम्॥ (१०।७।११अ०)॥

---

प्रायणीयातिथ्ययोः शंय्विडान्ततानियमाधिकरणम्॥

सू० शंय्विडान्तत्वे विकल्पः स्यात् परेषु पत्न्यनुयाज-प्रतिषेधोऽनर्थकः स्यात्॥ ३८॥ (पू०)॥

भा० ज्योतिष्टोमे श्रूयते,—'शंय्वन्ता प्रायणीया सन्तिष्ठते न पत्नीः संयाजयन्ति' इति। 'इडान्ता आतिथ्या सन्तिष्ठते नानुयाजान् यजति' इति। तत्र संशयः,—प्रायणीया किं शंय्वन्ता कृत्स्नसंस्था वा, उत शंय्वन्तैव? तथा आतिथ्या किम् इडान्ता कृत्स्नसंस्था वा, उत इडान्तैव। किं प्राप्तं?,—'शंय्विडान्तत्वे विकल्पः स्यात्' इति। कुतः?। पत्न्यनुयाजस्य प्रतिषेधात्। 'शंय्वन्ता सन्तिष्ठते' इति तावत् व्यक्तमेव वचनम्, अपरमपि वचनं 'न पत्नीः संयाजयन्ति' इति; यदि शंय्वन्तैव नित्यं, 'पत्न्यनुयाज-प्रतिषेधोऽनर्थकः स्यात्', तस्मात् पत्न्यनुयाजप्रतिषेधेन कृत्स्नसंस्थान-मुच्यते। कथं?। प्रायणीयायां पत्नीसंयाजान् केवलान् न करोति, नान्यं न करोति इति; तथा आतिथ्यायामनुयाजान् केवलान् न करोति, नान्यं न करोति इति,—अकर्त्तव्यपरिसङ्ख्यानार्थमेवेदं भिन्नमेव वाक्यद्वयं पूर्वाभ्यां वाक्याभ्यामिति॥

सू० नित्यानुवादो वा कर्म्मणः स्यादशब्दत्वात्॥३९॥ (सि०)॥

भा० न त्वेतदस्ति,—विकल्प इति, एक एव कल्पः शंय्विडान्तत्वं।

तत्र हि विस्पष्टं वचनं, द्वितीयः कल्पो नास्त्येव। न हि तस्य वचनम् अस्ति। न च पत्न्यनुयाजप्रतिषेधकं कृत्स्नसंस्थानबाधकं, किन्तर्हि तन्नित्यानुवादः,—नित्यप्राप्तम् अनुवदति, यथा, 'नान्तरिक्षे न दिवि अग्निः चेतव्यः' इति पूर्वाभ्यां सहैकवाक्यतैव अनयोः, 'शंय्वन्ता प्रायणीया सन्तिष्ठते न पत्नीः संयाजयन्ति' इति तथा 'इडान्ता आतिथ्या सन्तिष्ठते नानुयाजान् यजन्ति' इति। अत्र वाक्यलाघवेन स्तुतिः। 'ननु प्रतिषेधवचनः* कृत्स्नसंस्थानं वदेत्'। य एव हि श्रुतस्यार्थस्योत्सर्गे दोषः स एवाश्रुतकल्पनायां; तस्मात् शंय्विडान्ततैव स्यादिति ॥ (१०।७। १२अ०)॥

---

प्रायणीयातिथ्ययोः पूर्वाभ्यामेव संस्थितिरूपायां संस्थाधिकरणम् ॥

सू० प्रतिषेधार्थवत्त्वात् चोत्तरस्य परस्तात् प्रतिषेधः स्यात् ॥ ४० ॥ (पू०) ॥

भा० इदमेवोदाहरणं,—'शंय्वन्ता प्रायणीया सन्तिष्ठते न पत्नीः संयाजयन्ति' इति, 'इडान्ता आतिथ्या सन्तिष्ठते नानुयाजान् यजति' इति। तत्र द्वौ शंयू द्वे इडे इति। तत्रायमर्थः सांशयिकः,—किं परेण शंयुना शंय्वन्ता सन्तिष्ठते, उत पूर्वेण?। एवं, किं परया इडया इडान्ता सन्तिष्ठते, उत पूर्वया? इति। किं प्राप्तं?। 'पूर्वाभ्यां शंय्विडाभ्याम्' इति। कुतः?। पूर्वाभ्यामपि संस्थापयता श्रुत्यर्थः कृतो भवति इति;

---

* प्रतिषेधवचनात् इति पाठः सपुस्तकपाठः।

क्षते च शब्दार्थे कस्मादुत्तरान् पदार्थान् कुर्यात्?—इति'। उच्यते,— उत्तराभ्यामपि संस्थापयन् शब्दार्थमेव करोति, तत्र नियमात् पूर्वाभ्यां संस्थापयन् शब्दार्थं परिच्छिन्द्यात्, शब्दार्थं परिच्छेत्स्यामः, यदि उत्तराभ्यामपि संस्थापनं शब्दो वक्ष्यति, ततस्ताभ्यां संस्थापयन् भूयांसमुपकारं लप्स्यते तस्मादनियमः,—पूर्वाभ्यामुत्तराभ्यां वेति।

एवं प्राप्ते ब्रूमः,—उत्तराभ्यामिति। कुतः?। 'निषेधार्थवत्त्वात्',— तदैव पत्नीसंयाजस्यानुयाजस्य च प्रतिषेधोऽर्थवान् भवति, यदि उत्तराभ्यां न संस्थाप्येत, नैव पत्नीसंयाजानुयाजौ प्राप्नुतः; तस्मादुत्तराभ्याम् इति। 'ननु च प्रतिषेधस्य नित्यानुवादत्वमुक्तं'। उच्यते,—न सत्यां गतौ न्याय्यं, तस्मान्न पूर्वाभ्यामिति। 'उच्यते,—लिङ्गमेतदुपदिष्टं, न च लिङ्गं साधकं भवति, प्राप्तिरुच्यताम्? इति, पक्षेऽपि हि लिङ्गस्य अर्थवत्ता स्यात्, अत्रोच्यते,—इयं प्राप्तिः,—यदा विशेषो नाव- गम्यते, शंयुवन्ती यथा शङ्करीतेः, सा शंय्वन्ता,—एवम् इडान्ता; सैषा शङ्करीतिर्विधीयते शंय्वन्ता इडान्ता च; सा च विधीयमाना अन्यानि अङ्गानि परिसञ्चष्टे। कथं?। शंय्वन्तया शङ्करीत्या इडान्तया च सङ्कीर्त्यमानया शंय्विडान्ततायां सत्याम् अन्यानि अङ्गानि न आकाङ्क्ष्यन्ते, अनाकाङ्क्ष्यमाणानि च नैकवाक्यतां यान्ति, अतो ऽप्राप्तानीति गम्यते।'नन्वेवं सति पूर्वाभ्यां शंय्विडान्तता न कञ्चिदर्थमधिकं साधयति' इति। उच्यते,—नैष दोषः, न हि नञर्थे पृथग्वाक्यं यस्य आनर्थक्यं परिजिहीर्ष्यते, अस्य वाक्यस्योत्तरान्तता प्रयोजनं, तस्मात् उत्तराभ्यां संस्था स्यादिति॥

सू० प्राप्तेर्वा पूर्वस्य वचनादतिक्रमः स्यात् ॥ ४१ ॥ (सि०) ॥

भा० नैतदस्ति,—उत्तराभ्यां संस्थिताभ्यां सन्तिष्ठते इति। पूर्वाभ्यामेव। कुतः?। नेह संस्थाया अङ्गरीतेर्भावो विधीयते, इडान्तायाश्च; किन्तर्हि संस्था विधीयते, संस्थिडान्ता सन्तिष्ठते, प्रवर्त्तमाना संस्थिडान्ता च जाता सन्तिष्ठते, न प्रवर्त्तते; तिष्ठत्येव कर्मसु सन्तिष्ठतीत्युच्यते। तत्र पूर्वाभ्यामुत्तराभ्यामिति विशेषे अनवगम्यमाने पूर्वाभ्याञ्च न प्रवर्त्तेत उत्तराभ्याञ्च; तदेव तत्र पूर्वाभ्यामेव संस्थाने कृतं भवति। प्रतिषेधश्च नित्यानुवाद इत्युक्तम्॥

सू० प्रतिषेधस्य त्वरायुक्तत्वात् तस्य च नान्यदेशत्वम् ॥ ४२ ॥ (यु०) ॥

भा० इतश्च पूर्वाभ्यां परं न कर्त्तव्यमिति। कुतः?। त्वरायुक्तो हि प्रतिषेधोऽयं कृतः। कथं?। 'देवासुराः सत्यमभजन्त, अर्द्धं देवाः सत्यस्याभजन्त अर्द्धमसुराः, तदसुरैः सत्यमनूच्यमानं देवान् अपाक्रामत् ते प्रायणीयं निरवपन् तच्छंय्वन्तमासीत्। अथ असुरा यज्ञमायंस्ततो यज्ञः तत्वर इति तमेवं कृत्वा त्वरितमाद्रियन्ते' इति। तथा 'आतिथ्यं निरवदंस्तदिडान्तमासीदथा सुरा यज्ञमायंस्ततो यज्ञः तत्वरः इति तदिडान्तमेव कृत्वा त्वरितमाद्रियन्ते' इति। त्वराकृतश्च पूर्वमपेक्षन्ते, नोत्तरं; तस्मात् नान्यो देशः प्रतिषेधस्य; तस्माच्च पूर्वाभ्यामेव संस्थिताभ्यां परं न कर्त्तव्यमिति ॥ (१०।७।१इअ०) ॥

'षडुपसद उपसाद्यन्ते' इत्यादिना अपूर्व्वोपसत्कर्म्मविधानाधिकरणम् ॥

सू० उपसत्सु यावदुक्तमकर्म्म स्यात् ॥ ४३ ॥
(१म पू०) ॥

भा० अस्ति ज्योतिष्टोमः, तत्रेदमाम्नायते,—'षडुपसद उपसाद्यन्ते' इति, ताः प्रकृत्य आमनन्ति,—'अप्रयाजास्ता अननुयाजाः' इति। तत्र संशयः,—किं यावत् प्रतिषिद्धं तावन्न कर्त्तव्यम्, अन्यत्सर्वं कर्त्तव्यं; अथ यावत् उपदिष्टं तावत् कर्त्तव्यम्, अन्यत् सर्वं न कर्त्तव्यं; अथ अपूर्वा उपसदः?* इति। किं प्राप्तं?,—'उपसत्सु यावदुक्तं' न कर्त्तव्यं, 'अप्रयाजास्ताः अननुयाजाः†' इति प्रयाजानुयाजानां प्रतिषेधं कृत्वा कृतार्थः शब्दोऽवशिष्टांश्चोदकप्राप्तान् न वारयति। तस्मादविशिष्टं सर्वं कर्त्तव्यम् इति ॥

सू० स्रौवेण वा गुणत्वात् शेषप्रतिषेधः स्यात् ॥ ४४ ॥
(२य पू०) ॥

भा० न चैतदस्ति,—प्रतिषिद्धं वर्जयित्वा सर्वं कर्त्तव्यमिति, यावदुपदिष्टं कर्त्तव्यं। 'स्रौवेण' आधारेण सर्वमन्यत् परिसङ्ख्यायते, अविशिष्टो ह्यसौ स्रौव आघारः पुनराम्नायते, न तत्र कश्चित् गुणो विशिष्टः श्रूयते, तस्मात्तेन तत् परिसङ्ख्यायते ॥

---

* अथ वा अपूर्व्वा उपसदः? इति आदर्शपुस्तकपाठः।

† अत्र 'अननूयाजाः' इति सर्व्वत्रैव पुस्तके दीर्घोकारयुक्तः पाठो व्याकरणसङ्गतोऽपि पूर्व्वापरपाठविरोधादुपेक्षितः।

सू॰ अप्रतिषिद्धं वा प्रतिषिध्यप्रतिसवात् ॥ ४५ ॥ (२य पू॰ नि॰) ॥

भा॰ न चैतदस्ति,—यावदुक्तं कर्त्तव्यम्, अवशिष्टं नेति, किन्तर्हि सर्वं कर्त्तव्यं प्रतिषिद्धं वर्जयित्वा इति। एवं हि श्रूयते,—'अप्रयाजास्ता अननुयाजास्ताः*' इति, एवं प्रतिषेधं कृत्वा कृतार्थः शब्दो नान्यस्य बाधको भवितुमर्हति। यदुक्तं,—निर्गुणं सौवाघारश्रवणमिति, प्रतिप्रसवोऽयं न परिसङ्ख्या। एवं श्रूयते,—'नान्यामाहुतिं पुरस्तात् जुहुयात् यदन्यामाहुतिं पुरस्तात् जुहुयादन्यन्मुखं कुर्य्यात् स्रुवेणाघार-माघारयतीति,† नान्यामाहुतिं पुरस्तात् जुहुयात् प्राकृतिकीम्' ; एता हि आघारादिका आहुतयः सर्वेष्टीनां मुखं, यदन्यामाहुतिम् औपसदीम् अग्न्यादिकां जुहुयादन्यन्मुखं कुर्य्यात् तस्मात् स्रुवेणाघारयति इति। आघारादिकान्याहुतीर्जुहोति-इत्याघारादीनाम् अभावमाशङ्क्य पुनः प्रतिप्रसवोऽयम् 'आघारमाघारयति' इति, नान्यत् करोति, किन्तर्हि आघारयति, न नाघारयतीति। तस्मान्न परिसङ्ख्या, प्रतिषिद्धं वर्जयित्वा सर्वं कर्त्तव्यम् इति ॥

सू॰ अनिज्या वा शेषस्य मुख्यदेवतानभीज्यत्वात् ॥ ४६ ॥ (सि॰)॥

भा॰ अथ वा अपूर्वा उपसदः, 'अनिज्या' प्राकृतस्य 'शेषस्य',

---

* पूर्व्वत्र 'अप्रयाजास्ता अननुयाजाः' इत्येतावानेव पाठः, ततश्च अत्रापि तथैव भवितुं युक्तः।

† "अयमर्थः,—'सौवाघारः सर्व्वत्र यज्ञमुखं तथा सति यदि कश्चित् मन्द उपसत्-प्रयोगादौ सौवाघारमकृत्वा तस्य स्थाने काञ्चिदन्यामाहुतिं जुहुयात् तदा मुखा-न्यत्वाखेन प्रत्यवायं प्राप्नुयात्, सौवाघारः आदौ कर्त्तव्यः इति" इति न्यायमाला।

नित्यानुवादोऽयम्,—'अप्रयाजास्ता अननुयाजाः' इति। मुख्यदेवता-मनभीज्याम् उपदिश्य प्रधानदेवता विधीयन्ते,—'यान्यामाहुतिं पुरस्तात् जुहुयात् आग्नेय्या अग्निर्हि मुखम्' इत्यभिधाय,'यदन्यामाहुतिं पुरस्तात् जुहुयात् वैकृतीमन्यत् मुखं कुर्य्यादाग्नेय्या अग्निर्हि मुखं स्रुवेण आघारमाघारयति यान्यं यजते अग्निमनीकं सोमं मध्यं विष्णु-तेजनम्' इति; तदेतदाघारेण निराकाङ्क्षीकृतं यान्येन प्रकृतार्थेन सह एकवाक्यतामेति। अतः प्राप्ता मुख्यदेवता अनभीज्या अत्रोप-दिश्यन्ते यान्यं यजति, तस्मादग्निः प्रथम इज्यते इति॥ (१०।७। १४अ०)॥

---

'वारुणेनैककपालेन' इत्यादिना अपूर्व्वस्य अवभृथस्य विधानाधिकरणम्॥

सू० अवभृथे बर्हिषः प्रतिषेधात् शेषकर्म्म स्यात्॥ ४७॥ (१म पू०)॥

भा० अस्ति ज्योतिष्टोमेऽवभृथः,—'वारुणेनैककपालेनावभृथमभ्यव-यन्ति' इति। तत्रैतदाम्नायते,—अपबर्हिषः प्रयाजान् यजति। अपबर्हिषौ अनुयाजौ यजति' इति। तत्रैषोऽर्थः सांशयिकः,—किं, बर्हिर्मात्रं वर्जयित्वा अन्यत्सर्वं कर्त्तव्यम्, उत, आज्यभागाभ्यामन्यत् परिसङ्ख्यायते; अथ वा अपूर्व्वोऽवभृथः? इति। किं प्राप्तं?। बर्हिर्मात्रं वर्जयित्वा 'शेषकर्म्म स्यात्'। कुतः?। बर्हिःप्रतिषेधात्, 'अपबर्हिषौ अनुयाजौ यजति' इति बर्हिर्मात्रं प्रतिषिध्य कृतार्थः शब्दोऽन्यत् चोदकप्राप्तं न शक्नोति वारयितुं, तस्मादन्यत् स्यादिति। 'ननु

आज्यभागौ यजति' इति परिसङ्ख्यार्थं ग्रहणं, 'अग्नीषोमावाज्यभागौ यजति' इति। गुणार्थं तन्मन्यते स्म ॥

सू० आज्यभागयोर्वा गुणत्वात् शेषप्रतिषेधः स्यात् ॥ ॥ ४८ ॥ (२य पू०) ॥

भा० न चैतदस्ति,—शेषकर्म कर्त्तव्यमिति, किन्तर्हि 'शेषप्रतिषेधः स्यात्'। कुतः? । 'आज्यभागयोः' श्रवणात्,—'अग्नीषोमावाज्यभागौ यजति' इति । 'ननु अग्नीषोमागुणकविधानार्थं तत्'—इत्युक्तं। नेत्याह, लिङ्गक्रमाभ्यां प्राप्तावेव अग्नीषोमौ,—'अग्नस्त्वं प्रधिष्ठव अग्नि मे सोमो अब्रवीत्' इति, ताभ्यामेतौ आज्यभागौ अग्नीषोमावेव, निर्गुणमेवेदं वचनम् इतरेषामङ्गानां परिसङ्ख्यायकं भवितुमर्हति। यत्तु,— 'अपबर्हिषः प्रयाजान् अपबर्हिषौ अनुयाजौ यजति' इति, परिसङ्ख्यातानां प्रयाजानाम् अनुयाजयोश्च विधानार्थं भवतीति । तस्मात् शेषाणामेवाङ्गानां परिसङ्ख्येति ॥

सू० प्रयाजानां त्वेकदेशप्रतिषेधात् वाक्यशेषत्वं तस्मा-न्नित्यानुवादः स्यात् ॥ ४९ ॥ (२य पू०नि०) ॥

भा० तुशब्दः पक्षं व्यावर्त्तयति,—न चैतदस्ति,—परिसङ्ख्येति ; त्रिदोषा परिसङ्ख्या इत्युक्तं। किञ्च 'अपबर्हिषः प्रयाजान् यजति' इति वाक्यशेषो नावकल्पते, यदि 'प्रयाजान् यजति' इत्येव विधिस्तदा बर्हिःप्रयाजोऽपि प्राप्नोति, तत्र 'अपबर्हिषः' इत्येतत् नोपपद्यते । अथ बर्हिषः प्रतिषेधः, प्रयाजानां विधिर्नावकल्पते, तथाप्राप्तस्य बर्हिषः

प्रतिषेधोऽनुपपन्नः; उभयविधाने वाक्यं भिद्येत, वाक्यशेषो नोपपद्यते, एकञ्चेदं वाक्यं। तस्मान्न शेषपरिसङ्ख्या ॥

सू० आज्यभागयोर्ग्रहणं नित्यानुवादो गृहमेधीयवत् स्यात् ॥ ५० ॥ (सि०) ॥

भा० अथ वा अपूर्वोऽवभृथः, यद्वत् गृहमेधीयः, तद्वत् स्यात्। आज्यभागाभ्यां प्रत्यक्षश्रुताभ्यामेकवाक्यतामित्वा निराकाङ्क्षो नान्यैः प्राकृतैरेकवाक्यतामेति। तस्मादपूर्वोऽवभृथः इति ॥ (१०।७। १५अ०) ॥

---

वाजपेयादौ यूपादीनां खादिरत्वादि-नियमाधिकरणम् ॥

सू० विरोधिनामेकश्रुतौ नियमः स्यात् ग्रहणस्यार्थवत्त्वात् शरवच्च श्रुतितो विशिष्टत्वात् ॥ ५१ ॥ (सि०) ॥

भा० अस्ति वाजपेयः, 'शरदि वाजपेयेन स्वाराज्यकामो यजेत' इति। अत्र श्रूयते,—'खादिरो यूपो भवति' इति। तत्र संशयः,— किं, खादिरो वा पालाशो वा रौहितको वा, उत, खादिर एव? इति। तथा अन्यत्र श्रूयते,—'बृहत् पृष्ठं भवति' इति। तत्र संशयः,— किं बृहद्वा पृष्ठं, रथन्तरं वा, उत, बृहदेव? इति। चैधातव्यायां श्रूयते,—'यवमयो मध्यमः' इति। तत्र संशयः,—किं यवमयो वा व्रीहिमयो वा, उत, यवमय एव? इति। सर्वेष्वेषु किं प्राप्तं,—

'विरोधिनाम्' अन्यतमस्मिन् श्रूयमाणे 'नियमः स्यात्',—खादिर एव यूपः, बृहदेव पृष्ठं, यवमय एव मध्यम इति। कुतः? 'ग्रहणस्यार्थवत्त्वात्',— एवं बृहत्खादिरयवानां ग्रहणमर्थवद्भविष्यति, इतरथा; प्राप्तानुवाद-मात्रमनर्थकं स्यात्; श्रुत्या विशिष्टाः खदिरादयः चोदकप्राप्तान् पलाशादीन् वाधेरन्, 'शरवत्',—यथा 'शरमयं बर्हिर्भवति' इति शरेषु श्रुतेषु कुशा निवर्त्तन्ते, एवमिहापीति॥

सू॰ उभयप्रदेशान्नेति चेत्॥ ५२॥ (पू॰)॥

भा॰ 'इति चेत्' पश्यसि, उभयं हि प्रदिशति चोदकः,—खादिरं पालाशञ्च, बृहत् रथन्तरञ्च, व्रीहीन् यवांश्च; केन इदानीं, चोदकेन तुल्ये प्रदेशे सति पलाशादयो निवर्त्तिताः? खदिरग्रहणम् अन्यं परिसंख्यातुं, त्रिदोषत्वात् परिसंख्याया इत्युक्तम्। तस्मान्न नियमो विकल्प एवेति॥

सू॰ शरेष्वपीति चेत्॥ ५३॥ (आ॰)॥

भा॰ यद्युभयप्रदेशादुभयं भवतीति अध्यवसीयते, 'शरेष्वपि' श्रुतेषु कुशा नैव निवर्त्तेरन्!—इति स्थितायां प्रतिज्ञायां सूत्रेण परि-चोदयति स्म;—

सू॰ विरोध्यग्रहणात्तथा, शरेष्विति चेत्॥ ५४॥ (आ॰नि॰)॥

भा॰ 'इति चेत्' पश्यसि,—एष न्याय उच्यमानः 'शरेषु' अपि दोषं प्रसञ्जयति—इति। न शरेषु किञ्चन दोषोऽस्ति, तत्र कुशा निवर्त्तन्ता

इति 'तथा' स्यात्। कुतः?। 'विरोध्यग्रहणात्',—न हि विरोधिषु शरेषु अङ्गीक्रियमाणेषु कुशाः शक्या अङ्गत्वेनोपादातुं; तस्मात् कुशा निवर्त्तन्ते इति॥

सू० तथेतरस्मिन्॥ ५५॥ (पुनः आ०)॥

भा० 'तथा इतरस्मिन्' अपि खदिरादौ विरोधिनि अङ्गीक्रियमाणे न शक्याः पलाशाद्योऽङ्गत्वेनोपादातुं, तस्मान्निवर्त्तिष्यन्त इति॥

सू० श्रुत्यानर्थक्यमिति चेत्॥ ५६॥ (आ०नि०)॥

भा० 'इति चेत्' पश्यसि,—'विरोध्यग्रहणात्' पलाशादीनां निवृत्ति-र्भविष्यति इति; चोदकश्रुतेरानर्थक्यं स्यात्, प्रापयति हि चोदकः पलाशादीनि; स हि तुल्यः खदिरादिषु पलाशादिषु वा। तदुक्तम्,—"अग्रहणादिति चेत्"। "न तुल्यत्वात्" (१०।७।२०—२१सू०) इति। न च शक्यं वक्तुं,—खदिरादिभिः प्रयोगवचन एकवाक्यता-मेतीति बध्नाति; प्रयोगवचनेन हि स श्रूयते, स श्रूयमाणः परम्परया पशुयागं यास्यतीति। अथेदानीं यागप्रयोगवचनः तद्विशिष्टान् यागान् याचयति, तेषु पलाशाद्यो विशेषाच्चोदकप्राप्ता न खदिरादिभि-र्निवर्त्तिताः; तस्माद्विकल्प इति॥

सू० अग्रहणस्यार्थवत्त्वादुभयोरप्रतिपत्तिः स्यात्॥ ५७॥ (उ०)॥

भा० बध्नाति, प्रयोगवचनो हि प्रत्यक्षश्रुतेन खदिरेणैकवाक्यतामेति,

तस्मिन् निराकाङ्क्षे न पलाशः प्रवर्त्स्यते, तस्मात् खदिरविशिष्ट-पश्वयागो यागप्रयोगवचनेन गृहीतो न पलाशविशिष्टः, तस्मात् खदिरस्यैव हृत्तिर्नोभयोः; एवं रथन्तरे यवमये च। तस्मात् खदिरादीनां नियमः, नैषां पलाशादिभिर्विकल्पः इति॥ (१०।७।१६अ०)॥

---

काम्येष्टिषु प्राकृतद्रव्यदेवतस्य निवृत्त्यधिकरणम्॥

सू॰ सर्व्वासाञ्च गुणानामर्थवत्त्वात्* गृहणमप्रवृत्ते स्यात्॥ ५८॥ (सि॰)॥

भा॰ काम्या इष्टयः श्रूयन्ते,—‘आग्नेयमष्टाकपालं निर्वपेद्रुक्काम:’, ‘अग्नीषोमीयमेकादशकपालं निर्वपेत् श्यामाकं ब्रह्मवर्चसकाम:’, ‘ऐन्द्रमेकादशकपालं निर्वपेत् प्रजाकाम:’ इति। तत्रैतेषु यागेषु अयमर्थः सांशयिकः,—किं प्राकृतं द्रव्यदेवतं निवर्त्तते, उत, न निवर्त्तते? इति। ‘सर्वासाम्’ एवंजातीयकानां चोदनानामुत्पन्नानां द्रव्यदेवतेनैव सहोत्पत्तिः, तस्योत्तरकालं चोदकः। तस्मादगृहीतां†-द्रव्यदेवते चोदकेन, विधिनैव प्राप्ते द्रव्यदेवतं प्रति निराकाङ्क्षे यागे अवशिष्टानि अङ्गानि चोदकः प्रापयिष्यति इति। अथ यदुक्तम् अग्रहणात् ग्रहणम् (१०।७।३०सू॰भा॰) इति, तदिह सिद्धम्॥

---

* ‘गुणानामर्थत्वात्’ इति का॰ च॰ पु॰ पाठः। ‘गुणानामार्थवत्त्वात्’ इति क॰ स॰ १५०२ संख्यकपुस्तके एवं चादर्शपुस्तके च पाठः।

† ‘तस्मादगृहीते’ इति का॰ च॰ पुस्तके एवं क॰ सं॰ ६६१ संख्यकपुस्तके च पाठः।

सू० अधिकं स्यादिति चेत् ॥ ५९ ॥ (पू०) ॥

भा० 'इति चेत्' पश्यसि,—विधिना प्राप्तत्वाद्वचनिष्टानि चोदकः प्रापयिष्यति इति; नैतदेवम्, 'अधिकं स्यात्'। उक्तमेतत् (१०।७।२१सू०भा०) तुल्यश्चोदकः सर्वेषु अङ्गेषु, न हि स पदार्थमाकाङ्क्षति, पदार्थगतं प्रकारमाकाङ्क्षति, तस्मात् द्रव्यदेवतमपि चोदकः प्रापयति; प्राप्ते वचनप्रामाण्यात् अधिकं भविष्यति,—एकं वचनप्रापितम्, अन्यत् चोदकेनेति ॥

सू० नार्थाभावात् ॥ ६० ॥ (उ०) ॥

भा० 'न' एतदेवम्,—अधिकं कर्त्तव्यमिति। कुतः?। 'अर्थाभावात्', प्रयोजनाभावादित्यर्थः। सत्यं, चोदकप्राप्तं प्रत्यक्षश्रुत्या न प्रतिषिद्धं द्रव्यदेवतं, किन्तु परार्थं तत् यागनिर्वृत्तये,स च याग एकेनैव द्रव्येण एकया देवतया निर्वर्त्तयितव्यः श्रूयते,—'आग्नेयमष्टाकपालं निर्वपेद्रुक्कामः' इत्येवमादि; तस्मिन् सहायापेक्षे कल्प्यमाने निर्द्देशो बाध्येत! अथ तेन निर्वर्त्तते,* चोदकप्रापितस्य न किञ्चिदस्ति प्रयोजनमिति तत् श्रुतमपि सिद्धत्वात् प्रयोजनस्य, न करिष्यते ॥ (१०।७।१७अ०) ॥

---

* 'निर्वर्त्तिते' इति आदर्शपुस्तकपाठः।

षौडशे(?)ऽध्याये। खादिरयूपस्य नियमाधिकरणम्॥

सू॰ तथैकार्थविकारे प्राकृतस्याप्रवृत्तिः प्रवृत्तौ हि विकल्पः स्यात्॥ ६१॥ (सि॰)॥

भा॰ क्वचित् कर्मविशेषे श्रूयते,—'औदुम्बरो यूपो भवति'। तत्र संशयः,—किं प्राकृतमत्र यूपद्रव्यं बाध्यते, उत प्राप्यते? इति। किं प्राप्तम्?,—'एकार्थविकारे' अस्मिन् औदुम्बरे, एकार्थत्वात्(?) खदिरादिभिः, विकारस्य, तत्र 'प्राकृतस्य' खदिरादेः 'अप्रवृत्तिः',—यथा प्राकृतस्य द्रव्यदेवतस्य पूर्वस्मिन् अधिकरणे, 'तथा' अस्मिन् खादिरस्य यूपद्रव्यस्य अप्रवृत्तिः। 'प्रवृत्तौ हि' तस्य विषमशिष्टो 'विकल्पः स्यात्' चोदकप्राप्तस्य प्रत्यक्षश्रुतस्य च, न चैष न्याय्यः; तस्मात् अप्रवृत्तिः॥

सू॰ यावच्छ्रुतीति चेत्॥ ६२॥ (पू॰)॥

भा॰ 'इति चेत्' पश्यसि,—विकल्पः सदोष इति; समुच्चयो भवतु, उभयस्मिन् सह नियुज्यतां पशुः, तदा चोदकानुग्रहो भविष्यति॥

सू॰ न प्रकृतावशब्दत्वात्॥ ६३॥ (उ॰)॥

भा॰ 'न' एतदेवं, केवले हि औदुम्बरे नियोजनं श्रूयते, केवले खादिरे* 'प्रकृतौ',—'खादिरे बध्नाति' इति। उभयस्मिंश्च बन्धनद्रव्ये न प्राकृतं वाक्यं, न च प्रत्यक्षश्रुतं, तेन समुच्चयस्य प्रमाणमेव नास्ति, अतः प्राकृतं यूपद्रव्यं निवर्त्तते इति॥ (१०।७।१८अ॰)॥

---

* 'केवले हि उदुम्बरे नियोजनं श्रूयते केवले खादिरे' इति का॰ स॰ पु॰ पाठः।

प्रकृत्यर्थवत्कार्यैर्व्रीहिभिरेव यागाधिकरणम् ॥

सू॰ विकृतौ* त्वनियमः स्यात् पृषदाज्यवत् ग्रहणस्य गुणार्थत्वात् उभयोश्च प्रदिष्टत्वात् गुणशास्त्रं यदेति स्यात् ॥ ६४ ॥ (पू॰) ॥

भा॰ 'सौमारौद्रं घृते चरुं निर्वपेत् शुक्लानां व्रीहीणां ब्रह्मवर्चसकामः, सौमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणां अभिचरन्, नैर्ऋतं चरुं निर्वपेत् कृष्णानां व्रीहीणां, सौर्यं चरुं निर्वपेत् शुक्लानां व्रीहीणाम्' इति। तत्र संशयः,—किं व्रीहिभिर्यवैर्वा यष्टव्यम्, उत व्रीहिभिरेव?। किं प्राप्तं?,—'विकृतौ तु' विरोधिनामन्यतमस्मिन् गृह्यमाणे 'अनियमः स्यात्',—व्रीहिभिर्यवैर्वा इति। कुतः?। 'ग्रहणस्य गुणार्थत्वात्',—तस्य हि व्रीहेर्ग्रहणं गुणार्थं, न यागसम्बन्धार्थं, शुक्ला व्रीहयो भवन्ति, यागस्तु उभाभ्यामपीति; यथा 'पृषदाज्येनानुयाजान् यजति' इति आज्यं पृषत्तासम्बन्धार्थं भवति, एवमिहापि व्रीहयः शुक्लगुणसम्बन्धार्थाः, न यागसम्बन्धेन अन्यपरिसङ्ख्यानार्थाः। तथा 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्य्या' इत्येतत् अवकल्पमुपपद्यते, यदि एवंजातीयकेन प्राकृतं न निवर्त्त्येत, ततः पञ्चावत्तेन चतुरवत्तेऽनिवर्त्तिते 'यद्यपि चतुरवत्ती' इति दर्शनं युक्तं भवति। न चानर्थको गुणोपदेशो भवति, 'उभयोः' 'प्रदिष्टत्वात्'-उभये व्रीहियवाः चोदकेन प्राप्ताः विकल्पन्ते; 'यदा'

* अत्र सूत्रे परत्र भाष्ये च 'विकृते' इति क॰ ख॰ पु॰ पाठः।

व्रीहयः, तदा 'गुणश्रुतम्'; अव्रीहिपक्षे असम्भवादर्थात् निवर्त्तेत; तस्माद्विकल्पः इति ॥

सू॰ ऐकार्थ्याद्वा नियम्येत श्रुतितो विशिष्टत्वात् ॥ ॥ ६५ ॥ (सि॰) ॥

भा॰ एकार्था हि व्रीहियवाः, तत्र व्रीहीणां श्रुतत्वात् यवा नैव प्राप्नुवन्ति। 'ननूक्तं गुणसम्बन्धार्था हि व्रीहयः' इति। नैतदेवं, यदि गुणसम्बन्धार्था भवेयुस्ततो न नियमः स्यात्, न तु गुणसम्बन्धार्थाः, विकारसम्बन्धे हि षष्ठी भवेत् व्यतिरिक्ते प्रातिपदिकार्थे, तेन विकारविशेषणं श्रुत्या भवति, गुणविशेषणं वाक्येन, श्रुतिश्च वाक्याद्बलीयसीति, तस्मात् श्रुत्या व्रीहयो यागेन सम्बध्यमानाः समानार्थान् यवान्निवर्त्तयेयुः ॥

सू॰ विरोधित्वाच्च लोकवत् ॥ ६६ ॥ (यु॰) ॥

भा॰ विरोधिनश्चैते। कथं?। ये हि एकस्मिन् कार्ये विकल्पेन साधकाः श्रूयन्ते, ते परस्परेण विरोधिनो भवन्ति, विरोधिनाञ्च न सह प्रवृत्तिः, 'लोकवत्', यथा, 'मत्स्यान् न पयसा समश्नीयात्' इति यद्यपि सगुणा मत्स्या भवन्ति तथापि पयसा सह न समश्यन्ते; तस्मात् सगुणा अपि व्रीहयो यवान्निवर्त्तयन्त्येव ॥

सू॰ कृतोऽश्च तद्गुणत्वात् ॥ ६७ ॥ (आ॰नि॰) ॥

भा॰ 'यदि व्रीहीणां विकारेण सम्बन्धः, कथम् एषां गुणेनापि सम्बन्धो भविष्यति?' इति। अत्रोच्यते,—नैवेषां गुणेन सम्बन्धः

श्रुत्या वाक्येन वा, नापि गुणस्य व्रीहिभिः, कथं तर्हि?—'क्रतोः' 'तद्गुणत्वात्',—क्रतुरयं शुक्लगुणः श्रूयते कृष्णगुणश्च, तत्रैकवाक्यत्वात् एकस्मिन् क्रतावर्थेन द्रव्यगुणौ सम्बध्येते, तेनार्थभेदोऽपि परिहृतो भवति ॥

सू॰ विरोधिनाञ्च तत्श्रुतावशब्दत्वात् विकल्पः स्यात् ॥ ६८ ॥ (२यु॰) ॥

भा॰ 'विरोधिनाञ्च' अन्यतमस्मिन् प्रत्यक्षे श्रूयमाणे अन्यस्मिंश्च चोदकप्राप्ते 'अशब्दत्वात्' प्रत्यक्षे विरोधिनि सति चोदकस्य अन्याय्यो 'विकल्पः स्यात्'; तस्मादपि नियमः ॥

सू॰ पृषदाज्ये समुच्चयात् ग्रहणस्य गुणार्थत्वम् ॥ ॥ ६९ ॥ (आ॰नि॰) ॥

भा॰ पृषदाज्ये तु युक्तं, न हि तत्र केनचिद्विरोध आज्यस्य, तेन न पाक्षिकमाज्यं, ततश्च दध्ना आज्यसमुच्चयः। यतः पृषत्ता-सञ्जननार्थं दधि, तेन न पाक्षिकं दधि, आज्येन च समुच्चय इति ॥

सू॰ यद्यपि चतुरवत्तीति तु नियमे नोपपद्यते ॥ ॥ ७० ॥ (आ॰) ॥

भा॰ अथ यदुक्तं,—यद्येवंजातीयकेषु नियमो भवेत्, 'यद्यपि चतुरवत्ती' इति चतुरवत्तदर्शनं नोपपद्यते—इति, तत्परिहर्त्तव्यमिति ॥

सू॰ क्रत्वन्तरे वा तन्न्यायत्वात् कर्मभेदात् ॥ ७१ ॥ (आ॰नि॰) ॥

भा० 'कालान्तरे' एव 'वा' दर्शपूर्णमासयोश्चतुरवत्तदर्शनं भविष्यति। यद्यपि दर्शपूर्णमासयोश्चतुरवत्ती यजमानः, तथापि पञ्चावत्तैव वपा भवति इति, अन्यस्मिन् कर्माणि चतुरवत्तम्, अन्यस्मिन् पञ्चावत्तं, यद्यप्येवंजातीयकेषु नियमस्तथापि चतुरवत्तदर्शनमुपपद्यत इति॥ (१०।७।१९अ०)॥

---

पञ्चावत्तैव वपा कार्य्येत्यनेनाङ्गेष्वपि पञ्चावत्तविधानाधिकरणम्॥

सू० अङ्गाश्रुतीति चेत्॥ ७२॥ (पू०)॥

भा० अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः,—'यो दीक्षितो यत् अग्नीषोमीयं पशुमालभते' इति। तत्रेदमाम्नायते,—'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' इति। तत्रैषोऽर्थः सांशयिकः,— किं वपायां श्रूयमाणं पञ्चावत्तम् अङ्गापूर्वे चतुरवत्तं निवर्त्तयति, उत न? इति। किं प्राप्तम्?—'इति चेत्' संशयः, न—इति। कुतः?। यस्मिन् श्रूयते पञ्चावत्तं, तत्रैव चतुरवत्तं निवर्त्तयति, नान्यत्र; यथा कालान्तरे न निवर्त्तयति,—एवमङ्गापूर्वेष्वपि पञ्चावत्तश्रुतिर्न निवर्त्तयितुमर्हतीति॥

सू० न चोदनैकत्वात्॥ ७३॥ (सि०)

भा० नैतदेवम्,—एका ह्येषा चोदना—'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति। तत्र प्रकरणे पञ्चावत्तं श्रुतम्, अतः प्रकरणादङ्गापूर्वे भविष्यति। आह,—'ननु वाक्याद्वपायां भवितुमर्हति' इति।

न—इत्युच्यते,—वपा हि द्रव्यं, न तत्सम्बन्धे प्रयोजनमस्तीति। 'उच्यते,—पशावत्तानां वपाप्रयोगवचन उपसंहरिष्यति, तथा न दोषो भविष्यति' इति। अत्रोच्यते,—एवं सत्यपि अङ्गापूर्वं पशावत्तं सिध्येत्। कथम्?। एका हि सा चोदना, अङ्गयागो वपायागश्च, तेन चेत् पशावत्तं सम्बध्यते, तदा अङ्गेष्वपि भवितुमर्हति। 'ननु च वपासम्बन्धात् वपैव पशावत्ता न अङ्गानीति'। उच्यते,—नैतदेवं वचनं,—वपैव पशावत्तेति, कथन्तर्हि पशावत्तैव वपेति, यत एवकारकरणं ततोऽन्यत्रावधारणं, न चाविशेषेण या पशावत्तप्राप्तिः, सा शक्या वपासम्बन्धेन निवर्त्तयितुं, निवर्त्तकस्य शब्दस्याभावात्। तस्मादङ्गेषु न चतुरवत्तम्।

अपि च, एवंजातीयकेषु अङ्गेषु पशावत्ते जाते ततोऽपरा चोदना,—'तानि द्विर्द्विरवद्यति' इति, वपाग्रहणं तत्र हविर्लक्षणार्थं, प्राथम्यात् अवसरप्राप्तं श्रूयते, विधित्सिते हि तस्मिन् वाक्यभेदप्रसङ्गः। तस्मादङ्गेष्वपि पशावत्तमेवेति॥

इति श्रीभट्टशवरस्वामिविरचिते मीमांसाभाष्ये दशमस्याध्यायस्य सप्तमः पादः॥ ७॥

# मीमांसा-दर्शने

## दशमे अध्याये अष्टमः पादः।



प्रदेशानारभ्य-विधानयोर्निषेधस्य पर्युदासत्वाधिकरणम् ॥

सू० प्रतिषेधः प्रदेशेऽनारभ्य-विधाने च प्राप्तप्रति-षिद्धत्वात् विकल्पः स्यात् ॥ १ ॥ (पू०) ॥

भा० प्रतिषेधः श्रूयते चोदकेन प्रदिष्टे धर्मे, कश्चिदनारभ्य-वादेन प्राप्ते ;—चोदकेन प्रदिष्टे 'महापितृयज्ञे न होतारं वृणीते नार्षेयम्' इति। तथा, अनारभ्य-वादेन प्राप्ते,—'आश्रावयेति चतुरक्षरम् अस्तु, श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं, ये यजामहे इति पञ्चाक्षरं; द्व्यक्षरो वषट्कारः, एष वै प्रजापतिः सप्तदशो यज्ञेषु अन्वायत्तः' इति। ततो 'नानुयाजेषु ये-यजामहं करोति' इति। तत्रायमर्थः सांशयिकः,—किं प्रदेशानारभ्य-वादयोः प्रतिषेधः स च विकल्पः, उत, पर्युदासः? इति। किं प्राप्तं?—'विकल्पः'—इति, प्राप्तिप्रतिषेधयोः प्रमाणवत्त्वात्,—उभौ हि प्राप्तिप्रतिषेधौ प्रमाणवन्तौ; प्राप्तिस्तावत् प्रमाणवती,—'महापितृयज्ञेन यजेत प्रकृतिवत्'—इति। तथा, 'एष वै प्रजापतिः सप्तदशो यज्ञेष्वन्वायत्तः' इति भवति वाक्यं प्राप्तेः, प्रतिषेधमनपेक्ष्यमाणं प्रमाणभूतं। तथा, प्रतिषेधः प्रमाणवान्,—'न होतारं वृणीते नार्षेयं, मृत्योरेवैनानुत्सृजति'—इति। तथा, 'नानुयाजेषु ये-यजामहं करोति' इति; सर्वेषु यजिषु ये-यजामहक्रिया

प्राप्ता, न करोत्यनुयाजेषु इति प्रतिषिध्यते। ये-यजामहः कर्त्तव्य इतिवचनात् स-ये-यजामहकः प्रयोगः फलवानिति गम्यते, न कर्त्तव्यो ये-यजामहे—इति वचनात् अ-ये-यजामहकः प्रयोगः फलवानिति गम्यते; उभयोः प्रामाण्यादुभयथापि फलमिति गम्यते, तस्माद् विकल्पः; एवं होत्रार्षेयवरणेऽपि। तस्मात् 'प्राप्तप्रतिषिद्धत्वात् विकल्पः स्यात्' ॥

सू॰ अर्थप्राप्तवदिति चेत् ॥ २ ॥ (आ॰) ॥

भा॰ 'इति चेत्' अवगम्यते,—विकल्पः स्यादिति, तन्न 'अर्थप्राप्तवत्' स्यात्, तद्यथा लोके, अर्थप्राप्ते यत्र प्रतिषेधो भवति,—'न विषं भक्षयितव्यं', 'न सर्पाय अङ्गुलिर्देया', 'न कण्टकः पादेनाधिष्ठेयः'—इति, अक्रियैव तस्यार्थस्य भवति, न विकल्पः, तेन मन्यामहे,—विधिप्रतिषेधयोः प्रतिषेधो बलीयानिति, प्राप्ते हि विधौ प्रतिषेधो भवति, येन च नाम प्राप्ते यदुच्यते, तत् तस्य बाधकं भवति; तस्मादक्रियैव अनुयाजेषु ये-यजामहस्य, महापितृयज्ञे च होत्रार्षेय-वरणस्येति ॥

सू॰ न, तुल्यहेतुत्वादुभयं शब्दलक्षणम् ॥ ३ ॥ (आ॰ नि॰) ॥

भा॰ नैतदेवं, तुल्यो हि हेतुरिह प्राप्तेः प्रतिषेधस्य च, 'उभयं शब्दलक्षणं',—प्राप्तिरपि प्रतिषेधोऽपि, प्राप्तिरपि प्रतिषेधे प्राप्ते, प्रतिषेधोऽपि प्राप्तौ प्राप्तायां; लोके पुनरुभयम् अर्थलक्षणं प्रत्यक्षतो गम्यमानं गुणदोषकरं, तत्र विधिप्रतिषेधयोर्यतरो गुणवान् सो

ऽनुष्ठीयते; न तु शब्दलक्षणे गुणदोषौ शक्येते अवगन्तुं। तस्मात् यद्यत् वाक्येन प्राप्तं, तत्तदुभयमवधार्येत, उभौ च प्राप्तिप्रतिषेधौ प्राप्नुतः। तस्मात् विकल्पस्तत्र-तत्रेति ॥

सू० अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशः स्यात् ॥ ४ ॥ (सि०) ॥

भा० 'अपि तु' इति पक्षव्यावृत्तिः। 'वाक्यशेषः' प्रतिषेधः प्रदेशा-नारभ्य-वादयोः। नैवम् अभिसम्बन्धः,—अनुयाजेषु ये-यजामहो न कर्त्तव्यः—इति, कथन्तर्हि, नानुयाजेषु इति, नञ्शब्दोऽनुयाजशब्देन सम्बध्यते, न करोतिना। किमतः, यद्येवं?। नानुयाजेष्वित्येतावत् अपरिपूर्णं वाक्यं तस्याकाङ्क्षं पूर्ववाक्यैकदेशेन सम्बध्यते,—यदेतत् ये-यजामहं करोतीत्युक्तं, तत् न अनुयाजेषु, यावदुक्तं स्यात्, अनुयाजवर्जितेषु यजतिषु ये-यजामहं करोति इति; तस्माद्विधिरेव पर्युदासानुयाजकः, नास्ति प्रतिषेध इति न विकल्पो भविष्यति। महापितृयज्ञेऽपि 'प्रकृतिवत्' इतिवचनात् होतार्षेयवरणमिह कर्त्तव्य प्राप्तं; तदुच्यते,—प्रकृतिवत् कर्त्तव्यं, वरणं वर्जयित्वेति, नञ्शब्दोऽत्र वृणीतेरर्थेन सम्बध्यते, प्रत्ययार्थस्तु अनुवादः,—यदत्र प्रकृतिवत् कर्त्तव्यं तद्वरणं वर्जयित्वेति।

'किमर्थं पुनरनुयाजैर्वृणधात्वर्थेन च नञ्शब्दः सम्बध्यते?'—इति। उच्यते, 'अन्याय्यत्वाद्विकल्पस्य,' अन्याय्यो हि विकल्पः। कथम्?। इह 'यजतिषु ये यजामहं करोति' इत्युच्यते, यद्येवम् अवगम्यते, न शक्यः स विना ये-यजामहेन यजतिरभिनिर्वर्त्तयितुं, तत्र

प्रतिषेधवचनमनर्थकं, प्रतिषेधेऽपि विज्ञाते विधिवचनमनर्थकं ; तस्मादन्याय्यो विकल्पः । ननु 'अन्यतरस्य विधेरानर्थक्यप्रसङ्गाद्विकल्प आश्रयणीयो भवति' । उच्यते, यत्रान्यतरत् आनर्थक्यमापद्यते, कल्प्येतापि तत्र विकल्पः, यत्र न केनचिदपि प्रकारेणार्थवत्ता सम्भवति; इह तु अनुयाजसम्बन्धपर्य्युदासेनार्थवत्ता, तस्मान्न विकल्पः ॥

आह,—'ननु अनुयाजसम्बन्धे नञ्शब्दस्य समासः प्राप्नोति, नित्यो हि अस्य नञ्शब्दस्य* सुबन्तसम्बन्धेन समास इति वार्त्तिककारो भगवान् कात्यायनो मन्यते स्म,—'वावचनानर्थक्यञ्च स्वभावसिद्धत्वात्' इति । नेति भगवान् पाणिनिः, स हि "विभाषा" (२।१।११सू०) इति प्रकृत्य ईदृशं समासमुक्तवान्, सद्वादित्वाच्च पाणिनेर्वचनं प्रमाणम्, असद्वादित्वाच्च कात्यायनस्य; असद्वादी हि विद्यमानमपि अनुपलभ्य ब्रूयात् । तस्मात् पर्य्युदास इति ॥ (१०।८।१अ०) ॥

---

न तौ पशौ करोतीत्यादिनिषेधस्यार्थवादताधिकरणम् ॥

सू० अपूर्वे चार्थवादः स्यात् ॥ ५ ॥

भा० स्तो दर्शपूर्णमासौ, तत्राज्यभागौ प्रकृत्य समामनन्ति,—'न तौ पशौ करोति न सोमे' इति । तत्रायमर्थः सांशयिकः,—किं पर्य्युदासः, उत, प्रतिषेधः, अथ वा अर्थवादः? इति । किं प्राप्तं?— 'यथा पूर्वत्र पर्य्युदासस्तथा तावत् पर्य्युदासो नावकल्पते । कथं ? ।

---

* नञः इति का० श्री० पु० पाठः ।

दर्शपूर्णमासयोरेतत् श्रूयते, तत्र कः प्रसङ्गो यत् सोमे स्यात्, यदि सोमः पर्य्युदस्येत, सम्बन्ध एव न स्यात्, सोमवर्जितयो-र्दर्शपूर्णमासयोः इति, तस्माच्चोदकप्राप्तयोः सोमे प्रतिषेधः। ननु 'अपूर्वः सोमः, नैव तत्र चोदकेनाज्यभागौ प्राप्नुतः'। उच्यते,— लक्षणार्थः सोमशब्दो भविष्यति, सौमिकेषु दीक्षणीयादिषु पशु-बन्धमात्रे च न कर्त्तव्यौ इति।

एवं प्राप्ते ब्रूमः,—'अपूर्वे चार्थवादः स्यात्' इति,—अपूर्वे सोमे नैव आज्यभागौ प्राप्नुतस्तस्मान्न प्रतिषेधः। अथ 'दीक्षणीयादीन् सोम-शब्दो लक्षयति'। तत्रायमेव दोषो भवति यल्लक्षणा। अपि च प्राप्त-प्रतिषिद्धत्वाद्दीक्षणीयादिषु विकल्पः प्राप्नोति, विकल्पश्चान्याय्य इत्युक्तं, तस्मादसम्भवति अस्मिन् विकल्पो भविष्यति, सम्भवति चार्थं, 'तौ न पशौ करोति' इत्यस्यार्थवादत्वेन। कः पुनरत्र?। प्रशंसार्थः, सोमे आज्यभागौ न क्रियेते पशावपीति, तद्यथा 'आदित्यो यूपः' इति अञ्जने कृते तेजःसामान्यादुच्यते, एवमिहापि पशौ आज्यभागौ कथं न क्रियेयाताम्? इति तदर्था प्रशंसा इति॥(१०।८।२अ०)॥

---

नातिरात्रे गृह्णाति षोडशिनमित्यादिनिषेधस्य विकल्परूपताधिकरणम्॥

सू० शिष्ट्वा तु प्रतिषेधः स्यात्॥ ६॥

भा० आह,—प्रथमेऽधिकरणे नञ्शब्दः पर्य्युदासार्थः, द्वितीये तु अर्थवादार्थः। अथ किंलक्षणकः प्रतिषेधः?—इति, लक्षणमुच्यते,— 'शिष्ट्वा तु प्रतिषेधः स्यात्', यथा 'नातिरात्रे गृह्णाति षोडशिनम्' इति,

न तत्र शक्यं वक्तुं पर्य्युदास इति, सम्बन्ध एव हि न स्यात्,—अतिरात्रवर्जितातिरात्रे गृह्णाति षोडशिनमिति। नापि कश्चिदर्थवादत्वेन सम्भवति, तस्मात् न गृह्णातीत्यत्र सम्बन्धः।

ननु 'परस्परं विरुद्धौ विधिप्रतिषेधौ न सम्भवतः'। उच्यते,—वचनप्रामाण्यात् प्रतिषेधो विधिं बाधित्वा भविष्यति, विधिरपि प्रतिषेधं, न अन्या गतिरस्तीति पक्षे मिथ्याप्रत्ययः कल्पयिष्यते,—तदा विधिर्यदा न प्रतिषेधः, तदा प्रतिषेधो यदा न विधिरिति। ननु 'सर्वदा विधिः प्रतिषेधश्च प्राप्नोति'। उच्यते,—उक्तमेतत् वचनप्रामाण्यात् विरोधाच्च मिथ्याप्रत्ययः प्रयोगवचन एकं कल्पं गृहीत्वा न द्वितीयमपि गृह्णातीति, तस्मादन्यतरेण कल्पेन सिध्यतीति। ननु 'कल्पान्तराभावे वैगुण्यं'। अत्रोच्यते,—सत्यं वैगुण्यं, वैगुण्येऽपि तत्सिद्धिरेव वाक्यात् प्रमाणादवगम्यते; तस्माददोषः। यत्र पुनरन्या वचनव्यक्तिरस्ति वाक्यस्य, तत्र न विकल्पो भवति, यथा 'नानुयाजेषु ये यजामहं करोति' इति॥ (१०।८।३अ०)॥

---

समाकृतिर्वै जर्त्तिला इत्यादिनिषेधस्यार्थवादताधिकरणम्॥

सू० न चेदन्यं प्रकल्पयेत् प्रक्लृप्तावर्थवादः स्यादानर्थक्यात् परसामर्थ्याच्च॥ ७॥

भा० इदं समाम्नायते अग्निहोत्रे,—'जर्त्तिलयवाग्वा वा जुहुयात् गवेधुकयवाग्वा वा जुहुयात् न ग्राम्यान् पशून् हिनस्ति न आरण्यान्' इति। अथो खल्वाहुरनाहुतिर्वै जर्त्तिलाश्च, गवेधुकाश्च पयसा

अग्निहोत्रं जुहुयात्' इति। अत्र सन्देहः,—किं 'अर्त्तिलयवाम्वा गवेधुकयवाम्वा वा जुहोति' इति विधिः, 'अनाहुतिर्वै अर्त्तिलाश्च गवेधुकाश्च' इति प्रतिषेधः; अथ वा उभौ एतौ अर्थवादार्थौ, 'पयसा अग्निहोत्रं जुहोति' इति विधिः? इति। किं प्राप्तं?,—अर्त्तिलयवाम्वेति विधिः, विधिशब्दस्य प्रत्यक्षत्वात्, अनाहुतिरित्यपि प्रतिषेधः प्रत्यक्षः; पयसा अग्निहोत्रं जुहोतीति अपरो विधिः, प्रत्यक्षत्वादेव; एवं सति विकल्पः,—अर्त्तिलयवाम्वा गवेधुकयवाम्वा वा होतव्यं, न वा ताभ्यां, पयसा होतव्यम् इति। न चात्र पर्युदासोऽवकल्पते, न हि नञ्शब्दस्य अर्त्तिलयवाम्वा गवेधूकयवाम्वा वा सामर्थ्यमस्ति, आहुतिशब्देन सह समस्तत्वात्, कल्प्यमाने वा सामर्थ्ये सम्बन्ध एव न स्यात्,—अअर्त्तिलयवाम्वा अर्त्तिलयवाम्वा जुहोति इति, अनर्थकश्च पर्युदासे विधिर्भवेत्, कृत्स्नस्य पर्युदस्तत्वात्; क्षीरविधाने च पर्युदासानर्थक्यं अर्त्तिलगवेधुकानाम् अप्राप्तत्वात् तस्माद्विकल्प इति।

एवं प्राप्ते ब्रूमः,—भवेदर्थप्रतिषेधेन विकल्पः, 'न चेदन्यं' विधिं 'प्रकल्पयेत्;' 'पयसा अग्निहोत्रं जुहोति' इत्यस्य विधेः 'प्रक्लृप्तौ' गवेधुक-होमवचनमनाहुतिवचनमप्यर्थवादार्थं स्यात्, 'आनर्थक्यात्,' अनर्थको हि भवति तदा प्रतिषेधः, यदा हि पयसा जुहोति; अर्थादेव तदा अनाहुतिर्जर्त्तिला गवेधुकाश्च भवन्ति। अथ कथम् असावनाहुतिः, या यज्ञे हूयते?। 'परसामर्थ्याच्च',—परेण च 'पयसा अग्निहोत्रं जुहोति' इत्यनेन विधिना सामर्थ्यं अर्त्तिलगवेधुकविधेः प्रतिषेधस्य च भवति, तस्मात् सर्वमेकं वाक्यं। कथं?। 'अर्त्तिलयवाम्वा जुहुयात्

गवेधुकयवाग्वा वा' इति साक्षात्निन्दावचनेनैवैतत् सम्बध्यते, अनाहुतिर्वै अर्त्तिलाश्च गवेधुकाश्चेति या च तन्निन्दा, सा पयोविधिप्रशंसार्था । कथं? । अर्त्तिलगवेधुकाहुतिर्गुणवती, न तत्र ग्राम्याः पशवो हिंस्यन्ते, न आरण्याः; एवमपि गुणवती पयोहोमं प्रति अनाहुतिरेव, एवं पयोहोमो गुणवत्तर इति। 'अर्त्तिलयवाग्वा जुहुयात्' इति न कर्त्तव्यार्थं कीर्त्त्यते, किन्तर्हि प्रतिषेद्धुं, कर्त्तव्योपदेशे हि कल्पनीयं किञ्चित्, प्रतिषेधसम्बन्धे प्रत्यक्षनिन्दया इतरस्तुतिः, आनन्तर्यानुग्रहश्च,यथा,'विषं भक्षयितव्यं न कदाचित्' इति विषभक्षणस्य कर्त्तव्यता प्रतिषेधसम्बन्धार्थं कीर्त्त्यते, नानुष्ठानाय; एवमिहापि द्रष्टव्यमिति ॥ (१०।८।४ अ०)॥

---

त्रैयम्बकादावभिघारणानभिघारणादीनामर्थवादताधिकरणम् ॥

सू॰ पूर्वैश्च तुल्यकालत्वात् ॥ ८ ॥

भा॰ चातुर्मास्येषु त्रैयम्बकानधिकृत्य* समामनन्ति,—'अभिघार्याः नाभिघार्याः इति मीमांसन्ते,-यदभिघारयेत् रुद्रायास्ये पशूनभिदध्यात्, यन्नाभिघारयेन्न रुद्रायास्ये पशूनभिदध्यात्। अथो खल्वाहुरभिघार्या एव, न हि हविरनभिघृतमस्ति' इति । तथा, 'होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः,—यदि जुहुयात् यथा पूर्वमाहुतीर्जुहुयात्, यन्न जुहुयादग्निः परापतेत्, तूष्णीमेव होतव्यं, यथापूर्वमाहुतीर्जुहोति, नाग्निः परापतति' इति । अत्रायमर्थः सांशयिकः,—किमभिघारयितव्यास्त्रैयम्बकाः उत नाभिघारयितव्याः? इति, होतव्यम् अग्निहोत्रं; न होतव्यं वा? विधिप्रतिषेधावेतौ इह,

---

* "चातुर्मास्येषु त्रैयम्बकमन्त्रसंयोगेन त्रैयम्बकनामकाः एककपाला पुरोडाशा विहिताः" इति माधवः ।

मार्थवादार्थम् एतयोः सङ्कीर्त्तनम्? इति। किन्तावत् प्राप्तं?। विधिप्रतिषेधाविति ब्रूमः, तद्रूपत्वात्,-विधिप्रतिषेधयोर्हि प्रत्यक्षं रूपमुपलभ्यते। श्रुत्या चानुष्ठानार्थता प्रतिषेधार्थता च अवगम्यते, वाक्यादर्थवादार्थता, श्रुतिश्च वाक्याद्बलीयसी; न च, पर्युदासोऽवकल्पते; तस्मात्, अग्निहोत्रं होतव्यं न होतव्यं वा, यदा होतव्यं, तदा तूष्णीं व्यस्तका अभिघारयितव्याः, न वाभिघारयितव्याः; यदा पुनरभिघारयितव्याः, तदा अभिघारयितव्यवचनमर्थवादार्थं, प्रतिषेधसङ्कीर्त्तनादभावाशङ्कायां पुनरुच्यते इति।

एवं प्राप्ते ब्रूमः,—पूर्वाधिकरणोदाहरणैस्तुल्यकालानि इमानि उदाहरणानि। का तुल्यकालता?। पूर्वं विधिप्रतिषेधावभिधाय उत्तरेण तयोरभिसम्बन्धः क्रियते इति, तदेतत् पूर्वाधिकरणेनैव तुल्यं, यौ विधिप्रतिषेधौ श्रूयेते, न तौ अनुष्ठातुं वर्जयितुं वा; किन्तर्हि मीमांसितुं,—एवं आह,—'अभिघार्याः नाभिघार्याः' इति मीमांसन्ते, तथा होतव्यमग्निहोत्रं न होतव्यमिति मीमांसन्ते ब्रह्मवादिन इति; मीमांसा च इतरविधिप्रशंसार्था, तथा प्रत्यक्षः शब्दार्थेन सम्बन्धः, न किञ्चित् कल्पनीयं; विधिप्रतिषेधयोर्हि किञ्चित् कल्पनीयं स्यात्,—यदभिघारयेत्, रुद्रायास्ये पशूनभिदध्यादिति; इदमभिधारणं गुणवत्तरं, यत् ईदृशोऽपि दोषो नाद्रियत इति, तथा यत् जुहुयात् यथापूर्वमाहुतीर्जुहुयात्, यन्न जुहुयादग्निः परापतेदितीत्थं तूष्णीं होमः प्रशस्तः, यदस्मिन् क्रियमाणे उभावपि दोषौ परिहृतौ भवत इति॥ (१०।८।५अ०)॥

———

साग्न्याधाने उपवादस्य विकल्पताधिकरणम् ॥

सू० उपवादश्च तद्वत् ॥ ९ ॥ (सि०) ॥

भा० अग्न्याधानं, तत्रेदमामनन्ति,—'य एवंविद्वान् वारवन्तीयं गायति, य एवंविद्वान् यज्ञायज्ञीयं गायति, य एवंविद्वान् वामदेव्यं गायति' इति। तत्रेदमाम्नायते,—'उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायति' इति। तत्रायमर्थः सांशयिकः,— किमयमुपवादः प्रतिषेधार्थः, उत पर्य्युदासार्थः, उत, अर्थवादार्थः ? इति। किं प्राप्तं ?,—न पर्य्युदासः, ब्रह्मणः अप्राप्तत्वात्; अपतो वचनमर्थवादार्थं भवति, यथा 'प्रजापतिर्वा एक आसीत् स आत्मनो वपामुदखिदत्' इति।

एवं प्राप्ते ब्रूमः,—न ब्रह्मण उपवादः कश्चिदर्थवादः सम्भवति; न च, वाक्यान्तरस्थेनार्थवादेन किञ्चिदपि प्रयोजनमस्ति। तस्मात् 'उपवादस्तद्वत्' स्यात्। किञ्च तत्?। यथा 'अतिरात्रे गृह्णाति षोडशिनम्' इति, विधाय प्रतिषेधार्थं स्यात्। कथं?। ब्रह्मणो गानं नैव प्राप्तमिति ब्रह्मगानप्रतिषेधार्थं वचनं नावकल्पते, तस्मात् ब्रह्मग्रहणमविवक्षितं, सामगानप्रतिषेध एवैष स्यात्। ब्रह्मशब्दः प्रमादपाठ इति चेत्। न एतदेवं; ब्राह्मणवाचित्वादुद्गात्रभिधानं भविष्यति ॥

सू० प्रतिषेधादकर्मेति चेत् ॥ १० ॥ (आ०) ॥

भा० 'इति चेत्' दृश्यते,—सामगानस्यैव निन्देति, 'अकर्म' सामगानस्य, न हि निन्दितं कर्त्तव्यं भवतीति ॥

सू० न शब्दपूर्वत्वात् ॥ ११ ॥ (आ०नि०) ॥

भा० नैतदेवं, यथैव हि निन्दया न कर्त्तव्यमिति गम्यते, एवमुपादेयतया कर्त्तव्यमिति गम्यते; न चान्यत् कर्त्तव्यमिति कश्चित् विधिः प्रकल्पते, यस्य प्रशंसार्थं निन्द्येत; तस्मादनुष्ठातुं विधिः, वर्जयितुमुपवादः इति ॥ (१०।८।६ अ०) ॥

---

'दीक्षितो न ददातीत्यादिनिषेधस्य पर्युदासताधिकरणम् ॥

सू० दीक्षितस्य दानहोमपाकप्रतिषेधोऽविशेषात् सर्व-दानहोमपाकप्रतिषेधः स्यात् ॥ १२ ॥ (१म पू०)॥

भा० ज्योतिष्टोमे श्रूयते,-'दीक्षितो न ददाति न जुहोति न पचति' इति। अत्रैषोऽर्थः सांशयिकः,-किं सर्वदानहोमपाकानां प्रतिषेधः, उत अक्रतुयुक्तानाम्; अथ वा क्रतुयुक्तानामपि चोदकप्राप्तानां प्रतिषेधः; अथ वा पर्युदासः ? इति। किं प्राप्तं ?,-सर्वदानहोमपाकानां प्रतिषेधः। कुतः ?। 'अविशेषात्'—नास्ति विशेषवचनः शब्दः; तस्मात् सर्वेषां प्रतिषेध इति।

सू० अक्रतुयुक्तानां वा धर्मः स्यात् क्रतोः प्रत्यक्ष-शिष्टत्वात् ॥१३॥ (२म पू०)॥

भा० वाशब्दः पक्षं व्यावर्त्तयति,—न सर्वेषां प्रतिषेधः। केषां तर्हि ?,-'अक्रतुयुक्तानां' 'धर्मः स्यात्'। कुतः ?। 'क्रतोः प्रत्यक्षशिष्टत्वात्',—

प्रत्यक्षं हि श्रुतौ* दानादीनां शासनमस्ति, तस्मात् प्रत्यक्षं वर्जयित्वा प्रतिषेधः स्यात्।

सू० तस्य वाप्यानुमानिकमविशेषात् ॥१४॥(३य पू०)॥

भा० अपि वा 'तस्य' क्रतोर्यत् 'आनुमानिकं' चोदकप्राप्तं, तत् प्रतिषिध्यते, आनुमानिकं हि तत् न प्रत्यक्षं; प्रत्यक्षश्रुतस्य प्रतिषेधः† ।

सू० अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात् प्रतिषेधे विकल्पः स्यात् ॥ १५॥ (सि०) ॥

भा० तुशब्दोऽवधारणायां। वाक्यशेषः स्यात् प्रतिषेधः, उक्तानाम् अविशेषेण दानादीनां ज्योतिष्टोमिके पर्युदासेन प्रतिषेधो वाक्यशेषः स्यात्,—'अहरहर्दद्यात्' इत्यस्य शेषो 'न दीक्षितः' इति; एवं होमपाकवाक्ययोरपि। असति पर्युदासे 'प्रतिषेधे विकल्पः स्यात्', स चान्याय्य इत्युक्तं; तस्मात् पर्युदास इति ॥ (१०।८।७अ०) ॥

---

वर्त्महोमादिद्विविराशवनीयस्य बाधाधिकरणम् ॥

सू० अविशेषेण यत् शास्त्रमन्याय्यत्वात् विकल्पस्य तत् सन्दिग्धमाराद्विशेषशिष्टं स्यात् ॥ १६ ॥

भा० इदं समामनन्ति ज्योतिष्टोमे,—'वर्त्मनि जुहोति' इति।

---

* 'क्रतौ' इति का० स० द्वितीयपुस्तकपाठः।

† प्रत्यक्षस्य श्रुतिप्रतिषेधः इति का० श्री० पु० पाठः।

राजसूये, 'वल्मीकवपामुपस्तृह्य जुहुयात्' इति। इदमपि श्रूयते,— 'यत् आहवनीये जुहुति तेन सोऽस्याभीष्टः प्रीतो भवति' इति। तत्रैषोऽर्थः सांशयिकः,—किं ज्योतिष्टोमे वर्त्मनि होतव्यं, राजसूये वल्मीकवपायाम्, उत, विकल्पः एतयोः आहवनीयेन? इति। किं प्राप्तं?। होमार्थत्वात् तावद्वर्त्मवल्मीकवपयोः, समुच्चयो न प्राप्तः, अन्यतरेण होमनिर्वृत्तेः कृतत्वात्, होमार्थता चैतयोः प्रतिज्ञायेत। कुतः?। भूतभव्यसमुच्चारणे भूतं भव्यार्थं भवति, न च, बाधोऽत्यन्तमेव वर्त्मविषयः, आहवनीयहोमोऽपकृतो भवति, विकल्पे, पक्षे तावदनुग्रहीत इति।

एवं प्राप्ते ब्रूमः,—'अविशेषेण यत् शास्त्रं' तस्य 'आराद्विशेषशिष्टं स्यात्', यत् विशेषेण शिष्यते, तदस्य दूरं स्यात्,—असम्बद्धमित्यर्थः। 'सन्दिग्धं' हि 'तत्'। कथमिव?। यदि सामान्यं विशेषलक्षणार्थं, ततो विशेषेऽपि प्राप्तं; अथ न लक्षणार्थं, ततो न प्राप्तम्, एवं सन्दिग्धं। अथ वा, सामान्यं विशेषेण विरुध्यत इति एवं सन्दिग्धं। अथ वा, सामान्यं तस्मिंश्च विशेषे अन्यस्मिंश्चेति एवं सन्दिग्धं। तत् सामान्यविधानं विशेषविधौ न स्यात्। किं कारणम्?। 'अन्याय्यत्वात् विकल्पस्य'। कथमन्याय्यो विकल्पः?। अथोच्यते,—यदि वर्त्माद्यधिकरणता एषु होमेषु श्रूयते, स पक्षे न भवतीति विकल्पमाश्रयता प्रमाणापेता कल्पयितव्या; अथ वर्त्माद्यधिकरणता एषु न श्रूयते, ततः पक्षे सा भवतीति प्रमाणापेतैव; वर्त्मग्रहणञ्च श्रूयमाणमविवक्षितं स्यात्। अथोच्येत,—अर्थात् पक्षे भावः, स चार्थो होमनिर्वृत्तिराहवनीयेनेति। तत्र, यदि होमनिर्वृत्तिमात्रं कर्त्तव्यं तत

आहवनीयेनाप्यर्थात् सिध्येत; इह तु वर्त्माद्यधिकरणतापि विधीयते, सा आहवनीये उपादीयमाने नोपसंह्रियेत; अनुपसंहारे च प्रयोगवचनो बाध्येत।

अत्रोच्यते,—'यद्यपि वर्त्माद्यधिकरणतापि विधीयते, होमे गुणभूतत्वाद्धोमं समीचीनं करोति इति तथानुपसंहारोऽपि न दोषः, अधिकरणान्तरेण समीचीनो भविष्यति इति तस्माद्विकल्प एव' इति। नेत्युच्यते,—वर्त्मादिहोमसम्बन्धोऽत्र विधीयते, स च प्रधानभूतः, न होमः, तस्मिन् अनुपसंह्रियमाणे न यथाश्रुतं कृतं स्यात्।

अथोच्यते,—'सम्बन्धेऽपि विधीयमाने द्वयं विधीयते, एकं साध्यं, एकं साधनं, यत् साध्यं, तत् प्रधानं, स च होमः; तस्मात् विकल्पः, सम्बन्धेऽपि च श्रूयमाणेऽवश्योपादातव्यो भवति होमः, होमश्चेत् आहवनीयः प्राप्नोत्येव' इति। तन्न, आहवनीयस्यानङ्गत्वात्। कथम् अनङ्गत्वम्?। विशेषेषु अप्राप्तेः। कथमप्राप्तिः?। वर्त्माद्यधिकरणतायां सत्याम् आहवनीयाधिकरणताया ज्ञानं करणं च प्रत्यक्षभावात्, यद्धि वर्त्माद्यधिकरणमिति ज्ञायते, न तत् आहवनीयाधिकरणं शक्यं ज्ञातुं कर्तुं वा।

आह,—'यथा शक्यते तथा कर्त्तव्यम्,—इत्याम्नातार्थो भविष्यति, तस्माद्वर्त्मादि बाधित्वा आहवनीयो भविष्यति' इति। उच्यते,— स्यादेतदेवं, यदि वर्त्मादिबाधामन्तरेण आहवनीयोपदेशो नावकल्पेत, द्वेधा हि शक्यते कर्तुं,—वर्त्मादि बाधित्वा परिहृत्य वा; अथ बाधायां 'वर्त्मनि' इति प्रत्ययोऽपक्रोतव्यो भवति, तस्मात् परिहारः श्रेयानिति। आह,—'परीहारेऽपि 'आहवनीयो भवति' इति प्रत्ययोऽपक्रुश्येत'।

अपक्रोक्ष्यामहे, भवत्याहवनीयप्रत्ययः, अशक्योऽसौ कर्त्तुमित्यपि किं न भवति, अशक्यं न करिष्यते। आह,—'योऽयं सामान्यप्रत्यय उच्यते, स सर्वेषु विशेषेषु कार्यम् आपद्यति, एवं पदहोमादिहोमेषु च अन्यच च तेनाहवनीयो विहितः, तत्र यो वर्त्मादिहोमे आहवनीयप्रत्ययः स न शक्यः परिहर्तुमतो वर्त्मादिहोमं वाधित्वा अवतिष्ठेत' इति। अत्रोच्यते,—नैतदेवं,—न हि सामान्यवाची शब्दो विशेषान् अभिवदति, यदि चाभिवदेत्, अश्व-जाते गवि नावकल्पेत, पूर्वदर्शनाभावात्; सामान्ये च दृष्टपूर्वत्वादवकल्पते; तस्मान्न सामान्यं विशेषान् अभिवदति, तस्मान्न वर्त्मादिहोमे आहवनीयप्रत्ययः। अभिवदन् वा न मुख्यया वृत्त्या अभिवदेत्, कथं तर्हि लक्षणया, लक्षणा च श्रुत्या वाध्येत; तस्माद् वर्त्मादिहोमे श्रुत्या वर्त्मादिषु प्राप्तेषु अशक्य आहवनीयो विधातुं कर्त्तुं चेति।

आह,—'ननु विपरीतमप्येतत् स्यात्,—'आहवनीये प्राप्ते वर्त्मादि-प्रत्ययो न शक्यः' इति। भवेदेवं, किन्तु विशेषे वर्त्मादिप्रत्ययः श्रौतः, आहवनीयप्रत्ययो लक्षणया; तत्र श्रुतिप्रत्ययो बलीयान् इत्युक्तं। 'ननु सामान्येऽप्याहवनीयप्रत्ययः श्रौतः'। उच्यते, वर्त्मादि-प्रत्ययोऽपि सामान्ये श्रौतः, होमे हि स विशिष्टे विधीयते, न अहोमे एतद्विशेषयति। तस्माद्वर्त्मादिहोमं वर्जयित्वा अन्येषु होमेषु आहवनीयः करिष्यते इति॥ (१०।७।८अ०)॥

---

वैमृधादिषु साप्तदश्यविधेर्वाक्यशेषताधिकरणम् ॥

सू० अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृत-
माज्यभागवत् प्राकृतप्रतिषेधार्थम् ॥१७॥ (पू०)॥

भा० अनारभ्य किञ्चिदाम्नायते,—'सप्तदश सामिधेनीरनुब्रूयात्' इति। तत् प्रकृतौ विशेषविहितेन पाञ्चदश्येन बाधितं सर्वविकृतीरनुप्राप्तं कासुचित् विकृतिषु पुनः श्रूयते,—'वैमृधेऽध्वरकल्पायां पशौ चातुर्मास्येषु मित्रविन्दायां त्रैधातव्यायाम् आग्रयणेष्टाम्' इति। तासु विकृतिषु अस्य श्रवणं किमर्थमिति विचार्यते,—किं प्राप्तम्?,—'अप्रकरणे' यच्छास्त्रम् आम्नातं विकृतिविशेषे पुनरविकृतं श्रूयते, तत्, प्राकृतमनुजातं प्रतिषेद्धुं,—वैमृधादिषु 'सप्तदश सामिधेनीरनुब्रूयात्' इति, नान्यत् प्राकृतं कुर्यादिति। न चैवं विज्ञायते,—वैमृधादिष्वेव साप्तदश्यं, नान्यासु विकृतिष्विति, तासु तत् प्रत्यक्षेण वाक्येन श्रुतं न शक्यं बाधितुम् ॥

सू० विकारे तु तदर्थं स्यात् ॥ १८ ॥ (यु०)॥

भा० यदि तु सामिधेनीनां विकारः कश्चित् श्रूयेत, ततो विकारार्थमाम्नातमिति गम्यते, न तु विकारः श्रूयते; तस्मात् प्राकृतप्रतिषेधार्थमेवेति।

सू० वाक्यशेषो वा क्रतुना ग्रहणात् स्यादनारभ्य-
विधानस्य ॥ १९ ॥ (सि०) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति। वाक्यशेषोऽयं वैमृधादिषु 'अना-

रभ्य-विधानस्य, 'सप्तदश सामिधेनीरनुब्रूयात्' एतासु विकृतिष्विति, तेन अन्यासु विकृतिषु न स्यात्। 'ननु प्रत्यक्षश्रुतम् अन्यासु विकृतिषु तत् न शक्यं बाधितुं'। उच्यते, सत्यं प्रत्यक्षश्रुतं सामिधेनीषु, न तु तत् क्रतुना गृह्यते; क्रतुसम्बन्धाभावात्, प्रयोगवचनोऽपि न गृह्णाति, सति वैश्यधादिसम्बन्धकरे वाक्ये। यदेतत् साप्तदश्यम् अनारभ्योक्तं, तत् वैश्यधादीनामङ्गमिति प्रत्यक्षं वाक्यं, तस्मान्नान्या विकृतयः तत् गृह्णन्ति; अक्रतुग्रहणे च सति सामिधेनीनां साप्तदश्यं निःफलत्वान्न क्रियेत, तस्मादनारभ्य-विधेः वैश्यधादिषु वाक्यशेषः। आह,—'ननु वाक्यभेदो भवति,—सामिधेन्यः सप्तदश भवन्ति, ताश्च वैश्यधादिषु' इति। उच्यते, द्वे एते वाक्ये, पूर्वेण वाक्येन योऽर्थ उक्तः, तस्यैव विशेषः परेण वाक्येन विधीयते इति वाक्यशेष इत्युच्यते इति॥(१०।७।९अ०)॥

---

'पृथिव्यै स्वाहा' इत्यादिविधिना चविहितस्वाहाकारेषु प्रदानेषु स्वाहाकार-विधानाधिकरणम्॥

## सू० मन्त्रेषुवाक्यशेषत्वं गुणोपदेशात्स्यात्॥२०॥ (सि०)॥

भा० दर्विहोमं प्रकृत्य श्रूयते,—'पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा वायवे स्वाहा' इति। अस्ति च अनारभ्य-वचनं,—'वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इति। तत्र सन्देहः,—किं तस्यायं वाक्यशेषः,—स्वाहाकारेण अन्नं प्रदीयते देवेभ्यः-इत्येतस्मिन् दर्विहोमे 'पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा' इति, उत नायं वाक्यशेषः,

येष्वपि प्रदानेषु स्वाहाकारो नाम्नातस्तेष्वपि स्वाहाकारः? इति । किं प्राप्तम् ?,—अनन्तरसूत्रेनाधिकरणेन वाक्यशेष इति ।

एवं प्राप्ते ब्रूमः,—'मन्त्रेषु' वाक्यशेषत्वं, न 'स्यात्', न हि विधायकाविधायकवाक्ययोः एकवाक्यत्वं भवति, विधायकं ब्राह्मणम्, अविधायको मन्त्रः । अपि च, अनन्तराधिकरणे न क्रतुसम्बन्धोऽस्ति इह तु सम्बन्धो गम्यते,—'वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इति, प्रदानं ह्यत्र प्रधानकर्म्म । अपि च, गुणोपदेशो भवति, तस्मिन् दर्विहोमे 'पृथिव्यै स्वाहा' इत्येवं समुच्चारणं भवति, न 'स्वाहा पृथिव्यै' इति ; तस्मादन्येष्वपि दर्विहोमेषु स्वाहाकारोऽस्तीति ॥

सू० अनाम्नाते च दर्शनात् ॥ २१ ॥ (यु० १) ॥

भा० यत्रापि दर्विहोमे न आम्नायते स्वाहाकारः, तत्रापि कश्चिद्दृश्यते, 'घृतेन द्यावापृथिवी आपृणेथामिति औदुम्बर्यां विशाखे जुहोति आम्नात् अवस्रावयति भूमिप्राप्ते स्वाहा करोति'—इति प्राप्तं स्वाहाकारं दर्शयति ।

सू० प्रतिषेधाच्च ॥ २२ ॥ (यु० २) ॥

भा० कश्चिच्च प्रतिषेधो भवति,—'न स्वाहेति वचनं करोति मन्त्रं च नाह' इति; प्राप्तिपूर्व्वकः प्रतिषेधो भवतीति वाक्यशेषता अध्यवसीयते ॥ (१०।७।१०अ०) ॥

अग्न्यतिग्राह्यस्य विकृतावुपदेशाधिकरणम् ॥

सू० अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ॥ २३ ॥ (पू०) ॥

भा० इदमाम्नायते,—'य एवंविद्वानग्निं चिनुते' इति, तथा 'उपहृतमङ्गं वा एतद्यज्ञस्य यदतिग्राह्या' इति। तत्र सन्देहः,—किं अग्न्यतिग्राह्यं विकृतौ चोदकः प्रापयति, उत न? इति। किं प्राप्तम्,—'अग्न्यतिग्राह्यस्य विकृतौ' 'अप्रवृत्तिः' इति,—अग्निस्थातिग्राह्याश्च अग्न्यतिग्राह्यं, तत् विकृतौ न प्रवर्त्तते। कुतः?। 'विकृतावुपदेशात्',—विकृतौ हि तत् उपदिश्यते,—'अथातोऽग्निमग्निष्टोमेनानुयजति, तमुक्थ्येन तमतिरात्रेण तं चतूरात्रेण तं पञ्चरात्रेण तं षड्रात्रेण तं सप्तरात्रेण तमष्टरात्रेण तं नवरात्रेण तं दशरात्रेण' इति। तथा 'यत् पृष्ठ्येति गृह्णीयात् प्राञ्चं यज्ञं पृष्ठानि संगृह्णीयुः, यदुक्थ्येति गृह्णीयात्' इति न नूनमग्न्यतिग्राह्यं चोदकः प्रापयति, यत् साक्षात्कस्याञ्चित् विकृतौ चोद्यते इति ॥

सू० मासि-ग्रहणाच्च तद्वत् ॥ २४ ॥ (यु०) ॥

भा० इदञ्च आम्नायते, 'मासि-मासि अतिग्राह्या गृह्यन्ते' इति। यदि चोदकः प्रापयेत्, न, मासि-मास्यतिगृह्यन्ते इत्युपदेशः स्यात् ॥

सू० ग्रहणं वा तुल्यत्वात् ॥ २५ ॥ (सि०) ॥

भा० गृह्यते वा चोदकेन अग्न्यतिग्राह्यं, न हि अस्य अन्यैरङ्गैरस्ति विशेषः, अन्यानि अङ्गानि गृह्णाति एतत् न गृह्णातीति नैतदवकल्पते ॥

सू० लिङ्गदर्शनाच्च ॥ २६ ॥ (यु०) ॥

भा० लिङ्गं खल्वपि दृश्यते,—'कङ्कचितं चिन्वीत शीर्षचितं चिन्वीत यः कामयेत सुशीर्षा अस्मिन् लोके सम्भवेयम्' इति। तथा 'पञ्च ऐन्द्रान् अतिग्राह्यान् गृह्णाति' इति। कङ्काकारताम् ऐन्द्रताञ्च विशेषं ब्रुवन्नन्यतिग्राह्यस्य विकृतौ प्राप्तिं दर्शयति ॥

सू० ग्रहणं समानविधानं स्यात् ॥ २७ ॥ (१आ०नि०)॥

भा० अथ यदुक्तं,—'विकृतावुपदिश्यते' इति, तत्परिहर्त्तव्यम्; अत्रोच्यते,—यस्यां विकृतावुपदिश्यते, तस्यां प्रकृतौ च समानः स विधिः; अवशिष्टासु विकृतिषु चोदकः प्रापयतीति ॥

सू० मासि-ग्रहणमभ्यासप्रतिषेधार्थम् ॥ २८ ॥ (२आ०नि०) ॥

भा० अथ मासि-ग्रहणं कथम्? इति। तद् अभ्यासप्रतिषेधार्थं, न, अहन्यहनि गृह्यन्ते मासि-मासि गृह्यन्ते इति ॥(१०।७।११अ०)॥

---

उपस्तरणाभिघारणाभ्यां सहैव चतुरवदानाधिकरणम् ॥

सू० उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगात् अधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् ॥ २९ ॥ (पू०) ॥

भा० दर्शपूर्णमासयोराम्नायते,—'चतुरवत्तं जुहोति' इति। तत्र

अयमर्थः सांशयिकः,—किं सहोपस्तरणाभिघारणाभ्यां चतुरवत्तम्, उत प्रधानद्रव्यादेव चतुरवदातव्यम्, अधिकमुपस्तरणमभिघारणञ्च? इति। किं प्राप्तं? प्रधानद्रव्यादेव चतुरवदातव्यं। कुतः?। 'उत्पत्ति-तादर्थ्यात्',—पुरोडाशोत्पत्तेर्होमार्थता भवति, 'यदाग्नेयोऽष्टाकपालो अमावास्यायां पौर्णमास्याञ्च अच्युतो भवति' इति। यज्जुहोति तत् चतुरवत्तं कर्त्तव्यं, पुरोडाशश्च होमार्थो नोपस्तरणाभिघारणे; तस्मात् पुरोडाशस्य चतुरवदातव्यमिति। 'अधिकमाज्यं' स्यात्, अतुल्यं हि तत् पुरोडाशेन; पुरोडाशे होमार्थे तत् गुणभूतम् आज्यम्, तेन यद्यपि सह आज्येन षडवत्तं भवति, तथापि होमे चतुरवत्तमेव कृतं, यथा लोके, 'प्रस्थभुग्देवदत्तः' इत्युच्यते, यद्यपि सूपशाकादिभिरधिकः प्रस्थो भवति, तथापि भुक्तौ प्रस्थो निर्दिश्यते, व्यञ्जनानि ओदनार्थानि॥

सू० तत्संस्कारश्रुतेश्च॥ ३०॥ (यु०)॥

भा० प्रधानावदानसंस्कारार्थेन च उपस्तरणाभिघारणे श्रूयेते,—'यदुपस्तृणाति अभिघारयति अस्वृताहुतिमेवैनां करोति' इति, तेनोपस्तरणाभिघारणसंयुक्तं प्रधानद्रव्याच्चतुरवत्तं होतव्यमिति गम्यते॥

सू० ताभ्यां वा सह स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनात्॥ ३१॥ (सि०)॥

भा० 'ताभ्यां वा सह' द्विर्हविषोऽवदाय चतुरवत्तं कर्त्तव्यं। कुतः?। 'स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन' तदाप्तिवचनं भवति,—

'सकृदुपस्तृणाति सकृदवद्यति द्विरभिधारयति चतुरवत्तस्याप्त्यै' इति, द्विरभिधारणेन चतुरवत्तं पूर्णं दर्शयति, इतरथा षडवत्तं तेन पूर्येत। आह,—'दर्शनमेतत्, प्राप्तिरुच्यताम्' इति। अथोच्यते,—चतुरवत्ते होमे श्रूयते,—'चतुरवत्तं जुहोति' इति, न होमार्थे पुरोडाशे साम्नाय्ये वा,—नैवं श्रूयते,—यत् होमार्थं द्रव्यं तच्चतुरवत्तं कुर्यादिति, चतुरवत्तं श्रूयमाणं होमेन असंबध्यमानम् अनर्थकं स्यात्।

अथोच्यते,—'प्रयोगवचनग्रहणादर्थवत् भविष्यति'। तन्न, साक्षात्-होमसम्बन्धे वचने सति 'चतुरवत्तं जुहोति' इति नान्यत् प्रयोगवचन-ग्रहणं कल्पते। अस्मिंश्च साक्षाद्वचने तदर्थात् अवत्तं, न अतदर्थात् इति न विशेषः श्रूयते, तदर्थात् अतदर्थाद्वा चतुरवत्तगुणसंयुक्तं द्रव्यं होतव्यम्, एवञ्च श्रुतिः परिग्टह्यते, इतरस्मिन् पक्षे वाक्यं परिग्टह्येत, 'द्विर्हविषोऽवद्यति' इति च विकल्पः स्यात्, यदि हविश्चतुरवत्तं हीयेत,* तथा इदमपरं श्रवणम् असदनुवादभूतं स्यात् चतुरवत्तं वा विकल्पयेत्, अभावाच्च पक्षे विकल्पो न न्याय्यः स्यात्; तस्मात् सहोपस्तरणाभिघारणाभ्यां चतुरवत्तमिति॥

सू॰ तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात्॥ ३२॥ (यु॰)॥

भा॰ 'चत्वारि वा एतानि देवदधानि अवदानानि यदुपस्तृणाति तदनुवाक्यायै यत् पूर्वमवदानमवद्यति याज्यायै यदुत्तरं तद्देवतायै यत् अभिघारयति तद्वषट्काराय' इति चतुरवत्तस्य चत्वारि अवदानानि

---

* हविश्चतुरवद्दीयेत इति का॰ श्रो॰ पु॰ पाठः।

राजसूये, 'वल्मीकवपामुपम्लृच्य जुहुयात्' इति। इदमपि श्रूयते,— 'यत् आहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीतो भवति' इति। तत्रैषोऽर्थः सांशयिकः,—किं ज्योतिष्टोमे वर्त्मनि होतव्यं, राजसूये वल्मीकवपायाम्, उत, विकल्पः एतयोः आहवनीयेन? इति। किं प्राप्तं?। होमार्थत्वात् तावद्वर्त्मवल्मीकवपयोः, समुच्चयो न प्राप्तः, अन्यतरेण होमनिर्वृत्तेः कृतत्वात्, होमार्थता चैतयोः प्रतिज्ञायेत। कुतः?। भूतभव्यसमुच्चारणे भूतं भव्यार्थं भवति, न च, बाधोऽत्यन्तमेव वर्त्मविषयः, आहवनीयहोमोऽपकृतो भवति, विकल्पे, पक्षे तावदनुग्टह्यत इति।

एवं प्राप्ते ब्रूमः,—'अविशेषेण यत् शास्त्रं' तस्य 'आराद्विशेषशिष्टं स्यात्', यत् विशेषेण शिष्यते, तदस्य दूरं स्यात्,—असम्बद्धमित्यर्थः। 'सन्दिग्धं' हि 'तत्'। कथमिव?। यदि सामान्यं विशेषलक्षणार्थं, ततो विशेषेऽपि प्राप्तं; अथ न लक्षणार्थं, ततो न प्राप्तम्, एवं सन्दिग्धं। अथ वा, सामान्यं विशेषेण विरुध्यत इति एवं सन्दिग्धं। अथ वा, सामान्यं तस्मिंश्च विशेषे अन्यस्मिंश्चेति एवं सन्दिग्धं। तत् सामान्यविधानं विशेषविधौ न स्यात्। किं कारणम्?। 'अन्याय्यत्वात् विकल्पस्य'। कथमन्याय्यो विकल्पः?। अत्रोच्यते,—यदि वर्त्माद्यधिकरणता एषु होमेषु श्रूयते, स पक्षे न भवतीति विकल्पमाश्रयता प्रमाणापेता कल्पयितव्या; अथ वर्त्माद्यधिकरणता एषु न श्रूयते, ततः पक्षे सा भवतीति प्रमाणापेतैव; वर्त्मग्रहणञ्च श्रूयमाणमविवक्षितं स्यात्। अथोच्येत,—अर्थात् पक्षे भावः, स चार्थो होमनिर्वृत्तिराहवनीयेनेति। तन्न, यदि होमनिर्वृत्तिमात्रं कर्त्तव्यं तत

आहवनीयेनाप्यर्थात् सिध्येत; इह तु वर्त्माद्यधिकरणतापि विधीयते, सा आहवनीये उपादीयमाने नोपसंह्रियेत; अनुपसंहारे च प्रयोगवचनो बाध्येत।

अत्रोच्यते,—'यद्यपि वर्त्माद्यधिकरणतापि विधीयते, होमो गुणभूतत्वाद्धोमं समीचीनं करोति इति तथानुपसंहारोऽपि न दोषः, अधिकरणान्तरेण समीचीनो भविष्यति इति तस्माद्विकल्प एव' इति। नेत्युच्यते,—वर्त्मादिहोमसम्बन्धोऽत्र विधीयते, स च प्रधानभूतः, न होमः, तस्मिन् अनुपसंह्रियमाणे न यथाश्रुतं कृतं स्यात्।

अत्रोच्यते,—'सम्बन्धेऽपि विधीयमाने द्वयं विधीयते, एकं साध्यं, एकं साधनं, यत् साध्यं, तत् प्रधानं, स च होमः; तस्मात् विकल्पः, सम्बन्धेऽपि च श्रूयमाणेऽवश्योपादातव्यो भवति होमः, होमश्चेत् आहवनीयः प्राप्नोत्येव' इति। तन्न, आहवनीयस्यानङ्गत्वात्। कथम् अनङ्गत्वम्?। विशेषेषु अप्राप्तेः। कथमप्राप्तिः?। वर्त्माद्यधिकरणतायां सत्याम् आहवनीयाधिकरणताया ज्ञानं करणं च प्रत्यक्षमवात्, यद्धि वर्त्माद्यधिकरणमिति ज्ञायते, न तत् आहवनीयाधिकरणं शक्यं ज्ञातुं कर्तुं वा।

आह,—'यथा शक्यते तथा कर्त्तव्यम्,—इत्याम्नातार्थो भविष्यति, तस्माद्वर्त्मादि बाधित्वा आहवनीयो भविष्यति' इति। उच्यते,— स्यादेतदेवं, यदि वर्त्मादिबाधामन्तरेण आहवनीयोपदेशो नावकल्पेत, द्वेधा हि शक्यते कर्त्तुं,—वर्त्मादि बाधित्वा परिहृत्य वा; अत्र बाधायां 'वर्त्मनि' इति प्रत्ययोऽपह्नोतव्यो भवति, तस्मात् परिहारः श्रेयानिति। आह,—'परीहारेऽपि 'आहवनीयो भवति' इति प्रत्ययोऽपह्नूयेत'।

अपशङ्कामहे, भवत्याहवनीयप्रत्ययः, अशक्योऽसौ कर्त्तुमित्यपि किं न भवति, अशक्यं न करिष्यते। आह,—'योऽयं सामान्यप्रत्यय उच्यते, स सर्वेषु विशेषेषु कार्यम् आपद्यति, एवं चेदर्त्मादिहोमेषु च अन्यत्र च तेनाहवनीयो विहितः, तत्र यो वर्त्मादिहोमे आहवनीयप्रत्ययः स न शक्यः परिहर्त्तुमतो वर्त्मादिहोमं बाधित्वा अवतिष्ठेत' इति। अत्रोच्यते,—नैतदेवं,—न हि सामान्यवाची शब्दो विशेषान् अभिवदति, यदि चाभिवदेत्,अद्य-जाते गवि नावकल्पेत,पूर्वदर्शनाभावात्; सामान्ये च दृष्टपूर्वत्वादवकल्पते; तस्मान्न सामान्यं विशेषान् अभिवदति, तस्मान्न वर्त्मादिहोमे आहवनीयप्रत्ययः। अभिवदन् वा न मुख्यया वृत्त्या अभिवदेत्, कथं तर्हि लक्षणया, लक्षणा च श्रुत्या बाध्येत; तस्माद् वर्त्मादिहोमे श्रुत्या वर्त्मादिषु प्राप्तेषु अशक्य आहवनीयो विज्ञातुं कर्त्तुं चेति।

आह,—'ननु विपरीतमप्येतत् स्यात्,—'आहवनीये प्राप्ते वर्त्मादिप्रत्ययो न शक्यः' इति। भवेदेवं, किन्तु विशेषे वर्त्मादिप्रत्ययः श्रौतः, आहवनीयप्रत्ययो लक्षणया; तत्र श्रुतिप्रत्ययो बलीयान् इत्युक्तं। 'ननु सामान्येऽप्याहवनीयप्रत्ययः श्रौतः'। उच्यते, वर्त्मादिप्रत्ययोऽपि सामान्ये श्रौतः, होमे हि स विशिष्टे विधीयते, न अहोमे एतद्विशेषयति। तस्माद्वर्त्मादिहोमं वर्जयित्वा अन्येषु होमेषु आहवनीयः करिष्यते इति॥ (१०।७।८अ०)॥

---

वैमृधादिषु साप्तदश्यविधेर्वाक्यशेषताधिकरणम् ॥

सू० अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृत-माज्यभागवत् प्राकृतप्रतिषेधार्थम् ॥१७॥ (पू०)॥

भा० अनारभ्य किञ्चिदाम्नायते,—'सप्तदश सामिधेनीरनुब्रूयात्' इति। तत् प्रकृतौ विशेषविहितेन पाञ्चदश्येन वाधितं सर्वविकृतीरनु-प्राप्तं कासुचित् विकृतिषु पुनः श्रूयते,—'वैमृधेऽध्वरकल्पायां पशौ चातुर्मास्येषु मित्रविन्दायां त्रैधातव्यायाम् आग्रयणेष्टाम्' इति। तासु विकृतिषु अस्य श्रवणं किमर्थमिति विचार्यते,—किं प्राप्तम्?, —'अप्रकरणे' यच्छास्त्रम् आम्नातं विकृतिविशेषे पुनरविकृतं श्रूयते, तत्, प्राकृतमङ्गजातं प्रतिषेद्धुं,—वैमृधादिषु 'सप्तदश सामिधेनीरनु-ब्रूयात्' इति, नान्यत् प्राकृतं कुर्यादिति। न चैवं विज्ञायते,— वैमृधादिष्वेव साप्तदश्यं, नान्यासु विकृतिष्विति, तासु तत् प्रत्यक्षेण वाक्येन श्रुतं न शक्यं वाधितुम् ॥

सू० विकारे तु तदर्थं स्यात् ॥ १८ ॥ (यु०) ॥

भा० यदि तु सामिधेनीनां विकारः कश्चित् श्रूयेत, ततो विकारार्थ-माम्नातमिति गम्यते, न तु विकारः श्रूयते; तस्मात् प्राकृतप्रति-षेधार्थमेवेति।

सू० वाक्यशेषो वा क्रतुना ग्रहणात् स्यादनारभ्य-विधानस्य ॥ १९ ॥ (सि०) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति। वाक्यशेषोऽयं वैमृधादिषु 'अना-

रम्भ-विधानस्य, 'सप्तदश सामिधेनीरनुब्रूयात्' एतासु विकृतिष्विति, तेन अन्यासु विकृतिषु न स्यात्। 'ननु प्रत्यक्षश्रुतम् अन्यासु विकृतिषु तत् न शक्यं बाधितुं'। उच्यते, सत्यं प्रत्यक्षश्रुतं सामिधेनीषु, न तु तत् क्रतुना गृह्यते; क्रतुसम्बन्धाभावात्, प्रयोगवचनोऽपि न गृह्णाति, सति वैमृधादिसम्बन्धकरे वाक्ये। यदेतत् साप्तदश्यम् अनारभ्योक्तं, तत् वैमृधादीनामङ्गमिति प्रत्यक्षं वाक्यं, तस्मान्नान्या विकृतयः तत् गृह्णन्ति; अक्रतुग्रहणे च सति सामिधेनीनां साप्तदश्यं निःफलत्वान्न क्रियेत, तस्मादनारभ्य-विधेः वैमृधादिषु वाक्यशेषः। आह,—'ननु वाक्यभेदो भवति,—सामिधेन्यः सप्तदश भवन्ति, ताश्च वैमृधादिषु' इति। उच्यते, द्वे एते वाक्ये, पूर्वेण वाक्येन योऽर्थ उक्तः, तस्यैव विशेषः परेण वाक्येन विधीयते इति वाक्यशेष इत्युच्यते इति॥(१०।७।८अ०)॥

---

'पृथिव्यै स्वाहा' इत्यादिविधिना यविहितस्वाहाकारेषु प्रदानेषु स्वाहाकार-विधानाधिकरणम्॥

## सू० मन्त्रेष्ववाक्यशेषत्वं गुणोपदेशात्स्यात्॥२०॥ (सि०)॥

भा० दर्विहोमं प्रकृत्य श्रूयते,—'पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा वायवे स्वाहा' इति। अस्ति च अनारभ्य-वचनं,—'वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इति। तत्र सन्देहः,—किं तस्यायं वाक्यशेषः,—स्वाहाकारेण अन्नं प्रदीयते देवेभ्यः-इत्येतस्मिन् दर्विहोमे 'पृथिव्यै स्वाहा अन्तरिक्षाय स्वाहा' इति, उत नायं वाक्यशेषः,

येष्वपि प्रदानेषु स्वाहाकारो नाम्नातस्तेष्वपि स्वाहाकारः? इति। किं प्राप्तम्?,—अनन्तरसूक्तेनाधिकरणेन वाक्यशेष इति।

एवं प्राप्ते ब्रूमः,—'मन्त्रेषु' वाक्यशेषत्वं, न 'स्यात्', न हि विधायका-विधायकवाक्ययोः एकवाक्यत्वं भवति, विधायकं ब्राह्मणम्, अविधायको मन्त्रः। अपि च, अनन्तराधिकरणे न क्रतुसम्बन्धोऽस्ति इह तु सम्बन्धो गम्यते,—'वषट्कारेण स्वाहाकारेण वा देवेभ्योऽन्नं प्रदीयते' इति, प्रदानं चात्र प्रधानकर्म्म। अपि च, गुणोपदेशो भवति, तस्मिन् दर्विहोमे 'पृथिव्यै स्वाहा' इत्येवं समुच्चारणं भवति, न 'स्वाहा पृथिव्यै' इति; तस्मादन्येष्वपि दर्विहोमेषु स्वाहाकारोऽस्तीति॥

## सू० अनाम्नाते च दर्शनात्॥२१॥ (यु०१)॥

भा० यत्रापि दर्विहोमे न आम्नायते स्वाहाकारः, तत्रापि कश्चिद्दृश्यते, 'घृतेन द्यावापृथिवी आपृणेथामिति औदुम्बर्यां विशाखे जुहोति आम्नात् अवस्रावयति भूमिप्राप्ते स्वाहा करोति'—इति प्राप्तं स्वाहाकारं दर्शयति।

## सू० प्रतिषेधाच्च॥२२॥ (यु०२)॥

भा० क्वचिच्च प्रतिषेधो भवति,—'न स्वाहेति वचनं करोति मन्त्रं च नाह' इति; प्राप्तिपूर्व्वकः प्रतिषेधो भवतीति अवाक्यशेषता अध्यवसीयते॥ (१०।७।१०अ०)॥

---

अग्न्यतिग्राह्यस्य विकृतावुपदेशाधिकरणम् ॥

सू० अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात्
॥ २३ ॥ (पू०) ॥

भा० इदमाम्नायते,—'य एवंविद्वानग्निं चिनुते' इति, तथा 'उपष्टम्भनं वा एतद्यज्ञस्य यदतिग्राह्या' इति। तत्र सन्देहः,—किं अग्न्यतिग्राह्यं विकृतौ चोदकः प्रापयति, उत न? इति। किं प्राप्तम्,—'अग्न्यतिग्राह्यस्य विकृतौ' 'अप्रवृत्तिः' इति,—अग्निसातिग्राह्याय अग्न्यतिग्राह्यं, तत् विकृतौ न प्रवर्त्तते। कुतः?। 'विकृतावुपदेशात्',—विकृतौ हि तत् उपदिश्यते,—'अथातोऽग्निमग्निष्टोमेनानुयजति, तमुक्थ्येन तमतिरात्रेण तं चतूरात्रेण तं पञ्चरात्रेण तं षड्रात्रेण तं सप्तरात्रेण तमष्टरात्रेण तं नवरात्रेण तं दशरात्रेण' इति। तथा 'यत् पृष्ठ्येति गृह्णीयात् प्राञ्चं यज्ञं पृष्ठानि संगृह्णीयुः, यदुक्थ्येति गृह्णीयात्' इति न नूनमग्न्यतिग्राह्यं चोदकः प्रापयति, यत् साक्षात्कस्याञ्चित् विकृतौ चोद्यते इति ॥

सू० मासि-ग्रहणाच्च तद्वत् ॥ २४ ॥ (यु०) ॥

भा० इदञ्च आम्नायते, 'मासि-मासि अतिग्राह्या गृह्यन्ते' इति। यदि चोदकः प्रापयेत्, न, मासि-मास्यतिगृह्यन्ते इत्युपदेशः स्यात् ॥

सू० ग्रहणं वा तुल्यत्वात् ॥ २५ ॥ (सि०) ॥

भा० गृह्यते वा चोदकेन अग्न्यतिग्राह्यं, न हि अस्य अन्यैरङ्गैरस्ति विशेषः, अन्यानि अङ्गानि गृह्णाति एतत् न गृह्णातीति नैतदवकल्पते ॥

सू० लिङ्गदर्शनाच्च ॥ २६ ॥ (यु०) ॥

भा० लिङ्गं खल्वपि दृश्यते,—'कङ्कचितं चिन्वीत शीर्षचितं चिन्वीत यः कामयेत सुशीर्षा अस्मिन् लोके सम्भवेयम्' इति। तथा 'पञ्च ऐन्द्राम् अतिग्राह्यान् गृह्णाति' इति। कङ्काकारताम् ऐन्द्रताञ्च विशेषं ब्रुवन्नन्यतिग्राह्यस्य विकृतौ प्राप्तिं दर्शयति ॥

सू० ग्रहणं समानविधानं स्यात् ॥ २७ ॥ (१ आ० नि०)॥

भा० अथ यदुक्तं,—'विकृतावुपदिश्यते' इति, तत्परिहर्त्तव्यम्; अत्रोच्यते,—यस्यां विकृतावुपदिश्यते, तस्यां प्रकृतौ च समानः स विधिः; अवशिष्टासु विकृतिषु चोदकः प्रापयतीति ॥

सू० मासि-ग्रहणमभ्यासप्रतिषेधार्थम् ॥ २८ ॥ (२ आ० नि०) ॥

भा० अथ मासि-ग्रहणं कथम्? इति। तद् अभ्यासप्रतिषेधार्थं, न, अहन्यहनि गृह्यन्ते मासि-मासि गृह्यन्ते इति ॥(१०।७।११ अ०)॥

---

उपस्तरणाभिघारणाभ्यां सहैव चतुरवत्तहोमाधिकरणम् ॥

सू० उत्पत्तितादर्थ्याच्चतुरवत्तं प्रधानस्य होमसंयोगात् अधिकमाज्यमतुल्यत्वाल्लोकवदुत्पत्तेर्गुणभूतत्वात् ॥ २९ ॥ (पू०) ॥

भा० दर्शपूर्णमासयोराम्नायते,—'चतुरवत्तं जुहोति' इति। तत्र

अयमर्थः सांशयिकः,—किं सहोपस्तरणाभिघारणाभ्यां चतुरवत्तम्, उत प्रधानद्रव्यादेव चतुरवदातव्यम्, अधिकमुपस्तरणमभिघारणञ्च? इति। किं प्राप्तं? प्रधानद्रव्यादेव चतुरवदातव्यं। कुतः?। 'उत्पत्तिताद्र्थ्यात्',—पुरोडाशोत्पत्तेर्होमार्थता भवति, 'यदाग्नेयोऽष्टाकपालो अमावास्यायां पौर्णमास्याञ्च अच्युतो भवति' इति। यज्जुहोति तत् चतुरवत्तं कर्त्तव्यं, पुरोडाशश्च होमार्थो नोपस्तरणाभिघारणे; तस्मात् पुरोडाशस्य चतुरवदातव्यमिति। 'अधिकमाज्यं' स्यात्, अतुल्यं हि तत् पुरोडाशेन; पुरोडाशे होमार्थे तत् गुणभूतम् आज्यम्, तेन यद्यपि सह आज्येन षडवत्तं भवति, तथापि होमे चतुरवत्तमेव कृतं, यथा लोके, 'प्रस्थभुग्देवदत्तः' इत्युच्यते, यद्यपि सूपशाकादिभिरधिकः प्रस्थो भवति, तथापि भुजौ प्रस्थो निर्दिश्यते, व्यञ्जनानि ओदनार्थानि॥

सू० तत्संस्कारश्रुतेश्च॥ ३०॥ (यु०)॥

भा० प्रधानावदानसंस्कारार्थेन च उपस्तरणाभिघारणे श्रूयेते,— 'यदुपस्तृणाति अभिघारयति अमृताहुतिमेवैनां करोति' इति, तेनोपस्तरणाभिघारणसंयुक्तं प्रधानद्रव्याच्चतुरवत्तं होतव्यमिति गम्यते॥

सू० ताभ्यां वा सह स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन तदाप्तिवचनात्॥ ३१॥ (सि०)॥

भा० 'ताभ्यां वा सह' द्विर्हविषोऽवदाय चतुरवत्तं कर्त्तव्यं। कुतः?। 'स्विष्टकृतः सकृत्त्वे द्विरभिघारणेन' तदाप्तिवचनं भवति,—

'यज्ञदुपस्तृणाति यच्चद्वद्यति द्विरभिधारयति चतुरवत्तस्याप्त्यै' इति, द्विरभिधारणेन चतुरवत्तं पूर्णं दर्शयति, इतरथा पञ्चवत्तं तेन पूर्येत। आह,—'दर्शनमेतत्, प्राप्तिर्वक्तव्यताम्' इति। अथोच्यते,—चतुरवत्ते होमे श्रूयते,—'चतुरवत्तं जुहोति' इति, न होमार्थे पुरोडाशे साचाय्ये वा,—नैवं श्रूयते,—यत् होमार्थं द्रव्यं तच्चतुरवत्तं कुर्यादिति, चतुरवत्तं श्रूयमाणं होमेन असंबध्यमानम् अनर्थकं स्यात्।

अथोच्यते,—'प्रयोगवचनग्रहणादर्थवत् भविष्यति'। तन्न, साक्षात्-होमसम्बन्धे वचने सति 'चतुरवत्तं जुहोति' इति नान्यत् प्रयोगवचन-ग्रहणं कल्पते। अस्मिंश्च साक्षाद्वचने तदर्थात् अवत्तं, न अतदर्थात् इति न विशेषः श्रूयते, तदर्थात् अतदर्थाद्वा चतुरवखण्डनसंयुक्तं द्रव्यं होतव्यम्, एवञ्च श्रुतिः परिरक्ष्यते, इतरस्मिन् पक्षे वाक्यं परिरक्ष्येत, 'द्विर्हविषोऽवद्यति' इति च विकल्पः स्यात्, यदि हविश्चतुरवत्तं हीयेत,* तथा इदमपरं अवणम् अपदनुवादभूतं स्यात् चतुरवत्तं वा विकल्पयेत्, अभावाच्च पक्षे विकल्पो न न्याय्यः स्यात्; तस्मात् सहोपस्तरणाभिघारणाभ्यां चतुरवत्तमिति ॥

सू॰ तुल्यवच्चाभिधाय सर्वेषु भक्त्यनुक्रमणात् ॥ ३२ ॥ (यु॰) ॥

भा॰ 'चत्वारि वा एतानि देवद्धानि अवदानानि यदुपस्तृणाति तदनुवाक्यायै यत् पूर्वमवदानन्तद्याज्यायै यदुत्तरं तद्देवतायै यत् अभिघारयति तद्वषट्काराय' इति चतुरवत्तस्य चत्वारि अवदानानि

* हविश्चतुरवद्धीयेत इति का॰ मो॰ पु॰ पाठः।

संकीर्त्य अनुवाक्यादिभिः भक्तिवादेन अवयवशः संकीर्त्तयन् उपस्तरणा-दीनि दर्शयति, तस्मात् सहोपस्तरणाभिघारणाभ्यां चतुरवत्तमिति। दधश्वो भागधेयवचनः, तद्यथा 'कण्टकाय दधं, नापिताय दधम्' इति, देवदधानि देवभागा इत्यर्थः॥ (१०।७।१२अ०)॥

---

उपांशुयाजेऽपि चतुरवत्तस्याःअवत्ताधिकरणम्॥

सू० साप्तदश्यवन्नियम्येत॥ ३३॥ (पू०)॥

भा० दर्शपूर्णमासयोरुपांशुयाजोऽस्ति, तत्र 'चतुरवत्तं जुहोति' इति। तत्र संशयः,—किमुपांशुयाजे चतुरवत्तं कर्त्तव्यम्, उत न? इति। किं प्राप्तं?,—'साप्तदश्यवन्नियम्येत', यथा साप्तदश्यम् अनारभ्या-धीतं परिगणितासु विकृतिषु पुनः श्रूयमाणं वाक्यशेषात्तास्वेव नियम्यते, एवमिदमपि चतुरवत्तम् उपस्तरणाभिघारणाश्रयत्वात् यत्र ते, तत्रैव नियम्येत औषधसान्नाय्ययोः, उपांशुयाजे न स्यादिति॥

सू० हविषो वा गुणभूतत्वात्तथाभूतविवक्षा स्यात्॥
॥ ३४॥ (सि०)॥

भा० वाशब्दः पक्षं व्यावर्त्तयति। नैतदस्ति,—नोपांशुयाजे चतुर-वत्तमिति, होमे चतुरवत्तं गुणो विधीयते, स उपांशुयाजहोमेऽपि स्यात्, अत्रापि चतुरवदातव्यं। अथ यदुक्तम्, औषधसान्नाय्ययोरेव चतुरवत्तम्, उपस्तरणाभिघारणाश्रयत्वात्—इति; न उपस्तरणाभि-घारणवचनं चतुरवत्तस्य वाक्यशेषभूतं, यथा 'सप्तदशसामधेनीरनुब्रूयात्' इति मित्रविन्दादिषु, सप्तदशानुक्रमादिति। नैवमिह चतुरवद्येत्, कथ-

मुपस्तृणीयात्, अभिघारयेच्चेति, कथं तर्हि ?,—चतुरवदानसंयुक्तं द्रव्यं जुहुयात् हविषोपस्तृणीयात्, अभिघारयेच्चेति, यत्र हविषि उपस्तीर्यमाणेऽभिघार्यमाणे च चतुरवत्तयुक्तं प्रदानं भवति तत्र न प्रधानद्रव्याच्चतुरवदातव्यं; यत्र पुनः प्रधानद्रव्याच्चतुरवत्तमन्तरेण न चतुरवत्तं भवति, तत्र प्रधानद्रव्याच्चतुरवदातव्यं; चतुरवत्तभूतमिह होतव्यं विवक्ष्यते, न इतस्ततो वा चतुरवदातव्यमिति। तस्मादुपांशुयाजेऽपि चतुरवत्तं कर्त्तव्यमिति॥ (१०।७।१३अ०)॥

---

दर्शपूर्णमासयोराग्नेयैन्द्राग्नयोरनुवादताधिकरणम्॥

सू० पुरोडाशाभ्यामित्यधिकृतानां पुरोडाशयोरुपदेशस्तत्श्रुतित्वाद्वैश्यस्तोमवत्॥ ३५॥ (१मपू०)॥

भा० दर्शपूर्णमासयोरिदमाम्नायते,—'पुरोडाशाभ्यामेवासोमयाजिनं याजयेत् यावेतावाग्नेयश्चैन्द्राग्नश्च' इति। तत्रैष संशयः,—किमधिकारश्रुतिवाक्यशेषोऽयं,—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्याभ्यां पुरोडाशाभ्यामसोमयाजीति(१); अथ किमधिकयोः कर्मान्तरयोरुत्पत्तिः,—अपराभ्यामेवञ्जातीयकाभ्यां पुरोडाशाभ्यां यजेत-इति(२); अथ वा, अङ्गकर्तुरुपदेशः,—आभ्यां पुरोडाशाभ्यामृत्विक् याजयेत् इति(३); अथ वा, असोमयागकाले आभ्यां यजेतेति कालोपदेशः(४); उत ऐन्द्राग्नस्य विधिः, आग्नेयस्य चानुवादः(५); अथ वा उभयोरनुवादः(६)?—इति एते पक्षाः।

किं तावत् प्राप्तम्?,—अधिकारशेषः(१)-इति;—यदेतत् 'स्वर्गकामो

यजेत' इति, तस्य शेषः, आभ्यां 'पुरोडाशाभ्याम्' असोमयाजी स्वर्गकामो यजेतेति। कुतः? । 'तत्श्रुतित्वात्',—तत्श्रुतिमन्तौ हि पुरोडाशौ शब्देनानूद्येते; तेन नाभ्यधिकौ। असोमयाजिनश्च कर्तुर्व्यापार आभ्यां संबध्यते श्रुत्या, न कालः, स हि लक्ष्येत, श्रुतिश्च लक्षणाया गरीयसी; तत्र सोमयाजिनो वा न पुरोडाशौ, असोमयाजिनो वा न सान्नाय्यं। यदि पुरोडाशावधिकृत्य असोमयाजी विधीयते, ततो नासोमयाजी सान्नाय्ये, तत्रैवकारः समर्थितो भवति,—पुरोडाशाभ्यां केवलाभ्यामसोमयाजी, न सान्नाय्येनेति। अथासोमयाजिनमधिकृत्य पुरोडाशौ विधीयेते, तथा न सोमयाजिनः पुरोडाशौ, तत्रास्थाने एवशब्दो भवति,—पुरोडाशाभ्यामसोमयाजिनमेवेति; यथा,—

'यमेव विद्याः शुचिमप्रमत्तं
मेधाविनं ब्रह्मचर्योपपन्नम्।
यस्ते न द्रुह्येत् कतमच्चनाह
तस्मै मां ब्रूयाः निधिपाय ब्रह्मन्' इति॥

यं शुचिमेव विद्याः इति वदितव्ये यमेव विद्याः शुचिमिति; एवमत्रापि। तदुभयोरपि वचनव्यक्त्योरधिकारश्रुतिवाक्यशेष इति उभयथा अयं पूर्वपक्षो भवति; यथा वैश्यस्तोमेऽधिकारश्रुतिशेषः,— 'वैश्यो वैश्यस्तोमेन यजेत' इति, तद्वदत्राप्यधिकारश्रुतिशेष एवेति॥

सू० नत्वनित्याधिकारोऽस्ति विधौ नित्येन सम्बन्धस्तस्माद्वाक्यशेषत्वम्॥ ३६॥ (२मपू०)॥

भा० तुशब्दः पक्षं व्यावर्त्तयति। नैतदेवम्,—अधिकारवाक्यशेष

इति, नित्यौ हि दर्शपूर्णमासौ,—'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति, नित्यौ च तत्रेमौ पुरोडाशौ फलं प्रति सहकारिणौ; तौ अनित्यमसोमयाजिनं प्रति विधीयेते—इत्यनुपपन्नं। कथम्? । नित्यौ हि दर्शपूर्णमासयोर्भविष्यतः, यस्त्वसोमयाजी तस्योपकरिष्यत इति नोपपद्येत, पुरोडाशविधेः 'नित्येन' दर्शपूर्णमाससमुदायेन 'सम्बन्धः' तस्मात् न असोमयाज्यधिकारश्रुतिवाक्यशेषः, किन्तर्हि, अधिकयोः कर्मान्तरयोरुत्पत्तिरिति; नैवमभिसम्बन्धः क्रियते,—यावेतौ पुरोडाशौ दर्शपूर्णमासयोर्विहितौ, तौ प्रति असोमयाजी विधीयते इति, कथन्तर्हि, असोमयाजी यः स्वर्गकामः स आग्नेयं कुर्यादैन्द्राग्नञ्चेत्येते कर्मणी विधीयेते, विधीयेते चेत् पूर्वाभ्यां कर्मान्तरे; तत्र 'यावेतौ' इत्यनुवादवचनं धर्मापेक्षं भविष्यति। यथा 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा' इति। एवञ्छब्दस्य पुनरित्यस्मिन्नर्थे भविष्यति; यथा, 'क्षीरेण भुक्त्वा देवदत्तः क्षीरेणैव भुञ्जीत' इति,—भुक्त्वा देवदत्तः भुञ्जीतैवेति पुनरिति गम्यते, एवमिहापि सोमयाजिनस्त्वसोमयाजिनश्च दर्शपूर्णमासविधानेन विहितौ पुरोडाशौ पुनरसोमयाजिनस्तौ विधीयेते,—पुरोडाशाभ्यामेवासोमयाजिनं याजयेदिति तद्धर्मकाभ्यामिति गम्यते ॥

सू० सति च नैकदेशेन कर्त्तुः प्रधानभूतत्वात्॥ ३७ ॥ (यु०) ॥

भा० 'सति च' अधिकारशेषे पुरोडाशयोरसोमयाजिकर्तृसम्बन्धो नोपपद्यते, अधिकारशेषे हि प्रधानभूतः कर्त्ता निर्दिश्यते, न चायति

फले प्रधानभाव उपपद्यते, न च दर्शपूर्णमासैकदेशभूतौ पुरोडाशौ फलस्य साधकौ भवतः। न च, वचनप्रामाण्यात् फलं कल्पयिष्यते, वचनव्यक्त्यन्तरस्य भावात्। तस्मादपि नाप्यधिकारश्रेष इति॥

सू॰ कृत्स्नत्वात्तु तथा स्तोमे॥ ३८॥ (आ॰नि॰)॥

भा॰ यदुपवर्णितं,—वैश्वस्तोमवत्—इति, युक्तं वैश्वस्तोमे, कृत्स्नो वैश्वस्तोमो न कस्यचिदेकदेशः, तत्र फलं सम्भवति, न चात्र फलं सम्भवति, न चात्र किञ्चिदेकं नित्यमनित्येन संबध्यते। तस्माद्वैषम्यं वैश्वस्तोमेन॥

सू॰ कर्त्तुः स्यादिति चेत्॥ ३९॥ (३यपू॰)॥

भा॰ 'इति चेत्' मन्यसे,—नाधिकारश्रुतिश्रेषो*ऽवकल्पते इति। तत्रोच्यते, कर्मान्तरयोरुत्पत्तिर्नावकल्पते, 'याजेतौ' इति व्यपेक्षावचनं लक्षणया कल्पेत। कथं तर्हीदमिति?। अङ्गकर्तुरुपदेशः,—अङ्गे यः कर्त्ता, न प्रधाने। याजयेदिति हेतुकर्तुरेवैतत् प्रत्यक्षं वचनं, लक्षणया यजेः कर्तुः। अपि च नित्यानित्ययोर्विरुद्धः सम्बन्धोऽभ्युपगतो न भविष्यति। न चैकदेशस्य फलं कल्पयिष्यते, अग्नेोमयाजी पुरोडाशाभ्यां याजयितव्य इति याजयितुरुपदेशोऽभ्युदयाय भविष्यति॥

सू॰ न गुणार्थत्वात् प्राप्ते च नोपदेशार्थः॥ ४०॥ (३य पू॰नि॰)॥

भा॰ नैतदेवम्,—अङ्गकर्तुरुपदेश इति, अङ्गकर्त्ता हि प्रधानकर्तुरेव

* नाधिकारः श्रुतिश्रेषोऽवकल्पते इति का॰ श्री॰ पु॰ पाठः।

क्रियोपदेशेन गुणभूतः प्राप्नोति; न चास्य फलं श्रूयते; न च कल्पयितुं शक्यमुपपदविशेषात्; न च, प्राप्तस्य पुनरुपदेशे किञ्चिदस्ति प्रयोजनं, अर्थप्राप्तस्य ह्यनुवादः पुरोडाशयोर्यागं विधातुं; न च, परिसंख्या, त्रिदोषत्वात्; सोमयाजिनस्य विना श्रङ्गकर्मा,असम्भवात्। तस्मात् कर्मान्तरयोरुत्पत्तिरिति ॥

सू० कर्मणोस्तु प्रकरणे तन्न्यायत्वात् गुणानां लिङ्गेन कालशास्त्रं स्यात् ॥ ४१ ॥ (४र्थ पू०) ॥

भा० तुशब्दः पक्षं व्यावर्त्तयति। नाधिकयोः कर्मान्तरयोरुत्पत्तिरिति, एतयोः कर्मणोः प्रकरणे काल उच्यते, न असोमयाजिनं कर्त्तारं प्रति पुरोडाशौ विधीयेयातां। कुतः?। 'तन्न्यायत्वात्', स हि न्यायः, योऽभिहितः,-"अपि वा कालमात्रं स्यात् अदर्शनाद्विशेषस्य (४।४।६सू०)" इति, इहापि स एव न्यायः,-असोमयागकाले दर्शपूर्णमासयोरेतौ पुरोडाशौ भवत इति। किमेवं भविष्यति?। फलकल्पनादोषो न भविष्यति, यदा समुदाये व्यापरिष्यते* तदा सर्वेषां संहतानां फलं भविष्यति। शक्यते च असोमयागेन विशेषलिङ्गेन कालो लक्षयितुम्, तस्मिन् काले पुरोडाशाभ्यामेव यजेत न साम्नाय्येन-इति ॥

सू० यदि तु साम्नाय्यं सोमयाजिनो न ताभ्यां समवायोऽस्ति विभक्तकालत्वात् ॥ ४२ ॥ (४र्थ पू०नि०) ॥

भा० तुशब्दः पक्षं व्यावर्त्तयति। 'यदि' 'साम्नाय्यं सोमयाजिनः'

---

* 'समुदायस्य फलमिष्यते' इति आदर्शपुस्तकपाठः।

न कालार्थं श्रवणं भवितुमर्हति। साम्नाय्यं च सोमयाजिन एव, अनाम्नङ्क्ते तस्मिन्नाम्नङ्कितवचनं, यथा,—

'शास्त्राणि चेत् प्रमाणं स्युर्गतास्ते परमाकृतिम्' इति।

एवं हि श्रूयते, 'नासोमयाजी सन्नयेत्' इति। एवं सति न कालार्थं श्रवणं। कथं?। नैव 'ताभ्यां' पुरोडाशाभ्यां साम्नाय्यस्य 'समवायः' प्राप्तः, 'विभक्तकालत्वात्', प्राक् सोमयागात् पुरोडाशौ, ऊर्द्धं साम्नाय्यं प्राप्तमेव, न तदर्थं यतितव्यं। तस्मात् न कालार्थं विभक्तकालार्थं श्रवणं कर्मान्तरचोदनैवेति॥

सू॰ अपि वा विहितत्वात् गुणार्थायां पुनःश्रुतौ सन्देहे श्रुतिर्द्विदेवतार्था स्यात् यथानभिप्रेतः तथाग्नेयो दर्शनादेकदेवते॥ ४३॥ (५म पू॰)॥

भा॰ अपि वेति पक्षव्यावृत्तिः। नैतत् कर्मान्तरचोदनेति, अनुवादः आग्नेयस्य, 'विहितत्वात्', विहितो हि असावुभयत्र 'यदाग्नेयो ऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति। ऐन्द्राग्न्यस्य भवति विधिः, उभयत्राविहितत्वात्; स यत्र न प्राप्नोति, पौर्णमास्याम् ऐन्द्राग्नविधानार्था एषा श्रुतिः। यथानभिप्रेतस्तथाग्नेय उच्चरितः, विधानं चोभयत्र, तस्य दर्शनं च,—'आग्नेयं चतुर्द्धा करोति' इति; तथा साकंप्रस्थाय्ये आज्यभागाभ्यां प्रचर्य आग्नेयेन पुरोडाशेन इति॥

सू॰ विधिं तु वादरायणः॥ ४४॥ (५म पू॰नि॰)॥

भा॰ तुशब्दः एतमपि पक्षं व्यावर्त्तयति। नैतदेवम्,—आग्नेये-

ऽनुवादः, ऐन्द्राग्ने विधिः—इति; उभयोः कालविधिः स्यात्। कुतः?। 'बादरायणः' आचार्यो मन्यते स्म,—प्रागपि सोमयागात् सान्नाय्यविधिरिति, असोमयाजिनोऽपि सान्नाय्यं श्रूयते, 'तदु सं नयेत्* इति। तथा तथेह साङ्गीपायनाः सान्नाय्यमेवासोमयाजिनः', तस्मात् कालार्थः संयोग इति ॥

सू० प्रतिषिद्धविज्ञानाद्वा ॥ ४५ ॥ (सि०) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति। नैतदस्ति,—कालविधिरिति, नाप्यधिकयोः कर्मणोरुत्पत्तिः, न वा आग्नेयस्यानुवादः, ऐन्द्राग्नस्य विधिः, किन्तर्हि उभयोरनुवादः। कथं?। सोमयाजिनः सान्नाय्य-विधानार्थमेतद्वाक्यम्, अतो नैन्द्राग्नस्यापि विधिः, भिद्येत हि तदा वाक्यम्, एवमभिसम्बन्धः क्रियते,—असोमयाजिनः पुरोडाशावेतौ द्वौ प्राप्तौ, सोमयाजिनः सान्नाय्यमपरमपीति, पुरोडाशाभ्यामेवा-सोमयाजिनं याजयेत्, यौ एतौ आग्नेयश्च ऐन्द्राग्नश्च, सान्नाय्येन सोमयाजिनम् इति एवमेकेन वाक्येन सोमयाजिनः सान्नाय्यं विधीयते, अपरेणापि वाक्येनासोमयाजिनः; यस्मादुभयोरप्यनुवाद इति ॥

सू० तथा चान्यार्थदर्शनम् ॥ ४६ ॥ (यु०) ॥

भा० अन्यार्थोऽपि चैतमर्थं दर्शयति, न कर्मान्तरे इति। कथं?।

---

* 'तदु समेव नयेत्' इति का० श्री० पु० पाठः। 'तदुभयमेव नयेत्' इति चादर्श-पुस्तकपाठः।

न कालार्थं श्रवणं भवितुमर्हति । साम्नाय्यं च सोमयाजिन एव, अनाशङ्किते तस्मिन्नाशङ्कितवचनं, यथा,—

'प्रास्नापि चेत् प्रमाणं स्तुर्गतास्ते परमाक्नतिम्' इति ।

एवं हि श्रूयते, 'नासोमयाजी सन्नयेत्' इति । एवं सति न कालार्थं श्रवणं । कथं? । नैव 'ताभ्यां' पुरोडाशाभ्यां साम्नाय्यस्य 'समवायः' प्राप्तः, 'विभक्तकालत्वात्', प्राक् सोमयागात् पुरोडाशौ, ऊर्द्धं साम्नाय्यं प्राप्तमेव, न तदर्थं यतितव्यं । तस्मात् न कालार्थं विभक्तकालार्थं श्रवणं कर्मान्तरचोदनैवेति ॥

सू० अपि वा विहितत्वात् गुणार्थायां पुनःश्रुतौ सन्देहे श्रुतिर्द्विदेवतार्था स्यात् यथानभिप्रेतः तथाग्नेयो दर्शनादेकदेवते ॥ ४३ ॥ (५म पू०) ॥

भा० अपि वेति पक्षव्यावृत्तिः । नैतत् कर्मान्तरचोदनेति, अनुवादः आग्नेयस्य, 'विहितत्वात्', विहितो हि असावुभयत्र 'यदाग्नेयो ऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति । ऐन्द्राग्नस्य भवति विधिः, उभयत्राविहितत्वात्; स यत्र न प्राप्नोति, पौर्णमास्याम् ऐन्द्राग्नविधानार्था एषा श्रुतिः । यथानभिप्रेतस्तथाग्नेय उच्चरितः, विधानं चोभयत्र, तस्य दर्शनं च,—'आग्नेयं चतुर्द्धा करोति' इति; तथा साकंप्रस्थाय्ये आज्यभागाभ्यां प्रचर्य आग्नेयेन पुरोडाशेन इति ॥

सू० विधिं तु बादरायणः ॥ ४४ ॥ (५म पू०नि०) ॥

भा० तुशब्दः एतमपि पक्षं व्यावर्त्तयति । नैतदेवम्,—आग्नेये-

ऽनुवादः, ऐन्द्राग्ने विधिः—इति; उभयोः काखविधिः स्यात्। कुतः?। 'बादरायणः' आचार्यो मन्यते स्म,—प्रागपि सोमयागात् सान्नाय्यविधिरिति, असोमयाजिनोऽपि सान्नाय्यं श्रूयते, 'तदु सं नयेत्* इति। तथा तथेह आङ्गुर्गोपायना: सान्नाय्यमेवासोमयाजिनः', तस्मात् कालार्थः संयोग इति ॥

सू० प्रतिषिद्धविज्ञानाद्वा ॥ ४५ ॥ (सि०) ॥

भा० वाशब्दः पक्षं व्यावर्त्तयति। नैतदस्ति,—कालविधिरिति, नाप्यधिकयोः कर्मणोरुत्पत्तिः, न वा आग्नेयस्यानुवादः, ऐन्द्राग्नस्य विधिः, किन्तर्हि उभयोरनुवादः। कथं?। सोमयाजिनः सान्नाय्य-विधानार्थमेतद्वाक्यम्, अतो नैन्द्राग्नस्यापि विधिः, भिद्येत हि तदा वाक्यम्, एवमभिसम्बन्धः क्रियते,—असोमयाजिनः पुरोडाशावेतौ द्वौ प्राप्तौ, सोमयाजिनः सान्नाय्यमपरमपीति, पुरोडाशाभ्यामेवा-सोमयाजिनं याजयेत्, यौ एतौ आग्नेयश्च ऐन्द्राग्नश्च, सान्नाय्येन सोमयाजिनम् इति एवमेकेन वाक्येन सोमयाजिनः सान्नाय्यं विधीयते, अपरेणापि वाक्येनासोमयाजिनः; यस्मादुभयोरप्यनुवाद इति ॥

सू० तथा चान्यार्थदर्शनम् ॥ ४६ ॥ (यु०) ॥

भा० अन्यार्थोऽपि चैतमर्थं दर्शयति, न कर्मान्तरे इति। कथं?।

---

* 'तदु सन्नेव नयेत्' इति का० श्री० पु० पाठः। 'तदुभयमेव नयेत्' इति चादर्श-पुस्तकपाठः।

'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते चयोदशामावास्यायाम्' इति; कर्मान्तरोत्पत्तावभ्यधिका आहुतयो भवेयुरिति॥(१०।८।१४ अ०)॥

---

उपांशुयाजस्य ध्रौवाज्यद्रव्यताधिकरणम्॥

सू० उपांशुयाजमन्तरा यजतीति हविर्लिङ्गाश्रुतित्वात् यथाकामी प्रतीयेत॥ ४७॥ (पू०)॥

भा० दर्शपूर्णमासयोराम्नायते,—'उपांशुयाजमन्तरा यजति' इति। तत्र द्रव्यं प्रति सन्देहः,—किम्,—अनियमः, उत नियतं किञ्चिद्द्रव्यम्? इति। किं प्राप्तं?,—न किञ्चित् हवीरूपं श्रूयते, तस्मात् 'यथाकामी प्रतीयेत'। तत्र उच्यते,—'श्रूयते हवीरूपम्,—'आज्यस्यैव वावुपांशु पौर्णमास्यां यजन्' इति, तस्मादाज्यद्रव्यकं स्यात्'। उच्यते,— एवमप्यनियमः, यत्किञ्चित् आज्यं गृहीत्वा इज्येतेति॥

सू० ध्रौवाद्वा सर्वसंयोगात्॥ ४८॥ (सि०)॥

भा० 'ध्रौवाद्वा' आज्यादिज्येत, न यतः-कुतश्चित्। कुतः?। 'सर्वसंयोगात्', सर्वयजतिभिर्हि सम्बद्धं,-'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद्ध्रुवायामाज्यम्'। तस्मात् ध्रौवाज्यात् यजेतेति॥(१०।८।१५ अ०)॥

---

उपांशुयाजस्य प्रकृतदेवतानियमाधिकरणम्॥

सू० तद्वच्च देवतायां स्यात्॥ ४९॥ (पू०)॥

भा० देवतां प्रति उपांशुयाजस्य संशयः,—किम् अनियमः, नियमः?

इति। किं प्राप्तं ?,—यद्वत् द्रव्यं प्रति अनियमः पूर्वाधिकरणपूर्वपक्षे, 'तद्वत् देवतास्वाम्' अनियमः। ननु 'अग्नीषोमौ विधीयेते'। उच्यते, पुराकल्पस्वरूपोऽयं न विधिस्वरूपः* । 'इमाः तर्हि 'विष्णुरुपांशु यष्टव्यः' इत्येवमादिका देवता विधीयन्ते'। उच्यते,—उक्तमजामि-करणवचनार्था एते अर्थवादा इति, तस्मादनियमः॥

सू० तान्त्रीणां प्रकरणात्॥ ५० ॥ (सि०)॥

भा० न हि देवतामन्तरेण यागो भवति, न च वचनमन्तरेण देवता, न च, अन्यस्य विहिता देवता, अन्यस्य अवकल्पते; तस्मात् प्रकृतानां तत्प्रभवानाम् अन्यतमया देवतया प्रकृतत्वात् एकवाक्यतां कृत्वा देवताम् अवगमिष्यामः। एकया च कृतार्थत्वात् यां-काञ्चित् देवतामिति॥ (१०।८।१६अ०)॥

---

उपांशुयाजस्य विष्ण्वादिदेवताकत्वपौर्णमासीकर्मकत्वयोरधिकरणम्।

सू० धर्माद्वा स्यात् प्रजापतिः॥ ५१ ॥ (१म पू०)॥

भा० तान्त्रीणामन्यतमा देवतेत्युक्तं। तत्र सन्देहः,—किं तान्त्रीष्वनियमः,—अथ वा प्रजापतिः(१), अथ वा अग्निः(२), अथ वा विष्णुः, अमावास्यायां चोपांशुयाजः(३); अथ वा पौर्णमास्यामुपांशु-याजः, विष्णुर्देवता(४); अथ वा उभयत्रोपांशुयाजः, देवताविकल्पश्च(५) इति; अथ वा पौर्णमास्यामेव उपांशुयाजः, तत्रैव विष्ण्वाद्या देवताः(६) ? इति पक्षाः। किं तावत् प्राप्तं ?—'प्रजापतिः' देवता।

---

* पुराकल्पस्वरूपोऽयं न विधिस्वरूपः इति आदर्शपुस्तकपाठः।

कुतः ? । 'धर्मात्',—तस्य हि उपांशुत्वं धर्मः,—'तस्मात् यत्किञ्चित् प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत् क्रियते' इति । उपांशुयाज-नामकत्वाच्च अस्य कर्मण इदं अवगम्यते,—नूनमस्य उपांशुत्वं धर्म इति, आत्मनि साधनेषु च न उच्चैस्त्वेन अस्य सम्बन्ध इति, तेन प्रजापतिरिति गम्यते, स हि अनुच्चैर्धर्मकः; अन्यस्यां सत्यामुच्चैस्त्वेनास्य सम्बन्धो भवेदिति ॥

सू॰ देवतायास्त्वनिर्वचनं तच्छब्दस्येह मृदुत्वं तस्मादिहाधिकारेण ॥ ५२ ॥ (२य पू॰) ॥

भा॰ तुशब्दः पक्षं व्यावर्त्तयति । नैतदस्ति,—प्रजापतिर्देवतेति । ताम्रीणां मुख्योऽग्निर्देवता स्यात् प्रजापतेः 'देवतायाः' 'अनिर्वचनं' धर्मः तूष्णींभावः, 'प्रजापतिं मनसा यजेत्' इति । 'ननु उपांशुत्वं प्रजापतेर्धर्मः, 'तस्मात् यत्किञ्चित् प्राजापत्यं क्रियते, उपांश्वेव तत् क्रियते' इति । उच्यते,—अनुवादस्वरूपत्वात्* अर्थवाद एष 'प्रजापतिं मनसा यजेत्' इत्यस्य विधेः । 'इह' पुनरुपांशुयाजे 'तच्छब्दस्य' 'मृदुत्वं'; तस्मान्न प्रजापतिः, अधिकृतानां मुख्योऽग्निः स्यादिति ॥

सू॰ विष्णुर्वा स्याद्धौत्राम्नानादमावास्याहविश्च स्यात् हौत्रस्य तत्र दर्शनात् ॥ ५३ ॥ (३य पू॰) ॥

भा॰ वाशब्दात् पक्षो निवर्त्त्यते । नैतदेवम्,—अग्निः स्यादिति,

---

* अनुवादस्वरूपत्वात् इति आदर्शपुस्तकपाठः ।

कथन्तर्हि?—'विष्णुः' देवता 'स्यात्', 'होत्राम्नानात्',—अमावास्यां प्रकृत्य वैष्णवं होत्रमाम्नायते,—'इदं विष्णुर्वि चक्रमे प्रतद्विष्णुः स्तवते वीर्येण' इति, तदेवमर्थवत् भवति, यदि विष्णुदेवत्य उपांशुयाजः; एवममावास्यायामाम्नानमर्थवत् भवति, यदि अमावास्यायामुपांशुयाजः; तस्मादमावास्यायामुपांशुयाजः स्यादिति॥

सू॰ अपि वा पौर्णमास्यां स्यात् प्रधानशब्दसंयोगात् गुणत्वान्मन्त्रो यथाप्रधानं स्यात्॥५४॥ (४र्थ पू॰)॥

भा॰ यदुक्तं विष्णुर्देवतेति तत् गम्यते, न त्वमावास्यायामुपांशुयाज इति। विधायको हि तस्य शब्दः पौर्णमास्याम्,—'आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन्' इति, तं मन्त्राम्नानं न शक्नोति अमावास्यायामाक्रष्टुम्; उपांशुयाजे मन्त्रस्य विधानात्, यत्रोपांशुयाजः तत्र मन्त्र इति गम्यते, न, यत्र मन्त्रस्तत्रोपांशुयाज इति, उपांशुयाजस्य हि मन्त्रो विधीयते, न मन्त्रस्योपांशुयाजः॥

सू॰ आनन्तर्य्यञ्च सान्नाय्यस्य पुरोडाशेन दर्शयति अमावास्याविकारे॥ ५५ ॥ (४र्थ पू॰यु॰)॥

भा॰ इतश्च न अमावास्यायामुपांशुयाजः, 'अमावास्याविकारे' हि साकंप्रस्थाय्ये सान्नाय्यस्यानन्तर्यं पुरोडाशेन दृश्यते। कथं?। 'आज्यभागाभ्यां प्रचर्याग्नेयेन च पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सहकुम्भीभिरभिक्रामन्नाह' इत्याग्नेयादानन्तर्यं सान्नाय्यस्य दर्शयति, न उपांशुयाजस्य; तस्मान्नामावास्यायामुपांशुयाज इति॥

सू० अग्नीषोमविधानात्तु पौर्णमास्यामुभयत्र विधीयते ॥ ५६ ॥ (५म पू०) ॥

भा० तुशब्दः पक्षं व्यावर्त्तयति। नैतदेवं,—पौर्णमास्यामेवोपांशुयाज इति; 'उभयत्र' स्यात्, देवताविकल्पश्च। कुतः?। अविशेषेण हि उपांशुयाजः श्रूयते,—'उपांशुयाजमन्तरा यजति' इति, यदेतत् 'आज्यस्यैव नौ उपांशु पौर्णमास्यां यजेरन्' इति, देवताविधानमेतत् पौर्णमास्यां; तस्मादग्नीषोमदेवत्यः पौर्णमास्यामुपांशुयाजः, मन्त्राम्नानात् वैष्णवोऽमावास्यायामिति देवताविकल्पः स्यात्॥

सू० प्रतिषिद्ध-विधानात् वा विष्णुः समानदेशः स्यात् ॥ ५७ ॥ (सि०) ॥

भा० न चैतदस्ति,—यदुक्तमुभयत्र उपांशुयाजः देवताविकल्पश्च—इति, किन्तर्हि पौर्णमास्यामेवोपांशुयाजस्तत्रैव च विष्ण्वाद्या देवताः इति। कुतः?। 'प्रतिषिद्ध-विधानात्'। किमिदं प्रतिषिद्ध-विधानात्? इति। अमावास्यां वर्जयित्वा पौर्णमास्यां विधानात् इति। कथम्?। 'आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन्' इति प्रकृत्य, समाम्नायते,—'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशु याजमन्तरा यजति' इति, पौर्णमास्यामिति गम्यते, तत्रैव चेदं वचनं 'विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वायाग्नीषोमौ उपांशु यष्टव्यावजामित्वाय' इति। तत्र पौर्णमास्यामेवोपांशुयाजस्तत्रैव च विष्ण्वाद्या देवता इति॥

सू० तथा चान्यार्थदर्शनम् ॥ ५८ ॥ (यु०१) ॥

भा० इतश्च न अमावास्यायामुपांशुयाजः। कुतः?। अन्यार्थो-ऽप्येतमर्थं दर्शयति। कथं?। 'चतुर्दश पौर्णमास्यामाहुतयो ह्रियन्ते, त्रयोदशामावास्यायाम्' इति चतुर्दश भवेयुः, त्रयोदशेति नोपपद्यते, तस्मान्नामावास्यायामुपांशुयाज इति ॥

सू० न चानङ्गं सकृच्छ्रुतावुभयत्र विधीयेतासम्बन्धात्॥ ॥ ५९ ॥ (यु०२) ॥

भा० इतश्च न अमावास्यायां, न हि 'सकृत्' श्रूयमाणम् 'अनङ्गम्' 'उभयत्र' भवति, अङ्गं हि प्रधानार्थत्वादुभयत्र स्यात्, प्रधानञ्चेदं, नाङ्गं, तस्मात् पौर्णमास्यां श्रूयमाणं नामावास्यायां भवेत्, 'असम्बन्धात्', न हि प्रधानं प्रधानेन सम्बन्धं याति इति ॥

सू० गुणानां च परार्थत्वात्, प्रवृत्तौ विधिलिङ्गानि दर्शयति ॥ ६० ॥ (यु०३) ॥

भा० 'गुणानां च परार्थत्वात्' प्रधानेषु 'प्रवृत्तौ विधिलिङ्गानि दर्शयति', न प्रधानानामपरार्थत्वात्। कथं?। 'अग्नुमन्तावाज्यभागौ यजति इति एकादश प्रयाजान् यजत्येकादशानुयाजान्' इति। तस्मादपि उपांशुयाजो नामावास्यायामिति ॥

सू० विकारे चाश्रुतित्वात् ॥ ६१ ॥ (यु०४) ॥

भा० अमावास्याविकारे च साकंप्रस्थाय्ये उपांशुयाजो न श्रूयते।

कथं?। 'आज्यभागाभ्यां प्रचर्याग्नेयेन च पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सहस्रुभीभिरभिक्रामन्नाह' इति आग्नेयादनन्तरं साम्नाय्यं दर्शयति, नोपांशुयाजं। तस्मादपि न अमावास्यायामुपांशुयाज इति॥ (१०।८।१७अ०)॥

---

एकपुरोडाशायामप्युपांशुयाजाधिकरणम्॥

सू० द्विपुरोडाशायां स्यादन्तरार्थत्वात्॥६२॥ (पू०)॥

भा० दर्शपूर्णमासयोरिदमामनन्ति, 'उपांशुयाजमन्तरा यजति' इति, तत्रायमर्थः समधिगतः, पौर्णमास्यामुपांशुयाजः, तत्र च विष्ण्वाद्या देवताः इति; अस्ति चोर्द्धं सोमात्, द्विपुरोडाशा पौर्णमासी; प्राक सोमात्, एकपुरोडाशा; तत्रायमर्थः सांशयिकः;—किं द्विपुरोडाशायामेव उपांशुयाजः, उत, द्विपुरोडाशायामेकपुरोडाशायाञ्च?—इति। किं प्राप्तं?—'द्विपुरोडाशायां स्यात्'। कुतः?। 'अन्तरार्थत्वात्',—अन्तरासंयोगेन हि श्रूयते 'उपांशुयाजमन्तरा यजति' इति प्राक् पुरोडाशसंकीर्त्तनात्, पुरोडाशौ अन्तरेति गम्यते, द्विपुरोडाशायामन्तरा शक्यं कर्त्तुं, न एकपुरोडाशायां, तत्र क्रियमाणम् अयथाश्रुतं स्यात्। तस्मात् द्विपुरोडाशायामेवेति॥

सू० अजामिकरणार्थत्वाच्च॥६३॥ (यु०)॥

भा० इतश्च द्विपुरोडाशायामेवेति। कुतः?। अजामिकरणार्थत्वमत्र श्रूयते,—'जामि वा एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशाबु-

पांशुयाजमन्तरा यजति। विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापति-रुपांशु यष्टव्योऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति, जामि सादृश्यमिति। पुरोडाशयोश्च सादृश्यदोष उच्यते,— 'जामि वा एतद् यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ', पुरोडाशं कृत्वा पुनरनूचीनः पुरोडाश एवेति, यत्र दोषस्तत्र दोषविघातार्थेन भवितव्यं; तस्मात् द्विपुरोडाशायामेवेति ॥

सू० तदर्थमिति चेन्न तत्प्रधानत्वात् ॥६४॥(आ०)॥

भा० इति चेत्पश्यसि,—तदर्थत्वात् अन्तरार्थत्वात् द्विपुरोडाशायामेव भविष्यति इति, तन्न, 'तत्प्रधानत्वात्',—पौर्णमासी प्रधानतः, अन्त-रार्थो गुणतः, उपांशुयाजः पौर्णमासस्यावयवो विधीयते, उपांशु-याजस्याप्यन्तरालं गुणः, एकपुरोडाशापि भवत्येव पौर्णमासी, तस्या-मुपांशुयाजः केन न स्यात्, अन्तरालं गुणोऽसम्भवान्न भविष्यति इति; तस्मादस्ति अन्तराले एकपुरोडाशायामुपांशुयाजः कर्त्तव्य इति ॥

सू० अशिष्टेन च सम्बन्धात् ॥ ६५ ॥ (यु०)॥

भा० 'अशिष्टेन च' अश्रुतेन अन्तरालार्थेन उपांशुयाजस्य सम्बन्धः कर्त्तव्यः स्यात् अन्तरालगुणक उपांशुयाज इति; न हि अन्तरालं गुणत्वेन विधीयमानं पश्यामः। तस्मात् एकपुरोडाशायामपि उपांशुयाजः कर्त्तव्यः इति ॥

सू० उत्पत्तेस्तु निवेशः स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमानत्वात् विधानादन्तरार्थस्य नैमित्तिकत्वात् तदभावेऽश्रुतौ स्यात् ॥ ६६ ॥ (आ०नि०)॥

भा० तुशब्दः पक्षं व्यावर्त्तयति। नैतदस्ति, गुणत्वेनान्तरालं न श्रूयते इति, उत्पत्तिवाक्येनैवोपांशुयाजोऽन्तराले निविशते, अन्तरालमस्य गुण उत्पत्तिवाक्येन श्रूयते,—'उपांशुयाजमन्तरा यजति' इति। तस्मात् अस्य 'गुणस्य' 'अनुपरोधेन' गुणी निविशेत, न एकपुरोडाशायां स्यात्, नैकपुरोडाशायामक्रियमाणोऽनर्थको भवति, अन्तरालार्थो हि द्विपुरोडाशायां विद्यते। 'तदभावे' अन्तरालार्थस्य अभावे, 'अश्रुतौ' यदि द्विपुरोडाशा न श्रूयेत, ततः स्यादेकपुरोडाशायामुपांशुयाजः, अस्ति त्ववकाशो* द्विपुरोडाशा पौर्णमासी; तस्मात् एकपुरोडाशायां न स्यादिति॥

सू० उभयोस्तु विधानात्॥ ६७॥ (सि०)॥

भा० तुशब्दः पक्षं व्यावर्त्तयति। 'उभयोः' पौर्णमास्योरुपांशुयाजः, एकपुरोडाशायामपि स्यादित्यर्थः। कुतः?। 'विधानात्',—विधीयते हि स एकपुरोडाशायामपि, सापि हि पौर्णमासी, 'आज्यस्यैव ना उपांशु पौर्णमास्यां यजन्' इति पौर्णमासीशब्द एकपुरोडाशां वर्जयन् उपरुध्येत; तस्मात् एकपुरोडाशायामपि स्यात्॥

सू० गुणानाञ्च परार्थत्वादुपवेषवद्यदेति स्यात्॥ ॥ ६८॥ (यु०१)॥

भा० गुणश्चान्तरालं प्रधानार्थं श्रूयते, उपांशुयाजार्थेन,-अन्तरालेन उपांशुयाजस्योपकर्त्तव्यमिति; नासौ एकपुरोडाशायामुपांशुयाजं निवर्त्तयितुमर्हति, पौर्णमास्यां श्रूयमाण उपांशुयाज एकपुरोडाशाया

* अस्ति त्ववकाशो इति क० सं० प्राचीनपुस्तकपाठः।

अपि पौर्णमासीत्वात् तत्र प्राप्नोति, अन्तराले च श्रुतत्वादन्तरालेऽपि प्राप्नोति; एकपुरोडाशायामन्तरालाभावात् न अन्तराले स्यात्; तस्मादन्तरालस्य गुणस्य प्राप्तं यदा पौर्णमासी तदेति स्यात्, 'उपवेषवत्,—यथा 'उपवेषेण कपालान्युपदधाति' इति, यदोपवेषस्तदा तेनेति गम्यते, एवमिहापि यदा अन्तरालं, तदा अन्तराले भविष्यति । तस्मात् एकपुरोडाशायामपि स्यादिति ॥

सू॰ अनपायश्च कालस्य लक्षणं हि पुरोडाशौ ॥ ॥ ६९ ॥ (आ॰नि॰) ॥

भा॰ उच्यते,—[ननु अन्तरालगुणक उपांशुयाजः श्रूयमाणोऽन्तरालाभावादुच्यमानोऽपि पौर्णमास्यां एकपुरोडाशायां वैगुण्यात् फलस्यासाधक इति न क्रियेत, न हि, पौर्णमासीविशेषे यत्रान्तरालमिति अन्तरालगुणता विधीयते, अविशेषेण हि द्विपुरोडाशायाम् एकपुरोडाशायां च तद्विधानं, तस्मात् एकपुरोडाशायां प्रयोजनाभावान्न करिष्यते इति। आह,-'एवं सति उपांशुयाजाभावादेकपुरोडाशा नैव कर्त्तव्या' । अत्रोच्यते,—नैष दोषः,—फलवती हि सा भविष्यति, यदि द्विपुरोडाशा सम्भविष्यति इति] । अत्रोच्यते,-यद्येकपुरोडाशायां वैगुण्यं उपांशुयाजस्य स्यात्, ततो न क्रियेत, न तु वैगुण्यमस्ति, न ह्यन्तरालं गुणतः श्रूयते, किन्तर्हि कालं लक्षयितुं, यौ पुरोडाशौ तयोर्मध्ये इति । कथं ?। अनूद्य हि तौ पुरोडाशौ एतद्विधीयते,—'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ उपांशुयाजमन्तरा यजति' इति, यौ तावनूदितौ यथा व्यवहितौ भवतः, तथोपांशुयाजः कर्त्तव्यः तस्मिन् काल इति गम्यते, 'अनपायश्च'

तस्य 'कालस्य' एकपुरोडाशायामपि। कथं?। यो हि द्वयोः पुरोडाशयोर्मध्य इति कालोऽवगम्यते, स एव पूर्वस्मादुत्तर इति; एवं चेत् यद्यप्येकपुरोडाशायां द्वौ पुरोडाशौ न स्तः, तथापि स पूर्वं आग्नेयोऽस्ति, तस्मादुत्तरः स एव कालः, योऽसावन्तरालेन लक्षितः; यथा, नागवेलायामागन्तव्यं, शङ्खवेलायामागन्तव्यं, पटहवेलायामागन्तव्यमिति, यस्मिन् ग्रामे न नागाः न शङ्खाः न पटहस्तस्मिन्नपि स एव कालः, तत्र हि आगमनं क्रियते; एवमिहापि द्रष्टव्यं। तस्मात् एकपुरोडाशायाम् उपांशुयाजः कर्त्तव्य इति॥

सू॰ प्रशंसार्थमजामित्वम्॥ ७०॥ (आ॰नि॰)॥

भा॰ अथ यदुक्तम्,-'अजामिकरणार्थत्वात्' इति,तत् परिहर्त्तव्यम्,-अत्रोच्यते, प्रशंसा एषा उपांशुयाजस्य, वैचित्र्येण, न त्वेतदेवास्य फलं विधीयते, यदजामित्वमिति। कुतः?। विहितस्य हि प्रयोजनं विधीयते। 'न चैवं सति उपांशुयाजो विहितः स्यात्' विधाने चार्थद्वयविधानं दोषः। न च, अजामिकरणं नाम किञ्चिदिष्टं फलं। तस्मात् प्रशंसैषा, यथोपस्तरणाभिधारणयोरमृतार्थत्वम्,—'अमृतं वा आज्यं मर्त्यं हविर्यदुपास्तृणात्यभिधारयत्यमृताहुतिमेवैनां करोति' इति। तस्मात् एकपुरोडाशायामप्युपांशुयाजः कर्त्तव्य एवेति॥ (१०।८।१८अ॰)॥

इति श्रीमच्छबरस्वामिकृतौ मीमांसाभाष्ये दशमस्याध्यायस्याष्टमः पादः समाप्तः॥०॥

---

# मीमांसा-दर्शने

## ११ अध्याये १ पादः।



आग्नेयादीनां सहितानां तन्त्रेण सर्वफलकत्वाधिकरणम्।

सू॰ प्रयोजनाभिसम्बन्धात् पृथक्सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥

भा॰ दशमेऽध्याये बाधाभ्युच्चयलक्षणं वृत्तम्; इदानीमेकादशे तन्त्रावापलक्षणं निर्वर्त्तयिष्यामः। तत्र यत्सकृत्कृतं बहूनामुपकरोति तत् तन्त्रमित्युच्यते, यथा, बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपः। यस्तु आवृत्त्या उपकरोति स आवापः। यथा तेषामेव ब्राह्मणानामनुलेपनम्। श्लोकमुदाहरन्ति,—

साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः।

एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके विधौ ॥ इति

साधारणं भवेत्तन्त्रमित्युक्तार्थं। 'परार्थे त्वप्रयोजकः' इति,—यः परार्थमुत्पन्नः तदर्थमेव चानुष्ठीयमानः परस्योपकरोति, स परः तस्याप्रयोजकः; यथा, पश्वालम्भो यागार्थमुत्पन्नस्तदर्थमेव चानुष्ठीयमानो लोहितसक्तत्कर्मणोरप्युपकरोतीति। 'एवमेव प्रसङ्गः स्यात्', अयं तु विशेषः,—'विद्यमाने स्वके विधौ' इति। यद्यप्यस्य अन्यो विधिर्विद्यते परविधिना तु कृतार्थत्वान्न क्रियते; यथा, प्रयाजाः पशोरपि चोदकेन प्राप्ताः पशुपुरोडाशस्यापि, पश्वर्था एव तु कृताः पशुपुरोडाशस्योपकुर्वन्तीति न पुनस्तदर्थं क्रियन्ते।

प्रकृतमिदानीमुच्यते, तन्त्रावापलक्षणं प्रतिज्ञातं, तदुच्यते,— दर्शपूर्णमासयोः प्रधानानि आग्नेयादीनि, तेषां स्वर्गः फलं श्रूयते,— 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। स किं तेषां तन्त्रेण भवति, उत भेदेन? इति। एवं चातुर्मास्यादिष्वपि द्रष्टव्यम्।

'ननु च नैवात्र स्वर्गः फलं श्रूयते,—स्वर्गकामपदेन तावत् पुरुषो ऽभिधीयते, यजेतेत्यनेनापि यागनिर्देशः, तयोर्वाक्येन सम्बन्धः, केनेदानीं फलमुच्यते?'। अनेनैव स्वर्गकामपदेनेत्याह। 'ननु पुरुषस्य अयं वक्ता'। न खलु कश्चित् पुरुषः स्वर्गकामो नामास्ति। 'ननु च यस्य स्वर्गे कामः स स्वर्गकाम इति'। एतदेव न जानीमः कस्य स्वर्गे काम इति, य एव हि स्वर्गकामः स एवास्वर्गकामो भवति इति। 'एवं तर्हि कालोपदेशोऽयं भवति,—यदा स्वर्गकामस्तदा यजेत इति'। अत्रापि न कश्चित् कालविशेषोऽस्ति, यस्मिन्नियमेन स्वर्गकामः स्यात्, सर्वेषु कालेषु सर्वे कामा अनियमेन उत्पद्यन्ते। तत्र न कश्चित् कालविशेषोऽनेन शक्यते व्यपदेष्टुं। 'एवं तर्हि नैवायं पुरुषोपदेशो नापि कालोपदेशः, किं खलु, फलकामो निमित्तं, स्वर्गविषये कामे उत्पन्ने यजेत इति, यथा कपाले नष्टे यजेत इति'। अस्य पक्षस्य सूत्रेणैव परिहार उक्तः,-"फलकामो निमित्तमिति चेत्" (६।२।८)। "न नित्यत्वात्"(६।२।१०) इति। नित्यानि अग्निहोत्रादीनि कर्माणि, तानि यदि निमित्ते विधीयन्ते, नित्यत्वमेषां विहन्येत। तत्र नित्यचोदना यावज्जीविकाद्या अपरुध्यन्ते,* लिङ्गानि

---

* उपरुध्यन्ते इति क॰ सं॰ पु॰ पाठः।

च 'अप वा एष स्वर्गाल्लोकात् च्यवते यो दर्शपूर्णमासयाजी सन् पौर्णमासीम् अमावास्यां वाऽतिपातयेत्' इत्येवमादीनि।

परिशेषात् फलसंयोग एवार्थं। 'कथं पुनरनेन शक्यते फलं विधातुं'। तदुच्यते,?'—'स्वर्गकामो यजेत' इति यदि वा स्वर्गकामो यागायोपदिश्यते यथा 'लोहितोष्णीषाः'; यदि वा यागः स्वर्गकामाय, यथा मलिनः स्नायात्, बुभुक्षितोऽश्नीयात्-इति। तत्र यदि स्वर्गकामः कर्म्मणे उपदिश्यते, उपदिष्टोऽपि न प्रवर्त्तेत, को हि परार्थं प्रयासमातिष्ठेत्? तथा कर्म्मचोदनाऽनर्थिकैव भवति; अथ यागः स्वर्गकामार्थः, ततोऽसौ पुरुषस्योपकरोति, तं पुरुषः स्वार्थेन करोति इति; तथा कर्म्मचोदना अर्थवती भवति। अपि च यागविधौ श्रुत्यर्थः परिगृहीतो भविष्यति, स्वर्गकामविधौ वाक्यार्थः। तस्माद्यागः स्वर्गकामस्योपकारकः। स्वर्गकामस्य अनेकपुत्रपशुग्रामान्नाद्यादिलाभकरः स यदि पुत्रान्नाद्यादीनामन्यतमं करोति, ततः स्वर्गकामशब्दोऽविवक्षितार्थः पुरुषमात्रवचनो भवति; तथा च आनर्थक्यमेव, अन्तरेणापि हि तद्वचनं पुरुषमात्रमाख्याताद्देव गम्यते। तस्माद् यागात् स्वर्गो भवति।

तत्रानेककर्म्मसन्निपाते दर्शपूर्णमासादिषु भवति संशयः,— किं तन्त्रमेषां फलम्, उत, भेदेन? इति। किं प्राप्तं?—भेदेन इति। किं कारणम्?। इमानि आग्नेयादीनि प्रधानानि परस्परानपेक्षाभिश्चोदनाभिः पृथग्भूतानि उत्पन्नानि पृथगेव फलमाकाङ्क्षन्ति। तत्सन्निधौ स्वर्गादि फलं श्रूयमाणं भेदेनाकाङ्क्षितत्वाद् भेदेनैव सम्बध्यते। तस्मात् प्रतिप्रधानं फलभेद इत्येवं प्राप्तम्।

एवं प्राप्ते इदमारभ्यते,—"प्रयोजनाभिसम्बन्धात् पृथक्त्वानां ततः

स्यादेककर्म्यमेकशब्दाभिसंयोगात्”—पृथग्भूतानामपि एतेषामाग्नेया-दीनां ‘ततः स्यादेककर्म्यं’। कुतः?। ‘प्रयोजनाभिसंयोगात्’,-प्रयोजनं फलं, तत् प्रति एषां समेतानां सम्बन्धात् संयोगादित्यर्थः। एककर्म्य-मिति, कर्म्मशब्देनात्र फलम् उच्यते, क्रियत इति; तत् येषामेकं, तानि एककर्म्माणि, तेषां भाव ऐककर्म्यम्,—ऐकफलमित्यर्थः। ‘कथं पुनर्ज्ञायते,समेतानामाग्नेयादीनां फलेन योगः इति?’। ‘एकशब्दाभि-संयोगात्’, य एषां समुदितानामेकः शब्दो वाचकः, तेन एतानि अभिधाय फलसम्बन्धः कृतः ‘दर्शपूर्णमासाभ्यां स्वर्गकामः’ इति। अतः समुदितेभ्यः फलं गम्यते, न भेदेन; यथा ग्रामेणोदपानः खेयः, ग्रामेण तड़ागः खेय इति, ग्रामशब्देन समुदायवचनेन संयुज्य कूपो विधीयमानः समुदितैः पुरुषैरेकः खन्यते, न प्रतिपुरुषं कूपभेदः; एवमिहापि॥

सू० शेषवद्वा प्रयोजनं प्रतिकर्म्म विभज्येत ॥ २ ॥ (आ०) ॥

भा० नायमेकान्तः,—यत् समुदायशब्देन संयोज्योच्यते, तत् समु-दितानामेव भवति इति, भेदेनापि किञ्चिद्भवति; यथा, गणाय स्नानं, गणायानुलेपनम् इति अनुलेपनादिशेषो गणशब्देन समुदाय-वचनेनापि संयोज्योक्तो न समुदायेन सम्बध्यते, केन तर्हि, समुदायि-भिः; प्रतिपुरुषं हि स्नानादि आवर्त्तते। अतः ‘शेषवद्वा’ फलं भिद्येत, कूपवद्वा तन्त्रं स्यात् इति अवैशेषिकोऽयं हेतुः समुदाय-शब्दसंयोगः; तस्मात् हेत्वन्तरं वक्तव्यं,—अनेन विशेष इति; सोऽयमुच्यते,—

सू० अविधानात्तु नैवं स्यात् ॥ ३ ॥ (सि०) ॥

भा० नाच यागमुद्दिश्य फलं विधीयते,—स्वर्गेण यागं कुर्य्यात्—इति, किन्तर्हि, फलमुद्दिश्य यागो विधीयते,—स्वर्गं यागेन कुर्य्यात्—इति। किं कारणं?। याच विधायिका विभक्तिः 'यजेत' इति, सा यागं श्रुत्या विदधाति, फलं वाक्येन विदध्यात्; न च श्रुत्यर्थे सम्भवति वाक्यार्थो ग्राह्यः, श्रुत्यर्थस्य मुख्यत्वात्। किं पुनः स्याद् यदि फलं विधीयते?। फले विधीयमाने यजत्यर्थोऽनूद्येत, न हि द्वयोर्विधीयमानयोः सम्बन्धोऽस्ति; अनुवादश्च सन्निहितानाम् आग्नेयादीनां स्यात्; तानि च परस्परानपेक्षाणि मिथो विभक्तानि उत्पन्नानि—इति विभागेनैव तैः फलं सम्बध्यते; अथ पुनः यजत्यर्थे विधीयमाने आग्नेयादयो यागाः शब्देन समुदायवचनेन फलनिर्वृत्तावुपादेयत्वेन चोद्यन्ते, चोदितानां समुदितत्वं गुणः सन्निधानविशेषात् यो गम्यते स विवक्षितो भवति, अविवक्षायां कारणाभावात्।

'यदि यागा विधीयन्ते, दर्शपूर्णमासशब्देन विशेष्टुं न शक्यन्ते, न हि विधीयमानस्य विशेषणं भवति, यत्कारणं विशेषणमप्यविधीयमानं न भवति, न च द्वयोर्विधीयमानयोः परस्परसम्बन्धो भवति'। किं पुनरच विशेषणेन कार्य्यं?—यावता रूपवतामाग्नेयादीनां सन्निधौ अरूपो 'दर्शपूर्णमासाभ्यां यजेत' इति यजतिशब्दः समुदायवचन इति। किमर्थं तर्हि दर्शपूर्णमासशब्दः?। अनर्थकश्च नित्यानुवादमाचं, यथा, 'इन्द्रेण देवेन सृष्टं', 'इडान्ता तिष्ठा सन्तिष्ठते', 'नानुयाजान् यजति' इति। अथ वा, वाक्यार्थस्यैवाच विधानं न्याय्यं, श्रुत्यर्थे हि विधीयमाने दर्शपूर्णमासशब्दः अनर्थक

एवापद्यते, वाक्यार्थे तु दर्शपूर्णमासशब्दो विशेषणेनार्थवान्। यजति-रपि भावनाविधानार्थं प्राप्तोऽपि पुनः श्रूयते; प्राप्तिश्च दर्शपूर्णमास-शब्दस्य यागवचनत्वात् इति न किञ्चिदनर्थकं। तस्मादेष पक्षो ज्यायान् ॥

सू० शेषस्य हि परार्थत्वाद्विधानात् प्रतिप्रधानभावः स्यात् ॥ ४ ॥ (आ०नि०) ॥

भा० यत्तु 'शेषवत्' इति, 'शेषस्य' अनुलेपनादेः परार्थेन विधानं पुरुषसंस्कारकत्वेन,—एवं दृष्टोऽर्थो भवति, अन्यथा अदृष्टं कल्पयि-तव्यं स्यात्, तत्र गणः पुरुषलक्षणार्थो भवति; शक्नोति च सम्बन्धात् पुरुषान् लक्षयितुं। अदृष्टं वा कल्प्यतां लक्षणा वेति दृष्टा लक्षणा कल्पयितुं न्याय्या, तस्मात् पुरुषलक्षणार्थो गणः, न च, लक्षणं कार्य्येण सम्बध्यते, किन्तर्हि लक्षितः; तद्यथा 'शुक्लवाससमानय' इति, यदा तु शुक्ले वाससी पुरुषलक्षणार्थम् उच्येते, न तदा आनयनेन सम्बध्येते इति; एवमिहापि न गणः कार्य्येण सम्बध्यते, किन्तु पुरुषा एव कार्य्येण सम्बध्यन्ते। तस्मादनुलेपनादि प्रतिप्रधानं भिद्यते ॥ (१११११अ०) ॥

---

अङ्गानामेककार्य्याधिकरणम् ॥

अङ्गेष्विदानीं चिन्ता,—किम् अङ्गानि सम्भूय कार्य्यं कुर्वन्ति, उत, भेदेन?—इति। तत्रेदमुच्यते,—

सू० अङ्गानान्तु शब्दभेदात् क्रतुवत् स्यात् फला-न्यत्वम् ॥ ५ ॥ (पू०) ॥

भा॰ यथा प्रधानानां समेतानामेकं फलं नैवमङ्गानां, 'अङ्गानां' पृथक् प्रयोजनं, अङ्गस्याङ्गस्य पृथक् फलं। किं कारणं?। 'शब्दभेदात्', चोदनाभेदादित्यर्थः; 'समिधो यजति', 'तनूनपातं यजति' इत्येवमादिभिः परस्परानपेक्षाभिश्चोदनाभिः पृथक्त्वेनाङ्गानि चोद्यन्ते, तानि पृथगेव प्रयोजनानि आकाङ्क्षन्ति, न साहित्येन, साहित्यस्यानुक्तत्वात्। अतस्तेषां पृथगेव प्रयोजनैरभिसम्बन्धो विज्ञायते, 'क्रतुवत्', यथा क्रतुषु पृथक्त्वेन चोदितेषु पृथगेव फलसम्बन्धो भवति ॥

सू॰ अर्थभेदस्तु तत्रार्थे ह्यैकार्थ्यादैककर्म्यम्॥६॥(सि॰)॥

भा॰ युक्तं, यत् क्रतुषु फलभेदः; शब्देन 'तत्र' भिन्नानि फलानि उक्तानि,—'सौर्य्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः', 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इति। 'इह' ऐकार्थ्यं,—सर्वेषामङ्गानाम् एकोऽर्थः प्रधानेषु उपकारः; उपकारापेक्षायां हि अङ्गानि श्रूयन्ते, तानि सर्वाणि एकार्थानि भवन्ति। 'नन्वेवं सति एकार्थत्वादेषां विकल्पः प्राप्नोति'। वक्ष्यते तत्परिहारः,—"विधेस्तु एकश्रुतित्वात्" (१७सू॰) इत्यत्र यथा विकल्पो न भवति। अत 'ऐकार्थ्यात्' अङ्गानामेकं कार्य्यम् इति ॥

सू॰ शब्दभेदान्नेति चेत् ॥ ७ ॥ (आ॰)॥

भा॰ 'अथ यदुक्तं,—चोदनाभेदादङ्गानामर्थभेदो न्याय्य इति, तत् परिहर्त्तव्यं'। परिहृतं तत् एकार्थत्वेन। 'न परिह्रियते, सर्वाणि च प्रधानस्योपकुर्य्युः भिन्नानि च कार्य्याणि कुर्य्युः, तद्यथा कारकाणि कर्त्रादीनि सर्वाणि तावत् क्रियाया उपकुर्वन्ति, अथ च प्रतिकारकं

कार्य्यभेदः'। इदं तर्हि परिहियते,—यदि समिदादिभिर्वाक्यैरङ्गानां प्रयोग उच्यते,—समिद्यजिः प्रयोक्तव्यः, तनूनपाद्यजिः प्रयोक्तव्य इति, ततः स्यात् प्रयोजनाकाङ्क्षा; सा च भवन्ती भेदेन स्यात्, न त्वत्र प्रयोग उच्यते, किन्तर्हि रूपमात्रमाख्यायते,—एवंलक्षणको याग इह भवति इति। तत् कस्य हेतोः?। प्रयोगवचनस्य प्रत्ययस्याभावात्, अन्येन च प्रयोगस्योक्तत्वात्। क पुनरेषां प्रयोग उक्तः?। उत्तरसूत्रे दर्शयिष्यामः। न चेदत्र प्रयोजनाकाङ्क्षा, कुतः प्रयोजनं, कुतो भेदः॥

सू० कर्म्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात् तदर्थत्वात्॥ ८॥ (आ०नि०)॥

भा० प्रधानानां 'प्रयोगे' उच्यमाने अङ्गानामपि 'ताच्छब्द्यं स्यात्' प्रयोगस्य,—तेनैव प्रधानप्रयोगवचनेनैव शब्देन अङ्गानामपि प्रयोग उच्यते, 'दर्शपूर्णमासाभ्यां यजेत' इति। कुतः?। 'कर्म्मार्थत्वात्', क्रियार्थत्वादित्यर्थः। फलस्य क्रियार्थौ दर्शपूर्णमासौ श्रूयेते,—'दर्शपूर्णमासाभ्यां स्वर्गं कुर्य्यात्' इति। तत्र आकाङ्क्षा भवति,—कथम्? इति। सा समिदादिभिश्चोदनाभिर्निवर्त्त्यते,—'समिधो यजति', 'तनूनपातं यजति' इत्येवम्—इति। तत् कस्य हेतोः?। 'तदर्थत्वात्',—तदर्था एताः समिदादिचोदनाः, तेनाकाङ्क्षितत्वात्, अफलत्वात्, फलवत्सन्निधानाच्च। सैषा दर्शपूर्णमासयोः फलं साधयतोः इतिकर्त्तव्यता, न च, इतिकर्त्तव्यतामन्तरेण कर्म्मचोदना अर्थवती भवति; तस्मात् सेतिकर्त्तव्यताकः कर्म्मणः प्रयोगश्चोद्यते। तथा च सिद्धमेतत् प्रधानप्रयोगवचनेनैव शब्देन अङ्गानां प्रयोगः चोद्यत इति, एवं च सति एकशब्दचोदितान्येव अङ्गानि। तत्र यथा

प्रधानानाम् एकशब्दाभिसंयोगात् फलैक्यम् एवमङ्गानामपीति ।

अत्राह,—न एतद्युक्तं। कुतः?।

सू० कर्तृविधेर्नानार्थत्वाद्गुणप्रधानेषु ॥ ९ ॥ (आ०)॥

भा० कर्त्तुर्यस्य प्रधाने विधिः 'दर्शपूर्णमासाभ्यां यजेत' इति, यस्य अङ्गेषु 'साङ्गाभ्याम्' इति, तयोः 'नानार्थत्वं',—प्रधानविधिः फलार्थः, अङ्गविधिः प्रधानार्थः । तत्र प्रधानानि फलं प्रति विधातव्यानि, अङ्गानि प्रति अनूद्यानि, न च विध्यनुवादौ युगपत् सम्भवतः। तस्मात् नैकेन वाक्येन प्रधानानि, तेषाञ्च इतिकर्त्तव्यता शक्या विधातुम्। अतो न प्रधानचोदनागृहीतानि अङ्गानि ॥

तत्राह,— नैतदयुक्तं, युक्तमेतत्। कुतः?।

सू० आरम्भस्य शब्दपूर्वत्वात् ॥ १० ॥ (आ०नि०)॥

भा० आरम्भो व्यापारः क्रियेत्यनर्थान्तरं । यागेन इह स्वर्गस्य क्रिया उच्यते,—'यजेत' यागेन स्वर्गं कुर्य्यात्,—स्वर्गार्थं व्याप्रियेत इत्यर्थः। इदं तु न ज्ञायते कोऽसौ व्यापारः? इति, तत्सन्निधौ च अन्वन्वाधानादि श्रूयते; तस्मिन् आकाङ्क्षितत्वात् सन्निधानाच्च एतद्भवति,—अयमस्मिन् व्यापारः, येन यागः स्वर्गं करोति इति; तस्मिन् विधीयमाने नास्ति वाक्यभेदः।

अथ वा, प्रधानानां फलं प्रति, अङ्गानाञ्च प्रधानानि प्रति, विधिरविरुद्धः। कथं कृत्वा?। दर्शपूर्णमासाभ्यां स्वर्गसाधनमपूर्वम् उच्यते, तस्य सविशेषस्य वचनं प्रयुज्यते; यथा, 'एतस्यैव रेवतीषु वारवन्तीयम् अग्निष्टोमसाम कृत्वा पशुकामो यजेत' इति। तस्मात्

प्रधानप्रयोगवचनेनैव अङ्गानां प्रयोगो विधीयत इति ॥ (११।१।२अ०) ॥

--- ---

दर्शपूर्णमासादिकाम्यकर्मणां सर्व्वाङ्गोपसंहाराधिकरणम् ॥

इदं विचार्य्यते,—किम् अग्निहोत्रादीनां कर्म्मणामेकदेशाङ्गयुक्तानामपि प्रयोगः, अथ वा सर्वाङ्गोपसंहारेणैव? इति। अथ तत्र किं दृष्टं?। "सर्वशक्तौ प्रवृत्तिः स्यात्" (६।३।१सू०) इति। तत्र नैयमिकमारम्भं प्रति चिन्ता कृता,—'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यनया चोदनया योऽयं यावज्जीविकः प्रयोगनियम उच्यते, किं तत्र सर्वाङ्गोपसंहारः, उत, न? इति। इह इदानीं फलार्थे प्रयोगे चिन्ता,—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनया चोदनया योऽयं स्वर्गार्थ आरम्भः, तत्रापि किं नैयमिकवदेव प्रयोगः, उत, सर्वाङ्गोपसंहारः? इति। किं तावत् प्राप्तम्,—

सू० एकेनापि समाप्येत कृतार्थत्वाद्यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत् स्यात् ॥ ११ ॥ (पू०) ॥

भा० एकदेशेनापि अङ्गानां, 'समाप्येत', कर्म्म प्रयुज्येतेत्यर्थः। कुतः?। 'कृतार्थत्वात्',—या असौ, दर्शपूर्णमासाभ्यां स्वर्गार्थं व्याप्रियेत—इत्युक्ते कथं व्यापरितव्यमित्याकाङ्क्षा, सा एकेनापि अङ्गेन कृतार्था भवति, 'समिधो यजति'—एवं व्यापरितव्यं, तथा अङ्गद्वयेन अङ्गत्रयेण च; यो यावन्ति अङ्गानि करिष्यति, स तावत्कृतमुपकारं प्राप्स्यति; यथा 'क्रत्वन्तरेषु' सौर्य्यार्य्यमणप्राजापत्यनैर्ऋतादिषु यो

यावन्ति कर्माणि करोति, स तावद्भ्यः फलमश्नुते; न तु तत्सन्निधाना-विशेषात् सर्वाण्येवाङ्गानि प्राप्यन्ते। 'प्राप्तेषु चोत्तरावत् स्यात्',— तद्यथा, 'वाग्यतः तिस्रो दोहयित्वा विसृष्टवाग् अनन्वारभ्य तूष्णी-मुत्तरा दोहयति' इति, यस्य यावत्यो गावः स तावतीर्दोहयति इति, तावतीष्वपि कृतार्थ उत्तराशब्दः; एवमिहापि यो यावन्ति अङ्गानि उत्सहते स तावन्ति करिष्यति॥

सू० फलाभावान्नेति चेत्॥ १२॥ (आ०)॥

भा० इति चेत् भवान् पश्यति,—एकदेशाङ्गयुक्तानामनियतानां कर्मणां प्रयोग इति। तन्न। कुतः?। 'फलाभावात्',—यावत्कृतं स्वर्गकामस्य, स्वर्गकामेनेदं कर्त्तव्यमिति, तस्याकृत्स्नेनाकुर्वतः फला-भावः स्यात्, सर्वं चेदं श्रुतं 'स्वर्गकामो यजेत' इत्युक्त्वा सर्वस्य अन्वाधानादेः कर्मकलापस्याम्नानात्॥

सू० न, कर्मसंयोगात् प्रयोजनमशब्ददोषं स्यात्॥
॥ १३॥ (आ० नि०)॥

भा० नैतदेवम्, अङ्गवैकल्ये फलाभाव इति। कुतः?। 'कर्म-संयोगात्',—प्रधानकर्मणा हि फलं संयुक्तं,—'दर्शपूर्णमासाभ्यां स्वर्ग-कामः' इति, न अङ्गैः; अङ्गानि तु तदाकाङ्क्षया गृह्यन्ते, सा चाकाङ्क्षा एकेनापि कृतार्था भवतीत्युक्तं। एवं चेत् 'प्रयोजनम्' अङ्गकृत उपकारः, फलं च स्वर्गादि 'अशब्ददोषं स्यात्', दर्शपूर्णमासयोः फलार्थत्वे 'दर्शपूर्णमासाभ्यां स्वर्गकामः' इत्येवंशब्दो न दुष्येत्,

तत्सन्निधौ चाङ्गानां विधायका ये समिदादयः, ते च तदुपकारित्वे न दुष्येयुः। तस्मान्नाङ्गाभावे फलाभावः॥

सू० ऐकशब्दादिति चेत् ॥ १४ ॥ (आ०) ॥

भा० इति चेत् पश्यसि,—दर्शपूर्णमासाभ्यां तत् फलं न समिदादिभ्य इति, नैतद्युक्तं। किं कारणं?। 'ऐकशब्द्यात्',—एकः शब्द उपदेशकः प्रयोगस्य दर्शपूर्णमासयोः, समिदादीनाञ्च,—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति, तेन च फलसम्बन्धः कृतः; तच्च कुतः एतत्?—दर्शपूर्णमासतः फलं, नेतरेभ्यः इति॥

सू० नार्थपृथक्त्वात् समत्वादगुणत्वम् ॥ १५ ॥ (आ० नि०) ॥

भा० न सर्वाणि फलसंयुक्तानि इति, किन्तर्हि दर्शपूर्णमासावेव। कथं ज्ञायते?। दर्शपूर्णमासाभ्यां स्वर्गं कुर्य्यादिति दर्शपूर्णमासयोरेव स्वर्गं प्रति करणत्वं श्रूयते, न समिदादीनाम्; आकाङ्क्षया हि तेषां ग्रहणं, सा च कथंभावस्याकाङ्क्षा कथं कुर्य्यादिति, न करणस्य, तस्य निर्द्दिष्टत्वात्,—'दर्शपूर्णमासाभ्याम्' इति; तस्मात् न समिदादीनां फलेन संयोगः। यदि च संयुज्येरन्, समानि आग्नेयादिभिः स्युः, 'समत्वात्' च 'अगुणत्वम्', तत्र यदुच्यते,—एकदेशाङ्गयुक्तानामपि प्रयोग इति, तदेव नास्ति॥

ये तु 'ऐककर्म्यात्' इति सूत्रं पठन्ति, तेषामयमर्थ इति चेत् पश्यसि, प्रधानानामङ्गवत् तथा अङ्गानि क्रियन्ते इति तस्मादैककर्म्यं भवतु, एकमेवाङ्गं प्रयुज्यताम्, एकेनापि प्रधानमङ्गवद्भवति॥

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA,**

AND OBTAINABLE FROM

**THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.**

**57 AND 59, LUDGATE HILL, LONDON, E. C.**

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Chaitanya-chandrodaya, Nátaka, 3 fasci. .......... Rs. | 1 | 14 |
| Srauta Sútra, As'valáyana, 11 fasci. .......... | 6 | 14 |
| ———— Láṭyáyana, 9 fasci, .......... | 5 | 10 |
| S'ankara Vijaya, 3 fasci. .......... | 1 | 14 |
| Dasa-rupa, 3 fasci. .......... | 1 | 14 |
| Kaushitaki Bráhmanopanishad, 2 fasci. .......... | 1 | 4 |
| Sánkhya-sára, 1 fasci. .......... | 0 | 10 |
| Lalita-vistara, 6 fasci. .......... | 3 | 12 |
| " " Translation, 1 fasci. .......... | 1 | 0 |
| Taittiríya Bráhmaṇa, 24 fasci. .......... | 15 | 0 |
| Taittiriya Sañhitá, 31 fasci. .......... | 19 | 6 |
| Taittiriya Araṇyaka, 11 fasci. .......... | 6 | 14 |
| Maitri Upanishad, 3 fasci. .......... | 1 | 14 |
| As'valáyana Grihya Sútra, 4 fasci. .......... | 2 | 3 |
| Mimáñsá Darsana, 15 fasci. .......... | 9 | 6 |
| Táṇḍya Bráhmaṇa, 19 fasci. .......... | 11 | 14 |
| Gopatha Bráhmaṇa, 2 fasci. .......... | 1 | 10 |
| Atharvana Upanishads, 5 fasci. .......... | 3 | 2 |
| Agni Puráṇa, 14 fasci. .......... | 8 | 12 |
| Sáma Veda Sañhitá, 37 fasci. .......... | 23 | 12 |
| Gopála Tápaní, 1 fasci. .......... | 0 | 10 |
| Nrisiñha Tápaní, 3 fasci. .......... | 1 | 14 |
| Chaturvarga Chintámaṇi, 36 fasci. .......... | 22 | 8 |
| Gobhilíya Grihya Sútra, 12 fasci. .......... | 7 | 8 |
| Piñgala Chhandaḥ Sútra, 3 fasci. .......... | 1 | 14 |
| Taittiríya Prátis'ákhiya, 3 fasci. .......... | 1 | 14 |
| Prithiráj Rásu, by Chand Bardai, 4 fasci. .......... | 2 | 8 |
| " " Translation, Part II, 1 fasci. .......... | 1 | 0 |
| Rájatarangiṇí, .......... | 4 | 0 |
| Mahábhárata, vols. III. and IV., .......... | 40 | 0 |
| Puráṇa Sangraha, .......... | 1 | 0 |
| Páli Grammar, 2 fasci. .......... | 1 | 4 |
| Aitareya Araṇyaka of the Rig Veda, 5 fasci. .......... | 3 | 2 |
| Chhandogya Upanishad, English, 2 fasci. .......... | 1 | 4 |
| Sáñkhya Aphorisms, English, 2 fasci. .......... | 1 | 4 |
| Sáhitya Darpaṇa, English, 4 fasci. .......... | 2 | 8 |
| Brahma Sútra, English, .......... | 1 | 0 |
| Kátantra, 6 fasci. .......... | 6 | 0 |
| Kámandakíya Nítisára, 4 fasci. (Fasci. 1, out of stock.) .......... | 2 | 8 |
| Bhámatí, 8 fasci. .......... | 5 | 0 |
| Aphorisms of Sáṇḍalya, English, Fasci. 1., .......... | 0 | 10 |
| Vayu Purána, 6 fasci. .......... | 3 | 12 |
| Kathá Sarit Ságara, English Translation, 7 Fasci. .......... | 7 | 0 |

Prakrit Lakshanam, fasci. 1., Rs. 1 [illegible]
Nirukta, 2 fasci 1 [illegible]
Vishnusmriti, fasci. 1., 0 [illegible]
Srauta Sutra of Apastamba, fasci. 1., 0 [illegible]

## *Arabic & Persian Series.*

Dictionary of Arabic Technical Terms. 20 fasci., complete, Rs. [illegible]
Risálah-i-Shamsiyah, (Appendix to Do. Do.), 1 [illegible]
Fihrist Ṭúsí, 4 fasci. [illegible]
Nukhbat-ul-Fikr, [illegible]
Futúh-ul-Shám, Wáqidí, 9 fasci. [illegible]
Futúh-ul-Shám, Azadí, 4 fasci. [illegible]
Magházi of Wáqidí, 5 fasci. [illegible]
Iṣábah, 28 fasci., with supplement, [illegible]
Tárikh-i-Firúz Sháhí, 7 fasci. [illegible]
Tárikh-i-Baihaqí, complete in 9 fasci. [illegible]
Muntakhab-ut-Tawárikh, vols. I. II. and III., complete in 15 fasci. [illegible]
Wis o Rámín, 5 fasci. [illegible]
Iqbálnámah-i-Jahángirí, complete in 3 fasci. 1 [illegible]
'Alamgirnámah, 13 fasci., with index, [illegible]
Pádsháhnámah, 19 fasci., with index, 11 [illegible]
Muntakhab-ul-Lubáb, by Kháfí Khán, 19 fasci., with index, 12 [illegible]
Áín-i-Akbarí, Persian text, 4to., 22 fasci. [illegible]
Áín-i-Akbarí, English translation by H. Blochmann, M. A., vol. I, [illegible]
Farhang-i-Rashídí, 14 fasci., complete, [illegible]
Nizámí's Khiradnámah-i-Iskandarí, 2 fasci. complete, [illegible]
Akbarnámah, 17 fasci. with Index, [illegible]
Maáṣir-i-'Alamgírí, by Muhammad Sáqí, complete, 6 fasci., with index, [illegible]
Haft Ásmán, history of the Persian Masnawí, 1 [illegible]
Ṭabaqát-i-Náçirí, English translation, by Raverty, 10 fasci. [illegible]
Tabaqát-i-Náçirí, Persian text, 5 fasci. [illegible]
History of the Caliphs (English Translation), 6 fasci. [illegible]

## MISCELLANEOUS.

Journal of the Asiatic Society of Bengal from vols. XII to XX, 1843-51, to Subscribers at Re. 1 per number and to non-subscribers at Rs. 1-8 per number; vols. XXIV, XXVI, XXVII, 1855, 1857-58, and vols. XXX, XXXIII to XLIX, 1861, 1864-80, to Subscribers at 1-8 per number and to non-subscribers at Rs. 2 per number.

Asiatic Researches, vols. VI. to XI. and vols. XIII. XVII. XIX. and XX. each, Rs. 10 [illegible]
Do. Do. Index, [illegible]
Catalogue of Fossil Vertebrata, [illegible]
——— of Arabic and Persian Manuscripts, 1 [illegible]
Tibetan Dictionary, 10? [illegible]
——— Grammar, [illegible]
Notices of Sanskrit Manuscripts, 14 fasci. 14? [illegible]
Istiláhát-i-Súfiyah. Edited by Dr. A. Sprenger, 8vo. 1 [illegible]
Jawámi' ul-'ilm ir-riyází, 168 pages with 17 plates, 4to. [illegible]
Aborigines of India, by B. H. Hodgson, [illegible]
Examination and Analysis of the Mackenzie Manuscripts, by the Rev. W. Taylor, [illegible]
Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis, 1 [illegible]
'Ináyah, a Commentary on the Hidáyah, Vols. II. IV., 16? [illegible]
Analysis of the Sher Chin, by Alexander Csoma de Kőrös, [illegible]
Khazánat-ul-'ilm, 4 [illegible]
Sharáyat-ul-Islám, 4 [illegible]
Anís-ul-Musharrihín, 4 [illegible]
Catalogue Raisonné of the Society's Sanskrit MSS. Part I, Grammar, 3 [illegible]
Moore and Hewitson's Descriptions of New Indian Lepidoptera, Part I, with 3 Coloured Plates, 6 [illegible]

# BIBLIOTHECA INDICA;

A

## COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

New Series, No. 510.





# मीमांसादर्शनम् ।

## श्रीशवरस्वामिकृतभाष्यसहितम् ।

## उत्तरार्द्धम् ॥

# THE MI'MA'ṄSA' DARS'ANA,

WITH THE COMMENTARY OF

SAVARA SVÁMIN.

EDITED BY

Mahes'achandra Nyáyaratna.

FASCICULUS XVII.

CALCUTTA:

PRINTED BY J. W. THOMAS, AT THE BAPTIST MISSION PRESS.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1884.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA.**

AND OBTAINABLE FROM

THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.

57 AND 59, LUDGATE HILL, LONDON, E. C.

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | | |
|---|---|---|---|
| Átharvaṇa Upanishads, (Sanskrit) Fasc. I—V @ /10/ each .. | Rs. | 3 | 2 |
| Áśvaláyana Gṛihya Sútra, (Sans.) Fasc. I—IV @ /10/ each | .. | 2 | 8 |
| Agni Puráṇa, (Sans.) Fasc. I—XIV @ /10/ each .. | .. | 8 | 12 |
| Aitareya Áraṇyaka of the Rig Veda, (Sans.) Fasc. I—V @ /10/ each | .. | 3 | 2 |
| Aphorisms of Śáṇḍilya, (English) Fasc. I .. | .. | 0 | 10 |
| Aphorisms of the Vedánta, (Sans.) Fasc. III—XIII @ /10/ each | .. | 6 | 14 |
| Brahma Sútras, (English) Fasc. I .. .. .. | .. | 1 | 0 |
| Bhámatí, (Sans.) Fasc. I—VIII @ /10/ each .. .. | .. | 5 | 0 |
| Bṛihad Áraṇyaka Upanishad, (Sans.) Fasc. IV, VI, VII & IX @ /10/ each | | 2 | 8 |
| Ditto (English) Fasc. II—III @ /10/ each .. | .. | 1 | 4 |
| Bṛihat Saṃhitá, (Sans.) Fasc. I—III, V—VII @ /10/ each | .. | 3 | 12 |
| Chaitanya-Chandrodaya Náṭaka, (Sans.) Fasc. II—III @ /10/ each | .. | 1 | 4 |
| Chaturvarga Chintámaṇi, (Sans.) Vols. I, Fasc. 1—11; II, 1—25; III, 1—7, @ /10/ each Fasc. .. .. .. | .. | 27 | 8 |
| Chhándogya Upanishad, (English) Fasc. II .. .. | .. | 0 | 10 |
| Daśa Rúpa, (Sans.) Fasc. I—III @ /10/ each .. .. | .. | 1 | 14 |
| Gopatha Bráhmaṇa, (Sans. & Eng.) Fasc. I and II @ /10/ each | .. | 1 | 4 |
| Gopála Tápaní, (Sans.) Fasc. I .. .. .. | .. | 0 | 10 |
| Gobhilíya Gṛihya Sútra, (Sans.) Fasc. I—XII @ /10/ each .. | .. | 7 | 8 |
| Hindu Astronomy, (English) Fasc. I—III @ /10/ each .. | .. | 1 | 14 |

*(Continued on third page of cover.)*

सू॰ नार्थपृथक्त्वात् समत्वादगुणत्वम् ॥ १५ ॥ (आ॰नि॰) ॥

भा॰ नैतदेवं। कस्मात्?। 'अर्थपृथक्त्वात्',—अर्थपृथक्त्वं भवति,—उपकारपृथक्त्वम्,—एकेनाङ्गेनार्थवत्तायामल्प उपकारः, बहुभिर्महान्। कथं ज्ञायते?। 'समत्वात् अगुणत्वम्',—यद्येकेन बहुभिश्च सम उपकारः स्यात्, तत्र एकस्यैवाङ्गत्वं भवेत्, अन्येषाम् 'अगुणत्वं' स्यात्, अनङ्गत्वमित्यर्थः; तत्र बहूनामाम्नानमनर्थकं स्यात्। न चैषां विकल्प इत्युक्तं* "विधेस्त्वेकश्रुतित्वात्" इत्यत्र। तस्मादङ्गभूयस्त्वे फलभूयस्त्वमिति ॥

सू॰ विधेस्त्वेकश्रुतित्वादपर्य्यायविधानात् नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाप्राप्तं स्वशब्दार्थो निवीतवत् स्यात् सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ ॥ (सि॰) ॥

भा॰ न त्वेतदेवम्,—एकदेशेनाप्यङ्गानां प्रयोग इति, कथन्तर्हि, सर्वाङ्गोपसंहारेण। कुतः?। 'विधेः' 'एकश्रुतित्वात्',—एकेन शब्देनाङ्गानां प्रयोगो विधीयते 'दर्शपूर्णमासाभ्यां यजेत' इति, सर्वापेक्षया स्वयुक्तं; सा तु अपेक्षा कृत्स्ने वा अन्वाधानादिव्यापारे तदेकदेशे वा; तत्रैकदेशापेक्षा न युक्ता। कस्मात्?। 'अपर्य्यायविधानात्',—इमानि

---

* 'विधेस्त्वेकश्रुतित्वादित्यत्र विकल्पं परिहरिष्याम' इति तन्त्ररत्नधृतो वार्त्तिक-पाठः।

अङ्गानि न पर्य्यायेण विधीयन्ते,—कदाचित् समिधो यजति, कदाचित् तनूनपातमिति, कथन्तर्हि, 'नित्यवद्' यथाभूतानि च श्रुतानि तथाभूतानि अपेक्षया अभिसम्बध्यन्ते। अथोच्येत,— 'नित्यवच्छ्रुतानामपि सताम् एकदेशः अपेक्षिष्यते'—इति। नैतद्युक्तं। कुतः?। 'अर्थेन युगपत्प्राप्तेः',—अर्थेन प्रधानोपकारेण, खले-कपोतवत् युगपत् सन्निपतन्ति अङ्गानि, तत्र न गृह्यते विशेषः,— इदं प्राप्यते, इदं न इति, अतः सर्वाणि प्राप्यन्ते। 'यथाप्राप्तं' च 'स्वशब्दार्थो निवीतवद्',—यथा 'निवीता ऋत्विजः प्रचरन्ति' इति ऋत्विगविशेषात् सर्वेषां च सन्निधानात्सर्वे ऋत्विजो निवीता भवन्ति, एवमिहापि 'सर्वप्रयोगे प्रवृत्तिः स्यात्' ॥

सू० तथा कर्म्मोपदेशः स्यात् ॥ १७ ॥ (यु०) ॥

भा० तथा च कृत्वा 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदश अमावास्यायाम्' इत्याहुतिसंख्या पाक्षिकी न भविष्यति ॥

सू० क्रत्वन्तरेषु पुनर्वचनम् ॥ १८ ॥ (पू० यु० नि० १) ॥

भा० तत्र यदुक्तं,—'यथा क्रत्वन्तरेषु'—इति, युक्तं, यथा 'क्रत्वन्तरेषु' पार्थक्यं,'सौर्य्यञ्चरुन्निर्वपेद् ब्रह्मवर्चसकामः'इत्युक्त्वा पुनरुच्यते 'ऐन्द्राग्नम् एकादशकपालं निर्वपेत् प्रजाकामः' इति। किमतः?। अतस्तेषां परस्परानपेक्षाणां कार्य्यं, न सम्भूयेति गम्यते, परिसमाप्ते हि पूर्वस्य विधाने, उत्तरः पृथक्त्वेन विधीयते; अथेह 'विधेस्त्वेकश्रुतित्वात्' इत्यनेन न्यायेन सम्भूय-कार्य्यमङ्गानां इष्टं; तस्मात् वैषम्यं क्रतुभिः ॥

सू० उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात् स्वदोहे यथाकामी प्रतीयेत ॥ १९ ॥ (पू०यु०नि०२) ॥

भा० *'प्राप्तेषु चोत्तरावत्स्यात्' इति यदुक्तं, युक्तं, यत्, 'उत्तरासु' यावत्त्वं दोहनम् 'अश्रुतित्वात्', नात्रोत्तराणां दोहनं विधीयते, किन्तर्हि, अनूद्यते। किं कारणं?। 'विशेषाणां' वाग्विसर्जनादीनां विधाने कृतार्थं तद्वाक्यं न उत्तराणां दोहनं विधातुमुत्सहते, विधीयमाने अर्थद्वये भिद्येत वाक्यं। अनुवादश्च प्राप्तस्यार्थस्य भवति। अर्थाच्च यावत्त्वं दोहनं प्राप्तम्, अर्थादस्ता न दोह्याः। स्तास्तु सर्वाः कथं दोह्याः?। उपरिष्टादेतद्वक्ष्यामः,—"तथा पयःप्रतिषेधः कुमाराणाम्" (११।१।४८सू०) इत्यत्र। तस्मात् 'यथाकामी प्रतीयेत', —यस्य यावत्यो गावः स तावतीर्दोहयति† ॥ (११।१।३अ०) ॥

---

काम्यकर्म्मणां भूयोऽभ्यासाधिकरणम् ॥

काम्येषु कर्म्मसु चिन्ता,—किं काम्यं कर्म्म सकृदेव प्रयोक्तव्यम् अथ वा फलस्य भूयस्त्वमिच्छता भूयोऽभ्यसितव्यम्?—इति। किं प्राप्तम्?,—

सू० कर्म्मण्यारम्भभाव्यत्वात् कृषिवत् प्रत्यारम्भं फलानि स्युः ॥ २० ॥ (सि०) ॥

भा० काम्ये 'कर्म्मणि' प्रतिप्रयोगं फलभेदः, 'आरम्भभाव्यत्वात्',— कर्म्मप्रयोगेण फलं भाव्यते। कथं ज्ञायते?। प्राक् तावत्कर्म्मणः, फलं

---

* यथा 'प्राप्तेषु' इति क० सं० पु० पाठः।

† "वार्त्तिककारस्तु पूर्व्वाधिकरणस्य वैयर्थ्यं मन्यमानोऽस्मिन्नेवाधिकरणेऽकार्षं यथामाम" इति न्यायमाला।

नास्ति, यदि भवेत्, कर्मानर्थकं स्यात्, कर्मोत्तरकाले च भवतीति श्रुतितोऽवगम्यते, यच, प्राक् कर्मणो, नास्ति, कर्मोत्तरकाले च भवति, तत् तेन कर्मणा भाव्यते; 'कृषिवत्',– यथा कर्षणेन धान्यम्। यद्येतद्भाव्यते, पुनःपुनरपि धान्यवदेतद्भविष्यति ॥

सू॰ अधिकारश्च सर्वेषां कार्य्यत्वादुपपद्यते विशेषः ॥ ॥ २१ ॥ (यु॰) ॥

भा॰ एवं च कृत्वा, 'सर्वेषां' कर्मणां पुनःपुनः-क्रियमाणानाम् अधिकारो भविष्यति, तत्रेमानि दर्शनानि उपपत्स्यन्ते;–'तेषां ये प्रथमं यजेरन् तेषां गौरतिराचो ये द्वितीयन्तेषामायुः' इति; 'प्रथमं यजेरन्' 'द्वितीयं यजेरन्' एतदभ्यासे सति; तस्मात् यावदिच्छमभ्यासः॥

सू॰ सकृत्तु स्यात् कृतार्थत्वादङ्गवत् ॥ २२ ॥ (पू॰) ॥

भा॰ 'सकृत्' एव तु काम्यं कर्म प्रयोक्तव्यं। कुतः?। 'कृतार्थत्वात्', सकृत्कृतेन कृतस्चोदनार्थः, न च, कृते पुनःकर्त्तव्यमस्ति। कः पुनश्चोदनार्थः?। यागस्य कर्त्तुः फलं, होमस्य कर्त्तुः फलमिति। कथं कृत्वा?। तदुच्यते,–इह 'यजेत' 'जुहुयात्' इति धातुना क्रियोच्यते, प्रत्ययेन कर्त्ता, तयोः कर्त्ता प्रधानभूतः, उपसर्ज्जनभूता क्रिया, प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः; अनुप्रयोगश्च कर्तृप्राधान्ये एव भवति,–पचति देवदत्त इति; तेन होतुर्यष्टुश्च फलमुच्यते। सकृद्धुतेन सकृदिष्टेन च असौ होता यष्टा च जातः; तत्र द्वितीयादिप्रयोगो ऽनर्थकः स्यात्, 'कृतार्थत्वादङ्गवत्',–तत् यथा, प्रधानस्य साङ्गस्योप-

पाद्नाय अङ्गानि क्रियन्ते, सकृत्तेनैव तदुपपादितमिति नाभ्यस्यन्ते, तद्वत् ॥

सू॰ शब्दार्थश्च तथा लोके ॥ २३ ॥ (यु॰) ॥

भा॰ 'लोके' अपि 'तथा' एव शब्दार्थो भवति, 'काष्ठान्याहर' इत्युक्तः सकृदाहरति न पुनःपुनः ॥

सू॰ अपि वा संप्रयोगे यथाकामी प्रतीयेताश्रुतित्वाद् विधिषु वचनानि स्युः ॥ २४ ॥ (पू॰ नि॰) ॥

भा॰ 'अपि वा' नैवं स्यात्,—अस्मिन्नर्थिनः कर्म्मणस्य 'संप्रयोगे' सकृदेवार्थी कर्म्मप्रयोगे वर्त्तेत—इति; कथन्तर्हि, 'यथाकामी प्रतीयेत',—सकृदा बहुकृत्वो वा; फलभूमार्थी बहुकृत्वः, सन्तुष्टः सकृत्। कुतः?। 'अश्रुतित्वात्',—नात्र यष्टुर्हातुः फलं श्रूयते। यत्तु, प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः इति, कर्म्मनिमित्तेषु नामपदेषु पाचको लावक इत्येवमादिषु; आख्याते तु न कर्त्ता न क्रिया प्रधानतः; किन्तर्हि, भावप्रधानमाख्यातं भावनां कस्यापि ब्रूते, भावयुक्तस्य साधनग्रामस्यापेक्षितत्वात्,—यजेत, केन? किमर्थं? कथम्? इति, कर्तृप्राधान्ये कार्य्याभावान्न साधनाकाङ्क्षया भवितव्यं, न हि भवति,—पाचकः, केन? किमर्थं? कथम्? इति। भावना च फलस्योच्यते, न क्रियायाः, तृतीयानिर्द्देशात्,—'उद्भिदा यजेत' 'बलभिदा यजेत' इति, भाव्यत्वे हि द्वितीयया निरदेक्ष्यत। स्वर्गस्त्वीप्सितः, कामसंयोगात् 'स्वर्गकामः' इति। तदेतदेवमापद्यते,—स्वर्गकामो यागेन

स्वर्गं भावयेदिति, यच्च भाव्यते, तत् व्यक्तम् असत्, सतो हि भावो नोपपद्यते, असच्चेत् कर्म्मणा भाव्यते, पुनःपुनरपि भावयिष्यति, कृषिवत्। तस्मात् फलार्थिना काम्यं यावदिच्छम् अभ्यसितव्यमिति। यदि च नियोगतः सकृदेव कर्त्तव्यं भवेत्, ततः 'तेषां ये प्रथमं यजेरन्' इत्येवमादिषु गवादिविधिषु वचनान्येतानि कल्प्येरन्,—'द्वितीयं यजेरन्' इति; तथा च वाक्यानि भिद्येरन्,—'ये च द्वितीयं यजेरन् तेषां गौरतिरात्रः' इति।

सू० ऐकशब्द्यात्तथाङ्गेषु ॥ २५ ॥ (पू०यु०नि०१) ॥

भा० यत्तु अङ्गवदिति, युक्तं, यत् अङ्गानां सकृत्प्रयोगः, 'ऐकशब्द्यात्',—एकस्तत्र अङ्गानां प्रधानानाञ्चोपदेशकः शब्दः, स च अङ्गानि अपेक्षया गृह्णाति इत्युक्तं। सा चापेक्षा सकृदेवेषु अङ्गेषु भवति भूतार्था। तस्मात् तत्र पुनःपुनःक्रियाया हेतुर्नास्ति; इह तु असतः फलस्य कर्म्म उत्पादकं, तस्य प्रतिप्रयोगम् अन्यस्यान्यस्य उत्पत्तिरविरुद्धा-इत्येवमपदिष्टो हेतुः। तस्मात् विषमत्वमङ्गैः ॥

सू० लोके कर्म्मार्थलक्षणम् ॥ २६ ॥ (पू०यु०नि०२) ॥

भा० यच्च लोकवदिति, 'लोके' 'कर्म्म' अर्थप्रधानं, कार्य्यवशात् सकृदुक्तोऽसकृदाहरति, असकृदुक्तः सकृत्, आहरेत्युक्तो नाहरति; नचेह शब्दलक्षणे कर्म्मणि यथाशब्दार्थं प्रवृत्तिः। तस्माल्लोकवदिति अदृष्टान्तः ॥ (१।१।१४अ०) ॥

---

अवघातादीनां तण्डुलनिर्वृत्तेरभ्यासाधिकरणम् ॥

सू० क्रियाणामर्थशेषत्वात् प्रत्यक्षोऽतस्तन्निर्वृत्त्याऽपवर्गः स्यात् ॥ २७ ॥

भा० 'व्रीहीनवहन्ति, तण्डुलान् पिनष्टि'* इत्येवमादीनां दृष्टप्रयोजनानां 'क्रियाणाम्' 'आ तण्डुलनिर्वृत्तेः, आ च पिष्टनिर्वृत्तेः'† प्रयोगः स्यात्। कुतः?। एतासां प्रयोगे 'प्रत्यक्षो'ऽर्थो निर्वर्त्त्यते,— तण्डुलाः पिष्टानि च; तैश्चेह प्रयोजनं, पुरोडाशस्य कार्य्यत्वात्। तस्मादेतासां तदर्थ एव प्रयोगो विज्ञायते। यदि सकृदेव मुषलस्य उद्यमननिपातने कृत्वा उत्सृज्येत, उपलाया वा प्रकर्षणापकर्षणे, यदेषां कार्य्यं तन्नैव निवर्त्तेत। अत आसां 'तन्निर्वृत्त्याऽपवर्गः स्यात्', आ तण्डुलनिर्वृत्तेः, आ च पिष्टनिर्वृत्तेरभ्यास इति ॥ (११।१।५अ०)॥

---

अदृष्टफलस्य अवघातादेः सकृदनुष्ठानाधिकरणम्।

सू० धर्म्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात् ॥२८॥

भा० यत्र तु दृष्टं कार्य्यं न निर्वर्त्तते,—यथा चित्याम् 'उदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति, अत्र तदुपदधाति' इति; तत्र तण्डुलनिर्वृत्त्या नास्ति प्रयोजनं, तण्डुलकार्य्यस्य पुरोडाशादेरचोदितत्वात्, तस्मात् तत्र सकृत् क्रियया कृतः शब्दार्थ इति न स्यादभ्यासः।

---

* तण्डुलान् पिष्टान् पिनष्टि इति क० सं० पु० पाठः।

† आ च पिष्टनिर्वृत्तेः इति पाठो क० सं० पुस्तके नास्ति।

येषान्तु तण्डुलफल एव मुसलस्योद्यमननिपातनकर्म्मणि अवहन्तिशब्दः प्रवर्त्तते इत्युपगमः, तेषां आ तण्डुलनिर्वृत्तेरेवाभ्यासः प्राप्नोति, न तु सन्द एवाभ्युपगमः; यत्कारणं, विनापि तण्डुलैः, प्रयोगो दृश्यते,—'कषायमवहन्ति, किण्वमवहन्ति' इति। न चासौ गौणः प्रयोगः, विशेषाभावात्। अवयवप्रसिद्ध्या चावघातमात्रवचन एव प्रतीयते। न च, समुदायोऽर्थान्तरे प्रसिद्धः। तण्डुलव्यापारस्य तु प्रायोवृत्तेस्तत्र प्रयोगप्राचुर्य्यं यतोऽयं व्यामोहः॥ (११।१।६ अ०)॥

---

प्रयाजादीनामभ्यासस्य अदृष्टार्थाधिकरणम्।

प्रयाजादीन् उदाहृत्य चिन्त्यते,-किं सकृत्प्रयोग एषाम्, उत, अश्रुताभ्यासोऽपि कर्त्तव्यः? इति। तत्र "धर्म्ममात्रे त्वदर्शनात् शब्दार्थेनापवर्गः स्यात्" इत्यनेन न्यायेन सकृत्प्रयोगे प्राप्ते एवमुच्यते,—

सू० क्रतुवद्वानुमानेनाभ्यस्ते फलभूमा स्यात् ॥ २९ ॥ (पू०) ॥

भा० अभ्यासः कार्य्यः। कुतः?। यतोऽभ्यासे 'फलभूमा स्यात्'। कथं ज्ञायते?। 'अनुमानेन'। किं तदनुमानं?। यत् प्राक् अङ्गप्रयोगात्, प्रधानोपकारो नासीत्, ऊर्द्धं ततो भवति; तेन विज्ञायते,—नूनमङ्गेन क्रियते इति; क्रियते चेत्, पुनःपुनरपि करिष्यते; 'क्रतुवत्',—तद्यथा, कर्म्मसु सौर्य्यादिषु, फलं कर्म्मणा क्रियते इति कर्म्माभ्यासे फलभूयस्त्वम्, एवमिहापि॥

सू॰ सकृद्वा कारणैकत्वात् ॥ ३० ॥ (सि॰) ॥

भा॰ 'सकृद्वा' अङ्गं प्रयोक्तव्यं, नाभ्यस्या। कुतः?। 'कारणैकत्वात्',—एकं कारणमङ्गानां प्रधानेषु उपकारः। कः पुनरसौ?। येन प्रधानानि फलं ददति; तच्चेतत् सकृत्प्रयुक्तेनाङ्गेन कृतं, जातानि प्रधानानि फलवन्तीति पुनरङ्गस्याप्रयोगः; अथ न कृतं, सुतरामप्रयोगः, येन सकृत्कृतेन नोपकृतं, स पुनःक्रियमाणः उपकरिष्यतीति का आशा ॥

सू॰ परिमाणञ्चानियमे न स्यात् ॥ ३१ ॥ (यु॰) ॥

भा॰ यदि चाऽनियमः,—सकृदसकृद्वा प्रयोगः; ततः 'चतुर्दश पौर्णमास्यामाहुतयो ह्रियन्ते, त्रयोदशामावास्यायाम्' इति योऽयं नित्यवदाहुतिपरिमाणानुवादः, स 'न स्यात्'; भवन् पाक्षिकः कल्पेत, तथास्य रूपं बाध्येत; तस्मादनभ्यासः ॥

सू॰ फलस्यारम्भनिर्वृत्तेः क्रतुषु स्यात् फलान्यत्वम् ॥
॥ ३२ ॥ (पू॰यु॰नि॰) ॥

भा॰ अस्तु,-क्रतुवदिति,युक्तं,-यत्क्रतुषु अभ्यासः,'फलस्यारम्भनिष्पत्तेः',*-कर्मारम्भेण तत्र फलं निष्पद्यते, आरम्भान्तरेणापरं निष्पत्स्यत इति। अङ्गस्य पुनः उक्तपरिमाणं फलं प्रधानानां फलवत्तासम्पादनं, तच्चेत् सकृत्कृतेन कृतं, न भूयः-क्रियाऽस्तीति, एवमपदिष्टो हेतुः। तस्मादनुपन्यासः ॥

---

* निर्वृत्तेः इति पाठो यत्नुपितः।

सू॰ अर्थवांस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात् प्रधाने च क्रियार्थत्वादनियमः स्यात् ॥ ३३ ॥ (आ॰) ॥

भा॰ यदुक्तं,—सकृत्कृतेनाङ्गेन कृतत्वात् अर्थस्य, अनर्थकोऽभ्यासः—इति, अत्र ब्रूमः,—'अर्थवांस्तु' 'अभ्यासः' अङ्गयामस्य, 'न' अनर्थकोऽभ्यासः। कथङ्कृत्वा?। 'एकत्वादभ्यासः स्यादनर्थकः',—यदि एकमेवार्थमभ्यस्यमानमप्यङ्गं कुर्य्यात्, तस्य अभ्यासः अनर्थकः स्यात्,–'यथा भोजनम् एकस्मिन्' कालेऽभ्यस्यमानमेकं फलं तृप्तिं करोतीति नाभ्यस्यते; अथेह 'अर्थस्य अपरिमाणत्वम्,—इयन्तमुपकारं करोति अङ्गमिति न ज्ञायते। 'ननु यावता प्रधानं फलवत् भवति तावत् करोति इति गम्यते'। सत्यमेवं, किन्तु 'प्रधाने' 'क्रियार्थत्वादनियमः स्यात्',—प्रधानस्य फलक्रियार्थमङ्गं, तत्तु प्रधानफलमपरिमितं, तत् अङ्गोपकारस्य भूयस्त्वे भूयो भविष्यति, अल्पत्वे अल्पम्; अभ्यासे चासंभवं भूयानुपकारः स्यात्, कार्य्यत्वात्तस्य, तस्मादनियमः स्यात्,—सकृदा प्रयोगोऽभ्यासो वेति ॥

सू॰ पृथक्त्वाद्विधितः परिमाणं स्यात् ॥ ३४ ॥ आ॰स॰॥

भा॰ यत्तु,—आकृतिसंख्या विरुध्यते इति, 'पृथक्त्वात्' उपकारस्य, अभ्यासे न्यायप्राप्तेऽयमाकृतिसंख्यानुवादः स्यात्, स 'विधितः' 'स्यात्', आकृतिविधीनभिप्रेत्य, चतुर्दश पौर्णमास्यामाकृतिविधयः त्रयोदशामावास्यायाम्—इति; न ह्याकृतिसंख्या युज्येत, आकृतिविधिसंख्या तु लक्षणया उपपद्यते ॥

सू॰ अनभ्यासो वा प्रयोगवचनैकत्वात्सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात् क्रियार्थत्वात् ॥ ॥ ३५ ॥(आ॰नि॰) ॥

भा॰ 'अनभ्यासो वा' अङ्गानां । कुतः ? । 'प्रयोगवचनैकत्वात्',— एकः प्रयोगवचनोऽङ्गानां प्रधानानां च, तस्यैकत्वात् 'सर्वस्य युगपत्' शासनम्,—अनेन कर्म्मणा साङ्गेन यजेत इति, सकृतकृतैस्साङ्गैस्तत्साङ्गं जातमिति न पुनः-क्रियायां हेतुरस्ति । 'ननूपकारभूयस्त्वं भविष्यति'। यद्यङ्गानि अदृष्टमुपकारं कुर्य्युस्ततस्तदभ्यासे उपकारभूयस्त्वमनुमीयेत, दृष्टमेव तु अर्थमङ्गानि कुर्वन्ति प्रधानस्याङ्गवत्तां; सा चाभ्यासेऽपि तावत्येवाङ्गवत्ता, सा चेह फलसम्बद्धा,—साङ्गेन यजेत इति नाङ्गानि, अङ्गानि तत्सम्पादनेन अर्थवन्ति ।

नन्वेतदयुक्तमिव, यदा हि प्रयाजाः, न तदा प्रधानयजिरपूर्वं वा, यदा च यजिरपूर्वं वा, न तदा प्रयाजाः, तदेवमदृष्टरहिते समिदादिमात्रे सति अङ्गवत्तैव नास्ति, कुतः उपकारः ?। अपि च यदि यजिमात्रमेवाङ्गेषु नापूर्वमस्ति, ततः सोमाङ्गभूतानामिष्टिपशुबन्धानां चोदक एव नास्ति, असति ह्यपूर्वे इतिकर्त्तव्यताकाङ्क्षा नास्ति, यजतेः प्रज्ञातेतिकर्त्तव्यतत्वात्, इतिकर्त्तव्यतां चोदको नातिदिशेत्, तच्चैतानि दर्शनानि नोपपद्येरन्,—'तस्यैकमतं प्रयाजानुयाजाः नव समिष्टयजूंषि जुहोति प्रहृत्य परिधीन् जुहोति हारियोजनम्' इति । तस्मादियमन्या व्याख्या,—अनभ्यासो वाङ्गानां प्रयोगवचनैकत्वात्,— एकः प्रयोगवचनोऽङ्गानां प्रधानानां च, तस्यैकत्वात् सर्वस्याङ्ग-

प्रधानकलापस्य युगपच्चारणं, प्रधानानामनभ्यासः। कस्य हेतोः?। सकृत्कृतैः प्रधानैः कृतः श्रुत्यर्थो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति, कृते श्रुत्यर्थे यच्छास्त्रविहितं फलं तल्लब्धमिति न पुनःक्रियायां हेतुरस्ति; एवं अङ्गेष्वपि सकृत्कृतेषु यदङ्गानां प्रापकं शास्त्रं तस्यार्थः कृतः, ततस्तस्मिन् कृते यच्छास्त्राधिगतमङ्गफलं तल्लब्धमिदानीमित्यवगन्तव्यं; तथा च सति अभ्यासोऽनर्थकः। यत्तु,—फलभूयस्त्वं भविष्यति इति, तदयुक्तं,—दर्शपूर्णमासयोर्यत् फलं, तद्भावनायामङ्गोपकारः उपयुज्यते, नापूर्वस्य फलस्योत्पत्तौ, यद्यपूर्वं फलमङ्गैरुत्पाद्येत, अङ्गफलमेव तत्स्यात्, नचाङ्गानि फलवन्ति, प्रधानानां स्वकार्यं साधयतामदृष्ट उपकारस्तैः क्रियते, सकृदेतैस्साधितः कृतः; तस्मान्नाङ्गावृत्तौ फलभूयस्त्वमस्ति ॥

सू० अभ्यासो वा छेदनसम्मार्गावदानेषु वचनात् सकृत्त्वस्य ॥ ३६ ॥ (आ०) ॥

भा० 'अभ्यासो वा' अङ्गानां। कुतः?। पितृयज्ञे श्रूयते,— 'सकृदाच्छिन्नं बर्हिर्भवति' इति, तथा अनुयाजे 'सकृत् परिधीन् सम्मार्ष्टि' इति, स्विष्टकृति च 'उत्तरार्द्धात् सकृदवद्यति' इति, तत् यदि असकृदङ्गानां प्रयोगः, तत एतानि वचनानि उपपद्यन्ते। तस्मादभ्यासः ॥

सू० अनभ्यासस्तु वाच्यत्वात् ॥ ३७ ॥ (आ०नि०) ॥

भा० 'अनभ्यासस्तु' अङ्गानां पूर्वोक्तेन न्यायेन। यत्तु,—छेदनादिषु वचनात् सकृत्त्ववचनादभ्यासो विज्ञायते—इति; अत्र ब्रूमः,—

यद्यप्यनभ्यासः, तथापि छेदनादिषु वाच्यं सकृत्त्वं, दर्शपूर्णमासयोः 'असकृदाच्छिन्नं बर्हिर्भवति' इति वचनात् तत्प्रकृतित्वात् पितृयज्ञेऽप्यसकृत् प्राप्तं; तथा-प्राप्ते सकृत्त्वं वाच्यम्। एवं प्रयाजेषु त्रिःसम्मार्ग उक्तः, सोऽनुयाजेषु पुनरावर्त्तते, तत्रापि त्रित्वे प्राप्ते सकृत्त्वं विधातव्यं। तथा, 'द्विर्हविषोऽवद्यति' इत्यविशेषेणोक्ते स्विष्टकृत्यपि द्वित्वं प्राप्तं, तत्र सकृत्त्वं विधीयते। तस्माच्छेदनादिषु सकृद्वचनात् नान्यत्राभ्यासो विज्ञातुं न्याय्य इति ॥ (११।१।७अ०) ॥

---

'कपिञ्जलान्' इति बहुवचनस्य त्रित्वपरत्वाधिकरणम्।
(कपिञ्जलाधिकरणम्, कपिञ्जलन्यायः) ॥

'वसन्ताय कपिञ्जलानालभते' इति श्रूयते। तत्र विचार्यते, किं तत्र त्रयश्चत्वारः पञ्च वा विकल्पेनालब्धव्याः, अथ वा त्रय एव? इति। किं प्राप्तम्?—

**सू० बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३८ ॥ (पू०) ॥**

भा० विकल्पेनालब्धव्याः। कस्मात्?। 'सर्वप्राप्तेः',—सर्वे एते संख्याविशेषाः बहुवचनेन प्राप्यन्ते, सर्वे तस्य वाच्याः, सर्वत्र प्रयोगात् न च समुच्चयेन सम्भवन्ति असम्भवत्वात्; तस्मात् 'विकल्पः'।

'नन्वेवं सत्येकस्य शब्दस्यानेकार्थता आश्रिता भवति, न चैष न्यायः'। उच्यते, सत्यमेवम्, अगत्या आश्रीयते। 'यदि अगत्याकृतौ आश्रीयते, सत्याकृतौ नाश्रयितव्या, अस्ति त्वियङ्गतिः,—यत् त्रित्वं बहुवचनस्यार्थः स्यात्, तदेवान्यच्चतुरादिष्वपि वर्त्तते, सर्वेषु तेषु त्रित्वमस्तीति'। नैतद्युक्तं, यदि बहुवचनस्य त्रित्वमर्थः स्यात्, ततः

'चत्वारो ब्राह्मणाः' इति सामानाधिकरण्यं नोपपद्येत, ब्राह्मणा इत्यस्य चयोऽर्थः, चत्वार इत्यस्य चत्वारः, तयोः सामानाधिकरण्यं न प्राप्नोति, न हि भवति चत्वारस्त्रय इति, एवं सर्वत्र ।

'अथ लक्षणया भविष्यति, यथा न्यग्रोधः क्षेत्रमिति, चित्वं हि चतुष्ट्वादीनि साहचर्यात् शक्नोति लक्षयितुं'। सिध्यति, लक्षणा तु आश्रिता भवति। 'किं क्रियताम्, अगत्या आश्रीयते'। सत्याकृतौ नाश्रयितव्या, अस्ति चेयकृतिः,-यद्बहुत्वं बहुवचनस्यार्थः स्यात् ,सर्वेऽपि ते बहव इति श्रुत्यैव सामानाधिकरण्यं। 'यदि बहुत्वं विज्ञायेत, किं तत् बहुत्वम्? इति'। उच्यते, बहुत्वं वृद्धिः उपचयः आधिक्य-मित्यर्थः। 'कथं कृत्वा ?'। बंहतिरयं वृद्ध्यर्थः, तस्यौणादिक उकार-प्रत्ययः 'बंहेर्नलोपश्च इति*, तस्य रूपं बह्विति, बहु वृद्धम् अधिक-मित्यर्थः। सर्वे चैते त्र्यादयोऽधिकास्तस्मात् सर्वे बहुशब्दवाच्याः ।

'नन्वापेक्षिकमेतद्बहु अधिकमिति, यदेव हि बहु, तदेवान्यदपेक्ष्य अबहु भवति'। सत्यमेवं, यत्तु यदपेक्ष्य बहु, न तत् तदेवापेक्ष्य अबहु; यथा,'उत्तराः कुरवः', दक्षिणान् कुरूनपेक्ष्य उत्तरा इत्युच्यन्ते, न च, ततोऽन्ये उत्तरा देशा न सन्ति, अथ च नियतापेक्षत्वात् उत्तरत्वं न जहति । एवं त्रिप्रभृतयो द्वित्वमपेक्ष्य बहुत्वं लभन्ते, न च ते कदाचिदबहवः। 'कथं पुनर्ज्ञायते, द्वित्वापेक्षं त्रिप्रभृतीनां बहुत्वमिति ?'। उच्यते, अपेक्षा तावत्समानजातीयेषु भवति, यथा, 'बलवान् देवदत्तः' इति, न हस्तिनं सिंहं वा अपेक्ष्य भवति, किन्तर्हि समानजातीयान् पुरुषानपेक्ष्य; एवं संख्यापि संख्यामेवापेक्ष्य बहुत्वं

---

* "लङ्घिबंह्योर्नलोपश्च" इति तु सिद्धान्तकौमुद्यां १ पा० २९ उणादिसूत्रम् ॥

लब्धुमर्हति। नचैकत्वं तावन्नापेक्षते, द्वयोर्बहुवचनस्यादर्शनात्, त्र्यादिषु च सर्वेषु दृश्यते, ततो विज्ञायते,—द्वित्वापेक्षमिति, तच्च बहुवचनेनोपलभ्यते। कुतः?। तद्भावे भावात्, तदभावेऽभावात्,—तद्भावे त्रित्वादिषु भवति, तदभावे च द्वयोरेकस्मिंश्च न भवति। एवं बहुवचनमिति समाख्या अन्वर्था भवति। अभियुक्तवचनञ्च "बहुषु बहुवचनम् (पा॰१।४।२१सू॰)" इति, यदि त्रित्वं बहुवचनस्यार्थः स्यात्, त्रिषु बहुवचनमित्येव तद् ब्रूयात् लाघवादसन्देहाच्च। तस्माद्द्वित्वमपेक्ष्यैते बहवः; अतोऽवस्थितं त्र्यादीनां बहुत्वम्; एवञ्च सति नैकः शब्दोऽनेकार्थो भवति। सर्वेषां च बहुत्वान्न कश्चिल्लक्षणया प्रयोगः।

'अथोच्यते,—त्रिषु निरुपपदं प्रयुज्यते, चतुरादिषु तु सोपपदं,—'चत्वारो ब्राह्मणाः' इति'। तच्च मिथ्या, त्रिष्वपि सोपपदं प्रयुज्यते, यथा, 'त्रयो लोकाः' 'त्रयो वेदाः' इति। यदि च निरुपपदं त्रित्वं प्रत्याययेत्, ततो 'वसन्ताय कपिञ्जलान्'—इत्युक्ते विचार एवायं न प्रवर्त्तेत; यथा अत्रैव न विचार्य्यते,—किं कपिञ्जला आलब्धव्याः, उत मयूराः कपोता वा? इति; कस्य हेतोः?—यतः कपिञ्जलशब्दस्य न मयूराः कपोता वा वाच्याः। इहापि यदि बहुवचनस्य त्रित्वमेव वाच्यं स्यात् नेतराः संख्याः, पूर्ववद्विचार एवायं न स्यात्॥

सू॰ दृष्टः प्रयोग इति चेत्॥ ३९॥ (आ॰)॥

भा॰ अथोच्येत,—दृष्टो बहुवचनस्य प्रयोगश्चतुरादिषु 'चत्वारो ब्राह्मणाः' इति; ततो विचार इति॥

सू॰ तथेह ॥ ४० ॥ (आ॰नि॰) ॥

भा॰ 'इह' अपि कपिञ्जलशब्दस्य दृष्टः प्रयोगः कपोते मयूरे च,—महान् कपोत उच्यते—'कपिञ्जलोऽयं न कपोतः' इति, तथा श्लक्ष्णो मयूरः 'कपिञ्जलोऽयं न मयूरः' इति ।

सू॰ भक्त्येति चेत् ॥ ४१ ॥ (आ॰) ॥

भा॰ आह,—'भक्त्या' तत्र कपिञ्जलशब्दः प्रयुज्यते, न च, भाक्ते प्रयोगे शब्दार्थसंज्ञा भवति ॥

सू॰ तथेतरस्मिन् ॥ ४२ ॥ (नि॰) ॥

भा॰ इतरस्मिन्नपि 'चत्वारो ब्राह्मणाः' इति लक्षणया प्रयुज्यते इत्युक्तं, न च, लक्षणाप्रयोगे शब्दार्थसंज्ञा भवति । अपि च, प्रातिपदिकार्थस्य या संख्या, सा वचनेनाभिधीयते, यथा, 'ब्राह्मणाः' इति, प्रातिपदिकार्थ एव वा, यथा, 'द्वौ', 'एकः' इति; न च, त्रित्वं प्रातिपदिकस्य अर्थः, न तत्संख्या इति, तस्मात् 'चत्वारः' इति बहुवचनं न प्राप्नोति । 'अथोच्येत,—अस्ति चतुर्षु अवयवभूतं त्रित्वं, तदपेक्षं बहुवचनम्'—इति । द्वित्वमपि तत्रास्ति, एकत्वञ्च, काममनेनैव द्विवचनमेकवचनञ्चोत्पद्येत; तस्मान्न त्रित्वयोगाच्चतुरादिषु बहुवचनप्रयोगः, बहुत्वादेव तेषां बहुवचनम्; अतः सर्वे आद्यः परार्धपर्य्यन्ता बहुवचनस्यार्थः; सर्वे चेदर्थः, 'कपिञ्जलानालभते' इति सर्वे प्राप्यन्ते; तस्माद्विकल्पः ॥

सू॰ प्रथमं वा नियम्येत कारणादतिक्रमः स्यात् ॥
॥ ४३ ॥ (सि॰) ॥

भा॰ 'प्रथमं वा' बहुत्वं त्रित्वं 'नियम्येत' । किंकारणं ? । न हि,

कश्चिच्चतुर उपाददानो न त्रीननुपादत्ते, यत्कारणम्, अनुगतास्त्रयश्चतुर्षु, त्रिषु चोपात्तेषु कृतः शब्दार्थः, 'बहूनालभेत' इति श्रुतं, आलब्धाश्च बहवः। एवं सति 'कारणादतिक्रमः स्यात्'-यदि च यथाश्रुतानुपादाने किञ्चिदन्यत् कारणं त्रित्वातिक्रमे स्यात्, ततोऽतिक्रमः, न तदस्ति ; तस्मात् त्रित्वं नियम्येत ।

'ननु फलभूयस्त्वं कारणं भविष्यति'। नैतदस्ति, यत्र बहवः कल्पाः श्रूयन्ते, तेषां कश्चिल्लघुः, कश्चिद्गुरुः, तत्र गुरोः कल्पस्यानुष्ठानाद्याग-सामर्थ्यात्तदनुष्ठानात् फलभूयस्त्वमनुमीयते, यथा, 'एका देया, षड्देया, द्वादश देयाः, चतुर्विंशतिर्देया' इति; इह तु एक एव कल्पो बहूनामालम्भः, स त्रिभिश्चतुरादिभिस्तुल्यः; अतस्तत्र यो लघुमुत्सृज्य गुरुकल्पमातिष्ठेत, तस्य फलभूयस्त्वं न भवितुमर्हति, श्रुत्यर्थाविशेषात् । यथा, 'पशुमालभेत' इति श्रुते यो महान्तं महार्घं वा पशुमालभेत, न तस्य फलभूयस्त्वं भवति, यस्तु मांसीयन् शिष्टमतिक्रमेत्, स, यदि तावद्वैदिकीषु हिंसासु प्रत्यवायः, ततः प्रत्यवेयात्; अथाप्रत्यवायस्तथापि शिष्टविगर्हणञ्च लभेत,—कृते श्रुत्यर्थे मांसीयन् पशूनहन्ति इति । तस्मात् त्रयः कपिञ्जला आलब्धव्याः ॥

सू॰ तथा चान्यार्थदर्शनम् ॥ ४४ ॥ (यु॰१) ॥

भा॰ अन्यार्थोऽपि चैतमर्थं दर्शयति, यथान्याय उपदिष्टः; यथा, 'कृष्णा याम्या, अवलिप्ता रौद्रा, नभोरूपाः पार्ज्जन्याः, तेषामैन्द्राग्नो दशमः' इति, यदि च त्रय एते त्रिकाः, एवं नियोगत ऐन्द्राग्नो दशमः सम्पद्यते, इतरथा पाक्षिकः स्यात् । तस्मात् त्रित्वनियमः ॥

सू० प्रकृत्या च पूर्ववत्तदासत्तेः ॥ ४५ ॥ (यु०२) ॥

भा० 'प्रकृत्या' अग्नीषोमीयेण एकत्वं प्राप्यते, तस्यासत्तिर्भविष्यति चित्वे उपादीयमाने, इतरथा विप्रकर्षः स्यात्। इदञ्चापि लिङ्गं,—गृहमेधीये श्रूयते,—'ओदनानुद्धरति' इति, तत्र 'मध्यमस्य' इति त्रयाणां निरुपपदं भवति, अन्यत्र सोपपदं,—'पञ्चानां मध्यमः, अष्टानां मध्यमः' इति ॥ (११।१।८अ०) ॥

---

'उत्तरा दोहयति' इत्यत्र सर्व्वासां गवां दोहनविधानाधिकरणम्।

सू० उत्तरासु न* यावत्त्वमपूर्वत्वात् ॥ ४६ ॥ (पू०) ॥

भा० साम्नाय्ये दोहनं प्रकृत्य श्रूयते,—'वाग्यतस्तिष्ठन्नो दोहयित्वा विसृष्टवागनन्वारभ्योत्तरा दोहयति' इति। किमयं विधिः, अनुवादः?—इति। किं प्राप्तम्?—अपूर्वार्थत्वाद्विधिरिति, अनुवादो ह्यनर्थकः स्यात्। इति प्राप्ते उच्यते,—

सू० यावत्त्वं वान्यविधानेनानुवादः स्यात् ॥ ४७ ॥
॥ (सि०) ॥

भा० अनुवादः स्यात्, नायं विधिः,—'उत्तरा दोहयति' इति, अन्योऽत्र विधिः,—'विसृष्टवागनन्वारभ्य' इति, यद्ययमपि विधिः स्यात्, वाक्यं भिद्येत,—'उत्तरा दोहयति, तांश्चानन्वारभ्य'—इति॥ अथ कुतः प्राप्ते अनुवादः?,—

---

* क० धं० पुस्तके, क०स० [illegible]पुस्तके तु 'न'कारो नास्ति।

सू० साकल्यविधानात्॥४८॥(आ०नि०)॥

भा० साकल्यमत्र विधीयते गवां दोग्धव्यानां,—'नास्यैतां रात्रिं पयसा अग्निहोत्रं जुहुयात्, कुमाराश्च न पयो लभेरन्'। 'ननु कुमाराणां पयोदानप्रतिषेधोऽयं'। न हि, पयःप्रतिषेधे किञ्चित् दृष्टमस्ति, अदृष्टं कल्पयितव्यं। 'नन्वितरथापि लक्षणा आश्रयणीया'। बाढम्, अदृष्टार्थाच्छब्दवृत्तिर्लघीयसीति। तस्मात् साकल्यविधिर्गवां, पयःप्रतिषेधेनायं लक्षणया; ततः प्राप्तेऽनुवादः॥

सू० बह्वर्थत्वाच्च॥४९॥(हे०)॥

भा० 'बहुदुग्धी इन्द्राय, देवेभ्यो हविः' इति च मन्त्रस्य सर्वासु दुह्यमानासु अपाक्षिकत्वं भविष्यति, बहुत्वं च प्रत्यपेक्षम्॥

सू० अग्निहोत्रे चाशेषवद्यवागूनियमः*॥५०॥
(१यु०)॥

भा० अग्निहोत्रे च श्रूयते,—'नास्यैतां रात्रिं पयसाग्निहोत्रं जुहुयात्, यथान्यस्यै देवतायै प्रत्तमन्यस्यै देवतायै दद्यात् तादृक् तत्स्यात् यवाग्वा जुहुयात्' इति सर्वस्य पयसः सान्नाय्यार्थतां दर्शयति॥

सू० तथा पयःप्रतिषेधः कुमाराणाम्॥५१॥(यु०)॥

भा० इति व्याख्यातम्॥(११।१।१८सू०)॥

सू० सर्वप्रापिणापि लिङ्गेन संयुज्य देवताभिसंयोगात्
॥५२॥(२यु०)॥

---

* चाशेषत्वाद्यवागूनियमः इति आदर्शपुस्तकपाठः।

भा० 'वत्सेभ्यश्च ह वा एता मनुष्येभ्यश्च पुरा आप्याययन्ते अथैतर्हि* देवेभ्य एवैता आप्याययन्ति' इति, सर्वप्राप्तेरेतल्लिङ्गं। कथं?। या वत्सेभ्यो मनुष्येभ्यश्च पुरा आप्याययन्ते, ता एतर्हि देवेभ्य आप्याययन्ति इत्याह,सर्वाश्च ता वत्सेभ्यश्च मनुष्येभ्यश्चाप्याययन्ते; तस्मात् सर्वप्राप्तेरेतल्लिङ्गम्। अतो यावत्स्वमुत्तरासु दोहनं स्यात्॥ (११।१।८अ०)॥

---

आग्नेयादीनां प्रधानानां भेदेऽप्याघारादीनामङ्गानां तन्त्रेणानुष्ठानाधिकरणम्।

दर्शपूर्णमासयोः प्रधानानि आग्नेयादीनि,तेषामङ्गानि आघारादीनि। तेषु चिन्त्यते, किं, तस्य तस्य प्रधानस्य भेदेनाङ्गानां प्रयोगः, अथ वा सर्वेषां तन्त्रेण? इति। अथ तत्र किं वृत्तं?—"क्रतुवच्च अनुमानेनाभ्यासे फलभूमा स्यात्" (११।१।२८सू०) इति। तत्र कृत्स्नो दर्शपूर्णमासावुद्दिश्य कथा वृत्ता, इह तत्तत् प्रधानं प्रति चिन्त्यते। किं प्राप्तम्?—

सू० प्रधानकर्मार्थत्वादङ्गानां तद्भेदात् कर्म्मभेदः प्रयोगे स्यात्॥५३॥ (पू०)॥

भा० 'अङ्गानां' प्रयोगे 'कर्म्मभेदः' 'स्यात्' क्रियाभेदः,—तस्य तस्य प्रधानस्य भेदेनाङ्गानां प्रयोगः। कुतः?। 'प्रधानकर्म्मार्थत्वात्', प्रधानार्थत्वादित्यर्थः। प्रधानार्थेन हि अङ्गानि उपदिश्यन्ते, अकुर्वन्ति प्रधानानि कथं स्युरिति; अङ्गसम्बन्धे च प्रधानानां सहत्वं न

---

* ता एतर्हि देवेभ्य इति क० चं० पु० पाठः।

विवक्ष्यते, न हि तत्र प्रधानानि विधीयन्ते, किन्तर्हि अङ्गानि, न च अविधीयमानस्यार्थस्य गुणो विवक्षितो भवति, यथा, 'ग्रहं सम्मार्ष्टि' इत्येकत्वम्; एवञ्चेत् एकैकस्य प्रधानस्याङ्गैः सम्बन्धः कर्त्तव्यः; तानि यदि सकृत् क्रियेरन्, अविभागेन सम्बध्येरन्, यथा, प्रायणीयोदयनीययोः एकादशिन्या; समस्तैश्च सम्बन्धः कर्त्तव्य इत्युक्तं,— "विधेस्त्वेकश्रुतित्वात्" (११।१।१६ सू०) इत्यत्र। तस्मात् प्रतिप्रधानमङ्गभेदः॥

सू० क्रमकोपश्च यौगपद्ये स्यात्॥५४॥ (यु०)॥

भा० प्रधानानि च क्रमवन्ति,तानि च यथाक्रमं साङ्गानि कर्त्तव्यानि, तत्र यदि तन्त्रमङ्गानि स्युः, ततोऽकृत्वा आग्नेयं साङ्गम्, अग्नीषोमीयः प्रक्रान्तः स्यात्, तथा प्रधानानां 'क्रमकोपः' 'स्यात्'। अथ तु भेदः, ततः साङ्गमाग्नेयम् अपवृज्य, अग्नीषोमीयः साङ्गः प्रक्रान्तः क्रियत इति नास्ति क्रमकोपः।

अपर आह,—यदि तन्त्रं भवेयुरङ्गानि, ततो यावत् तनूनपात् आग्नेयस्योपकरोति, तावत् समिधा अग्नीषोमीयस्योपकर्त्तव्यं, स एष उपकारक्रमकोपः। अपि च, अङ्गारापोहनादीनि संस्कर्माणि* प्रतिप्रधानं भिद्यन्ते, तैश्चाघारादीनामवैलक्षण्यं भविष्यति॥

सू० तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्यात् विशेषाग्रहणात्॥५५॥ (सि०)॥

---

* संस्कर्मादीनि इति क० सं० पु० पाठः।

भा॰ तुशब्दः पक्षान्तरपरिग्रहे,—*न च, एष पक्षः श्रेयान्,—भेद इति, किन्तर्हि, 'यौगपद्यं',—सकृत्प्रयोगः स्यात्; सकृदेव प्रयुक्तानि अङ्गानि सर्वैः प्रधानैर्युगपत् सम्बध्यन्ते,'तुल्यानाम्' एकशब्दोपदिष्टानाञ्च ऐदमर्थ्यं प्रति 'विशेषाग्रहणात्'; इमानि कर्त्तृतो देशतः कालतश्च तुल्यानि,—दर्शपूर्णमासयोर्व्यग्नन्वलो: चत्वार ऋत्विजः, 'समे दर्शपूर्णमासाभ्यां यजेत', 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत' इति। प्रधानैश्च सह अङ्गानां एकदेशकालकर्त्तृत्वं वक्ष्यति,—"अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्" (१२।२।७सू॰) इत्यत्र। एकेन च शब्देन प्रधानानि फलं प्रति उपदिष्टानि,—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। किमतः?। अतस्तेषां फले सम्भूयकारित्वं, तेन स्वर्गकामस्य सर्वेषां युगपच्चिकीर्षा, नैकशः सर्वचिकीर्षा, सर्वचिकीर्षया च आधारादीनां क्रियमाणानां तुल्यकर्त्त्रादीनां न गृह्यते विशेषः,—कस्यैतानि आग्नेयस्याग्नीषोमीयस्य वा?—इति, सर्वेषां च युज्यन्ते; तस्मात् सर्वार्थानि भवन्ति; तस्मादनावृत्तिः॥

सू॰ ऐकार्थ्यादव्यवायः स्यात्॥ ५६॥ (आ॰नि॰)॥

भा॰ यच,—क्रमकोपश्च यौगपद्ये स्यादिति, तत्र ब्रूमः,—'ऐकार्थ्यात् अव्यवायः स्यात्', न क्रमकोपः। कुतः?। 'ऐकार्थ्यात्', सम्भूयकारीणि एतानि इत्युक्तं,तेषां सहक्रिया नैकशः; न हि तत्रैकेन कृतेन कश्चिदर्थः, एकसम्बन्धक्रियायामानुपूर्व्यं स्यात्; तस्मान्न तेषां प्रयोगे क्रमः, कुतः

* पक्षान्तरं परिजग्राह इति आदर्शपुस्तकपाठः।

क्रमकोपः? इति। यथोपकारे क्रमकोप इति; तथापि, नाध्वरः कृतमात्र एव प्रधानेषु उपकरोति, यत्कारणं, तस्मिन् काले प्रधानान्येव न सन्ति। यदा तु सर्वाणि अङ्गानि कृतानि, तदा तानि अपूर्वाणि सम्भूय प्रधानेषु उपकुर्वन्ति; अङ्गानामपि हि सम्भूयकारित्वमुक्तं,— "अथैकैकार्थादैककर्म्यम् (११।१।६ सू०) इति। तस्मात् उपकारेऽपि नास्ति क्रमकोपः॥

सू० तथा चान्यार्थदर्शनं कामुकायनः॥५७॥ (यु०)॥

भा० 'तथा च अन्यार्थदर्शनं' भवति, यथास्माभिरुपदिष्टे इति 'कामुकायनः' आचार्यो मन्यते स्म। किं पुनस्तत्?। 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदश अमावास्यायाम्' इति, यद्यावृत्तिः स्यात्, न त्रयोदश चतुर्दश वा व्यवतिष्ठेरन्॥

यच, संसर्गिवत् आरादुपकारिणामपि आवृत्तिरस्त्विति; तत्र ब्रूमः,—

सू० तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात् संस्कारस्य तदर्थत्वात्॥५८॥ (आ०नि०)॥

भा० स हि न्यायः,—सम्भूयकारिणां सहक्रियेति, सर्वत्रैव सहक्रिया, 'अशक्तेः' तु धर्मसंसर्गेषु 'आनुपूर्व्यं', तस्मात् भेदेन क्रिया, न शक्यते, एकस्य अङ्गारापोहनेन सर्वेषां पाकः कर्त्तुं; न चैकस्मिन् पुरोडाशे प्रथिते सर्वे प्रथिता भवन्ति; 'संस्कारस्य तदर्थत्वात्',—संस्कारोऽयं पाकार्थो विधीयते, ततः एव प्रत्येकोपकारिणः प्रतिप्रधानम् आवृत्तिः स्यात्, अन्यथा पाक एव न संवर्त्तेत॥

सू० असंस्पृष्टोऽपि तादर्थ्यात् ॥ ५९ ॥ (यु०) ॥

भा० 'असंस्पृष्टोऽपि' आघारादिः प्रतिप्रधानमावर्त्तते । कुतः? । 'तादर्थ्यात्',—यस्य समीपे कृतः, तदर्थं इति गम्यते विशेषः । आघारादीनि आज्यभागान्तानि आग्नेयस्य, स्विष्टकृदादीनि अग्नीषोमीयस्येति ग्टह्यमाणे विशेषे भेदः, तस्मादुपांशुयाजादीनां समीपे प्राक् आघारादीनि, ऊर्द्धं स्विष्टकृदादीनि कर्त्तव्यानि। एवं च संसर्गिभिरितरेषामवैलक्षण्यं भविष्यति ॥

सू० विभवाद्वा प्रदीपवत् ॥ ६० ॥ (आ०नि०) ॥

भा० यदुक्तं,—यस्य सन्निधौ प्रयुक्तानि तस्येमानीति ग्टह्यते विशेषः, तस्मादावृत्तिः—इति; नैतद्युक्तं । कुतः? । 'विभवात्',—विभविष्णूनि एतानि एकस्यापि सन्निधौ क्रियमाणानि सर्वेषामुपकर्त्तुं; 'प्रदीपवत्' । तद्यथा, प्रदीप एकस्मिन् प्रदेशे भुञ्जानानां ब्राह्मणानामेकस्य सन्निधौ प्रज्वलितः सर्वेषामुपकारं करोति । तस्मादनावृत्तिः ॥

सू० अर्थात्तु लोके विधिः प्रतिप्रधानं स्यात् ॥ ६१ ॥ (पुनः पू०) ॥

भा० उपवर्णनापरिहारः पूर्वं न कृत इति स तावद्वर्ण्यते । यदुपवर्णितं 'प्रदीपवत्' इति; तदयुक्तं, 'अर्थात्' 'लोके' प्रदीपस्य सकृदसकृद्वा क्रिया; यदि सकृत् कृतः सर्वं प्रकाशयति, सकृत् क्रियते; अथ न प्रकाशयति, ततोऽसकृत्; ततश्चास्य प्रत्यक्षं सामर्थ्यं; अथेह विधितः उपकारोऽनुपकारो वा गम्यते, न प्रत्यक्षेण; न चास्ति विधानम्,—

अस्योपकरोति इति; सन्निधानाद्विशेषग्रहणाद्गम्यते,—यस्य सन्निधौ प्रयुक्तः तस्योपकरोति—इति। तस्मादावृत्तिः॥

सू॰ सप्तदश्यां कामुकायनः परिमाणविरोधात्॥ ॥ ६२॥ (आ॰)॥

भा॰ अथ यदुक्तं,—'सप्तदश्यां कामुकायन' आचार्यो मन्यते, नैवं, चतुर्दश, त्रयोदशेत्याहुतिपरिमाणस्य विरोधः स्यात्'—इति; तस्य कः परिहारः?। आभाषान्तं सूत्रम्॥

सू॰ विधेस्त्वितरार्थत्वात् सप्तदश्याश्रुतिव्यतिक्रमः स्यात्॥ ६३॥ (आ॰नि॰)॥

भा॰ विधीयते इति अङ्गं विधिशब्देनोच्यते,—अङ्गस्य 'इतरार्थत्वात्' यदा एतत् स्थितं,—यस्य सन्निधौ यत् श्रुतं, तदर्थमेव तत्–इति, तदा आवृत्त्या अङ्गानां प्रयोगः; तत्र चतुर्दश त्रयोदशेत्याहुतिसंख्या नोपपद्यते, आहुतिविधयस्तु चतुर्दश, त्रयोदश, तेषां लक्षणया वचनमुपपद्यते,'चतुर्दश पौर्णमास्यामाहुतिविधयः,त्रयोदशामावास्यायाम्' —इति। नैतत् संख्याविधानं, प्रचयेनैव संख्यायाः प्राप्तत्वात्; अनुवादस्त्वयम्, अनुवादस्य लक्षणया उपपद्यते, विदितस्य स भवति, आहुतिविधीनाञ्चेयं संख्या विदिता, नाहुतीनां; तस्मात्तेषां वादः॥

सू॰ विधिवत् प्रकरणाविभागे प्रयोगं वादरायणः॥ ॥ ६४॥ (पुनः-पू॰नि॰)॥

भा॰ तन्त्रेण 'प्रयोगं' 'वादरायणो' मन्यते स्म। कुतः?। प्रकरणा-

विभागात्,-सर्वेषां प्रधानानामविभक्ता प्रक्रिया, सम्भूय-कारित्वादित्युक्तं, तत्रेदमर्थं प्रति न दृश्यते विशेषः। यत्तु,सन्निधिप्रयोगेण विशेषग्रहण-मुक्तं, तदयुक्तं। किं कारणं?। विशेषो यः सन्निधिक्रमः, स प्रकरणेन बाध्यते,'विधिवत्', यथा विधौ तुल्यत्वात् प्रकरणस्य,सर्वार्थानि अङ्गानि विज्ञायन्ते, न, यस्य सन्निधौ,तदर्थानि, क्रमस्य प्रकरणेन बाधितत्वात्। अपि च एकेन सन्निधानमविशेषको हेतुः;—यदापि सर्वार्थास्तदाप्येकस्य कस्यचिदवश्यं सन्निधौ कर्त्तव्यः। तस्माच्च विशेषः सन्निधेरेकान्ततः शक्यः अवधारयितुम्,अतस्तन्त्रेण प्रयोगः। वादरायणग्रहणं* कीर्त्यर्थं, नैकीयमतार्थम् ॥

सू० क्वचिद्विधानान्नेति चेत् ॥ ६५ ॥ (आ०) ॥

भा० नैतद्युक्तं,—सहत्क्रियेति। कुतः?। 'क्वचित्' सहत्वम् आश्रित्य विधीयते,—'सहावघ्नन्ति सह पिषन्ति', तत् अनावृत्तौ सर्वतः प्राप्तायां परिसङ्ख्यार्थं स्यात्,—इहैव सहत्वं, नान्यत्र-इति। उच्यते,—

सू० न विधेश्चोदितत्वात् ॥ ६६ ॥ (आ०नि०) ॥

भा० न तत्र परिसङ्ख्या युज्यते,—प्राप्तस्य पुनर्वचनं परिसङ्ख्यार्थं भवति, न चेह सहत्वं प्राप्तं। कुतः?। भेदेन निर्वापस्य 'चोदितत्वात्',—आग्नेयाग्नीषोमीययोर्भेदेन निर्वाप उक्तः, तयोर्भेदेनैवावहननमपेक्षते प्राप्नुतः, तत्रावश्यं विधेयं सहत्वं; तस्मात् न, क्वचित् सहत्वविधानादन्यत्र भेदेन क्रिया विज्ञायेत इति ॥ (१११।१०अ०) ॥

---

* वादरायण इति चादर्शपुस्तकस्य एवं क० सं० पुस्तकस्य च पाठः।

कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानाधिकरणम् ॥

कश्चिच्छ्रूयते,—'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुम्, आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्द्धमानः'*—इति। तत्र विचार्य्यते,—किं कृष्णग्रीवस्य प्रथमस्य तृतीयस्य च सहप्रदानं कर्त्तव्यम्, अथ वा भेदेन? इति। किं प्राप्तम्?,—

**सू० व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम्॥ ॥ ६७ ॥ (पू०) ॥**

भा० 'व्याख्यातं' प्रयोगे यौगपद्यमिति, 'तुल्यानां' तु 'यौगपद्यम्' एकशब्दोपदेशात् स्यादिति। इह तु कृष्णग्रीवयोरेकदैवतत्वात्† सहप्रयोगे क्रियमाणे न गृह्यते विशेषः, सहक्रिया च एकफलत्वात् प्राप्ता, तस्मात् सहप्रदानम् ॥

**सू० भेदस्तु कालभेदाच्चोदनाव्यवायात् स्याद्विशिष्टानां विधिः प्रदानकालत्वात् ॥ ६८ ॥ (सि०) ॥**

भा० 'भेदस्तु' प्रदानस्य युक्तो न तन्त्रता। कुतः?। 'कालभेदात्'। कथं कालभेदः?। 'चोदनाव्यवायात्',—सौम्यचोदनया व्यवहिते कृष्णग्रीवचोदने, तत्र पाठक्रमादेकस्य पुरस्तात् सौम्यस्य प्रयोगः,‡

---

* "अयमर्थः, ममैव पौरोहित्यमस्तु नान्यस्येत्येवं स्पर्धोपेतो यथोक्तमग्नीषोमीयं पशुत्रयमालभेत" इति न्यायमाला।

† 'एकदेवतत्वात्' इति क० सं० पुस्तकपाठः।

‡ 'प्रयोगः प्राप्तः' इति चादर्शपुस्तकपाठः।

एकस्य उत्तरस्य; तयोर्यदि सहप्रदानं क्रियेत, क्रम उपरुध्येत अन्यतरस्य,—पुरस्तात् क्रियायाम्, उत्तरस्य; उपरिष्टात्, पूर्वस्य। तस्मात् भेदेन प्रयोगः॥

सू॰ तथा चान्यार्थदर्शनम्॥ ६९॥ (यु॰)॥

भा॰ 'अभितः सौम्यमाग्नेयौ भवतः' इति।

सू॰ विधिरिति चेन्न वर्त्तमानापदेशात्॥ ७०॥ (आ॰नि॰)॥

भा॰ अथ विध्यभिप्रायं कल्पेत, श्रूत्यर्थमुत्सृज्य लक्षणार्थः परिगृहीतः स्यात्; तस्मात् प्रदानभेदः॥ (११।१।११अ॰)॥

इति श्रीभट्टशबरस्वामिनः* कृतौ मीमांसाभाष्ये एकादशस्याध्यायस्य प्रथमः पादः॥ ०॥

---

* शबरस्वामिनः इति क॰ पं॰ पुस्तकपाठः।

११ अध्याये २ पादः ।



आग्नेयादीनां प्रधानानां तन्त्राधिकरणम् ॥

सू० एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् ॥ ॥ १ ॥ (सि०) ॥

भा० दर्शपूर्णमासयोराग्नेयादीनि प्रधानानि । तत्र देशकालकर्त्तारः 'समे दर्शपूर्णमासाभ्यां यजेत, पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावस्यया यजेत, दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः' इति । तथा, 'चातुर्मास्ये प्राचीनप्रवणे वैश्वदेवेन यजेत, वसन्ते वैश्वदेवेन यजेत, चातुर्मास्यानां यज्ञक्रतूनां पञ्च ऋत्विजः' इति ।

तत्र विचार्य्यते, किम् आग्नेयादीनां प्रधानानां तन्त्रं देशकालकर्त्तारः, अथ वा, भेद एव? इति । तत एतावत्तु परीक्ष्यं,—किं चोदनाविधिशेषा देशादयः,—'यदाग्नेयोऽष्टाकपालः' इत्येवमादयः आग्नेयादिचोदनाविधयः, तेषामिमे समादिविधयः शेषाः,-आग्नेयोऽष्टाकपालः एवं भवति, एवं सर्वत्र, अथ वा प्रयोगाङ्गं देशादयः,—य एषामाग्नेयादीनां प्रयोगः फलसाधनार्थः, तदङ्गम्? इति । किं चातः? । यदि प्रयोगाङ्गं, ततस्तन्त्रं, अथ चोदनाविधिशेषाः, ततो भेदेनेति ।

किं प्राप्तं?—'एकदेशकालकर्तृत्वं मुख्यानां' तन्त्रमित्येषा प्रतिज्ञा;

तत एवं तावद्वर्णयन्ति,—प्रयोगाङ्गं देशादय इति । कुतः ? । न तावदृते देशकालकर्तृभ्यः, प्रयोगो भवति, यच्च येन विना न भवति, तत्तदङ्गमित्यवगम्यते, तस्मात् प्रयोगाङ्गं देशादयः; यदा प्रयोगाङ्गं तदा तन्त्रभावः । कस्मात् ? । 'एकशब्दोपदेशात्',-'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येकशब्दोपदेशात् एकं फलं, एकफलत्वात् सहप्रयोगः, तत्र न गृह्यते विशेषो देशादीनामेदमर्थ्यं* प्रति; अगृह्यमाणे विशेषे तन्त्रभावो युक्तः । तस्मात्तन्त्रं देशादयः ॥

सू० अविधिश्चेत्कर्म्मणामभिसम्बन्धः प्रतीयेत लक्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां प्रतिप्रधानं भावः स्यात् ॥ २ ॥ (प्र०पू०) ॥

भा० 'अविधिश्चेत्',—यदि चोदनाविधिशेषो न स्यात् देशादिविधिः, ततः 'कर्म्मणाम्' आग्नेयादीनाम् अभेदेन देशादिभिः 'अभिसम्बन्धः प्रतीयेत', चोदनाविधिशेषस्त्वयं । किं कारणं ? । इह 'समे दर्शपूर्णमासाभ्याम्' इत्येवमादिभिर्वाक्यैर्देशादयो विधीयन्ते, अप्राप्तत्वात्, ते चेद्विधीयन्ते, आग्नेयादीनां दर्शपूर्णमासशब्देनानुवाद एषितव्यः, अन्यथाऽनेकार्थविधानम् एकस्मिन् वाक्ये भवति इति, अनुवादे च तेषां सहत्वं न विवक्ष्यते, विवक्ष्यमाणे वाक्यभेदो भवति,— आग्नेयादीनां देशादयः, तेषां च सहितानामिति । कथं ? । 'समे दर्शपूर्णमासाभ्याम्' इत्येवमादिभिर्वाक्यैराग्नेयादिदेशादयो विधातुं

* ऐतदर्थ्येन' इति क० ख० पुस्तकपाठः ।

शक्यन्ते, 'लक्षणार्थाभिसंयोगात्' लक्षणार्थेनाभिसंयोगो विज्ञायते, दर्शपूर्णमासशब्दः समुदायार्थोऽयं, समुदायश्च समुदायिलक्षणार्थः शक्नोति, साहचर्य्यात् समुदायिनो लक्षयितुं। 'नन्वेवमपि लक्षणा आश्रिता भवति'। वरं लक्षणा, नैकस्य वाक्यस्यानेकार्थत्वं, अनेकार्थत्वेऽगमकत्वं, लक्षणा अनुगमिका, लौकिकत्वात्।

अपि च, श्रुत्या समुदाये देशादयो विधीयेरन्, न च समुदायस्य देशादिभिः सम्बन्धोऽस्ति, कारकं हि समादयः, कारकस्य कर्म्मणा सम्बन्धः, न कर्म्मगुणेन; तस्मादपि लक्षणा; यथा 'पौर्णमासीमभिमृशेत्' इति हविर्लक्षणा। चोदना-'विधित्वाचेतरेषां' देशादीनां 'प्रतिप्रधानं भावः स्यात्', गृह्यमाणविशेषत्वात्।

अथ केन समादय आग्नेयादिषु विधीयन्ते?। 'समे यजेत, पौर्णमास्यां यजेत' इत्यनेनाख्यातेन, अत्र हि धातुना यागमनूद्य विभक्त्या तेषु समादीनां विधिः, कर्म्मारोऽपि, यस्तेषां यागानां रूपविधानार्थो भवति 'अच्युतो भवति' इति, तेन विधीयन्ते। अथ वा, अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽपि अस्तीति।

एवं स्थितमपर्य्यवसितं भवति, अतः अन्तरा चिन्तान्तरं प्रक्रियते। किं पुनः कारणम् एतस्मिन् अपर्य्यवसिते चिन्तान्तरमारभ्यते?। एतस्मिन् न्याये स्थिते तस्याश्चिन्तायाः पूर्वपक्ष उत्तिष्ठति, अतोऽसावेतस्मादनन्तर-मुच्यते॥

---

अङ्गानामपि समदेशादिनियमःधिकरणम्॥

सू० अङ्गेषु च तदभावः प्रधानं प्रति निर्द्देशात्॥

॥ ३ ॥ (अ०पू०)॥

भा० अङ्गेष्विदानीं विचार्य्यते । किं तेषां समादय एव देशकाल-कर्त्तारः; अथ वा, अनियमः ? इति । किं प्राप्तं ?—'अङ्गेषु च तदभावः'। कुतः ? । 'प्रधानं प्रति निर्द्देशात्'-चोदनाविधिशेषत्वेनाग्नेयादीनि प्रधानानि प्रति समादयो निर्द्दिष्टाः न अन्यत्र भवन्ति । तस्मादनियमः । यथा द्रव्यदैवतं* यत् प्रधानेषु, न तत् अङ्गेषु; एवं देशादयोऽपि ॥ स्थितादुत्तरम्,—

सू० यदि तु कर्म्मणो विधिसम्बन्धः स्यादैकशब्द्यात् प्रधानार्थाभिसंयोगात् ॥ ४ ॥ (प्र०सि०) ॥

भा० यदि आग्नेयादेः कर्म्मणः समादिविधिसम्बन्धः स्यात्, ततः स्याच्चोदनाविधिशेषत्वं, भेदेन च समादयः, न तु तदस्ति । कुतः ? । 'ऐकशब्द्यात् प्रधानार्थाभिसंयोगात्',-यस्मात् आग्नेयादीनां समस्तानां एकः शब्दो वाचकः, तेन समादीनामभिसंयोगः,-'समे दर्शपूर्णमासाभ्यां यजेत' इति, न ये व्यस्तानां वाचकाः,-'यदाग्नेयोऽष्टाकपालः' इत्येवमादयः । तत्र प्रत्यक्षं समस्तसंयोगमुत्सृज्य परोक्षो व्यस्तसंयोगः कल्प्यः,-सोऽपि लक्षणया । अथ तु प्रधानार्थमभिसंयोगः क्रियते, तत उभयमपि परिहृतं भवति ।

कः पुनः प्रधानार्थः ? । प्रधानं फलं, तत्साधनार्थो यो व्यापारः । कस्यासौ ? । आग्नेयादीनां प्रयोगः । कथं तेनाभिसंयोगः समादीनां विज्ञायते ? । उच्यते, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनेन वाक्येन समस्तानामाग्नेयादीनां फलसाधनार्थः प्रयोग उक्तः, तस्य च

* 'देवतम्' इति क० सं० पु० पाठः ।

यदि पुनःश्रुत्या समादयो विधीयन्ते,-याभ्यामेताभ्यां दर्शपूर्णमासाभ्यां यजेत, ताभ्यां समे यजेतेति, ततो न परोक्षो व्यक्तसम्बन्धः कल्पितो भवति, न च लक्षणा। तस्मात् प्रयोगे विधिरेतेषां, स च सर्वेषां प्रधानानां साधारणः, तत्रेदमर्थं प्रति न गृह्यते विशेषः। तस्मात् तन्त्रं देशकालकर्त्तारः॥

सू० तथा चान्यार्थदर्शनम्॥ ५॥ (यु०१)॥

भा० अन्यार्थोऽप्येतमेवार्थं दर्शयति,-'उग्राणि ह वा एतानि वीणि* हवींषि यदमावास्यायां सन्निरुप्यन्ते आग्नेयं प्रथमम् ऐन्द्रे उत्तरे'-इति। सन्निरणं पौर्वापर्यञ्च एककालत्वे उपपद्यते; तस्मादपि तन्त्रम्॥

सू० श्रुतिश्चैषां प्रधानवत्कर्म्मश्रुतेः परार्थत्वात् कर्म्मणो-ऽश्रुतित्वाच्च॥ ६॥ (यु०२)॥

भा० इतश्च प्रयोगचोदना पुनःश्रुतिरियं। कुतः?। श्रुतिः तेषां समादीनां प्रधानानामिव। कथं कृत्वा?। 'कर्म्मश्रुतेः परार्थत्वात्', या अत्र कर्म्मश्रुतिः-'दर्शपूर्णमासाभ्याम्' इति, सा परार्था, तृतीया-योगात्, तथा सामानाधिकरण्यात् 'यजेत' इति यजिरपि परार्थ एव। तदेतदेवमापद्यते,-दर्शपूर्णमासयागेनान्यत् किमपि कुर्य्यात्-इति। 'कर्म्मणोऽश्रुतित्वाच्च',-कर्म्म च न श्रुतं, कार्य्यं न श्रुतं, प्रधान न श्रुतमित्यर्थः, तस्य स्थाने समादीनि श्रूयन्ते, प्रधानस्थाने श्रुतत्वात् 'श्रुतिः' 'एषां' 'प्रधानवत्' इत्युच्यते, न च तानि प्रधानानि; तत्र

* 'त्रेधाणि' इति चादर्शपुस्तकपाठः।

यदि आग्नेयादिवाक्यानां पुनःश्रुतिरियं कल्प्येत, गुणभावानुवादो भज्येत, न हि तत्र तेषां गुणभाव उक्तः, उत्पत्तिमात्राख्यानानि तानि, न च, किञ्चित्कार्य्यं निर्दिष्टं, यद्यपेक्षोऽनुक्तोऽपि गुणभावोऽर्थ-प्राप्तोऽनूद्येत, प्रयोगचोदनायान्तु गुणभाव उक्तः*, कार्य्यमपि फलं। तस्मात्तस्याः पुनःश्रुतिरियं, तथा च तद्गुणभावः सिद्धः ॥(११। २।१अ०) ॥

सू० अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात् स्यादेकदेशत्वम् ॥ ७ ॥ (अ०सि०) ॥

भा० अङ्गेषु स्थितादुत्तरं। यदा प्रयोगाङ्गं देशादय इत्युपपन्नं, तदा अयमुत्तरः पक्ष उत्तिष्ठति, तस्मात्ततोऽनन्तरमुच्यते,—यदुक्तम् 'अङ्गेषु देशादीनामनियमः' इति। नच, अङ्गेषु समादिनियम इति। कुतः?। यतः 'अङ्गानि' अपि 'प्रधानेन' फलसिद्धावुपदिश्यमानेन सहोपदिश्यन्ते। कथं?। 'विधानत्वात्',-प्रधानानां फलं साधयतां विधानम् एतत्, यदुत अङ्गप्रयोगः; विधानं, कल्पः, इति-कर्त्तव्यतेत्यर्थः। अतो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्राङ्गवान् प्रयोगः प्रधानानामुक्तः; यथाविधः तत्रोक्तः, तथाविधेन पुनःश्रुत्या समादीनां विधिः। अतोऽङ्गानामपि प्रधानैः सहैकदेशकालकर्तृत्वं स्यात् ॥

सू० द्रव्यदेवतं तथेति चेत् ॥ ८ ॥ (आ०) ॥

भा० अथ यदुक्तं,—यथा द्रव्यदेवतं प्रधानानामङ्गानाञ्च भेदेन

---

* गुणभावोऽप्युक्तः इति क० सं० पु० पाठः।

भवति, एवं देशादयोऽपि स्युः—इति, तत्परिहर्त्तव्यम्। आभायान्तं सूत्रम्॥

सू॰ न चोदनाविधिशेषत्वान्नियमार्थो विशेषः॥ ९॥ (आ॰नि॰)॥

भा॰ नैतदेवम्। कुतः?। 'चोदनाविधिशेषत्वात्',—चोदनाविधिशेषो हि द्रव्यदेवताविधिः, तेन प्रधानेषु द्रव्यदेवताविशेषो नियतः,—'इह अग्निः पुरोडाशस्य, इह आज्यम् अग्नीषोमौ च' इति; तथा, अङ्गेष्वपि 'आज्येन प्रयाजान् यजति, शेषात् स्विष्टकृतं यजति' इति। न च, अन्यत्र निर्द्दिष्टोऽन्यत्र भवति, अथ इह प्रयोगाङ्गत्वाद्देशादीनां, तस्य च प्रयोगस्य साधारण्यात् तन्त्रभाव इत्यपदिष्टो हेतुः। तस्माद्विषमं द्रव्यदेवतेन॥

सू॰ तेषु समवेतानां समवायात्तन्त्रमङ्गानि, भेदस्तु तद्भेदात् कर्म्मभेदः प्रयोगे स्यात्तेषां प्रधानशब्दत्वात् तथा चान्यार्थदर्शनम्॥ १०॥ (यु॰)॥

भा॰ यदि च समानं द्रव्यदेवतम् अङ्गानां प्रधानानाञ्च स्यात्, ततः 'तेषु' द्रव्यदेवतेषु समानेषु 'समवेतानाम्' अङ्गानां प्रधानानां च 'समवायात्' तदविशेष इति* 'तन्त्रम्' इज्या स्यात, 'भेदस्तु तद्भेदात्'। अथ 'तु' 'भेदो' द्रव्यदेवतस्य, ततः 'तद्भेदात् कर्म्मभेद प्रयोगे स्यात्',—इज्याकर्म्मणः प्रयोगे विशेषग्रहणाद्भेदः स्यात्। 'तथा

* तदयथो विशेष इति क॰ मं॰ पु॰ पाठः।

चान्यार्थदर्शनं' पुनः भविष्यति,—'चतुर्दश पौर्णमास्यामाहुतयो ह्रियन्ते त्रयोदशामावास्यायाम्' इति। तस्मादपि द्रव्यदेवतस्य भेदः॥ (११।२।२अ०)॥

---

दर्शपूर्णमासेष्टिप्रभृतिषु संघभेदेन चाङ्गानां भेदेनानुष्ठानाधिकरणम्॥

दर्शपूर्णमासेष्टौ द्वौ समुदायौ,—दर्शः, पूर्णमासश्च। तथा राजसूयेऽनुमत्यादय इष्टयः, पवित्रादयः सोमाः। चातुर्मास्येष्वपि पर्वाणि वैश्वदेवादीनि। तत्र विचार्यते,—किं दर्शस्य च पौर्णमासस्य च तन्त्रेणाङ्गानां प्रयोगः, तथा राजसूये इष्टीनां सोमानाञ्च, चातुर्मास्येषु च पर्वणाम्, उत तन्त्रभेदेन? इति। किं प्राप्तम्?—

सू० इष्टिराजसूयचातुर्मास्येष्वैककर्म्म्यादङ्गानां तन्त्रभावः स्यात्॥११॥ (पू०)॥

भा० तत्र तत्र तन्त्रेण प्रयोगः। कुतः?। 'ऐककर्म्यात्' एकफलत्वादित्यर्थः; एकं फलमिह तत्र तत्र श्रूयते,—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत', 'राजसूयेन स्वाराज्यकामो यजेत', 'चातुर्मास्यैः स्वर्गकामो यजेत', एकत्वात् फलस्य, एकः प्रयोगस्तत्र न गृह्यते विशेषः, तस्मात् तन्त्रम्॥

सू० कालभेदान्नेति चेत्॥१२॥ (आ०)॥

भा० नैतदेवं,—तन्त्रमङ्गानि इति, किन्तर्हि?—भेदेन। कुतः?। 'कालभेदात्',—क्वचित् कालभेदः, क्वचिद्देशभेदः,—दर्शपूर्णमासयोः

कालभेदः,—'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत' इति। तथा, चातुर्मास्यस्य पर्वणां 'वसन्ते वैश्वदेवेन यजेत, वर्षासु वरुणप्रघासैर्यजेत, हेमन्ते साकमेधैर्यजेत' इति। राजसूये देशभेदः,—'बार्हस्पत्यश्चरुर्ब्रह्मणो गृहे, ऐन्द्र एकादशकपालो राज्ञो गृहे, आदित्यः चरुर्महिष्यागृहे' इति; कालभेदाद्देशभेदाच्च गृह्यते विशेषः,—पौर्णमासी येषामङ्गानां कालः, तानि पौर्णमास्या, उपकुर्वन्ति, न अमावास्यायाः, वैगुण्यात्; तस्मात् भेदः॥

## सू॰ नैकदेशत्वात् पशुवत्॥१३॥ (आ॰नि॰)॥

भा॰ नैतदेवं,—भेदः—इति। कुतः?। 'एकदेशत्वात्',—यत्र फलसम्बन्धस्तत्राङ्गानां चोदना, यत्कारणं फलं साधयतां प्रधानानाम् अङ्गानि उपकारे वर्त्तन्ते, समुदायचोदनायां फलसम्बन्धः,—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत', 'राजसूयेन स्वाराज्यकामो यजेत', 'चातुर्मास्यैः स्वर्गकामो यजेत'—इति, न एकदेशचोदनायां 'पौर्णमास्यां पौर्णमास्या यजेत', 'वसन्ते वैश्वदेवेन यजेत', 'बार्हस्पत्यः चरुर्ब्रह्मणो गृहे' इति; न चेत् तत्राङ्गानां प्राप्तिः, कुतो भेदेन प्रसङ्गः? समुदायस्य तु फलैकत्वादेकः प्रयोगः। तस्मात् यस्मिन्कस्मिंश्चिदवयवे क्रियमाणानि अङ्गानि समुदाये न सम्भंत्स्यन्ते, समुदायस्यावयवैरव्यतिरेकात्, 'पशुवत्', यथा, पशौ भिन्नकाले अप्येकदेशेषु 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवने' इति, नाङ्गानामावृत्तिर्भवति, तद्वत्॥

सू० अपि वा कर्म्मपृथक्त्वात्तेषान्तन्त्रविधानात् साङ्गानामुपदेशः स्यात् ॥ १४ ॥ (सि०) ॥

भा० अपि वा, न तन्त्रमङ्गानि स्युः। कुतः?। 'कर्म्मपृथक्त्वात्' 'तेषां'च 'तन्त्रविधानात्' कर्म्माणि तावदेतानि भिन्नानि,—अन्यः पौर्णमासः समुदायोऽन्य आमावास्यः' एवं सर्वत्र, तेषां च देशकालभेदः,— 'पौर्णमास्यां पौर्णमास्या यजेत' इत्येवमादिः; साङ्गानां च तेषां तत्र तत्र देशकालविधिः।

'ननु नैवात्र अङ्गानि प्राप्यन्ते इत्युक्तं, कुतस्तेषां देशकालविधिः?'। उक्तमेतत्,—प्रयोगे पुनःश्रुत्या समादयो विधीयन्ते इति; तत्र 'समे दर्शपूर्णमासाभ्यां यजेत' इति समुदायप्रयोगे पुनःश्रुतिः, 'पौर्णमास्यां पौर्णमास्या यजेत' इत्येकदेशे पुनःश्रुतिः। एवं सति पौर्णमासप्रयोगे कालो विहितः, अविभक्तश्च अङ्गानां प्रधानेन प्रयोगः; तस्मात् पौर्णमास्यङ्गानां पौर्णमासी कालः, अमावास्याङ्गानाम् अमावास्या कालः; तत्र गृह्यते विशेषः, विशेषग्रहणाद् भेदः ॥

सू० तथा चान्यार्थदर्शनम् ॥ १५ ॥ (यु०१) ॥

भा० 'चतुर्द्दश पौर्णमास्यां आहुतयो हूयन्ते, त्रयोदश अमावास्यायाम्' इति। तन्त्रभावे न पौर्णमास्यां चतुर्द्दश आहुतयः स्युः, न अमावास्यायां त्रयोदश; भेदे तु उभयत्रोभयं भवति, तस्माद्भेदः ॥

सू० तदाऽवयवेषु स्यात् ॥ १६ ॥ (यु०२) ॥

भा० यदा चैष न्यायः, तदा 'अवयवेषु' इत्यावयवेषु देशकालभेदात्

तन्त्रभेदः, तत्र चातुर्मास्यावयवयोः अनीकवत् सान्तपनीययोर्बर्हिषः साधारणवचनमर्थवद्भवति,—यदनीकवतो बर्हिः तत्सान्तपनीयस्येति, इतरथा सिद्धत्वात् तदनर्थकं स्यात्, तस्मादपि भेदः ॥

सू० पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात् ॥
॥ १७ ॥ आ०नि०) ॥

भा० यत्तूक्तं,—पशुवदिति; तत्र ब्रूमः,—'पशौ' युक्ता सकृदङ्गानां क्रिया, तत्र हि एकमेव तन्त्रं केवलं, प्रचारस्य वचनाद्विप्रकर्षः। तदैक्यन्तु 'चोदनैकत्वात्', एका तत्र चोदना, 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीय आग्नेयं सवनीयं पशुमुपाकरोति' इति। कर्मचोदनायां हि अङ्गानां ग्रहणं, न प्रचारचोदनायां; तदेव हि प्रधानं विप्रकृष्टकालेन प्रचारद्वयेन निर्वर्त्त्यंते, तदर्थानि च कृतानि अङ्गानि; तेषां पुनःक्रियायां हेतुर्नास्ति। तस्माद्विषम उपन्यासः ॥ (११।२।३अ०) ॥

---

अध्वरकल्पायां त्रिषु संघेष्वङ्गानां भेदेनानुष्ठानाधिकरणम्।

सू० तथा स्यादध्वरकल्पायां विशेषस्यैककालत्वात् ॥
॥ १८ ॥ (पू०) ॥

भा० इदं श्रूयते* 'आग्नावैष्णवं प्रातरष्टाकपालं निर्वपेत्सारस्वतञ्चरुं,

---

* "काम्येष्टिषु अध्वरकल्पा नाम काचिदिष्टिः, तत्र प्रातःकाले त्रयाणां यागानामाग्नावैष्णव-सारस्वत-बार्हस्पत्यानां संघः पठितः, मध्याह्नापराह्णयोरपि तथैव पठितः, 'अष्टाकपालैकादशकपाल-द्वादशकपालैराग्नावैष्णवो विशेषितः, इतरं समानं', इति न्यायमाला।

बार्हस्पत्यं चरुम्; आग्नावैष्णवमेकादशकपालं माध्यन्दिने सारस्वतं चरुं, बार्हस्पत्यं चरुम्; आग्नावैष्णवं द्वादशकपालमपराह्णे सारस्वतं चरुं, बार्हस्पत्यं चरुं; यस्य भ्रातृव्यः सोऽनेन यजेत' इति। तत्र चिन्त्यते,—किं त्रिषु कालेषु प्रयुज्यमानानामेतेषां कर्मसमुदायानां तन्त्रेणाङ्गानां क्रिया, उत भेदेन? इति।

किं प्राप्तं?—'तथा स्यादध्वरकल्पायां', यथा पशौ तन्त्रमङ्गानां प्रयोगः। कुतः?। 'विशेषस्यैककालत्वात्',—अङ्गविशेषः कश्चिदेषां भिन्नकालानां समुदायानामेककालः श्रूयते,—'पुरावाचः प्रवदितो निर्वपेत्' इति। कथं पुनर्ज्ञायते सर्वेषां निर्वापाणामयं कालविधिरिति?। सर्वेषां ह्येषामेकफलत्वादेकं प्रकरणं, 'सैषा अध्वरकल्पेष्टिः यत्रसेवैतया प्राप्नोति' इति चैकशब्देन युगपत् फलं प्रति विधानात्; तस्मिन्नेव काले क्रियमाणे उत्तरकालयोः समुदाययोर्निर्वापः प्रतिकृष्येत, स प्रतिकृष्यमाणस्ततः प्राग्भाविनामङ्गानां प्रतिकर्षे वर्त्तेत, तदा द्विवाभिसम्बन्धात्तदन्तमपकर्षे स्यादिति, तानि प्रतिकृष्टानि सर्वेषान्तन्त्रं भवन्ति; तेषु तन्त्रेषु उत्तरेषामपि तन्त्रभावो युक्तः। कुतः?। यदि सर्वाणि तन्त्रेण क्रियन्ते, नास्ति तन्त्रभावे क्रमभेदः; अथ तु क्रमभेदः, ततः पूर्वस्य सर्वं गुणकाण्डम् अपवृज्य उत्तरस्योपक्रमेण भवितव्यं। तथा निर्वापान्तेषु प्रतिकृष्यमाणेषु क्रमभेदो भवति, न तावत् पूर्वस्य प्रोक्षणादीनि क्रियन्ते, यावदुत्तरस्य निर्वापान्तानि न कृतानि। अपि च, सर्वोपक्रमे युगपच्चिकीर्षा, तस्माच्च सत्यां यद् यद् आपतति, तत्तदनुष्ठानमाणविशेषत्वात् साधारणं भवति॥

सू॰ इष्टिरिति चैकवच्छ्रुतिः ॥ १९ ॥ (यु॰) ॥

भा॰ 'सैषाऽध्वरकल्पेष्टिः' इति चैकवच्छ्रवणं, तत्र तावदेकैवेष्टिः, यत्त्व एते यागाः यदि तु सह-क्रियन्ते, ततः सर्वसमाप्तौ यतीभावः पर्य्यवसितो भवति—इति एकवदुपचार उपपद्यते, तस्मात्तन्त्रम् ॥

नैतदेवं,—तन्त्रमङ्गानि-इति, किन्तर्हि?—भेदेन। कुतः?।

सू॰ अपि वा कर्म्मपृथक्त्वात्तेषान्तु तन्त्रविधानात् साङ्गानामुपदेशः स्यात् ॥ २० ॥ (सि॰) ॥

भा॰ कर्म्माणि तावदेतानि आग्नावैष्णवादीनि पृथग्भूतानि, 'तेषां' तन्त्रविधानं नानाकालेषु,—प्रातर्मध्यन्दिनेऽपराह्णे इति, तत्र-तत्रैषां 'साङ्गानामुपदेशः स्यात्', अतः कालभेदादङ्गानां गम्यते विशेषः; तस्मात् भेदः ॥

यत्तु, विशेषस्यैककालत्वादिति, तत्र ब्रूमः,—

सू॰ प्रथमस्य वा कालवचनम् ॥ २१ ॥ (१ आ॰ नि॰) ॥

भा॰ प्रथमस्य कर्म्मणो यो निर्वापस्तस्यैतत्कालवचनं,—'पुरा वाचः प्रवदितोर्न्निर्वपेत्' इति। 'ननु प्रकरणात् सर्वेषां प्राप्नोति'। न प्रकरणं धर्म्माणां विशेषकं, किन्तर्हि?—विनियोजकं,—इदमत्र भवतीति, एतत् प्रकरणस्य सामर्थ्यं, नास्य यस्येदमिति। यथाणां च निर्वापाणां प्रथमप्राप्तस्य पूर्वस्यैव विज्ञायते, तस्मान्नास्ति विशेषस्यैककालत्वं, कर्म्मणां च तन्त्रभेदः कालभेदादिति ॥

सू॰ फलैकत्वादिष्टिशब्दो यथाऽन्यत्र ॥ २२ ॥ (२ आ॰ नि॰) ॥

भा॰ यस्मिन्निष्टिरिति, भिन्नानामपि कर्मणामेकफलानां फलस्यैकत्व-मपेक्ष्यैकवचनं भवति, फलान्तत्वादीहायाः, यथा सर्वपृष्ठेष्टिः, मृगारेष्टिः सुमना नामेष्टिरिति ॥ (११।२।४अ॰) ॥

---

वसाहोमानां भेदेनानुष्ठानाधिकरणम् ॥

सू॰ वसाहोमस्तन्त्रमेकदेवतेषु स्यात् प्रदानस्यैक-कालत्वात् ॥ २३ ॥ (पू॰) ॥

भा॰ एकदेवताः पशव उदाहरणं,—'सप्तदश प्राजापत्यान् पशून् आलभते' इति । अस्ति तु प्रकृतौ अग्नीषोमीयपशौ वसाहोमः, 'याज्यानुवाक्यान्ते वसां जुहोति' इति ; स इह चोदकेन प्राप्यते । तत्र चिन्त्यते,—किं भेदेन वसाहोमः कर्त्तव्यः, अथ वा तन्त्रम्? इति । किं प्राप्तं?—"वसाहोमस्तन्त्रमेकदेवतेषु स्यात् प्रदानस्यैककालत्वात्",—वसाहोमः खलु एकदेवतेषु पशुषु तन्त्रं स्यात् । कुतः? । प्रदानस्यैक-कालभावात्,—एककालं तेषां प्रदानं,—'वैश्वदेवीं कृत्वा प्रचरन्ति' इति, देवता चैका प्रजापतिः; अतस्तेषामेकप्रदानत्वं ; प्रदानस्यैकत्वात् एकः सर्वेषां साधारणो याज्यानुवाक्यान्तः,तत्र क्रियमाणस्य होमस्येदमर्थं प्रति न दृश्यते विशेषः, तस्मात्तन्त्रम् ॥

सू॰ कालभेदे त्वावृत्तिर्देवताभेदे ॥ २४ ॥ (सि॰) ॥

भा॰ 'देवताभेदे' ऐकादशिनेषु भिन्नप्रदानेषु, भिन्ना याज्यानुवाक्यान्ताः;

तेषु दृश्यते विशेषः,—यस्य प्रदानस्य याज्यानुवाक्यान्तः कृतः, स तदर्थ इति, तस्मात् तत्र भेदः'॥ (११।२।५अ०)॥

---

यूपैकादशिन्यां तन्त्रेण यूपाहुत्यनुष्ठानाधिकरणम्॥

सू० अन्ते यूपाहुतिस्तद्वत्॥ २५॥ (पू०)॥

भा० ज्योतिष्टोमे यूपैकादशिनी, 'एकादश यूपान् छिनत्ति'-इत्याम्नाता। अस्ति तु प्रकृतौ अग्नीषोमीये पशौ यूपाहुतिः, सा किं भेदेन कर्त्तव्या, उत तन्त्रम्? इति। किं प्राप्तं?—"अन्ते यूपाहुतिस्तद्वत्," यद्वत् नानादेवतेषु वपाहोमो भेदेन, तद्वदियमपि भेदेन कर्त्तव्येत्यर्थः। कुतः?। 'यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति' इति श्रूयते, बहुत्वाच्च यूपानां भिन्नानि अन्तिकानि, यस्यैव यूपस्यान्तिके न क्रियेत, तस्यैव तेन गुणेन वर्ज्जनं स्यात्। तस्मात् भेदेन कार्य्या॥

सू० इतरप्रतिषेधो वा॥ २६॥ (सि०)॥

भा० अथ वा, नैव भेदेन कर्त्तव्येति, किन्तर्हि?—तन्त्रं। कस्मात्?। 'इतरप्रतिषेधो'ऽयं, आहवनीयप्रतिषेधोऽयं,* आहवनीयप्रतिषेधः, नान्तिकविधिः। कथं ज्ञायते?। 'आहवनीये जुहोति' इत्युत्सर्गात् सर्वहोमेषु आहवनीयः प्राप्तः, तत्र 'अग्निं मथित्वा' इति वाच्यं, तदपि मथनं प्राग्वंशे कर्म्मणः प्रवृत्तत्वात् प्राग्वंशे प्राप्तं, तत्रेदमपि वक्तव्यं,—'यूपस्यान्तिकेऽग्निं मथित्वा'—इति; उभयस्मिंश्चापि विधीयमाने

---

* 'आहवनीयप्रतिषेधोऽयं' इति इत्यंशः क० ख० २य पुस्तके नास्ति।

वाक्यभेदः, मन्थनस्य स्वार्थपरार्थवद्भावात्; तस्मात् अन्यतरत् अविवक्षितं मन्थनम् आन्तिकं वा; तत्र च मन्थनं विवक्षितम्, अविवक्षितम् आन्तिकमिति ब्रूमः। कुतः?। मन्थनविधिपरत्वाद्वाक्यस्य, एवं हि आह,—'यूपमच्छेष्यता होतव्यं न हि दीक्षितस्याग्नौ जुह्वति' इति, दीक्षितस्याग्नौ होमे दोषं मन्यते इति, तत्परिहारार्थं कल्पान्तरमुक्तं,—'वैष्णवीमनूच्य अच्छेष्यता' इति; तथापि अहोमे दोषमिव मन्यमानः पुनराह 'होतव्यमिति पुरुषस्यैव जुहोत्यायतने' इति; तदुभयमपि तत्र न शक्यमिति प्रतिषिध्य तृतीयं कल्पमाह,—'यूपस्यैव अन्तिकेऽग्निं मथित्वा तथा होतव्यं, तदुभयमपि शक्यं,—जुहोति, अथ न दीक्षितस्याग्नौ जुहोति इति, तत्र यदि 'यूपस्यान्तिके जुहोति' इत्येतद्विवक्षितं, न मन्थनं, तत्र आहवनीयमेव यूपस्यान्तिके नीत्वा होमः प्राप्नोति, 'आहवनीये जुहोति' इति नियमात्, तत्र 'न दीक्षितस्याग्नौ जुहोति' इत्येतन्न सम्बध्यते; अथ तु 'अग्निं मथित्वा' इत्येतद्विधीयते, तत आहवनीयप्रतिषेधो भवति, अन्योऽयमाहवनीयाद्यो मथ्यते, तत्रैतत्समर्थितं भवति,—जुहोति च, न च आहवनीये जुहोति इति। तस्मात् मन्थनं विधीयते, नान्तिकं, अनुवादमात्रमन्तिकस्य। 'कुतः प्राप्तेऽनुवादः ?'। सौकर्यात्,-सह अग्निना, यूपान्वेषणं दुष्करं, यूपान्तिके त्वग्निं मथित्वा सुकरो होमः; न्यायप्राप्तस्यानुवादः। एवं सति यदि अनन्तिके जुहोति, न दोषः। 'अथ कस्मात् मन्थनमात्रं कृत्वा आहवनीये एव न हूयेत ?'। अदृष्टं कल्पितं भवति। तस्मात् तन्त्रं यूपाहुतिः॥

सू॰ अशास्त्रत्वाच्च देशानाम् ॥ २७ ॥ (यु॰) ॥

भा॰ न च, अग्निकदेशाः शक्याः शासितुं, आपेक्षिकत्वात् अग्निकस्य। अथ परमाग्निकं गृह्येत, तदा यूप उपदह्येत, तच्च प्रतिषिद्धं। न च शक्यं परमाग्निकेऽग्निमन्थनं कर्त्तुं। तस्मादप्यविवक्षितत्वमग्निकस्य ॥ (११।२।६य॰) ॥

---

साङ्गस्यावभृथः अप्स्वनुष्ठानाधिकरणम् ॥

सू॰ अवभृथे प्रधानेऽग्निविकारः स्यान्नहि तद्धेतुरग्निसंयोगः ॥ २८ ॥ (पू॰) ॥

भा॰ अस्ति ज्योतिष्टोमेऽवभृथः ; तस्मिंश्च श्रूयते,—'अप्सु अवभृथेन चरन्ति' इति। तत्र विचार्यते,—किं प्रधानमात्रमप्सु कर्त्तव्यम्, अथवा अङ्गान्यपि ? इति। किं प्राप्तं ?–'अवभृथे प्रधानेऽग्निविकारः', प्रधानमात्रमप्सु कर्त्तव्यम्। कुतः ?। 'न हि तद्धेतुः अग्निसंयोगः', न हि अङ्गानां प्रधानहेतुकोऽग्निना संयोगः, 'यदाहवनीये जुहोति'-इति होममात्रेऽग्निर्विहितः, स यथा प्रधाने, तथाऽङ्गेषु। आपस्तु प्रधाने केवले विहिताः, 'अप्सु अवभृथेन चरन्ति' इति, अवभृथशब्दो हि वरुणदेवतस्य एककपालद्रव्यस्य यागस्य वाचकः, तदुत्पत्तिवाक्ये श्रुतत्वात्, 'वारुणेनैककपालेनावभृथं यन्ति' इति। न च, अत्र गमनं विधीयते, अर्थप्राप्तं तत् अप्सु, प्रचारवचनात् ; न चावभृथो नाम कश्चिद्देशोऽस्ति, यं वारुणेनैककपालेन गच्छेयुः। न च, वारुण एककपालोऽस्ति, येन गमनमुच्येत। तस्मादेककपालस्य

देवतासम्बन्धकरणमेवाभोच्यते, स च यागसहवचनोऽवभृथशब्दः, तस्मिन्नापो विहिताः, तासामङ्गेषु कः प्रसङ्गः ॥

सू० द्रव्यदेवतवत् ॥ २९ ॥ (यु०) ॥

भा० यथा द्रव्यमेककपालो वरुणश्च देवता प्रधाने विहितत्वात्, न अङ्गेषु भवतः, एवम् आपोऽपि ॥

सू० साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३० ॥ (सि०) ॥

भा० 'साङ्गो वा' अवभृथः अप्सु प्रवर्त्तेत। कुतः?। 'प्रयोगवचनैकत्वात्',—नाच आपोऽवभृथे श्रूयन्ते, किन्तर्हि?—प्रयोगे, नह्येतद्वचनम् 'अप्सु अवभृथे' इति, कथन्तर्हि?—'अप्सु अवभृथेन' इति, द्वे अपि पदे कारकवचने, न च, विशेषणविशेष्यता, उभयोः 'चरन्ति' इतिक्रियया सम्बन्धः, न मिथः। 'चरन्ति' इति च प्रयोगे उच्यते, तस्मात् प्रयोगाङ्गम् आपः। अविभक्तश्चाङ्गप्रधानानां प्रयोग;—इत्युक्तम् "अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्" (११।२।७सू०) इत्यत्र; तस्मात् साङ्गोऽवभृथोऽप्सु उपदिष्टः, न केवलः; अतोऽङ्गान्यपि तत्रैव कर्त्तव्यानि ॥

सू० लिङ्गदर्शनाच्च ॥ ३१ ॥ (१यु०) ॥

भा० लिङ्गञ्चैतमर्थं दर्शयति,–'अप्सु तृणं प्रास्य आचारमाचारयति' इति, यदि अङ्गानामप्सु प्रवृत्तिः स्यात्, उभयं विधीयेत,–'अप्सु आचारयति', 'तृणं प्रास्यति' इति च, तदा वाक्यभेददोषः स्यात्। अथ यथोक्तो न्यायः, तथा 'अप्सु' इति अनूद्य तृणप्रासनं केवलं विधीयते—इति, नास्ति दोषः ॥

अथ यदुपवर्णितं "द्रव्यदेवतवत्" इति, तत्र ब्रूमः,—

सू॰ शब्दविभागाच्च देवतानपनयः ॥ ३२ ॥ (२यु॰)॥

भा॰ विभक्तः शब्दः, प्रधानस्य अवभृथ इति वाचकः, अङ्गानामा-घारादयः शब्दाः; अवभृथशब्दसंयुक्तं च द्रव्यदेवतं, 'वारुणेनैककपालेन अवभृथं यन्ति' इति; तस्मान्न तत् अङ्गेषु भवति। आपस्तु प्रयोगाङ्ग-मित्येतमपदिष्टो हेतुः; अतोऽनुपवर्णनमेतत् ॥ (११।२।७अ॰) ॥

---

उत्तरदक्षिणविहारयोर्भेदेनाङ्गानामनुष्ठानाधिकरणम् ॥

वरुणप्रघासेषु विहारपृथक्त्वमाम्नातं,-'पृथगग्नी प्रणयतः पृथग्वेदी कुरुत' इति। तत्र श्रूयते, अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इति। इह विचार्यते,—'किं भेदेन दक्षिणविहारे अङ्गानि कर्त्तव्यानि, अथवा यान्येवोत्तरे कृतानि तान्येवेतरत्रापि उपकुर्वन्ति?' इति। किं प्राप्तम्?—

सू॰ दक्षिणेऽग्नौ वरुणप्रघासेषु देशभेदात्सर्वं क्रियेत ॥ ३३ ॥ (सि॰) ॥

भा॰ भेदेनाङ्गानि कर्त्तव्यानि। कुतः?। 'देशभेदात्',—देशो हि विभिद्यते, दक्षिणे उत्तरे इति, यानि उत्तरे विहारे प्रधानानि, तेषां तद्देशान्येव अङ्गान्युपकुर्वन्ति, "अङ्गानि तु विधानत्वात् प्रधानेनोप-दिश्येरन् तस्मात् स्यादेकदेशत्वम्"(११।२।७सू॰) इति; नान्यदेशायाः मारुत्याः। तस्मात्तदर्थं दक्षिणे विहारे भेदेन कर्त्तव्यानि इति ॥

सू॰ अचोदनेति चेत् ॥ ३४ ॥ (आ॰) ॥

भा॰ एवं चेत्पश्यसि,—देशभेदादङ्गानां पृथक्क्रियेति, नैतद्युक्तं,—

यन्कारणम्, 'प्रचोदना' अत्र मारुत्याः, यत्र यागः फलं प्रति चोद्यते, तत्र अङ्गानि गृह्णाति, न च, इह मारुत्याः फलं प्रति चोदना, क्व तर्हि ?—'चातुर्मास्यैः स्वर्गकामो यजेत' इति, न चेदिह कर्म्म चोद्यते, अङ्गानां प्राप्तिरेव नास्ति, कुतो भेदस्त्वन्नता वा ॥

सू० स्यात् पौर्णमासीवत् ॥ ३५ ॥ (आ०नि०) ॥

भा० 'स्यात्' अङ्गानां प्राप्तिः, 'पौर्णमासीवत्', तद्यथा, 'पौर्णमास्यां पौर्णमास्यां यजेत' इति न तावत् कर्म्मफलं चोद्यते, अन्यत्रैव तच्चोदितं,—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति ; अथ च साङ्गं प्रधानं पौर्णमास्यां क्रियते इति ; एवमिहापि भविष्यति ॥

सू० प्रयोगचोदनेति चेत् ॥ ३६ ॥ आ०) ॥

भा० अथोच्येत,—प्रयोगस्तत्र पौर्णमास्यां चोद्यते, 'यजेत' इत्याख्यातेन, प्रयोगश्चाङ्गप्रधानानां विवक्षितः, प्रयोगाङ्गञ्च कालः । तस्मात् तत्र साङ्गं प्रधानं पौर्णमास्यां क्रियते इति । अत्र ब्रूमः,—

सू० अयेव ॥ ३७ ॥ (आ० नि०) ॥

भा० इहापि मारुत्याः प्रयोगश्चोद्यते, 'आसादयति' इत्यनेन आख्यातेन, यथा च कालः प्रयोगाङ्गम्, एवं देशोऽपि; तस्मात् मारुत्यपि साङ्गा दक्षिणे विहारे कर्त्तव्या ।

ननु न 'आसादयति'शब्देन याग उच्यते, कथं तस्य प्रयोगं वक्ष्यति' । आह, यागार्थमेतदासादनं यथा प्रकृतौ, तथा दृष्टार्थं भवति, इतरथाऽदृष्टार्थः कल्पयितव्यः स्यात्, यागार्थञ्चेत् तच

यागोऽवश्यं कार्यः। सैषा लक्षणया यागचोदना भवति, यथा 'सौम्यं चरुन्निर्वपेत्, सौम्यं बभ्रूमालभेत' इति। तस्मादिहापि मारुत्याः प्रयोगश्चोद्यते, तथा च प्राप्तानां सङ्गानां भेदेन क्रिया॥

सू॰ आसादनमिति चेत्॥ ३८॥ (आ॰)॥

भा॰ आह,—न, आसादयतिशब्देन याग उच्यते, किन्तर्हि?—आसादनं। 'ननु लक्षणया यागं वक्ष्यति'।. न श्रुतिमुत्सृज्य लक्षणा आश्रयणीया। 'आसादनस्य दृष्टार्थत्वेन आश्रयिष्यते'। आश्रीयेत, यदि आसादनं दृष्टार्थं सम्भवति; यदि दक्षिणेऽग्नौ मारुत्या होमः सिद्धः स्यात्, ततस्तत्समीपे नयनं दृष्टार्थं भवेत्, स त्वसिद्धः। प्रकृतौ तु एकत्वात् आहवनीयस्य, तत्रैव सिद्धो होमः, अतस्तत्सन्निकर्षे नयनं दृष्टार्थं सम्भवति, नत्विह तथा; नचेत् दृष्टार्थता युज्यते, श्रुत्यर्थ एव ग्राह्यः, तस्मादासादनम् आसादयतिशब्देनोच्यते, न यागः॥

सू॰ नोत्तरेणैकवाक्यत्वात्॥ ३९॥ (आ॰नि॰)॥

भा॰ नैतददृष्टार्थमासादनं। कुतः?। 'उत्तरेणैकवाक्यत्वात्'—'अथ उत्तरे विहारे हवींषि आसादयति',—अनेनोत्तरविहारसम्बन्धेन पद-समुदयेन, 'मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इत्येतस्य 'एकवाक्यत्वात्' एवं ज्ञायते,—यथा न आसादनमदृष्टार्थमिदं। तत् कथं कृत्वा?। आहवनीयद्वयेऽव्यवस्थया हविषां होमः प्राप्तः, तदनुविधानादासादन-मपि तथैव प्राप्तं; तच्च व्यवस्थामात्रमनेन क्रियते, यथाप्राप्तस्य च व्यवस्था, होमाय च प्राप्तं, न अदृष्टाय। तस्मात् होमार्थमासादनं॥

अपर आह,—एकस्मिन् वाक्ये एक एवायमासादयतिशब्द उभयोर्विहारयोरासादनमाह, उत्तरस्मिंश्च यत्तं तद्धोमार्थं, तस्मिंश्चोच्चारणे, दक्षिणे होमार्थं न भविष्यति—इत्येतन्नोपपद्यते, तस्मादुभयत्र होमार्थं। अथोच्येत,—'आसादनमेवेदं विधीयते,यत्र दृष्टार्थं भवति, तत्र दृष्टार्थं, यत्र न सम्भवति तत्र अदृष्टार्थम्' इति। तच्च न, विध्यनुवादयोर्यौगपद्यप्रसङ्गात्,—यत्र दृष्टार्थं तत्रानूद्यते, प्रकृतितः प्राप्तत्वात्, यत्र अदृष्टार्थं तत्र विधीयते, तदुभयं युगपत् न सम्भवति। तस्मादयुक्तमेतत्। 'अथ होमार्थत्वे सति कस्मात् चोदना* कल्पते, न आसादनमात्रमेवेत्याह, होमस्यान्यत्र इति'। नैवं, आसादनं हि होमार्थं भवति, नान्यत्र आसाद्यमानमन्यत्र होमार्थं भविष्यति॥ अपि च,—

सू० अवाच्यत्वात्॥ ४०॥ (हे०)॥

भा० न च होमार्थमासादनं वक्तव्यं, सति होमे प्रकृतित एव प्राप्नोति, यागस्तु वक्तव्यः। स च सति होमे शक्यते लक्षणया अनेन वक्तुं। तस्मादत्रापि आसादयतिशब्देन पौर्णमासीवद् यागस्य प्रयोग उच्यते; तथा च तन्त्रभेदः॥

सू० आम्नायवचनं तद्वत्॥ ४१॥ (यु०)॥

भा० वैदिकवचनं तद्वद् युक्तं भविष्यति, यद्वत् न्यायोपदिष्टः। 'यदेव अध्वर्युः करोति तत् प्रतिप्रस्थाता करोति' इति। तथा 'यस्मिन्नेव होमास्तस्मिन् ब्रूते देवतायजान्†' इति दक्षिणेऽपि विहारे

* 'यागचोदना' इति का० श्रौ० पु० पाठः।
† 'देवतायजानि' इति का० श्रौ० पु० पाठः।

देवतायागं दर्शयति, तद्यागार्थे आसादयतिशब्दे युज्यते। तस्मा-दप्येवम्॥ (११।२।८अ०)॥

---

उत्तरदक्षिणविहारयोः कर्तृभेदाधिकरणम्।

सू० कर्तृभेदस्तथेति चेत्॥ ४२॥ (पू०)॥

भा० तत्रैव चिन्त्यते,—किं कर्त्तारो भेदेन, उत, तन्त्रम्?—इति। किं प्राप्तम्?,—'कर्तृभेदस्तथा', यथा अङ्गभेदः,—अष्टानां हविषां साङ्गानां कर्तृभिरुत्तरे विहारे प्रचरितव्यम्, इतरैर्दक्षिणे। एवं यथादेशं साङ्गानि प्रधानानि कृतानि भवन्ति, तेन चौत्तरवैहारिकाः कर्त्तारो गृह्यमाणविशेषा दक्षिणे विहारे नोपकुर्वन्ति; तस्मात् कर्चन्तरैर्भवितव्यम्॥

सू० न समवायात्॥ ४३॥ (सि०)॥

भा० न, एतदेवम्,—अङ्गवत् कर्तृभेद इति,—किन्तर्हि?—तन्त्रेण कर्त्तारः स्युः। कुतः?। 'समवायात्',—वचनेन हि कर्त्तारः समवयन्ति अत्र, 'चातुर्मास्यानां यज्ञक्रतूनां पञ्चर्त्विजः' इति। समुदायसम्बन्धेऽपि सति अवयवा एव कर्तृभिः सम्बध्यन्ते, वरुणप्रघासानामपि तदवयवत्वात् पञ्चभिरभिसम्बन्धोऽभ्युपगम्यते; एकस्यायं वरुणप्रघासानां प्रयोगः, एककालत्वात् समानोपक्रमोपसंहाराच्च। तद् यावद्वचनं तावदेवात्र भेदेन कर्त्तव्यं, नान्यदपि, न च, कर्तॄणां भेद उक्तः, तस्मात् तन्त्रेण भवन्ति इति।

'तत्रैतत् स्यात्, प्रधानभेदे उक्तेऽनुक्तोऽपि अङ्गानां भेदोऽभ्युप-गम्यते। कुतः?। अङ्गानां प्रधानगामित्वात्, यथैव*

---

* 'यथैवेह' इति का० क्री० पाठः।

प्रयाजादीनां माहत्या भेदाद्भेदेन क्रिया एवमङ्गभूतत्वात् कर्तॄणां प्रयाजादिवत् कस्माच्च भेदोऽध्यवसीयते' इति।

तत्रोच्यते,—अङ्गत्वाविशेषेऽपि सति अन्यथाजातीयोऽन्यस्याङ्गस्य उपकारः, अन्यथाजातीयोऽन्यस्य, प्रयाजादीनि अदृष्टेनोपकारसम्बन्धेन उपकुर्व्वन्ति, वर्हिरादीनि यागद्रव्यधारणेन, अपराणि अधिकरण-संस्कारद्वारेण; तानि यागदेशाधिकरणभेदाद् भिद्यन्ते; कर्त्तारस्तु क्रियानिर्वृत्त्योपकुर्व्वन्ति, तेन ते देशभेदेऽपि सति प्राकृतोपकार-प्रत्यभिज्ञानात् तन्त्रेण क्रियानिर्वृत्तिं शक्नुवन्ति कर्त्तुमिति न भिद्यन्ते

'कः पुनः प्राकृत उपकारः ? इति'। होता तावदयतो गार्हपत्यस्य पश्चादाहवनीयादवस्थितो याज्यानुवाक्यावचनेन सम्बोधयन् यागस्य कर्त्तेत्युच्यते, शक्नोति तद्देशावस्थित एव सामीप्यात् तन्त्रेण क्रमप्राप्तं यागं कुर्व्वाणमध्वर्य्युवत् प्रतिप्रस्थातारमपि सम्बोधयितुमित्यतो न भिद्यते; तथा अग्नीध्रः, समानत्वादुत्करदेशस्य, तत्रावस्थित एव प्रत्याश्रावणेन उभौ कर्त्तारावनुग्रहीतुं, अतोऽसावपि न भिद्यते। तथा ब्रह्मा दक्षिणतोऽवस्थितः, उभयोराहवनीययोः समानत्वात् देशस्य, य एवोत्तरस्य दक्षिणः स एव दक्षिणस्य दक्षिण इति, तत्र अवस्थितः कृताकृतप्रत्यवेक्षणेन अनुज्ञावचनेन च शक्नोति उभावपि अनुग्रहीतुम, अतस्तस्याप्यभेदः। अध्वर्य्युप्रतिप्रस्थात्रोस्तु वचनाद्भेद उक्त एव इत्यदोषः। तस्मान्न कर्त्तृभेदैर्भवितव्यं॥

सू॰ लिङ्गदर्शनाच्च॥ ४४॥ (यु॰)॥

भा॰ लिङ्गश्चैतमर्थं दर्शयति,—'प्रत्यक्सद्दषभं दक्षिणां ददाति' इति दक्षिणैक्यमाह, तत् एककर्तृत्वेनोपपद्यते, अन्यथ दक्षिणाभावाच्च

याजयेयुः। 'ननु अन्वाहार्य्येण याजयिष्यन्ति'। न ज्ञायते, क अन्वाहार्य्यः, क ऋषभः इति, विशेषाग्रहणादुभयत्र ऋषभः। उपादेयत्वेन चोदितस्यैकत्वं विवक्षितं, तस्माद्दक्षिणैक्यं, तथा च तन्त्रं कर्त्तारः॥

सू० वेदिसंयोगादिति चेत्॥ ४५॥ (आ०)॥

भा० अथोच्येत,—वेदिसंयोगो होतुः श्रूयते,—'अन्तर्वेदि अन्यः पादो होतुर्भवति बहिर्वेदि अन्यः' इति, एकस्य होतुः पाद उभयत्र उपकर्त्तुम् असमर्थः; तस्मात् कर्तृभेदः॥

सू० न देशमात्रत्वात्॥ ४६॥ (आ० नि०)॥

भा० न, एतदेवं। कस्मात्?। 'देशमात्रत्वात्',—नात्र होतुः पादो वेदेरुपकारार्थेनोपदिश्यते, किन्तर्हि?—देशमात्रमेतद्विधीयते, तस्मिन् देशे होत्रा स्थातव्यं, यत्रास्यैकः पादोऽन्तर्वेदि भवति, बहिर्वेदि अन्य इति। कुतः?। एकवाक्यत्वात्, एकमिदं वाक्यं युक्तं, सन्निध्यनुग्रहात्, एकार्थत्वाच्च। यदि च होतुः पादो वेद्यङ्गत्वेनोपदिश्येत, एकस्मिन् अन्तर्वेदि निहिते कृतः श्रुत्यर्थः इति द्वितीयस्यानियमः स्यात्, सोऽपि विधातव्यो 'बहिर्वेदि अन्यः' इति। 'कथं पुनः 'एकोऽन्तर्वेदि' इत्युक्ते द्वितीयोऽपि तत्र प्रसज्येत?'। अप्रतिषिद्धत्वात्, यदि द्वयोरन्तर्वेदि अन्यतः प्राप्तिः स्यात्, तत एकस्य वचनं द्वितीयनिवृत्त्यर्थं, न चास्ति प्राप्तिः; तस्मादस्ति प्रसङ्गः, तथा च वाक्यभेदः। अथ तु देशविशेषविधानार्थमेतत्, ततस्तदेताभ्यां उभाभ्यां सम्भूय क्रियते इति एकार्थत्वादेकवाक्यत्वमुपपन्नं। तस्मान्न होतृपादो वेदेरुपकारकः न उभयत्र विधेयः॥ (११।२।८ अ०)॥

उत्तरदक्षिणविहारयोः आपराग्निकहोमानां भेदेनानुष्ठानाधिकरणम् ॥

सू० एकाग्नित्वादपरेषु तन्त्रैः स्यात् ॥ ४७ ॥ (पू०) ॥

इदमपरं तत्रैव चिन्त्यते। किम् आपराग्निका होमाः तन्त्रं कार्य्याः, उत, भेदेन? इति। किं प्राप्तं?—'तन्त्रम्' इति। कुतः?। 'एकाग्नित्वात्',—पौर्व्वाग्निकानामग्निभेदाद् भेद उक्तः, इह स हेतुर्नास्ति, एकाग्नित्वादेतेषां, तस्मादेते तन्त्रं भवेयुः ॥

सू० नाना वा कर्तृभेदात् ॥ ४८ ॥ (सि०) ॥

भा० 'नाना' भवेयुः। कुतः?। 'कर्तृभेदात्', मात्रया यानि अङ्गानि, तानि प्रतिप्रस्थातुः कर्म्माणि, इतरच अध्वर्य्योः। तन्त्रभावे अन्यतरेषां कर्तृकृतं वैगुण्यं स्यात्, तस्माद् भेदः ॥(११।२।१०।अ०)॥

---

वाजपेये ब्रह्मसाम्न्यालम्भस्य कर्म्मान्तरचोदनाधिकरणम् ॥

सू० पर्य्यग्निकृतानामुत्सर्गे प्राजापत्यानां कर्म्मोत्सर्गः श्रुतिसामान्यादारण्यवत्तस्माद् ब्रह्मसाम्नि चोदना-पृथक्त्वं स्यात् ॥ ४९ ॥ (पू०) ॥

भा० वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते,—'तान् पर्य्यग्निकृतान् उत्सृजन्ति, ब्रह्मसाम्नि आलभते' इति। तत्र विचार्य्यते, 'तान् पर्य्यग्निकृतानुत्सृजन्ति' इति किमयं कर्म्मशेषप्रतिषेधः, 'ब्रह्मसाम्नि आलभते' इति कर्म्मान्तरचोदना, अथ वा, पूर्व्वः पर्य्यग्निकरणात् परेषां संस्काराणां प्रतिषेधार्थः, उत्तरश्च तेषामेव कालान्तरे प्रतिप्रसवार्थः? इति। किं प्राप्तं?—'कर्म्मोत्सर्गः' कर्म्मशेषप्रतिषेध इत्यर्थः। 'श्रुति-

सामान्यात् आरण्यवत्',—यथा, 'पर्य्यग्निकृतानारण्यान् उत्सृजन्ति' इत्ययं कर्म्मशेषप्रतिषेधः,—इत्युक्तं "शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत् (९।४।५२सू०)" इति, तया श्रुत्या तुल्येयं श्रुतिः। 'किमनयोस्तुल्यं?'। तत्र कर्म्माणि चोदितानि, 'वसन्ताय कपिञ्जलानालभते' इति; तेषु सर्वेषु प्राकृता गुणाः प्राप्ताः, तेषु पर्य्यग्निकरणान्तं गुणकाण्डं पुनः श्रुतं,—'पर्य्यग्निकृतानुत्सृजन्ति' इति; निर्गुणं पुनर्वचनमितरपरिसंख्यायकं भवतीति कर्म्मशेषस्य प्रतिषेधकं विज्ञायते; एवमिहापि,'प्राजापत्याना-लभेत' इति चोदितानां कर्म्मणां तथैव सर्वाङ्गेषु प्राप्तेषु इदं पर्य्यग्नि-करणान्तस्य गुणकाण्डस्य निर्गुणं पुनर्वचनं कर्म्मशेषस्य निवर्त्तकं; यस्माच्चैवं, तस्मात् 'ब्रह्मसाम्नि आलभते' इति कर्म्मान्तरचोदना स्यात्, पूर्वापेक्षया—ब्रह्मसाम्नि आलभते सप्तदश प्रजापत्यानिति॥

सू० संस्कारप्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात्॥ (सि०)॥ ५०॥

भा० न वा, कर्म्मशेषप्रतिषेध इति, किन्तर्हि?—संस्काराणां प्राप्तावसराणां तस्मादवसरात् प्रतिषिध्य ब्रह्मसाम्नि प्रतिप्रसवः। किं-कारणं?। 'वाक्यैकत्वे क्रतुसामान्यात्',–एकमिदं वाक्यं 'तान् पर्य्यग्नि-कृतानुत्सृजन्ति, ब्रह्मसाम्नि आलभते' इति। कथं ज्ञायते?। 'आलभते' इति द्रव्यदेवतस्याश्रवणात्, समाने च क्रतौ वाक्यैकत्वं भवति, तदा हि केवल आलम्भो वक्तव्यो द्रव्यदेवतस्योक्तत्वात्। अथ वाक्यभेदःस्यात्, ततः पूर्वेण कर्म्मशेषः प्रतिषिध्येत, परेण कर्म्मान्तरं चोद्येत; तत्र द्रव्यदेवतं वक्तव्यं। यत्तु 'पूर्वोक्तं सम्भत्स्यते' इति। तत् तत्रैव कृतार्थ-

स्तादिह न सम्बध्येत ! तस्मात् एकं वाक्यं । 'नन्वेकस्मिन्नपि क्रतौ पूर्वेण संस्काराः प्रतिषिध्यन्ते, परेण विधीयन्ते इति अर्थभेदाद्वाक्यभेद एव भवति'। न हि, 'ब्रह्मसाचि आलभते' इत्युक्ते अर्थादेव पर्य्यग्निकरणान्तः उत्सर्गः सिद्धः, स न विधीयते, तमनूद्यालम्भः केवल उत्क्रष्येत—इति नास्ति क्रतुसामान्ये वाक्यभेदः॥

सू॰ वपानाञ्चानभिघारणस्य दर्शनात्॥ ५१ ॥ (यु॰)॥

भा॰ 'सव्या वा एतर्हि वपा यदनभिघृता ब्रह्म वै ब्रह्मसाम यत् ब्रह्मसाचि आलभते तेनासव्यास्तेनाभिघृता' इति, यदि संस्कारप्रतिषेधः, ततो जुह्वाः सवनीयप्रचारेण रेचितत्वात् प्रयाजशेषो नास्ति, तदभावादनभिघृतत्वं युज्यते ; अथ कर्म्मशेषप्रतिषेधः, ततो ब्रह्मसाचि आलम्भः कर्म्मान्तरं, तत्र प्रयाजाः पुनरिज्यन्ते, तेषां शेषोऽस्ति, तेनाभिघारणं स्यात्, अनभिघारणदर्शनं नोपपद्येत ! तस्मादपि संस्कारप्रतिषेधः॥ (११।२।११।अ॰)॥

---

अहीने उद्गाणामुत्सर्गस्य कर्म्मशेषप्रतिषेधार्थताधिकरणम्॥

अस्ति पञ्चशारदीयोऽहीनः* 'मारुतीयः पञ्चशारदीयो यः कामयेत बहु स्यामिति स एतेन यजेत' इति। तत्र श्रूयते,—'वैशाख्या-

---

* "स च पञ्चसु वर्षेषु अनुष्ठेयः, तत्र प्रथमे वर्षे विशाखानक्षत्रयुक्तायाममावास्यायां सप्तदश औपवसः सप्तदश उक्षाणश्च विहिताः। तेषु सर्वेषु पर्य्यग्निकृतेषु प्रोक्षितेषु च सत्सु औपवसूनामालम्भं पशूनामुत्सर्गञ्च आम्नाय पुनर्द्वितीये तृतीये चतुर्थे च वत्सरे तथैवानुष्ठानमाम्नाय पश्चात आम्नायते, 'चौक्षीन् एकैकस्मिन्नव्यालभेरन् पञ्च उक्षणोऽवमि' इति न्यायमाला॥

ममावास्यायां षष्ठद्व माह्तीस्त्रिवत्सा अप्रवीता उपाकरोति' इति। 'षष्ठद्व प्रश्नीनुत्कृष्टान् पर्य्यग्निकृतान् प्रोक्षितानितरा आलभन्ते* प्रेतरानुत्सृजन्ति' इति। 'ततः संवत्सरे राजीवा आनयन्ति तांस्त्रैवोत्कृष्टाः तान् पर्य्यग्निकृतानितरा आलभन्ते प्रेतरानुत्सृजन्ति' इति। तत्र सैव चिन्ता, किमुत्कृष्टानामुत्सर्गः आरण्यवत् कर्म्मभ्रेषप्रतिषेधः, अथ वा, प्राजापत्यवत् संस्कारकर्म्मप्रतिषेधः, तेषां च सुत्यासु प्रतिप्रसवः,-पौंस्नीनुत्कृष्टाः एकैकस्मिन् अहनि आलभन्ते पञ्चोत्तमे ?—इति। यदि कर्म्मभ्रेषप्रतिषेधः, प्रतिवर्षम् अन्ये उपायः; अथ संस्कारप्रतिषेधः, ततस्त एव पञ्च वर्षाणि उपरुध्यन्ते, पुनः पुनः संक्रियन्ते, अन्यथासु सुत्यासु आलभ्यन्ते इति। तत्र किं प्राप्तम् ?—

सू॰　पञ्चशारदीयास्तथेति चेत्॥ ५२॥ (पू॰)॥

भा॰　इति चेत् पश्यसि, कथं पञ्चशारदीयाः? इति; 'पञ्चशारदीयास्तथा,' यथा अनन्तरा प्राजापत्याः; संस्कारप्रतिषेध इत्यर्थः। एवं प्रकृतप्रत्ययो भवति, स एवमनुग्रहीष्यते, इतरथा, प्रकृतहानम् अप्रकृतप्रत्ययश्च भवेत्। एवञ्च, 'तांस्त्रैवोत्कृष्टाः' इत्यपेक्षावचनं युक्तं भविष्यतीति; प्रायश्चित्तविधानं च,—† 'यदि कूटः काणो वा भवेत् बार्हस्पत्यं चरुं निर्वपेत्। यदि प्रपतेद्वायव्यं चरुं। यदि

---

* 'आलभते' इत्यादयंपुस्तकस्य पाठः। 'आलभते' इति का॰ क्री॰ पु॰ पाठः। परन्तु उभयत्रैव पुस्तके परत्र क्वचित् क्वचित् 'आलभन्ते' इति पाठो वर्त्तते।
† "प्रायश्चित्तविधानञ्च" इत्यंशः सूत्ररूपेण का॰ क्री॰ पुस्तके धृतः।

अवधीदेवैच्छन्तं चरुम्' इति निरङ्गानामेतानि निमित्तानि उपपद्येरन्। तस्मात् संस्कारप्रतिषेधः॥

सू॰ न, चोदनैकवाक्यत्वात् ॥५३॥ (सि॰)॥

भा॰ नैतदेवं,—संस्कारप्रतिषेध इति, कथन्तर्हि, कर्म्मप्रतिषेधः। कुतः?। 'चोदनैकवाक्यत्वात्,'—'सप्तदश मारुतीः पृश्नीरुपाकरोति' इति कर्म्मचोदनैषा, द्रव्यदेवतासम्बन्धात्; तयैकवाक्यमेतत्,—'सप्तदश पृश्नीनुक्ष्णः' इति। 'कथं ज्ञायते?'। 'सप्तदश पृश्नीनुक्ष्णः'* इत्येतावत् अपरिसमाप्तं, तत् पूर्व्वापेक्षया परिसमाप्यते, 'मारुतानालभते' इति।

'एवं सति अनुषङ्गोऽवश्यं भवति, तथा च समत्वाद्वाक्यभेदः, किमुच्यते,—चोदनैकवाक्यत्वादिति?'। आह,—यद्यसावस्य शेषत्वेन अपेक्ष्यते, ततोऽनुषङ्गः, अथायं तस्य, तत एकवाक्यत्वम्; इदं तस्य शेषत्वेनापेक्षिष्यामहे। एतच्चात्र युक्तं, यत्, अयं तस्य शेषः स्यात्, न असौ अस्य; तच्छेषत्वे अपेक्षामात्रम्, इतरथापेक्षानुषङ्गाभ्यां चार्थेन च संबध्येत,—सप्तदश च पृश्नीर्मारुतीरुपाकरोति, सप्तदश च

* "सप्तदश पृश्नीनुक्ष्णः इत्यस्य साकाङ्क्षत्वात् निराकाङ्क्षीकरणेन भवितव्यं, तच्च मारुतीरालभते इत्यनेन मनसि विपरिवर्त्तमानेन निराकाङ्क्षीक्रियते। तत्र च द्वयी मतिः,—यदि वा अनडुहः प्रति मारुतीरालभते इत्यनुषज्यते, अथवा मारुतीरुपालभते इत्येतत् प्रति अनड्वाहो नीयन्ते। तत्रैव निर्णयः,—अनड्वाहः सापेक्षाः, तेन यस्मिन्नेव वाक्ये विधीयमानाः बध्यन्ते तस्मिन्नेव वाक्ये अनड्वाहोऽपि, तेन न, मारुतीरालभते इत्यस्य प्रथमं वत्सतरीभिः सम्बन्धः पश्चादनडुद्भिः अनुषङ्गः किन्तु युगपदेव वत्सतरीणां अनडुहाञ्च उपाकरोतीत्यनेन आख्यातेनान्वयः। एवञ्च परस्परापेक्षित उभयाकाङ्क्षानिमित्तः सम्बन्धो भवति, एकवाक्यत्वञ्च भविष्यति, इतरथा पूर्व्वस्मिन् वाक्ये निराकाङ्क्षीभूतस्यास्य पुनराकाङ्क्षा कल्पनीया, पश्चात् सम्बन्धः कल्प्यः, वाक्यभेदः स्फुट एव" इति तन्त्ररत्नम्।

पृश्नीमुक्षण:—इति। चार्थो न च वक्तव्य:, प्रत्ययादेव गम्यते। तस्मादेकेन अनेन वाक्येन चतुस्त्रिंशदेतानि कर्माणि चोद्यन्ते, तेषां सप्तदशानां पर्य्यग्निकरणान्त उत्सर्गः क्रियते, सप्तदशसु यथाप्रकृति। एवम् उत्तरास्वपि चोदनासु। नचोत्सृष्टानां कर्म्मान्तरे उपयोगो युज्यते, अस्तत्वात् यातयामत्वाच्च। तस्मात् आरण्यवत् कर्म्मशेषप्रतिषेधः, अन्ये चाम्ने चोद्याच:, पूर्व्वासामुक्षणाम् अभावात् प्रकृतदानं, प्रायश्चित्त-मप्युपाकृतानां प्राक् उत्सर्गात्। अपेक्षावचनमपि, तेषामभावात्, अन्यान् तादृशानेवापेक्ष्य भवेत् पृश्नीन् मारुतांश्च; यथा, तामेव यावागूं अहं पिबतीति, तान्येवौषधानि, स एव तित्तिरिरिति॥

सू॰ संस्काराणाञ्च दर्शनात्॥ ५४॥ (यु॰)॥

भा॰ संस्कारांश्च प्रतिवर्ग दर्शयति,—'तान् पर्य्यग्निकृतान् प्रोक्षितान् इतरा आलभन्ते प्रेतरानुत्सृजन्ति' इति। 'ननु वचनमेतद् भविष्यतीति'। न, वाक्यभेदप्रसङ्गात्,—पर्य्यग्निकरणं करोति, पर्य्यग्निकृतांस्तानुत्सृजन्ति—इति। अपि च, वत्सतरीणामुक्ष्णां च युगपत् पर्य्यग्निकरणमुच्यते, तत् वत्सतरीषु प्रकृतितः प्राप्तत्वादनूद्यते, इतरेषु अप्राप्तत्वात् विधीयते, एतन्नोपपद्यते, सत्सु संस्कारेषु एतदुभयं न युज्यते, यागे च सत्वं; तस्मादुभयत्र यागः॥ (११।२।१२ अ॰)॥

---

अभिषेचनीयदशपेययोर्भेदेन प्रयोगाधिकरणम्।

राजसूयेऽभिषेचनीयदशपेयावेकाहौ। तत्र चिन्त्यते,—किं तयोः तन्त्रं प्रयोगः, अथवा भेदेन? इति। किं प्राप्तम्?—

सू० दशपेये क्रयप्रतिकर्षात् प्रतिकर्षः ततः प्राचां तत्समानं तन्त्रं स्यात् ॥ ५५ ॥ (पू०) ॥

भा० समानं तन्त्रम् अनयोः। कुतः?। दशपेयस्य क्रयः प्रतिकृष्यते,— 'सह सोमौ क्रीणात्यभिषेचनीयदशपेययोः' इति। अभिषेचनीयस्य पूर्व्वकालीनत्वात्तत्क्रयकाले दशपेयक्रयस्य प्रतिकर्षः, स प्रतिकृष्यमाणः ततः प्राग्भाविनः पदार्थान् प्रतिकर्षति, "तदादि वाभिसम्बन्धात् तदन्तमपकर्षं स्यात्" (५।१।२४ सू०) इति, अतस्तयोरेकाहयोस्तन्त्रं प्रक्रमः; तन्त्रप्रक्रान्तयोः प्रवृत्तितन्त्रत्वमेव समाप्तिर्युक्ता; तस्मात् समानतन्त्रौ ॥

सू० समानवचनं तद्वत् ॥ ५६ ॥ (यु०) ॥

भा० 'समानो वै एष यज्ञो यद्दशपेयश्चाभिषेचनीयश्च' इति, तन्त्रस्य समानत्वाद्यज्ञयोः समानत्वम्, आत्मना भिन्नत्वात् ॥

सू० अप्रतिकर्षो वार्थहेतुत्वात् सहत्वं विधीयते ॥
॥ ५७ ॥ (सि०) ॥

भा० न वा प्रतिकर्षः क्रयस्य। कुतः?। 'अर्थहेतुत्वात्', द्वाविमौ क्रयौ, एकोऽर्थहेतुकः, अन्यः शब्दकृतः, यत्, प्राक् क्रतुप्रवृत्तेः, यज्ञसाधनोपार्ज्जनकाले सोमविक्रयिणा सह संवादः, सोमस्य परिक्रयणं मूल्यपरिच्छेदः, सोऽर्थादवश्यं करणीयः, तस्मिन्नकृते क्रतोरेव प्रवृत्तिर्न युक्ता। कुतः?। क्रतुकाले कदाचित् सोमो न स्यात्, विक्रेता वा मत्तः नार्थेन वा दद्यात्, तथा क्रतुरेव न संवर्त्तेत। तस्यैतत्कृतत्वम् उच्यते। किंकारणम्?। मुख्यत्वात्, तथैव च क्रयो निर्वर्त्तनीयः,

मूल्यार्पणमात्रं परिशिष्टं । यदन्यत्तत्र 'कलया ते क्रीणामि' इत्येवमादि, तत् धर्म्ममात्रं, परतन्त्रत्वादेव विक्रेतुः । एवञ्च सति भिन्नकालयोर्यथा-कालमेवाङ्गानि भविष्यन्ति । दृष्टश्च तस्मिन्नुपसंवादे क्रयार्थे क्रीणातेः प्रयोगः,—देवदत्तेन सहस्राभिर्धान्यं क्रीतं,—उपक्रा संहृता इति । अतः तस्य वादः । स च बहिः क्रतोः, वर्त्तते । तस्मान्नास्ति प्रतिकर्षः, कालभेदाद्यथोक्त एव तन्त्रभेदः ॥

सू० पूर्वस्मिंश्चावभृथस्य दर्शनात् ॥ ५८ ॥ (१ यु०) ॥

भा० पूर्वस्मिंश्चाभिषेचनीयेऽवभृथदर्शनं भवति । कथं ? । समानं वै एतद्यज्ञं विच्छिन्दन्ति* यदभिषेचनीयस्यावभृथमभ्यवयन्ति' इति । तदेवमवभृथदर्शनं पूर्वस्मिन्नुपपद्येत, यदि भेदेन तन्त्रप्रवृत्तिः, इतरथा दशपेयान्ते अवभृथः स्यात् ॥

सू० दीक्षाणाञ्चोत्तरस्य ॥ ५९ ॥ (२ यु०) ॥

भा० दशपेयस्य च पृथग् दीक्षाणां दर्शनं, तथा अभिषेचनीयस्य दीक्षा वर्द्धयेयुः, यथा 'दशमेऽहनि दशपेयः संपद्यते, सद्यो दीक्षयति सद्यः सोमं क्रीणाति' इति; इतरथाऽभिषेचनीये एव दशपेयस्यापि दीक्षाः स्युः, तत्र एतद्दर्शनं नोपपद्यते ॥

यत्तु, समानवचनं तद्वदिति, तत्र ब्रूमः,—

सू० समानः कालसामान्यात् ॥ ६० ॥ (पू० यु० नि०) ॥

भा० एकस्मिन् काले एतौ सोमौ वर्त्तेते, तत उत्तरे संवत्सरादूर्द्ध-

* का० श्री० पुस्तके 'विच्छिन्दन्ति' इत्यत्र 'विच्छिन्दति' इति पाठो न साधुरिव प्रतिभाति ।

मेतत्कालसामान्यमपेक्ष्य तत्समानवचनं न अन्यथोपपद्यते इति, तस्मात् तन्त्रभेदः॥ (११।२।१३अ०)॥

---

'वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्ति' इत्यस्य कर्मान्तरोपदेशताधिकरणम्॥

वरुणप्रघासेषु* श्रूयते, 'वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्ति' इति। तत्र विचार्यते,—किं प्रदानविप्रकर्षोऽयम्, उत, कर्मान्तरचोदना? इति। किं प्राप्तम्?—

सू० निष्कासस्यावभृथे तदेकदेशत्वात् पशुवत् प्रदानविप्रकर्षः स्यात् ॥६१॥ (पू०)॥

भा० प्रदानविप्रकर्षोऽयं। कुतः?। 'तदेकदेशत्वात्,' 'वरुणं प्रति आमिक्षा उत्पन्ना, 'मारुती आमिक्षा वारुणी आमिक्षा' इति। सा द्वेधा प्रदीयमाना दृश्यते, एकदेशोऽस्या आवापस्थाने, एकदेशः समिष्टयजुरूर्द्धम्; उभयथापि वरुणदेवता, तेन प्रदानविप्रकर्षो विज्ञायते, 'पशुवत्';—यथा, सवनीयस्य पशोः 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने, अङ्गैस्तृतीयसवने' इति।

अवभृथशब्द इदानीं किमर्थः?। भक्त्या अनुवादमात्रं, देशसामान्यात् देवतासामान्याच्च। 'अथ धर्मातिदेशकोऽग्निष्टोमपदवदेव कस्माच्च

---

* तत्रायं प्रयोगप्रकारः,—वरुणप्रघासे नव हवींषि, तेषु षष्ठमे हविर्वारुणी आमिक्षा, नवमं हविः काय एककपालः वारुण्यामामिक्षायां यवपिष्टनिर्मितमेषमवदधाति। तत आमिक्षासंयुक्तमेषं सर्वमवदाय कृत्वा तत एककपालेन प्रचरणावशिष्टेन वारुण्यामिक्षाया निष्कासेन सहतुषैरवभृथमनुतिष्ठतीति"। इति न्यायमाला॥

भवति ?'। अशक्यत्वात्,—अनेनैव प्रदानविप्रकर्षः, अनेनैव धर्म्मातिदेश इति अशक्यमेकस्य वाक्यस्य, प्रदानविप्रकर्षं कृत्वा कृतार्थस्य धर्म्मानतिदेष्टुं न शक्तिरिति ॥

सू० अपनयो वा प्रसिद्धेनाभिसंयोगात् ॥६२॥ (सि०)॥

भा० न वायं प्रदानविप्रकर्षः, किन्तर्हि ?—'अपनयो' निष्कासस्य, पूर्वकर्म्मणः कर्म्मान्तरोपदेशः। किंकारणं ?। 'प्रसिद्धेनाभिसंयोगात्', प्रसिद्धेन नामधेयेनावभृथशब्देन संयोगात्,—'निष्कासेनावभृथमभ्यवयन्ति' इति।

'ननु भाक्तोऽयम्, अनुवादमात्रमित्युक्तम्'। अनुवादः सन् अप्रवृत्तिविशेषकरः अनर्थकः स्यात्, अतिदिशन् तु अर्थवान्। 'ननु तत्रापि लक्षणा भवति,। अस्तु, लक्षणापि हि प्रवृत्तिविशेषकरत्वात् अर्थवती, यथा, अग्नौ तिष्ठति, अवटे तिष्ठति,। 'अनेकार्थता तर्हि दोषो भवति'। न, अपूर्वकर्म्मचोदनायामसौ दोषः, यथा, 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति। 'कथं पुनरनेन शक्यते अपूर्वं कर्म्म चोदयितुं' ?। उच्यते, 'वारुण्या निष्कासेन तुषैश्चावभृथमभ्यवयन्ति' इति श्रूयते, न च, अवभृथः शक्यतेऽभ्यवेतुं, तत्रैवं विज्ञायते, निष्कासेन तुषैश्चावभृथं कर्तुमपोऽभ्यवयन्तीति, यथा, 'शाटकं कर्तुं सूत्राणि वयन्ति' इति। लक्षणया वा, 'यथा, 'य एवं विद्वांसः सत्रमुपयन्ति' इति ॥

सू० प्रतिपत्तिरिति चेन्न कर्मसंयोगात् ॥६३॥ (द्वि०पू०नि०)॥

भा० 'यथान्यत्रैषत्वान्निष्कासस्य, अवभृथगमनं प्रतिपत्तिर्भवतु' इति। तन्न। कुतः?। 'कर्मसंयोगात्', अर्थकर्मणा हि अस्य गुणभूतस्य संयोगो विज्ञायते, तृतीयासामर्थ्यात्, प्रतिपत्तौ हि द्रव्यप्राधान्यात् द्वितीयया निरदेक्ष्यत, यथा, 'चात्वाले कृष्णविषाणां प्रास्यति' इति। अथ वा अवभृथशब्देनास्य कर्मणा संयोगात्, यदि च प्रतिपत्तिः स्यात्, ततोऽवभृथशब्दोऽनर्थक एव भवेत्, अयम् अवभृथधर्मानतिदिशेत्, न च, प्रतिपत्तौ प्रधानकर्मणां धर्माः शक्या अतिदेष्टुं, वैषम्यात्;—तथा हि अवभृथेन प्रतिपादयतीत्युक्तं स्यात्। न च, अवभृथेन किञ्चित् प्रतिपादितं, यदतिदिश्येत॥ (११।२।१४अ०)॥

---

प्रायणीयनिष्कासे उदयनीयनिर्वापस्यार्थकर्मताधिकरणम्॥

सू० उदयनीये च तद्वत् ॥६४॥ (प्र० पू०)॥

भा० ज्योतिष्टोमे श्रूयते,—'प्रायणीयस्य निष्कासे उदयनीयमनु निर्वपति'—इति। तत्रावभृथवन्निष्कासो गुणतः स्यात्, तत्रापि हि उदयनीयसंज्ञकेन प्रधानकर्मणा संयोगो भवति, 'प्रायणीयस्य निष्कासे उदयनीयमनु निर्वपति' इति। न च, शक्यते उदयनीयोऽनु निर्वप्तुम्, अतस्तथेहापि सम्बन्धोऽभिधीयते, निष्कासेनोदयनीय कर्त्तुं हविष्यं निर्वपतीति। लक्षणाया वा पूर्ववत्।

अपि च, द्वितीयासंयोगात् कर्मणः प्राधान्यं विज्ञायते, निष्कासस्य सप्तमीयोगाद्गुणभावः। प्रतिपत्तौ तु कर्म गुणतः स्यात्, निष्कासः

प्रधानतः ; तत्र कर्म्म तृतीयासंबद्धं भवेत्, निष्कासो द्वितीया-संबद्धः । 'ननु प्रधानभूतेऽपि सप्तमी भवति, यथा, 'स्वागारे गावो वाससां प्रावारे कुसुमानि' इति । भवति, यत्र प्रमाणान्तरेण द्रव्यं प्रधानं विदितम्, यत्र तु शब्दगम्य एवार्थस्तत्र गुणभावो युक्तः ; यत्कारणं, कारकविभक्तिरियं, कारकं च क्रियार्थम्, भूतत्वात्, भूतभव्यसमुच्चारणे हि भूतं भवार्थं भवति, दृष्टार्थत्वात्, भव्यस्य तु भूतार्थत्वेऽदृष्टार्थता कल्प्या स्यात् ; न च, दृष्टे सति अदृष्टकल्पना सम्भवति ॥

सू॰ प्रतिपत्तिर्वाऽकर्मसंयोगात् ॥६५॥ (द्वि॰पू॰) ॥

भा॰ 'प्रतिपत्तिर्वा' उदयनीयः स्यात्, निष्कासस्य न गुणभावः । कुतः ? । 'अकर्मसंयोगात्,' नात्र निष्कासस्योदयनीयकर्म्मणा संयोगः । केन तर्हि ? । निर्वापेण,—'निष्कासे निर्वपति' इति । 'ननु मुख्यत्वात् उदयनीयस्यैतेन सम्बन्धो न्याय्यः' । नहि, मुख्यसम्बन्धे साकाङ्क्षमेतत् भवति,—निष्कासे उदयनीयं किं करोति ? तत्रावश्यं, 'निर्वपति' इत्यनेन परिसमापयितव्यम्,—उदयनीयं निर्वपतीति । नच, उदय-नीयस्य निर्वापेण सह सम्बन्धोऽस्ति—इत्युक्तम् । तदेतदवश्यं तथैव आपद्यते, उदयनीयं कर्त्तुं प्रायणीयस्य निष्कासे हविर्द्रव्यं निर्वप-तीति । निष्कासस्य प्रायणीयशेषः, निष्कासशब्दस्य शेषवचन एव, यदुखायां सक्तं, तदनेनोच्यते ; शेषस्य चार्थान्तरगमनं प्रतिपत्तिः, तत्र सामवायिकमङ्गं भवति, तत्र प्रधानेन दृष्टसम्बन्धम्, आरादुपकारकत्वेऽनुमेयसम्बन्धं ; सप्तमी च विभक्तिः प्राधान्ये दृष्टा तस्मात् प्रतिपत्तिः ।

'नन्वेवमपि कर्म्मान्तरचोदना अवभृथवत् प्राप्नोति'। भवेत्, यदि न चोदितं कर्म्म भवेत्, चोदितस्तूदयनीयः, 'आदित्यः प्रायणीयश्चरुर्भवति आदित्यः उदयनीयो द्विर्मा प्रज्ञात्वे' इति; तं कर्त्तुं प्रायणीयनिष्कासे निर्वपेदिति तथैव प्रज्ञायते। तस्मान्न कर्म्मान्तरचोदनेयम्॥

**सू० अर्थकर्म्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात्॥६६॥ (सि०)॥**

भा० 'अर्थकर्म्म वा' निष्कासे निर्वापो न प्रतिपत्तिः। कुतः?। 'शेषत्वात्,'—निर्वापं प्रति शेषभूतो निष्कासः, गुणभूत इत्यर्थः। कथं ज्ञायते?। 'तदर्थेन विधानात्'—तदर्थेन शब्देन सप्तम्या विभक्त्या विधानात्, सप्तमी हि विभक्तिराधारे भवति, आधारश्च क्रियायाः तत्कारकाणाञ्च विशिष्टानां धारणे वर्त्तते। तस्माद्गुणभूतः।

'ननु निष्कासो धारणेऽसमर्थः स्थाल्येव तत्र धारणं करोति'। पात्रीवत् एतद्द्रष्टव्यं, तद्यथा, पात्री ओदनं धारयति, पात्रीं भूमिः, न च, पात्री नाधारः। 'तथैतत् स्यात् दृष्टमुपकारं करोतीति'। पात्र्यपि तथा। अपि च, हविष्या उदयनीयनिर्वृत्त्या प्रयोजनवन्तः, ते यदि निष्कासेन संस्क्रियन्ते निष्कासोऽपि प्रयोजनवान् भवति; अथ तु निष्कासः संस्क्रियते, न च तेन कश्चिदर्थः, न हि तेन किञ्चित् करिष्यते।

'ननु तेनापि प्रायणीयो निर्वर्त्तितः, तदर्थस्यापि संस्कारोऽर्थवान् भविष्यति'। नैवम्, उपयुज्यमानसंस्कारो गरीयान् अपयुक्तसंस्कारात्।

अपि च निष्कासस‌ंस्कारोऽयं भवन् प्रायणीयस्याङ्गं भवेत्, तत्रोदयनीयसन्निधिर्बाध्येत। तस्मादुदयनीयहविष्याणामयं निष्कास-संसर्गेणादृष्ट उपकारः क्रियते, 'अयपनत्' तद्यथा, 'पयसा मैत्रावरुणं श्रीणाति धानाभिर्हारियोजनम्' इति अयणैः सोमस्य॥ (११।२।१५ सू०)॥

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये एकादशाध्यायस्य द्वितीयः पादः॥०॥

---

११ अध्याये २ पादः।

---

वैश्यायज्ञानां प्रधानकालान्यकालकर्तृत्वताधिकरणम्॥

सू॰ अङ्गानां मुख्यकालत्वाद् वचनादन्यकालत्वम्॥१॥

भा॰ 'अङ्गानां' मुख्यकालत्वं मुख्यदेशत्वं मुख्यकर्तृत्वं चोक्तम्— "अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात् स्यादेकदेशत्वम्" (११।२।७सू॰) इति। एवञ्च सर्व्वत्र प्राप्ते; 'वचनादन्यकालत्वं', यत्र वचनं, तत्र अन्यकालत्वम्, अन्यदेशत्वम्, अन्यकर्तृत्वमपि भवति, यथा, 'पूर्व्वेद्युरमावास्यायां वेदिं करोति'। 'अप्सु अवभृथेन चरन्ति'। अग्नौ सौत्रामण्यां दक्षिणाभेदादन्यकर्तृत्वं विज्ञायते,— 'वड़वा दक्षिणा' इति॥ (११।२।१अ॰)॥

---

आधानस्य तन्त्रेणानुष्ठानाधिकरणम्॥

सू॰ द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगः सर्व्वार्थः स्यात् स्वकालत्वात्॥२॥

भा॰ 'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति श्रूयते आधानं; तत्कर्म्मार्थमित्यभ्युपगमः। किंकारणम्?। चफलत्वात्; आहवनीये जुहोति, गार्हपत्ये हवींषि श्रपयति, दक्षिणाग्नौ

अन्वाहार्य्यश्रपणादि करोतीति तेषामग्नीनां कर्मसु उपयोगः। तच विचार्य्यते, किं तस्य तस्य कर्मणोऽर्थेन भेदेनाधानं कर्त्तव्यम्, अथवा, सर्वेषामैष्टिक-पाशुक-सौमिक-दार्विहोमिकानां कर्मणां तन्त्रम्?— इति। किं प्राप्तम्?। 'द्रव्यस्य' अग्नेः 'अकर्मकालनिष्पत्तेः' वसन्ते ग्रीष्मे शरदीति, 'प्रयोगः' आधानं 'सर्व्वार्थः स्यात्'। कुतः?। 'स्वकालत्वात्',-स्वोऽस्य कालो वसन्तादिः, न कस्यचित् कर्मणः काले श्रूयते, तच न दृश्यते विशेषः, अस्मै कर्मणे इदमाधानमिति, नास्मै इति,— अदृश्यमानविशेषत्वाच तन्त्रभावो न्याय्यः।

'नन्वाधानादनन्तरं यस्य कर्मणः प्रयोगस्तदर्थं तत् आधानमिति दृश्यते विशेषः'। न खलु दृश्यते विशेषः, किन्तु आनन्तर्य्यमकारणं,—यद्यपि सर्व्वार्थं, तदाप्यवश्यं कस्यचित् कर्मणः पूर्व्वं प्रयोगः, यौगपद्यस्यासम्भवात् तदेकेनानन्तर्य्यं समो हेतुः सर्व्वार्थत्वे च एकार्थत्वे च, समत्वादहेतुर्भवति। नच, आधानेन कर्म्माणि उपक्रम्यन्ते, यथा प्रणयनेन; यद्युपक्रम्येरन्, ततो यदनन्तरं कर्म्म, तस्योपक्रमो विज्ञायेत, नोत्तरेषां, तेन व्यवहितत्वात्; तदपवर्गे चापवृज्येत, प्रणयनवत्; नत्वनेन किञ्चित् कर्म्म प्रक्रम्यते, अप्राप्तकालत्वात्, अत उत्तरकाला हि कर्मश्रुतयः। किन्तर्हि अनेन क्रियते?। द्रव्यमर्ज्यतेऽग्निविशेषः; यथा कश्चित् लोहं सुवर्णं वार्ज्जयेत्, अनेन स्वाधीनेन यथोपपन्नं कार्य्यं करिष्यामीति, स तेन यथाकालमिष्टं दानादि करोति; एवमयमग्निविशेषमर्जयति अनेन स्वाधीनेन यथोपपन्नं कर्म्म करिष्यामीति। तच न दृश्यते विशेषः, अस्मै कर्मणे इदमर्जनम्, अस्मै नेति, सर्व्वेभ्यस्य युज्यते, तस्मात् सर्व्वार्थम्।

अपि च, नित्य-काम्य-नैमित्तिकानि कर्माणि यथोपपत्ति-कालानि, तेषां वसन्ते आहितेन अग्निना कार्यं; तथान्यस्मिन् ऋतौ प्रयुक्तो वसन्तेऽग्निराधातुं, सोऽयमसंयोगो भवति भेदेनाधाने ; अथ तु सर्व्वकर्म्मणामर्थे तन्त्रमाधानं, नैव विरोधो भवति। तस्मादपि तन्त्रम् ॥(११।३।२अ०)॥

---

अग्नीषोमीयादिषु यूपस्य तन्त्रेणानुष्ठानाधिकरणम् ।

सू० यूपस्याकर्म्मकालत्वात् ॥ ३ ॥ (सि०) ॥

भा० ज्योतिष्टोमे पशवः अग्नीषोमीय-सवनीयानुबन्ध्याः, तेषां यूपः, 'खादिरे बध्नाति, पालाशे बध्नाति, रौहितके बध्नाति' इति श्रुतः। तत्र विचार्य्यते,—किं त्रयाणां पशुबन्धानां भेदेन यूपः, अथवा, तन्त्रम् ? इति। किं प्राप्तं ?—भेदेनेति। किंकारणं ?। अग्नीषोमीये तावत् प्रयोगवचनेन गृह्यते यूपः, इतरयोरपि चोदकेन प्राप्यते, कर्म्मशेषावसायिनः चोदकप्रयोगवचना भेदेन यूपं प्रापयन्ति; तस्माद्भेदः।

एवं प्राप्ते उच्यते, 'यूपस्य' तन्त्रं भवेत्, 'अकर्म्मकालत्वात्', नास्य पशुकर्मकाले उत्पत्तिः, किन्तर्हि?—पृथक्काला,—'दीक्षासु यूपं छिनत्ति क्रीते वा राजनि' इति। तत्रोत्पद्यमानस्य न गृह्यते विशेषः, अस्मै पशुबन्धाय यूपोऽयम्, अस्मै नेति, सर्व्वेभ्यश्च युज्यते। तस्मात् सर्व्वार्थो भवति ॥

सू० एकयूपञ्च दर्शयति ॥ ४ ॥ (यु०) ॥

भा० एकं यूपं त्रयाणामपि पशूनां साधारणं दर्शयति, सवनीये

पशौ 'त्रिवृता यूपं परिवीय' इति त्रिवृता परिव्याणं विदधाति। यदि नाना यूपा भवेयुः, ततः पूर्व्वस्य यूपस्यापवर्गात् यूपान्तरे पोडशिनैव प्राप्ते त्रिवृता परिव्याणं न विधातव्यं भवेत्; अथ तन्त्रं यूपः, ततः संस्कारा अपि तन्त्रमित्यग्नीषोमीये एव परिवीतस्य कृतार्थत्वात् पुनः सवनीये परिव्याणं न प्राप्नोति, तद्विधातव्यं भवति, विधीयते च। तस्मादपि तन्त्रम् ॥ (११।२।३अ०) ॥

---

यूपसंस्काराणां तन्त्रेणानुष्ठानाधिकरणम्।

सू० संस्कारास्त्वावर्त्तेरन्नर्थकालत्वात् ॥५॥ (पू०) ॥

भा० यूपसंस्कारा ये पशुतन्त्रमध्ये क्रियन्ते, यथा प्रोक्षणम्, अञ्जनम्, उच्छ्रयणं, परिव्याणञ्च, तेषु चिन्त्यते,—किं तत्र तत्र पशौ भेदेन कर्त्तव्याः, अथ वा, तन्त्रम्? इति। किं प्राप्तं?—'संस्कारास्त्वावर्त्तेरन्' यूपस्य, न यथा यूपस्तन्त्रं तथा स्युः। किंकारणम्? । 'अर्थकालत्वात्', —अर्थः पशोर्नियोजनं, तत्काला एते संस्काराः, तत्र उच्यते विशेषः,—यस्य पशोर्नियोजनकाले कृताः, तदर्था इति। इतरयोश्च पशोरसन्नकालत्वात् तादर्थ्येन नास्ति प्रयोगः। तस्मादावर्त्तेरन्, यथा अग्नेः संमार्जनम् ॥

सू० तत्कालास्तु यूपकर्म्मत्वात्तस्य धर्म्मविधानात् सर्वार्थानाञ्च वचनादन्यकालत्वम् ॥ ६ ॥ (सि०) ॥

भा० सत्यम् आवर्त्तेरन् यदि ते नियोजनकालाः भवेयुः,

'तत्कालास्तु' एते, दीक्षाकालाः। कथं ज्ञायते?। 'यूपकर्मत्वात्',—न एते नियोजनार्थाः, यूप एतैः क्रियते, यूपो नियोजनार्थः, स च दीक्षासु कर्त्तव्यः, 'दीक्षासु यूपं छिनत्ति' इतिवचनात्, संस्कारैश्च स क्रियते; तस्माद्दीक्षाकाला एवैते संस्काराः।

'ननु छेदनमात्रं तत्र यूपस्य श्रूयते, न यूपक्रिया'। उच्यते, न किञ्चिद्द्रव्यं यूपाख्यमस्ति, यस्य छेदनमुच्येत, तदेतदेवं विज्ञायते,—दीक्षासु छेदनादिभिर्यूपं करोतीति। छेदनपदस्य मुख्यत्वात् प्रदर्शनार्थं, यत्कारणं नासौ छेदनेन केवलेन यूपो भवतीति। एवं चेत्, दीक्षाकाला एवैते संस्काराः। 'सर्व्वार्थानाञ्च' सतां 'वचनात्' केषाञ्चित्'अन्यकालत्वं' कृतं, यथा आग्निमारुतादूर्द्धं 'अनुयाजैश्चरन्ति' इति। तस्मात् यूपवत् संस्कारा अपि तन्त्रम्।

'यूपकर्मत्वात्' इत्यस्य अपरा व्याख्या,—यूपकर्म तत्, ये एते संस्काराः छेदनाद्याः,—यूपोऽयमेव क्रियते जोषणादिव्यापारेण, यथा वाजपेयेन सम्राट्; सकृत्कृतस्यैतस्य पुनःक्रिया निरर्थिका; तस्मात् अनावृत्तिः।

'नन्वेवं सति निरूढ़पशावपि कामं स एव यूपः कर्त्तव्यो भवेत्'। वाढ़ं भवेत्, यदि निरिष्टिकेन यागप्रतिषेधो न स्यात्, अस्ति तु स प्रतिषेधः; तस्मान्न भवति, यथा न तैरेव दर्भैः प्रयोगान्तर-मपि क्रियते। अथ वा, यदर्थं स यूपः कृतः, तत्कर्मापवर्गं, तस्यापवर्गे यूपोऽपि अपवृक्तः॥

सू० सकृन्मानञ्च दर्शयति॥ ७॥ (यु०)॥

'चिवृता यूपं परिवीय सवनीयं पशुमुपाकरोति' इति

परिव्याणेन यूपधर्मान् अनुक्रममाणः सहाग्निष्ठं खातं यूपं दर्शयति, इतरथा, मुख्यत्वात् प्रोक्षणेनोपक्रमेत*। 'आगन्तव्यार्थमिति चेत्'। न, प्रकृतितः सिद्धत्वात्। तस्मादपि तन्त्रं संस्काराः॥ (११।२।४ अ॰)॥

---

स्वरोः साधारण्याधिकरणम्।

अस्ति स्वरुः, 'यूपस्य स्वरुं करोति' इति श्रुतः,† स किं सर्वपशूनां तन्त्रं, भेदेन वा?—इति। किं प्राप्तम्?—

**सू॰ स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात्॥८॥ (पू॰)॥**

भा॰ 'स्वरुः' खलु तन्त्रे तन्त्रेऽपवृज्येत, 'अस्वकालत्वात्', नास्य स्वः कालः उत्पत्तौ, कर्मकाले यमुपादीयते 'स्वरुणा स्वधितिना वा पशुं समनक्ति' इति, यस्य पशोः समञ्जनकाले उपात्तस्तदर्थोऽसाविति गम्यते विशेषः; तस्माद्भेदः। 'ननु 'यूपस्य स्वरुं करोति' इति स्वकाला एवास्योत्पत्तिः'। न खलु, एषाप्यन्तःप्रयोगैव। अपि च कार्य्यवचनोऽत्र स्वरुशब्दः, 'स्वरुं करोति',—स्वरुकार्य्यं करोति, यत्कारणं, स्वरुर्न ज्ञायते स्वरुकार्य्यं तु ज्ञायते पशोरञ्जनं। ननु 'क्रत्वन्ते स्वरोः प्रतिपत्तिर्दृश्यते 'संस्थिते सोमे प्रस्तरं प्रहरति स्वरुञ्चायमवैशसाय' इति'। सत्यमस्ति दर्शनं तत्तु स्वरुमात्रस्य, न तु स्वरुविशेषस्य। तत्र अग्नीषोमीये उपात्तस्य तन्त्रतया प्रवृत्तस्य दर्शनं सोमान्ते स्यात्, अथवा, चोदकप्राप्तस्यानुबन्ध्याकालस्य?—इति संशये किं न्याय्यं,—यदनु-

---

* 'सहाग्निष्ठं यूपं दर्शयति। इतरथा मुख्यत्वात् प्रोक्षणेनोपक्रमेत' इति क॰ सं॰ द्वि॰ पु॰ पाठः।

† 'इति श्रुतेः' इति क॰ सं॰ पु॰ पाठः।

'नन्वेवमपि कर्मान्तरचोदना अवभृथवत् प्राप्नोति'। भवेत्, यदि न चोदितं कर्म भवेत्, चोदितस्तूदयनीयः, 'आदित्यः प्रायणीयश्चरुर्भवति आदित्य उदयनीयो हविषां प्रज्ञात्यै' इति; तं कर्तुं प्रायणीयनिष्कासे निर्वपेदिति तथैव प्रज्ञायते। तस्मान्न कर्मान्तरचोदनेयम्॥

## सू० अर्थकर्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात्॥६६॥ (सि०)॥

भा० 'अर्थकर्म वा' निष्कासे निर्वापो न प्रतिपत्तिः। कुतः?। 'शेषत्वात्,'—निर्वापं प्रति शेषभूतो निष्कासः, गुणभूत इत्यर्थः। कथं ज्ञायते?। 'तदर्थेन विधानात्'—तदर्थेन शब्देन सप्तम्या विभक्त्या विधानात्, सप्तमी हि विभक्तिराधारे भवति, आधारश्च क्रियायाः तत्कारकाणाञ्च विक्लिन्नानां धारणे वर्त्तते। तस्माद्गुणभूतः।

'ननु निष्कासो धारणेऽसमर्थः स्थाल्येव तत्र धारणं करोति'। पात्रीवत् एतद्द्रष्टव्यं, तद्यथा, पात्री ओदनं धारयति, पात्रीं भूमिः, न च, पात्री नाधारः। 'तथैतत् स्थाल्या दृष्टमुपकारं करोतीति'। पात्र्यपि तथा। अपि च, हवींषि उदयनीयनिर्वृत्त्या प्रयोजनवन्तः, ते यदि निष्कासेन संस्क्रियन्ते निष्कासोऽपि प्रयोजनवान् भवति; अथ तु निष्कासः संस्क्रियते, न च तेन कश्चिदर्थः, न हि तेन किञ्चित् करिष्यते।

'ननु तेनापि प्रायणीयो निर्वर्त्तितः, तदर्थस्यापि संस्कारोऽर्थवान् भविष्यति'। नैवम्, उपयुज्यमानसंस्कारो गरीयान् उपयुक्तसंस्कारात्।

अपि च निष्काससंस्कारोऽयं भवन् प्रायणीयस्याङ्गं भवेत्, तत्रोदयनीयसन्निधिर्बाध्येत। तस्मादुदयनीयहविष्यायामयं निष्कास-संसर्गेणादृष्ट उपकारः क्रियते, 'अयथावत्' तद्यथा, 'पयसा मैत्रावरुणं श्रीणाति धाराभिर्वारियोजनम्' इति अयणैः सोमस्य॥ (११।२।१५ पू०)॥

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये एकादशाध्यायस्य द्वितीयः पादः॥०॥

११ अध्याये ३ पादः।

---

वेद्यादङ्गानां प्रधानकालान्यकालकर्तृत्वताधिकरणम्॥

सू॰ अङ्गानां मुख्यकालत्वाद् वचनादन्यकालत्वम्॥१॥

भा॰ 'अङ्गानां' मुख्यकालत्वं मुख्यदेशत्वं मुख्यकर्तृत्वं चोक्तम्—"अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन् तस्मात् स्यादेकदेशत्वम्" (११।२।७सू॰) इति। एवञ्च सर्व्वत्र प्राप्ते; 'वचनादन्यकालत्वं', यत्र वचनं, तत्र अन्यकालत्वम्, अन्यदेशत्वम्, अन्यकर्तृत्वमपि भवति, यथा, 'पूर्व्वेद्युरमावास्यायां वेदिं करोति'। 'अप्सु अवभृथेन चरन्ति'। अग्नौ सौत्रामण्यां दक्षिणाभेदादन्यकर्तृत्वं विज्ञायते,—'वड़वा दक्षिणा' इति॥ (११।३।१अ॰)॥

---

आधानस्य तन्त्रेणानुष्ठानाधिकरणम्॥

सू॰ द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात् स्वकालत्वात्॥२॥

भा॰ 'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति श्रूयते आधानं; तत्कर्मार्थमित्यभ्युपगमः। किंकारणम्?। अफलत्वात्; आहवनीये जुहोति, गार्हपत्ये हवींषि श्रपयति, दक्षिणाग्नौ

अन्वाहार्य्यमपचादि करोतीति तेषामग्नीनां कर्म्मसु उपयोगः। तच विचार्य्यते, किं तस्य तस्य कर्म्मणोऽर्थेन भेदेनाधानं कर्त्तव्यम्, अथवा, सर्व्वेषामैष्टिक-पाशुक-सौमिक-दार्विहोमिकानां कर्म्मणां तन्त्रम्?— इति। किं प्राप्तम्?। 'द्रव्यस्य' अग्नेः 'अकर्म्मकालनिष्पत्तेः' वसन्ते ब्राह्मणोऽग्नीनादधीत, शरदि वैश्य, इति; प्रयोगः' आधानं 'सर्व्वार्थं स्यात्'। कुतः?। 'स्वकालत्वात्',-स्वोऽस्य कालो वसन्तादिः, न कस्यचित् कर्म्मणः काले श्रूयते, तच न दृश्यते विशेषः, अस्मै कर्म्मणे इदमाधानमिति, नास्मै इति,— अदृश्यमानविशेषत्वाच तन्त्रभावो न्याय्यः।

'अन्वाधानादनन्तरं यस्य कर्म्मणः प्रयोगस्तदर्थं तत् आधानमिति दृश्यते विशेषः'। न खलु दृश्यते विशेषः, किन्तु आनन्तर्य्यमकारणं,—यदापि सर्व्वार्थं, तदाप्यवश्यं कस्यचित् कर्म्मणः पूर्व्वं प्रयोगः, यौगपद्यस्यासम्भवात् तदेकेनानन्तर्य्यं समो हेतुः सर्व्वार्थत्वे च एकार्थत्वे च, समत्वादहेतुर्भवति। नच, आधानेन कर्म्माणि उपक्रम्यन्ते, यथा प्रणयनेन ; यद्युपक्रम्येरन्, ततो यदनन्तरं कर्म्म, तस्योपक्रमो विज्ञायेत,नोत्तरेषां,तेन व्यवहितत्वात्; तदपवर्गे चापवृज्येत, प्रणयनवत्; नत्वनेन किञ्चित् कर्म्म प्रक्रम्यते, अप्राप्तकालत्वात्, अत उत्तरकाला हि कर्म्मश्रुतयः। किन्तर्हि अनेन क्रियते?। द्रव्यमर्ज्यतेऽग्निविशेषः; यथा कश्चित् लोहं सुवर्णं वार्ज्जयेत्, अनेन स्वाधीनेन यथोपपन्नं कार्य्यं करिष्यामीति, स तेन यथाकालमिष्टं दानादि करोति; एवमयमग्निविशेषमर्जयति अनेन स्वाधीनेन यथोपपन्नं कर्म्म करिष्यामीति। तच न दृश्यते विशेषः, अस्मै कर्म्मणे इदमर्जनम्, अस्मै नेति, सर्व्वेभ्यश्च युज्यते, तस्मात् सर्व्वार्थम्।

अपि च, नित्य-काम्य-नैमित्तिकानि कर्म्माणि यथोपपत्ति-कालानि, तेषां यस्मिन् आहितेन अग्निना कार्य्यं; नचान्यस्मिन् ऋतौ शक्यो यद्यन्तेऽग्निराधातुं, सोऽयमसंयोगो भवति भेदेनाधाने ; अथ तु सर्व्वकर्म्मणामर्थे तन्त्रमाधानं, नैव विरोधो भवति। तस्मादपि तन्त्रम् ॥(११।३।२ अ०)॥

---

अग्नीषोमीयादिषु यूपस्य तन्त्रेणानुष्ठानाधिकरणम्।

सू० यूपस्याकर्म्मकालत्वात् ॥ ३ ॥ (सि०) ॥

भा० ज्योतिष्टोमे पशवः अग्नीषोमीय-सवनीयानुबन्ध्याः, तेषां यूपः, 'खादिरे बध्नाति, पालाशे बध्नाति, रौहितके बध्नाति' इति श्रुतः। तत्र विचार्य्यते,—किं त्रयाणां पशुबन्धानां भेदेन यूपः, अथवा, तन्त्रम्? इति। किं प्राप्तं?—भेदेनेति। किंकारणं?। अग्नीषोमीये तावत् प्रयोगवचनेन गृह्यते यूपः, इतरयोरपि चोदकेन प्राप्यते, कर्म्मभेदावसायिनः चोदकप्रयोगवचना भेदेन यूपं प्रापयन्ति; तस्माद्भेदः।

एवं प्राप्ते उच्यते, 'यूपस्य' तन्त्रं भवेत्, 'अकर्म्मकालत्वात्', नास्य पशुकर्म्मकाले उत्पत्तिः, किन्तर्हि?—पृथक्काला,—'दीक्षासु यूपं छिनत्ति क्रीते वा राजनि' इति। तत्रोत्पद्यमानस्य न गृह्यते विशेषः, अस्मै पशुबन्धाय यूपोऽयम्, अस्मै नेति, सर्व्वेभ्यस्य युज्यते। तस्मात् सर्व्वार्थो भवति ॥

सू० एकयूपञ्च दर्शयति ॥ ४ ॥ (यु०) ॥

भा० एकं यूपं त्रयाणामपि पशूनां साधारणं दर्शयति, सवनीये

पशौ 'त्रिवृता यूपं परिवीय' इति त्रिवृता परिव्याणं विदधाति। यदि नाना यूपा भवेयुः, ततः पूर्व्वस्य यूपस्यापवर्गात् यूपान्तरे चोदकेनैव प्राप्ते त्रिवृता परिव्याणं न विधातव्यं भवेत्; अथ तन्त्रं यूपः, ततः संस्कारा अपि तन्त्रमित्यग्नीषोमीये एव परिवीतस्य कृतार्थत्वात् पुनः सवनीये परिव्याणं न प्राप्नोति, तद्विधातव्यं भवति, विधीयते च। तस्मादपि तन्त्रम्॥ (११।२।४अ०)॥

---

यूपसंस्काराणां तन्त्रेणानुष्ठानाधिकरणम्।

सू॰ संस्कारास्त्वावर्त्तेरन्नर्थकालत्वात्॥५॥ (पू॰)॥

भा॰ यूपसंस्कारा ये पशुतन्त्रमध्ये क्रियन्ते, यथा प्रोक्षणम्, अञ्जनम्, उच्छ्रयणं, परिव्याणञ्च, तेषु चिन्त्यते,—किं तत्र तत्र पशोर्भेदेन कर्त्तव्याः, अथ वा, तन्त्रम्? इति। किं प्राप्तं?—'संस्कारास्त्वावर्त्तेरन्' यूपस्य, न यथा यूपस्तन्त्रं तथा स्युः। किंकारणम्?। 'अर्थकालत्वात्',—अर्थः पशोर्न्नियोजनं, तत्काला एते संस्काराः, तत्र ह्युक्ते विशेषः,—यस्य पशोर्न्नियोजनकाले कृताः, तदर्था इति। इतरयोश्च पश्वोरप्राप्तकालत्वात् तादर्थ्येन नास्ति प्रयोगः। तस्मादावर्त्तेरन्, यथा अग्नेः संमार्जनम्॥

सू॰ तत्कालास्तु यूपकर्म्मत्वात्तस्य धर्म्मविधानात् सर्वार्थानाञ्च वचनादन्यकालत्वम्॥६॥ (सि॰)॥

भा॰ स्यात्म् आवर्त्तेरन् यदि ते नियोजनकालाः भवेयुः,

'तत्कालास्तु' एते, दीक्षाकालाः। कथं ज्ञायते?। 'यूपकर्मत्वात्',—न एते नियोजनार्थाः, यूप एतैः क्रियते, यूपो नियोजनार्थः, स च दीक्षासु कर्त्तव्यः, 'दीक्षासु यूपं छिनत्ति' इतिवचनात्, संस्कारैश्च स क्रियते; तस्माद्दीक्षाकाला एवैते संस्काराः।

'ननु छेदनमात्रं तत्र यूपस्य श्रूयते, न यूपक्रिया'। उच्यते, न किञ्चिद्द्रव्यं यूपाख्यमस्ति, यस्य छेदनमुच्येत, तदेतदेवं विज्ञायते,—दीक्षासु छेदनादिभिर्यूपं करोतीति। छेदनग्रहणस्य मुख्यत्वात् प्रदर्शनार्थं, यत्कारणं नाशौ छेदनेन केवलेन यूपो भवतीति। एवं चेत्, दीक्षाकाला एवैते संस्काराः। 'सर्व्वार्थानाच्च' सतां 'वचनात्' केषाञ्चित् 'अन्यकालत्वं' कृतं, यथा आग्निमारुतादूर्द्धं 'अनुयाजैश्चरन्ति' इति। तस्मात् यूपवत् संस्कारा अपि तन्त्रम्।

'यूपकर्मत्वात्' इत्यस्य अपरा व्याख्या,—यूपकर्म तत्, ये एते संस्काराः छेदनाद्याः,—यूपोऽयमेव क्रियते जोषणादिव्यापारेण, यथा वाजपेयेन सम्राट्; सकृत्कृतश्चेत्तस्य पुनःक्रिया निरर्थिका; तस्मात् अनावृत्तिः।

'नन्वेवं सति निरूढपशावपि कामं स एव यूपः कर्त्तव्यो भवेत्'। वाढं भवेत्, यदि निरिष्टिकेन यागप्रतिषेधो न स्यात्, अस्ति तु स प्रतिषेधः; तस्मान्न भवति, यथा न तैरेव दर्भैः प्रयोगान्तरमपि क्रियते। अथ वा, यदर्थं स यूपः कृतः, तत्कर्मापवर्गं, तस्यापवर्गे यूपोऽपि अपवृक्तः॥

सू॰ सकृन्मानञ्च दर्शयति॥ ७॥ (यु॰)॥

'चिवृता यूपं परिवीय सवनीयं पशुमुपाकरोति' इति

परिव्याणेन यूपधर्मान् अनुक्रममाणः सन्नग्मितं खातं यूपं दर्शयति, इतरथा, मुख्यत्वात् प्रोक्षणेनोपक्रमेत*। 'आनन्तर्यार्थमिति चेत्'। न, प्रकृतितः सिद्धत्वात्। तस्मादपि तन्त्रं संस्काराः॥ (११।२।४ अ०)॥

स्वरोः साधारण्याधिकरणम्।

अस्ति स्वरुः, 'यूपस्य स्वरुं करोति' इति श्रुतः,† स किं सर्वपशूनां तन्त्रं, भेदेन वा?—इति। किं प्राप्तम्?—

सू० स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात्॥८॥ (पू०)॥

भा० 'स्वरुः' खलु तन्त्रे तन्त्रेऽपवृज्येत, 'अस्वकालत्वात्', नास्य स्वः कालः उत्पत्तौ, कर्मकाले यमुपादीयते 'स्वरुणा स्वधितिना वा पशुं समनक्ति' इति, यस्य पशोः समञ्जनकाले उपात्तस्तदर्थोऽसाविति गम्यते विशेषः; तस्माद्भेदः। 'ननु 'यूपस्य स्वरुं करोति' इति स्वकाला एवास्योत्पत्तिः'। न खलु, एषाप्यन्तःप्रयोगैव। अपि च कार्यवचनोऽत्र स्वरुशब्दः, 'स्वरुं करोति',—स्वरुकार्यं करोति, यत्कारणं, स्वरुर्न ज्ञायते स्वरुकार्यं तु ज्ञायते पशोरञ्जनं। ननु 'कृत्स्ने स्वरोः प्रतिपत्तिर्दृश्यते 'संस्थिते सोमे प्रस्तरं प्रहरति स्वरुञ्चायशवेशयाय' इति'। सत्यमस्ति दर्शनं तन्तु स्वरुमात्रस्य, न तु स्वरुविशेषस्य। तत्र अग्नीषोमीये उपात्तस्य तन्त्रतया प्रवृत्तस्य दर्शनं सोमान्ते स्यात्, अथवा, चोदकप्राप्तस्यानुबन्ध्याकालस्य?—इति संशये किं न्याय्यं,—यदनु-

* 'सन्नग्मितं यूपं दर्शयति। इतरथा मुख्यत्वात् प्रोक्षणेनोपक्रमेत' इति क० सं० द्वि० पु० पाठः।

† 'इति श्रुतेः' इति क० सं० पु० पाठः।

सन्ध्याकालस्य दर्शनं भवेत्, न तन्मतया प्रवृत्तस्येति । कुतः ? । यत उक्तो न्यायः "स्वरुस्त्वपवर्गः स्यादस्वकालत्वात्" इति । नच, दर्शनं केवलं साधकं भवति, यथासम्भवन्तु दर्शनं कल्पितम् । तदेवं यथा प्रस्तरस्यानूसन्ध्याकालस्य दर्शनं, तद्वत् स्वरोरपि भविष्यतीति ॥

सू० साधारणो वानुनिष्पत्तिस्तस्य साधारणत्वात् ॥९॥ (सि० )॥

भा० नैतदस्ति, प्रतितन्त्रं स्वरुभेदः—इति, किन्तर्हि 'साधारणः' स्यात् । कुतः ? । यतोऽयमनुनिष्पद्यते, यूपः साधारणः सर्वपशूनां, 'तस्य साधारणत्वात्' अयमपि साधारण एव न्याय्यः, यथैक एव यूपः सर्वपशूनां साधारणः, एवमयमप्यच्छ्रमाणविशेषत्वात् साधारणो भविष्यति ।

नैतद्युक्तं,—'अञ्जप्रतिकर्षवचनादच्छ्रमाणविशेषत्वात् यूपस्य साधारणमुपपद्यते, न तु स्वरोः प्रतिकर्षे किञ्चन वचनमस्ति, यतोऽच्छ्रमाणविशेषत्वादस्यापि साधारणमुपपद्येत । यदेतत् 'यूपस्य स्वरं करोति' इति, तत् अन्तःप्रयोगसम्बद्धं,—स्वरुकार्य्यमच्छनं कर्तुं यमुपादत्ते तं यूपादिति । न च, अन्यस्य साधारणेऽन्यस्य साधारणं युक्तं, सम्भवन्ति ह्येकस्यापि यूपस्य बहवः शकला इति । चोदकप्रयोग-वचनाच्च भिद्यमाना अन्तःप्रयोगसम्बद्धमङ्गमात्मीयं प्रतितन्त्रं प्रापयन्ति, अच्छ्रमाणविशेषत्वादित्यतो भेद एव युक्तः' इति । तच उच्यते,—यद्यप्यस्य नास्ति प्रतिकर्षवचनं प्रत्यक्षं, न च, अन्यस्मिन् प्रतिकृष्यमाणेऽन्यस्य प्रतिकर्ष इति, नैतद्युक्तम्, असम्बद्धयोर्हि तदेवं

भवति न सन्नद्धयोः। अथश्च शकलो यूपमनुनिष्पद्यते, तदस्य यूप-प्रतिकर्षादेव सिद्धः प्रतिकर्षः ; अतो यत्र यूपस्तत्रायमपि।

यच्च, 'यूपस्य स्वरुं करोति' इत्यन्तः प्रयोगसम्बद्धा श्रुतिरिति ; तदपि नैवम्, द्वौ हि कालौ द्रव्यस्य,—एक उपादानकालः, एक उपात्तस्य प्रयोगकालः ; यद्धि उपादातव्यं, न हि, तदनुपादाय कश्चित् प्रयोगमारभते, न ह्यनुपादाय व्रीहीन्, प्रस्तुत्य प्रयोगं, व्रीहीन् मृगयति ; एवंकुर्वाणस्य प्रयोग एव न संवर्त्तेत। अयञ्च यूपं छिद्यमानमनुनिष्पद्यते, अतो यत्र छेदनं, तत्रायमपि। यदपि, एकस्यापि यूपस्य बहवः स्वरवः सम्भवन्तीति ; स्यादेवं यदि प्राथम्यविशिष्टस्य नोपादानं भवेत्, विशिष्टस्य तु उपादानमुक्तम्,— ततो यः प्रथमः शकलः परापतेत्, स स्वरुः कार्य्य इति वचनात्, वचनाच्च प्राथम्याभावात्* बहवो न सम्भवन्ति॥

सू॰ सोमान्ते च प्रतिपत्तिदर्शनात्॥१०॥ (यु॰)॥

भा॰ सोमान्ते चास्य प्रतिपत्तिर्दृश्यते, 'संस्थिते सोमे प्रस्तरं प्रहरति स्वरुञ्चायजुर्वेप्रसाय' इति, तत् साधारणे एवोपपद्यते, तन्त्रापवर्गे चाग्नीषोमीयान्ते एव स्यात्। तस्मादपि साधारणः॥

सू॰ तत्कालो वा प्रस्तरवत्॥११॥ (आ॰)॥

भा॰ इति यदुक्तं तत्परिहर्त्तव्यम्॥

---

* वचनाच्च प्राथम्याभावादिति सन्दर्भः क॰ सं॰ द्वि॰ पुस्तके नास्ति। श्रौतपुस्तके पतः उद्धृत रचाखे इति।

सू० न चोत्पत्तिवाक्यत्वात् प्रदेशात् प्रस्तरे तथा ॥१२॥
(आ० नि०) ॥

भा० नास्यानूबन्ध्याकालस्य स्वरोः प्रहरणं। किंकारणम्?। इदमेव प्रहरणोत्पत्तिवाक्यं, 'होमान्ते प्रस्तरं प्रहरति स्वरुं चायमवैशचाय' इति; अनेन क्रमादग्नीषोमीयकालस्य प्रहरणं गम्यते, स यदि साधारणः, ततः सर्वपशूनां कृतार्थे कर्मणि अन्तेऽस्योत्सर्गविशेषस्य अग्नौ प्रहरणस्य दर्शनमुपपद्यते, अथ तु पृथक् स्यात्, ततोऽग्नीषोमीयस्यान्त एव दृश्येत। 'अथ वचनमिदं कस्मान्न भवति,—अग्नीषोमीयान्ते प्राप्तस्य होमान्ते वचनात्'। नैतदेवं, वचनेन द्वावुत्सर्गस्य विशेषौ* उच्येयाताम्,—अग्नौ च प्रहरणं, होमान्ते च, तथा वाक्यभेदः स्यात् तस्मान्नैतद्वचनम्। यत्तु प्रस्तरवदिति, 'प्रदेशात् प्रस्तरे तथा',—प्रस्तरस्य दर्शपूर्णमासयोः प्रहरणमुक्तम्,—'आशीर्भिः प्रस्तरं प्रहरति' इति, तत् चोदकेन प्रतिपशु प्राप्यते,† तत्रानूबन्ध्याकालस्य दर्शनं युज्यते, न स्वरुप्रहरणस्यैतदस्ति; तस्मादिषमोऽयमुपन्यासः ॥ (११।२।५ अ०) ॥

---

दाहमाचे कृष्णविषाणाप्रासनस्यान्त्याह एव कर्तव्यताधिकरणम्।

ज्योतिष्टोमे दीक्षितव्रतमाम्नातं,—'कृष्णविषाणया कण्डूयति' इति। तत्रैव च पुनः श्रुतं,—'नीतासु दक्षिणासु चात्वाले कृष्ण-

---

* 'दर्शपूर्णमासयोः प्रहरणविशेषौ' इति चादर्शपुस्तकपाठः।

† 'प्राप्नुते' इति चादर्शपुस्तकपाठः।

विषाणां प्रास्यति' इति । तदुभयं द्वादशाहे चोदकेन प्राप्तम् । तत्र विचार्य्यते,— किमन्त्ये प्रथमे वा अहनि कृष्णविषाणायाः प्रासनं कर्त्तव्यम्, अथवा अन्त्ये एव ?— इति । किं प्राप्तम् ?,—

सू॰ अहर्गणे विषाणाप्रासनं धर्म्मविप्रतिषेधादन्त्ये प्रथमे वाहनि विकल्पः स्यात् ॥१३॥ ( पू॰ )॥

भा॰ विकल्पः कर्त्तव्यः,—'अन्त्ये प्रथमे वा अहनि' प्रासनम् । कुतः?। 'धर्म्मविप्रतिषेधात्',— यदि प्रथमेऽहनि करिष्यते, उत्तरेष्वहःसु प्राग् दक्षिणानयनात् ये पदार्थाः तेषां विषाणाकण्डूयनं धर्म्मः, स वाध्यते ; अथान्त्ये, ततः पूर्वेषामह्नां दक्षिणानयनादूर्द्ध्वं ये पदार्थास्तेषां हस्त-कण्डूयनं धर्म्मः, स वाध्यते ; स एष धर्म्मविप्रतिषेधः । तस्माद्विकल्पः॥

सू॰ पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमः स्यात् प्रातः-सवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् ॥१४॥ ( सि॰ )॥

भा॰ न एतदेवं,—स्याद्विकल्प इति, किन्तर्हि, 'विषाणानियमः स्यात्',—विषाणाकण्डूयनं सर्व्वस्मिन्नहर्गणे नियम्येत, अन्त्ये अहनि प्रासनं स्यात् । कस्मात्?। 'प्रातःसवनमध्यत्वात्',—बहूनि प्रातः-सवनानि अस्याहर्गणस्य मध्ये, तेषां विषाणाकण्डूयनं धर्म्मोऽनुगृहीतो भविष्यति ।

'नन्वितरयोः सवनयोर्हस्तकण्डूयनं धर्म्मः, स वाधिष्यते' । नैष दोषः,—नैतच्छ्रूयते,—पाणिना कण्डूयितव्यमिति, अर्थात् प्रत्यासत्त्या क्रियते, यथार्थादर्थः, न स चोदनार्थः । 'एवमप्युत्तरयोः प्रत्या-सत्त्या हस्त एव प्राप्नोति' । अत्र ब्रूमः,—'शिष्टे चाभिप्रवृत्तत्वात्',—

अपि च, नित्य-काम्य-नैमित्तिकानि कर्माणि यथोपपत्ति-कालानि, तेषां यदन्ते आहितेन अग्निना कार्य्यं; यदान्यस्मिन् ऋतौ प्रक्रान्ते यदन्तेऽग्निराधातुं, सोऽयमर्थयोगो भवति भेदेनाधाने ; यदा तु सर्व्वकर्म्मणामर्थे तन्त्रमाधानं, नैव विरोधो भवति। तस्मादपि तन्त्रम् ॥(१२।३।२ अ०)॥

---

अग्नीषोमीयादिषु यूपस्य तन्त्रेणानुष्ठानाधिकरणम्।

सू० यूपश्चाकर्म्मकालत्वात् ॥ ३ ॥ (सि०) ॥

भा० ज्योतिष्टोमे पशवः अग्नीषोमीय-सवनीयानुबन्ध्याः, तेषां यूपः, 'खादिरे बध्नाति, पालाशे बध्नाति, रौहितके बध्नाति' इति श्रुतः। तत्र विचार्य्यते,—किं सर्व्वेषां पशुबन्धानां भेदेन यूपः, अथवा, तन्त्रम् ? इति। किं प्राप्तं ?—भेदेनेति। किंकारणं ?। अग्नीषोमीये तावत् प्रयोगवचनेन गृह्यते यूपः, उत्तरयोरपि चोदकेन प्राप्यते, कर्म्मभेदावसायिनः चोदकप्रयोगवचना भेदेन यूपं प्रापयन्ति ; तस्माद्भेदः।

एवं प्राप्ते उच्यते, 'यूपश्च' तन्त्रं भवेत्, 'अकर्म्मकालत्वात्', नास्य पशुकर्म्मकाले उत्पत्तिः, किन्तर्हि ?—पृथक्काला,—'दीक्षासु यूपं छिनत्ति क्रीते वा राजनि' इति। तत्रोत्पद्यमानस्य न गृह्यते विशेषः, अस्मै पशुबन्धाय यूपोऽयम्, अस्मै नेति, सर्व्वेभ्यस्य श्रूयते। तस्मात् सर्व्वार्थो भवति ॥

सू० एकयूपञ्च दर्शयति ॥ ४ ॥ (यु०) ॥

भा० एकं यूपं सर्व्वेषामपि पशूनां साधारणं दर्शयति, सवनीये

पशौ ‘त्रिवृता यूपं परिवीय’ इति त्रिवृता परिव्याणं विदधाति । यदि नाना यूपा भवेयुः, ततः पूर्व्वस्य यूपस्यापवर्गात् यूपान्तरे चोदकेनैव प्राप्ते त्रिवृता परिव्याणं न विधातव्यं भवेत्; अथ तन्त्रं यूपः, ततः संस्कारा अपि तन्त्रमित्यग्नीषोमीये एव परिवीतस्य कृतार्थत्वात् पुनः सवनीये परिव्याणं न प्राप्नोति, तद्विधातव्यं भवति, विधीयते च । तस्मादपि तन्त्रम् ॥ (११।२।३अ०) ॥

---

यूपसंस्काराणां तन्त्रेणानुष्ठानाधिकरणम्।

सू० संस्कारास्त्वावर्त्तेरन्नर्थकालत्वात् ॥५॥ (पू०) ॥

भा० यूपसंस्कारा ये पशुतन्त्रमध्ये क्रियन्ते, यथा प्रोक्षणम्, अञ्जनम्, उच्छ्रयणं, परिव्याणञ्च, तेषु चिन्त्यते,—किं तस्य तस्य पशोर्भेदेन कर्त्तव्याः, अथ वा, तन्त्रम्? इति । किं प्राप्तं?—‘संस्कारास्त्वावर्त्तेरन्’ यूपस्य, न यथा यूपस्तन्त्रं तथा स्युः। किंकारणम्? । ‘अर्थकालत्वात्’, —अर्थः पशोर्नियोजनं, तत्काला एते संस्काराः, तत्र दृश्यते विशेषः,—यस्य पशोर्नियोजनकाले कृताः, तदर्था इति । इतरयोश्च पश्वोरप्राप्तकालत्वात् तादर्थ्येन नास्ति प्रयोगः । तस्मादावर्त्तेरन्, यथा अग्नेः संमार्जनम् ॥

सू० तत्कालास्तु यूपकर्म्मत्वात्तस्य धर्म्मविधानात् सर्वार्थानाञ्च वचनादन्यकालत्वम् ॥ ६ ॥ (सि०) ॥

भा० सत्यम् आवर्त्तेरन् यदि ते नियोजनकालाः भवेयुः,

'तत्कालास्तु' एते, दीक्षाकालाः। कथं ज्ञायते?। 'यूपकर्मत्वात्',— न एते नियोजनार्थाः, यूप एतैः क्रियते, यूपो नियोजनार्थः, स च दीक्षासु कर्त्तव्यः, 'दीक्षासु यूपं छिनत्ति' इतिवचनात्, संस्कारैश्च स क्रियते; तस्माद्दीक्षाकाला एवैते संस्काराः।

'ननु छेदनमात्रं तत्र यूपस्य श्रूयते, न यूपक्रिया'। उच्यते, न किञ्चिद्द्रव्यं यूपाख्यमस्ति, यस्य छेदनमुच्येत, तदेतदेवं विज्ञायते,— दीक्षासु छेदनादिभिर्यूपं करोतीति। छेदनग्रहणञ्च मुख्यत्वात् प्रदर्शनार्थं, यत्कारणं नाष्टौ छेदनेन केवलेन यूपो भवतीति। एवं चेत्, दीक्षाकाला एवैते संस्काराः। 'सर्व्वार्थानाञ्च' सतां 'वचनात्' केषाञ्चित् 'अन्यकालत्वं' कृतं, यथा आग्निमारुतादूर्द्ध्वं 'अनुयाजैश्चरन्ति' इति। तस्मात् यूपवत् संस्कारा अपि तत्कालम्।

'यूपकर्मत्वात्' इत्यस्य अपरा व्याख्या,— यूपकर्म तत्, ये एते संस्काराः छेदनाद्याः,— यूपोऽयमेव क्रियते जोषणादिव्यापारेण, यथा वाजपेयेन सम्राट्; सकृत्कृतस्य तस्य पुनःक्रिया निरर्थिका; तस्मात् अनावृत्तिः।

'नन्वेवं सति निरूढपशावपि कामं स एव यूपः कर्त्तव्यो भवेत्'। बाढं भवेत्, यदि नैरिष्टिकेन यागप्रतिषेधो न स्यात्, अस्ति तु स प्रतिषेधः; तस्मान्न भवति, यथा न तैरेव दर्भैः प्रयोगान्तर-मपि क्रियते। अथ वा, यदर्थं स यूपः कृतः, तत्कर्मापवर्गं, तस्यापवर्गे यूपोऽपि अपवृक्तः॥

सू॰ सकृत्त्मानञ्च दर्शयति॥ ७॥ (यु॰)॥

'त्रिवृता यूपं परिवीय सवनीयं पशुमुपाकरोति' इति

परिव्याणेन यूपधर्मान् अनुक्रममाणः सकाग्नितं खातं यूपं दर्शयति, इतरथा, मुख्यत्वात् प्रोक्षणेनोपक्रमेत*। 'आनन्तर्यार्थमिति चेत्'। न, प्रकृतितः सिद्धत्वात्। तस्मादपि तन्त्रं संस्काराः ॥ (११।२।४अ०)॥

---

स्वरोः साधारण्याधिकरणम्।

अस्ति स्वरुः, 'यूपस्य स्वरुं करोति' इति श्रुतः,† स किं सर्वपशूनां तन्त्रं, भेदेन वा?—इति। किं प्राप्तम्?—

सू० स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात् ॥८॥ (पू०) ॥

भा० 'स्वरुः' खलु तन्त्रे तन्त्रेऽपवृज्येत, 'अस्वकालत्वात्', नास्य स्वः कालः उत्पत्तौ, कर्मकाले यमुपादीयते 'स्वरुणा स्वधितिना वा पशुं समनक्ति' इति, यस्य पशोः समञ्जनकाले उपात्तस्तदर्थोऽसाविति गम्यते विशेषः; तस्माद्भेदः। 'ननु 'यूपस्य स्वरुं करोति' इति स्वकाला एवास्योत्पत्तिः'। न खलु, एषाप्यन्तःप्रयोगैव। अपि च कार्य्यवचनोऽत्र स्वरुशब्दः, 'स्वरुं करोति',—स्वरुकार्य्यं करोति, यत्कारणं, स्वरुर्न श्रूयते स्वरुकार्य्यं तु श्रूयते पशोरञ्जनं। ननु 'कालान्ते स्वरोः प्रतिपत्तिर्दृश्यते 'संस्थिते सोमे प्रस्तरं प्रहरति स्वरुञ्चायशवैशसाय' इति'। सत्यमस्ति दर्शनं तत्तु स्वरुमात्रस्य, न तु स्वरुविशेषस्य। तत्र अग्नीषोमीये उपात्तस्य तन्त्रतया प्रवृत्तस्य दर्शनं सोमान्ते स्यात्, अथवा, चोदकप्राप्तस्यानुबन्ध्याकालस्य?—इति संशये किं न्याय्यं,—यदनु-

---

* 'सकाग्नितं यूपं दर्शयति। इतरथा मुख्यत्वात् प्रोक्षणेनोपक्रमेत' इति क० सं० द्वि० पु० पाठः।

† 'इति श्रुतेः' इति क० सं० पु० पाठः।

बन्ध्याकालस्य दर्शनं भवेत्, न तत्वतया प्रवृत्तस्येति । कुतः ? । यत उक्तो न्यायः "स्वरुस्तस्यापवर्गः स्यादस्वकालत्वात्" इति । नच, दर्शनं केवलं साधकं भवति, यथासम्भवन्तु दर्शनं कल्पितम् । तदेवं यथा प्रस्तरस्यानूबन्ध्याकालस्य दर्शनं, तद्वत् स्वरोरपि भविष्यतीति ॥

सू॰ साधारणो वानुनिष्पत्तिस्तस्य साधारणत्वात् ॥८॥ (सि॰)॥

भा॰ नैतदस्ति, प्रतितन्त्रं स्वरुभेदः—इति, किन्तर्हि 'साधारणः' स्यात् । कुतः ? । यतोऽयमनुनिष्पद्यते, यूपः साधारणः सर्वपशूनां, 'तस्य साधारणत्वात्' अयमपि साधारण एव न्याय्यः, यथैक एव यूपः सर्वपशूनां साधारणः, एवमयमप्यवश्रमाणविशेषत्वात् साधारणो भविष्यति ।

नैतद्युक्तं,—'अङ्गप्रतिकर्षवचनादवश्रमाणविशेषत्वात् यूपस्य साधारण्यमुपपद्यते, न तु स्वरोः प्रतिकर्षे किञ्चन वचनमस्ति, यतोऽवश्रमाणविशेषत्वादस्यापि साधारण्यमुपपद्येत । यदेतत् 'यूपस्य स्वरुं करोति' इति, तत् अन्तःप्रयोगसम्बद्धं,—स्वरुकार्य्यमञ्जनं कर्तुं यमुपाददीत तं यूपादिति । न च, अन्यस्य साधारणेऽन्यस्य साधारण्यं युक्तं, सम्भवन्ति ह्येकस्यापि यूपस्य बहवः शकला इति । चोदकप्रयोगवचनाच्च भिद्यमाना अन्तःप्रयोगसम्बद्धमङ्गमात्मीयं प्रतितन्त्रं प्रापयन्ति, अवश्रमाणविशेषत्वादित्यतो भेद एव युक्तः' इति । तच उच्यते,—यद्यप्यस्य नास्ति प्रतिकर्षवचनं प्रत्यक्षं, न च, अन्यस्मिन् प्रतिकृष्यमाणेऽन्यस्य प्रतिकर्ष इति, नैतद्युक्तम्, असम्बद्धयोर्हि तदेवं

भवति न सम्बद्धयोः। अथच्च प्रकलो यूपमनुनिष्पद्यते, तदस्य यूप-प्रतिकर्षादेव सिद्धः प्रतिकर्षः ; अतो यत्र यूपस्तत्रायमपि।

यच्च, 'यूपस्य स्वरुं करोति' इत्यन्तः प्रयोगसम्बद्धा श्रुतिरिति ; तदपि नैवम्, द्वौ हि कालौ द्रव्यस्य,—एक उपादानकालः, एक उपात्तस्य प्रयोगकालः ; यद्धि उपादातव्यं, न हि, तदनुपादाय कश्चित् प्रयोगमारभते, न ह्यनुपादाय व्रीहीन्, प्रस्तुत्य प्रयोगं, व्रीहीन् मृगयति ; एवंकुर्वाणस्य प्रयोग एव न संवर्त्तेत। अयञ्च यूपं क्रियमाणमनुनिष्पद्यते, अतो यत्र छेदनं, तत्रायमपि।

यदपि, एकस्यापि यूपस्य बहवः स्वरवः सम्भवन्तीति ; स्यादेवं यदि प्राथम्यविशिष्टस्य नोपादानं भवेत्, विशिष्टस्य तु उपादानमुक्तम्,—ततो यः प्रथमः शकलः परापतेत्, स स्वरुः कार्य्य इति वचनात्, वचनाच्च प्राथम्याभावात्* बहवो न सम्भवन्ति ॥

सू॰ सोमान्ते च प्रतिपत्तिदर्शनात् ॥१०॥ (यु॰)॥

भा॰ सोमान्ते चास्य प्रतिपत्तिर्दृश्यते, 'संस्थिते सोमे प्रस्तरं प्रहरति स्वरुञ्चायज्ञवेशसाय' इति, तत् साधारणे एवोपपद्यते, तन्त्रापवर्गे त्वग्नीषोमीयान्ते एव स्यात्। तस्मादपि साधारणः ॥

सू॰ तत्काले वा प्रस्तरवत् ॥११॥ (आ॰)॥

भा॰ इति यदुक्तं तत्परिहर्त्तव्यम्॥

---

* वचनाच प्राथम्याभावादिति सन्दर्भः क॰ सं॰ द्वि॰ पुस्तके नास्ति। श्रौतपुस्तके पाठः उद्धृत एवास्ते इति।

सू॰ न चोत्पत्तिवाक्यत्वात् प्रदेशात् प्रस्तरे तथा ॥१२॥ (आ॰ नि॰)॥

भा॰ नास्त्यानूबन्ध्याकालस्य स्वरोः प्रहरणं। किंकारणम्?। इदमेव प्रहरणोत्पत्तिवाक्यं, 'सोमान्ते प्रस्तरं प्रहरति स्वरुं चावभृथाय' इति; अनेन क्रमादग्नीषोमीयकालस्य प्रहरणं गम्यते, स यदि साधारणः, ततः सर्वपशूनां कृतार्थे कर्मणि अन्तेऽस्योत्सर्गविशेषस्य अग्नौ प्रहरणस्य दर्शनमुपपद्यते, अथ तु पृथक् स्यात्, ततोऽग्नीषोमीयस्यान्त एव दृश्येत। 'अथ वचनमिदं कस्मान्न भवति,—अग्नीषोमीयान्ते प्राप्तस्य सोमान्ते वचनात्'। नैतदेवं, वचनेन द्वावुत्सर्गस्य विशेषौ* उच्येयाताम्,—अग्नौ च प्रहरणं, सोमान्ते च, तथा वाक्यभेदः स्यात् तस्मान्नैतद्वचनम्। यत्तु प्रस्तरवदिति, 'प्रदेशात् प्रस्तरे तथा',—प्रस्तरस्य दर्शपूर्णमासयोः प्रहरणमुक्तम्,—'आशीर्भिः प्रस्तरं प्रहरति' इति, तत् चोदकेन प्रतिपशु प्राप्यते,† तत्रानूबन्ध्याकालस्य दर्शनं युज्यते, न स्वरुप्रहरणस्यैतदस्ति; तस्माद्विषमोऽयमुपन्यासः ॥ (११।२।५अ॰)॥

---

चात्वाले कृष्णविषाणाप्रासनस्यान्त्याह एव कर्त्तव्यताधिकरणम्।

ज्योतिष्टोमे दीक्षितव्रतमाम्नातं,—'कृष्णविषाणया कण्डूयति' इति। तत्रैव च पुनः श्रुतं,—'नीतासु दक्षिणासु चात्वाले कृष्ण-

---

* 'दर्शपूर्णमासयोः प्रहरणविशेषौ' इति आदर्शपुस्तकपाठः।

† 'प्राप्नुते' इति आदर्शपुस्तकपाठः।

विषाणां प्राप्स्यति' इति। तदुभयं द्वादशाहे चोदकेन प्राप्तम्। तत्र विचार्य्यते,—किमन्त्ये प्रथमे वा अहनि कृष्णविषाणायाः प्रासनं कर्त्तव्यम्, अथवा अन्त्ये एव?—इति। किं प्राप्तम्?,—

सू॰ अहर्गणे विषाणाप्रासनं धर्म्मविप्रतिषेधादन्त्ये प्रथमे वाहनि विकल्पः स्यात् ॥१३॥ (पू॰)॥

भा॰ विकल्पः कर्त्तव्यः,—'अन्त्ये प्रथमे वा अहनि' प्रासनम्। कुतः?। 'धर्म्मविप्रतिषेधात्',—यदि प्रथमेऽहनि करिष्यते, उत्तरेष्वहःसु प्राग् दक्षिणानयनात् ये पदार्थाः तेषां विषाणाकण्डूयनं धर्म्मः, स बाध्यते; अथान्त्ये, ततः पूर्वेषामह्नां दक्षिणानयनादूर्द्ध्वं ये पदार्थास्तेषां हस्त-कण्डूयनं धर्म्मः, स बाध्यते; स एष धर्म्मविप्रतिषेधः। तस्माद्विकल्पः॥

सू॰ पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमः स्यात् प्रातः-सवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् ॥१४॥ (सि॰)॥

भा॰ न एतदेवं,—स्याद्विकल्प इति, किन्तर्हि, 'विषाणानियमः स्यात्',—विषाणाकण्डूयनं सर्व्वस्मिन्नहर्गणे नियम्येत, अन्त्ये अहनि प्रासनं स्यात्। कस्मात्?। 'प्रातःसवनमध्यत्वात्',—बहूनि प्रातः-सवनानि अस्याहर्गणस्य मध्ये, तेषां विषाणाकण्डूयनं धर्म्मोऽनुगृहीतो भविष्यति।

'नन्वितरयोः सवनयोर्हस्तकण्डूयनं धर्म्मः, स बाधिष्यते'। नैष दोषः,—नैतच्छ्रूयते,—पाणिना कण्डूयितव्यमिति, अर्थात् प्रत्यासत्त्या क्रियते, यथार्थादर्थः, न स चोदनार्थः। 'एवमप्युत्तरयोः प्रत्या-सत्त्या हस्त एव प्राप्नोति'। अत्र ब्रूमः,—'शिष्टे चाभिप्रवृत्तत्वात्',—

प्रातःसवनक्षेपे कण्डूयनस्य शिष्टत्वादुत्तरयोरपि विषाणाकण्डूयनमेव नियम्येत, 'अभिप्रवृत्तत्वात्',—अभिप्रवृत्तस्य नियमस्योत्सर्गे न्याय्य-विरोधः स्यात् ।

'अथ प्रकृतौ कथमुत्सर्गः?। विषाणाया अभावात् । अन्या विषाणा कस्मात् कण्डूयनार्थेन नोत्पाद्यते?' । पूर्वविषाणायाः प्रसक्तं धारणयत्नविमोकार्थं, तत् यद्यन्या विषाणा आनीयेत, तस्या धारण-मदृष्टार्थं, तस्य अदृष्टार्थः कल्पयितव्यः स्यात् । इह तु उत्तरप्रातःसवने धारयितव्या विषाणा, तस्यां सत्यां नास्ति नियमोत्सर्गे कारणं । तस्मात् न्याय्यत्वात्: दक्षिणानयनकालादूर्द्धं विषाणाकण्डूयनमेव स्यात् ॥ (११।३।५अ०) ॥

---

राजसूयेऽप्यत एव हविष्कृत्काले वाग्विसर्गाधिकरणम् ।

सू० वाग्विसर्गो हविष्कृता वीजभेदे* तथा स्यात् ॥१५॥

भा० राजसूये नानावीजेष्टिः,—'अग्नये गृहपतये आशूनामष्टा-कपालं निर्वपेत्, सोमाय वनस्पतये श्यामाकं चरुं, सवित्रे प्रसवित्रे सतीनानामष्टाकपालम्' इति । "नानावीजेष्वेकमुलूखलं विभवात्" (५।२।१३सू०) इत्युक्तम् । अतस्तस्यां क्रमेणावहन्तिः क्रियते। प्रकृतौ च श्रूयते,—'अपः प्रणेष्यन् वाचं यच्छति तां स हविष्कृता विसृजति' इति । हविष्कृद्ग्रहणं च काललक्षणार्थमित्युक्तम्,—"तथा-ह्वानमपीति चेत्" (३।२।५सू०)। "न कालविधिश्चोदितत्वात्" (३।२।६सू०) इति। इहानेको हविष्कृदाह्वानकालः। तत्र पूर्वं

---

* 'वीजभेदे' इति क० ख० दि०, का० श्रौ० एवं चादर्शपुस्तकपाठः। एवं परत्रापि ।

विचारणा,—किमन्ते प्रथमे वा हविष्कृत्काले वाग्विसर्गः कर्त्तव्यः, अथ वा अन्त्य एव ? इति । तथैव च पूर्वः पक्षः,—प्राक् हविष्कृत्कालात्, ये पदार्थाः तेषां वाग्यमो धर्मः, स बाध्येत, यदि पूर्वस्मिन् वाग्विसर्गः क्रियते; अथोत्तरस्मिन्, ततो हविष्कृत्कालात् ऊर्द्ध्वं ये पदार्थाः, तेषां व्याभाषणकरणं धर्मः, तद्बाध्येत । तथैव चोत्तरः पक्षः,—व्याभाषणस्याश्रुतत्वाच्छिष्टे च वाग्यमस्याभिप्रवृत्तत्वादिति । अधिकरणप्रदेशोऽयम् ॥ (११।३।६अ०)॥

---

अग्नीषोमीये पौरोडाशिककाल एव वाग्विसर्गाधिकरणम् ।

सू० पशौ च सपुरोडाशे समानतन्त्रं भवेत् ॥१६॥

भा० अग्नीषोमीये पशौ पशुः पुरोडाशश्च; तयोः पाशुकं पौरोडाशिकं च तन्त्रम् । अत्रापि सैव चिन्ता,—किं पाशुककर्मार्थं हविष्कृदाह्वानकाले वाग्विसर्गः कर्त्तव्यः, उत पौरोडाशिककर्मार्थे ? इति । तथैव पूर्वोत्तरपक्षौ योज्यौ । अयमप्यधिकरणप्रदेश एव ।

'ननु नैव पशौ हविष्कृदस्ति चैावध्यर्थत्वात्' । सर्वार्थत्वेवं कृत्वा चिन्त्यते । कृत्वाचिन्तेयम् ॥ (११।३।७अ०)॥

---

अग्निचयनेऽग्निविमोकस्य प्रधानापवर्गकालताधिकरणम् ।

अग्नौ श्रूयते,—'अग्निं युनज्मि शवसा घृतेनेति जुहोत्यग्निमेवैतत् युनक्ति' इति, पुनः 'इमं स्तनं मधुमन्तं धयापाम् इत्यग्निविमोकं जुहोति' इति । तत्र विचार्य्यते,—किमङ्गप्रधानार्थो योगः, सर्वापवर्गे

विमोकः कर्त्तव्यः, उत, प्रधानार्थो योगः, प्रधानापवर्गे विमोकः?— इति ।

सू० अग्नियोगः सोमकाले तदर्थत्वात् संस्कृतकर्म्मणः परेषु साङ्गस्य तस्मात् सर्वापवर्गे विमोकः स्यात् ॥१७॥ (पू०)॥

भा० अङ्गप्रधानार्थे योगः, सर्वापवर्गे च विमोकः स्यात्। किंकारणम्?। अविशेषेण श्रूयते,—'अग्निं युनज्मि शवसा घृतेनेति जुहोति अग्निमेवैतत् युनक्ति' इति। न च, श्रूयते,—तस्मै अस्मै वा कर्म्मणे इति, अविशेषात् सर्वार्थमिति विज्ञायते । अपि च, तस्मिन् युक्तेऽग्नावङ्गानि प्रधानानि च क्रियन्ते, तस्मादपि सर्व्वार्थः; तदुक्तं, "सर्व्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात्"* (३।७।२सू०) इति। सर्व्वार्थं चेत्, 'सर्व्वापवर्गे विमोकः' कर्त्तव्यः । तदा हि योगकार्य्यमवसितं भवति, योगापवर्गश्च विमोकः ॥

सू० प्रधानापवर्गे वा तदर्थत्वात् ॥१८॥ (सि०)॥

भा० न वा सर्व्वापवर्गे विमोकः स्यात्, किन्तर्हि 'प्रधानापवर्गे' एव। प्रधानसंयोगेन हि श्रूयते—'पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभते' इति; यज्ञप्राप्त्यर्थं युनक्तीति विज्ञायते। तस्मात् प्रधानार्थो योगः। प्रधानार्थत्वेन, तदपवर्गे योगकार्य्यमवसितं भवति। तस्मात् तत्र विमोकः। अविशेषविधानं यज्ञसंयोगेन विशेषेण युज्यमानं विशेषार्थं भवति ॥

---

* 'सर्व्वेषां शेषः स्यात् प्रयुक्तत्वात्' इति सर्व्वत्रैव पाठः।

सू॰ अवभृथे च तद्वत् प्रधानार्थस्य प्रतिषेधोऽपदृष्टार्थत्वात् ॥१९॥ (यु॰१) ॥

भा॰ एवञ्च कृत्वा अवभृथे आर्षेयवरणस्य होतृवरणस्य च प्रतिषेधो युक्तो भविष्यति, 'न होतारं वृणीते नार्षेयम्' इति यथान्यायोपदिष्टः। सोमार्थं हि होतृवरणं कृतं,—'यद्धोतारं वृणीते अग्निं तद्वृणीते' इति। एतस्मिन् न्यायेऽसति तदप्यङ्गप्रधानार्थमिति अवभृथेऽपि प्रसज्येत, तच्च कृतार्थत्वात् प्राकृतं होतृवरणं नैव प्राप्नोति, तस्य प्रतिषेधोऽनर्थकः। सति त्वेतस्मिन् न्याये तदपि प्रधानार्थमेव। तथापि हि यज्ञसंयोगः,—'यदन्यता वषट् कुर्युर्भ्रातृव्यं यज्ञस्याशीर्गच्छेत्, यद्धोता वषट् कुर्व्वन्ति एकधा तद् यजमाने यज्ञस्याशीः प्रतितिष्ठति' इति। प्रधानार्थं चेत्, तदपवर्गे तत्कार्यमवसितमिति अवभृथे प्राकृतं होतृवरणं प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः, उच्यते च। तस्मात् प्रधानार्थो योगः प्रधानापवर्गे विमोक इति ॥

सू॰ अहर्गणे च प्रत्यहं स्यात् तदर्थत्वात् ॥२०॥ (यु॰२॥

भा॰ अहर्गणे च द्वादशाहे प्रत्यहं योगविमोकौ दर्शयति,—'स वा अहरहर्युनक्ति अहरहर्विमुञ्चति' इति, तदुपपद्यते यदि प्रधानार्थो योगः, इतरथा आद्ये ऽहनि योगः स्यात् अन्त्ये विमोकः, तदा हि सर्वापवर्ग इति ॥ (१२।३।८अ॰) ॥

---

उपसत्कालस्य सुब्रह्मण्याह्वानस्य भेदेनावृत्त्यधिकरणम् ।

भा॰ द्वादशाहे उपसत्कालं सुब्रह्मण्याह्वानं प्रति चिन्त्यते,—किं भेदेन कर्त्तव्यम्, अथवा तन्त्रेण ?—इति । कर्मभेदाद्भेदेनेति प्राप्ते उच्यते,—

सू॰ सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥२१॥ (पू॰) ॥

भा॰ 'सुब्रह्मण्या तु तन्त्रं' स्यात् । कुतः ? । 'अन्यकालत्वात्',— कर्मप्रयोगात् पृथक्कालेयं, तत्र न गम्यते विशेषः, अगम्यमानविशेषे तन्त्रभावो युक्तः, 'दीक्षावत्',—यथा दीक्षा पृथक्कालत्वात् तन्त्रं भवति, तथेयमपि ॥

सू॰ तत्काला त्वावर्त्तेत प्रयोगतो विशेषसम्बन्धात् ॥ ॥ २२ ॥ (सि॰) ॥

भा॰ तस्मिन्नेव द्वादशाहे 'तत्काला' या सुब्रह्मण्या, सा 'तु आवर्त्तेत',- भेदेन स्यात् । कुतः ? । प्रयोगं प्रति तस्या विशेषसंयोगो भवति, 'अद्य सुत्यामागच्छ' इति, अद्येत्युक्ते श्वः परश्वो वेति गम्यं भवति । अन्यापि च, प्रकृत्यनुदेशात् वक्तव्यं, तस्मादावर्त्तेत ॥

सू॰ अप्रयोगाङ्गमिति चेत् ॥ २३ ॥ (आ॰) ॥

भा॰ इति चेत्पश्यसि,—अद्येति विशेषसंयोगादावृत्तिरिति, नैतत् युक्तम्,—कुतः ?—यतः 'अप्रयोगाङ्गम्' एतत् यत् अद्येति वचनम्, इदं हि प्रकृतौ एकत्वादह्नः अविवक्षितम्, अर्थादेव सिद्धत्वादनङ्गीकृतत्वाच्च

केनचिदेव प्राप्नोति, यावदुक्तं स्यात्, सुत्यामागच्छेति, तावदेव गच्छेति। सुत्यालक्षणं सर्वेषामाह्वानम् अविशिष्टम्। तस्मात् तन्त्रम् ॥

सू॰　स्यात् प्रयोगनिर्देशात् कर्तृभेदवत् ॥ २४ ॥ (आ॰ नि॰) ॥

भा॰　'स्यात्' भेदः 'प्रयोगनिर्देशात्'। यद्यपि अहःशब्दस्यार्थो न विवक्षितः, तथापि यस्मिन् अहनि प्रयुज्यते, तत्कालस्य प्रधानस्योपकरोति, नान्यकालस्य; 'कर्तृभेदवत्', तद् यथा 'अष्टावध्वर्युरुत्तरे विहारे सर्वाणि आसादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्' इत्यौत्तरवैहारिकाणि अङ्गानि देशभेदात् मारुत्याम् न उपकुर्वन्ति; यथा तानि देशभेदात् न उपकुर्वन्ति एवमिदमपि कालभेदादन्यकालस्य नोपकरिष्यति। तस्मादावर्त्तेत ॥

सू॰　तद्भूतस्थानादग्निवदिति चेत्तदपवर्गस्तदर्थत्वात् ॥ २५ ॥ (द्वि॰ आ॰ नि॰) ॥

भा॰　'अथोच्येत,—एकस्मिन्नहनि आहूता देवता आह्वानसंस्कृता भवति, एका चासौ, तस्याः पुनराह्वानमनर्थकम् 'अग्निवत्',—यथा अग्नेः सकृदाधानेन संस्कृतस्य न पुनःकर्मणि संस्कारः एतस्य क्रियते'—इति। तच्चायुक्तम्, यत्कारणं, प्रतिकर्मापवर्गः,-यस्मिन् कर्मणि आह्वानं क्रियते, तदर्थं तद्भवति, तस्य कर्मान्ते अपवर्गः, यथा अन्येषां सुत्याकालानां संस्काराणामग्निषंमार्गादीनाम्। तस्मादावृत्तिः ॥

सू॰　अग्निवदिति चेत् ॥ २६ ॥ (आ॰) ॥

भा० 'इति' चतुर्थं,-यथा अग्नेराधानं सर्वकर्मणां तन्त्रं भवति, एवमिदमपीति,-एतस्य कः परिहारः? । आभाषान्तं सूत्रम् ॥

सू० न, प्रयोगसाधारण्यात् ॥ २७ ॥ (आ० नि०) ॥

भा० 'न' एतत् आधानेन तुल्यम्, आधानस्य स्वकालत्वात्,— स्वकालं हि तत् क्रियते,—तत्र न दृश्यते विशेषः; इदं पुनः कर्मकालमाह्वानं, तत् यस्य कर्मणः काले क्रियते तदर्थमिति दृश्यमाणविशेषं । तस्मात् न एतत् आधानेन तुल्यम् ॥

सू० लिङ्गदर्शनाच्च ॥ २८ ॥ (हे०) ॥

भा० लिङ्गं चैतमर्थं दर्शयति,—प्रत्यहं सुब्रह्मण्याह्वानमिति, एवं हि आह, 'संस्थिते संस्थितेऽहन्याग्नीध्रागारं प्रविश्य सुब्रह्मण्ये सुब्रह्मण्या-माह्वयेति इति प्रेष्यति'—इति प्रेषणमाह्वानक्रियार्थं । तस्मादपि प्रत्यहमाह्वानम् ॥

सू० तद्धि तथेति चेत् ॥ २९ ॥ (आ०) ॥

भा० तदित्यनेन यूपाहुतिं प्रतिनिर्दिशति,—'तद्धि' यूपाहुतिकर्म यथा यूपैकादशिन्यां तन्त्रं भवति, तथा इदमपि भविष्यति । 'किं तस्य चास्य च सादृश्यं?' । तत् क्रियमाणमवश्यं कस्यचित् यूपस्यान्तिके भवति, सर्वसाधारणस्यान्तिकस्य दुर्लभत्वात्, यथा तत् एकस्य कस्यचित् यूपस्यान्तिके क्रियमाणं सर्वयूपार्थं भवति, एवमिदमपि एकस्य कस्यचित् सौत्यस्य कर्मणोऽन्तिके क्रियमाणं सर्वार्थं भविष्यतीति ॥

सू० नाशिष्टत्वादितरन्यायत्वाच्च ॥ ३० ॥ (आ०नि०)॥

भा॰ नैव एतत् तेन तुल्यम् । कुतः ? । 'अभिष्टत्वात्',—नाव यूपाग्निके होमः क्रियते । अविवक्षितमग्निकम्, आहवनीय प्रतिषेधार्थम् एतत्—इत्युक्तम् "इतरप्रतिषेधो वा ॥ "अभ्यासत्वाच्च होमानाम्" ॥ (११।२।२६।२७ सू॰) इति । 'इतरन्यायत्वाच्च',—इह तु इतरो न्यायः, कालभेदाद् गृह्यमाणविशेषत्वात्तथा भवितव्यमिति । तस्मादिषम उपन्यासः ॥

सू॰ विध्येकत्वादिति चेत् ॥ ३१ ॥ (आ॰) ॥

भा॰ अथ कश्चिद्,—यूपादिषु द्वादशाहिको विधिः तन्त्रं दृष्टो वसतीवरीपर्य्यन्तोऽवभृथादिषु, अयमपि च द्वादशाहिको विधिः, तत्सादृश्यादनेनापि तथा भवितव्यमिति ॥

सू॰ न कृत्स्नस्य पुनःप्रयोगात् प्रधानवत् ॥ ३२ ॥ (आ॰नि॰) ॥

भा॰ नैव । कुतः ? । 'कृत्स्नस्य पुनःप्रयोगात्'—कृत्स्नोऽन्यो विधिः पुनः प्रयुज्यते, अभिषव-पवमान-ग्रहचमस-स्तोत्र-शस्त्रादिः, 'प्रधानवत्' तद्यथा, प्रधानानि प्रत्यहं क्रियन्ते, तथा । तत्र वसतीवरीवद्वा सकृत्त्वं स्यात्, स्तोत्रादिवद्वा बहुकृत्वः कृतं स्यात् ? तत्र बहुकृत्वः कृतमिति न्याय्यम्, तथा सर्व्वेषामुपकरोति; सकृत्कृतं तु यत्र क्रियते, तत्रैव कालभेदादुपकुर्य्यात् । तस्मादावृत्तिः ॥ (११।३।८अ॰) ॥

---

दर्शपौर्णमासप्रयोगे पूर्वदेशाद्यादानस्य ऐच्छिकताधिकरणम्।

सू० लौकिकेषु यथाकामी संस्कारानर्थलोपात् ॥३२॥ (सि०) ॥

भा० इह लौकिकानां उदाहरणं। यथा देशः,-'समे दर्शपूर्णमासाभ्यां यजेत', कर्त्तारः,-दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः, स्रुगादीनि च पात्राणि। तेषु विचारः,—किं, प्रतिप्रयोगम् अन्यानि उपादेयानि, उत, तानि वा अन्यानि वा उपादाय प्रयोगः? इति। किं प्राप्तम्,—अन्यानि अन्यानि उपादेयानीति। किंकारणम्?। निरिष्टिकेन* पुनःक्रियां शिष्टा न आचरन्ति। इत्येवं प्राप्ते ब्रूमः,—'लौकिकेषु यथाकामी' तानि वा अन्यानि वा,—अनियमः। कुतः?। 'संस्कारानर्थलोपात्',—न कश्चित् पूर्वस्मिन् प्रयोगे कर्त्रादीनां संस्कारः कृतो योऽन्योपादाने लुप्येत। नाप्यर्थलोपः, अन्यैरपि हि शक्यते प्रयोगः कर्तुं। तस्मादनियमः। अथ यदुक्तं,—निरिष्टिकेन शिष्टा यागं न आचरन्ति,—इति; एतैराचरन्तीति, तस्मात् नैष दोषः। ननु 'ऋत्विगाचार्य्यौ नातिचरितव्यौ-इति स्मरन्ति'। पुरुषधर्मोऽसौ न कर्मधर्मः, कर्मसंयोगाभावात् प्रकरणाभावाच्च। (११।२।१०अ०) ॥

---

पात्राणां वा-कर्मसमाप्ति-धारणाधिकरणम्॥

देशेषु कर्तृषु च पर्य्यवसितं। पात्रेषु उत्तरा कथा करिष्यते,—

---

* "दृष्टाग्निर्नेता निरिष्टा कृतृषिता निरिष्टा निरिष्टकाः पुनःप्रयोगावरा इत्यर्थः', इति माधवः।

सू० यज्ञायुधानि धार्य्येरन् प्रतिपत्तिविधानादृजीषवत् ॥ ३४ ॥ (सि०) ॥

भा० यज्ञपात्राणि तु आ अन्तात् धारयितव्यानि। कुतः?। 'प्रतिपत्तिविधानात्',-प्रतिपत्तिस्तेषां परिधानीये कर्म्मणि विधीयते,— 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति, तदर्थं; 'ऋजीषवत्',- तद्यथा, अर्हगणे सर्वेषामङ्गानामृजीषोऽवभृथे प्रतिपादनार्थं धार्य्यते, 'ऋजीषमप्सु प्रहरन्ति' इति श्रूयते ॥

सू० यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् ॥ ३५ ॥ (पू०) ॥

भा० न चेयं पात्राणां प्रतिपत्तिः, किन्तर्हि,—यजमानसंस्कारोऽयं, 'तदर्थः' तेषां पात्राणामर्थः 'श्रूयते'। 'कथं ज्ञायते?'। तेषां तृतीयया निर्द्देशात्, यजमानस्य द्वितीयया; 'तत्र यथाकामी' स्यात्, तेषां अन्येषां वा प्रासनं, 'तदर्थत्वात्', अर्थकर्म्मत्वात् पात्राणां, यैः-कैश्चिदप्यर्थः सिध्यतीति ॥

सू० मुख्यधारणं वा मरणस्यानियतत्वात्॥३६॥ (उ०)॥

भा० मुख्यानां वा आद्यानां पात्राणां धारणं, नानियमः। कुतः?। 'मरणस्यानियतत्वात्',—अनियतकालं मरणं, कदाचित्तानि पात्राणि उत्सृष्टानि भवेयुः, मरणं चापद्येत। तत्र यजमानशरीरसंस्कारलोपः स्यात्। 'एवमपि तावद्धारयितव्यानि यावदपरः प्रयोगः, परतः

तदीयैः पात्रैरर्थकर्म्म भविष्यति'। पूर्व्वेषु विद्यमानेषु उपादानमन्येषाम् अनर्थकम्। तस्मान्मुख्यधारणमेव न्याय्यम् ॥

सू० यो वा यजनीयेऽहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत् ॥ ३७ ॥ (आ०) ॥

भा० अथ वा, न मुख्यानां धारणं, 'यो यजनीयेऽहनि म्रियेत' यजमानः, 'स' अनेन संस्कारेण 'अधिकृतः स्यात्', तस्य तानि पात्राणि सन्निहितानि। 'उपवेषवत्',-यथा साम्नाय्ययाजिन एवोपवेषोपधानेन अधिकारः, तस्योपवेषः सन्निहित इति ॥

सू० न, शास्त्रलक्षणत्वात् ॥ ३८ ॥ (आ०नि०) ॥

भा० तदेतत् 'न' उपपद्यते। किंकारणं ?। शास्त्रलक्षणं तद्भवति, यत् उत साम्नाय्ययाजिन एवोपवेषो नान्यस्येति, तत्र हि साम्नाय्यार्थां शाखां तामनुनिष्पद्यते उपवेषः, तस्मा असाम्नाय्ययाजिनोऽसम्भवः। अथेदम् अनियतं संस्कारविधानं यजनीये वा अहनि अन्यत्र वा, अनारभ्य-विधानात्, 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति। न च, अन्यस्मिन्नहनि यज्ञपात्राणामुपवेषवदसम्भवः, शक्यते हि धारणेन सम्पादयितुम्। तस्मादुपवेषोऽदृष्टान्तः ॥

सू० उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ३९ ॥ (पुनः आ०) ॥

भा० अथ वा, धारणं न, किन्तर्हि, संस्कारकाले अन्यानि नवानि पात्राणि उत्पाद्यानि 'प्रयोजकत्वात्' संस्कारस्य, 'आशिरवत्',-

यथा, व्रतपेये 'घृतव्रती भवतः' इति वचनात् अभावे व्रतदुहः, 'अन्यां अयमानस्य व्रतयुक्ताम्* आग्निरे दुहन्ति' इतिश्रुतेः आग्निरार्था अन्या गौरुपादीयते, एवम् ॥

सू॰ शब्दासामञ्जस्यमितिचेत् ॥ ४० ॥ (आ॰ आ॰) ॥

भा॰ अथ पश्यसि,—एवं सति यज्ञपात्रशब्दोऽसमञ्जसो भवति, यज्ञसम्बन्धेन हि पात्राणि यज्ञपात्राणि भवन्ति, न च, नवानां यज्ञसम्बन्धोऽस्तीति ॥

सू॰ तथाग्निरे ॥ ४१ ॥ (आ॰ आ॰ नि॰) ॥

भा॰ 'आग्निरे'ऽपि याऽसौ अन्या गौरुपादीयते, सा यजमानस्य व्रतधुक् न भवति, तत्र शब्दस्य असामञ्जस्यमेव। यदि तत्रान्या गौः, इहापि अन्यानि पात्राणि भविष्यन्ति, वक्तव्यो वा विशेषः इति। अत्रमुच्यते,—

सू॰ शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावर्थे-हापूर्वार्थवद्भूतोपदेशः ॥ ४२ ॥ (पु॰ आ॰ नि॰)॥

भा॰ 'शास्त्रात्' 'विप्रयोगस्तत्र',—शास्त्रेण तत्र शब्दस्य असामञ्जस्य, व्रतदुहो विप्रयोगः कृतः, 'घृतव्रतौ भवतः' इति एकद्रव्यचिकीर्षया 'यजमानस्य व्रतयुक्तामाग्निरे दुहन्ति' इति व्रतपेये चोदकेन प्राप्यते, ततस्तासम्भवात् निवर्त्तेत, आग्निरस्य गां प्रयुङ्क्ते, तस्मात् तत्र शब्दा-

---

* 'व्रतदुघाम्' इति आदर्शपुस्तकपाठः।

तदीयैः पात्रैरर्थकर्म्म भविष्यति'। पूर्व्वेषु विद्यमानेषु उपादानमन्येषाम् अनर्थकम्। तस्मान्मुख्यधारणमेव न्याय्यम्॥

सू० यो वा यजनीयेऽहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत्॥ ३७॥ (आ०)॥

भा० अथ वा, न मुख्यानां धारणं, 'यो यजनीयेऽहनि म्रियेत' यजमानः, 'स' अनेन संस्कारेण 'अधिकृतः स्यात्', तस्य तानि पात्राणि सन्निहितानि। 'उपवेषवत्',-यथा सान्नाय्ययाजिन एवोपवेषोपधानेन अधिकारः, तस्योपवेषः सन्निहित इति॥

सू० न, शास्त्रलक्षणत्वात्॥ ३८॥ (आ०नि०)॥

भा० तदेतत् 'न' उपपद्यते। किंकारणं?। शास्त्रलक्षणं तद्भवति, यत् उक्त सान्नाय्ययाजिन एवोपवेषो नान्यस्येति, तत्र हि सान्नाय्यार्था शाखा तामनुनिष्पद्यते उपवेषः, तस्मा असान्नाय्ययाजिनोऽसम्भवः। अथेदम् अनियतं संस्कारविधानं यजनीये वा अहनि अन्यत्र वा, अनारभ्य-विधानात्, 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति। न च, अन्यस्मिन्नहनि यज्ञपात्राणामुपवेषवदसम्भवः, शक्यते हि धारणेन सम्पादयितुम्। तस्मादुपवेषोऽदृष्टान्तः॥

सू० उत्पत्तिर्वा प्रयोजकत्वादाशिरवत्॥ ३९॥ (पुनः आ०)॥

भा० अथ वा, धारणं न, किन्तर्हि, संस्कारकाले अन्यानि नवानि पात्राणि उत्पाद्यानि 'प्रयोजकत्वात्' संस्कारस्य, 'आशिरवत्',-

तदीयैः पात्रैरर्थकर्म्म भविष्यति'। पूर्व्वेषु विद्यमानेषु उपादानमन्येषाम् अनर्थकम्। तस्मान्मुख्यधारणमेव न्याय्यम्॥

सू॰ यो वा यजनीयेऽहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत्॥ ३७॥ (आ॰)॥

भा॰ अथ वा, न मुख्यानां धारणं, 'यो यजनीयेऽहनि म्रियेत' यजमानः, 'स' अनेन संस्कारेण 'अधिकृतः स्यात्', तस्य तानि पात्राणि सन्निहितानि। 'उपवेषवत्',-यथा साम्नाय्ययाजिन एवोपवेषोपधानेन अधिकारः, तस्योपवेषः सन्निहित इति॥

सू॰ न, शास्त्रलक्षणत्वात्॥ ३८॥ (आ॰नि॰)॥

भा॰ तदेतत् 'न' उपपद्यते। किंकारणं?। शास्त्रलक्षणं तद्भवति, यत् उत साम्नाय्ययाजिन एवोपवेषो नान्यस्येति, तत्र हि साम्नाय्यार्था शाखा तामनुनिष्पद्यते उपवेषः, तस्मा असान्नाय्ययाजिनोऽसम्भवः। अथेदम् अनियतं संस्कारविधानं यजनीये वा अहनि अन्यत्र वा, अनारभ्य-विधानात्, 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति। न च, अन्यस्मिन्नहनि यज्ञपात्राणामुपवेषवदसम्भवः, शक्यते हि धारणेन सम्पादयितुम्। तस्मादुपवेषोऽदृष्टान्तः॥

सू॰ उत्पत्तिर्वा प्रयोजकत्वादाशिरवत्॥ ३९॥ (पुनः आ॰)॥

भा॰ अथ वा, धारणं न, किन्तर्हि, संस्कारकाले अन्यानि नवानि पात्राणि उत्पाद्यानि 'प्रयोजकत्वात्' संस्कारस्य, 'आशिरवत्',-

यथा, ऋतपेये 'घृतव्रतौ भवतः' इति वचनात् अभावे व्रतदुहः, 'अन्यां जयमानस्य व्रतयुक्ताम्* आग्निरे दुहन्ति' इतिश्रुतेः आग्निरार्था अन्या गौरुपादीयते, एवम् ॥

सू॰ शब्दासामञ्जस्यमितिचेत् ॥ ४० ॥ (आ॰ आ॰) ॥

भा॰ अथ पश्यसि,—एवं सति यज्ञपात्रशब्दोऽसमञ्जसो भवति, यज्ञसम्बन्धेन हि पात्राणि यज्ञपात्राणि भवन्ति, न च, नवानां यज्ञसम्बन्धोऽस्तीति ॥

सू॰ तथाग्निरे ॥ ४१ ॥ (आ॰ आ॰ नि॰) ॥

भा॰ 'आग्निरे'ऽपि याऽसौ अन्या गौरुपादीयते, सा यजमानस्य व्रतधुक् न भवति, तत्र शब्दस्य असामञ्जस्यमेव। यदि तत्रान्या गौः, इहापि अन्यानि पात्राणि भविष्यन्ति, वक्तव्यो वा विशेषः इति। अथमुच्यते,—

सू॰ शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावथे-च्छापूर्वार्थवद्भूतोपदेशः ॥ ४२ ॥ (पु॰ आ॰ नि॰)॥

भा॰ 'शास्त्रात्' 'विप्रयोगस्तत्र',—शास्त्रेण तत्र शब्दस्य असामञ्जस्य, व्रतदुहो विप्रयोगः कृतः, 'घृतव्रतौ भवतः' इति एकद्रव्यविकीर्षया 'यजमानस्य व्रतयुक्तामाग्निरे दुहन्ति' इति ऋतपेये चोदकेन प्राप्यते, ततस्तासम्भवात् निवर्त्तेत, आग्निरस्य गां प्रयुङ्क्ते, तस्मात् तत्र शब्दा-

* 'व्रतदुघाम्' इति आदर्शपुस्तकपाठः।

सामञ्जस्यमनुरुध्यते, 'यथेह' अपूर्वार्थो न यत्नतः प्राप्यते, यज्ञपात्रैश्च दाहेऽविशेषेण प्रत्ययः श्रुतः; सम्भवति च तेषां सम्पादनं धारणेन। तस्मादिहाकस्मिकं शब्दस्यासामञ्जस्याश्रयणं भवतीति धारणमेव पात्राणाम्॥ (११।३।१२ अ०)॥

---

पात्राणामाधानमारभ्य धारणाधिकरणम्॥

एवं स्थितमपर्य्यवसितं, अन्तरा-चिन्तान्तरं क्रियते,-यज्ञपात्राणि धारयितव्यानीत्युक्तं। तत्र चिन्त्यते,-किं पौर्णमास्या आरभ्य धारयितव्यानि उत अग्न्याधेयात्?-इति। किं प्राप्तम्?,—

सू० प्रकृत्यर्थत्वात् पौर्णमास्याः क्रियेरन्॥४३॥(पू०)॥

भा० 'पौर्णमास्याः' आरभ्य धारयितव्यानीति। कुतः?। 'प्रकृत्यर्थत्वात्'। इमानि पात्राणि अनारभ्योक्तत्वात् दर्शपूर्णमासार्थानि, तत्रैवासामुत्पत्तिः, उत्पत्तिप्रभृति च धारणं। तस्मात् पौर्णमास्या आरभ्य धारयितव्यानि॥

सू० अग्न्याधेये वाऽविप्रतिषेधात्तानि धारयेन्मरणस्यानिमित्तत्वात्॥ ४४ ॥ (सि०)॥

भा० न वा पौर्णमास्या आरभ्य-धारणं, किन्तर्हि अग्न्याधेयात्। कुतः?। 'अविप्रतिषेधात्',-यद्यपि पौर्णमास्यां विहितानि, तानि चोदकेन पवमानहविःषु प्राप्तानि, ततश्च प्रभृति धार्य्यमाणेष्वविप्रतिषेधो भवति, 'मरणस्यानिमित्तत्वात्', प्राक् पौर्णमास्याः, यदि

मरणमापद्येत, यजमानशरीरसंस्कारलोपो भवति। आधानादारभ्य धार्य्यमाणेषु अविप्रतिषेधो भवति। तस्मादाधानादारभ्य धारणम्॥

सू॰ प्रतिप्रपत्तिर्वा यथाऽन्येषाम्॥४५॥(पू॰ उ॰)॥

भा॰ स्थितादुत्तरं, यदुक्तं (७५८पृ॰ ११प॰) पात्रैरर्थः क्रियते,—यजमानस्य संस्कार इति। तन्न, किन्तर्हि?—'प्रतिपत्तिः' एषा पात्राणामग्नीनां च यजमानशरीरे। कथम्?। 'यथा अन्येषां' द्रव्याणां सोमलिप्तानां अवभृथगमनं प्रतिपत्तिस्तद्वत्, तुल्यो हेतुः, तान्यपि नानाकर्मसु प्रयुक्तानि प्रतिपादनार्हाणि, इमान्यपि पात्राणि अग्नयश्च तथैव; तस्मात् तेषामपि प्रतिपत्तिः। 'ननु तृतीयासंयोग उभयत्र विद्यते (७५८पृ॰ ५प॰)'। न खलु। यजमानशरीरेऽग्नीनां पात्राणां च निक्षेपणं प्रतिपत्तिः, न दहनमाहिताग्नेः, दहने च तृतीया, तत्र तेषां गुणभाव एव, तैर्हि तत् साध्यते; निक्षेपणे तु द्वितीयैव, यथा, 'दक्षिणे पाणौ जूहूमासादयति'॥(११।३।१३अ॰)॥

---

सर्व्वसोमानामुपरिष्टात् प्राजापत्यप्रचाराधिकरणम्॥

सू॰ उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः॥४६॥(सि॰)॥

भा॰ वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते,—'उपरिष्टात् सोमानां प्राजापत्यैश्चरन्ति' इति। तत्र विचार्य्यते,—किम् आर्भवकाले प्रचरितव्यम्[१], उत अङ्गवतां सोमानामुपरिष्टात्[२], उत विकारस्थाने[३], अथवा सर्व्वसोमानाम् उपरिष्टात्[४]? इति। किं

प्राप्तम्?—आर्भवकाले इति। कुतः?। प्रकृतौ आर्भवकाले प्रचारो दृष्टः, प्रकृतिवदिहापि तथैव कर्त्तव्यः। एवञ्च अङ्गविपर्यासो न कृतो भवति। यदि सर्वसोमानामुपरिष्टात् प्रचारः क्रियेत, तत 'आग्निमारुतादूर्द्धम् अनुयाजैश्चरन्ति' इति 'प्रहृत्य परिधीन् हारियोजनम्' इति-एतदुभयमपि विपर्य्यस्येत, न आग्निमारुतादूर्द्धमनुयाजैश्चर्येत, कृत्वा च हारियोजनं परिधयः प्रह्रियेरन्! सोऽयमङ्गानां विपर्य्यासो विना वचनेन क्रियेत, अथ तु आर्भवकाले प्रचारः, ततो नैष दोषो भवति।

एवं प्राप्ते उच्यते,—'उपरिष्टात् सोमानां प्राजापत्यैश्चरन्तीति' उक्ते सर्वसोमानाम् उपरिष्टात् प्रचर्येत। कुतः?। 'अविशेषात्',—'सोमानाम्'—इत्युक्ते सर्वसोमानाम् अविशेषवचनात् प्रतीयते। यत्तु, आर्भवकालः प्रकृतितः प्राप्यते इति, 'अवाच्यो हि प्रकृतिकालः' चोदकेनैव प्राप्तः, तदर्थो विधिः कृतकरोऽनर्थकः स्यात्। तस्मात् सर्वसोमानामुपरिष्टात् प्रचारः॥

**सू॰ अङ्गविपर्य्यासो विना वचनादिति चेन्न॥ ४७॥ (आ॰)॥**

भा॰ अथ यदुक्तम्,—एवं सति 'अङ्गविपर्य्यासो विना' वचनेन कृतो भविष्यति—इति, तस्य कः परिहारः?—इत्याभाषान्तं सूत्रम्॥

**सू॰ उत्कर्षः संयोगात् कालमात्रमितरच्च॥ ४८॥ (आ॰ नि॰)॥**

भा॰ नैष दोषः,—यदुक्तम्,—अङ्गविपर्य्यासः—इति। कथं कृत्वा?। पश्चात्प्रचारे तावदुत्कृष्यमाणे अनुयाजानां परिधिप्रहरणस्य च

'उत्कर्षो' न्याय्यः, 'संयोगात्',—तानि हि पशुप्रचारेण क्रमतः संयुक्तानि। नच, आग्निमारुतस्यानुयाजैः सह, हारियोजनस्य वा परिधिप्रहरणेन क्रमो विवक्षितः ; न हि, परिधिप्रहरणं हारियोजनस्याङ्गं, हारियोजनो वा परिधिप्रहरणस्य, उभौ वा कस्यचिदेकस्य प्रधानस्य ; एवमाग्निमारुतमनुयाजाश्च यदि परस्परस्याङ्गभूतानि भवेयुः, एकस्य वा प्रधानस्य, ततः, एतेन क्रमेणोपकुर्व्वन्तीति विवक्षितः क्रमः स्यात्, अथ पुनः पश्वोरङ्गमनुयाजाः, आग्निमारुतं सोमस्य, तथा परिधिप्रहरणं पश्वोरङ्गं, हारियोजनः सोमेज्यात्, तेषां क्रमो निष्प्रयोजनः ; तस्मादविवक्षितः। 'कालमात्रमितरच्च',—'आग्निमरुतादूर्द्ध्वमनुयाजैश्चरन्ति' इति 'प्रहृत्य परिधीन् जुहोति हारियोजनम्' इति,—एतस्मिन् काले इतिलक्षणमाग्निमारुतं परिधिप्रहरणं च; अनपेतस्य लक्षणापाये कालः,—यथा अग्निहोत्रवेलायाम् आगन्तव्यमिति, यत्रापि अग्निहोत्रं नास्ति तत्रापि अनपेता वेला। 'नन्वेवंलक्षणा भवति'। न हि, कालः एवेह श्रुत्यर्थः, क्वा तावत् पूर्व्वकाले एव स्मर्य्यते, ऊर्द्ध्वशब्दोऽपि देशं कालं वा ब्रूयात्, देशस्यासम्भवात् कालार्थो विज्ञायते॥

## सू॰ प्रकृतिकालासत्तेः शस्त्रवतामिति चेत्॥ ४९॥ (द्वि॰ पू॰)॥

भा॰ इति चेत् पश्यसि,—सर्व्वसोमानामुपरिष्टात् प्रचार इति, नैतत् युक्तं, 'शस्त्रवतां' सोमानामुपरिष्टात् प्रचारो युक्तः। कुतः?। 'प्रकृतिकालासत्तेः'—एवं प्राकृतस्यासत्तौ कृतः प्रचारो भविष्यति,

निष्कृष्टानि केवलान्यनर्थकानि भवन्ति। न च, सवनीयानां सूक्तवाकोऽस्ति, यच्चैतानि उच्चार्येरन् पाशुक एव सूक्तवाकः तेषां प्रयत्नसिद्धः, अतस्तत्र एतद्देवतानां सङ्कीर्त्तनं युक्तं, स चोत्कृष्यते, तस्मात् तासामप्युत्कर्षः। प्रार्थस्त्वेवमनुपपद्यते। यत्तु,—'यथा निष्कर्षेऽनन्वयः'—इति, 'समानतन्त्रत्वादर्थलोपादनन्वयः',—समानतन्त्रौ दर्शपूर्णमासौ, तयोः साधारणं सूक्तवाकाम्नानं, तद्यथार्थं निविशते, अर्थलुप्तं चामावास्यादेवतानां पौर्णमास्यां सङ्कीर्त्तनम्, इतरासां च इतरत्र; यत्कारणं, या इष्टा देवताः ताः सङ्कीर्त्तनेन प्रत्यवेक्ष्यन्ते, इयमपि इष्टा न काचिदन्तरितेति। तस्मात्, 'यथा निष्कर्षेऽनन्वयः' इत्यदृष्टान्तः॥ (११।३।१५अ०)॥

इति भट्टश्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये एकादशाध्यायस्य तृतीयः पादः॥०॥

| | | |
|---|---|---|
| Kátantra, (Sans) Fasc. I—VI @ 1/ each | 6 | 0 |
| Kathá Sarit Ságara, (English) Fasc. I—XI @ 1/ each | 11 | 0 |
| Lalita Vistara, (Sans.) Fasc. I—VI @ /10/ each | 3 | 12 |
| Ditto (English) Fasc. I—II @ 1/ each | 2 | 0 |
| Maitri Upanishad, (Sans. & English) Fasc. I—III (in one volume) | 1 | 14 |
| Mímámsá Darsana, (Sans.) Fasc. II—XVI @ /10/ each | 9 | 6 |
| Márkandeya Purána, (Sans.) Fasc. IV—VII @ /10/ each | 2 | 8 |
| Nrisimha Tápaní, (Sans.) Fasc. I—III @ /10/ each | 1 | 14 |
| Nirukta, (Sans.) Vol. I, Fasc. 1—6; Vol. II, Fasc. I—III @ /10/ each Fasc. | 5 | 10 |
| Nárada Pancharátra, (Sans.) Fasc. IV @ /10/ each | 0 | 10 |
| Nyáya Darsana, (Sans.) Fasc. I and III @ /10/ each | 1 | 4 |
| Nítisára, or, The Elements of Polity, By Kámandaki, (Sans.) Fasc. II—IV | 1 | 14 |
| Parisishtaparvan (Sans.) Fasc. I | 0 | 10 |
| Piñgala Chhandah Sútra, (Sans.) Fasc. I—III @ /10/ each | 1 | 14 |
| Prithiráj Rásau, (Sans.) Fasc. I—V @ /10/ each | 3 | 2 |
| Ditto (English) Fasc. I | 1 | 0 |
| Páli Grammar, (English) Fasc. I and II @ /10/ each | 1 | 4 |
| Prákrita Lakshanam, (Sans.) Fasc. I | 1 | 8 |
| Parásara Smriti (Sans.) Fasc. I and II | 1 | 4 |
| Rig Veda, (Sans.) Vol. I, Fasc. IV | 0 | 10 |
| Śrauta Sútra of Ápastamba, (Sans.) Fasc. I—VIII @ /10/ each | 5 | 0 |
| Ditto Áśvaláyana, (Sans.) Fasc. I—XI @ /10/ each | 6 | 14 |
| Ditto Látyáyana (Sans.) Fasc. I—IX @ /10/ each | 5 | 10 |
| Sáma Veda Samhitá, (Sans.) Vols. I, Fasc. 1—10; II, 1—6; III, 1—7; IV, 1—6; V, 1—8, @ /10/ each Fasc. | 23 | 2 |
| Sáhitya Darpana, (English) Fasc. I—IV @ /10/ each | 2 | 8 |
| Sáñkhya Aphorisms of Kapila, (English) Fasc. I and II @ /10/ each | 1 | 4 |
| Súrya Siddhánta, (Sans.) Fasc. IV | 0 | 10 |
| Sarva Darśana Sangraha, (Sans.) Fasc. II | 0 | 10 |
| Śañkara Vijaya, (Sans.) Fasc. II and III @ /10/ each | 1 | 4 |
| Sáñkhya Pravachana Bháshya, (English) Fasc. III | 0 | 10 |
| Sáñkhya Sára, (Sans.) Fasc. I | 0 | 10 |
| Suśruta Samhita, (Eng.) Fasc. I and II @ 1/each | 2 | 0 |
| Taittiríya Áranyaka, (Sans.) Fasc. I—XI @ /10/ each | 6 | 14 |
| Ditto Bráhmana (Sans.) Fasc. I—XXIV @ /10/ each | 15 | 0 |
| Ditto Samhitá, (Sans.) Fasc I—XXXII @ /10/ each | 20 | 0 |
| Ditto Prátiśákhya, (Sans.) Fasc. I—III @ /10/ each | 1 | 14 |
| Ditto and Aitareya Upanishads, (Sans.) Fasc. II and III @ /10/ each | 1 | 4 |
| Ditto Aitareya S'vetáśvatara Kena Íśá Upanishads, (English) Fasc. I and II @ /10/ each | 1 | 4 |
| Tándyá Bráhmana, (Sans.) Fasc. I—XIX @ /10/ each | 11 | 14 |
| Uttara Naishadha, (Sans.) Fasc. II—XII @ /10/ each | 6 | 14 |
| Váyu Purána, (Sans.) Vol. I, Fasc. 1—6; Vol. II, Fasc. 1—4, @ /10/ each Fasc. | 6 | 4 |
| Vishnu Smriti, (Sans.) Fasc. I—II @ /10/ each | 1 | 4 |
| Yoga Sútra of Patanjali, (Sans. & English) Fasc. I—V @ /14/ each | 4 | 6 |
| The same, bound in cloth | 5 | 2 |

### *Arabic and Persian Series.*

| | | |
|---|---|---|
| 'Álamgírnámah, with Index, (Text) Fasc. I—XIII @ /10/ each | 8 | 2 |
| Áín-i-Akbarí, (Text) Fasc. I—XXII @ 1/4 each | 27 | 8 |
| Ditto (English) Vol. I (Fasc. I—VII) | 12 | 4 |
| Akbarnámah, with Index, (Text) Fasc. I—XXIV @ 1/4 each | 30 | 0 |
| Bádsháhnámah with Index, (Text) Fasc. I—XIX @ /10/ each | 11 | 14 |
| Beale's Oriental Biographical Dictionary, pp. 291, 4to, thick paper, @ 4/12; thin paper | 4 | 8 |
| Dictionary of Arabic Technical Terms and Appendix, Fasc. I—XXI @ 1/4 each | 26 | 4 |
| Farhang-i-Rashídí (Text), Fasc. I—XIV @ 1/4 each | 17 | 8 |
| Fihrist-i-Túsí, or, Túsy's list of Shy'ah Books, (Text) Fasc. I—IV @ /12/ each | 3 | 0 |
| Futúh-ul-Shám Waqídí, (Text) Fasc. I—IX @ /10/ each | 5 | 10 |
| Ditto Azádí, (Text) Fasc. I—IV @ /10/ each | 2 | 8 |
| Haft Ásmán, History of the Persian Mansawi (Text) Fasc. I | 1 | 0 |
| History of the Caliphs, (English) Fasc. I—VI @ 1/ each | 6 | 0 |

*(Turn over.)*

Iqbálnámah-i-Jahángírí, (Text) Fasc. I—III @ /10/ each .. Rs. 1 14
Isabáh, with Supplement, (Text) 34 Fasc. @ /12/ each .. .. 25 8
Maghází of Wáqidí, (Text) Fasc. I—V @ /10/ each .. .. 3 2
Muntakhab-ul-Tawáríkh, (Text) Fasc. I—XV @ /10/ each .. .. 9 6
Muntakhab-ul-Tawáríkh (English) Vol. II, Fasc. I. .. .. 1 0
Muntakhab-ul-Lubáb, (Text) Fasc. I—XVIII @ /10/ each, and Fasc. XIX with Index @ /12/ .. .. .. 12 0
Mu'áṣir-i-'Álamgírí (Text), Fasc. I—VI @ /10/ each .. .. 3 12
Nukhbat-ul-Fikr, (Text) Fasc. I .. .. .. .. 0 10
Nizámí's Khiradnámah-i-Iskandarí, (Text) Fasc. I and II @ 1/ each .. 2 0
Suyúty's Itqán, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. II—IV, VII—X @ 1/4 each .. .. .. 8 12
Ṭabaqát-i-Náṣirí, (Text) Fasc. I—V @ /10/ each .. .. 3 2
Ditto (English) Fasc. I—XIV @ 1/ each .. .. 14 0
Táríkh-i-Fírúz Sháhí, (Text) Fasc. I—VII @ /10/ each .. .. 4 6
Táríkh-i-Baihaqí, (Text) Fasc. I—IX @ /10/ each .. .. 5 10
Wís o Rámín, (Text) Fasc. I—V @ /10/ each .. .. .. 3 2

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. VII, IX to XI; Vols. XIII and XVII, and Vols. XIX and XX @ 10/ each .. .. 80 0
Ditto Index to Vols. I—XVIII .. .. 5 0
2. Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /4/ per No.; and from 1870 to date @ /8/ per No.
3. Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1849 (12), 1850 (7), @ 1/ per No. to Subscribers and @ 1/8 per No. to Non-Subscribers; and for 1851 (7), 1857 (6), 1858 (5), 1861 (4), 1864 (5), 1865 (8), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), @ 1/8 per No. to Subscribers and @ 2/ per No. to Non-Subscribers.

*N. B. The figures enclosed in brackets give the number of Nos. in each Volume.*

General Cunningham's Archæological Survey Report for 1863-64 (Extra No., J. A. S. B., 1864) .. .. .. .. .. 2 0
Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., J. A. S. B., 1868) .. .. .. .. 2 0
Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., J. A. S. B., 1875) .. .. .. .. 4 0
Sketch of the Turki Language as spoken in Eastern Turkestan, Part II, Vocabulary, by R. B. Shaw (Extra No., J. A. S. B., 1878) .. 4 0
A Grammar and Vocabulary of the Northern Balochi Language, by M. L. Dames (Extra No., J. A. S. B., 1880) .. .. .. 4 0
Introduction to the Maithili Language of North Bihár, by G. A. Grierson, Part I, Grammar (Extra No., J. A. S. B., 1880) .. .. 2 0
Part II, Chrestomathy and Vocabulary (Extra No., J. A. S. B., 1882) .. 4 0
4. Anis-ul-Musharrihin .. .. .. .. .. 3 0
5. Catalogue of Fossil Vertebrata .. .. .. .. 2 0
6. Ditto of Arabic and Persian Manuscripts .. .. .. 1 0
7. Examination and Analysis of the Mackenzie Manuscripts by the Rev. W. Taylor .. .. .. .. .. .. 2 0
8. Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis .. 1 0
9. Iṣṭiláhát-uṣ-Ṣúfíyah, edited by Dr. A. Sprenger, 8vo. .. .. 1 0
10. Ináyah, a Commentary on the Hidayah, Vols. II and IV, @ 16/ each .. 32 0
11. Jawámi-ul-'ilm ir-riyáẓí, 168 pages with 17 plates, 4to. Part I .. 2 0
12. Khizánat-ul-'ilm .. .. .. .. .. 4 0
13. Mahábhárata, Vols. III and IV, @ 20/ each .. .. .. 40 0
14. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—II, with 5 coloured Plates, 4to. @ 6/ each .. .. 12 0
15. Puráṇa Sangraha, I (Markandeya Purana), Sanskrit .. .. 1 0
16. Sharaya-ool-Islám .. .. .. .. .. 4 0
17. Tibetan Dictionary .. .. .. .. .. 10 0
18. Ditto Grammar .. .. .. .. .. 8 0
19. Vuttodaya, edited by Lt.-Col. G. E. Fryer .. .. .. 2 0

---

Notices of Sanskrit Manuscripts, Fasc. I—XVIII @ 1/ each .. 18 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. 5 0

BIBLIOTHECA INDICA;

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES, No. 541.



# मीमांसादर्शनम्।

श्रीशवरस्वामिकृतभाष्यसहितम्।

उत्तरार्द्धम्॥

# THE MI'MA'NSA' DARS'ANA,




WITH THE COMMENTARY OF

S'AVARA SVA'MIN.

EDITED BY

MAHES'ACHANDRA NYA'YARATNA.

FASCICULUS XVIII.

CALCUTTA:

PRINTED BY J. W. THOMAS, AT THE BAPTIST MISSION PRESS.

AND PUBLISHED BY THE

ASIATIC SOCIETY, 57, PARK STREET.

1885.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# Asiatic Society of Bengal,

**No. 57, PARK STREET, CALCUTTA.**

AND OBTAINABLE FROM

**THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.**

**57 and 59, Ludgate Hill, London, E. C.**

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | | |
|---|---|---|---|
| Átharvaṇa Upanishads, (Sanskrit) Fasc. I—V @ /10/ each .. | Rs. | 3 | 2 |
| Áśvaláyana Gṛihya Sútra, (Sans.) Fasc. I—IV @ /10/ each | .. | 2 | 6 |
| Agni Puráṇa, (Sans.) Fasc. I—XIV @ /10/ each .. | .. | 8 | 12 |
| Aitareya Áraṇyaka of the Rig Veda, (Sans.) Fasc. I—V @ /10/ each | .. | 3 | 2 |
| Aphorisms of Śáṇḍilya, (English) Fasc. I .. .. | .. | 0 | 10 |
| Aphorisms of the Vedánta, (Sans.) Fasc. III—XIII @ /10/ each | .. | 6 | 14 |
| Brahma Sútras, (English) Fasc. I .. .. .. | .. | 1 | 0 |
| Bhámatí, (Sans.) Fasc. I—VIII @ /10/ each .. .. | .. | 5 | 0 |
| Bṛihad Áraṇyaka Upanishad, (Sans.) Fasc. VI, VII & IX @ /10/ each | .. | 1 | 14 |
| Ditto (English) Fasc. II—III @ /10/ each .. | .. | 1 | 4 |
| Bṛihat Saṃhitá, (Sans.) Fasc. I—III, V—VII @ /10/ each | .. | 3 | 12 |
| Chaitanya-Chandrodaya Náṭaka, (Sans.) Fasc. II—III @ /10/ each | .. | 1 | 4 |
| Chaturvarga Chintámaṇi, (Sans.) Vols. I, Fasc. 1—11; II, 1—25; III. 1—11, @ /10/ each Fasc. .. .. .. | .. | 29 | 6 |
| Chhándogya Upanishad, (English) Fasc. II .. .. | .. | 0 | 10 |
| Daśa Rúpa, (Sans.) Fasc. I—III @ /10/ each .. .. | .. | 1 | 14 |
| Gopatha Bráhmaṇa, (Sans. & Eng.) Fasc. I and II @ /10/ each | .. | 1 | 4 |
| Gobhilíya Gṛihya Sútra, (Sans.) Fasc. I—XII @ /10/ each .. | .. | 7 | 8 |
| Hindu Astronomy, (English) Fasc. I—III @ /10/ each .. | .. | 1 | 14 |
| Kátantra, (Sans.) Fasc. I—VI @ 1/ each .. .. | .. | 6 | 0 |
| Kathá Sarit Ságara, (English) Fasc. I—XIII @ 1/ each .. | .. | 13 | 0 |
| Kál Madhab, (Sans.) Fasc. I .. .. .. | .. | 0 | 10 |
| Lalita Vistara, (Sans.) Fasc. I—VI @ /10/ each .. | .. | 3 | 12 |
| Ditto (English) Fasc. I—II @ 1/ each .. | .. | 2 | 0 |
| Maitri Upanishad, (Sans. & English) Fasc. I—III (in one volume) | .. | 1 | 14 |
| Mímáṃsá Darśana, (Sans.) Fasc. II—XVIII @ /10/ each .. | .. | 10 | 10 |
| Márkaṇḍeya Puráṇa, (Sans.) Fasc. IV—VII @ /10/ each .. | .. | 2 | 8 |
| Nṛisiṃha Tápaní, (Sans.) Fasc. I—III @ /10/ each .. | .. | 1 | 14 |
| Nirukta, (Sans.) Vol. I, Fasc. 1—6; Vol. II, Fasc. 1 & 6, @ /10/ each Fasc. | | 7 | 8 |

*(Continued on third page of cover.)*

# मीमांसा—दर्शने

## ११ अध्याये ४ पादः ।



राजसूये चाग्नावैष्णवादिकेऽङ्गानां भेदेनानुष्ठानाधिकरणम् ॥

सू॰ चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात् तन्त्रमङ्गानि ॥ १ ॥ (पू॰) ॥

भा॰ राजसूये यानि अनुक्तदेशकालानि प्रधानानि, यथा, 'त्रिसंयुक्ते'; एवमादि* चिन्त्यते,—किं तथाङ्गानां तन्त्रभावः, उत भेदः? इति । किं प्राप्तं?—'राजसूयेऽनुक्तदेशकालानां' प्रधानानां 'तन्त्रमङ्गानि' । कुतः? । 'समवायात्',—फलनिर्वर्त्तने तेषां समवायः, समेत्य एतानि फलं साधयन्ति, नैकशः । कथं ज्ञायते? । 'चोदनैकत्वात्',—'राजसूयेन'—इत्येकवचनान्तेन शब्देन तानि प्रधानानि उक्ता, फलसम्बन्धः कृतः; तस्मात् समुदायः फलवान् । यच्च फलवत् चिकीर्षितं, तदर्था इतिकर्त्तव्यता, इतिकर्त्तव्यता च अङ्गानि; तस्मात् तन्त्रम् ॥

सू॰ प्रतिदक्षिणं वा कर्तृसम्बन्धादिष्टिवदङ्गभूतत्वात् समुदायो हि तन्निर्वृत्त्या तदेकत्वादेकशब्दोपदेशः स्यात् ॥ २ ॥ (सि॰) ॥

भा॰ न चैतदेवं,—तन्त्रमङ्गानीति, किन्तर्हि?—भेदेन । कुतः? ।

---

* एवमादीनि इति क॰ सं॰ पु॰ पाठः ।

'प्रतिदक्षिणं' 'कर्त्तृसम्बन्धात्', एतेषु कर्मसु दक्षिणाभेदः श्रूयते,— 'आग्नावैष्णव एकादशकपालः, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालः, वामनो दक्षिणा। सोमापौष्ण एकादशकपालः, ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः, श्यामो दक्षिणा*' इति, दक्षिणाभेदात् प्रतिदक्षिणं कर्त्तृसम्बन्धो भवति। वामनपरिक्रीताः पूर्व्वस्य त्रिसंयुक्तस्य कर्त्तारः अनङ्गमुत्तरस्य त्रिसंयुक्तस्य। श्यामपरिक्रीता उत्तरस्य त्रिसंयुक्तस्य कर्त्तारः, तेऽप्यनङ्गं पूर्व्वस्य। अतः कर्त्तृभेदादङ्गभेदः 'इष्टिवत्', तद्यथा, पौर्णमासकालानि अङ्गानि कालभेदान्न दर्शस्योपकुर्व्वन्ति, एवमिहापि कर्त्तृभेदान्न परस्परस्य। तस्माद्भेदेन कर्त्तव्यानीति।

यत्तु,—'चोदनैकत्वादुत्तरस्यापि समुदायो विवक्षितः'—इति। उच्यते,-'समुदायो हि तन्निर्वृत्त्या', समुदायः फलनिष्पत्त्या, 'विवक्षितः', 'तदेकत्वात्', फलैकत्वात् सहवचनं, न प्रयोगैकत्वात्, 'इष्टिवत्', यथा, दर्शपूर्णमासयोः प्रयोगभेदेऽपि फलैकत्वात् समासवचनम्, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति॥

सू॰ तथा चान्यार्थदर्शनम्॥ ३॥ (यु॰)॥

भा॰ अन्यार्थोऽप्येतमर्थं दर्शयति,-'पूर्वं त्रिसंयुक्तमुत्तरं त्रिसंयुक्तम्'-इति; तन्त्रभेदे हि पौर्वापर्य्यं स्यात्। 'नन्वेकतन्त्रत्वेऽपि प्रधानापेक्षं पौर्वापर्य्यं भवेत्',। नैवम्, एतद्वाक्यभेदेन तु विज्ञायते साङ्गयोः

* "सोमापौष्ण एकादशकपालः, ऐन्द्रापौष्णश्चरुः, पौष्णश्चरुः, श्यामो दक्षिणा। आग्नावैष्णव एकादशकपालः, ऐन्द्रावैष्णवश्चरुः, वैष्णवस्त्रिकपालो वामनो दक्षिणा" इति माधवमालायां पाठः।

प्रधानयोरेतत् पौर्वापर्यमिति। एवं आह,—'यत्पूर्वं त्रिसंयुक्तं वीरजननं तत्, यदुत्तरं त्रिसंयुक्तं पशुजननं तत्' इति। फलसम्बन्धश्च प्राधान्ययोर्भवति न केवलयोः, तस्मात् दर्शनमेवैतत्॥(११।४।१ अ०)॥

---

राजसूये कर्तृसम्बन्धताधिकरणम्।

## सू० अनियमः स्यादिति चेत्॥ ४॥ (पू०)॥

भा० तत्रैव विचार्यते,—किमुपक्रमे ये कर्त्तारस्त एव आ अन्तात्, उत, अनियमः,—त एवान्ये वा?—इति। किं प्राप्तं?—'अनियमः स्यादिति चेत्',—इति चेत् पश्यसि,—प्रतिदक्षिणं कर्तृसम्बन्धः इति अनियमः। पवित्रदक्षिणाभिः ये परिक्रीताः पवित्रार्थास्ते भवन्ति, पवित्रान्ते तेषामपवर्गः, उत्तरे कर्मणि यथाकामी, ते वा अन्ये वा स्युः। तस्मादनियमः॥

## सू० नोपदिष्टत्वात्॥ ५॥ (सि०)॥

भा० नैतदेवं युक्तम्,—अनियमः—इति, किन्तर्हि?—य एव प्रक्रमे ते एव आ अन्तात् स्युः। कस्मात्?। 'उपदिष्टत्वात्' आदावेव वरणकाले यजमानेन तेषामुपदिष्टम्,—अनेन मां राजसूयसंज्ञकेन कर्मसमुदायेन याजयत—इति। वरणं च प्राक्कर्मप्रवृत्तेः, तद् अनुच्चार्यमाणविशेषत्वात् तन्त्रं, तेन आनताः* सर्वार्था भवन्ति। आह,—'यदि समुदायमुद्दिश्य क्रियन्ते, तत एवम्; अथ पूर्वमवयवं पवित्रमुद्दिश्य, ततो न

---

* अवनता इति आदर्शपुस्तकपाठः।

सर्वार्थास्तदर्था एव भवन्ति'। किं पुनरत्र युक्तम्?-समुदायमुद्दिश्येति, तथा सति अविघ्नेन कर्तुः कर्म निर्वर्त्तते, इतरथा पविचान्ते कस्मिंश्चित् कर्म्मणि त एव कामतो न संप्रवर्त्तेरन्, अन्ये च कर्त्तारो नोपपद्येरन्, कर्मविघ्नः स्यात् ॥

सू० लाघवातिपत्तिश्च* ॥ ६ ॥ (यु०१) ॥

भा० एवं च सति लाघवं भवति, इतरथा प्रतिकर्मोपादानं, तत् गुरु स्यात्। चलिंगयाज्ययोश्चाव्यभिचारो धर्मः, तस्मात् समुदायमुद्दिश्य नियन्ते, तथा च तन्त्रम् ॥

सू० प्रयोजनैकत्वात् ॥ ७ ॥ (यु०२) ॥

भा० एकञ्च प्रयोजनमवयवदक्षिणानामपि समुदायसम्पत्तिः, न हि अवयवेन केवलेन कृतेन कश्चिदर्थः, अवयवैः समुदायः सम्पादयितव्य इति अवयवे परिक्रीयन्ते, तेषां समुदायसम्पत्तौ कृतार्थत्वम्। तस्मात्ते एव कर्त्तार चा अन्तात् स्युः। आह,-'यदि समुदायसम्पत्तौ, अवयवशः परिक्रयः सकृदेव कर्त्तव्यः, किं पुनः आवृत्त्या?'—इति उच्यते,—

सू० विशेषार्था पुनःश्रुतिः ॥ ८ ॥ (आ०नि०) ॥

भा० उभयथा परिक्रये प्राप्ते सकृदा प्रत्यवयवं वा, परिक्रयविशेषो नियम्यते,-प्रत्यवयवं कर्त्तव्यः। द्रव्यसङ्ख्यानियमेन च वामनो दक्षिणा,

---

* लाघवापत्तिश्च इति का० क्षो० पु० एवं चादर्शपुस्तकपाठो न समीचीनतया प्रतिभाति।

'अपुत्तमभिषेचनीये ददाति' इत्येवं क्रियमाणमभ्युदयकारि भवतीति॥ (११।४।२अ०)॥

---

अवेष्ट्यङ्गानां भेदाधिकरणम्॥

सू० अवेष्टौ चैकतन्त्र्यं स्याल्लिङ्गदर्शनात्॥ ९॥ (पू०)॥

भा० तस्मिन्नेव राजसूये अवेष्टिः,*—'आग्नेयोऽष्टाकपालो हिरण्यं दक्षिणा बार्हस्पत्यश्चरुः शितिपृष्ठो दक्षिणा' इत्याम्नाता; तस्यां चिन्त्यते,—किम् अङ्गानां भेदः, उत, तन्त्रभावः?—इति। किं प्राप्तम्?,—'अवेष्टौ चैकतन्त्र्यं स्यात्', तन्त्रता, 'लिङ्गदर्शनात्', लिङ्गं हि तन्त्रभावस्य सूचकं दृश्यते,—'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा अभिघारयेद् यदि वैश्यो वैश्वदेवं यदि राजन्य ऐन्द्रम्' इति। सामस्त्ये च हविषां निधानमुपपद्यते, ऐकतन्त्र्ये † च सामस्त्यम्, तस्मादैकतन्त्र्यम्। 'ननु लिङ्गमुपदिश्यते, कुतः प्राप्तिः?'। सह चोदनया प्राप्तिः, 'अथैना दिशामवेष्टयः इमं वा अथ तं लोकं पुनरुपावरोहन्ति' इति। अवेष्टिरिति चैकवच्छ्रुतेः, 'एतयाऽन्नाद्यकामं याजयेत्' इति च॥

सू० वचनात् कामसंयोगेन॥ १०॥ (सि०)॥

भा० न वा तन्त्रभावः। कुतः?। उक्तो न्यायः,—प्रतिदक्षिणं वा

---

* "ता अवेष्टय उत्पत्तिवाक्ये एवमाम्नायन्ते, आग्नेयमष्टाकपालं निर्वपति, हिरण्यं दक्षिणा; ऐन्द्रमेकादशकपालम्, ऋषभो दक्षिणा; वैश्वदेवं चरुं, पिशङ्गी पष्ठौही दक्षिणा; मैत्रावरुणीमामिक्षां, वशा दक्षिणा; बार्हस्पत्यं चरुं, शितिपृष्ठो दक्षिणेति" इति आम्नाता।

† एकतन्त्रे इति पुस्तकेषु पाठो न समीचीनः।

कर्तृसम्बन्धः स्यात्-इति। 'लिङ्गदर्शनात्'—इति यदुक्तं, तत्र ब्रूमः,— 'वचनात्' इयं 'कामसंयोगेन' अपि श्रूयते,—'एतयैवान्नाद्यकामं याजयेत्' इति। तत्रैतद्दर्शनम्; न च, तत्र दक्षिणाभेदः, न हि, राजसूयिक्यो दक्षिणास्तत्र प्राप्यन्ते; 'एतयैवान्नाद्यकामं याजयेत्'— इति च एकवचनान्तेन शब्देन फलं प्रति निर्देशात् सहप्रयोग एव; तत्रैतद्दर्शनमुपपद्यते। तस्मात् तदपेक्षमेतत्॥

सू॰ क्रत्वर्थायामिति चेन्न वर्णसंयोगात्॥११॥ (आ॰नि॰)॥

भा॰ अथ पश्यसि,—'क्रत्वर्थायाम्' एवैतद्दर्शनं भवतु, एवं प्रकृतापेक्षं भविष्यति-इति, तच्च न। कुतः?। 'वर्णसंयोगात्',-'यदि ब्राह्मणो यजेत', 'यदि वैश्यः' इति, न च, क्रतौ ब्राह्मणवैश्यौ स्तः, राजन्यस्यैव राजसूयः, 'राजा राजसूयेन' इतिवचनात्। तस्मात् फलार्थायामेतद्दर्शनम्॥ (११।४।३अ॰)॥

---

पवमानेष्टिहविषां भेदेनानुष्ठानाधिकरणम्॥

सू॰ पवमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात्॥ ॥१२॥ (पू॰)॥

भा॰ आधाने पवमानेष्टयः,-'अग्नये पवमानायाष्टाकपालं निर्वपति, अग्नये पावकाय, अग्नये शुचये' इति। तत्र विचार्यते,-किम् आसामैकतन्त्र्यं, भेदः?-इति। किं प्राप्तम्?—'पवमानहविःष्वैकतन्त्र्यं' स्यात्।

कुतः ? । 'प्रयोगवचनैकत्वात्',—एकश्चासौ प्रयोगवचनः, 'अग्नौ* निरूप्यामी'ति । प्रयोगवचनैकत्वात् सहप्रयोगः, तत्र न गृह्यते विशेषः, तस्मादेकतन्त्रत्वम् ॥

सू० लिङ्गदर्शनाच्च ॥ १३ ॥ (यु०) ॥

भा० लिङ्गञ्च सह प्रयोगं दर्शयति,—'समानबर्हींषि भवन्ति' इति । अनुवादोऽयं वर्त्तमानोपदेशात् ॥

सू० वचनात्तु तन्त्रभेदः स्यात् ॥ १४ ॥ (सि०) ॥

भा० नाप्येकतन्त्रत्वं† स्यात्,—किन्तर्हि, 'तन्त्रभेदः' । स च भवत्येव प्रथमाया भेदः, उत्तरयोस्तन्त्रम् । कस्मात् ? । 'वचनात्' वचनमिदं भवति,—अथ यः कामयेत वसीयान् श्रेयान् स्यामिति तस्याग्नये पवमानाय निरूप्य अथ पावकाय शुचये चोत्तरे हविषी समानबर्हिषी निर्वपेत् यदेनमभ्यहीत्तेन स उत्तरं वसीयान् श्रेयान् भवति'—इति, किमिव वचनं न कुर्य्यात्, नास्ति वचनस्यातिभारः । तस्मादेवं कर्त्तव्यम् । अथ यदुक्तं,—'प्रयोगवचनैकत्वात्'—इति, तस्य कः परिहारः ?' नासौ प्रयोगवचनः, कालवचनोऽसौ,—'अग्नौ* निरूप्याणि'—इति । तस्मादहेतुः स भवति ॥

सू० सहत्वे नित्यानुवादः स्यात् ॥ १५ ॥ (यु० नि०) ॥

भा० यच्चोक्तं,—'समानबर्हींषि भवन्ति' इति सहप्रयोगं दर्शयति, इति, तत्र ब्रूमः,—'सहत्वे नित्यानुवादः स्यात्' । इदमपरं श्रूयते,—

---

* 'अग्ना' इति क० सं० पु० पाठः ।

† 'न चैकतन्त्रत्वम्',—इति क० सं० एवं क० श्री० पु० पाठः ।

'यो ब्रह्मवर्च्चसकामः स्यात् तस्य सर्वाणि हवींषि निरुप्याणि' इति, तत्र सहप्रयोगो भवति, तस्मिन् सहत्वे नित्यानुवादोऽयं स्यात्,— 'समानबर्हींषि भवन्ति' इति। किं पुनर्निरुप्याणि?—इत्युक्ते सहप्रयोगो गम्यते। 'निरुप्याणि'—इतिबहुत्वयुक्तः प्रयोगो विज्ञायते, तत्र बहुत्वम् उपादेयत्वेन चोदितानां विवक्षितम्; न च एकशः प्रयोगो बहुत्वसंयुक्तः प्रयोगो भवति, तस्मात् सहप्रयोगो विज्ञायते॥ (११।४।४अ०)॥

---

द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकस्य द्वादशदिनताधिकरणम्॥

'द्वादशाहेन प्रजाकामं याजयेत्' इति* श्रूयते, तत्र विचार्य्यते,— किम् एकैकशः पृथक् पृथग्दीक्षोपसदेनाहः सम्पाद्य सम्पाद्य द्वादश पञ्चविंशतिरात्राः कर्त्तव्याः(१), अथ वा, द्वादश साद्यस्काः(२), अथ वा, चतुरहे दीक्षाः, चतुरहे उपसदः, चतुरहे सुत्याः(३), अथ वा, स्वस्थानानां दीक्षोपसत्सुत्यानां विवृद्धिः(४)?—इति। किन्तावत् प्राप्तं?— तत् सूत्रेणैवोपक्रमः?—

---

* "द्वादशाहस्य एकैकं अहः पृथक् कर्म। तस्मिंश्च सदीक्षस्य सोपसत्कस्य सकलस्य ज्योतिष्टोमस्य विध्यन्तो दृष्टः, अतिदेशाच्च उपसदां दीक्षाणां च प्राकृतषट्त्वाबाधनात् पृथक् द्वादशत्वं युक्तं, ततो दीक्षोपसदर्थं चतुर्विंशतिर्दिनानि सुत्यार्थमेकं दिनमिति पञ्चविंशतिः। ईदृशस्य कर्मविशेषस्य आवृत्त्या द्वादशभिरावृत्तिभिः शतत्रयम् स्यात् इति आद्यः पक्षः। तथा सति अह्नां द्वादशत्वं श्रूयमाणं बाध्येत। तस्मात् द्वादश दिवसाः इति मध्यमः पक्षः। तदा दीक्षोपसद्भ्यां उपेतस्य एकैकस्य अह्नः साद्यज्योतिष्टोमविकारत्वात् तन्मध्ये एव कर्त्तव्य इत्येकः पक्षः। प्रकृतौ दीक्षोपसदोर्मुख्यकालात् प्रागेव अनुष्ठितत्वात् इहापि तथैवानुष्ठानं प्राप्तं, तच्च मुख्यकालेऽनुष्ठाने बाध्येत, तस्मात् अङ्गद्वयस्य प्रधानस्य च द्वादश दिनानि विभज्य अनुष्ठानमिति पक्षान्तरं। "द्वादश दीक्षा द्वादश उपसदः" इत्यनयोर्मुख्यवत् पृथक् द्वादशत्वमुक्त्वा षट्त्रिंशदिति सिद्धान्तः" इति न्यायमाला।

सू॰ द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्म्म-पृथक्त्वात् ॥ १६ ॥ (१म पू॰) ॥

भा॰ 'एकैकं' सदीचोपसदम् अहरहः 'अपवृज्येत',—द्वादश पञ्चविंशतिरात्राः कर्तव्याः। कुतः?। 'तत्प्रकृतित्वात्',—सदीचोपसदम् अहरपवर्जितं ज्योतिष्टोमे यतः, तत्प्रकृतीनि एतानि द्वादशाहानि पृथग्भूतानि कर्माणि पृथक्त्वेनैव धर्मान् आकाङ्क्षन्ति। तस्मात् ज्योतिष्टोमवत् सदीचोपसदम् एकैकम् अहः कर्तव्यमिति ॥

सू॰ अङ्गं वा श्रुतिभूतत्वात् तच साङ्गं क्रियेत यथा माध्यन्दिने ॥ १७ ॥ (२य पू॰) ॥

भा॰ न वा एतदस्ति,-यदुक्तं,-द्वादश पञ्चविंशतिरात्राः कर्तव्याः—इति, किन्तर्हि,—द्वादश साद्यस्काः कार्य्याः। किंकारणम्?। 'अङ्गं' 'श्रुतिभूतत्वात्',—'द्वादशाहेन'—इति द्वादशसङ्ख्या अङ्गं प्रत्यक्षश्रुता, सा बाध्येत, यदि द्वादश पञ्चविंशतिरात्राः क्रियेरन्। तस्मात् द्वादशसु अहःसु एकैकं प्रधानं प्रयुज्येत, प्रधानकालत्वाच अङ्गानां तत्कालं तदीयं दीचोपदम्, 'यथा माध्यन्दिने'; तद्यथा, 'सान्तपनीयस्य माध्यन्दिने निरूपन्ते'—इति वचनात् मध्यन्दिन-कालान्येवाङ्गानि भवन्ति, एवमिहापि। तस्मात् द्वादश साद्यस्काः कर्तव्याः ॥

सू॰ अपि वा फलकर्तृसम्बन्धात् सह प्रयोगः स्यादाग्नेया-ग्नीषोमीयवत् ॥ १८ ॥ (३य पू॰) ॥

भा॰ 'अपि वा' नैवं,—स्यात्, द्वादश सावस्काः—इति, कथन्तर्हि, 'सहप्रयोगः स्यात्',—चतुरहे दीचाश्चतुरहे उपसदश्चतुरहे सुत्याः। कुतः?। 'फलकर्तृसम्बन्धात्',—फले कर्तृषु चैतेषां प्रधानकर्मणां समेतानां सम्बन्धः, द्वादशाहशब्देन समुदायवचनेन संयोगात् फले सम्बन्धः; सत्रे स्वयंकर्तृत्वात्, अहीने च दक्षिणेयत्वात्, कर्तृषु च एकफलत्वात्; एककर्तृत्वाच्च सहप्रयोगो भवति; 'आग्नेयाग्नीषोमीयवत्', यथा, अग्नेयाग्नीषोमीययोरेकफलत्वादेककर्तृत्वाच्च सहप्रयोगो भवति। सहप्रयोगे च विशेषाग्रहणात् तन्त्रं दीचोपसदम्। द्वादशाहश्रुतिश्च अनुयाह्या तदुभयमेवमुपपादितं भवति,—सहप्रयोगोऽहःसङ्ख्या च; तस्मादेष पक्षः श्रेयान्॥

सू॰ साङ्गकालश्रुतित्वाद्वा स्वस्थानानां विकारः स्यात्॥ ॥ १९ ॥ (सि॰)॥

भा॰ अथ वा एतदपि न युक्तम्। कुतः?। 'साङ्गकालश्रुतित्वात्',— यद्यच प्रधानानामेव कालश्रुतिः स्यात्, नाङ्गानां, तत एवं स्यात्; अत्र तु साङ्गानां कालः श्रुतः,—'द्वादश दीक्षाः द्वादश उपसदः?— इति, दीक्षाणामुपसदाञ्च पृथक् पृथक् कालः श्रुतः; यदि चतुरहे क्रियेत, ततो बाध्येत! तस्मात् स्वस्थानानां विवृद्धिः॥

सू॰ तदपेक्षञ्च द्वादशत्वम्॥ २० ॥ (उप॰१)॥

भा॰ दीक्षोपसत्सुत्यापेक्षं,—प्रथमं दीक्षाः, तासां तत्रैव द्वादशत्वं, तत उपसदः, तासामपि तद्देशानामेवान्ते सुत्या, तस्या अपि तत्स्थानाया एव विवृद्धिः,—'तदपेक्षं' 'द्वादशत्वम्'॥

सू॰ दीक्षोपसदाञ्च सङ्ख्या पृथक्, पृथक्प्रत्यक्षसंयोगात्
॥ २१ ॥ (उप॰२)॥

भा॰ अपि च, 'द्वादशाहेन प्रजाकामं याजयेत्'—इत्युक्त्वा त्रिवृदादीनि अनुक्रान्तानि, तस्मादपि तदपेक्षा द्वादशसङ्ख्या, वसतीवरीपर्यन्तानि पूर्वाणि तन्त्रम्, अन्यकालत्वात्; अवभृथादीनि उत्तराणि, दीक्षाविसर्गार्थत्वात्; स हि दीक्षोन्मोचनार्थः; एवं ह्याह, 'अप्सु दीक्षां प्रवेशयित्वा देवाः स्वर्गं लोकमायन् यदप्सु स्नाति तामेव दीक्षामालभते, अथ यदपोऽवभृथमभ्यवयन्ति तामेव दीक्षां पुनरप्सु प्रवेशयन्ति' इति। तन्त्रञ्च दीक्षा उत्पन्ना, सा तन्त्रमेवोत्सृज्यते, विशेषाग्रहणात् ॥

सू॰ तथाचान्यार्थदर्शनम् ॥ २२ ॥ (यु॰) ॥

भा॰ एवञ्च सति अन्यार्थदर्शनमिदं युक्तं भविष्यति,—'षट्त्रिंशदहो वा एष द्वादशाहः' इति ॥

सू॰ चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात्॥
२३ ॥ (आ॰ नि॰) ॥

भा॰ यच,—'आग्नेयाग्नीषोमीयवत्'—इति, युक्तं यद् आग्नेयाग्नीषोमीययोः 'चोदनापृथक्त्वे' अपि 'ऐकतन्त्र्यं' सहप्रयोगः। कुतः?। 'समवेतानां कालसंयोगात्', समवेतानाम् अङ्गप्रधानानां कालसंयोगात्, —'पौर्णमास्यां पौर्णमास्या यजेत साङ्गया' इति। तस्मात् तन्त्रं,—

पौर्णमास्यामेव अङ्गानि च प्रधानानि च क्रियन्ते; इह पुनः 'साङ्ग-कालश्रुतित्वात्'—इत्येवमपदिष्टो हेतुः। तस्मादत्र द्वादशाहेऽङ्गप्रधानानि द्वादशाहे पौर्णमासीवत् सहाकार्य्याणि॥ (११।४।५अ०)॥

---

प्रधानैरपृथक्कालानामङ्गानां भेदेनानुष्ठानाधिकरणम्॥

अथ यानि प्रधानैरपृथक्कालानि अङ्गानि, तेषु चिन्त्यते,—किं तान्यपि तन्त्रम्, अथ वा भेदेन?—इति। किं प्राप्तं?—तन्त्रमिति। किङ्कारणम्। एवं सहत्वस्य वक्ता प्रयोगवचनोऽनुग्रहीष्यते, 'द्वादशाहेन प्रजाकामं याजयेत्' इति। तदुक्तं "विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः (११।१।६४सू०) इति। एवं प्राप्ते ब्रूमः,—

सू० भेदस्तु तद्भेदात् कर्म्मभेदः प्रयोगे स्यात् तेषां प्रधानशब्दत्वात्॥ २४॥ (सि०)॥

भा० 'भेदस्तु' स्यात्। कुतः?। 'तद्भेदात्', 'तत्'-इत्यनेन पूर्वसूत्रनिर्दिष्टः कालः प्रतिनिर्दिश्यते,—कालभेदात्, काले भिद्यमाने तन्त्रभेदो भवति, यथा, दर्शे पौर्णमासेऽपि, इहापि कालभेदः, अद्य श्वः परश्व इति, तत इहापि 'कर्म्मभेदः स्यात्',—करणभेद इत्यर्थः। कथं पुनरङ्गानां कालभेदो विज्ञायते?। 'तेषां प्रधानशब्दत्वात्',—प्रधानशब्दसंग्रहीतानि अङ्गानि, यत्र प्रधानं तत्र विज्ञायन्ते,—यद् अद्य प्रधानं, तस्य अद्यकालानि अङ्गानि, यत् श्वः, तस्य श्वःकालानि, तस्माद्भेदः॥

सू० तथाचान्यार्थदर्शनम्॥ २५॥ (यु०१)॥

भा० 'पत्नीसंयाजान्तानि अहानि सन्तिष्ठन्ते' इति भेदेनाह्नां पत्नीसंयाजान्ततां दर्शयति॥

सू० श्वःसुत्यावचनं तद्वत्॥ २६॥ (यु०२)॥

भा० 'संस्थिते-संस्थितेऽहनि अग्नीद् आग्नीध्रागारं प्रविश्य सुब्रह्मण्ये सुब्रह्मण्यामाह्वयेति प्रेष्यति' इति। 'संस्थिते-संस्थिते' इतिवीप्सावचनात् सुब्रह्मण्याभेदं दर्शयति॥

सू० पश्वतिरेकश्च॥ २७॥ (यु०३)॥

भा० पश्वतिरेकश्च दृश्यते, 'य एकः पशुरतिरिच्यते, स ऐन्द्राग्नः कार्य्यः'। न तावदतिरिच्यते, यद्यनेको भवति, एकादश एते पशवः, द्वादश अहानि, तत् पश्वालम्भभेदे उपपद्यते, तन्त्रभावे सकृदेव एकादशिनान् आलभेत। तस्मादपि भेदः॥ (११।४।६अ०)॥

उपसत्काले सुब्रह्मण्याह्वानस्याविकारेण कर्त्तव्यताधिकरणम्॥

सू० सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादावाहनवत्॥ २८॥ (पू०)॥*

---

* "उपसत्काले यत् सुब्रह्मण्याह्वानं प्रकृतावस्ति, तद् द्वादशाहे चोदकप्राप्तं, तस्य मुख्यकालादन्यः काल इति कृत्वा तन्त्रं पूर्व्वं निर्णीतम्। इदानीमन्य ऊहरूपो विकारस्तन्त्राभावाभ्यां विचार्य्यते, प्रकृतौ प्रथमोपसद्दिनमारभ्य त्रयोदशेऽह्नि प्रथमसुत्या, चतुर्दशेऽह्नि द्वितीया सुत्येत्येवं क्रमेण चतुर्विंशे चरमसुत्या भवति, तथा च प्रकृतौ चतुरह इति सङ्ख्याविशिष्टेन अहःशब्देन सुत्याया उपलक्षितत्वात् अत्रापि द्वादशानां सुत्यानामहःशब्देनोपलक्ष्यमाणत्वे सति तद्विशेषणीभूतचतुःसङ्ख्यास्थाने यथोचितं त्रयोदश-चतुर्दशादिसङ्ख्यानामूहनीयत्वेन विकारो भवति। ततो विशेषणभेदेन विशेष्यस्य अहःशब्दस्यापि द्वादश कृत्वा आवृत्तौ सत्यां तु सुब्रह्मण्याह्वानस्यावापः स्यादिति" इति पूर्व्वपक्षः न्यायमालायामस्ति।

भा॰ उपसत्कालं सुब्रह्मण्याह्वानं, 'चतुरहे सुत्यामागच्छ मघवन्' —इति द्वादशाहे चोदकेन प्राप्यते। तत्रैतद्विचार्यते,—किं द्वादशाहे सुत्याहानि उपलक्षयितव्यानि, उत, अविकारेणैव प्रयोगः कर्त्तव्यः?— इति। किं प्राप्तम्?—'सुत्याविवृद्धौ' एव तस्यां 'सर्वेषाम्' अह्नामुपलक्षणं कर्त्तव्यं। कुतः?। 'प्रकृत्यन्वयात्', प्रकृतौ सौत्यम् अहरुपलक्षितं, सर्वाणि चैतानि तत्प्रकृतीनि, अतः सर्वाणि उपलक्षणीयानि। 'ननु एकैवासौ देवता इन्द्रः सकृदुपलक्षणेन संस्कृतः, संस्कृत एव, तस्य पुनरुपलक्षणमनर्थकम्?' इति। उच्यते, अस्य उपलक्षणकृतः संस्कारः सोऽद्यतनस्य प्रधानस्याङ्गं, तस्मादुत्तरार्थं पुनः-पुनरुपलक्षयितव्यः। 'आवाहनवत्', तद् यथा, 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुम्, आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्द्धमानः' इत्येकत्वेऽप्यग्नेर्देवताया: कर्मभेदाद्भेदेनाङ्गानि क्रियन्ते, एवमिहापि॥

सू॰ अपि वेन्द्राभिधानत्वात् सकृत् स्यादुपलक्षणं कालस्य लक्षणार्थत्वादविभागाच्च॥२९॥(सि॰)॥

भा॰ 'अपि वा' न स्यात् सर्वेषामुपलक्षणम्, अविकारेणैव प्रयोगः स्यात्। कुतः?। 'इन्द्राभिधानत्वात्', इन्द्रोऽत्र उपलक्षणेन संस्क्रियते, स सकृत् संस्कृतः, संस्कृत एव, न पुनः संस्कर्त्तव्यः। ननु,—'चतुरहेऽसौ संस्कृतः,—'चतुरहे सुत्यामागच्छ' इति वचनात्'। अविवक्षितोऽत्र कालः, इन्द्र आगच्छ,—इत्येतावदेव विवक्षितं, विवक्षिते सति काले वाक्यं भिद्येत,—आगच्छ मघवन्, चतुरहे आगच्छेति, सकृदुच्चरिता आगच्छतिविभक्तिरुभौ सम्बन्धौ न शक्नोति वदितुम्।

अथ 'कस्मादिन्द्रागमसम्बन्धो विवक्षितः, न पुनः कालाभिसम्बन्धः?'। 'आगच्छ मघवन्' इति प्रत्यक्षः संयोगः, 'चतुरहे आगच्छ'-इति परोक्षः, सुत्याशब्देन व्यवायात्। 'ननु च 'सुत्यामागच्छ'-इत्यपि प्रत्यक्षः, स विवक्षितो भवतु'। नैवं कश्चिद्विरोधः,—सुत्यात्वस्य अविरोधात्। 'ननु 'चतुरहे' इति सुत्याविशेषो गम्यते'। न खलु। किंकारणं ?। 'कालस्य लक्षणार्थत्वात्',—'चतुरहे' इति कालोऽत्र सुत्यालक्षणार्थः,-चतुरहादिसुत्यामागच्छेति। यस्कारणं, नात्र देवता आगच्छति, यजतौ तु उद्देशेन केवलमङ्गीभवति ; स यजतावङ्गभावोऽयसुंपलभ्यते, सर्वसुत्यासु च असौ तुल्यः, तत्र चतुरहवचनं प्रदर्शनं, मुख्यत्वात्, मुख्येन हि प्रदर्शनं भवति, यथा, 'इडान्ता आतिथ्या सन्तिष्ठते', 'नानुयाजान् यजति' इति।

'अविभागाच्च', अथ यदुक्तम् 'आवाहनवत्' इति, तत्र ब्रूमः, विभक्तः कालः, कृष्णग्रीवयोः सौम्येन व्यवायात्, तत्र गृह्यते विशेषः, पूर्वस्य कृष्णग्रीवस्य एतद्देवतावाहनम्, न उत्तरस्येति। अथेह अविभक्तकालाः सुत्या अव्यवेताः केनचित्, तासु न गृह्यते विशेषः ; चतुरहग्रहणञ्च अविशेषकमित्युक्तं। तस्माद् अविकारेण प्रयोगः॥ (११।४।७अ०)॥

---

वाजपेये प्राजापत्येषु कुम्भ्यादीनां तन्त्रताधिकरणम्॥

सू० पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात्तन्त्रभावः स्यात्॥३०॥ (सि०)॥

भा० वाजपेये प्राजापत्येषु पशुषु कुम्भ्याः शूलस्य वपाश्रपण्याश्च

'तन्त्रभावः स्यात्', 'विभुत्वात्',—विभवति एका कुम्भी सर्वपशूनाम् अवदानानां श्रपणे, शूलं हृदयानां, वपाश्रपणी वपानां। तस्मात् तन्त्रं स्युः ॥ (११।४।८अ०) ॥

---

भिन्नदेवताकेष्वपि शूलादीनां तन्त्रताधिकरणम् ॥

सू० भेदस्तु सन्देहाद्देवतान्तरे स्यात् ॥ ३१ ॥ (पू०) ॥

भा० ऐकादशिनेषु तु भेदेन कुम्भ्यादीनि स्युः। 'सन्देहात्'—एकस्यां कुम्भ्यामोप्तानां सन्देहः स्यात्,-कस्य पशोः कानि अवदानानि?-इति। एवं हृदयादीनां, वपानाञ्च ॥

सू० अर्थाद्वा लिङ्गकर्म्म स्यात् ॥ ३२ ॥ (सि०) ॥

भा० अथ वा न स्याद्भेदः। कुतः? । सहप्रयोगात्। यत्तु, 'सन्देहाद्'—इति, 'अर्थात्' चिह्नं किञ्चित्करिष्यते, येन विशेषयस्य भविष्यति ॥ (११।४।९अ०) ॥

---

कुम्भ्या अपि तन्त्रताधिकरणम् ॥

सू० अयाज्यत्वाद्वसानां भेदः स्यात् स्वयाज्याप्रदानत्वात् ॥ ३३ ॥ (पू०) ॥

भा० कुम्भ्यास्तन्त्रभावो न घटते। 'अयाज्यत्वाद्वसानां',—'याज्याद्धूर्षा वसां जुहोति' इति श्रुतं प्रकृतौ, तत्र स्वयाज्यार्द्धूर्षास्ते वसा हुता, इहापि तथैव होतव्या। न च, वसानां लिङ्गं कर्त्तुं शक्यम् ॥

सू॰ अपि वा प्रतिपत्तित्वात्तन्त्रं स्यात् स्वत्वस्याश्रुतिभूतत्वात्॥ ३४॥ (सि॰)॥

भा॰ 'अपि वा' 'तन्त्रं' कुम्भी 'स्यात्' 'प्रतिपत्तित्वात्', शेषभूताः वपाः, तासां प्रतिपत्तिरियं, प्रतिपत्तिश्च द्रव्यं न प्रयोजयति, कुतस्तद्धारणार्थं पात्रं। अत्यन्तसंसृष्टाश्च वपाः, ताः स्वयाज्यार्द्धर्चान्ते एव हुता भवन्ति।

ननु 'परयाज्यार्द्धर्चान्तेऽपि प्रसज्यन्ते'। अत्रोच्यते, स्वत्वस्य 'अश्रुतिभूतत्वात्',—नाच श्रूयते,—'स्वयाज्यार्द्धर्चान्ते होतव्या, न परयाज्यार्द्धर्चान्ते' इति। तस्मात्परत्र होमो न दोषाय नाभ्युदयाय। अतस्तन्त्रमेव कुम्भी अपि स्यात्॥

सू॰ सकृदिति चेत्॥ ३५॥ (आ॰)॥

भा॰ इति चेत् पश्यसि, स्वत्वं न श्रुतमिति, तेन तर्हि सकृदेव होमः प्रथमे याज्यार्द्धर्चान्ते भवतु, एवं सकृत्त्वञ्चानुग्रहीष्यते, याज्यार्द्धर्चान्ते च हुतं भविष्यति। स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति,—

सू॰ न कालभेदात्॥ ३६॥ (आ॰नि॰)॥

भा॰ नैतदेवं, प्रथमेऽर्द्धर्चान्ते इति, किन्तर्हि, प्रत्यर्द्धर्चं होतव्याः। कुतः?। 'कालभेदात्', भिन्ना याज्यार्द्धर्चान्ताः, निमित्तसप्तमी चेयं 'याज्यार्द्धर्चान्ते' इति, अधिकरणस्यासम्भवात्, निमित्तावृत्तौ च नैमित्तिकावृत्तिः, यथा, 'भिन्ने जुहोति' इति। तस्मात् सर्वयाज्यार्द्धर्चान्तेषु होमः॥ (११।४।१०अ॰)॥

---

भिन्नजातिषु कुम्भ्यादीनां भेदेनानुष्ठानाधिकरणम् ॥

सू० जात्यन्तरेषु भेदः स्यात् पक्तिवैषम्यात् ॥३७॥(सि०)॥

भा० ऐकादशिनेषु तु नानाजातीयेषु कुम्भ्यादीनां 'भेदः स्यात्', 'पक्तिवैषम्यात्',-विषमा हि पक्तिः आजानाम् आविकानाञ्च मांसानां, यावता कालेन आजानि पच्यन्ते, तावता आविकानि विलीयन्ते। तत्र अवदानसम्भेदो भवति, तस्मात् पात्रभेदः स्यात् ॥

सू० वृद्धिदर्शनाच्च ॥ ३८ ॥ (हे०) ॥

भा० वृद्धिश्च सौत्रामण्यां शूलानां गोजाविषु दृश्यते,—'शूलैश्च मासरेण चावभृथमभ्यवयन्ति' इति । तस्मादपि भेदः ॥ (११।४।११ अ०) ॥

---

अश्वप्रतिग्रहेष्ट्या प्रतिपुरोडाशं कपालचतुष्टभेदाधिकरणम् ॥

सू० कपालानि च कुम्भीवत्तुल्यसङ्ख्यानाम् ॥३९॥(पू०) ॥

भा० अश्वप्रतिग्रहेष्ट्यां वारुणाश्चतुष्कपालाः पुरोडाशा अश्वसङ्ख्याः श्रूयन्ते,—'यावतोऽश्वान् प्रतिगृह्णीयात् तावतश्चतुष्कपालान् वारुणान् निर्वपेत्' इति । तत्र विचार्य्यते,—किं दीर्घेषु चतुर्षु कपालेषु सर्वेषां श्रपणं कर्त्तव्यम्, अथवा प्रतिपुरोडाशं कपालचतुष्टभेदः ?-इति । किं प्राप्तं ?—'कपालानि कुम्भीवत्', यथा, प्राजापत्येषु कुम्भी तन्त्रम् एवं तुल्यसङ्ख्यानां पुरोडाशानां कपालानि तन्त्रमित्यर्थः। किंकारणम्?। एवं महत्त्वं चानुग्रहीष्यते, सर्वे च चतुर्षु कपालेषु संस्कृता भविष्यन्ति ॥

सू० प्रतिप्रधानं वा प्रकृतिवत् ॥ ४० ॥ (सि०)॥

भा० प्रतिपुरोडाशं कपालचतुष्टभेदः, एवं यथाप्रकृति कृतं भवति; प्रकृतौ दर्शपूर्णमासयोः प्रतिपुरोडाशं कपालानि भिन्नानि, इहापि तद्वदेव भेत्तव्यानि चोदकानुग्रहाय। अपि च, यदि कपालानि तन्त्रं भवेयुः, नैकोऽपि पुरोडाशः चतुष्कपालेषु संस्कृतः स्यात्; सर्वे कपालावयवेषु पक्वा भवेयुः, तत्र कपालशब्दो बाध्येत! तस्माद्भेदः॥

सू० सर्वेषाञ्चाभिप्रथनं स्यात्॥ ४१॥ (यु०)॥

भा० इदञ्च श्रूयते,—'यावत्कपालं पुरोडाशं प्रथयति' इति; तच्चाशक्यं तन्त्रभावे सम्पादयितुं, तस्मादपि भेदः॥ (११।४।१२ अ०)॥

---

व्रीह्यवघातकाले प्रतिप्रहारं मन्त्रावृत्त्यधिकरणम्॥

दर्शपूर्णमासयोः श्रूयते,—'व्रीहीनवहन्ति' इति। तत्र मन्त्रः—'अवरक्षो दिवः सपत्नं वध्यासम्' इति। तस्मिन् विचार्य्यते,—किं, प्रतिप्रहारं मन्त्रः, उत, सकृदेव आदौ? इति। किं प्राप्तं?—प्रतिप्रहारमिति। कुतः?। प्रहारात्, प्रहारः कर्म्मान्तरं। यतेः पर्य्यवसानात्; कर्म्मभेदे च सति म्रक्षते विशेषः, येन कर्म्मणा सन्निपतितो मन्त्रस्तदर्थं इति म्रक्षमाणे च विशेषे भेद इष्टः। तस्मात्, प्रतिप्रहारं मन्त्र इति। एवं प्राप्ते उच्यते,—

सू० एकद्रव्ये संस्काराणां व्याख्यातमेककर्म्मत्वम्*॥४२॥

---

* 'तस्मिन् मन्त्रार्थेनानाभ्यासादृष्टौ मन्त्रस्य सकृत्प्रयोगः स्यात्' इति चादर्शपुस्तके अधिकः पाठः। कासीश्रीनपुस्तके चयमेव उद्धृतः पाठः। संस्कृतविद्यालयपुस्तके सूत्रपाठे च पुनरेव पाठो नास्त्येव। "अयं पुनः समानाम्नायेनावघातकरणिकायाः तण्डुलभावनायाः शेषः" इत्यादितन्त्रवार्त्तिकमत्र अनुसन्धेयम्।

भा॰ एकस्मिन् द्रव्ये व्रीह्यादौ 'संस्काराणाम्' अवहननादीनां 'व्याख्यातमेककर्मत्वं',—आ तण्डुलनिर्वृत्तेरेकमिदं कर्म्मेति, सर्वेषामेवैककर्म्यात्, एतेषाञ्च तद्गुणत्वाद्-इति। 'ननु प्रतिप्रहारं कर्मभेद इत्युक्तम्'। एकस्यैव कर्मणोऽयमभ्यासः, फलस्याभ्याससाध्यत्वात्, सोमयजिवत्, तस्मिन् मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत्प्रयोगः,* यत्र मन्त्रार्थस्य नानात्वं, तत्र अस्य आवृत्तिर्भवति, यथा अग्नौ लोकंपृणायाः, यत्र पुनरेक एव मन्त्रार्थस्तत्रावृत्तिरनर्थिका। इह च एको मन्त्रार्थः। कथं ज्ञायते?। करणोऽयं मन्त्रः, करणस्य कर्त्तव्यवस्तुनोऽभिसन्धानार्थः समधिगतः, समस्ताश्चैते प्रहाराः कर्त्तव्याः, समस्ता हि कार्य्यं साधयन्ति, न व्यस्ताः, उभयनां व्रीहीणां तण्डुलविवेचनं यत्, तत् चिकीर्षितं, तद् अभिसन्धातव्यम्। तस्मात् सर्वप्रहाराणां क्रिया मन्त्रेणाभिसंहिता, तत्र आवृत्तिरनर्थिका। तस्मात् मन्त्रस्य सकृत्प्रयोगः स्यात्॥ (९।१।४।१३अ॰)॥

---

नानार्थेष्टौ प्रतिप्रहारं मन्त्रावृत्त्यधिकरणम्॥

सू॰ द्रव्यान्तरे कृतार्थत्वात् तस्य पुनःप्रयोगात् मन्त्रस्य च तद्गुणत्वात् पुनःप्रयोगः स्यात् तदर्थेन विधानात्॥ ४३॥

---

* तस्मिन् मन्त्रार्थनानात्वादावृत्तौ मन्त्रस्यासकृत्प्रयोग इत्ययं पाठः संस्कृतविद्यालयपुस्तके त्रुटितया चिह्नितः। मन्त्रस्यासकृदित्यत्र मन्त्रस्य सकृदिति चाद्यर्मपुस्तके पाठः। काशीक्रीतपुस्तके चसकृदित्यत्र पूर्वंस्थित चकारः केनापि कर्त्तितः।

भा॰ राजसूये नानाबीजेष्टिः,—'अग्नये गृहपतये आशूनामष्टाकपालं निर्वपेत् सोमाय वनस्पतये श्यामाकं चरुम्' इत्येवमादि। तत्रामवहन्तिः समन्त्रकः चोदकेन प्राप्यते। अत्रापि पूर्वेण न्यायेन सकृन्मन्त्रस्य प्रयोगः प्राप्तः, सर्वबीजानां वितुषीकरणं चिकीर्षितं, तदभिधीयते इति। तथा प्राप्ते उच्यते,—'द्रव्यान्तरे' बीजान्तरे 'पुनःप्रयोगः स्यात्' 'मन्त्रस्य'। कुतः?। 'कृतार्थत्वात्', पूर्वस्मिन् बीजे योऽवहन्तिः, स कृतार्थः, सन्निपत्योपकारी हि सः, स च येन बीजेन सन्निपतितः, तदेव संस्करोति, तदेव चेत् संस्करोति, उत्तरसंस्कारार्थं पुनः प्रयोक्तव्यः। 'तस्य पुनःप्रयोगात्', 'मन्त्रस्य' अपि 'पुनःप्रयगः', 'तद्गुणत्वात्'। तत्रापि बीजान्तरे, तस्यावहन्तेः समन्त्रो गुणः, 'तदर्थेन विधानात्', तस्याप्यसौ प्रतिकर्मावसायिना चोदकेन विहितः। तस्मात् प्रतिबीजं मन्त्रस्यावृत्तिः॥ (११।४।१४ अ॰)॥

———

दर्शपूर्णमासादौ प्रतिनिर्वापादि मन्त्राद्यावृत्त्यधिकरणम्॥

सू॰ निर्वपणलवनस्तरणाज्यग्रहणेषु चैकद्रव्यवत् प्रयोजनैकत्वात्॥ ४४॥ (पू॰)॥

भा॰ दर्शपूर्णमासयोः 'चतुरो मुष्टीर्निर्वपति' इति, तस्य मन्त्रो 'देवस्य त्वा' इति। तत्रैव च दर्भाणां लवनमन्त्रः,–'बर्हिर्देवसदनन्दामि' इति। तथा, स्तरणमन्त्रः,—'ऊर्णम्रदसन्त्वा स्तृणामि' इति। आज्यग्रहणमन्त्रः,–'धामनामासि'—इति। तेषु सन्देहः,—किं मन्त्रस्य

सकृत्प्रयोगः,—अथ वा, प्रतिमुष्टि, प्रतिद्वानं* प्रतिधातु, प्रतिग्रहणम्?। किं प्राप्तं?। 'निर्वपण-लवन-स्तरणाज्यग्रहणेषु चैकद्रव्यवत् प्रयोजनैकत्वात्',—निर्वपणादिषु एकद्रव्यवत् स्यात्, सकृत्प्रयोग इत्यर्थः। कुतः?। 'प्रयोजनैकत्वात्,'—तत्र तत्रैकं प्रयोजनम्। निर्वपणे तावद्धविष्याणामावपनं; लवने वेदिस्तरणयोग्यस्य बर्हिष उपसादनं; स्तरणे वेद्याच्छादनं; आज्यग्रहणे यागयोग्यस्य आज्यस्योपादानं। यावता प्रयोजनं तत् चिकीर्षितं, तदर्थो मन्त्र इत्युक्तम्॥

सू॰ द्रव्यान्तरवद्वा स्यात् तत्संस्कारात्॥ ४५॥ (सि॰)॥

भा॰ 'द्रव्यान्तरवद्वा स्यात्', न एकद्रव्यवत्,-भेदः स्यादित्यर्थः। कुतः?। 'तत्संस्कारात्',-ये व्रीहयः एकेन मुष्टिना निरुप्तास्ते संस्कृताः, सन्निपत्योपकारित्वान्निर्वापस्य, द्वितीयो मुष्टिरपि अन्यान् व्रीहीन् संस्करोति। तत्र यदि मन्त्रो न प्रयुज्येत, मन्त्रकृतेन संस्कारेण तेषां वर्जनं स्यात्, एवं सर्वत्र। तस्मात् तत्र तत्र मन्त्रस्यावृत्तिः॥ (११।४।१५अ॰)॥

---

वेदिप्रोक्षणे प्रत्यावृत्ति मन्त्राभ्यासत्वाधिकरणम्॥

सू॰ वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनःप्रयोगात्॥ ॥ ४६॥ (पू॰)॥

भा॰ वेदिप्रोक्षणं श्रूयते,—'त्रिः प्रोक्षति' इति। तस्य मन्त्रः,—'वेदिरसि बर्हिषे त्वा'—इति। तत्र चिन्त्यते,—किं प्रत्यावृत्ति

* प्रतिग्रहणमिति क॰ सं॰ पु॰ पाठः।

मन्त्रः, अथवा सकृदेव?—इति। किं प्राप्तं?,—'वेदिप्रोक्षणे मन्त्रस्य अभ्यासः। कुतः?। 'कर्म्मणः पुनःप्रयोगात्',—यस्मिन् कर्म्मप्रयोगे उक्तो मन्त्रः, तदर्थोऽसाविति गम्यते विशेषः तस्मादावृत्तिः॥

सू॰ एकस्य वा गुणविधिर्द्रव्यैकत्वात् तस्मात् सकृत् प्रयोगः स्यात्॥ ४७॥ (सि॰)॥

भा॰ 'सकृत्' एव 'प्रयोगः'। कुतः?। 'द्रव्यैकत्वात्', तद् वेदिद्रव्यं, सकृदुक्तेन मन्त्रेण संस्कृतं, तत्र भूयो मन्त्रकार्य्यं नास्ति। 'ननु कर्म्मद्वारेण मन्त्रो द्रव्यं संस्करोति, तच्च कर्म्म भिन्नम्'। अत्रोच्यते,—नैतद्भिन्नम्, आवृत्तिस्तस्य गुणः। क्रियाभ्यावृत्तौ हि कृत्वसुजर्थः प्रत्ययः, न क्रियाभेदे, तत् मन्त्रवद् आवृत्तिमच्च कर्त्तव्यं, सकृदुक्तेन मन्त्रेण मन्त्रवत् कृतम्, आवृत्तिसम्पादनार्थं पुनःक्रिया। तस्मात् सकृत्प्रयोगः॥ (११।४।१६ अ॰)॥

---

कण्डूयनमन्त्रस्य सकृत्प्रयोगाधिकरणम्॥

सू॰ काण्डूयने प्रत्यङ्गं कर्म्मभेदात् स्यात्॥ ४८॥ (पू॰)॥

भा॰ ज्योतिष्टोमे कण्डूयनार्थो* मन्त्रः 'कृषिषु स्याम कृष'—इति। यदा अनेकस्मिन्नङ्गे युगपत् तण्डूरुत्पद्यते, तदा चिन्ता,—किं, प्रत्यङ्गं मन्त्रावृत्तिः, अथ वा, सकृदेव प्रयोगः? इति। किं प्राप्तं?—

---

* 'कृष्णविषाणया कण्डूयते' इति विधिः।

'प्रत्यङ्गं' मन्त्रः इति। कुतः?। 'कर्म्मभेदात्', अङ्गेऽङ्गे कण्डूयनं कर्म्म भिन्नं, यतः पर्य्यवसानाद् दृश्यते विशेषः; तस्मादावृत्तिः॥

सू॰ अपि वा चोदनैककालमैककर्म्यं स्यात्॥ ४९॥ (सि॰)॥

भा॰ 'अपि वा' नैवं स्यात्, न ह्यत्र कण्डूयनं चोद्यते। अर्थात् क्रियते कण्डूयनार्थं। किमतः?। यदि चोद्यते अदृष्टार्थं स्यात्, अप्राप्ते शास्त्रमर्थवदिति; प्रतिप्रयोगञ्च अदृष्टभेदात् कर्म्मनानात्वं भवेत्; तथा दृश्येत विशेषः। अथ पुनरर्थगृहीते कण्डूयने यावता उत्पन्ना कण्डूरपनीयते, तावत् चिकीर्षितं, तत्र विशेषो न दृश्यते। 'ननु यस्याङ्गस्य निष्कर्षणं कृतं, तत् संस्कृतम् अङ्गान्तरे पुनः कर्त्तव्यम्'। उच्यते,—न अङ्गनिष्कर्षणार्थोऽयं यत्नः, किन्तर्हि कण्डूपनयनार्थः। सा च कण्डूरात्मनः, न शरीरस्य। तत्र न दृश्यते विशेषः। तस्मात् सकृदेव प्रयोगः॥ (११।४।१७अ॰)॥

---

ज्योतिष्टोमे स्नानादिषु मन्त्रानावृत्त्यधिकरणम्॥

सू॰ स्नानदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम्॥ ५०॥

भा॰ ज्योतिष्टोमे स्नपनार्थो मन्त्रः,—'त्वमग्ने व्रतपा असि' इति; तत्रैव, नदीतरणार्थः, 'देवीरापः' इति; तथाऽभिवृष्टस्य, 'उन्दतीरोजो धत्त' इति; अमेध्यप्रतिमन्त्रणस्य, 'अदब्धं चक्षुः' इति*। स यदा

* अभिवर्षेऽहं इतिकोऽयमिति माधवाशयः। अभिवर्षणमन्त्रः, 'उन्दतीर्बलं धत्त' इति एवं अमेध्यदर्शनमन्त्र 'अवद्धं मनः' इति न्यायमालायामुक्तः।

पुनः प्रतिबुद्धः स्वपिति, अनेकस्रोतसं वा नदीं तरति, सञ्चानेन वा अभिवृष्यते, अनेकं वा अमेध्यमेककालं पश्यति ; तत्र किं मन्त्रस्यावृत्तिः, अथ वा सकृदेव प्रयोगः?—इति। तत्र विशेषग्रहणादावृत्तौ प्राप्तायामुच्यते,—स्वप्नादिषु 'नैवं' यथा कण्डूयने, सकृत्प्रयोग इत्यर्थः, कृत्स्नां रात्रिमपावृद्दिश्य स्वप्नमन्त्रं प्रयुङ्क्ते, नैकां निद्रां। तथा, सर्वस्रोतांसि तितीर्षुः, सर्वाभिवर्षाणि सर्वामेध्यानि च, युगपत् सर्वेषामुपगमात्, तत्र न गृह्यते विशेषः। तस्मात् अनावृत्तिर्मन्त्रस्य ॥ (११।४।१८अ०) ॥

---

दीक्षितस्य प्रयाणे मन्त्रानावृत्त्यधिकरणम् ॥

सू॰ प्रयाणे त्वार्थनिर्वृत्तेः ॥ ५१ ॥

भा॰ दीक्षितस्य प्रस्थितस्य प्रयाणमन्त्रः, 'भद्रादभिश्रेयः प्रेहि' इति। तत्र विचार्यते, किं विश्रामे विश्रामे पुनः-पुनः प्रतिष्ठमानो मन्त्रं प्रयुञ्जीत, उत, सकृदेवादौ?—इति। विशेषग्रहणात् प्रतिप्रस्थानम्। इति प्राप्ते, उच्यते,—'प्रयाणे तु आ अर्थनिर्वृत्तेः',—अर्थमपावृद्दिश्य प्रतिष्ठते, आ अर्थनिर्वृत्तेस्तस्य प्रस्थानाभिसम्बन्धः। तस्मात् सकृदेव प्रयोक्तव्यः ॥ (११।४।१९अ०) ॥

---

उपरवमन्त्रस्यावृत्त्यधिकरणम् ॥

सू॰ उपरवमन्त्रस्तन्त्रं स्याल्लोकवद् बहुवचनात् ॥५२॥ ॥ (पू॰) ॥

भा॰ ज्योतिष्टोमे उपरवमन्त्रः*,—'रक्षोहणो बलगहनो वैष्णवान् खनामि' इति। तत्र सन्देहः,—किं, सर्वोपरवेषु सकृदेव मन्त्रः प्रयोक्तव्यः, उत, प्रत्युपवरम्? इति। किं प्राप्तम्?,—'उपरवमन्त्रस्तन्त्रं स्यात्',—सकृदेव प्रयोक्तव्यः। कुतः?। 'बहुवचनाद्', बहुवचनान्तोऽयं 'वैष्णवान् खनामि'—इति। यदि प्रत्युपरवं प्रयुज्येत, एकस्मिन् बहुवचनान्ताभिधानं न साधयेत्, 'लोकवत्',—यथा लोके एकस्मिन्नर्थे बहुवचनं न प्रयुज्यते। अपि च, सकृदुक्त एव शक्नोति सर्वोपरवान् अभिधातुं, शक्नोति चेत्, आवृत्तिरनर्थिका। तस्मात् सकृदेव प्रयोक्तव्यः॥

सू॰ न सन्निपातित्वादसन्निपातिकर्म्मणां विशेषाग्रहणे कालैकत्वात् सकृद्वचनम्॥ ५३॥ (सि॰)॥

भा॰ 'न' एव तन्त्रं स्यात्। कुतः?। 'सन्निपातित्वात्',—सन्निपाति खननं कर्म्म, येनोपरवेण सन्निपतितं, तदर्थमेव विज्ञायते। मन्त्रोऽपि चायं सन्निपाती, मन्त्रान्तेन कर्म्मादिसन्निपातात्, अतो यस्य उपरवस्यायं मन्त्रः सन्निपतितः, तस्यैव मन्त्रकारितः संस्कारो न सर्वेषाम्; अतो न सकृत् प्रयोक्तव्यः। 'असन्निपातिकर्म्मणां विशेषाग्रहणे कालैकत्वात् सकृद्वचनं', ये तु असन्निपातिकर्म्मणां मन्त्राः, यथा, सुब्रह्मण्याह्वाने 'देवा ब्रह्माणः' इति, उपवसथ्येऽहनि तेषामेककालत्वात् अगृह्यमाणविशेषाणां सकृद्वचनं स्यात्।

---

* 'पीठपादचतुष्टयाकारा बहुमात्रा खाता उपरवनामका चत्वारो गर्त्ताः' इति माधवः।

यत्तु, न बहुवचनान्त एकस्याभिधायक इति, प्रातिपदिकार्थोऽभिहितः, विभक्त्यर्थश्च कर्म्मत्वम्, वचनार्थः केवलो नाभिहितः, स च नैवाभिधानमर्हति, अभिधायकस्य शब्दस्याभावात्। एकस्यैव वा पूजार्थे बहुवचनम्। तस्मादविरोधः॥

सू॰ हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्यावृत्तिः कालभेदात् स्यात्॥ ५४॥

भा॰ इदं सूत्रं पूर्वसूत्रप्रत्युदाहरणार्थं। 'कालैकत्वात्'—इति किमर्थं?। 'हविष्कृदध्रिगुपुरोनुवाक्यामनोतस्यावृत्तिः कालभेदात् स्यात्'—इति॥११(४।२०अ०)॥

---

हविष्कृदादिमन्त्राणामावृत्त्यधिकरणम्॥

भा॰ अथवा अधिकरणान्तरम्। ज्योतिष्टोमे प्रतिसवनं सवनीयाः पुरोडाशाः, तेषु हविष्कृदाह्वानम्, वाजपेये क्रतुपशवः प्राजापत्याश्च; तत्र अध्रिगुप्रैषः, कृष्णग्रीवयोः पुरोनुवाक्या, मनोतासूक्तं च*। तेषु चिन्ता, किं तस्य सकृत् प्रयोगः, अथ वा आवृत्त्या?—इति। सकृत्त्वानुग्रहाय सकृत्। इति प्राप्ते उच्यते, 'आवृत्तिः' 'स्यात्'—इति। कुतः?। 'कालभेदात्', प्रातःसवने यद्धविष्कृदाह्वानम्, अध्रिगुप्रैषश्च, तस्य कालभेदात् गृह्यते विशेषः,—प्रातःसवनीयानां पुरोडाशानामयं हविष्कृत्, क्रतुपशूनाञ्च अध्रिगुः—इति। तथा,

* 'सवनीयेषु पुरोडाशेषु हविष्कृन्मन्त्रचोदकप्राप्तः, प्राजापत्येषु पशुषु अध्रिगुप्रैषमन्त्रः, कृष्णग्रीवयोः पश्वोरनुवाक्या, मनोतामन्त्रः। 'हविष्कृदेहि' इति हविष्कृन्मन्त्रः, 'दैव्या शमितारः' इति अध्रिगुप्रैषमन्त्रः, 'अग्ने नय सुपथा' इति पुरोनुवाक्या, 'त्वं ह्यग्ने प्रथमो मनोता' इति मनोतामन्त्रः।" इति माधवः॥

कृष्णग्रीवयोः सौम्येन व्यवायात् पूर्व्वस्य कृष्णग्रीवस्येयं पुरोनुवाक्या मनोता च इति सर्व्वत्र कालो भिद्यते; कालभेदात् उह्यते विशेषः; तस्मादावृत्तिः ॥

सू॰ अग्निगोश्च विपर्य्यासात् ॥ ५५ ॥ (यु॰१) ॥

भा॰ अग्निगोश्चायमपरो विशेषो विपर्य्यासः स्यात्, तन्त्रभावे अग्निगोः ये पुरस्तात्, पदार्थाः प्राजापत्यानां, यथा पश्वालम्भे 'आश्रुतप्रत्याश्रुते अजैदग्निः'—इति मन्त्रः, ते यदि तावत् प्रातःसवने क्रियन्ते, पर्य्यग्निकरणान्तकाण्डं नोत्सृष्टं भवति। अथ मा भूदेष दोष इति अस्तमयाग्नि क्रियन्ते, तथा विपर्य्यासः कृतो भवति,—पुरस्तादग्निगोः कर्त्तव्यानां, परस्तात्करणेन। तस्मादप्यावृत्तिः ॥ किञ्च,—

सू॰ करिष्यद्वचनात् ॥ ५६ ॥ (यु॰२) ॥

भा॰ या चेयमग्निगोर्विभक्तिः,—'आरभध्वमुपनयत' इति, सा प्राप्तकालं करिष्यमाणं ब्रूते, स यदि प्रातःसवने उच्यते, अप्राप्तकालत्वात् पदार्थस्यासमर्थः स्यात्। अथ प्रेषणार्थं, तथापि प्रेषणं प्रवृत्त्यर्थं, न च, प्राजापत्येषु तत्प्रवृत्त्यर्थं युज्यते, बहुना कर्म्मराशिना व्यवायात्, नष्टः प्रेषणप्रत्ययो भवति, तथाप्यसमर्थः; तस्मादप्यग्निगोरावृत्तिरिति सिद्धान्तः ॥ (४।११।२१) ॥

इति भट्टश्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये एकादशाध्यायस्य चतुर्थः पादः ॥०॥

एकादशोऽध्यायः समाप्तः ॥

# मीमांसा—दर्शने

## १२ अध्याये १ पादः।

---

अग्नीषोमीयप्रयाजादिभिः पुरोडाशस्योपकाराधिकरणम्।

भा० एकादशाध्याये तन्त्रावापलक्षणं व्याख्यातम्। अधुना प्रसङ्गलक्षणं द्वादशे व्याख्यायते। प्रसङ्गशब्दार्थोऽन्यत्र उक्तः,—

'एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके विधौ' इति।

अन्यत्र कृतस्यान्यत्रापि प्रसक्तिः प्रसङ्गः,—यथा प्रदीपस्य प्रासादे कृतस्य राजमार्गेऽप्यालोककरणम्। तदिह प्रसङ्ग एवादौ विचिन्त्यते,—अग्नीषोमीये पशौ पशुपुरोडाशः,—'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपेत्' इति, किं तस्य पृथक्प्रयोगाङ्गानि कर्त्तव्यानि, उत, यानि पशौ कृतानि, तानि तस्याप्युपकुर्व्वन्ति?—इति। ततः सूत्रेणैवोपक्रमः,—

सू० तन्त्रिसमवाये चोदनातः समानानामेकतन्त्रत्व-मतुल्येषु तु भेदो* विधिप्रक्रमतादर्थ्यात्तादर्थ्ये श्रुतिकालनिर्द्देशात्॥ १॥ (पू०)॥

भा० तन्त्रं साधारणो धर्म्मग्रामः, यथा दर्शपूर्णमासयोराज्य-भागादिः पूर्व्वः, स्विष्टकृदादिरुत्तरः।

---

* 'भेदः स्याद्' इति तन्त्रवार्त्तिके पाठः।

स येषां प्रधानानां, तानि तन्त्रीणि प्रधानानि, तेषां तु समवाये एकदेशकालकर्तृत्वे 'चोदनातः समानानाम्' एकवाक्यचोदितानाम् 'एकतन्त्रत्वं' भवति, यथा दर्शपूर्णमासयोः, यथा च चित्रायामिष्टौ। 'अतुल्येषु तु भेदः स्यात्', यानि तु चोदनातो न तुल्यानि नानावाक्यैश्चोदितानि, तेषु तु भेदः स्यात् तन्त्रस्य, यथा अत्रैव, 'अग्नीषोमीयं पशुमालभेत', 'अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति। किंकारणम्?। 'विधिप्रक्रमतादर्थ्यात्', विधिर्विधानं तदङ्गानां प्रयोगः तस्य प्रक्रमः, तदर्था प्रवृत्तिः, विधिप्रक्रमस्य तादर्थ्यं विज्ञायते,—अयं पश्वर्थो विधिप्रक्रमो न पुरोडाशार्थ इति।

कथं पुनः पश्वर्थत्वं विधिप्रक्रमस्य?। 'तादर्थ्यं श्रुतिकालनिर्देशात्', श्रुत्या तत्र कालो निर्दिश्यते, अग्नीषोमीयप्रणयनादनन्तरं पशोः कालः, तत्र हि तस्य चोदना, वपाप्रचारादूर्द्ध्वं पुरोडाशस्य कालः, पशोरवसरे यो विधिप्रक्रमः स केवलः पश्वर्थो विज्ञायते, पुरोडाशस्य अप्राप्तत्वात्, अतस्तस्य पृथक् तन्त्रं कर्त्तव्यं। लिङ्गञ्च पश्वर्थतां तन्त्रस्य दर्शयति,—'यदेकादश प्रयाजान् यजति पशुमेव तत्प्रयजति' —इति, 'यदेकादश अनुयाजान् यजति पशुमेव तदनुयजति'—इति, एवकारकरणादवधारणं विज्ञायते,—पशुमेव न पुरोडाशमिति ॥

सू० गुणकालविकाराच्च तन्त्रभेदः स्यात् ॥ २ ॥ (यु०) ॥

भा० अपि च, पाशुकाः प्रयाजानुयाजा गुणतः कालतश्च विकृताः, एकादशसङ्ख्याः पशावुभयेऽपि, पञ्चभिश्च प्रयाजैस्त्रिभिरनुयाजैः पुरोडाशस्य कार्यं, तथा पृषदाज्येनानुयाजाः पशोरिज्यन्ते केवलेनाज्येन

च पुरोडाशस्यार्थः। कालविकारोऽपि,—आसन्ने हविषि पौरोडाशिकैः प्रयाजैर्भवितव्यं, पाशुकास्तु तिष्ठति पशौ वर्त्तन्ते,—'तिष्ठन्तं पशुं प्रयजन्ति' इति वचनात्; उभयेऽपि पुरोडाशस्य पृथक्तन्त्रेणाक्रियमाणा न यथावत् संपादिता भवेयुः। तस्मादपि तन्त्रभेदः॥

सू० तन्त्रमध्ये विधानाद्वा मुख्यतन्त्रेण सिद्धिः स्यात् तन्त्रार्थस्याविशिष्टत्वात्॥३॥ (सि०)॥

भा० अथ वा नैव भेदेन पुरोडाशस्य तन्त्रं कर्त्तव्यं, किन्तर्हि 'मुख्यतन्त्रेण सिद्धिः स्यात्', पाशुकमेव तन्त्रं पुरोडाशस्योपकुर्यात्। किंकारणं?। 'तन्त्रमध्ये विधानात्',—पाशुकस्य तन्त्रस्य मध्ये पुरोडाशो विहितः,—'अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति'—इति। किमतः?। तन्त्रार्थस्य अविशिष्टत्वं भवति, तन्त्रस्यार्थः तन्त्रार्थः,—अङ्गकृत उपकारः, सोऽत्राविशिष्टः, पशोः पुरोडाशस्य च, सन्निधानाविशेषात्, पशावपि क्रियमाणानि अङ्गानि पुरोडाशस्य सन्निहितानि, सन्निधानाच्च पुरोडाशस्याप्युपकुर्वन्तीति, प्रदीपवत्, यथा प्रासादे कृतः प्रदीपः सन्निधानाद्राजमार्गेऽप्युपकरोति।

'विषम उपन्यासः, प्रत्यक्षदृश्यः प्रदीपोपकारः प्रत्यक्षेण ज्ञायते, अयं पुनरप्रत्यक्षोऽङ्गोपकारः कथं शक्यो विज्ञातुम्'—इति। अयमपि शास्त्रदृश्यः शास्त्रप्रत्ययाद्गम्यते, शास्त्रञ्चेह 'दर्शपूर्णमासवत् कर्त्तव्यानि'—इति। तद्यथेत् कृतानि, किमिति नोपकरिष्यन्ति, दर्शपूर्णमासयोस्तु प्रधानैरेकदेशकालकर्तृकाणि क्रियमाणानि उपकृतवन्ति, इहापि

तथाविधान्येव क्रियन्ते, तस्माद् इहापि तद्वदेव उपकुर्वन्तीति विज्ञायते । 'आह, नेह तद्विधानि, दर्शपूर्णमासयोः प्रधानानि उद्दिश्य कृतानि अङ्गानि, इहापि तद्वदेव कर्त्तव्यानि, न च, पुरोडाशमुद्दिश्य इह क्रियन्ते, किन्तर्हि पशुं, तस्मात् पुरोडाशस्य न प्रकृतिवत् कृतानि भवन्ति'—इति । उच्यते,—प्रकृतौ न शाब्द उद्देशः, न हि तत्र श्रूयते,—प्रधानानि उद्दिश्य अङ्गानि कर्त्तव्यानीति, किन्तर्हि अर्थात् क्रियते, तेषां तत्र चिकीर्षितत्वात्, न च अर्थात् कृतं चोदकेन प्राप्यते, यत्कारणं विध्यन्तस्तत्रापेक्ष्यते, तेन यत्पठितं तत् प्राप्यते, न पाठादवाह्यं, तस्मात् तु अनुद्दिश्यापि क्रियमाणानि प्रकृतिवत् कृतानि भवन्ति। एवं सिद्धा प्रसङ्गादुपकारनिर्वृत्तिः ॥

'नन्वेवं तन्त्रलक्षणादविशिष्टमेव भवति'। न खलु, तत्राङ्गमेव साधारणं, इह तु अङ्गकृत उपकारः, सोऽपि न साधारणः, अन्यकृतोऽन्यस्य भवति ॥

सू० विकाराच न भेदः स्यादर्थस्याविकृतत्वात् ॥ ४ ॥
(आ०नि०) ॥

भा० अथ यदुक्तं,—'गुणकालविकाराच तन्त्रभेदः स्यात्'—इति, तत्र ब्रूमः, 'विकाराच न भेदः स्यादर्थस्याविकृतत्वात्',—अर्थोऽङ्गजनित उपकारः, स न विकृतः, यो दर्शपूर्णमासयोः, स एव। कथं ज्ञायते?। तदुच्यते, प्रयुज्यन्ते प्रयाजानुयाजास्तावदेते दार्शपौर्णमासिकाः, तत्र प्रयाजानुयाजशब्दौ प्रसृतौ, ते च चोदकेनेह प्राप्ताः सन्निहिता विद्यन्ते, प्रकृतगामित्वच शब्दस्य न्याय्यं, न चैकः शब्दोऽनेकार्थो युक्तः, तस्माद् दार्शपौर्णमासिकास्ते, तदुपकारोऽप्येषां दार्शपौर्णमासिक

एव, न हि तेषां प्रम्नातः, यदि च प्राकृतादुपकारादुपकारान्तरं कुर्युः, ततोऽप्राकृतकार्यत्वान्नैव चोदकेन प्राप्येरन्, अपूर्वा भवेयुः, यथा वने गौल्गुलवादिभिरभ्यञ्जनम्। अप्राप्तौ च अनेनैव प्रयाजा विधीयन्ते, अनेनैव तेषां विकार इति तत्र द्विकरः शब्दः स्यात्, न च, सकृदुच्चरितः शब्दोऽर्थद्वयं विधातुं, अपूर्वत्वे चैतेषां प्रकृता अपि चोदकेन प्राप्येरन्। तत्र वैश्वदेवे त्रिंशत्सम्पत्तिराहुतीनां न युज्यते, 'नव प्रयाजा नव अनुयाजा, द्वावाज्यभागौ, अष्टौ हवींषि अग्नये समवद्यति वाजिनो यजत्याहुतीनां सम्पत्त्यै त्रिंशत्त्वाय' इति, तस्माद्गुणविकारेऽप्यविकृतः प्राकृतोऽङ्गोपकारः, तस्मात्त एव पुरोडाशस्यापि उपकुर्वन्तीति न गुणकालविकारेऽपि तद्भेदः। तदानीं तावुभौ प्रार्थयेते,—पशुः पुरोडाशश्च, उभयोश्च प्रकृतिवत् क्रियन्तेऽङ्गानि; तस्मात् स्वप्रकृतान्येवोभयोरुपकुर्वन्ति। विकार इदानीं किमर्थः?। पश्वर्थः, पाशुकेषु हि प्रयाजानुयाजेषु श्रूयते, न पशोः पुरोडाशस्य च साधारणान्यङ्गानि, पाशुकान्येव सन्निधानात् पुरोडाशस्याप्युपकुर्वन्तीत्युक्तं।

अपि च पृषदाज्येनापीज्यमाना अनुयाजा आज्येनेष्टा भवन्ति, न हि पृषत् आज्यत्वं नाशयति, यस्य क्षीरेण भोजनमुदितं भवति, यदि तस्मै सशर्करं दीयते, न कश्चिद्विरोधो भवति, सशर्करमपि तत् पय एवेति। तथा, य एकादश प्रयाजान् यजति, यजत्यसौ तदन्तर्गतान् प्राकृतान् पञ्च, येऽभ्यधिकाः षट्, न, तैरिज्यमानैः पञ्च प्राकृता नेष्टा भवन्ति, एवं तिष्ठत्यपि पशौ क्रियमाणाः प्रयाजा कृता एव पुरोडाशस्य भवन्ति, क्रमस्तेषां प्राकृतो हापितः, गुणमात्रञ्च क्रमः,

न च, गुणानुग्रहार्थं प्रधानस्य आवृत्तिर्युक्ता, न हि गुणवशवर्त्ति प्रधानं, कामं क्रमविपर्यासनिमित्तं प्रायश्चित्तं भवेत्, नावृत्तिः। 'प्रायश्चित्तं तर्हि कर्त्तव्यं'। क्रियते,—'अयाश्चाग्नेरिति सर्वप्रायश्चित्तं जुहोति'—इति। प्रासङ्गिकत्वाद्वा प्रायश्चित्ताभावः; तस्मादविरोधः॥

सू॰ एकेषाञ्चाशक्यत्वात्॥५॥ (१यु॰)॥

भा॰ 'एकेषाञ्च' अर्थानामशक्या भेदेन क्रिया; यथा, वेदेरभ्युद्धरणस्य, व्रतोपायनस्येति, वेदिः कृताऽनपवृक्ता तिष्ठति, सा न शक्या कर्त्तुम्', न ह्यर्थः कृतः सन् कर्त्तुं शक्यते। अथोच्यते,—'अन्यां करिष्यति'—इति। आक्षेपुरुषिकं स्यात्, तिर्यक् चासौ भवेत्, तत्र दिक् समुह्येत! विहारपृथक्त्वञ्चाश्रुतमापद्येत! तत्रैकदेशकालकर्त्तृकत्वमङ्गप्रधानानामिति स्थितो न्यायः प्रत्युत्स्रियेत! एवमभ्युद्धरणं, तद् आहवनीयनिर्वृत्त्यर्थं, सकृदुद्धरणेन च निर्वर्त्तितोऽसौ, न च निर्वर्त्तितः शक्यो निर्वर्त्तयितुं, यथा कृतः कर्त्तुम्। अथोच्यते, 'अन्यं निर्वर्त्तयिष्यति' इति। न, तस्मिन्ननुपरते द्वितीयस्तत्र आहवनीयोऽस्ति, यत्कारणं, गार्हपत्याहवनीयौ उभौ एकस्थौ, तयोः आहवनीयेऽपयातिते परिशिष्टो गार्हपत्यो भवति, यथा सर्वसाधारणाद् ध्रौवाद् आज्यादुपांशुयाजार्थेऽपयातिते परिशिष्टमन्यदेवतार्थं भवति, विहारपृथक्त्वञ्च पूर्ववदापद्यते। तत्र पूर्वोक्ता एव दोषाः। तथा, व्रतं यद्गृहीतं न तत् पुनः अनुत्सृष्टं शक्यते ग्रहीतुं, अनुत्सृष्टञ्च तत् आ प्रधानापवर्गात्॥

सू॰ एकाग्निवच्च दर्शनं॥६॥ (२यु॰)॥

भा॰ एकाग्निं पशोः पुरोडाशस्य च दर्शयति, -'मध्येऽग्नेराज्याहुती-

जुहोति पुरोडाशाहुतीः पश्वाहुतीश्च' इति, नाग्न्युद्धरणस्य भेदः, तस्मात् पाशुकं तन्त्रं पुरोडाशे प्रसज्यते इति ॥ (११।१।१७अ०) ॥

---

पुरोडाशे आज्यभागयोः कर्त्तव्यताधिकरणम्।

सू० जैमिनेः परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात् ॥७॥

भा० तस्मिन्नेव पशुपुरोडाशे चिन्ता*,—किम् आज्यभागौ कर्त्तव्यौ, उत न?—इति। आह,—'तत एतन्तावत्परीक्ष्यं, किं, प्रयोगवचनेन चोदको बाध्यते, उत, प्रयोगवचनः चोदकेन? इति। यदि चोदको बाध्यते, ततो न कर्त्तव्यौ; अथ प्रयोगवचनः, ततः कर्त्तव्यौ-इति। किं पुनरत्र युक्तं?—चोदको बाध्यते इति। किंकारणं?। आनुमानिकः चोदकः, प्रत्यक्षः प्रयोगवचनः, प्रत्यक्षञ्चानुमानाद्बलीयः, दुर्बलस्य च बाधो न्याय्यः, न च बलीयसः; एवञ्चेत् न कर्त्तव्यौ, चोदकेन हि तौ प्राप्येयातां, स चेह बाधितत्वान्नास्तीति।

एवं प्राप्ते, उच्यते,—'जैमिनेः' आचार्यस्य मतं,—कर्त्तव्यौ आज्यभागाविति। कुतः?। यतः 'परतन्त्रापत्तेः स्वतन्त्रप्रतिषेधः स्यात्',—यस्य स्वतन्त्रस्य कार्यं परतन्त्रमापद्यते तस्य प्रतिषेधः स्यात्, यथा, पौरोडाशिकानां प्रयाजानां पाशुकं, यस्य तु न किञ्चित् परकीयकार्यमापद्यते, तत्प्रतिषेधो न युक्तः, यथा, देवदत्ते यज्ञदत्तयानमारूढ़े देवदत्तयानं निवर्त्तते, न वस्त्रालङ्कारं, न चेह आज्यभागयोः

---

* "तौ न पशौ करोति इति निषेधात् आज्यभागयोः पशावभावे पुरोडाशयोः प्रसक्तिर्विद्यते न वा, अतश्चो विचार्य्यते" इति माधवः।

कार्यं किञ्चित् पाशुकमङ्गमापद्यते, तस्य प्रतिषेधो न युक्तः, तस्मात्तयोरनिवृत्तिः। यत्तु प्रत्यक्षः प्रयोगवचनः—इति, नैवात्र प्रयोगवचनस्य प्रवृत्तिः, स हि अङ्गानि उपगृह्णीयात्, पाशुकैरेव चाङ्गैः पशुपुरोडाशोऽङ्गवान्, प्रत्यक्षोऽपि स्वयं न आज्यभागौ गृह्णाति, प्रकरणसन्निहितमङ्गं प्रयोगवचनेन गृह्यते; न च, पशौ आज्यभागौ विद्येते, प्रतिषिद्धत्वात्,—'तौ न सौम्येऽध्वरे न पशौ'—इति। अपिच, उक्तमेतत्,—प्रयोगवचन उत्पन्नानामङ्गानां ग्राहकः, चोदकस्तूत्पादको ग्राहकश्च, तस्मात् स बलवान्॥ (१२।१।२अ०)॥

---

सोमे दार्शिकवेदेरकरणाधिकरणम्।

सू॰ नानार्थत्वात् सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म्म स्यात्॥ ८॥ (पू॰)॥

भा॰ सोमे यानि दर्शपूर्णमासप्रकृतीनि कर्म्माणि कृतायां महावेद्यां वर्त्तन्ते, तेषु चिन्त्यते, किं तेषां वेदिर्भेदेन कर्त्तव्या, उत न?—इति। किं प्राप्तम्?—भेदेन कर्त्तव्या। किंकारणं?। चोदकः प्रापयति, एवं चोदकानुग्रहो भवति। 'ननु सौमिक्येव प्रसङ्गात् कार्यं साधयेत्'। अत्रोच्यते, न साधयेत्। कस्मात्?। 'नानार्थत्वात्', नानार्थे एते वेदी,—दर्शपूर्णमासिकी हविषामासादनार्था, सौमिकी प्रचारार्था, तत्र प्रसङ्गो नोपपद्यते, यत् तन्त्रिणोऽङ्गं मध्यपात्यङ्गैकार्थं, तत् प्रसज्यते। यथा, पाशुकाः प्रयाजाः पौरोडाशिकेषु, न लिह तथा, तस्माद्वेदिः कर्त्तव्या॥

सू॰ अकर्म्म वा कृतदूषा स्यात् ॥ ९॥ (सि॰) ॥

भा॰ न वा कर्त्तव्या दार्शिकी वेदिः। कुतः?। 'कृतदूषा स्यात्',— सा क्रियमाणा केवलं सौमिक्या वेदेः कृताया दूषणं स्यात्। न किञ्चित् स्वार्थं साधयति। 'ननु हविषामासादनं तत्र करिष्यते'। शक्यन्तु तन्महावेद्यामपि कर्त्तुं। 'ननु अन्यार्था सेत्युक्तं'। अन्यार्थापि सती हविषामासादने अधिकरणीभवितुं प्रभवति, वेद्यां हविषामासादनं श्रुतं, इयमपि च वेदिः, न तत्र, तदर्थायामित्येव विशेषः श्रूयते, तस्मात् न कर्त्तव्या दार्शिकी ॥ (११।१।३अ॰) ॥

---

सोमे दार्शिकैः स्रुवादिभिः पात्रैः सावनपश्वादिहोमाधिकरणम् ।

सू॰ पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् ॥ १० ॥ (पू॰) ॥

भा॰ सोमे एव यानि दर्शपूर्णमासप्रकृतीनि सहप्रसङ्गे प्रयुक्तानि वर्त्तन्ते, यथा, सावनः पशुः, सावना: पुरोडाशाः, सौमग्रहरिति, तेषु विचार्यते,—किं, तेषां ग्रहैश्चमसैर्वा होमः कर्त्तव्यः, अथवा दार्शिकैः स्रुवादिभिः पात्रैः?—इति। तत्रोच्यते,—'पात्रेषु च प्रसङ्गः स्यात्'। कुतः?। 'होमार्थत्वात्', होमार्थानि तानि पात्राणि, स च होमो ग्रहचमसेनापि निर्वर्त्यते, सोमतन्त्रमध्यपतितानि कर्म्माणि, तेषु ग्रहैश्चमसैर्वा होमः कर्त्तव्यः ॥

सू॰ न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् ॥१२॥ (सि॰) ॥

भा॰ 'न्याय्यानि वा' दर्शपूर्णमासिकानि स्युः, तैर्होमः क्रियेत।

कुतः?। 'प्रयुक्तत्वात्',—प्रयुक्तानि तानि विद्यन्ते,—'यद्गृहीत्वा आज्यानि सोममासादयेयुः अपघ्नीत यजमानं, अथ यत् गृहीत्वा आज्यान्यासादयन्ति न यजमानमुपघ्नन्ति'—इति, प्रथमं तावत्तेषां प्रयोगः, प्रोक्षणं संमार्जनञ्च, तत आज्यग्रहणं, तान्येवाज्यप्रयुक्तानि विद्यन्ते, 'अप्रयुक्ते प्रसङ्गः स्यात्', यन्मध्यपातिनोऽङ्गं न प्रयुक्तं, तत्कार्ये तन्निर्णोऽङ्गं प्रसज्यते, स्वस्याभावे हि परकीयमुपजीव्यते; असन्निहिते हि स्वस्मिन् याने देवदत्तो यज्ञदत्तयानमारोहति, सन्निहिते तु स्वयानेनैव हि याति। तत्र हि तस्य यादृशं स्वतन्त्रेण गमनसुखं, न तादृशं परयाने। पुरोडाशानामपि दार्शिकैः पात्रैर्यादृशं साद्गुण्यं, न तादृशं ग्रहचमसैन, तत्र प्राकृतो दत्तजातश्च प्रोक्षणादयस्य संस्कारा लभ्यन्ते, ग्रहचमसे तेषामभावः। येऽपि सौमिकाः तैः पुरोडाशानामसम्बन्धः।

'यदि पुनर्दार्शिकानि अप्रयुक्तानि भवेयुः, किं ग्रहचमसं प्रसज्येत?'। नेति ब्रूमः,—दार्शिकान्येव प्रसज्येरन्। यत्र तन्निर्णोऽङ्गं क्रियमाणमितरस्यापि कृतं भवति, तत्र प्रसङ्गः,—यथा, पाशुकेषु प्रयाजेषु क्रियमाणेषु पौरोडाशिकाः। इह तु ग्रहचमसे प्रयुक्ते नेतराणि प्रयुक्तानि भवन्ति, न हि, सोमे क्रयमाणे पुरोडाशा कृताः। तस्मान्नास्त्यत्र प्रसङ्गः। किन्तर्हि?। इदमुच्यते, 'अप्रयुक्ते प्रसङ्गः स्याद्' इति, यदि प्रयोग एषां नोपपद्येत, प्रतिषिध्येत वा, ततः प्रसङ्गः स्यादित्यर्थः। अपिच, न्याय्यानि दार्शपूर्णमासिकानि, न ग्रहचमसं। किं तेषां न्याय्यत्वं?। दर्शपूर्णमासयोरुक्तानि शब्देनोक्तानि, ततश्चोदकेन पुरोडाशे अतिदिश्यन्ते इति।

अस्ति मन्त्रसंसर्गः*। मन्त्रमन्तरेण तु हविर्यज्ञेन कपिञ्जलः अतः अर्थात् क्रियते, 'असति च मन्त्रोक्तेरर्थात् क्रिया भवति, दर्शयति च एतानि पात्राणि,—'युनज्मि ते पृथिवीं ज्योतिषा सहेति ध्रुवामभिमृशति। युनज्मि वायुमन्तरिक्षेण ते सहेत्युपभृतम्। युनज्मि वाचं सह दिवा सूर्येणेति जुहूम्' इति। तस्मादेतैर्होमः कर्त्तव्यः॥ (१२'१।४अ०)॥

---

आमिक्षे पशुपुरोडाशश्रपणाभावाधिकरणम्।

सू॰ आमिक्षे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात्॥ १२॥

भा॰ पुरोडाशे एव चिन्ता,—किम् एतस्य आमिक्षेऽग्नौ श्रपणं कर्त्तव्यम्, उत शालामुखीये? इति तत्र स एव न्यायः,—'इतरस्य प्रयुक्तत्वात्'—इति, गार्हपत्ये हविषां श्रपणं श्रुतं, स च प्रयुक्तो विद्यते,—'शालामुखीयः एष†, अत ऊर्द्धं गार्हपत्यो भवति' इति, तस्मात् तत्र श्रपणं कर्त्तव्यम्॥ (१२।१।५अ०१)॥

---

कौण्डपायिनामयनेऽग्निहोत्रद्रव्यस्य प्राजहिते श्रपणाधिकरणम्।

सू॰ श्रपणं चाग्निहोत्रस्य शालामुखीये न स्यात् प्राजहितस्य विद्यमानत्वात्॥१३॥

भा॰ कौण्डपायिनामयने अग्निहोत्रे चिन्त्यते,—किं तदीयस्य

* चाहमेंपुस्तके सूत्रपाठे च "अस्ति मन्त्रसंसर्गः"—इत्यंशः सूत्रतयाऽधारि।

† एव इति चाहमेंपुस्तके पाठः।

द्रव्यस्य शालामुखीये श्रपणं, अथवा प्राजहिते ? इति । 'प्राजहित'-इति गार्हपत्यस्य पूर्वाचार्य्यसंज्ञा । अत्रापि स एव न्यायः, गार्हपत्ये श्रपणं श्रुतं, स एव प्रयुक्तो विद्यते, 'अप्रयुक्ते प्रसङ्गः स्यात्'-इति, भूयांश्चात्र परिहारः, चोदकेन शालामुखीयः प्राप्यते, ज्योतिष्टोमे हि तस्य गार्हपत्यत्वं श्रुतं, तच्च चोदकपरम्परया कौण्डपायिनामयनमागतं, नामधेयेन तु प्राजहिते श्रपणं प्राप्यते, चोदकाच्च नामधेयशब्दो बलवत्तरः । तस्मात् तत्र श्रपणं कर्त्तव्यमिति ॥ (१२।१।६ अ०) ॥

---

हविर्धानयोः शकटयोरन्येन शकटेन चौषधशकटानां पुरोडाशानां निर्वापाधिकरणम् ।

सू० हविर्द्धाने निर्वपणार्थे साधयेतां प्रयुक्तत्वात् ॥१४॥ (पू०) ॥

भा० एते हविर्द्धाने यानि औषधगुणकानि ऐष्टिकानि कर्माणि वर्त्तन्ते, यथा, पशुपुरोडाशः, सवनीयाः पुरोडाशाः, सौम्यश्चरुः । तेषु विचार्य्यते,—किं, तेषां निर्वापो हविर्द्धाने कर्त्तव्यः, अथवा, अन्योन्तरमुपादेयम् ?—इति । किं प्राप्तं ?—'हविर्द्धाने निर्वपणार्थे साधयेतां' एकं वा । कुतः ? । 'प्रयुक्तत्वात्' । प्रयुक्तमस्ति, शक्नोति च तेषां निर्वापं साधयितुं, अन्यस्योपादाने केवलमनर्थको व्यापार आपद्यते । तस्मात् तयोरन्यतरेण निर्वापः कर्त्तव्यः ॥

सू० असिद्धिर्वान्यदेशत्वात् प्रधानवैगुण्याद्वैगुण्ये प्रसङ्गः स्यात् ॥१५॥ (सि०) ॥

भा० 'असिद्धिर्वा' हविर्द्धानाभ्यां निर्वापस्य, न ताभ्यां साधयितव्यः ।

कुतः?। 'प्रधानवैगुण्यात्',—निर्वापस्य देशः, अपरेण गार्हपत्यं प्राग्वंशम् अनसोर्व्यवस्थितं भवति, तस्य दक्षिणं चक्रमारुह्य अनसोऽधिनिर्वपतीति, यदि हविर्धाने निर्वापः क्रियते, तद्देशं तद्बाध्येत; तथा प्रधानं सोमकर्म विगुणं भवेत्। हविर्धानयोर्मन्त्रवच्च नियमवच्च प्रवर्त्तनं स्थापनस्य कृतं, तत्सर्वमनर्थकं स्यात्, अथ पुनः क्रियेत, तथापि आवृत्तिरश्रुता अनुष्ठीयेत। 'अवैगुण्ये' च प्रधानस्य 'प्रसङ्गो' युक्तः, यत्कारणं, प्रधानस्य यो धर्मः तमितरे यथाश्रुतमुपजीवन्ति परवशत्वात्। यदि यथाश्रुतेनास्य कार्य्यं न सिध्यति, ततः कामं कार्य्यलोपो भवेत्, स्वं वा साधनं प्रयुञ्जीत, न त्वकुर्यात् प्रधानकार्य्यं व्याहत्य स्वार्थं साधयितुम्। 'अथ कस्माद्धविर्धानदेशे निर्वापो न क्रियते'। एवमपि तेषां कर्मणां वैगुण्यं भवेत्। 'अस्तु परतन्त्रोपजीवीनि एतानि यथावस्थितं परतन्त्रमुपजीवितुमर्हन्ति, यथा, पाशुकान् प्रयाजान् अन्यकालानपि पशुपुरोडाश उपजीवति'। उच्यते,—युक्तं तत्र कृतास्ते प्रयाजाः, न च, कृतस्य क्रमानुग्रहार्थं पुनःक्रिया न्याय्या। अयं पुनः करिष्यमाणो निर्वापः, स यदि सगुणः शक्यते कर्त्तुं, तथा सगुणः कर्त्तव्यः, शक्यते च अनोन्तरमुपादाय, तस्मात् न हविर्धानयोर्निर्वापः॥

सू॰ अनसाञ्च दर्शनात्॥१६॥

भा॰ अनोवत्त्वञ्च दृश्यते,—'अनांसि प्रवर्त्तयन्ति' इति। तस्मादप्यनोन्तरमुपादेयमिति॥ (१२।१।७अ॰)॥

---

प्रावणीयादिषु होमानामरक्षणाभावाधिकरणम्।

सू॰ तद्युक्तं च कालभेदात्॥१७॥

भा॰ ज्योतिष्टोमे दीक्षाकाले रात्रिजागरणमाम्नातं, 'यां प्रथमां दीक्षितो रात्रिं जागर्त्ति, तया स्वप्नेन व्यावर्त्तते' इति। दर्शपूर्णमासयोरप्यौपवसथ्येऽहनि एतेषामाम्नातं, तत् प्रायणीयादिषु चोदकेन प्राप्यते। तेषां तन्त्रमध्यपातात्, दीक्षाकालेनैव जागरणेन प्रसङ्गात् कार्य्यसिद्धौ प्राप्तायाम्, इदमुच्यते, 'तद्युक्तञ्च', दीक्षायुक्तञ्च जागरणं नेतरेषु प्रसज्येत। कुतः?। 'कालभेदात्', यदि यावद्याग्नीनां रक्षणाय अप्रमादार्थं, ततो दीक्षाकालेषु रक्षितेषु नेतराणि रक्षितानि भवन्ति, तद्रक्षणार्थं प्रायणीयादिषु उपवसथ्यकाले भेदेन कर्त्तव्यम्। अथापि अदृष्टार्थं, तथापि औपवसथी रात्रिस्तस्य निमित्तम्; निमित्तप्राप्तौ नैमित्तिकं कर्त्तव्यं। तस्माद्भेदेन कर्त्तव्यम्॥ (१२।१।८अ०)॥

---

विहारभेदे मन्त्रभेदाधिकरणम्।

सू॰ मन्त्राश्च सन्निपातित्वात्॥१८॥

भा॰ वरुणप्रघासेषु विहारपृथक्त्वे सति, ये मन्त्राः सन्निपातिनो, यथा, आज्यग्रहणे, प्रोक्षणेऽभिमर्शने। तेषां किं तन्त्रेण प्रयोगः, अथ वा, भेदेन? इति।

तन्त्रावापचिन्तेयं न प्रसङ्गचिन्ता; तत्र प्रयोगवचनानुग्रहाय तन्त्रभावे प्राप्ते उच्यते,—'मन्त्रास्च' आज्यग्रहणादयो भेदेन कर्त्तव्याः। कुतः?। सन्निपातित्वात्', सन्निपत्योपकारिण एते मन्त्राः, उपस्थितं कर्म अभिदधति। पृथक्कर्मणि अध्वर्युप्रतिप्रस्थातारौ उपतिष्ठेते। तस्मात् पृथक् प्रयोक्तव्याः।

अपि च, करणानां मन्त्रान्तेन कर्मादिसन्निपातं वक्ष्यति-"मन्त्राणां करणार्थत्वात्, मन्त्रान्तेन कर्म्मादिसन्निपातः स्यात्, सर्वस्य वचनार्थ-

त्वात्"(१२।२।२४सू०) इति। तथा सति, येन कर्म्मणा सन्निपतितो मन्त्रस्तदर्थोऽसाविति गम्यते विशेषः, तस्मादप्यावृत्तिः॥(१२।१।८अ०)॥

---

दीक्षणीयादिषु अग्न्यन्वाधानस्याभावाधिकरणम्।

सू० धारणार्थत्वात् सोमेऽग्न्यन्वाधानं न विद्यते ॥१९॥

भा० सोमे दीक्षणीयादिषु ऐष्टिकेषु कर्म्मसु चोदकप्राप्तम् अग्न्यन्वाधानं किं कर्त्तव्यम्, उत न? इति। कर्त्तव्यम्। कुतः?। एवं चोदकोऽनुगृहीतो भविष्यति। एवं प्राप्ते उच्यते,—न कर्त्तव्यं। कुतः?। 'धारणार्थत्वात्', विहृतस्य अग्नेर्धारणार्थं तत्, सोमार्थेन च विहृतस्य तत् कृतं, तेन धृतोऽग्निः, न च धृतस्य धारणकार्य्यमस्ति। 'ननु अमन्त्रकं तत्'। सत्यम् अमन्त्रकम्, अपि तु तत् कृतं, न कृतस्य मन्त्रार्थं पुनरावृत्तिरस्ति। तस्मात् न कर्त्तव्यं॥ (१२।१।१०अ०)॥

---

दीक्षणीयादिषु व्रतोपायनाभावाधिकरणम्।

सू० तथा व्रतमुपेतत्वात् ॥२०॥ (सि०)॥

भा० तत्रैव दार्शपौर्णमासिकं व्रतं चोदकप्राप्तं तद्वैव न क्रियेत, यथा अग्न्याम्वधानम्, उपेतत्वात्, न हि उपेतम् अनपवृक्तं सत् शक्यमुपेतुं, अप्राप्तस्य हि प्रापणमुपगमनं, तत् प्राप्तस्य न शक्यम्॥

सू० विप्रतिषेधाच्च ॥२१॥ (यू०)॥

भा० 'अग्ने व्रतपते व्रतं चरिष्यामि' इति चरतो वचनं विप्रतिषिद्धं,—वर्त्तमानस्य भविष्यद्वचनम्॥

सू॰ सत्यवदिति चेत् ॥२२॥ (आ॰)॥

भा॰ अथ 'सत्यवत्' कस्मात् न भवति, यथा, सत्यवचनं व्रतं पुरुषधर्मत्वादनुवर्त्तमानमपि दर्शपूर्णमासयोः पुनरुपेयते इति स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ;—

सू॰ न, संयोगपृथक्त्वात् ॥२३॥ (आ॰नि॰)॥

भा॰ न एतत् तेन तुल्यं, 'संयोगपृथक्त्वात्',—तत्र पुरुषसंयोगः कर्म्मसंयोगश्च पुरुषार्थमुपेतं कर्म्मार्थं पुनरुपेयते। 'नन्विहापि संयोगपृथक्त्वं, सोमार्थमुपेतमैष्टिकार्थं पुनरुपेयते' इति। नेह पुनरुपगमनेनार्थः, यत् सोमार्थं, तदेव इतरत्र प्रसङ्गात् कार्य्यं साधयति। 'नन्विहापि* तद्वदेव साधयिष्यति'। साधयेत्, यदि कामार्थता तस्य ज्ञाता भवेत्, सा तु इहैव ज्ञाप्यते, ऐष्टिकानां तु प्रकृतौ ज्ञाता। तस्मात् 'सत्यवद्' इत्यदृष्टान्तः। कर्म्मार्थत्वज्ञानस्य तु प्रयोजनं प्रायश्चित्तविशेषस्तृतीयेऽध्याये (४।४अ॰) व्याख्यातः॥ (१२।१।२१अ॰)॥

---

ऐष्टिकेषु अग्न्यन्वाधानाननुष्ठानाधिकरणम्।

सू॰ ग्रहणार्थं च पूर्व्वमिष्टेस्तदर्थत्वात् ॥२४॥ (सि॰)॥

भा॰ पूर्व्वकृतम्† अग्न्यन्वाधानं सौमिकं प्रसङ्गादैष्टिकेषु कार्य्यं साधयतीत्युक्तम्। तदिदानीं आक्षिप्यते, धारणार्थत्वात् तस्य प्रसङ्ग उक्तः। न च तत्केवलं धारणार्थं, किन्तर्हि धारणार्थं च देवता-

---

* नन्वितरथापि इति आदर्शपुस्तके पाठः।

† पूर्व्वोक्तम् इति आदर्शपुस्तकपाठः।

परिग्रहार्थं च; एवं हि दर्शपूर्णमासयोः श्रूयते,—'ममाग्ने वर्चो विहवेष्व-स्त्विति, पूर्वमग्निं गृह्णाति, देवता एव तत्पूर्वैर्गृहीत्वा खोभूते यजते' इति। तत्र यद्यपि धारणार्थं सौमिकेन प्रसङ्गात् सिध्यति, देवता-परिग्रहार्थं तु दार्शपौर्णमासिकम् ऐष्टिकेषु कर्म्मसु कर्त्तव्यं।

आह,—'नैतद् युक्तं, देवतापरिग्रहार्थमपि प्रसङ्गादेव सिध्यति। कुतः?। 'इष्टेस्तदर्थत्वात्', सोमेऽपि दीक्षणीयेष्टिः देवतापरिग्रहार्था श्रूयते,—'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणोऽग्निः प्रथमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता यज्ञं च तदुभयतः परिगृह्य दीक्षते' इति। सैव देवता परिग्रहणार्था प्रसङ्गादैष्टिकानां कार्य्यं साधयिष्यतीति॥

सू॰ शेषवदिति चेत् ॥२५॥(आ॰)॥

भा॰ उच्यते, न सिद्धति, दीक्षणीया प्रधानार्था, सा प्रधानदेवतापरि-ग्रहणे वर्त्तते, शेषास्तु अङ्गानां देवता अपरिगृहीताः, तत्परिग्रहार्थं दार्शपौर्णमासिकम् ऐष्टिकेषु कर्त्तव्यम् ॥

सू॰ न वैश्वदेवो हि ॥२६॥ (आ॰नि॰) ॥

भा॰ 'न' कर्त्तव्यं, दीक्षणीययैव प्रसङ्गाद्देवतापरिग्रहार्थः सेत्स्यति। 'ननु प्रधानदेवतापरिग्रहार्था दीक्षणीयेत्युक्तं'। प्रधानदेवतार्था सती अङ्गदेवतां गृह्णाति। कथं?। 'वैश्वदेवो हि'। अस्ति सोमे वैश्वदेवो ग्रहयजिः, तत्र सर्वदेवता इज्यन्ते, तन्मध्ये चाङ्गदेवता अपि। तस्मात्ताः परिगृहीताः। अतो न तत्परिग्रहार्थेनैष्टिकेनाम्न्याधानेनार्थः* ॥

* अनेन तत्परिग्रहार्थेन ऐष्टिकेन अम्न्याधानार्थेन नार्थः इति पाठान्तरेपुस्तकपाठः।

सू० सत्यवदिति चेत् ॥२२॥ (आ०)॥

भा० अथ 'सत्यवत्' कस्मात् न भवति, यथा, सत्यवचनं व्रतं पुरुषधर्म्मत्वादननुवर्त्तमानमपि दर्शपूर्णमासयोः पुनरुपेयते इति स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ;—

सू० न, संयोगपृथक्त्वात् ॥२३॥ (आ०नि०)॥

भा० न एतत् तेन तुल्यं, 'संयोगपृथक्त्वात्',—तत्र पुरुषसंयोगः कर्म्मसंयोगश्च पुरुषार्थमुपेतं कर्म्मार्थं पुनरुपेयते। 'नन्विहापि संयोगपृथक्त्वं, सोमार्थमुपेतमैष्टिकार्थं पुनरुपेयते' इति। नेह पुनरुपगमनेनार्थः, यत् सोमार्थं, तदेव इतरच प्रसङ्गात् कार्य्यं साधयति। 'नन्विहापि* तद्वदेव साधयिष्यति'। साधयेत्, यदि कामार्थता तस्य ज्ञाता भवेत्, सा तु इहैव ज्ञाप्यते, ऐष्टिकानां तु प्रकृतौ ज्ञाता। तस्मात् 'सत्यवद्' इत्यदृष्टान्तः। कर्म्मार्थत्वज्ञानस्य तु प्रयोजनं प्रायश्चित्तविशेषस्तृतीयेऽध्याये (४।४अ०) व्याख्यातः॥ (१२।१।२१अ०)॥

---

ऐष्टिकेषु अन्वन्वाधानमनुष्ठानाधिकरणम्।

सू० ग्रहणार्थं च पूर्व्वमिष्टेस्तदर्थत्वात् ॥२४॥ (सि०)॥

भा० पूर्वंकृतम्† अन्वन्वाधानं सौमिकं प्रसङ्गादैष्टिकेषु कार्य्यं साधयतीत्युक्तम्। तदिदानीं आक्षिप्यते, धारणार्थत्वात् तस्य प्रसङ्ग उक्तः। न च तत्केवलं धारणार्थं, किन्तर्हि धारणार्थं च देवता-

---

* नन्वितरथापि इति आदर्शपुस्तके पाठः।

† पूर्वोक्तम् इति आदर्शपुस्तकपाठः।

परिग्रहार्थं च; एवं हि दर्शपूर्णमासयोः श्रूयते,—'ममाग्ने वर्चो विहवेष्व-स्त्विति, पूर्वमग्निं गृह्णाति, देवता एव तत्पूर्वेद्युर्गृहीत्वा श्वोभूते यजते' इति। तत्र यद्यपि धारणार्थं सौमिकेन प्रसङ्गात् सिध्यति, देवता-परिग्रहार्थं तु दार्शपौर्णमासिकम् ऐष्टिकेषु कर्म्मसु कर्त्तव्यं।

आह,—'नैतद् युक्तं, देवतापरिग्रहार्थमपि प्रसङ्गादेव सिध्यति। कुतः?। 'इष्टेस्तदर्थत्वात्', सोमेऽपि दीक्षणीयेष्टिः देवतापरिग्रहार्था श्रूयते,—'आग्नावैष्णवमेकादशकपालं निर्वपेद्दीक्षिष्यमाणोऽग्निः प्रथमो देवतानां विष्णुः परमो यदाग्नावैष्णवमेकादशकपालं निर्वपति देवता यद्यं च तदुभयतः परिगृह्य दीक्षते' इति। सैव देवता परिग्रहणार्था प्रसङ्गादैष्टिकानां कार्य्यं साधयिष्यतीति॥

सू॰ शेषवदिति चेत् ॥२५॥(आ॰)॥

भा॰ उच्यते, न सिध्यति, दीक्षणीया प्रधानार्था, सा प्रधानदेवतापरि-ग्रहणे वर्त्तते, शेषास्तु अङ्गानां देवता अपरिगृहीताः, तत्परिग्रहार्थं दार्शपौर्णमासिकम् ऐष्टिकेषु कर्त्तव्यम् ॥

सू॰ न वैश्वदेवो हि ॥२६॥ (आ॰नि॰) ॥

भा॰ 'न' कर्त्तव्यं, दीक्षणीययैव प्रसङ्गाद्देवतापरिग्रहार्थः सेत्स्यति। 'ननु प्रधानदेवतापरिग्रहार्था दीक्षणीयेत्युक्तं'। प्रधानदेवतार्था सती अङ्गदेवतां गृह्णाति। कथं?। 'वैश्वदेवो हि'। अस्ति सोमे वैश्वदेवो ग्रहयजिः, तत्र सर्वदेवता इज्यन्ते, तन्मध्ये चाङ्गदेवता अपि। तस्मात्ताः परिगृहीताः। अतो न तत्परिग्रहार्थेनैष्टिकेनान्वाधानेनार्थः* ॥

* चानेन तत्परिग्रहार्थेन ऐष्टिकेन चान्वाधानार्थेन नार्थः इति पाठान्तरं पुस्तकपाठः।

सू॰ स्याद्वा व्यपदेशात् ॥२७॥ (पू॰) ॥

भा॰ 'स्याद्वा' अर्थः, ऐष्टिकेनान्वाधानेनाङ्गदेवतापरिग्रहणं, न तु विश्वे देवा इष्यन्ते इति परिगृहीताः। न तत्र सर्वा देवता इष्यन्ते, किन्तर्हि विश्वे देवा देवतागणः, यथा, साध्या वसवो रुद्रा इति। कथं ज्ञायते? 'व्यपदेशात्', व्यपदेशो भवति, 'अग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैः' इति वस्वादिभ्योऽर्थान्तरभूतान् विश्वान् देवान् दर्शयति। यदि च सर्वे देवा उच्येरन् विश्वदेवशब्देन, तेभ्योऽर्थान्तरभूता न स्युः। तस्मात् विश्वदेवशब्दो गणवचन एव। एवञ्चेत् अपरिगृहीता अङ्गदेवताः, तदर्थमैष्टिकमन्वाधानं कर्त्तव्यम्॥

सू॰ न गुणार्थत्वात् ॥२८॥ (उ॰) ॥

भा॰ नैतदेवं। कस्मात्?। 'गुणार्थत्वात्', न ह्यनेन व्यपदेशेन गणो वैश्वदेवः शक्यः कल्पयितुं। गुणार्थोऽयं व्यपदेशो बृहस्पतिप्रशंसार्थः।

अग्न्यादयो वस्वादिभिः केवलैः समेताः, बृहस्पतिस्तु सर्वैर्देवैस्तैश्च अन्यैश्चेति। यथा सेनापतिर्भृत्यबलेन सहागतः समाहर्त्ता निजेन बलेन, राजा तु सर्वैर्बलैस्तैश्चान्यैश्चेति। अपि च वैश्वदेवो गणः कल्प्यः, सर्वे तु देवाः शब्दादेवावगम्यन्ते; तस्मात् दीक्षणीयया अङ्गदेवतापरिग्रहोऽपि प्रसङ्गात् सिध्यतीति न कर्त्तव्यं दार्शपौर्णमासिकमैष्टिकेषु अन्वाधानम्॥ (१२।१।१२अ॰)॥

---

रौद्रिकेषु पत्नीसन्नहनाननुष्ठानाधिकरणम्।

सू॰ सन्नहनञ्च वृत्तत्वात् ॥२९॥

भा॰ पत्न्याः सन्नहनञ्च दर्शपूर्णमासयोराम्नातं, 'योक्त्रेण पत्नीं सन्नह्यति'-

इति तत् सोमाङ्गभूतेषु ऐष्टिकेषु कर्म्मसु चोदकेन प्राप्तमपि न कर्त्तव्यं। कुतः?। 'वृत्तत्वात्', दीक्षाकाले सोमार्थं पत्न्याः सन्नहनं वृत्तं, 'योक्त्रेण पत्नीं सन्नह्यति मेखलया दीक्षितं मिथुनत्वाय' इति यदाम्नातं। सन्नहनञ्च वाससो धारणार्थं सर्वार्थेन सौमिकेनैव आ कर्म्मापवर्गात् प्रसङ्गेन सिद्ध्यतीति॥ (१२।१।१३अ०)॥

---

ऐष्टिकेषु आरण्यभोजनाभावाधिकरणम्।

सू० अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थम्॥३०॥

भा० दर्शपूर्णमासयोरारण्यभोजनमाम्नातं,—'यदारण्यानश्नाति तेन आरण्यान् अथो इन्द्रियं वै आरण्यमिन्द्रियमेवात्मन् धत्ते' इति। तत् प्रायणीयादिषु चोदकेन प्राप्यते, प्राप्तमपि सत् न कर्त्तव्यं। किंकारणं?। 'अन्यविधानात्'। यत्तु, दर्शपूर्णमासयोरारण्यभोजनं, तद् 'वृत्त्यर्थं'। 'सोमेऽपि एतदाम्नातं,-'पयोव्रतं ब्राह्मणस्य यवागूराजन्यस्य आमिक्षा वैश्यस्य' इति। तदपि दृष्टकार्य्यत्वाद्वृत्त्यर्थमेव। तयोः सौमिकं प्रत्यक्षश्रुतत्वात् प्राधान्याच्च अवश्यं कार्य्यम्, तेनैव च वृत्तौ प्रसङ्गात् सिद्धायामितरन्निवर्त्तते॥ (१२।१।१४अ०)॥

---

ऐष्टिकेषु शेषभक्षानुष्ठानाधिकरणम्।

सू० शेषभक्षास्तथेति चेन्नान्यार्थत्वात्॥३१॥

भा० दर्शपूर्णमासयोः शेषभक्ष ऐडादिः, सोमे चैष्टिकेषु कर्म्मसु चोदकप्राप्तः, सोऽपि सौमिकेन व्रतेन आराद्धवन्निवर्त्स्यते इति चेत्।

न । कस्मात्? । 'अन्यार्थत्वात्', न स हरत्यर्थः, न हि अयं हरतये, संस्कारार्थोऽसौ, उपयुक्तशेषत्वात्, भक्षाणां द्वितीयानिर्देशाच्च, 'यजमानपञ्चमा ऋत्विज इडां भक्षयन्ति' इति । तस्मात् कर्त्तव्यम् ॥ (१२।१।१५अ०)॥

---

रैष्टिकेषु अन्वाहार्य्यदानाभावाधिकरणम्।

सू० भृतत्वाच्च परिक्रयः ॥ ३२ ॥

भा० दर्शपूर्णमासयोः परिक्रयोऽन्वाहार्य्य आम्नातः, स इह चोदकेन प्राप्तः सन् न कर्त्तव्यः । कुतः ?। 'भृतत्वात्' । भृतास्ते ऋत्विजः सोमार्थेन परिक्रयेण, 'तस्य द्वादश शतं दक्षिणा' इति । एकदेशकालकर्तृत्वञ्च अङ्गप्रधानानां; तस्मात् तैरेवाङ्गानि कर्त्तव्यानि । अतो न पृथगङ्गानां परिक्रयः । तस्मादन्वाहार्य्यो निवर्त्तते ॥ (१२।१।१६अ०) ॥

---

रैष्टिकेषु शेषभक्षस्य संस्कारार्थतया कर्त्तव्यत्वाधिकरणम्।

सू० शेषभक्षास्तथेति चेत् ॥ ३३ ॥ (पू०) ॥

भा० अथ शेषभक्षा अपि 'तथा' निवर्त्तेरन्, यथा अन्वाहार्य्य इति चेत् । परिक्रयार्थाशङ्क्योच्यते ॥

सू० न, कर्म्मसंयोगात् ॥ ३४ ॥ (सि०) ॥

भा० नैते निवर्त्तेरन्, न ह्येते परिक्रयार्थाः । अन्वाहार्य्येण कर्म्मार्थ-

आमतानां निर्वृत्तप्रभृतिषु कर्म्मसु एते विधीयन्ते,न चात्मगमानमनाय,*
तस्मान्नैते परिक्रयार्था: किन्तु मेषसंस्कारार्था:। अतस्तदर्थं कर्त्तव्या: ॥
(२२।१।१७अ०) ॥

---

ऐष्टिकेषु होतुर्वरणसद्भावाधिकरणम्

सू० प्रवृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियेत ॥
॥ ३५ ॥ (सि०) ॥

भा० दर्शपूर्णमासयोर्होतुर्वरणमाम्नातं,-'अग्निर्द्देवो दैव्यो होता देवान्
यक्षत्' इति। तत् चोदकेन ऐष्टिकेषु कर्म्मसु सोमाङ्गभूतेषु प्राप्यते।
अस्ति तु सोमेऽपि होतुर्वरणं,–'अग्निर्होता स मे होता होतस्त्वं मे
होतासि इति होतारं वृणीत' इति। तत्र विचार्य्यते,—किम्,
ऐष्टिकेषु कर्म्मसु दार्शपौर्णमासिकं होतुर्वरणं कर्त्तव्यम्, उत, न?
इति। किं प्राप्तं?—न कर्त्तव्यमिति। कस्मात्?। वरणन्तावद्
आनत्यर्थं, सौमिकेन च वरणेनागतो होता साङ्गस्य सोमस्य
करणे। न चानतस्यानमनेन कार्यमस्ति। तस्मात् न कर्त्तव्यम्।

एवं प्राप्ते ब्रूम:,—'वृत्त वरणात् प्रतितन्त्रं वरणं होतु: क्रियेत',—
नैतदस्ति,—सौमिकं वरणं प्रसङ्गाद्दार्शपौर्णमासिकस्य कार्य्यं साधयिष्यति
इति, 'प्रवृत्ते' वरणात् प्रवृत्ते कर्म्मणि दार्शपौर्णमासिकं वरणं क्रियते,
अतस्तत् न आनत्यर्थं, किन्तर्हि कर्म्ममात्रं, न चेत् क्रियेत, तेन
गुणवैगुण्यं स्यात्! तस्मात् प्रतिकर्म्म भेदेन कर्त्तव्यम्॥

सू० ब्रह्मापीति चेत् ॥ ३६ ॥ (आ०) ॥

---

* 'न चात्मगमानमनाय' इति का० कौ० पु० पाठ:। 'नचात्मगमानमनाय' इति
आदर्शपुस्तकपाठ:।

भा॰ इति चेत् पश्यसि,—प्रवृत्तवरणाद्धोतुर्वरणं प्रतिकर्म्म कर्त्तव्यम्-इति, 'ब्रह्मापि प्रवृत्ते कर्म्मणि व्रियते प्रणीता प्रणयनकाले, तस्मात् तस्यापि वरणं धर्म्ममात्रं, अतस्तदपि प्रतिकर्म्म कर्त्तव्यं; कोऽन्यो वा विशेषः ॥

सू॰ न, प्राङ्नियमात्तदर्थं हि ॥ ३७ ॥ (आ॰नि॰) ॥

भा॰ न ब्रह्मवरणं कर्त्तव्यं। किंकारणं?। 'प्राङ्नियमात्', प्राग्वरणादित्यर्थः;—सत्यं प्रवृत्ते कर्म्मणि ब्रह्मणो वरणं, प्राग्वरणाच्च किञ्चिद् ब्रह्मत्वमस्ति, वरणादनन्तरकालं ब्रह्मणः कर्म्म, तदर्थं वरणं कर्म्मार्थं; तस्माच्च तद्धर्म्ममात्रं, किन्तर्हि आनत्यर्थमेव, सोमिकेन च वरणेन आनतोऽसौ। तस्माद् ब्रह्मवरणं न कर्त्तव्यम् ॥

सू॰ निर्द्दिष्टस्येति चेत् ॥ ३८ ॥ (द्वि॰आ॰) ॥

भा॰ अथोच्येत,—अस्ति अमावास्यायामौपवसथ्येऽहनि वेदिकर्म्म निर्द्दिष्टं,—'पूर्वेद्युरमावास्यायां वेदिं करोति' इति, तत्र वेदिपरिग्रह-प्रसवो ब्रह्मणा क्रियते, तेन ब्रह्मापि प्रवृत्तवरण इति ॥

सू॰ नाश्रुतित्वात् ॥ ३९ ॥ (द्वि॰आ॰नि॰) ॥

भा॰ पूर्वेद्युरमावास्यायां वेदिकरणं श्रुतं, न परिग्रहणं, 'अश्रुतित्वात्' यथाकालमेव वृते ब्रह्मणि परिग्रहः करिष्यते, वरणस्य कर्म्मार्थत्वात्। ननु 'प्राग्वेदिकरणात् पूर्वः परिग्रहः, तत्रापि ब्रह्मणा प्रसवो दातव्यः'। बाढं, अयं तर्हि अन्यः परिहारः,—दर्शपूर्णमासप्रकरणे हविषामभि-वासनादूर्द्धं वेदिकरणमाम्नातं, ब्रह्मवरणमपि प्रणीताप्रणयनकाले प्राग्

अब्रह्मत्वप्रवृत्तेरदृष्टार्थत्वादानर्थक्यम्। एवं स्थिते अमावास्यायां वेदिकरणं वचनेनापकृष्टं, तस्मिन्नपकृष्यमाणे परिग्रहोऽप्यपकृष्टः, प्रसवोऽपि च, ब्रह्मवरणमपि, प्रधानदेशकालत्वाद्गुणानाम्। एवं सति पौर्णमास्यां प्रणयनकाले ब्रह्मवरणम्, अमावास्यायां पूर्वेद्युः,—उभयत्राप्रवृत्ते ब्रह्मत्वे। तस्मादुभयत्रानर्थक्यम्। अतो न प्रतिकर्म्म ब्रह्मवरणं कर्त्तव्यं, सौमिकेनैव वरणेनानतत्वाद् ब्रह्मणः॥

सू॰ होतुस्तथेति चेत्॥ ४०॥ (तृ॰आ॰)॥

भा॰ इति चेत् पश्यसि,—यद्यप्रवृत्ते कर्म्मणि ब्रह्मणो वरणं, न च, वरणात् प्राक्, किञ्चिद् ब्रह्मणः कर्म्मास्ति, तस्मान्न प्रवृत्तवरणो ब्रह्मेति। 'होतुस्तथा' होतुरपि प्राग्वरणान्न किञ्चित्कर्म्मास्ति, तत्रापि वरणं न धर्म्ममात्रम्॥

सू॰ न, कर्म्मसंयोगात्॥ ४१॥ (तृ॰आ॰नि॰)॥

भा॰ अस्ति, होतुः प्राग्वरणात् सामिधेनीकर्म्मणा संयोगः,—'अध्वरतः सामिधेनीरन्वाह' इति। तस्माद्धोतुर्वरणमदृष्टार्थं; तदैष्टिकेषु कर्म्मसु दीक्षणीयादिसु कर्त्तव्यं, ब्रह्मवरणन्तु दृष्टार्थं तत् सौमिकेनैव कृतत्वात् न कर्त्तव्यमिति॥ (११।१।१८अ॰)॥

---

आतिथ्यायां बर्हिषः प्रतिकर्म्म प्रोक्षणाद्यभावाधिकरणम्।

सू॰ यज्ञोत्पत्त्युपदेशे निष्ठितकर्म्मप्रयोगभेदात् प्रतितन्त्रं क्रियेत॥ ४२॥ (पू॰)॥

भा॰ सोमे श्रूयते,—'यदातिथ्यायां बर्हिस्तदुपसदान्तदग्नीषोमी-

वस्य'—इति। तत्र यत् निष्ठितस्य बर्हिषो लूनस्य क्रियते, यथा, प्रोक्षणम्, अग्राणाम् अपयातनं, मूलानाम् अवसेचनं। तत्किम् आतिथ्यादिषु प्रयोगभेदे भेदेन कर्त्तव्यम्, अथ वा, यदातिथ्यायां कृतं, तदेवेतरच प्रसज्यते?। किं प्राप्तं?—'यज्ञोत्पत्त्युपदेशे' आतिथ्योत्पत्त्युपदेशे एतस्मिन् 'यदातिथ्यायां बर्हिस्तदुपसदाम्' इति, यत् निष्ठितकर्म्म क्रियेत, तत् प्रयोगभेदाद्भिन्नं, भिन्नप्रयोगाण्येतानि आतिथ्यादीनि कर्म्माणि, तेषु दृश्यते विशेषः, यद् यस्य प्रयोगे प्रोक्षणादि कृतं तत्तदर्थमिति। तस्मादन्यार्थमावर्त्तयितव्यमिति। एवं प्रतिकर्म्माभ्यासः, न चात्र प्रसङ्गो युज्यते, न हि आतिथ्याया-स्तन्त्रमध्यपतिता उपसदः, अग्नीषोमीयो वा॥

सू॰ न वा, कृतत्वात्तदुपदेशो हि॥ ४३॥ (सि॰)॥

भा॰ 'न वा' प्रोक्षणादि कर्त्तव्यं। कुतः?। 'कृतत्वात्,' कृतं तदातिथ्यायां बर्हिषः, तेन संस्कृतं तद्बर्हिः, पुनःक्रियायां हेतुर्नास्ति। ननु 'कर्म्मार्थाः संस्काराः, तच कर्म्म भिन्नम्, अतो यस्मिन् कर्म्मणि क्रियन्ते तदर्था भवन्ति'। उच्यते,—कर्म्मार्था अप्येते सन्तो नास्कन्दपालिकावत् कर्म्मणि सम्बध्यन्ते, किन्तर्हि बर्हिर्द्वारेण,—यदीयं बर्हिः तेन सम्बध्यन्ते, साधारणञ्चेदमातिथ्यादीनां बर्हिः। कथं ज्ञायते?। 'तदुपदेशो हि,' 'यदातिथ्यायां बर्हिः' इत्यनेन वाक्येन तेषां बर्हिषः साधारण्यमुच्यते न धर्म्मातिदेशः। नापि निरिष्टकोपदेशः इत्युक्तं,—'अपिवोत्पत्ति संयोगात्तदर्थसम्बन्धो विशिष्टानां प्रयोगैकत्वहेतुः* स्यात्' (४।२।

---

* प्रयोगैकत्वे हेतुः इति आदर्शपुस्तके पाठः।

३०सू०) इति। एवं चेदातिथ्यायामपि क्रियमाणाः संस्काराः सर्वार्था एव भवन्ति। तस्मान्न प्रतिकर्म कर्त्तव्या इति॥ (१२।१।१९अ०)॥

आतिथ्यायां स्तरणमन्त्रस्यावृत्त्यधिकरणम्।

सू० देशपृथक्त्वान्मन्त्रोऽभ्यावर्त्तेत ॥ ४४ ॥

भा० तत्रैव स्तरणमन्त्रः चिन्त्यते,—किम्, अग्नीषोमीये भेदेन कर्त्तव्यः, अथ वा, य आतिथ्यायां प्रयुक्तः, स एव प्रसज्यते? इति। साधारणे बर्हिषि प्रयोगात् पूर्वोक्तेन न्यायेन प्रसङ्गे प्राप्ते उच्यते,— 'मन्त्रोऽभ्यावर्त्तेत,' भेदेन कर्त्तव्य इति। कुतः?। 'देशपृथक्त्वात्,'— 'पृथगेतौ देशौ,-उत्तरवेदिसमीपं प्राग्वंशस्य; देशभेदात् स्तरणमावर्त्तते, स्तरणाङ्गञ्च मन्त्रः,—'ऊर्णाम्रदसन्त्वा स्तृणामि' इति, स्तरणावृत्तौ मन्त्रस्याप्यावृत्तिर्न्याय्या। प्रधानतन्त्रत्वाद्गुणानां। अपि च स्तरणं देश-संस्कारकं, तेनातिथ्यायां प्राग्वंशदेशः संस्कृतः, न उत्तरवेदिदेशः, यदि मन्त्रो न प्रयुज्येत विगुणस्तस्य संस्कारः स्यात्। तस्मादावृत्तिः स्तरणमन्त्रस्य ॥ (१२।१।२०अ०)॥

---

बर्हिषो देशान्तरनयने सन्नहनहरणमन्त्रयोरप्रयोगाधिकरणम्।

सू० सन्नहनहरणे तथेति चेत् ॥ ४७ ॥ (पू०)॥

भा० अग्नीषोमीये एव देशान्तरं नीयमानस्य बर्हिषः सन्नहनहरण-मन्त्रौ प्रयोक्तव्यौ, न? इति चिन्त्यते, तत्राह,—सन्नहनहरणमन्त्रौ 'तथा', यथा स्तरणमन्त्रः, भेदेन प्रयोक्तव्यावित्यर्थः। कुतः?। उक्तो न्यायः सन्नहनहरणमन्त्रौ कर्म्माङ्गं, ते च कर्म्मणी आवर्त्तेते। अतो मन्त्रयोरावृत्तिर्न्याय्या। तस्मात् भेदः॥

सू॰ नान्यार्थत्वात् ॥ ४८ ॥ (सि॰) ॥

भा॰ नैतद्युक्तं। कुतः?। 'अन्यार्थत्वात्', लूनस्य बर्हिषो ये सन्नहन-हरणे ते उपादानार्थे; तत्र हि मन्त्रौ स्वीक्रियमाणस्यैवोपवर्णनारूपौ, 'पूषा ते ग्रन्थिं बध्नातु बृहस्पतेर्मूर्ध्ना हरामि' इति। इमे पुनः स्वीकृतस्य देशान्तरप्रापणार्थे, अन्यार्थत्वादप्राकृतकार्ये न मन्त्रं गृह्णीतः। यथा तत्रैवातिथ्यायां यदा गार्हपत्यदेशादाहवनीयदेशं प्रोक्षणाय बर्हिर्नीयते, न तदा हरणमन्त्रः प्रयुज्यते एवमिहापि ॥ (१२।१।२१अ॰) ॥

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये द्वादशाध्यायस्य प्रथमः पादः ॥०॥

---

# मीमांसा-दर्शने

## १२ अध्याये २ पादः ।

विहाराग्नेर्वैदिककर्म्ममात्राधिकरणम् ।

सू॰ विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् ॥१॥ (पू॰) ॥

भा॰ विहार इति गार्हपत्यादिरग्निचेता* उच्यते, विहरणात् । स 'लौकिकानां' कर्मणां,-पार्वणस्थालीपाकादीनाम्,अन्येषां चाग्निसाध्यानां पचनदहनप्रकाशनादीनाम्'अर्थं साधयेत्' निर्वृत्तिं कुर्य्यात्, 'प्रभुत्वात्',-प्रभवति हि आहुतिप्रक्षेपणे पाकादौ च। संयुक्तं च न केनचित् प्रयोजनेन, अग्निद्रव्यमुत्पन्नं,—'वसन्तेऽग्नीनाधीत' इति, तत्सामर्थ्याद् यत्र यत्रोपयुज्यते तत्र तत्रोपयोक्ष्यम्; एवञ्चास्योत्पत्तिः† अर्थवती भवति ॥

सू॰ मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥ (यु॰) ॥

भा॰ 'मांसपाकप्रतिषेधो' भवति 'तद्वत्',-न्यायोपदिष्टः‡,-'मांसं न पचेयुः तस्मिन्नग्नौ यत्पचेयुः क्रव्यादं कुर्य्युः' इति। लौकिके हि पाके मांसप्रसङ्गो वैदिकस्तु आमिक्षे मांसपाकः ॥

---

* गार्हपत्यदक्षिणाहवनीयाग्निरूपः ।

† 'एवञ्च तस्योत्पत्तिः' इति का॰ सो॰ पु॰ पाठः ।

‡ 'तद्वत्, यद्वत् न्यायोपदिष्टः' इति चाद्दर्शपुस्तकपाठः ।

सू० स्याद्वा व्यपदेशात् ॥२७॥ (पू०) ॥

भा० 'स्याद्वा' अर्थः, ऐष्टिकेनान्वन्वाधानेनाङ्गदेवतापरिग्रहणं, न तु विश्वे देवा इज्यन्ते इति परिगृहीताः। न तत्र सर्वा देवता इज्यन्ते, किन्तर्हि विश्वे देवा देवतागणः, यथा, साध्या वसवो रुद्रा इति। कथं ज्ञायते? 'व्यपदेशात्', व्यपदेशो भवति, 'अग्निर्वसुभिः सोमो रुद्रैरिन्द्रो मरुद्भिर्वरुण आदित्यैर्बृहस्पतिर्विश्वैर्देवैः' इति वस्वादिभ्योऽर्थान्तरभूतान् विश्वान् देवान् दर्शयति। यदि च सर्वे देवा उच्येरन् विश्वदेव-शब्देन, तेभ्योऽर्थान्तरभूता न स्युः। तस्मात् विश्वदेवशब्दो गणवचन एव। एवञ्चेत् अपरिगृहीता अङ्गदेवताः, तदर्थमैष्टिकमन्वन्वाधानं कर्त्तव्यम्॥

सू० न गुणार्थत्वात् ॥२८॥ (उ०) ॥

भा० नैतदेवं। कस्मात्?। 'गुणार्थत्वात्', न अनेन व्यपदेशेन गणो वैश्वदेवः शक्यः कल्पयितुं। गुणार्थोऽयं व्यपदेशो बृहस्पतिप्रशंसार्थः। अग्न्यादयो वस्वादिभिः केवलैः समेताः, बृहस्पतिस्तु सर्वैर्देवैस्तैश्च अन्यैश्चेति। यथा सेनापतिर्भृत्यबलेन सहागतः समाहर्त्ता निजेन बलेन, राजा तु सर्वबलैस्तैश्चान्यैश्चेति। अपि च वैश्वदेवो गणः कल्प्यः, सर्वे तु देवाः शब्दादेवावगम्यन्ते; तस्मात् दीक्षणीयया अङ्गदेवतापरिग्रहोऽपि प्रसङ्गात् सिध्यतीति न कर्त्तव्यं दार्शपौर्णमासिकमैष्टिकेषु अन्वन्वा-धानम्॥ (१२।१।१२अ०)॥

---

ऐष्टिकेषु पत्नीसन्नहनमनुष्ठानाधिकरणम्।

सू० सन्नहनञ्च वृत्तत्वात् ॥२९॥

भा० पत्न्याः सन्नहनञ्च दर्शपूर्णमासयोराम्नातं, 'योक्त्रेण पत्नीं सन्नह्यति'-

इति तत् सोमाङ्गभूतेषु ऐष्टिकेषु कर्म्मसु चोदकेन प्राप्तमपि न कर्त्तव्यं। कुतः?। 'वृत्तत्वात्', दीक्षाकाले सोमार्थं पत्न्याः सन्नहनं वृत्तं, 'योक्त्रेण पत्नीं सन्नह्यति मेखलया दीक्षितं मिथुनत्वाय' इति यदाम्नातं। सन्नहनञ्च वाससो धारणार्थं सर्वार्थेन सौमिकेनैव आ कर्म्मापवर्गात् प्रसङ्गेन सिद्ध्यतीति॥ (११।१।१३अ०)॥

---

ऐष्टिकेषु आरण्यभोजनाभावाधिकरणम्।

सू० अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थम्॥ ३०॥

भा० दर्शपूर्णमासयोरारण्यभोजनमाम्नातं,—'यदारण्यमश्नाति तेन आरण्यान् अथो इन्द्रियं वै आरण्यमिन्द्रियमेवात्मन् धत्ते' इति। तत् प्रायणीयादिषु चोदकेन प्राप्यते, प्राप्तमपि सत् न कर्त्तव्यं। किंकारणं?। 'अन्यविधानात्'। यत्तु, दर्शपूर्णमासयोरारण्यभोजनं, तद्'वृत्त्यर्थं'। 'सोमेऽपि एतदाम्नातं,-'पयोव्रतं ब्राह्मणस्य यवागूराजन्यस्य आमिक्षा वैश्यस्य' इति। तदपि दृष्टकार्य्यत्वाद्वृत्त्यर्थमेव। तयोः सौमिकं प्रत्यक्षश्रुतत्वात् प्राधान्याच्च अवश्यं कार्य्यम्, तेनैव च वृत्तौ प्रसक्तात् सिद्धायामितरन्निवर्त्तते॥ (११।१।१४अ०)॥

---

ऐष्टिकेषु शेषभक्षानुष्ठानाधिकरणम्।

सू० शेषभक्षास्तथेति चेन्नान्यार्थत्वात्॥३१॥

भा० दर्शपूर्णमासयोः शेषभक्ष ऐडादिः, सोमे चैष्टिकेषु कर्म्मसु चोदकप्राप्तः, सोऽपि सौमिकेन व्रतेन आराद्वन्निवर्त्तते इति चेत्।

न। कस्मात्? । 'अन्यार्थत्वात्', न स हत्यर्थः, न हि अयं कल्प्यते, संस्कारार्थोऽसौ, उपयुक्तशेषत्वात्, भक्षाणां द्वितीयानिर्देशाच्च, 'कल्मापपक्षमा ऋत्विज इडां भक्षयन्ति' इति । तस्मात् कर्त्तव्यम् ॥ १२।१।१५अ०)॥

---

रेष्टिकेषु अन्वाहार्य्यदानाभावाधिकरणम्।

सू० भृतत्वाच्च परिक्रयः ॥ ३२ ॥

भा० दर्शपूर्णमासयोः परिक्रयोऽन्वाहार्य्य आम्नातः, स इह चोदकेन प्राप्तः सन् न कर्त्तव्यः। कुतः?। 'भृतत्वात्'। भृतास्ते ऋत्विजः सोमार्थेन परिक्रयेण, 'तस्य द्वादश शतं दक्षिणा' इति । एकदेशकालकर्तृत्वञ्च अङ्गप्रधानानां; तस्मात् तैरेवाङ्गानि कर्त्तव्यानि । अतो न पृथगङ्गानां परिक्रयः। तस्मादन्वाहार्य्यो निवर्त्तते॥ (१२।१।१६अ०) ॥

---

रेष्टिकेषु शेषभक्षस्य संस्कारार्थतया कर्त्तव्यताधिकरणम्।

सू० शेषभक्षास्तथेति चेत्॥ ३३ ॥ (पू०) ॥

भा० अथ शेषभक्षा अपि 'तथा' निवर्त्तेरन्, यथा अन्वाहार्य्य इति चेत् । परिक्रयार्थाशङ्कोच्यते ॥

सू० न, कर्म्मसंयोगात्॥ ३४ ॥ (सि०) ॥

भा० नैते निवर्त्तेरन्, न ह्येते परिक्रयार्थाः। अन्वाहार्य्येण कर्म्मार्थ-

मानतानां निर्वृत्तभूयिष्ठे कर्म्मणि एते विधीयन्ते, न चात्मनमानमनाय,* तस्मान्नैते परिक्रयार्थाः किन्तु शेषसंस्कारार्थाः। अतस्तदर्थं कर्त्तव्याः ॥ (२२।१।१७अ०) ॥

———

ऐष्टिकेषु होतुर्वरणसद्भावाधिकरणम्

सू० प्रवृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियेत ॥ ॥३५॥ (सि०) ॥

भा० दर्शपूर्णमासयोर्होतुर्वरणमाम्नातं,—'अग्निर्देवो दैव्यो होता देवान् यक्षत्' इति। तत् चोदकेन ऐष्टिकेषु कर्म्मसु सोमाङ्गभूतेषु प्राप्यते। अस्ति तु सोमेऽपि होतुर्वरणं,—'अग्निर्होता स मे होता होतस्त्वं मे होतासि इति होतारं वृणीत' इति। तत्र विचार्य्यते,—किम्, ऐष्टिकेषु कर्म्मसु दार्शपौर्णमासिकं होतुर्वरणं कर्त्तव्यम्, उत, न? इति। किं प्राप्तं?—न कर्त्तव्यमिति। कस्मात्?। वरणन्तावद् आनत्यर्थं, सौमिकेन च वरणेनानतो होता साङ्गस्य सोमस्य करणे। न चानतस्यानमनेन कार्य्यमस्ति। तस्मात् न कर्त्तव्यम्।

एवं प्राप्ते ब्रूमः,—'वृत्तवरणात् प्रतितन्त्रं वरणं होतुः क्रियेत',—नैतदस्ति,—सौमिकं वरणं प्रसङ्गाद्दार्शपौर्णमासिकस्य कार्य्यं साधयिष्यति इति, 'प्रवृत्ते' वरप्रणात् प्रवृत्ते कर्म्मणि दार्शपौर्णमासिकं वरणं क्रियते, अतस्तत् न आनत्यर्थं, किन्तर्हि कर्म्ममात्रं, न चेत् क्रियेत, तेन गुणवैगुण्यं स्यात्! तस्मात् प्रतिकर्म्म भेदेन कर्त्तव्यम्॥

सू० ब्रह्मापीति चेत् ॥३६॥ (आ०) ॥

---

* 'न चात्ममानमनाय' इति का० औ० पु० पाठः। 'नचात्ममानमनाय' इति आदर्शपुस्तकपाठः।

भा॰ इति चेत् पश्यसि,—प्रवृत्तवरणाद्धोतुर्वरणं प्रतिकर्म्म कर्त्तव्यम्-इति, 'ब्रह्मापि प्रवृत्ते कर्म्मणि व्रियते प्रणीता प्रणयनकाले, तस्मात् तस्यापि वरणं धर्म्ममात्रं, अतस्तदपि प्रतिकर्म्म कर्त्तव्यं; कस्तयो वा विशेषः ॥

सू॰ न, प्राङ्नियमात्तदर्थं हि ॥ ३७ ॥ (आ॰नि॰) ॥

भा॰ न ब्रह्मवरणं कर्त्तव्यं। किंकारणं? । 'प्राङ्नियमात्', प्राग्वरणादित्यर्थः;—सत्यं प्रवृत्ते कर्म्मणि ब्रह्मणो वरणं, प्राग्वरणाच्च किञ्चिद् ब्रह्मत्वमस्ति, वरणादनन्तरकालं ब्रह्मणः कर्म्म, तदर्थं वरणं कर्म्मार्थं; तस्माच्च तद्धर्म्ममात्रं, किन्तर्हि आगत्यर्थमेव, होमिकेन च वरणेन आगतोऽसौ । तस्माद् ब्रह्मवरणं न कर्त्तव्यम् ॥

सू॰ निर्द्दिष्टस्येति चेत् ॥ ३८ ॥ (द्वि॰आ॰) ॥

भा॰ अथोच्येत,—अस्ति अमावास्यायामौपवसथ्येऽहनि वेदिकर्म्म निर्द्दिष्टं,—'पूर्वेद्युरमावास्यायां वेदिं करोति' इति, तच्च वेदिपरिग्रह-प्रसवो ब्रह्मणा क्रियते, तेन ब्रह्मापि प्रवृत्तवरण इति ॥

सू॰ नाश्रुतित्वात् ॥ ३९ ॥ (द्वि॰आ॰नि॰) ॥

भा॰ पूर्वेद्युरमावास्यायां वेदिकरणं श्रुतं, न परिग्रहणं, 'अश्रुतित्वात्' यथाकालमेव वृते ब्रह्मणि परिग्रहः करिष्यते, वरणस्य कर्म्मार्थत्वात्। ननु 'प्राग्वेदिकरणात् पूर्वः परिग्रहः, तत्रापि ब्रह्मणा प्रसवो दातव्यः'। बाढं, अयं तर्हि अन्यः परिहारः,—दर्शपूर्णमासप्रकरणे हविषामभि-वासनादूर्द्ध्वं वेदिकरणमाम्नातं, ब्रह्मवरणमपि प्रणीताप्रणयनकाले प्राग्

ब्रह्मत्वप्रवृत्तेर्दृष्टार्थत्वादानत्यर्थम्। एवं स्थिते अमावास्यायां वेदिकरणं वचनेनापकृष्टं, तस्मिन्नपकृष्यमाणे परिग्रहोऽप्यपकृष्टः, प्रसवोऽपि च, ब्रह्मवरणमपि, प्रधानदेशकालत्वाद्गुणानाम्। एवं सति पौर्णमास्यां प्रणयनकाले ब्रह्मवरणम्, अमावास्यायां पूर्वेद्युः,—उभयथाप्रवृत्ते ब्रह्मत्वे। तस्मादुभयथानत्यर्थम्। अतो न प्रतिकर्म्म ब्रह्मवरणं कर्त्तव्यं, सौमिकेनैव वरणेनानतत्वाद् ब्रह्मणः॥

सू॰ होतुस्तथेति चेत्॥ ४०॥ (शं॰आ॰)॥

भा॰ इति चेत् पश्यसि,—यद्यप्रवृत्ते कर्म्मणि ब्रह्मणो वरणं, न च, वरणात् प्राक्, किञ्चिद् ब्रह्मणः कर्म्मास्ति, तस्मान्न प्रवृत्तवरणो ब्रह्मेति। 'होतुस्तथा' होतुरपि प्राग्वरणान्न किञ्चित्कर्म्मास्ति, तस्यापि वरणं न धर्म्ममात्रम्॥

सू॰ न, कर्म्मसंयोगात्॥ ४१॥ (शं॰आ॰नि॰)॥

भा॰ अस्ति, होतुः प्राग्वरणात् सामिधेनीकर्म्मणा संयोगः,—'अग्रतः सामिधेनीरन्वाह' इति। तस्माद्धोतुर्वरणमदृष्टार्थं; तद्दैष्टिकेषु कर्म्मसु दीक्षणीयादिसु कर्त्तव्यं, ब्रह्मवरणन्तु दृष्टार्थं तत् सौमिकेनैव कृतत्वात् न कर्त्तव्यमिति॥ (१२।१।१८अ॰)॥

---

आतिथ्यायां बर्हिषः प्रतिकर्म्म प्रोक्षणाद्यभावाधिकरणम्।

सू॰ यज्ञोत्पत्त्युपदेशे निष्ठितकर्म्मप्रयोगभेदात् प्रतितन्त्रं क्रियेत॥ ४२॥ (पू॰)॥

भा॰ सोमे श्रूयते,—'यदातिथ्यायां बर्हिस्तदुपसदान्तदग्नीषोमी-

चस्य'—इति। तत्र यत् निष्ठितस्य बर्हिषो लूनस्य क्रियते, यथा, प्रोक्षणम्, अग्राणाम् अपघातनं, मूलानाम् अवसेचनं। तत्किम् आतिथ्यादिषु प्रयोगभेदे भेदेन कर्त्तव्यम्, अथ वा, यदातिथ्यायां कृतं, तदेवेतरच प्रसज्यते?। किं प्राप्तं?—'यज्ञोत्पत्त्युपदेशे' आतिथ्योत्पत्त्युपदेशे एतस्मिन् 'यदातिथ्यायां बर्हिस्तदुपसदाम्' इति, यत् निष्ठितकर्म्म क्रियेत, तत् प्रयोगभेदाद्भिन्नं, भिन्नप्रयोगाण्येतानि आतिथ्यादीनि कर्म्माणि, तेषु दृश्यते विशेषः, यद् यस्य प्रयोगे प्रोक्षणादि कृतं तत्तदर्थमिति। तस्मादन्यार्थमावर्त्तयितव्यमिति। एवं प्रतिकर्म्माभ्यासः, न चात्र प्रसङ्गो युज्यते, न हि आतिथ्यायास्तन्त्रमध्यपतिता उपसदः, अग्नीषोमीयो वा॥

सू॰ न वा, कृतत्वात्तदुपदेशो हि॥ ४३॥ (सि॰)॥

भा॰ 'न वा' प्रोक्षणादि कर्त्तव्यं। कुतः?। 'कृतत्वात्,' कृतं तदातिथ्यायां बर्हिषः, तेन संस्कृतं तद्बर्हिः, पुनःक्रियायां हेतुर्नास्ति। ननु 'कर्म्मार्थाः संस्काराः, तच्च कर्म्म भिन्नम्, अतो यस्मिन् कर्म्मणि क्रियन्ते तदर्था भवन्ति'। उच्यते,—कर्म्मार्था अप्येते सन्तो नास्कन्दपालिकावत् कर्म्मणि सम्बध्यन्ते, किन्तर्हि बर्हिर्द्वारेण,—यदीयं बर्हिः तेन सम्बध्यन्ते, साधारणञ्चेदमातिथ्यादीनां बर्हिः। कथं ज्ञायते?। 'तदुपदेशो हि,' 'यदातिथ्यायां बर्हिः' इत्यनेन वाक्येन तेषां बर्हिषः साधारण्यमुच्यते न धर्म्मातिदेशः। नापि निरिष्टकोपदेशः इत्युक्तं,—'अपिवोत्पत्तिसंयोगात्तदर्थसम्बन्धो विशिष्टानां प्रयोगैकत्वहेतुः* स्यात्' (४।२।

* प्रयोगैकत्वे हेतुः इति आदर्शपुस्तके पाठः।

३०सू०) इति। एवं चेदातिथ्यायामपि क्रियमाणाः संस्काराः सर्वार्था एव भवन्ति। तस्मान्न प्रतिकर्म्म कर्त्तव्या इति॥ (११।१।१९अ०)॥

आतिथ्यायां स्तरणमन्त्रस्यावृत्त्यधिकरणम्।

सू० देशपृथक्त्वान्मन्त्रोऽभ्यावर्त्तेत॥ ४४॥

भा० तत्रैव स्तरणमन्त्रः चिन्त्यते,—किम्, अग्नीषोमीये भेदेन कर्त्तव्यः, अथ वा, य आतिथ्यायां प्रयुक्तः, स एव प्रसज्यते? इति। साधारणे बर्हिषि प्रयोगात् पूर्वोक्तेन न्यायेन प्रसङ्गे प्राप्ते उच्यते,—'मन्त्रोऽभ्यावर्त्तेत,' भेदेन कर्त्तव्य इति। कुतः?। 'देशपृथक्त्वात्,'—'पृथगेतौ देशौ,-उत्तरवेदिसमीपं प्राग्वंशश्च; देशभेदात् स्तरणमावर्त्तते, स्तरणाङ्गञ्च मन्त्रः,—'ऊर्णाम्रदसन्त्वा स्तृणामि' इति, स्तरणावृत्तौ मन्त्रस्याप्यावृत्तिर्न्याय्या। प्रधानतन्त्रत्वाद्गुणानां। अपि च स्तरणं देशसंस्कारकं, तेनातिथ्यायां प्राग्वंशदेशः संस्कृतः, न उत्तरवेदिदेशः, यदि मन्त्रो न प्रयुज्येत विगुणस्तस्य संस्कारः स्यात्। तस्मादावृत्तिः स्तरणमन्त्रस्य॥ (११।१।२०अ०)॥

---

बर्हिषो देशान्तरनयने सन्नहनहरणमन्त्रयोरप्रयोगाधिकरणम्।

सू० सन्नहनहरणे तथेति चेत्॥ ४७॥ (पू०)॥

भा० अग्नीषोमीये एव देशान्तरं नीयमानस्य बर्हिषः सन्नहनहरणमन्त्रौ प्रयोक्तव्यौ, न? इति चिन्त्यते, तत्राह,—सन्नहनहरणमन्त्रौ 'तथा', यथा स्तरणमन्त्रः, भेदेन प्रयोक्तव्यावित्यर्थः। कुतः?। उक्तो न्यायः सन्नहनहरणमन्त्रौ कर्म्माङ्गं, ते च कर्म्मणी आवर्त्तेते। अतो मन्त्रयोरावृत्तिर्न्याय्या। तस्मात् भेदः॥

सू० नान्यार्थत्वात् ॥ ४८ ॥ (सि०) ॥

भा० नैतद्युक्तं । कुतः ? । 'अन्यार्थत्वात्', लूनस्य बर्हिषो ये सन्नहन-हरणे ते उपादानार्थे ; तत्र हि मन्त्रौ स्वीक्रियमाणस्यैवोपवर्णनात्मकौ, 'पूषा ते ग्रन्थिं बध्नातु बृहस्पतेर्मूर्द्ध्ना हरामि' इति । इमे पुनः स्वीकृतस्य देशान्तरप्रापणार्थे, अन्यार्थत्वादप्राकृतकार्य्ये न मन्त्रं गृह्णीतः । यथा तत्रैवातिथ्यायां यदा गार्हपत्यदेशादाहवनीयदेशं प्रोक्षणाय बर्हिर्नीयते, न तदा हरणमन्त्रः प्रयुज्यते एवमिहापि ॥ (१२।१।२१अ०) ॥

इति श्रीभट्टशबरस्वामिनः कृतौ मीमांसाभाष्ये द्वादशाध्यायस्य प्रथमः पादः ॥०॥

# मीमांसा-दर्शने

## १२ अध्याये २ पादः।

विहाराग्नेर्वैदिककर्म्ममात्रायतनाधिकरणम्।

सू॰ विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् ॥१॥ (पू॰) ॥

भा॰ विहार इति गार्हपत्यादिरग्निचेता* उच्यते, विहरणात्। स 'लौकिकानां' कर्मणां,-पार्वणस्थालीपाकादीनाम्, अन्येषां चाग्निसाध्यानां पचनदहनप्रकाशनादीनाम् 'अर्थं साधयेत्' निर्वृत्तिं कुर्य्यात्, 'प्रभुत्वात्',-प्रभवति हि आहुतिप्रक्षेपणे पाकादौ च। संयुक्तं च न केनचित् प्रयोजनेन, अग्निद्रव्यमुत्पन्नं,—'वसन्तेऽग्नीनादधीत' इति, तत्सामर्थ्याद् यत्र यत्रोपयुज्यते तत्र तत्रोपयोज्यम्; एवञ्चास्योत्पत्तिः† अर्थवती भवति ॥

सू॰ मांसपाकप्रतिषेधश्च तद्वत् ॥२॥ (यु॰) ॥

भा॰ 'मांसपाकप्रतिषेधो' भवति 'तद्वत्',-न्यायोपदिष्टः‡,-'मांसं न पचेयुः तस्मिन्नग्नौ यत्पचेयुः क्रव्यादं कुर्य्युः' इति। लौकिके हि पाके मांसप्रसङ्गो वैदिकस्तु आमिषे मांसपाकः ॥

---

* गार्हपत्यदक्षिणाहवनीयाग्निरूपः।

† 'एवञ्च तस्योत्पत्तिः' इति का॰ औ॰ पु॰ पाठः।

‡ 'तद्वत्, यद्वत् न्यायोपदिष्टः' इति चाइर्मपरास्तकपाठः।

सू॰ निर्देशाद्वा वैदिकानां स्यात् ॥ ३ ॥ (सि॰) ॥

भा॰ 'वैदिकानां' 'वा' कर्म्मणां विहारोऽर्थं साधयेत्, न लौकिकानां। कुतः?। 'निर्देशात्', निर्द्दिश्यते गार्हपत्यादीनां कार्य्यं, 'यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीतो भवति' इत्येवमादिभिर्वाक्यैः, यासौ उत्पत्तौ कार्य्याकाङ्क्षा, सा एतैर्वचनैर्निवर्त्तिता; अत एवमर्थैवैषा-मुत्पत्तिः। तस्मान्न लौकिकेषु प्रयुज्येरन्।

'भवेत्पाकादीनामयं परिहारः, न स्थालीपाकादीनां तेषामपि आहवनीये एव होमः प्राप्नोति'। नैष दोषः, 'यदाहवनीये जुहोति' इति नियमार्थ एव वादः, अन्तरेणापि हि वचनम्, आहवनीये होमोऽन्यत्र च प्राप्तः; तदेतन्नियमप्रापणं अनानियमप्रसङ्गस्थविषयं विज्ञायते। वैदिकेषु चानियमप्रसङ्गः आयतनस्यानिर्द्दिष्टत्वात्। लौकिकानां तु निर्द्दिष्टमायतनं औपासनोऽग्निः, तस्मान्न तानि आहवनीये प्रयुज्येरन् ॥

सू॰ सति चौपासनस्य दर्शनात् ॥ ४ ॥ (यु॰१) ॥

भा॰ सति च विहारे औपासनो निर्द्दिश्यते, 'यं कामयेत राष्ट्रमस्य प्रजायै स्यादिति तस्यौपासने प्रतिष्ठितमालभ्य जुहुयाद्' इति। राजसूये प्रकृते कर्मणि एतद्वचनं, तस्मिंश्च काले विहारोऽस्ति, यदि च सैव लौकिकानां कार्य्यं साधयेत्, सत्यां तस्यां नौपासनः कार्य्यवान् स्यात् ॥

सू॰ अभावदर्शनाच्च ॥ ५ ॥ (यु॰२) ॥

भा॰ मांसपाकस्य च वैहारिकेऽग्नौ अभावं दर्शयति, 'मांसीयन्ति ह वा एतस्याजुह्वतोऽग्नयो यजमानस्य अग्नयः ते यजमानमेव ध्यायन्ति

यजमानं संकल्पयन्ति पचन्ति ह वा अन्येष्वग्निषु वृथामांसम् अथैतेषां नातोऽन्या मांसाशा विद्यते' इति। अन्यच पशुबन्धात्, मांसपाकेनैव वैहारिकाणामग्नीनां परिहरति। तस्मादपि न लौकिकेषु विहारप्रसङ्गः॥

सू॰ मांसपाको विहितप्रतिषेधः स्यादाहुतिसंयोगात्
॥ ६ ॥ (पू॰ यु॰ नि॰ १) ॥

भा॰ यत्तु, 'मांसपाकप्रतिषेधश्च तद्वद्' इति तद् 'विहितप्रतिषेधः स्यात्', आहवनीये वपायाः श्रपणं विहितं, तस्यायं प्रतिषेधः। कस्मात्?। प्राप्तत्वात्, 'आहुतिसंयोगाच', 'तस्मिन्नग्नौ न मांसं पचन्ति यस्मिन् आहुतीर्जुह्वति' इति आहुतिसंयोगेन वाक्यशेषः श्रूयते; आहवनीये चाहुतयो हूयन्ते। तस्माद्वपाश्रपणस्यायं प्रतिषेधः॥

सू॰ वाक्यशेषो वा दक्षिणेऽस्मिन्* आरभ्य विधानस्य
॥७॥ (पू॰ यु॰ नि॰ २) ॥

भा॰ अथवा अयमन्यः परिहारः,—दक्षिणेऽग्नौ पत्न्या व्रतस्य श्रपणमाम्नातं,—'यदा आमयदोषान्मांसं व्रतकार्य्ये उपादीयते, तदा तत्र दक्षिणाग्नौ श्रपयितव्यम्' इति; तस्य दक्षिणाग्नौ व्रतश्रपणवाक्यस्यायं शेषः, 'अन्यच मांसात्' इति, 'या सरस्वती वेशमती' इति योऽसौ दक्षिणाग्नौ होमः तत्रैतच्छ्रूयते। तस्माद्दक्षिणाग्न्यभिप्रायं विज्ञायते॥ (१२।२।१अ॰)॥

---

* दक्षिणस्मिन् इति पादर्शपुस्तकपाठः।

सवनीयपशौ पशुपुरोडाशस्य कर्त्तव्यताधिकरणम् ।

सू० सवनीये छिद्रापिधानार्थत्वात्पशुपुरोडाशो न स्याद-न्येषामेवमर्थत्वात् ॥ ८ ॥ (पू०) ॥

भा० 'सवनीये' पशौ 'पुरोडाशो' 'न स्यात्' न कर्त्तव्यः । कुतः ? । 'छिद्रापिधानार्थत्वात्', पशोः छिद्रापिधानार्थः स एवं श्रूयते,— 'सुषिरो वै तर्हि पशुः यर्हि वपामुत्खिदति यद्व्रीहिमयः पुरोडाशो भवति अपिधानाय असुषिराय' इति । 'अन्येषामेवमर्थत्वात्', छिद्रापिधानमन्यैरेव क्रियते सवनीयैः पुरोडाशैः, तथापि श्रूयते,-'अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते पिहित्यै अच्छिद्रतायै' इति । अतः कृतार्थत्वात् पशुपुरोडाशो निवर्त्तते ॥

सू० क्रिया वा देवतार्थत्वात् ॥ ९ ॥ (सि०) ॥

भा० कर्त्तव्यो वा पशुपुरोडाशः । कुतः ? । 'देवतार्थत्वात्', देवता-संस्कारार्थोऽयमित्येतदुक्तं,—"अपि वा शेषभूतत्वात्तत्संस्कारः प्रतीयेत स्वाहाकारवदङ्गानामर्थसंयोगात् (१०।१।११सू०)" इति । न च, पुरोडाशच्छिद्रापिधानार्थः, प्रत्यक्षविरोधात् अर्थवादमात्रं तत्, पुरोडाशविधानार्थं; सवनीयेष्वप्येवमेवार्थवादमात्रं । तस्माच्चोदकप्राप्ता कार्य्यः पुरोडाशः ॥

सू० लिङ्गदर्शनाच्च ॥ १० ॥ (यु०) ॥

भा० 'वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यन्दिने सवने अङ्गैस्तृतीयसवने' इति तन्त्रविप्रकर्षपरे वाक्ये पुरोडाशं दर्शयति, तस्मादपि कार्य्यः ॥ (१२।२।१४अ०) ॥

---

सवनीयपुरोडाशे स्विष्टकृदाद्यावाभावाधिकरणम्।

सू॰ हविष्कृत्सवनीयेषु न स्यात् प्रकृतौ यदि सर्वार्था पशुं प्रत्याहृता सा कुर्य्याद्विद्यमानत्वात् ॥ ११ ॥

भा॰ सवनीयेषु पुरोडाशेषु हविष्कृदाह्वानं न कर्त्तव्यं। कुतः?। 'पशुं प्रत्याहृता' असौ, पशुमध्यपतिताश्च सवनीयाः, तेषु 'सा' एव 'विद्यमानत्वात्', प्रसङ्गादुपयोक्ष्यते, नार्थः पुनराह्वाने। 'ननु नैव पशोर्हविष्कृदस्ति। औषधार्था अवहननार्था वा, यथा पत्नी, तुषवच्चू यते-इति संकर्षे वक्ष्यति'। 'प्रकृतौ यदि' 'सर्वार्था' आज्यौषधसान्नाय्यार्था-इत्येवं कृत्वा चिन्त्यते। कृत्वा-चिन्तेयम्॥ (१२।२।२म॰) ॥

---

तृतीयसवने हविष्कृदाह्वानस्यापुनराह्वानाधिकरणम्।

सू॰ पशौ तु संस्कृते विधानात्तार्त्तीयसवनिकेषु स्यात् सौम्याश्विनयोश्चापवृक्तार्थत्वात् ॥ १२ ॥ (पू॰) ॥

भा॰ 'तार्त्तीयसवनिकेषु' तु पुरोडाशेषु 'सौम्याश्विनयोश्च' भेदेन हविष्कृत् स्यात्। कुतः?। 'पशौ' 'संस्कृते विधानात्',-पक्वे पशावेते विधीयन्ते, तस्मिन्काले पाशुकी हविष्कृत् कृतार्थत्वात् अपवृक्ता। तस्मादन्या आह्वातव्या ॥

सू॰ योगाद्वा यज्ञाय तद्विमोके विसर्गः स्यात्॥ १३ ॥ (सि॰)॥

भा न वा अन्या आह्वातव्या, सैव कुर्याद्विद्यमानत्वात्। न तु कृतार्थत्वादपवृक्ताऽसौ, नापवृज्यते। कुतः?। 'योगात्' 'यज्ञाय',

यज्ञायासौ पशुबन्धाय युक्ता, आदावेव न केवलं, सा यज्ञाङ्गानि सर्वाणि साधयितुं,'कस्त्वा युनक्ति स त्वा युनक्ति' इत्येवमादिना मन्त्रेण यज्ञार्थं युक्ता, तस्या यज्ञविमोके विसर्गो न्याय्यः, यत्कारणं कस्याञ्चित् आपदि पुनस्तया कदाचित्कार्य्यं भवेत्। तस्मान्न भेदेनाम्नातव्या॥ (१२।२।४अ०)॥

---

निशियज्ञेऽमावास्यातन्त्रप्रयोगाधिकरणम्।

## सू० निशियज्ञे प्राकृतस्याप्रवृत्तिः स्यात् प्रत्यक्षशिष्टत्वात् ॥१४॥ (पू०)॥

भा० इदं श्रूयते,–'अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेद् यो रक्षोभ्यो विभीयाद्' इति। तत्रैव 'अमावास्यायां निशि यजेत' इति। तस्मिन् किममावास्यातन्त्रं प्रयुज्यते, उत, न? इति चिन्तायां पक्षः परिगृह्यते, 'निशियज्ञे प्राकृतस्याप्रवृत्तिः' इति, अस्मिन्निशियज्ञे प्राकृतस्य अमावास्यातन्त्रस्याप्रवृत्तिः न प्रसज्यते। कुतः?। 'प्रत्यक्षशिष्टत्वात्', प्रत्यक्षशिष्टा इयमिष्टिः,–'अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेद् यो रक्षोभ्यो विभीयाद्' इति। किमतः?। तत एवं विज्ञायते, स्वतन्त्रेयमुत्पन्ना, न कस्यचित्कर्मणस्तन्त्रमध्ये; यथा पशुपुरोडाशोऽग्नीषोमीयस्य,–'वपया प्रचर्य्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपति' इति। यथा च वैष्णवो वैश्वदेवस्य,–'यद्धोऽवस्थेत यच्च स्कन्दं आस्रिष्येत तद्विष्णवे उरुक्रमाय अवद्येद्' इति। ननु 'अमावास्यायाम्' इत्यामावास्यस्य कर्मणो मध्ये श्रुता'। न, अमावास्याशब्दः कर्मवचनः, किन्तर्हि काल-वचनः; काले श्रुतिः, कर्मणि लक्षणा। श्रुतिश्च लक्षणातो ज्यायसी। न चेत्कस्यचित्कर्मणो मध्ये श्रूयते, कस्य तन्त्रं ग्रहीष्यति? तस्मात्स्वतन्त्रा॥

सू० कालवाक्यभेदाच्च तन्त्रभेदः स्यात् ॥ १५ ॥ (यु०) ॥

भा० कालभेदाद्वाक्यभेदाच्च। कालभेदस्तावद् अमावास्यायां रात्रौ निशियज्ञः, प्रतिपदि अहनि आमावास्यम्, कालभेदेन वैगुण्यात् न अमावास्यातन्त्रं निशियज्ञस्योपकर्त्तुमर्हति, कथन्तर्हि? पाशुकाः प्रयाजास्तिष्ठति पशौ क्रियमाणाः सन्तः तस्य पशुपुरोडाशस्योपकुर्वन्ति। उक्तस्तत्र न्यायः,—'न कृतस्य गुणानुग्रहार्थमावृत्तिरस्ति (८० २ पृ०)' —इति। इह पुनरकृतमामावास्यम्, तस्मादवैगुण्याय स्वतन्त्रं कर्त्तव्यं।

वाक्यभेदाच्च, भिन्नदेशे चैते वाक्ये, 'अमावास्यायां* यजेत' इति, 'अमावास्यायां निशि यजेत' इति। एकं दर्शपूर्णमासप्रकरणे, एकं काम्यासु इष्टिषु। किमतः?। यदि समानदेशे स्यातां, ततः 'अमावास्यायां यजेत' इति योऽसौ आमावास्ये कर्म्मणि काल उपात्तस्तस्मिन्नेव निशियज्ञश्चोदित इति गम्येत, तच्च अमावास्यातन्त्रमध्ये एव विहितः स्यात्। अथ पुनर्देशभेदे सति यथा 'अमावास्यायां यजेत' इत्युपात्तः काल उपादेयत्वेन चोद्यते, एवमिहापि। न च, तुल्यकालत्वे प्रसङ्गो भवति, यथा वैकृत्य इष्ट्यो दर्शपूर्णमासाभ्यां तुल्यकाला अपि सत्यो न दार्शपौर्णमासिकं तन्त्रमुपजीवन्ति। तस्मात्तन्त्रभेदः ॥

सू० वैगुड्डननव्रतं विप्रतिषेधात्तदेव स्यात् ॥ १६ ॥
(पू० वि०) ॥

भा० किमेष एवोत्सर्गं, सर्व्वं तन्त्रभिन्नं?। न खलु, वैगुड्डननं व्रतस्य

---

* का० श्रौ० पुस्तके 'अमावास्यया इति अधिकः पाठः।

'स्यात्' 'तदेव', यद्यर्थं वेदेरुद्धननं कृतं तेनोद्धताया: पुनरुद्धनने नेह किञ्चित्कार्य्यमस्ति, केवलं कृतदूषणमभवेत्, अतश्चोपेतमनुत्सृष्टं पुनरुपेतुमशक्यं, उपेयमानञ्च पिष्टपेषणवदकिञ्चित्करं स्यात्। तस्मादेतद् उभयमपि तदेव प्रयुज्यते ॥

सू० तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् ॥ १७ ॥ (सि०) ॥

भा० 'तत्तन्त्रा' 'वा' निरूढेष्टिः स्यात्, अमावास्यातन्त्रा न स्वतन्त्रा। कुतः?। 'तन्त्रमध्ये विधानात्', अमावास्यातन्त्रमध्ये इयं विहिता, 'अमावास्यायां निशि निर्वपेत्' इति। 'ननु कालवचनोऽमावास्याशब्दो न कर्म्मवचन इत्युक्तं। सत्यं कालवचनः, स तु कालस्तन्त्रमध्ये, तत्र विधीयमाना तन्त्रमध्ये विहिता भवति, 'सवनीयवत्' तद्यथा, सवनीयाः पुरोडाशा न तावत् पशुकर्म्म उद्दिश्य विधीयन्ते, अथ च पशुतन्त्रमध्ये विहिता भवन्ति; यस्मिन् स्थाने विहितास्तत्स्थानं पशुतन्त्रमध्ये इति; इयमपि तन्त्रमध्ये पतिता सवनीयवदेव न स्वतन्त्रा भवितुमर्हति ॥

सू० वैगुण्यादिध्माबर्हिर्न साधयेदग्न्याधानञ्च यदि देवतार्थम् ॥ १८ ॥ (सि० वि०) ॥

भा० अथाह, किमेष एवोत्सर्गः, सर्वमामावास्यं तन्त्रं निशियष्टस्यार्थं साधयति? इति। न खलु, 'इध्माबर्हिर्न्न साधयेत्'। कुतः?। वैगुण्यात्, इध्मोऽग्निसमिन्धनार्थः, स प्रतिपदि आहितोऽमावास्यायां निशि वर्त्तमानस्य निशियष्टस्याग्निसमिन्धनं न साधयेद्बर्हिरपि वेदिस्तरणार्थं

ते यदि प्रयुज्येयातां, त्रिगुणो निर्वापः स्यात्, तस्माद्भेदेन ते कर्त्तव्ये।
'अन्वाधानञ्च* यदि देवतार्थं', यदि देवतापरिग्रहार्थमन्वाधानं, तदपि भेदेन कर्त्तव्यं। प्राकृतेन अन्वाधानेन अमावास्यादेवताः परिगृहीताः। न च, रक्षोघ्नोऽग्निः तत्परिग्रहार्थम्, अथाग्निधारणार्थं; ततः प्राकृतेनैव धारितत्वादग्नेर्न कर्त्तव्यं। देवतापरिग्रहार्थता च अस्य वाक्यशेषे श्रूयते,—'अमाग्ने वर्चो विहवेष्वस्तु इति पूर्वमग्निं परिगृह्णाति, देवता एव तत्पूर्वेद्युः परिगृहीताः श्वोभूते यजते' इति॥ (१।२।१।५अ॰)

---

विकृतिष्वारम्भणीयानुष्ठानाधिकरणम्॥

अथाप्रकृते,—

सू॰ आरम्भणीया विकृतौ न स्यात् प्रकृतिकालमध्यत्वात् कृता पुनस्तदर्थेन॥१९॥ (पू॰)॥

भा॰ वैकृतेषु कर्मसु दार्शपूर्णमासिकी आरम्भणीया कर्त्तव्या, उत, न? इति विचारे न कर्त्तव्येत्युच्यते। किंकारणं?। 'प्रकृतिकालमध्यत्वात्', प्रकृतेर्दर्शपूर्णमासयोः कालो 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति, तन्मध्ये वैकृतानि कर्माणि पतन्ति। 'कृता पुनस्तदर्थेन', तस्य यावज्जीविकस्य प्रयोगस्यार्थेन आदौ कृता आरम्भणीया, "सकृदारम्भसंयोगात् एकः पुनरारम्भो यावज्जीवप्रयोगात्" इत्युक्तं (९।१।३५सू॰) एवं चैव तेषां प्रसङ्गात्कार्य्यं साधयिष्यति। तस्मान्न तेषु भेदः स्यात्॥

सू॰ स्याद्वा कालस्याशेषभूतत्वात्॥२०॥ (सि॰)॥

---

* भाष्ये चाग्न्यन्वाधानमिति बहुशः पाठदर्शनात् सूत्रे 'चाग्न्याधानम्' इत्यत्र चाग्न्यन्वाधानमिति पाठो भवितुं युक्तः।

भा० ‘श्वादा’ विकृतिषु आरम्भणीया। कुतः?। चोदकेन प्राप्यते इति।‘ननु प्रकृतिकालमध्यपातात्प्रसज्यते इत्युक्तं’। न यावज्जीवकालः प्रकृतेः शेषभूतः, कर्तृधर्मोऽसावित्युक्तं,—“कर्तुर्वा श्रुतिसंयोगात् (२।४।२) इति,—योऽसौ कर्तृधर्मो नियमः तस्यायं कालः; प्रकृतेस्तु दर्शस्य पूर्णमासस्य कालः। तस्मान्न दर्शपूर्णमासप्रयोगस्य तन्मध्ये पतिता विकृतयः। अतो न तासु आरम्भणीया प्रसज्यते। अन्यथा कृत्वा दोष उक्तः, अन्यथा परिहारः,—दार्शपौर्णमासिको यावज्जीवकाल इति कृत्वा दोष उक्तः, नैयमिक इति परिहारः॥ पक्षान्तरैरपि परिहारा भवन्ति,—

सू० आरम्भविभागाच्च ॥ २१ ॥ (उ०)॥

भा० विभक्तः प्रकृतिविकृत्योरारम्भः, यदा प्रकृतेरारम्भस्तदा विकृतिः अनुत्पन्नैव, सा हि कामेन निमित्तेन वा चोद्यते। अतस्तस्याः प्रकृत्यारम्भे नारम्भः। आरम्भभेदाच्च तन्निमित्ताया आरम्भणीयाया भेदः स्यात्। तस्मात्स्यादिकृतिष्वारम्भणीया॥ (१२।२।६ अ०)॥

---

प्रधानानां धर्मविरोधे बहूनां धर्मानुष्ठानाधिकरणम्॥

सू० विप्रतिषिद्धधर्म्माणां समवाये भूयसां स्यात्सधर्म्मत्वम् ॥ २२ ॥

भा० पञ्चदशरात्रे अग्निष्टुदेकाहः प्रथममहः, ततो ज्योतिर्गौरायुरिति त्र्यहः। परिशिष्टानि एकादशाहानि द्वादशाहप्रकृतीनि। तत्र धर्मविप्रतिषेधे सति एकादशानामह्नामग्निष्टुतश्च विचार्य्यते,—किमैकादशाहिको धर्म्मः कर्त्तव्यः, उत, अग्निष्टुतः? इति। ननु ‘सिद्धमेतत्

चोदकनामधेययोर्बलाबलपरीक्षायामैकाहिको धर्म्मः कर्त्तव्यः' इत्युक्तं,— "न वा कालभिधानादधिकानामप्रवृत्तत्वम्" इति (७।४।१५)। तथा-सिद्धम् न्यायान्तरेण आक्षिप्यते,—अथवा नाम्नामेव निर्घृणिता। 'विप्रतिषिद्धधर्म्माणाम्' एतेषामग्निष्टुतश्चैकादशानां चाह्नां 'समवाये' एतस्मिन् पञ्चदशरात्रे 'भूयसाम्' एकादशानामह्नां 'सधर्म्मत्वं स्यात्', तदीयो धर्म्मः कर्त्तव्यः। को हेतुः?। भूयस्त्वमेव, बहुषु गुणसम्पन्नेषु महत्फलं भवति एकस्मिन्नल्पं फलं, एषो हि लोके दृष्टान्तः, लोके एकादशसु प्रदीपेषु तैलवर्त्तिसम्पन्नेषु एकस्मिन् गृहे महान् प्रकाशो भवति विपर्य्ययेऽल्पः। किं पुनरिहोदाहरणं। सुब्रह्मण्याग्निष्टुति आग्नेयी, इतरेषु अहःसु ऐन्द्री कर्त्तव्या* ॥ (१२।२।७अ०) ॥

---

तुल्यसंख्याकानां धर्म्मविरोधे प्रथमस्यैव धर्म्मानुष्ठानाधिकरणम् ॥

सू० मुख्यं वा पूर्वचोदनात् लोकवत् ॥ २३ ॥

भा० यत्र तुल्यसङ्ख्याकानां प्रधानानां धर्म्मविप्रतिषेधस्तत्र मुख्य-धर्म्मः कर्त्तव्यः, यथा, 'आग्नावैष्णवमेकादशकपालं निर्व्वपेद् पराके सरस्वतीमथाज्यस्य यजते' इति तत्र मुख्यस्याग्नावैष्णवस्य कल्पो भवति। कुतः?। 'पूर्वचोदनात्', पूर्वचोदितत्वात्, पाठक्रमेण

---

* "पञ्चदशरात्रस्य अग्निष्टुत् प्रथममहः तस्यैकाहरूपोऽग्निष्टुत् प्रकृतिः, तत्र उपसत्-कालीनसुब्रह्मण्याह्वानार्थमियमाग्नेयी विहिता, तदेतद्विकृतिरूपे प्रथमेऽहनि चोदकतः प्राप्नोति, इतरेषु चतुर्दशसु अहःसु स्वस्वप्रकृत्यनुसारेण ऐन्द्री प्राप्ता। उपसत्कालीना-नाञ्च सुब्रह्मण्याया धर्मैक्येषु तन्त्रं निर्णीतं तथा सति चोपासत्कालीनायां सुब्रह्मण्या-यामाग्नेय्यैन्द्र्योः कल्पप्राप्तौ परस्परविरोधितया प्रबलस्य प्रथमस्य अह्नः मानभूतेन आग्नेयीति प्राप्ते ब्रूमः, बहूनामह्नामनुग्रहाय ऐन्द्री कार्य्या, 'त्यजेदेकं कुलस्यार्थे' इति न्यायेन बहुत्वमतिप्रावल्यकारणम्"। इति न्यायमाला।

पूर्वमाग्नावैष्णवः कर्त्तव्यः। तत्र धर्म्मा अग्नीषोमीयाः प्राप्नुवन्ति, उत्तरस्य तु पूर्व्वेण विरुद्धाः। तदुत्तरकाला हि तस्य प्राप्तिः, तद्वर्ज्ज-नाच्च पूर्व्वस्य कृते कल्पे, उत्तरस्य तेनैव कृतार्थत्वात् सकल्पो निवर्त्तते। एकाधिकरणन्तु एके मन्यन्ते, तेषां पञ्चदशरात्रेऽपि मुख्य-धर्म्मानुग्रह एव ॥

सू० तथा चान्यार्थदर्शनं ॥ २४ ॥ (यु०) ॥

भा० अन्यार्थोऽपि पूर्व्वप्राप्तस्य बलीयस्त्वं दर्शयति,—'अध्वरस्य पूर्व्व-मथाग्नेः उपांशु हि एतत्कर्म्म यदग्निकर्म्म' इति। इहापि 'यथा वै पूर्व्वावसायिनो जघन्यावसायिनां न मीयन्ते नेहावस्यन्ति नेहात्रस्यन्तीति एवमेवैतद्' इति ॥ (१२।२।८अ०) ॥

---

अङ्गगुणविरोधे प्रधानगुणस्यैव प्राबल्याधिकरणम्।

सू० अङ्गगुणविरोधे च तादर्थ्यात् ॥२५ ॥

भा० ज्योतिष्टोमे दीक्षणीया 'आग्नावैष्णवमेकादशकपालं निर्वपे-द्दीक्षिष्यमाणः' इति, तत्रैव सौम्यमहः। तयोः पर्व्वकालः 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पूर्णमास्यां वा यजेत' इति वचनात्। यदा 'एका दीक्षा तिस्र उपसदः' इत्येवमादायः कल्पाः तदा विरोधः। तत्र चिन्ता, किं, दीक्षा पर्व्वणि कर्त्तव्या, अपर्व्वणि सुत्या उत विपर्य्ययः? इति। मुख्यत्वाद्दीक्षा कार्य्येति प्राप्ते उच्यते,—अङ्ग-गुणेन प्रधानगुणस्य विरोधे एतस्मिन् अङ्गगुणो बाध्येत। कुतः?। 'तादर्थ्यात्', अङ्गं गुणवत् क्रियते, प्रधानं सगुणं स्यादिति। तत् चेदङ्गे

गुणवति क्रियमाणे निर्गुणमापद्यते, कोऽर्थोऽङ्गेन गुणवता कृतेन।
तस्मात्पर्वणि सुत्या कर्त्तव्या अपर्व्वणि दीक्षा॥ (११।१।८ अ०)॥

---

परिधौ परिधियूपोभयधर्मानुष्ठानाधिकरणम्॥

सू० परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात्॥२६॥

भा० पशुमन्तु चातुर्मास्येषु श्रूयते,—'परिधौ पशुं नियुञ्जन्ति' इति। स 'परिधिरुभयधर्मा स्यात्' परिधिधर्मा यूपधर्मा च। कस्मात्?। 'द्व्यर्थत्वात्',—द्वावर्थौ करोति,—अग्नेश्च परिधानं, पशोश्चाबन्धनम्, अर्थप्रयुक्ताश्च धर्माः तस्मादुभये कर्त्तव्ये, अविरुद्धाश्च ये, यथा यवमतीभिरद्भिः प्रोक्षणमञ्जनं परिव्याणमिति यूपधर्माः, इध्मवत्सर्वसंमार्जनं, 'गन्धर्वस्त्वा विश्वावसुः परिदधातु' इत्येवमादिभिरञ्जनमभ्याधानमिति परिधिधर्माः॥ (११।१।१० अ०)॥

---

परिधौ विरोधियूपधर्मानुष्ठानाधिकरणम्॥

सू० यौप्यस्तु विरोधे स्यात् मुख्यानन्तर्य्यात्॥२७॥(पू०)॥

भा० विरोधे तु सति यूपधर्माः कर्त्तव्याः न परिधिधर्माः। कस्मात्?। 'मुख्यानन्तर्य्यात्',—मुख्यः पशुः, स हि बलिं निर्वर्त्तयति। तस्यानन्तरो यूपः सन्निपातित्वात्, तेन सोऽन्तरङ्गः, परिधिस्त्वग्निना सम्बध्यते, अग्निर्हविषा, स बहिरङ्गः। अन्तरङ्गबहिरङ्गयोश्चान्तरङ्गं बलीयः। तत्कस्य हेतोः?। यत्र हि पूर्वः प्रत्ययो भवेत्, ये धर्मा अपूर्व्वार्थास्ते प्रायात् अपूर्वेणासम्बध्यमानास्तदङ्गेषु विज्ञायन्ते। अतश्च बुद्धिरपूर्व्वासम्बन्धेन निवर्त्तमाना अङ्गेषु प्रवर्त्तमाना अन्तरङ्गे तावदापतति,

ततो व्यवहिते बहिरङ्गे, यच्च च पूर्व्वमापतति तत्रैव तिष्ठति, तद्-तिक्रमे कारणाभावात्। तस्माद्विरोधे यूपधर्म्मः कर्त्तव्यः। कः पुनरसौ?। तक्षणमुच्छ्रयणं निखननमिति ॥

सू॰ इतरो वा तस्य तत्र विधानात् ॥ २८ ॥ (सि॰) ॥

भा॰ 'इतरो वा' यूपधर्म्मविरोधे कर्त्तव्यः। कुतः?। 'तस्य तत्र विधानात्', 'तस्य' यूपकार्य्यस्य पशुनियोजनस्य 'तत्र' परिधौ 'विधानात्'। 'परिधौ पशुं नियुञ्जन्ति' इति अवस्थाप्य परिधित्वं, नियोजनमुच्यते, तत्परिधित्वानुपमर्द्देन विज्ञायते। तथाभूतोपदेशात्, यथा. 'खादिरो यूपो भवति' इति यद्युच्छ्रीयेत तच्चेत च परिधित्वमेव व्याहन्येत, सत्यत्वोऽसावुपशयस्य। तत्र 'परिधौ पशुं नियुञ्जन्ति' इत्येतदेवा-यथार्थं स्यात्॥

सू॰ उभयोश्चाङ्गसंयोगः ॥ २९ ॥

भा॰ 'उभयोश्च' पक्षयोरङ्गेनैव धर्म्मस्य संयोगः। न कचित् प्रधानेन। यच्च, आसक्तिरिति, न आसत्त्या उपकारविशेषः, तस्मादकारणं सा; अतः परिधिधर्म्मः कर्त्तव्यः ॥ (११।२।११ अ॰ ॥

---

सवनीयपशुपुरोडाशयोः पशोरेव तन्त्रित्वेन पाशुकतन्त्रस्य-बाह्यानाधिकरणम्।

सू॰ पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोरश्रुति-भूतत्वात् ॥ ३० ॥ (पू॰) ॥

भा॰ सवनीये पशौ सवनीयेषु च पुरोडाशेषु प्रसङ्गे 'विकल्पः स्यात्',-पाशुकं वा तन्त्रं सवनीयेषु प्रसज्यते, सवनीयतन्त्रं वा पशौ। कुतः?। विशेषाभावात्, नात्र पुरोडाशाः पशुतन्त्रे विधीयन्ते न पशुः पुरोडाश-

तन्त्रे, उभये स्वतन्त्राः, 'आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति' इति, 'अनुसवनं सवनीया पुरोडाशा निरुप्यन्ते' इति; तत्र यदि कस्यचित्तन्त्रं प्रत्यक्षशिष्टं स्यात् कस्यचिदानुमानिकं, तदा यस्य प्रत्यक्षशिष्टं स तन्त्री स्यादितरः प्रसङ्गभाक्, उभयोश्च श्रुतिभूतत्वं। पशुरपि वैकृतः, पुरोडाशा अपि, तेनायमपि विशेषो नास्ति, अत उभयोस्तुल्यप्राप्तेरन्यतरेण कृतार्थत्वादिकल्पः॥

ननु 'वैकृत एवायं पशुः, 'वैकृतश्चेत्' इति संशयवचनं न युक्तं।' अत्रोच्यते, असंशयितेऽपि संशयवादो भवति, यथा,

'ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः।
शास्त्राणि चेत् प्रमाणं स्युर्यातास्ते परमाङ्गतिम्॥'

सू॰ पाशुकं वा तस्य वैशेषिकाम्नानात्तदनर्थकं विकल्पे स्यात्॥ ३१॥ (सि॰)॥

भा॰ 'पाशुकं' वा तन्त्रं पुरोडाशेषु प्रसज्येत, न विकल्पः स्यात्। कुतः?। 'तस्य वैशेषिकाम्नानात्',—पशोर्वैशेषिको धर्मस्तत्राम्नातः 'सूक्तवाक्प्रैषमग्निमाप्ययति' इति, तदाम्नानमनर्थकं विकल्पे सति स्यात्, अन्तरेणापि ह्याम्नानं पक्षे भवत्येव सः, अत आम्नानसामर्थ्यान्नित्योऽसौ, न च पौरोडाशिके तन्त्रे प्रसज्यते, स हि मैत्रावरुणेन प्रैषो वक्तव्यः, न च, तत्र मैत्रावरुणोऽस्ति, 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः' इतिनियमात्। पशौ तु सोऽस्ति, तेन पशुतन्त्रे प्रसज्यमाने न

* सवनीयतन्त्रमध्ये कतरत्तन्त्रं क तन्त्री। कतरत् प्रसङ्गि। प्रातःकालीनसवनीयपुरोडाशानां सवनीयपशोश्च मध्ये कस्य तन्त्रित्वं कस्य वा प्रसङ्गित्वमिति निर्णयार्थं विचारः।

किञ्चिद्वैगुण्यं, पुरोडाशतन्त्रे सति चलिकसंख्या वा वर्ज्जयितव्या, अन्यैषामपह्नवेन वा अयं प्रैषो वक्तव्यः। उभयथापि प्रकृतिविरोधः। तस्मान्नियमेन पाशुकं तन्त्रं प्रवर्त्त्यते॥

सू॰ पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात्॥३२॥(यु॰)॥

भा॰ अपि च, पशोस्तन्त्रस्य विप्रकर्षः, 'वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यन्दिने सवने, अङ्गैस्तृतीयसवने' इति। तस्य विप्रकृष्टत्वात्तन्त्रमध्ये पुरोडाशानां विधानं युज्यते। प्रातःसवनीयानां तु पुरोडाशानां तन्त्रं प्रातःसवने एवापवृज्यते, 'अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते' इतिवचनात्। तन्मध्ये पशोः पातो न घटते, पुरोडाशाङ्गप्रचारयोर्व्यतिरेकात्। इह च प्रातःसवनीयैरेव सह पशोः सन्देहः, इतरे पुनः पुरोडाशा असंशयं पशोः प्रातःसवनीयानां वा तन्त्रमध्ये पतिताः।

ननु 'आग्निमारुतादूर्द्ध्वमनुयाजैश्चरन्ति' इति अनुयाजानाम् उत्कर्षात् पौरोडाशिकमपि तन्त्रं प्रततम्'। नेत्याह, अयमपि पाशुकाना-मनुयाजानामुत्कर्षः। कथं ज्ञायते?। सोमान्ते स्वरोः प्रतिपत्तिर्दृश्यते, 'संस्थिते यज्ञे प्रस्तरं प्रास्यन्ति स्वरुमयज्ञवेशसाय' इति। सा पश्व-नुयाजैरुत्कृष्टस्य युज्यते, पौरोडाशिकैस्तस्योत्कर्षो न प्राप्नोति, प्रासङ्गिकश्च नोत्कर्षेदसंयोगादिति। तेषाञ्च हविःप्रचारादूर्द्ध्वमवसरः। तद्देशश्च उत्कर्षवादः, प्रातःसवनीयानान्तु ये अनुयाजा न ते तद्देशाः, अतो न तेषामुत्कर्षः। तस्मात् पाशुकं तन्त्रं। 'अथ वचनमिदं कस्माच्च भवति?'। परिहृतमेतत् द्विकरं वाक्यं स्यात्, प्रतिपत्तिविशेषं कारयेत्

विदधत्। तस्मात् पाशुकं तन्त्रं पुरोडाशेषु प्रयुज्यते, न विकल्पते इति॥
(१२।२।१२अ०)॥

समानतन्त्रयोः प्रकृतिविकृत्योः विकृतितन्त्रानुष्ठानाधिकरणम्।

सू० अपूर्वञ्च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात्॥२३॥

भा० यदा प्रकृतिर्विकृत्या समानतन्त्रा, तदा किं प्राकृतं तन्त्रं कर्त्तव्यं, उत, वैकृतं?। 'ननु नैव प्रकृतिर्विकृत्या समानतन्त्राऽस्ति'। 'समानतन्त्रा चेत्'-इत्येवं कृत्वा-चिन्त्येयं। किं प्राप्तं?—यदि पूर्वं प्रकृतिः प्रयुज्यते, ततः प्राकृतं, अथ विकृतिः, ततो वैकृतं। किं पुनरत्र युक्तं?। प्रकृतिरिति, नित्या प्रकृतिः आगन्तुर्विकृतिरिति, सा कामे वा निमित्ते वा उत्पन्ने आगच्छति। पूर्वावस्थायिनश्च बलीयांसः, अधन्यावस्थायिभ्यः। तस्मात् प्रकृतिः पूर्वं प्रयुज्यते, यच्च पूर्वं प्रयुज्यते, तस्य तन्त्रं कर्त्तव्यं, प्राप्तकालत्वात्। तस्मात् प्राकृतं तन्त्रं कर्त्तव्यमिति।

एवं प्राप्ते ब्रूमः,—'अपूर्वञ्च' वैकृतं तन्त्रं 'प्रकृतौ' प्रयुज्यते, 'समानतन्त्रा चेत्' 'अनित्यत्वात्' विकृतेः, अनित्या विकृतिः कामे वा, उत्पन्ने निमित्ते वा सा आगच्छति, नैमित्तिकी चिकीर्षा नित्यां चिकीर्षां बाधते, सत्यां हि नित्यायां सा भवति, अतस्तामबाधमाना नैवोत्पद्यते। यदि न बाधेत, 'अनर्थकं' 'स्यात्' वैकृतं विधानं। यस्य चिकीर्षा प्रत्युपस्थिता, तस्य पूर्वं प्रयोगः। तस्माद्विकृतेः पूर्वं क्रिया, यस्य च पूर्वं क्रिया, तत्तन्त्रं पूर्वं यथा कर्त्तव्यं, तत् पूर्वपक्षे उक्तं। तस्मात्, वैकृतं तन्त्रं प्रकृतौ प्रयुज्यते इति॥ (१२।२।१३अ०)॥

आग्रयणे प्रसूनबर्हिषामेव अनियमाधिकरणम् ।

आग्रयणे द्यावापृथिवीय एककपालः स वैश्वदेविकैककपालप्रकृतिः, तस्य धर्मः प्रसूनं* बर्हिः, इतरेषां प्रसूनमप्रसूनं वा । तत्र किमनियमः, उत प्रसूनमेव?—इति विचारः । तत्र ऐन्द्राग्नस्य मुख्यत्वादनियमे प्राप्ते उच्यते,—

सू॰ अधिकश्च गुणः साधारणेऽविरोधात्कांस्यभोजिवदमुख्येऽपि ॥ ३४ ॥ (सि॰) ॥

भा॰ 'साधारणे' एतस्मिन् दार्शपौर्णमासिके तन्त्रे ऐन्द्राग्नादीनां योऽयम् 'अधिको' 'गुणः' द्यावापृथिवीयस्य वैशेषिकः, सः 'अमुख्येऽपि' सति द्यावापृथिवीये नियम्येत । 'अविरोधात्' 'कांस्यभोजिवत्', तद्यथा, शिष्यस्य कांस्यपात्र-भोजित्वनियम उपाध्यायस्यानियमः । यदि तयोरेकस्मिन् पात्रे भोजनमापद्यते, अमुख्यस्यापि शिष्यस्य धर्मो नियम्येत,—मा भूद्धर्मलोप इति, एवमिहापि । तस्मान्न अनियमः ॥ (१२।२।१४अ॰) ॥

---

द्यावापृथिवीयादीनां सर्व्वेषामेव तन्त्रनियमाधिकरणम् ।

सू॰ तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथा पाशुकं सूक्तवाकेन ॥ ३५ ॥ (पू॰) ॥

भा॰ तस्य प्रसूनस्य प्रवृत्त्या वैश्वदेविकं तन्त्रं नियम्यते, यथा पाशुकं तन्त्रं सूक्तवाकस्य प्रैषेण वैशेषिकेण नियतम् ॥

---

* "प्रसूनं पुष्पितं न स्रेपान् मूलात् पुनरुत्पन्नं वा ।" इति माधवः ।

सू॰ नवाऽविरोधात्॥ ३६॥ (सि॰)॥

भा॰ 'न वा' नियम्यते। कुतः?। 'अविरोधात्', अविरुद्धोऽयं धर्म्मः इतरेषामपि हविषां, तेन न वैशेषिकः, अवैशेषिकत्वाच्च ततोऽन्यतरत् नियन्तुं शक्नोति, वैशेषिकस्तु सूक्तवाकः। तस्मात् सोऽन्यतरत् नियन्तुमुत्सहते॥ किञ्च,—

सू॰ अशास्त्रलक्षणत्वाच्च॥ ३७॥ (यु॰)॥

भा॰ न च, शास्त्रविहिताः प्रश्नाः, किन्तर्हि?—चोदकप्राप्ताः। किमतः?। यदि शास्त्रविहिता भवेयुः, ततस्तेन प्रकृतिविकृतेन वैश्वदेविकं तन्त्रं नियम्येत, अथवा, द्यावापृथिवीयधर्म्मत्वात् प्राप्तानामेव प्रश्नानां पुनर्वचनमानर्थक्यपरिहाराय यथा यथा वैश्वदेविकस्य तन्त्रस्य विधानं विज्ञायेत,—प्रश्नादितन्त्रं भवति-इति, न च तत् शास्त्रलक्षणं, तस्मान्नास्ति तन्त्रस्य नियम इति॥ १२।२।१५ पू॰अ॰)॥

इति भट्टश्रीशबरस्वामिनः* कृतौ मीमांसाभाष्ये द्वादशाध्यायस्य द्वितीयः पादः॥ ०॥

* आचार्य्यशबरस्वामिनः इति क॰ ख॰ पु॰ पाठः।

# मीमांसा-दर्शने

## १२ अध्याय ३ पादः ।

अष्टरात्रे वत्सत्वगहतवाससोः समुच्चयाधिकरणम् ।

सू० विश्वजिति वत्सत्वङ्नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् ॥ १ ॥ (पू०) ॥

भा० अस्ति अष्टरात्रोऽहीनः, तत्र विश्वजिदभिजितौ अग्निष्टोमौ 'अभित उभयतो ज्योतिर्मध्ये षड़हः पशुकामो ह्येतेन यजेत'—इति। विश्वजिति एकाहे वत्सत्वग् अवभृथादागतस्य परिधानार्थमाम्नातः,— 'अवभृथादुदेत्य वत्सत्वचं परिधत्ते' इति, ज्योतिष्टोमे अहतं वासः। अष्टरात्रे उभयं प्राप्यते।

तयोः परिधानयोरेकार्थत्वाद्विकल्पे प्राप्ते उच्यते, 'वत्सत्वक्' स्यान्न विकल्पः, नामधेयेन वत्सत्वक् प्राप्यते, चोदकेन अहतं, चोदकाच्च नामधेयशब्दो बलवत्तर इत्युक्तं,—"न वा* क्रत्वभिधानादधिकानामशब्दत्वम्" (७।४।१५) इति। यदि नामधेयतः प्राप्तिर्न स्यात्, ततो भूयस्त्वेन ज्योतिष्टोमप्रकृतीनामह्नामहतं स्यात्, अस्ति तु असौ। तस्मान्न अहतं भवति। 'ननु 'अभितो-ज्योतिः'—इति ज्यौतिष्टोमिकधर्म्मग्राहीण्येतानि नामधेयानि सन्ति'। तथापि मुख्यत्वाद्विश्वजित एव बलवत्त्वम् ॥

---

* 'अपि वा' इति आदर्शपुस्तके पाठः किन्तु पूर्व्वेण 'न वा' इति पाठः ।

सू॰ अविरोधो वा उपरिवासो हि वत्सत्वक्॥ २॥
॥ (सि॰)॥

भा॰ न वा नियमः,—वत्सत्वगेवेति, किन्तर्हि?—समुच्चयः, समुच्चये सर्वाङ्गोपसंहारी प्रयोगवचनोऽनुग्रहीष्यते। 'ननु नामधेयस्य वत्सत्वादहतं बाध्यते'। विरोधे सति बाध्येत, 'अविरोधः' च अनयोः। कथम्?। उपरि-वाससः कार्य्यं वत्सत्वग् भविष्यति, धारोहयं पुरुषस्याचारतः प्राप्यते। 'ननु उपरि-वाससि, परिधत्ते' इति न भवति। नैतदेवम्, उपरि-वाससपि भवति, यथा, 'कम्बलं परिधत्ते', रौरवं परिधत्ते'—इति। तस्मात्समुच्चयः॥ (११।२।१अ॰)॥

---

अनुनिर्वाप्यापुरोडाशानां पुरोडाशस्यैव तन्त्रित्वाधिकरणम्॥

सू॰ अनुनिर्वाप्येषु भुयस्त्वेन तन्त्रनियमः स्यात्॥
॥ ३॥ (पू॰)॥

भा॰ अग्नौ श्रूयते,—'अग्नीषोमीयस्य पशुपुरोडाशमनु देवसू-हवींषि निर्वपति' इति। अनुबन्ध्यायामपि देविकाहवींषि। तत्र भूयस्त्वेन तन्त्रं नियम्येत। अनुनिर्वाप्याणां बहुत्वात् तत्तन्त्रं पशुपुरोडाशे प्रसज्यते। किञ्च, सस्विष्टकृच्छब्दकं स्विष्टकृतो वचनं दृश्यते, पशु-पुरोडाशस्य देवसू-देविका-हविषाञ्च 'अग्नये स्विष्टकृते समवद्यति' इति। तदनुनिर्वाप्याणां तन्त्रे उपपद्यते। यदा तु पशुपुरोडाशतन्त्रं तदा अस्विष्टकृच्छब्दकं स्यात्। तस्मादनियमं स्यात्॥

सू० आगन्तुकत्वाद्वा स्वधर्म्मा स्याच्छ्रुतिविशेषादितरस्य च मुख्यत्वात् ॥ ४ ॥ (सि०) ॥

भा० आगन्तवोऽनुनिर्वाप्याः, 'श्रुतिविशेषात्', एवं हि श्रूयते, 'पशुपुरोडाशमनु निर्वपति'—इति । एवं श्रुते पूर्वं पशुपुरोडाशः, पश्चादनुनिर्वाप्या भवन्तीति स मुख्यः, इतरे अधन्याः । अतस्तेषाम् 'आगन्तुकत्वात्' 'इतरस्य च मुख्यत्वात्' पशुपुरोडाशः 'स्वधर्म्मा स्यात्'॥

सू० स्वस्थानत्वाच्च ॥ ५ ॥ (यु०) ॥

भा० अपि च, पशुपुरोडाशस्य स्थानं वपाप्रचारात्परतः, अङ्गैरपि तस्य तत्स्थानैरेव भवितव्यं, प्रधानदेशत्वात्तेषां; यद्यनुनिर्वाप्यार्थं तन्त्रं स्यात्, ततस्तस्मिन् स्थाने तदङ्गानि क्रियेरन्, पशुपुरोडाशाङ्गानि अस्वस्थानानि भवेयुस्तेषां स्वस्थानत्वाय पुरोडाशस्य तन्त्रं कर्त्तव्यम् ॥

सू० स्विष्टकृद्वचनान्नेति चेत् ॥ ६ ॥ (आ०) ॥

भा० इति यदुक्तं तत्परिहर्त्तव्यं । अत्रोच्यते,—

सू० विकारः पवमानवत् ॥७॥ (कस्यचित् आ० नि०)॥

भा० एवं च पशुपुरोडाशस्य तन्त्रेण अनिरुक्ते स्विष्टकृति प्राप्ते 'विकारो' वचनात् भविष्यति, 'अग्नये स्विष्टकृते समवद्यति', स्विष्टकृच्छब्दकं वचनं कर्त्तव्यम्—इति । यथा, 'अग्नये पवमानाय निर्वपति' इतिवचनात् पवमानशब्दको निर्वापः क्रियते, एवमिहापि ॥

सू० अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च ॥८॥ (आ० नि०) ॥

भा० 'अविकारः' अस्विष्टकृच्छब्दकं वचनं कर्त्तव्यं, 'प्रकृतिवत्', अतिदेशात्। यत्तु, वचनादिति, नात्र विकारो विधीयते, किन्तर्हि?— समवदानं देविकाहविषां,—'अग्नये स्विष्टकृते समवद्यति'—इति। तत्र विकारेऽस्मिन् विधीयमाने वाक्यं भिद्यते। 'कथन्तर्हि, स्विष्टकृ-द्वचनं?'। 'चोदनां प्रति भावाच्च',—दर्शपूर्णमासयोर्या स्विष्टकृच्चोदना, या स्विष्टकृच्छब्दिका, तत्प्रति एतद्वचनं, तदुपलक्षणाय; तस्मादग्नये योऽसौ शेषभागिति यावदुक्तं स्यात्, तावद् अग्नये स्विष्टकृते इति। यथा 'शरमयं बर्हिर्भवति' इति, 'नवनीतमाज्यम्'—इति प्राकृतं कार्य्यं लक्ष्यते, प्रकृतिलिङ्गेन द्रव्यशब्देन; एवमिहापि स्विष्टकृच्छब्देन प्राकृती लक्षणया देवता अनूद्यते ॥(१२।३।२अ०) ॥

---

इतरेतरभेदात् भिन्नोपकारकाणां गुणानां समुच्चयाधिकरणम् ॥

सू० एककर्म्मणि शिष्टत्वाद्गुणानां सर्वकर्म्म स्यात् ॥९॥

भा० ये एकस्मिन् कर्म्मणि गुणा बहवः शिष्यन्ते, तेषां सर्वेषां क्रिया स्यात्,—समुच्चयः; एवं सर्वेषां शासनमर्थवद् भविष्यति, सर्वाङ्गो-पसंहारी च प्रयोगवचनोऽनुग्रहीष्यते, यथा, आघारे 'ऋजुमाघारयति सन्ततमाघारयति प्राञ्चमाघारयति' इति च ॥ (१२।२।३अ०) ॥

---

प्रयोजनैक्ये गुणानां विकल्पाधिकरणम् ॥

सू० एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात् प्रधानस्य ॥ १० ॥ (सि०) ॥

भा० ये तु 'एकार्थाः',—एककार्य्याः, ते 'विकल्पेरन्', यथा,

व्रीहियवौ, यथा, खादिरादीनि यूपद्रव्याणि, इष्टद्रव्यान्तरे च न विकल्पेरन्। कस्मात्?। 'समुच्चये स्यादावृत्तिः स्यात् प्रधानस्य'। एकेन कार्य्ये कृते यदि द्वितीय उपादीयते, आवृत्तिः प्रधानस्य भवेत् सा चायुक्ता। किंकारणं?। प्रधानं हि फलाय वा क्रियते, फलवदुपकाराय वा, नान्याय, सकृत्कृतेन च कृतं कार्य्यं, तस्य निरर्थिका आवृत्तिः॥

सू॰ अभ्यस्येतार्थवत्त्वादिति चेत्॥११॥ (आ॰)॥

भा॰ 'इति चेत्' पश्यसि, अनर्थकोऽभ्यास इति; नानर्थकः, गुणान्तरशासनस्यार्थवत्त्वाच 'अभ्यस्येत'॥

सू॰ नाश्रुतित्वात्॥१२॥ (आ॰ नि॰)॥

भा॰ नैतद्युक्तं। कुतः?। 'अश्रुतित्वात्',—अश्रुतोऽभ्यासः, तस्य प्रमाणं नास्ति,-केन करिष्यति। गुणान्तरशासनस्यार्थवत्त्वं वक्ष्यति, "कालान्तरे अर्थवत्त्वं स्यात्" (१५सू॰) इति॥

सू॰ सति चाभ्यासशास्त्रत्वात्॥१३॥ (यु॰१)॥

भा॰ अभ्यासशास्त्रं क्वचिद् भवति,—'संसवे उभे कुर्य्याद्गोसवे उभे कुर्य्यात्' अपचितावप्येकाहे श्रूयते, 'उभे इष्टद्रव्यान्तरे कुर्य्यात्' इति। तत् समुच्चये सति न स्यात्। तस्मादपि विकल्पः॥

सू॰ विकल्पवच्च दर्शयति॥१४॥ (यु॰२)॥

भा॰ विकल्प इव दर्शनं भवति, 'बैल्वा वा खादिरा वा पालाशा वा

अन्येषां यज्ञक्रतूनां यूपा भवन्ति, अर्थतश्च खादिर एव कार्य्यः' इति वाजपेये खादिरं नियच्छन्, अन्यत्र विकल्पमनुवदन्ति, तस्मादपि विकल्पः ॥

सू॰ कालान्तरेऽर्थवत्त्वं स्यात् ॥ १५ ॥ (आ॰नि॰) ॥

भा॰ यच, गुणान्तरप्राप्तस्यानर्थक्यमिति; नानर्थक्यं, 'कालान्तरे' प्रयोगान्तरे 'अर्थवत्त्वं' तस्यापि भविष्यति, तस्मिन्नर्थवति नाभ्यासस्य प्रमाणं। 'ननु विकल्पस्यापि नास्ति प्रमाणं'। न, विकल्पे न किञ्चिदश्रुतं क्रियते, 'व्रीहिभिर्यजेत' इति श्रुतं, तैरिज्यते, 'यवैर्यजेत'—इत्यपि तैरपि इज्यत एव। एकस्मिन् प्रयोगे कार्य्याभावान्नोभाभ्यामिज्यते। 'अथ कस्मान्न मिश्रीयते?'। नैतद् युक्तं, एकैकस्य निरपेक्षस्य साधकत्वं श्रुतं, तद् मिश्रीभावे बाध्येत। तस्माद्विकल्पः॥ (१२।३।४अ॰) ॥

---

वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पाधिकरणम् ॥

सू॰ प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात् सर्वस्य निर्घातः ॥ १६ ॥

भा॰ प्रायश्चित्तानि द्विप्रकाराणि,-कानिचिद्वैगुण्यस्य प्रमादादापतितस्य समाधानार्थानि, कानिचित् निमित्ते कर्माङ्गानि। तत्र समाधानार्थानि यथा, 'यदि ऋक्तो यज्ञ आर्त्तिमियात् भूः स्वाहेति गार्हपत्ये जुहुयात्, अथ यदि यजुष्टो दक्षिणाग्नौ भुवः स्वाहेति, यदि सामतः स्वः स्वाहेत्याहवनीये, यद्यविज्ञाते भूर्भुवः स्वः स्वाहेत्याहवनीये एव'-इति।

आर्त्तिमियादिनाशमियादित्यर्थः। 'कः पुनरयमस्य विनाशः ?'। विहृतस्य क्रिया, प्रतिषिद्धसेवनञ्च। 'कथं पुनर्ज्ञायते विनष्टस्य समाधानार्थं तत् प्रायश्चित्तम्?'—इति। वाक्यसंयोगात्,—यस्मार्त्तिमियाद् इदं कुर्य्यात्; यदि तस्मिन् कृतेऽपि तत् विनष्टमेव, कोऽर्थस्तेन कृतेन ?।

यस्तु अत्र ब्रूते,—आर्त्तौ निमित्ते कर्म्माङ्गं प्रायश्चित्तमिति, स वक्तव्यः,—अङ्गं नाम तत्, यत् प्रधानं फलवत् करोति; प्रधानञ्च विनाशादफलत्वमापन्नं, यदि तत् अनेन फलवत् क्रियते, तत एतत् अङ्गं, तच्चेदफलं प्रसक्तम् एतेन फलवत् क्रियते, हन्त तर्हि ज्ञातं विनष्टस्य समाधानार्थम्, अथ न क्रियते, न तर्हि कर्म्माङ्गं, तत्र यदुक्तं,-निमित्ते कर्म्माङ्गमिति तदेव नास्ति। अपि च तत्र तत्र नष्टसमाधानमेव वाक्यशेषे श्रूयते,-'अग्निर्वै देवानां पथिकृत् तमेव स्वेन भागधेयेनोपासीरन् स एवैनं पन्थानमपि नयति य एनं व्रतमालम्भयति'-इति। तस्मादेते दोषनिर्घातार्थाः। तेषु विकल्पः स्यात्। कुतः ?। 'ऐकार्थ्यात्'। कथमैकार्थ्यम्?। एतेषां हि 'निष्पन्नेन' दोषेण केवलस्य तस्य तस्य 'अभिसंयोगः',—'यदि स्कन्नो यज्ञ आर्त्तिमियाद् भूः स्वाहेति जुहुयात्' इति, 'तस्मात्सर्वस्य' दोषस्यैकैकेन 'निर्घातः', एकेन चेन्निर्हतो दोषः, द्वितीयादीनि प्रयोगान्तरार्थानि भवन्ति। तस्माद्विकल्पः। एवं स्मार्त्तेष्वपि द्रष्टव्यम्॥ (१२·३।५अ०)॥

---

नैमित्तिकप्रायश्चित्तानां समुच्चयाधिकरणम्॥

सू॰ समुच्चयस्त्वदोषनिर्घातार्थेषु॥१७॥

भा॰ यानि तु न दोषनिर्घातार्थानि, तेषु 'समुच्चयः'। 'कानि

पुनराधानि?'। यानि न श्रुतसाग्निहोत्रार्थां, न प्रतिषिद्धुमेवके उच्यते,—यथा, 'इस्य श्रुतमग्निहोत्रं सूर्य्योऽभ्युदियात्तेच यवं निर्वपेत्; सौर्य्यमेककपालं यस्य श्रुतमग्निहोत्रं सूर्य्यमभ्युदियादग्निं समाधाय वाचं यत्वा दम्पती सर्वाहमुपासीयाताम्'—इति। तत्र दोषो न दृश्यते, दोषस्याभावात् निर्घातार्थता नास्ति। केवलमभ्युदये निमित्ते कर्म्म विधीयते, तन्नैमित्तिकं, कर्म्मणः प्रकरणे उत्पन्नत्वात् कर्म्माङ्गं विज्ञायते, यावन्ति च उत्पद्यन्ते, तानि सर्वाणि प्रयोगवचनेन गृह्यन्ते, तेषां समुच्चयः॥ (१२।२।६ अ॰)॥

---

कर्म्मकालेऽनध्यायेऽपि मन्त्राणां प्रयोगाधिकरणम्॥

सू॰ मन्त्राणां कर्म्मसंयोगात् स्वधर्म्मेण प्रयोगः स्याद्धर्म्मस्य तन्निमित्तत्वात्॥१८॥ (पू॰)॥

भा॰ कर्म्मणि 'प्रयुज्यमानानां, 'मन्त्राणां' स्वधर्म्मेण संप्रयोगः 'स्यात्' य एषां ग्रहणकाले धर्म्माः 'पर्वणि नाध्येयं वाते नाध्येयं स्तनयित्नौ नाध्येयम्' इत्यादयः। कस्मात्?। 'धर्म्मस्य तन्निमित्तत्वात्'-धर्म्मोऽयं मन्त्रप्रयोगनिमित्तः, अयमपि च मन्त्रप्रयोगः। तस्मादत्रापि तेन भवितव्यम्॥

सू॰ विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात् कर्म्मार्थत्वात् प्रयोगस्य॥१९॥ (सि॰)॥

भा॰ 'सर्वकालं प्रयोगः स्यात्' अनध्यायेऽपि। कुतः?। विद्यार्थो यः प्रयोगः, तं प्रति एतद्धर्म्मविधानं, स एष ग्रहणस्य धर्म्मः,

तस्माद् यज्ञं गुणवत्करोति, 'कः पुनर्यज्ञस्य गुणः?'। अविघ्नेन निर्वृत्तिः। 'कथं पुनर्ज्ञायते यज्ञार्थोऽयं धर्म इति?'। यज्ञकाले श्रूयते, न कर्मकाले। 'मा भूत्कर्मधर्मो मन्त्रधर्मो भविष्यति, मन्त्रधर्मश्च सन् यत्र मन्त्रस्तत्र प्राप्नोति'। उच्यते, न धर्मो मन्त्रेषु विधीयते, किन्तर्हि यज्ञे, यज्ञं एवमभिनिर्वर्त्तयेत्, नैवं मन्त्रो भवति, तस्माद्यज्ञधर्मः। न च, कर्मणि यज्ञार्थः प्रयोगः, किन्तर्हि कर्मार्थः, तस्मात्तत्र धर्मस्याप्राप्तिः। अपि च कर्म पर्वणि, पर्वणि च अध्ययनस्य प्रतिषेधः, यदि समन्त्रकं कर्म क्रियते, प्रत्याम्नानर्थक्यं; अथ अपर्वणि तथापि स एव दोषः। श्रुत्यनुरोधेन प्रयोगः प्राप्नोति, स्मृत्यनुरोधेनाप्रयोगः, श्रुतिश्च स्मृतितो बलीयसी; तस्मात् न याहृत्यः प्रयोगनियमः॥ (१।२।२।७अ०) ॥

---

कर्मणि प्रावचनस्वरेणैव मन्त्रोच्चारणाधिकरणम्॥

सू० भाषास्वरोपदेशादैरवत् प्रावचनप्रतिषेधः स्यात् ॥ २० ॥ (पू०) ॥

भा० भाषिकेण स्वरेण केचिन्मन्त्रा ब्राह्मणे उपदिष्टाः मन्त्रसमाम्नाये चैस्वर्य्येण, यथा, 'इमामगृभ्णन्' इत्यश्वमेधे। 'कः पुनर्भाषिकः स्वरः?'। उच्यते,—

'छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः।
उच्चनीचस्वरं प्राहुः स वै भाषिक उच्यते॥' इति।

---

* "शतपथब्राह्मणस्वरो भाषिकः" इति माधवः।

तेषु मन्त्रेषु प्रावचनस्य स्वरस्य 'प्रतिषेधः स्यात्' निवृत्तिः। कस्मात्?। स्वरान्तरोपदेशात् 'ऐरवत्' यथा, इरापदस्योपदेशात् कर्म्मकाले गिरापदस्य निवृत्तिः। 'कथं पुनर्ज्ञायते, स्वरस्यायमुपदेशो न मन्त्रस्येति?'। मन्त्रो नोपदेष्टव्यः, रूपादेव प्राप्नोति, स्वरस्त्वनुपदिष्टो न प्राप्नोति; तस्मात्तस्योपदेशः॥

सू॰ मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः॥२१॥ (सि॰)॥

भा॰ मन्त्रस्य वा अयमुपदेशो न स्वरस्येति। कथं ज्ञायते?। मन्त्रोपदेशस्वरूपोऽयं शब्दः। किमस्य तत्स्वरूपम्?। 'इत्यस्याभिधानीमादत्ते' इत्याह। मन्त्रेण च असौ आदीयते, न भाषिकेण स्वरेण, मन्त्रो हि आदानं प्रत्याययति नैवेतरः। 'कस्मात् तर्ह्युच्यते?'। प्रायापत्तेर्भाषिकश्रुतिः 'भाषास्वरो ब्राह्मणे प्रवृत्तः तन्मध्ये यदि प्रावचनेन मन्त्रः पठ्यते, भाषिकस्वरसन्तानो विच्छिद्येत, तत्परिहारार्थं भाषिकेणोपदेशः, यथा, गायना गीतवस्तुकानि यानि गीतकेषु प्रक्षिपन्ति, तान्यपि तेनैव गीतिस्वरेणैव उच्चारयन्ति, मा भूत् स्वरसन्तानस्य विच्छेद इति। तस्मान्न भाषिकस्वरोपदेश इति॥

सू॰ विकारः कारणाग्रहणे॥२२॥ (पू॰यु॰नि॰)॥

भा॰ इरापदेन तु गिरापदस्य 'विकारो' युक्तः, कारणाग्रहणात्, यथा, भाषिकस्यानुपदेशो मन्त्रोद्देशेन कारणेनोक्तः, नैवम् इरापदस्यानुपदेशे किञ्चित् कारणं गृह्यते, तस्मात्तस्योपदेशः; स कर्म्म-

काले विधानात् समाम्नायेन प्राप्तं निरापदं बाधते, तस्मात्तत्र विकारः ॥ (१।२।३।८अ०) ॥

---

भाषिकेणोपदिष्टानां भाषिकस्वरेणैवोच्चारणाधिकरणम् ॥

सू० तन्न्यायत्वाददृष्टोऽप्येवम् ॥२३॥ (पू०) ॥

भा० यो मन्त्रो मन्त्रसमाम्नाये त्रैस्वर्येण दृष्टः, तस्य तथैव प्रयोगः, यस्तु तत्र न दृष्टः ब्राह्मणेन च भाषिकेणोपदिष्टः, यथा, 'तं वै प्रोष्ठेदामस्यत्योऽपि' इति, तत्र का प्रतिपत्तिः? । उच्यते, 'तन्न्यायत्वाददृष्टोऽपि',— योऽसौ न्याय उक्तः, मन्त्रोपदेशोऽयं, तद्रूपत्वात् मन्त्रस्येति, तेनैव न्यायेनादृष्टोऽपि मन्त्रोपदेश एव, न भाषिकोपदेशः । तस्मात् तत्रापि प्रावचनेनैव स्वरेण प्रयोगः ॥

सू० तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥ २४ ॥ (सि०) ॥

भा० 'तदुत्पत्तेर्वा' ब्राह्मणोत्पन्नेर्मन्त्रस्य भाषिकेण प्रयोगः स्यात्, 'प्रवचनलक्षणत्वात्',— प्रवचनं मन्त्राणां लक्षणं, यथा प्रोच्यन्ते, तथा विज्ञायन्ते, ते च भाषिके एवोत्पन्नाः, तेषामन्यथाविधत्वे प्रमाणं नास्ति । तस्मात् यथोत्पन्नाः, तथाविधा एव प्रयोक्तव्याः ॥

"मन्त्रोपदेशो वा न भाषिकस्य" इत्यस्य अपरा व्याख्या,—"इमामगृभ्णन्" इति नैतस्योपदेशः, किन्तर्हि अनेन प्रतीकेन लक्षणेनासौ यथोत्पन्नो लक्ष्यते, प्रावचनेन च स्वरेणोत्पन्नः, तस्मात् तद्विधानां उपदेशः । यस्तु ब्राह्मणोत्पत्तिरेव मन्त्रस्तत्र लक्षणस्याभावान्न लक्षणा । अतस्तस्य यथाश्रुतिप्रयोगः ॥ (१।२।३।९अ०) ॥

पदार्थकरणमन्त्राणां पाठानन्तरमेव पदार्थानुष्ठानाधिकरणम् ॥

सू॰ मन्त्राणां करणार्थत्वात् मन्त्रान्तेन कर्म्मादि-सन्निपातः स्यात् सर्वस्य वचनार्थत्वात् ॥ २५ ॥

भा॰ ये पदार्थकरणा मन्त्राः, यथा,—'इषे त्वेति छिनत्ति', 'देवस्य त्वा सवितुः प्रसवे इत्याद्त्ते' इति। तेषां मन्त्रान्तेन कर्म्मादिसन्निपातः, यस्मिन् कर्म्मण्युपयुज्यन्ते। किंकारणं?। 'सर्वस्य वचनार्थत्वात्',—सर्वो मन्त्रः समस्तं वचनार्थं करोति। 'कः पुनर्मन्त्रस्य वचनार्थः?'। प्रयोगकाले पदार्थस्योपस्थानं, मन्त्रेणोपस्थितः पदार्थः कर्त्तव्य इति विज्ञायते, तदर्थस्य मन्त्रस्याम्नानसामर्थ्याद्वचनाच, क्वचित् 'इत्याद्त्ते' 'निर्वपति' इति, मन्त्रान्ते च तस्योपस्थानं, उपस्थितः पर्य्याप्तो यावन्न भ्रश्यति इति। तस्मात् मन्त्रान्तेन कर्म्मादिसन्निपातः करण-मन्त्रेषु॥ (१२।२।१०अ॰)॥

---

वसोर्धारायाम् पूर्व्वमन्त्रान्ते कर्म्मसन्निपाताधिकरणम् ॥

सू॰ सन्ततवचनाद्धारायामादिसंयोगः ॥ २६ ॥ (पू॰) ॥

भा॰ अग्नौ श्रूयते, 'सन्ततं वसोर्द्धारां जुहोति'—इति। अत्रापि पूर्वोक्तेन न्यायेन तथैव प्राप्ते उच्यते,—'धारायामादिसंयोगः' कर्म्मादि-र्मन्त्रादिना सन्निपात्यः। कस्मात्?। 'सन्ततवचनात्',—समित्येकीभावः, तनोतिर्विस्तारे, द्वयोर्यंत्र सह तननं भवति, तत्र संपूर्वस्तनोतिर्वर्त्तते, इह कर्म्म च मन्त्रश्च सन्निहितौ। तस्मात्तयोः सहतननमुच्यते। तच्चाद्योः सन्निपाते भवति, तस्मादादिसंयोगः॥

सू॰ कर्म्मसन्तानो वा नानाकर्म्मत्वादितरस्याशक्यत्वात् ॥ २७ ॥ (सि॰) ॥

भा॰ कर्म्मणां वा सन्तानोऽयं, 'सन्ततं जुहोति'—इति हि होमस्य केवलस्य सन्तान उच्यते, नाच मन्त्रसंकीर्त्तनमस्ति। 'ननु द्वयोः संशब्दो भवति, एकश्च होमः'। उच्यते,—नैष दोषः, 'नानाकर्म्मत्वात्',—बहूनि एतानि कर्म्माणि तेषामनुपरमेण क्रिया सन्तानो भवति। कर्म्मनानात्वं वचनात्,—'द्वादश द्वादशानि जुहोति'—इति। 'ननु द्रव्यसंख्यैषा'। नेत्याह, नाच द्रव्यसंकीर्त्तनमस्ति, होमोऽच संख्यया युज्यते,—'द्वादश द्वादशानि जुहोति'—इति एवंसंख्यान् होमान् करोतीति। किञ्च, 'इतरस्य' च मन्त्रकर्म्मणोः सन्तानस्य 'अशक्यत्वात्', —क्षणिकं कर्म्म न मन्त्रेण सह तनितुं शक्यते; तस्मादत्रापि कर्म्मणि सन्निपात एव॥ (१२।३।११अ॰) ॥

---

आघारेऽपि पूर्ववत् सन्तानो कर्म्मसन्निपाताधिकरणम् ॥

सू॰ आघारे च दीर्घधारत्वात् ॥ २८ ॥

भा॰ दर्शपूर्णमासयोराघारं प्रकृत्य श्रूयते,—'सन्ततमाघारयति'—इति। तत्रापि क्षणिकत्वात् मन्त्रेण कर्म्मणः सहतननं न घटते, एकत्वात् कर्म्मसन्तानो नास्ति; तस्मात् द्रव्याभिप्रायः सन्तानशब्दः, 'सन्ततं धारयति'*—इति। दीर्घधारया जुहोतीति, दीर्घधारत्वात् सन्ततशब्दः॥ (१२।३।१२अ॰) ॥

---

* इत्येव सर्व्वत्र पाठः।

'पूषा वाम्' इत्याद्येकार्थानां मन्त्राणां विकल्पाधिकरणम् ॥

सू० मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पः स्यात् ॥ २९ ॥

भा० ये मन्त्रा एककार्य्याः, यथा पुरोडाशविभागार्थाः 'पूषा वां विभजतु भगो वां विभजतु अर्य्यमा वां विभजतु' इत्येवमादयः, तेषां 'विकल्पः'। कुतः?। 'सन्निपातित्वात्', करणा एते मन्त्राः; करणानाञ्च मन्त्रान्तेन कर्म्मादिसन्निपातः उक्तः—"मन्त्राणां करणार्थत्वात् मन्त्रान्तेन कर्म्मादिसन्निपातः स्यात्" (२५सू०)—इति। न च, विकल्पमन्तरेण सर्वेषामन्तैः कर्म्मादिसन्निपातः कर्त्तुं शक्यः। किं वचनमेतत्?। नहि न्यायः, सर्वस्य वचनार्थत्वादिति। 'यद्येवं समुच्चयेऽपि समन्तः सर्वः'। उच्यते, तत्रापि वचनार्थः सिध्यति; एकेन तु कृते कर्म्मणि द्वितीयस्य प्रयोगोऽनर्थकः। तदेतदेकार्थत्वं भवति; तस्मादेकार्थत्वाद्विकल्पः, तच पूर्वमेवोक्तं,—"एकार्थास्तु विकल्पेरन्" (१०सू०) इति; ततस्तत्प्राप्तिसूत्रमिदं उत्तरचिन्तार्थम्॥ (१२।३।१३अ०)॥

---

'चतुर्भिरभ्रिमादत्ते' इत्यादौ मन्त्राणां समुच्चयाधिकरणम् ॥

सू० संख्याविहितेषु समुच्चयो सन्निपातित्वात् ॥ ३० ॥

भा० संख्यया ये विधीयन्ते मन्त्राः, यथा अग्नौ 'चतुर्भिरादत्ते', द्वाभ्यां खनति', पञ्चभिराहरति' इति; तेषु 'समुच्चयः' स्यात्। किंकारणं?। संख्या शब्देनोच्यते, सा अङ्गीकर्त्तव्या, न च, समुच्चयादृते सा शक्या

अङ्गीकर्त्तुम्। आह,—'समुच्चयेऽपि यः कर्म्मणा सन्निपातितः, तेन कर्म्म कृतं भवति, ये व्यवहिताः, न तैः, असन्निपातात्; तथा सति न संख्या कर्म्मणि अङ्गीकृता भवति'। नैष दोषः,—अर्थाभिधानेन मन्त्रोऽङ्गी भवति, सर्वे चैते तमर्थमभिदधति। 'एवमप्यनन्तरेण रूपं क्रियते, इतरे अपवत् अदृष्टार्था भवन्ति'। उच्यते,—नादृष्टार्था भविष्यन्ति, सर्वे तदेव कर्म्म असकृद् अभिधास्यन्ति, भवति हि करणार्थमन्त्रस्य असकृत्प्रयोगः, यथा कुरु कुरु, करवाणि करवाणीति। तत्र यथा अभिधानार्थस्य मन्त्रस्य आम्नानसामर्थ्यादभिहितम् अभ्युदयकरं भवति, एवं 'चतुर्भिरादत्ते' इति वचनात् चतुरभिहितं कृतमभ्युदयकारि भवतीति। तस्मात् समुच्चयेऽपि नादृष्टार्थता; समुच्चयस्य सिद्धः॥ (१२।३।१४अ०)॥

---

ब्राह्मणविहितानाम् 'उरु प्रथस्व'-इत्यादि मन्त्राणां विकल्पाधिकरणम्॥ कृत्वा चिन्तेयम्॥

सू० ब्राह्मणविहितेषु च संख्यावत्सर्वेषामुपदिष्टत्वात्॥ ॥३१॥ (पू०)

भा० ब्राह्मणे च ये मन्त्रा विधीयन्ते, यथा, 'उरु प्रथस्वेति पुरोडाशं प्रथयति', 'उरु प्रथा उरु ते यज्ञपतिः प्रथतामिति पुरोडाशं प्रथयति' इति च; तेषु च समुच्चयः स्यात्, 'सर्वेषामुपदिष्टत्वात्',—यो न प्रयुज्यते तस्योपदेशो बाध्यते, सर्वाङ्गोपसंहारी च प्रयोगवचनोऽनुगृहीष्यते। संख्याविहितवच्च सर्वेषामसकृदभिधानेनार्थवत्ता भविष्यतीति; तस्मात्समुच्चयः॥

सू॰ याज्यावषट्कारयोश्च समुच्चयस्य दर्शनं तद्वत् ॥
॥ ३२ ॥ (यु॰) ॥

भा॰ समुच्चय एव याज्यावषट्कारयोः । 'समुच्चयदर्शनं' भवति,— 'याज्याया अधि वषट्करोति' इति ; समुच्चये हि पौर्वापर्य्यं भवति । तस्मादपि समुच्चयः ॥

सू॰ विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥ ३३ ॥ (सि॰) ॥

भा॰ 'विकल्पो वा' एषां मन्त्राणां न समुच्चयः । कुतः ? । उक्तो न्यायः,—"मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पः स्यात्" (२८सू॰) इति । 'ननु संख्याविहितवदेकार्था अपि मन्त्रो सकृद-भिधानेन समुच्चेष्यन्ते' । नैतद्युक्तं । कुतः ? । 'समुच्चयस्याश्रुतित्वात्',- यथा तत्र संख्याश्रवणात् कृतकरमपि असकृदभिधानमाश्रितं, नैवं समुच्चयश्रवणमस्ति । तस्माद्यथान्यायम् एकार्थत्वाद्विकल्पः ॥

सू॰ गुणार्थत्वादुपदेशस्य ॥ ३४ ॥ (यु॰) ॥

भा॰ यच्च,—सर्वेषामुपदेशोऽर्थवान् भविष्यति-इति, अहेतुः सः 'गुणार्थत्वादुपदेशस्य',-नैवासौ मन्त्रप्राप्त्यर्थ उपदेशः, किन्तर्हि गुणार्थः, अर्थवादं गुणं विधास्यति इति; तदुक्तं "गुणार्थेन पुनःश्रुतिः" (१।२।४१सू॰) "परिसंख्या" (१।२।४२सू॰) "अर्थवादो वा" (१।२।४३सू॰) इति । 'यदि तर्हि नैवायं मन्त्रोपदेशः, किमिदमुच्यते 'सर्वेषामुपदिष्टत्वात्'—इति । एवं तर्हि कृत्वा-चिन्तेयं, मन्त्रोपदेश इति कृत्वा चिन्त्यते । अथवा उदाहरणान्तरं द्रष्टव्यम् ॥

सू० वषट्कारे नानार्थत्वात् समुच्चयः ॥ ३५ ॥ (पू०यु०नि०) ॥

भा० वषट्कारः प्रदानार्थः, याज्या देवतोपलक्षणार्था, तयोः 'नानार्थत्वात्' 'समुच्चयः' न, सर्वोपदेशात्* ॥ (१२।३।१५ अ०) ॥

---

होत्राणां मन्त्राणां समुच्चयाधिकरणम् ॥

सू० हौत्रास्तु विकल्पेरन्नेकार्थत्वात् ॥ ३६ ॥ (पू०) ॥

भा० 'हौत्रास्तु' ये मन्त्राः,—यूपोच्छ्रयणीया वा 'उच्छ्रयस्व वनस्पते' इति; यूपपरिव्याणार्था वा, 'युवा सुवासा' इति, ते विकल्पेरन् । कुतः ? । 'एकार्थत्वात्',—एकार्था एते उच्छ्रयणस्य परिव्याणस्य वा अभिधायकाः,—एकैकस्य तेषामितरानपेक्षः तदभिदधाति । तस्माद्विकल्पः ॥

सू० समुच्चयो वा क्रियमाणानुवादित्वात् ॥ ३७ ॥ (सि०) ॥

भा० 'समुच्चयो वा' हौत्राणां । कुतः ? । 'क्रियमाणानुवादित्वात्', करणानां विकल्प उक्तः, न चैते करणाः, क्रियमाणानुवादिन एते । कः पुनरनयोर्विशेषः ? । करणा करोमीत्येवं प्रत्ययं कुर्वन्ति,

---

* "मन्त्राणां लिङ्गप्राप्तत्वात् समुच्चयार्थान्येव वचनानीति मन्यते । सिद्धान्तस्तु,—ये तावन्मन्त्राः न लिङ्गेन प्राप्ताः, तेषु मन्त्रविनियोगेनैव च क्रत्वर्थं वाक्यं न समुच्चये प्रमाणं भवति । लिङ्गप्राप्तेष्वपि गुणार्थं पुनःश्रवणमित्युक्तं मन्त्राधिकरणे; तस्मादत्र विकल्पः ।" इति तन्त्ररत्नेऽस्य अधिकरणस्य तात्पर्यं प्रदर्शितम् ।

क्रियमाणानुवादिनः एवं कर्त्तव्यमिति। कथं कृत्वा ?। उच्यते,— अध्वर्य्योस्तावत् करोमीत्येतेन प्रत्ययेनार्थः, असति हि एतस्मिन् क्रियैव न प्रवर्त्तते, एष च प्रत्ययः सति पूर्वस्मिन् प्रत्यये भवति, यो हि स्मरति,— इदं मया कर्त्तव्यमिति, स तत् करोति; क्रियमाणानुवादिनस्त्वाध्वर्युणा क्रियमाणमर्थमनुवदन्ति,—'अञ्जन्ति त्वामध्वरे देवयन्तः' इति। सोऽनुवादोऽलमध्वर्य्यो स्मृतिं कर्त्तुम्; अतस्तत्स्वरूपः, तेन च कर्म्मणा आकाङ्क्षितत्वात् स्मरणार्था एते विज्ञायन्ते। स्मरणार्थस्य च मन्त्रस्याम्नानसामर्थ्यात् स्मारितं कृतम् अदृष्टार्थाय भवति; यथा प्रेषितं कृतम्।

ननु 'विधिशब्दादेव स्मृतिर्भवति'। सत्यं,— विधिशब्दादपि सामर्थ्यात् भवति, मन्त्रादपि भवति, मन्त्रस्याम्नानसामर्थ्यात् मन्त्रेण कर्त्तव्या। प्रततेषु च कर्म्मसु स्मृतिसन्तानेनार्थः,—इत्यनेकस्यापि क्रियमाणानुवादिनो मन्त्रस्य एकस्मिन्नेव प्रयोगे सम्भव इति। क्रियमाणानुवादित्वाद्धौत्राणां समुच्चयः॥

सू० समुच्चयञ्च दर्शयति॥३८॥

भा० 'चिःप्रथमामन्वाह त्रिरुत्तमामन्वाह ज्योतिष्मतीरनु ब्रूयात्' इति। अनेकसन्निपाते चैतद् भवति,—प्रथमा उत्तमेति। तस्मात् समुच्चयः॥

इति भट्टश्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये द्वादशाध्यायस्य तृतीयः पादः॥ (१२।३।१६अ०)॥

---

# मीमांसा-दर्शने

## १२ अध्याय ४ पादः।

अपस्तुत्याशीरभिधानानां समुच्चयाधिकरणम् ॥

सू० जपाश्चाकर्म्मयुक्ता स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीःपृथक्त्वात् ॥ १ ॥

भा० जपाः,'वैष्णवीमनूच्य वाग्यन्तव्या सारस्वतीमनूच्य वाग्यन्तव्या बार्हस्पत्यामनूच्य वाग्यन्तव्या' इति । स्तुतयः,—'अग्निर्मूर्द्धा दिवः' इति। आशिषः,—'आयुर्दा अग्ने असि आयुर्मे देहि' इति। अभिधानार्थो—'एषोऽसि' इति। अथ 'जपा इति कः शब्दार्थः?'। 'जप व्यक्तायां वाचि', जप्यते-इति जपः। 'यद्येवम्, अयमपि जपः,—'अग्निर्मूर्द्धा' इति, अयमपि जप्यते'। सत्यमयमपि जपः, स्तुतिरपि तु दृश्यते, अयन्तु जप एव केवलः, इतरैः स्तुत्यादिभिः समुच्चार्य्यमाणे एतस्मिन् 'जपाश्च' अकर्म्मसंयुक्ता 'स्तुत्याशीरभिधानाश्च'इति केवलजपाः प्रतीयन्ते, यथा, ब्राह्मणाः, परिव्राजका, ब्रह्मचारिणश्च नागच्छन्तीत्युक्ते केवला ब्राह्मणा ब्राह्मणशब्देनोच्यन्ते, तद्वत्।

'ननु 'इदं विष्णुर्विचक्रमे' इति स्तुतिरियं?'। न खलु, नास्त्यत्र स्तुतिशब्दः, नापि किञ्चित् स्तोतव्यमस्ति। 'ननु विष्णुः'। न, विष्णुना स्तुतेन कश्चिदर्थोऽस्ति, न स्तुत्यो विष्णुः क्वचिदङ्गीक्रियते, नापि स्तुतिः कर्त्तव्या चोदिता, वचनमात्रन्तु चोदितं 'वैष्णवीमनूच्य' इति;

तत् कर्त्तव्यं, वचनं जपनमिति समानार्थौ, यस्मात्, 'जप व्यक्तायां वाचि' इति स्मर्य्यते, तेन यच वचनमात्रं मन्त्रस्य क्रियते, न स्तूयते, नाभिधीयते, स जपः। अथ 'जपस्याभिधानार्थस्य च को विशेषः?'। जपे वचनमात्रं मन्त्रस्य, अभिधानेन तु परः सता असता वा गुणेन आदिश्यते, 'एषोऽसि लेपोऽसि' इति, तेषां तत्र तत्र एकार्थत्वाद्विकल्पे प्राप्ते उच्यते समुच्चयः। कुतः?। आशीःपृथक्त्वात्', जपपृथक्त्वात्, स्तुतिपृथक्त्वात्, अभिधानपृथक्त्वाच, न हि 'इदं विष्णुः' इति योऽर्थोऽभिधीयते, स एव 'पावका नः सरस्वती'-इत्यनेन। एवं सर्वत्र; तस्मान्नानार्था एते, अतस्तेषां समुच्चयः स्यात्। समुच्चयञ्च दर्शयति, ब्राह्मणवचनयोः, 'त्रिः प्रथमामन्वाह' इति, 'त्रिरुत्तमामन्वाह' इति। समुच्चये च सति प्रथमा चोत्तमा च विद्यते, न विकल्पे। तस्मादपि समुच्चयः। याजमानेष्विति प्रायिको निर्देशः, एकस्मिंश्च मन्त्रे त्रितयमपि सम्भवति,-स्तुतिरभिधानं जपश्च। यथा, 'इदं विष्णुर्विचक्रमे' इति यदि विष्णुर्बोध्यते, ततः स्तुतिः, अथान्यस्मै वृत्तान्त आख्यायते, ततोऽभिधानम्, अथात्मना अवधार्य्यते, ततो जपः॥ (१२।४।१ अ०)॥

---

ऐन्द्राबार्हस्पत्ये द्विविधयाज्यानुवाक्ययोर्विकल्पाधिकरणम्, याज्यानुवाक्ययोः समुच्चयाधिकरणं वा॥

सू० याज्यानुवाक्यासु तु विकल्पः स्याद् देवतोपलक्षणार्थत्वात्॥२॥ (सि०)॥

भा० ऐन्द्रबार्हस्पत्ये कर्म्मणि अनेकं याज्यानुवाक्यायुगलमाम्नातं,-'इदं

वामाख्ये हविःप्रियमिन्द्राबृहस्पती, अयं वां परिषिच्यते सोम इन्द्राबृहस्पती' इत्येकं। 'अस्मे इन्द्राबृहस्पती बृहस्पतिर्नः परिपातु पश्चात्' इत्यपरं। तयोः किं समुच्चयो विकल्पः? इति विचारः। तत्रोच्यते,—'याज्यानुवाक्यासु तु विकल्पः स्यात्' इति। कस्मात्?। 'देवतोपलक्षणार्थत्वात्',—कर्म्मणि गुणभूता देवता याज्यानुवाक्याद्वयेन कर्म्मसिद्ध्यर्थमुपलक्ष्यते; सकृदुपलक्षणेन च तत्सिध्यति; कर्म्मसिद्धौ कर्म्मणि उपलक्षणकार्य्यं नास्तीति द्वितीयं याज्यानुवाक्याद्वयं प्रयोगान्तरार्थं भवति। तस्माद् विकल्पः॥

सू॰ लिङ्गदर्शनाच्च॥३॥ (यु॰)॥

भा॰ लिङ्गञ्चैतमर्थं दर्शयति। किं लिङ्गं भवति?। एवमाह,—'उभे वै देवानां याज्यानुवाक्ये एकया प्रत्यागच्छति गमयत्यन्यया, अथात्र तिस्रः कार्य्याः' इति। पितृयज्ञे याज्यानुवाक्याचयविधानपरे वाक्ये तयोर्द्वित्वमुचितं दर्शयति। तथा, 'न सर्वाणि सह यज्ञायुधानि प्रहृत्यानि मानुषं तत् क्रियते नैकमेकं पितृदेवं तत् द्वे द्वे सह प्रहृत्ये याज्यानुवाक्ययोः रूपम्' इति, तस्मादपि विकल्पः॥

अथ 'तयोरेव मिथः कस्माद्विकल्पो न भवति*? एकार्थत्वात् प्राप्नोति, अन्यतरयापि हि देवतोपलक्षणं सिध्यति'। उच्यते,—समाख्यया पुरोनुवाक्येति, पूर्वमनूच्यते इति पुरोनुवाक्या, आपेक्षिकः पूर्वशब्दो याज्यामपेक्ष्य भवति, समुच्चये चैतदुपपद्यते, तस्मात्

* इममंशमवलम्ब्य न्यायमालायां याज्यानुवाक्ययोः समुच्चयाधिकरणम् पृथक्तया निरूपितम्॥

| | | |
|---|---|---|
| Nárada Pancharátra, (Sans.) Fasc. IV @ /10/ each Rs. | 0 | 10 |
| Nyáya Darṣana, (Sans.) Fasc. I and III @ /10/ each | 1 | 4 |
| Nítisára, or, The Elements of Polity, By Kámandaki, (Sans.) Fasc. II—V | 2 | 8 |
| Pariśishtaparvana (Sans.) Fasc. I—III | 1 | 14 |
| Piñgala Chhandaḥ Sútra, (Sans.) Fasc. I—III @ /10/ each | 1 | 14 |
| Prithiráj Rásau, (Sans.) Fasc. I—V @ /10/ each | 3 | 2 |
| Ditto (English) Fasc. I | 1 | 0 |
| Páli Grammar, (English) Fasc. I and II @ /10/ each | 1 | 4 |
| Prákṛita Lakshaṇam, (Sans.) Fasc. I | 1 | 8 |
| Parásara Smṛiti (Sans.) Fasc. I—III | 1 | 14 |
| Śrauta Sútra of Ápastamba, (Sans.) Fasc. I—X @ /10/ each | 6 | 4 |
| Ditto Áśvaláyana, (Sans.) Fasc. I—XI @ /10/ each | 6 | 14 |
| Ditto Láṭyáyana (Sans.) Fasc. I—IX @ /10/ each | 5 | 10 |
| Ditto Sankhyana Fasc. I. (Sans.) | 0 | 10 |
| Sáma Veda Saṃhitá, (Sans.) Vols. I, Fasc. 1—10; II, 1—6; III, 1—7; IV, 1—6; V, 1—8, @ /10/ each Fasc. | 23 | 2 |
| Sáhitya Darpaṇa, (English) Fasc. I—IV @ /10/ each | 2 | 8 |
| Sáñkhya Aphorisms of Kapila, (English) Fasc. I and II @ /10/ each | 1 | 4 |
| Súrya Siddhánta, (Sans.) Fasc. IV | 0 | 10 |
| Sarva Darśana Sangraha, (Sans.) Fasc. II | 0 | 10 |
| Śañkara Vijaya, (Sans.) Fasc. II and III @ /10/ each | 1 | 4 |
| Sáñkhya Pravachana Bháshya, (English) Fasc. III | 0 | 10 |
| Sáñkhya Sára, (Sans.) Fasc. I | 0 | 10 |
| Suśruta Saṃhita, (Eng.) Fasc. I and II @ 1/each | 2 | 0 |
| Taittiríya Áraṇya Fasc. I—XI @ /10/ each | 6 | 14 |
| Ditto Bráhmaṇa (Sans.) Fasc. I—XXIV @ /10/ each | 15 | 0 |
| Ditto Saṃhitá, (Sans.) Fasc I—XXXII @ /10/ each | 20 | 0 |
| Ditto Prátiśákhya, (Sans.) Fasc. I—III @ /10/ each | 1 | 14 |
| Ditto and Aitareya Upanishads, (Sans.) Fasc. II and III @ /10/ each | 1 | 4 |
| Ditto Aitareya Svetáśvatara Kena Íśá Upanishads, (English) Fasc. I and II @ /10/ each | 1 | 4 |
| Táṇḍyá Bráhmaṇa, (Sans.) Fasc. I—XIX @ /10/ each | 11 | 14 |
| Tatta Chintamony, Fasc. I & II (Sans.) @ /10/ each | 1 | 4 |
| Uttara Naishadha, (Sans.) Fasc. II—XII @ /10/ each | 6 | 14 |
| Váyu Puráṇa, (Sans.) Vol. I, Fasc. 1—6; Vol. II, Fasc. 1—5, @ /10/ each Fasc. | 6 | 14 |
| Vishṇu Smṛiti, (Sans.) Fasc. I—II @ /10/ each | 1 | 4 |
| Yoga Sútra of Patanjali, (Sans. & English) Fasc. I—V @ /14/ each | 4 | 6 |
| The same, bound in cloth | 5 | 2 |

## *Arabic and Persian Series.*

| | | |
|---|---|---|
| 'Álamgírnámah, with Index, (Text) Fasc. I—XIII @ /10/ each | 8 | 2 |
| Áin-i-Akbarí, (Text) Fasc. I—XXII @ 1/4 each | 27 | 8 |
| Ditto (English) Vol. I (Fasc. I—VII) | 12 | 4 |
| Akbarnamah, with Index, (Text) Fasc. I—XXX @ 1/4 each | 37 | 8 |
| Bádsháhnámah with Index, (Text) Fasc. I—XIX @ /10/ each | 11 | 14 |
| Beale's Oriental Biographical Dictionary, pp. 291, 4to., thick paper, @ 4/12; thin paper | 4 | 8 |
| Dictionary of Arabic Technical Terms and Appendix, Fasc. I—XXI @ 1/4 each | 26 | 4 |
| Farhang-i-Rashídí (Text), Fasc. I—XIV @ 1/4 each | 17 | 8 |
| Fihrist-i-Ṭúsí, or, Ṭúsy's list of Shy'ah Books, (Text) Fasc. I—IV @ /12/ each | 3 | 0 |
| Futúḥ-ul-Shám Waqídí, (Text) Fasc. I—IX @ /10/ each | 5 | 10 |
| Ditto Ázádí, (Text) Fasc. I—IV @ /10/ each | 2 | 8 |
| Haft Ásmán, History of the Persian Mansawi (Text) Fasc I | 1 | 0 |
| History of the Caliphs, (English) Fasc. I—VI @ 1/ each | 6 | 0 |
| Iqbálnámah-i-Jahángírí; (Text) Fasc. I—III @ /10/ each | 1 | 14 |
| Iṣabáh, with Supplement, (Text) 37 Fasc. @ /12/ each | 27 | 12 |
| Maghází of Wáqidí, (Text) Fasc. I—V @ /10/ each | 3 | 2 |
| Muntakhab-ul-Tawáríkh, (Text) Fasc. I—XV @ /10/ each | 9 | 6 |
| Muntakhab-ul-Tawáríkh (English) Vol. II, Fasc. I & II @ 1/ each | 2 | 0 |

*(Turn over.)*

Muntakhab-ul-Lubáb, (Text) Fasc. I—XVIII @ /10/ each, and Fasc. XIX with Index @ /12/ .. 12 0
Mu'áṣir-i-'Álamgírí (Text), Fasc. I—VI @ /10/ each .. 3 12
Nukhbat-ul-Fikr, (Text) Fasc. I .. 0 10
Niẓámí's Khiradnámah-i-Iskandarí, (Text) Fasc. I and II @ 1/ each .. 2 0
Suyúty's Itqán, on the Exegetic Sciences of the Koran, with Supplement, (Text) Fasc. II—IV, VII—X @ 1/4 each .. 8 12
Ṭabaqát-i-Náṣirí, (Text) Fasc. I—V @ /10/ each .. 3 2
Ditto (English) Fasc. I—XIV @ 1/ each .. 14 0
Táríkh-i-Fírúz Sháhí, (Text) Fasc. I—VII @ /10/ each .. 4 6
Táríkh-i-Baihaqí, (Text) Fasc. I—IX @ /10/ each .. 5 10
Wís o Rámín, (Text) Fasc. I—V @ /10/ each .. 3 2
Zafarnamah, Fasc. I. .. 0 10

---

## ASIATIC SOCIETY'S PUBLICATIONS.

1. Asiatic Researches. Vols. VII, IX to XI; Vols. XIII and XVII, and Vols. XIX and XX @ /10/ each .. Rs. 80 0
Ditto Index to Vols. I—XVIII .. 5 0
2. Proceedings of the Asiatic Society from 1865 to 1869 (incl.) @ /4/ per No.; and from 1870 to date @ /8/ per No.
3. Journal of the Asiatic Society for 1843 (12), 1844 (12), 1845 (12), 1846 (5), 1847 (12), 1848 (12), 1849 (12), 1850 (7), @ 1/ per No. to Subscribers and @ 1/8 per No. to Non-Subscribers; and for 1851 (7), 1857 (6), 1858 (5), 1861 (4), 1864 (5), 1865 (8), 1866 (7), 1867 (6), 1868 (6), 1869 (8), 1870 (8), 1871 (7), 1872 (8), 1873 (8), 1874 (8), 1875 (7), 1876 (7), 1877 (8), 1878 (8), 1879 (7), 1880 (8), 1881 (7), 1882 (6), 1883 (5), 1884 (6), @ 1/8 per No. to Subscribers and @ 2/ per No. to Non-Subscribers.

*N. B. The figures enclosed in brackets give the number of Nos. in each Volume.*

Centenary Review of the Researches of the Society from 1784—1883 .. 5 0
General Cunningham's Archæological Survey Report for 1863-64 (Extra No., J. A. S. B., 1864) .. 2 0
Theobald's Catalogue of Reptiles in the Museum of the Asiatic Society (Extra No., J. A. S. B., 1868) .. 2 0
Catalogue of Mammals and Birds of Burmah, by E. Blyth (Extra No., J. A. S. B., 1875) .. 4 0
Sketch of the Turki Language as spoken in Eastern Turkestan, Part II, Vocabulary, by R. B. Shaw (Extra No., J. A. S. B., 1878) .. 4 0
A Grammar and Vocabulary of the Northern Balochi Language, by M. L. Dames (Extra No., J. A. S. B., 1880) .. 4 0
Introduction to the Maithili Language of North Bihár, by G. A. Grierson, Part I, Grammar (Extra No., J. A. S. B., 1880) .. 2 0
Part II, Chrestomathy and Vocabulary (Extra No., J. A. S. B., 1882) .. 4 0

5. Anis-ul-Musharrihi .. 3 0
6. Catalogue of Fossil Vertebrata .. 2 0
8. Catalogue of the Library of the Asiatic Society, Bengal .. 3 8
9. Examination and Analysis of the Mackenzie Manuscripts by the Rev. W. Taylor .. 2 0
10. Han Koong Tsew, or the Sorrows of Han, by J. Francis Davis .. 1 8
11. Iṣṭiláhát-uṣ-Ṣúfíyah, edited by Dr. A. Sprenger, 8vo. .. 1 0
12. Ináyah, a Commentary on the Hidayah, Vols. II and IV, @ 16/ each .. 32 0
13. Jawámi-ul-'ilm ir-riyáẓí, 168 pages with 17 plates, 4to. Part I .. 2 0
14. Khizánat-ul-'ilm .. 5 0
15. Mahábhárata, Vols. III and IV, @ 20/ each .. 40 0
16. Moore and Hewitson's Descriptions of New Indian Lepidoptera, Parts I—II, with 5 coloured Plates, 4to. @ 6/ each .. 12 0
17. Puráṇa Sangraha, I (Markandeya Purana), Sanskrit .. 1 0
18. Sharaya-ool-Islám .. 4 0
19. Tibetan Dictionary .. 10 0
20. Ditto Grammar .. 8 0
21. Vuttodaya, edited by Lt.-Col. G. E. Fryer .. 2 0

---

Notices of Sanskrit Manuscripts, Fasc. I—XI @ 1/ each .. 11 0
Nepalese Buddhist Sanskrit Literature, by Dr. R. L. Mitra .. 5 0

# BIBLIOTHECA INDICA;

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, No. 605.



# मीमांसादर्शनम् ।
## श्रीशवरस्वामिकृतभाष्यसहितम् ।
## उत्तरार्द्धम् ॥

# THE MÍMÁŃSÁ DARS'ANA,

WITH THE COMMENTARY OF
SAVARA SVÁMIN.

EDITED BY
MAHEŚACHANDRA NYÁYARATNA.

FASCICULUS XIX.




CALCUTTA:

PRINTED BY J. W. THOMAS, AT THE BAPTIST MISSION PRESS.
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET.

1887.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

**No. 57, PARK STREET, CALCUTTA.**

AND OBTAINABLE FROM

**THE SOCIETY'S LONDON AGENTS, MESSRS. TRÜBNER & CO.**

**57 AND 59, LUDGATE HILL, LONDON, E. C.**

## BIBLIOTHECA INDICA.

### *Sanskrit Series.*

| | | |
|---|---|---|
| Agni Puráṇa, (Sans.) Fasc. I—XIV @ /6/ each | Rs. 5 | 4 |
| Aitareya Áraṇyaka of the Rig Veda, (Sans.) Fasc. I—V @ /6/ each | 1 | 14 |
| Aphorisms of Sáṇdilya, (English) Fasc. I | 0 | 6 |
| Aphorisms of the Vedánta, (Sans.) Fasc. III, V—XIII @ /6/ each | 3 | 12 |
| Ashṭasáhasriká Prajnápáramitá, Fasc. I | 0 | 6 |
| Asvavaidyaka, Fasc. I—V @ /6/ each | 1 | 14 |
| Asvalayana Grihya Sutra, Fasc. II—IV @ /6/ each | 1 | 2 |
| Átharvaṇa Upanishad, (Sanskrit) Fasc. I—V @ /6/ each | 1 | 14 |
| Brahma Sútra, (English) Fasc. I | 0 | 12 |
| Bhámatí, (Sans.) Fasc. I—VIII @ /6/ each | 3 | 0 |
| Bṛihad Áraṇyaka Upanishad, (Sans.) Fasc. VI, VII & IX @ /6/ each | 1 | 2 |
| Ditto (English) Fasc. II—III @ /6/ each | 0 | 12 |
| Bṛihat Saṃhitá, (Sans.) Fasc. II—III, V—VII @ /6/ each | 1 | 14 |
| Chaitanya-Chandrodaya Náṭaka, (Sans.) Fasc. II—III @ /6/ each | 0 | 12 |
| Chaturvarga Chintámaṇi, (Sans.) Vols. I, Fasc. 1—11; II, 1—25; III, 1—15, @ /6/ each Fasc. | 19 | 2 |
| Chhándogya Upanishad, (English) Fasc. II | 0 | 6 |
| Dasarupa, Fasc. II and III @ /6/ | 0 | 12 |
| Gopatha Bráhmaṇa, (Sans.) Fasc. I and II @ /6/ each | 0 | 12 |
| Gobhilíya Gṛihya Sútra, (Sans.) Fasc. I—XII @ /6/ each | 4 | 8 |
| Hindu Astronomy, (English) Fasc. I—III @ /6/ each | 1 | 2 |
| Kálamádhaba, Fasc. I and II @ /6/ | 0 | 12 |
| Kátantra, (Sans.) Fasc. I—VI @ /12/ each | 4 | 8 |
| Kathá Sarit Ságara, (English) Fasc. I—XIII @ /12/ each | 9 | 12 |
| Kaushitaki Brahmanapanishads, Fasc. II | 0 | 6 |
| Kúrma Purana, Fasc. I—III @ /6/ each | 1 | 2 |
| Lalitá-Vistara (Sans.) Fasc. II-VI, @ /6/ | 1 | 14 |
| Lalita-Vistara, (English) Fasc. I—III @ /12/ each | 2 | 4 |
| Manutiká Sangraha, Fasc. I—II @ /6/ each | 0 | 12 |
| Mímáṃsá Darṣana, (Sans.) Fasc. II—XIX @ /6/ each | 6 | 12 |
| Márkaṇḍeya Puráṇa, (Sans.) Fasc. IV—VII @ /6/ each | 1 | 8 |
| Nṛisiṃha Tápaní, (Sans.) Fasc. I—III @ /6/ each | 1 | 2 |
| Nirukta, (Sans.) Vol. I, Fasc. 1—6; Vol. II, Fasc. 1—6; Vol. III, Fasc. 1—6; Vol. IV, Fasc. I & II @ /6/ each Fasc. | 7 | 8 |
| Nárada Smṛiti, Fasc. I—III @ /6/ | 1 | 2 |
| Nyáya Darśana, (Sans.) Fasc. III | 0 | 6 |
| Nítisára, or The Elements of Polity, By Kámandaki, (Sans.) Fasc. II—V @ /6/ each | 1 | 8 |

*(Continued on third page of cover.)*

समुच्चयः। 'ननूपलक्षिते उपलक्षणकार्याभावादर्थलोपात् अन्यतरस्याः प्रयोगो न प्राप्नोति'। उच्यते, समाख्यासामर्थ्याद् विस्पष्टत्वस्याप्यर्थं कार्यं भविष्यति, यथा, 'द्वाभ्यां जानाति' इति वचनसामर्थ्याद् अभिधानसाम्यं; तस्मादविरोधः॥ (१२।४।२अ०)॥

---

सोमक्रयणसाधनानां अजादीनां समुच्चयाधिकरणम्॥

सू॰ क्रयणेषु तु विकल्पः स्यादेकार्थत्वात्॥४॥(पू॰)॥

भा॰ सोमक्रयणार्थानि द्रव्याणि समाम्नातानि, 'अजया क्रीणाति' इत्येवमादीनि। तेषु 'क्रयणेषु विकल्पः स्यात्', सर्वाणि हि क्रयणस्य साधनत्वेन निरपेक्षाणि विधीयन्ते, यथा व्रीहियवौ यागेषु, तथा 'अजया क्रीणाति, हिरण्येन क्रीणाति, वाससा क्रीणाति' इति। तानि एकार्थानि भवन्ति। तस्मात् तेषु विकल्पः॥

सू॰ समुच्चयो वा प्रयोगे द्रव्यसमवायात्॥५॥(सि॰)॥

भा॰ वाशब्दः पक्षं व्यावर्त्तयति,—न चैतदस्ति विकल्प इति, समुच्चयः। कस्मात्?। 'प्रयोगे द्रव्यसमवायात्',—क्रयणस्य प्रयोगे अधिकस्यापि द्रव्यस्य समवाय उपपद्यते, नच विक्रेतुः मूल्याधिक्यं क्रियते, नच याज्ञिकः सुकरतरं भवति। तस्य द्रव्यस्याल्पस्याधिकस्य, सर्वाण्येव संसारी च प्रयोगवचनोऽनुगृह्यते। अपि च विस्पष्टानि एतानि,—'अजरूपेण क्रीणाति'—इति 'गोमिथुनाभ्यां क्रीणाति' इति समुच्चयेनान्यानि कर्तुं प्रभवन्ति, न विकल्पेन। विकल्प्यमानानामानर्थक्यमापद्यते,

तस्मात् समुच्चयः। समुच्चयं दर्शयति,—'तं वै दशभिः क्रीणाति दशाक्षरा विराट् विराजमेव प्राप्नोति'—इति। क्रीणात्यनुवादोऽयं, स एतेन न्यायेन प्राप्तानां स्यात्; तस्मादपि समुच्चयः। 'अथार्थवादेन विधिः कस्मान्न विज्ञायेत?'। तथाप्यनुवादरूपं बाध्यते, तच्च सति सम्भवे न बाधितव्यम्। तस्मादनुवादः॥ (१।२।४।३अ०)॥

———

उपयजनादिप्रतिपत्तिकर्मणां समुच्चयाधिकरणम्।

सू० संस्कारे च तत्प्रधानत्वात्॥ ६॥

भा० अग्नीषोमीये पशौ गुदेनोपयजनं आम्नातं,—'गुदेनोपयजति प्राणो वै गुदः' इति। ऐकादशिनेषु पशुषु अनेकगुदसन्निपाते विचारः प्रभवति, 'किमुपयजने गुदानां समुच्चयो विकल्पो वा?'। यदि अर्थ-कर्म उपयजनं, ततो विकल्पः, अथ प्रतिपत्तिस्ततः समुच्चयः। किं पुनरत्र युक्तम्?। अर्थकर्मेति। कुतः?। 'भूतभव्यसमुच्चारणे भूतं भव्याय' दृष्टार्थत्वाद्भवति, यदा अर्थकर्म तदैकेनापि तत्सिध्यतीति बहूनामेकत्र प्राप्तानां विकल्पो भवति।

एवं प्राप्ते उच्यते,—'संस्कारे च तत्प्रधानत्वात्', संस्कारोऽयं प्रतिपत्तिरित्यर्थः। कुतः?। उपयुक्तत्वात्, अग्नीषोमीययागार्थः पशुस्तत्पन्नः तस्मिन्निर्वृत्ते तच्छेषाः प्रतिपादनार्हाः, तस्माद्गुदस्य प्रति-पत्तिन्यायोऽयं दृष्टार्थः। 'नन्वर्थकर्मपक्षेऽपि दृष्टार्थतैव हेतुक्तः'। तुल्योऽसौ प्रतिपत्तावपि, तथापि हि प्रतिपाद्यमानः कर्म साध्यति। तस्माद् अवैशेषिकोऽसौ, यदा प्रतिपत्तिस्तदा समुच्चयः, 'तत्प्रधान-

स्यात्', द्रव्यसंस्कारार्थं कर्म्म यत्रैव प्रयोगेऽद्रो न संस्क्रियते, तत्रैव तेन संस्कारेण हानिः स्यात्। तस्मात् समुच्चयः॥ (११।४।४ अ०)॥

---

आधाने विविधसंख्याकानां दक्षिणानां विकल्पाधिकरणम्।

## सू० संख्यासु तु विकल्पः स्यात् श्रुतिविप्रतिषेधात्॥७॥

भा० आधाने दक्षिणाविधयः,-'एका देया, षट् देया, द्वादश देयाः' इत्येवमादयः। तेषां समुच्चयः, विकल्पः? इति विचारणा। तत्राङ्गभूतस्य सर्वाङ्गप्राहिणा प्रयोगवचनेन समुच्चये प्राप्ते, उच्यते,-'संख्यासु तु विकल्पः स्यात्'। कुतः?। 'श्रुतिविप्रतिषेधात्', 'एका देया' इत्येकसंख्यापरिच्छिन्नं द्रव्यं परिक्रयसाधनं श्रूयते। तथा 'षट् देया' इति षट्संख्यापरिच्छिन्नं। यद्येका च षट् च समुच्चीयेरन्, संख्यान्तरं सप्तसंख्या उत्पद्येत, तत्परिच्छिन्नेन द्रव्येण परिक्रयः कृतः स्यात्, तत्रैकश्रुतेः षट्श्रुतेश्च विप्रतिषेधः स्यात्।

'ननु नैवात्र परिक्रयः श्रूयते, किन्तर्हि, दानम्,-'एका देया, षट् देया'—इति'। अत्रोच्यते, दानं ममात्मीयस्य द्रव्यस्य परस्वतापादानं, तच्च परः स्वत्वात् स्यादित्येवमर्थम्, स्ववानेवासौ तत्कार्यमिच्छं करोति, तेन चास्य दातुरर्थः, एवं दृष्टोऽर्थो भवति। अथ दानमात्रं कल्प्यते, ततोऽदृष्टं कल्पयितव्यं, परिक्रये एवैकादीनां श्रवणं, तत्र यः सप्तभिः परिक्रीणीते, न तेन एकया षड्भिः परिक्रीतो भवति, न हि ते एकेत्यानमन्ति, न षडिति, किन्तर्हि, सप्तेति, स एष श्रुतिविप्रतिषेधस्तस्माद्विकल्पः संख्यासु॥ (११।४।५ अ०)॥

---

पशुगणेषु आघनीनां विकल्पाधिकरणम्।

सू० द्रव्यविकारन्तु पूर्ववदर्थकर्म स्यात्तथा विकल्पे नियमः प्रधानत्वात् ॥ ८ ॥ (सि०) ॥

भा० 'आघन्या पत्नीः संयाजयन्ति' इति श्रूयते, तत्र पशुगणेषु विचारो भवति, किं आघनीनां समुच्चयः, उत विकल्पः? इति। यद्यपि पूर्व एव न्यायः,-अर्थकर्म ततो विकल्पः, अत्र प्रतिपत्तिः ततः समुच्चयः इति। किं प्राप्तं?। 'द्रव्यविकारे' च 'पूर्ववदर्थकर्म स्यात्',-पूर्ववदेतदर्थकर्म, यत् आघन्या पत्नीसंयाजनं, दर्शपूर्णमासपूर्वकं चोदकपरम्परया पशुगणे प्राप्तं, दर्शपूर्णमासयोश्चैतदर्थकर्म, न हि तत्र काचित् शेषभूता आघनी अस्ति, यस्याः प्रतिपत्तिः स्यात्। लौकिकास्तु तथाज्येन सह विकल्पः चोदकेनाग्नीषोमीयं पशुं आप्तः। तत्रापि श्रूयते, 'आघन्या पत्नीः संयाजयन्ति' इति, सा श्रुतिर्विकल्पे प्राप्ते नियमार्था भवति, यथाप्राप्तायाश्च नियमः, गुणभूता च प्राप्ता। तस्मादग्नीषोमीये गुणभूता आघनी, कर्म प्रधानं; यथा अग्नीषोमीये, तथा पशुगणेषु। तस्मात्तत्राप्यर्थकर्म। अर्थकर्मणि चैकार्थानां आघनीनां समुच्चयो न युक्तः, तस्माद्विकल्पः॥

सू० द्रव्यत्वेऽपि समुच्चयो द्रव्यस्य कर्मनिष्पत्तेः प्रतिपशु कर्मभेदादेवं सति यथाप्रकृति ॥ ९ ॥ (१म० पू०) ॥

भा० यद्यपि आघनी गुणभूता कर्मणि, एवमपि समुच्चयो युक्तः। कुतः?। 'द्रव्यस्य कर्मनिष्पत्तेः',-आघनीद्रव्यं कर्मणा विभजनेन

निष्पन्नमिति तत्र प्रयोजनापेक्षा भवति, इदञ्च श्रूयते, 'आज्येन पत्नीः संयाजयन्ति' इति; तदेवं विज्ञायते,-इदमस्य प्रयोजनं। पशुगणे च 'प्रतिपशु' कर्मभेदः, तस्य तस्य पशोः कर्मनिष्पत्ति आवश्यीकम्, अतस्तत्रापि तत्पत्नीसंयाजार्थमेव कर्त्तव्यं। 'एवं सति यथाप्रकृति' कृतं भवति। तस्मात् अर्थकर्मण्यपि समुच्चय एव॥

सू॰ कपालेऽपि तथेति चेत्॥१०॥ (१म॰ पू॰ आ॰)॥

भा॰ इति चेत् पश्यसि, कर्मनिष्पन्नत्वादाज्यानां समुच्चय इति, तेन तर्हि कपालेऽपि समुच्चयः प्राप्नोति, 'पुरोडाशकपालेन तुषानुप वपति' इति। तदपि कर्मणा प्रयुज्यते, तस्यापि तुषोपवपनं प्रयोजनं भवितुमर्हति। तथा पुरोडाशगणे तस्य तस्य पुरोडाशस्य कपालेन तुषोपवपनं कर्त्तव्यं, वक्तव्यो वा विशेषः॥

सू॰ न कर्मणः परार्थत्वात्॥११॥ (१पू॰ आ॰ एवं १पू॰ नि॰)॥

भा॰ नैतदेवं। कुतः?। 'कर्मणः परार्थत्वात्', परार्थञ्च कपालानां प्रयोजकर्म,-पुरोडाशश्रपणार्थं, तदर्थमुपात्ते कपाले तुषोपवपनमपि अन्वारभ्यते,तद्यथा काष्ठान्याहर्त्तुं प्रस्थिते पुरुषे शाकाहरणमप्युपाधिः क्रियते, शाकमप्याहरेति, न तस्य गमनं शाकार्थमपि भवति।

'कथं पुनर्ज्ञायते, पुरोडाशार्थे कपाले तुषोपवपनमन्वारभ्यते, नैतदुभयार्थम्? इति'। उक्तोऽत्र न्यायो,-'भविष्यता संयोगस्य तन्निमित्तत्वात्' इति। न चेत् तुषोपवपनार्था कपालानामुत्पत्तिर्नावश्यं सर्वैरुपवपनं कर्त्तव्यम्।

अथ वा उभयोरपि प्रतिषेधोऽयं 'न कर्मणः परार्थत्वा-

उखायां काम्येन नित्याग्नेर्विकाराधिकरणम् ।

सू॰ उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात् ॥ १५ ॥ (पू॰) ॥

भा॰ अस्ति चाग्नौ उख्योऽग्निः, 'सन्तापेनाग्निं जनयति' इति । तं प्रकृत्य श्रूयते,—'तृणाधानात् ज्वलतो ब्रह्मवर्चसकामस्याहृत्य अवदध्यात्, आम्रादन्नाद्यकामस्य, वैद्युतात् हस्तिकामस्य' इति । तत्र विचार्य्यते,-किं काम्यस्य नित्यस्य चाग्नेः समुच्चयः, अथवा काम्येन नित्योऽग्निर्विक्रियते ? इति । तत्रोच्यते, 'उखायां' काम्यनित्ययोरग्न्योः समुच्चयः । कुतः ? । एवं सर्वाङ्गोपसंहारी प्रयोगवचनोऽनुपरोत्स्यते । ननु 'नैमित्तिकन्तु प्रकृतौ तद्विकारः संयोगविशेषात्' इत्यनेन न्यायेन काम्योऽग्निर्नित्यस्य विकारको भविष्यति' । न भविष्यति । 'किंकारणम् ? । नियोगे कामदर्शनात्' अग्नेर्नियोजने काले कामः श्रूयते,—'आहृत्य अवदध्याद्ब्रह्मवर्चसकामस्य' इति, न ब्रह्मवर्चसकामस्यायमग्निर्होमार्थो भवतीति, एवमेतदाहरणावधानात् फलं भविष्यति, होमस्तु यथाप्राप्त उख्य एव, सन्निपाताच्चाग्न्योः समुच्चयः ॥

सू॰ असति चासंस्कृतेषु कर्म्म स्यात् ॥ १६ ॥ (यु॰) ॥

भा॰ यदि च काम्येन नित्योऽग्निर्विक्रियेत, स नैव स्यात्, तस्मिंश्च 'असति' 'असंस्कृतेषु' आधारादिषु 'कर्म स्यात्', तथा आधारस्य संस्कारो बाध्येत, तस्मादपि समुच्चयः ॥

सू० तस्य च देवतार्थत्वात् ॥१७॥ (२यु०) ॥

भा० अपि च अन्वाधानेन देवतापरिग्रहणं कृतं, यदि सोऽग्निः उत्सृज्येत, ततो देवता अपरिगृहीता भवेयुः, अन्वाधानेन ह्यग्नि-र्धार्य्यते, तत्कृतादग्निधारणात् देवतापरिग्रहः ॥

सू० विकारो वा तदुक्तहेतु ॥१८॥ (सि०) ॥

भा० विकारो वा नित्यस्याग्नेः काम्येन, 'तत्' एतत् 'उक्तहेतु',- "नैमित्तिकन्तु प्रकृतौ तद्विकारः (३।६।१०सू०)"—इति; सामान्येनैतदुक्तं,-'यदाहवनीये जुहोति' इति, 'वृष्टिकामो वैद्युतात्' इति विशेषेण, तेन सामान्यं बाध्येत। किंकारणम्?। स्वाश्रयेषु अव्यावृत्तविषयस्य सामान्यस्य ततोऽन्यत्रापि वृत्तिसम्भवात् विशेषस्य च अल्पपरिच्छिन्नस्य एकावसायिनस्तदसम्भवे विषयाभावप्रसङ्गात् उपदेशवैयर्थ्यं मा भूदिति।

अथ यदुक्तं,—'नियोगे कामदर्शनात्'-इति, तत्र ब्रूमः,'भ्राष्ट्रादाहृत्य अवदध्यात्' इति नित्यस्यैव होमार्थस्यावधानस्यायं विशेषे काम-संयोगः,-'भ्राष्ट्रादाहृत्यान्नाद्यकामस्य' इति; 'अवदध्यात्'—इति पुनःश्रुतिः, यद्यवधाने कामश्रुतिः स्यात्, अवधानं विधीयेत, नाविधीयमानं कामस्य साधनत्वेन युज्येत, तस्मिंश्च विधीयमाने विशेषस्य चेत्यनेकार्थत्वात् वाक्यं भिद्येत! तस्मान्न नियोगे कामश्रुतिः, किन्तर्हि?—होमार्थैवायं नित्यो नियोगः अग्निविशेषविधानार्थमनूद्यते यावदुक्तं स्याद्वृष्टिकामो वैद्युतमग्निं होमार्थं कुर्य्यादिति, तावदेवेदम्; एवञ्चेत् नैमित्तिकस्मिन् कार्य्ये नित्यमग्निं विकरोतीत्युपपन्नम् ॥

4 c

सू० वचनादसंस्कृतेषु कर्म्म स्यात् ॥१९॥ (पू०यु०नि०)॥

भा० यच्चेदमुक्तम्,—'असति चासंस्कृतेषु कर्म्म स्याद्'-इति, तत्र ब्रूमः,—'वचनादसंस्कृतेषु कर्म्म स्याद्'-इति, किमिव वचनं न कुर्य्यात्, नास्ति वचनस्य अतिभारः; यथा, 'पदे जुहोति' इति।

सू० संसर्गे चापि दोषः स्यात् ॥२०॥ (यु०)॥

भा० अपि च, यदि समुच्चयः स्यात्, प्राद्धाव्येन सह संसर्गः स्याद् वैहारिकस्य; तत्र तु दोषः श्रूयते, 'अग्नये शुचयेऽष्टाकपालं निर्वपेद् यस्याग्निः प्राद्धाव्येन सह संसृज्येत अशुचितर एष योऽग्निः प्राद्धाव्यः'॥

सू० वचनादिति चेत् ॥२१॥ (आ०)॥

भा० आह नैष दोषः,—'वचनात्' संसर्गः, न वाचनिके क्रियमाणे दोषः। उच्यते,—

सू० तथेतरस्मिन् ॥२२॥ (आ०नि०)॥

भा० 'इतरस्मिन्' अपि पक्षे वाचनिकोऽसंस्कृतेषु होमः, एवमुभयत्र वाचनिकत्वाद्दोषाभावे सति नैमित्तिकत्वादिकार आश्रीयते न समुच्चयः॥

सू० उत्सर्गेऽपि परिग्रहः कर्म्मणः कृतत्वात् ॥२३॥ (पू०२यु०नि०)॥

भा० अथ यदुक्तं,—'तस्य च देवतार्थत्वाद्'-इति। तत्र ब्रूमः,—'उत्सर्गेऽपि' नित्यस्याग्नेर्देवतापरिग्रहो न विरुद्धः, 'कर्म्मणः कृतत्वाद्'—अन्वाधानेन देवताः परिगृह्यन्ते, नाग्निना, एवं श्रूयते,—'स:

पूर्वेद्युरग्निं गृह्णाति स श्वोभूते देवता अभियजते' इति। तच्च कृतम्। अग्नेर्ग्रहणं, तेन परिगृहीता देवता अन्यत्तरे वचनाद् यक्ष्यन्ते। तस्मादविरोधः॥ (१२।४।७अ०)॥

---

वैकारिकाग्नेराहवनीयत्वाभावाधिकरणम्॥

सू० स आहवनीयः स्यादाहुतिसंयोगात्॥२४॥ (पू०)।

भा० यश्चासौ वैकारिकोऽग्निः 'स आहवनीयः स्यात्'। कुतः?। 'आहुतिसंयोगात्'। एत्य हूयते यस्मिन्, स आहवनीयः; हूयते चास्मिन्निति एतस्मादयमप्याहवनीयः॥

सू० अन्यो वोद्धृत्याहरणात्॥२५॥ (सि०)॥

भा० 'अन्यो वा' आहवनीयः स्यात्, नायमाहवनीयः। कस्मात्?। 'उद्धृत्याहरणात्'। लौकिकोऽयमुद्धृत्याह्रियते,—'भ्राष्ट्रादाहरेत्, प्रादाव्यादाहरेद्'-इति। आहवनीयशब्दः संस्कारनिमित्तः, संस्कारेषु तत्सद्भावात्, अभावाच्च प्राक् तेभ्यः। यच्च 'आहुतिसंयोगात्'—इति; सिद्धे आहवनीयत्वे आहुतयो विधीयन्ते,-'यदाहवनीये जुहोति' इति। सिद्धेन तेन आसां विधानात्, न तत्कृतं तद्भवति; तस्मान्नाहवनीयः। प्रयोजनम् आहवनीयधर्म्माभावः॥ (१२।४।८अ०)॥

---

वैकारिकाग्नेराधानिकसंस्काराभावाधिकरणम्॥

सू० तस्मिन् संस्कारकर्म्म शिष्टत्वात्॥२६॥ (पू०)॥

सू० वचनादसंस्कृतेषु कर्म्म स्यात् ॥१९॥ (पू०यु०नि०)॥

भा० यच्चेदमुक्तम्,—'असति चासंस्कृतेषु कर्म्म स्याद्'-इति, तत्र ब्रूमः,—'वचनादसंस्कृतेषु कर्म्म स्याद्'-इति, किमिव वचनं न कुर्य्यात्, नास्ति वचनस्य अतिभारः; यथा, 'पदे जुहोति' इति।

सू० संसर्गे चापि दोषः स्यात् ॥२०॥ (यु०)॥

भा० अपि च, यदि समुच्चयः स्यात्, प्राद्धाव्येन सह संसर्गः स्याद् वैहारिकस्य; तत्र तु दोषः श्रूयते, 'अग्नये शुचयेऽष्टाकपालं निर्वपेद् यस्याग्निः प्राद्धाव्येन सह संसृज्येत अशुचितर एष योऽग्निः प्राद्धाव्यः'॥

सू० वचनादिति चेत् ॥२१॥ (आ०)॥

भा० आह नैष दोषः,—'वचनात्' संसर्गः, न वाचनिके क्रियमाणे दोषः। उच्यते,—

सू० तथेतरस्मिन् ॥२२॥ (आ०नि०)॥

भा० 'इतरस्मिन्' अपि पक्षे वाचनिकोऽसंस्कृतेषु होमः, एवमुभयत्र वाचनिकत्वाद्दोषाभावे सति नैमित्तिकत्वादिकार आश्रीयते न समुच्चयः॥

सू० उत्सर्गेऽपि परिग्रहः कर्म्मणः कृतत्वात् ॥२३॥ (पू०२यु०नि०)॥

भा० अथ यदुक्तं,—'तस्य च देवतार्थत्वाद्'-इति। तत्र ब्रूमः,— 'उत्सर्गेऽपि' नित्यस्याग्नेर्देवतापरिग्रहो न विरुद्धः, 'कर्म्मणः कृतत्वाद्'— अन्वाधानेन देवताः परिगृह्यन्ते, नाग्निना, एवं श्रूयते,—'यः

पूर्वेद्युरग्निं गृह्णाति स श्वोभूते देवता अभियजते' इति। तच्च कृतम्, अग्नेर्ग्रहणं, तेन परिगृहीता देवता अन्यस्मिन्नन्तरे वचनाद् यक्ष्यन्ते। तस्मादविरोधः॥ (१२।४।७अ०)॥

---

वैकारिकाग्नेराहवनीयत्वाभावाधिकरणम्॥

सू० स आहवनीयः स्यादाहुतिसंयोगात्॥२४॥ (पू०)।

भा० यश्चासौ वैकारिकोऽग्निः 'स आहवनीयः स्यात्'। कुतः?। 'आहुतिसंयोगात्'। एत्य हूयते यस्मिन्, स आहवनीयः; हूयते चास्मिन्निति एतस्मादयमप्याहवनीयः॥

सू० अन्यो वोद्धृत्याहरणात्॥२५॥ (सि०)॥

भा० 'अन्यो वा' आहवनीयः स्यात्, नायमाहवनीयः। कस्मात्?। 'उद्धृत्याहरणात्'। लौकिकोऽयमुद्धृत्याह्रियते,—'भ्राष्ट्रादाहरेत्, प्रादाव्यादाहरेद्'-इति। आहवनीयशब्दः संस्कारनिमित्तः, संस्कारेषु तत्सद्भावात्, अभावाच्च प्राक् तेभ्यः। यच्च 'आहुतिसंयोगात्'—इति; सिद्धे आहवनीयत्वे आहुतयो विधीयन्ते,-'यदाहवनीये जुहोति' इति। सिद्धेन तेन आसां विधानात्, न तत्कृतं तद्भवति; तस्मादनाहवनीयः। प्रयोजनम् आहवनीयधर्माभावः॥ (१२।४।८अ०)॥

---

वैकारिकाग्नेराधानिकसंस्काराभावाधिकरणम्॥

सू० तस्मिन् संस्कारकर्म्म शिष्टत्वात्॥२६॥ (पू०)॥

भा॰ 'तस्मिन्' वैकारिकेऽग्नौ आधानिकाः संस्काराः कर्त्तव्याः, 'शिष्टत्वात्',—सर्वकर्म्मार्था हि ते, आधानस्य सर्वशेषत्वात्, यदि न क्रियेरन् तत्कर्म्म, तेनाङ्गेन हीनमफलं स्यात् ॥

**सू॰ स्थानाद्वा* परिलुप्येरन् ॥ २७ ॥ (सि॰) ॥**

भा॰ 'लुप्येरन् वा' आधानिकाः संस्काराः। कस्मात्?। 'स्थानात्', तस्य संस्कृतस्याग्नेः स्थानेऽयमसंस्कृतः श्रुतः, स वैशेषिकत्वात्तस्य निवर्त्तकः। स चेन्निवृत्तः, किमर्थं संस्काराः करिष्यन्ते। संस्कृतः स्याद् -इत्येवमर्थं ते क्रियेरन्, असंस्कृतेन च अर्थः। तस्माल्लुप्येरन् ॥ (१२·४।९अ॰) ॥

---

नित्यस्योखस्याग्नेरधारणाधिकरणम् ॥

**सू॰ नित्यधारणे विकल्पो न ह्यकस्मात् प्रतिषेधः स्यात् ॥ २८ ॥ (पू॰) ॥**

भा॰ तस्मिन्नेव उख्ये चिन्ता,—किमयं नित्यं धार्य्यो न वा, अथ वा नैव धार्य्यो भवति?। तत्रोच्यते,—'नित्यधारणे विकल्पः',-धार्य्यो वा, न वा। कुतः?। 'न हि अकस्मात् प्रतिषेधः स्यात्', धारणप्रतिषेधस्तस्य भवति, 'न प्रतिसमिन्धीत यत् प्रतिसमिन्धीत भ्रातृव्यमस्मै जनयति' इति श्रुतिः। धारणप्रसक्ते च सति प्रतिषेधोऽर्थवान् भवति, यथा, न गन्तव्यं न भोक्तव्यमिति सति गमनप्रसक्ते भोजनप्रसक्ते च भवति। न च, श्रुतिमन्तरेण प्रसक्त उपपद्यते इति

* 'स्थानात्तु' इति क्वचित् पाठः। 'स्थानाद्वा लुप्येरन्'-इति भाष्यानुसारेण पाठो भवितुं युक्तः।

नित्यधारणस्य विधायिका श्रुतिरनुमीयते, तथा प्राप्तिः, प्रतिषेधेन निवृत्तिः; तस्माद्विकल्पः ॥

सू॰ नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥२९॥(सि॰)॥

भा॰ यदि कदाचित् प्रत्यक्षया श्रुत्या प्रसक्तो न स्यात्, ततोऽन्या अनुमीयेत, अस्ति तु नित्यधरणस्य प्रसञ्जिका गतश्रियः श्रुतिः, 'नित्यधृत आहवनीयो गतश्रियः' इति, आहवनीयस्यानापन्नत्वाद् उख्यस्यापि नित्यधारणं प्रसक्तं, तत्प्रतिषेधार्थेयं श्रुतिः; तस्मान्न श्रुत्यन्तरस्यानुमानं भवति। अतो नित्यधारणस्याविधानात् कार्य्याभावाच्चाधारणमेव स्यात् ॥ (१२।४।१०अ॰) ॥

---

समाहीनयोः शुक्रस्पर्शादीनामेकयजमानकर्तृकताधिकरणम् ॥

सू॰ परार्थान्येको यजमानगणे ॥ ३० ॥

भा॰ सत्राहीनयोर्यजमानानां गणे यानि परार्थानि कर्माणि, यथा, 'शुक्रं यजमानोऽन्वारभेत', 'यजमानसंमिता औदुम्बरी भवति' इति। तानि 'एको' यजमानः कुर्य्यात् न सर्व्वे। कस्य हेतोः?। परार्थत्वादेव, न तत्र कर्मणा यजमानस्य कश्चिदुपकारः क्रियते; यदि क्रियेत, ततः सर्व्वे उपकाराय सर्वे कुर्य्युः। यजमानेन तु तत् कर्म क्रियते, तदेकेनैव कृतमिति द्वितीयादीनां प्रवृत्तौ हेतुर्नास्ति; तस्मादेकः कुर्य्यात् ॥(१२।४।११अ॰) ॥

---

अहीने शुक्रस्पर्शादौ यस्य-कस्यचिद् यजमानस्य कर्तृताधिकरणम् ॥

सू॰ अनियमोऽविशेषात् ॥ ३१ ॥

भा० तत्रैकस्य 'अनियमः',—यः-कश्चिदेकः कुर्य्यात्। कुतः?। 'अविशेषात्'। नात्र शब्दकृतो वार्थकृतो वा विशेषो दृश्यते; तस्माद् 'अनियमः'। अहीने मुख्यस्याभावादेवमवस्थितम् ॥ (१२।४।१२अ०)॥

---

सत्रे प्राकृतधर्मेषु गृहपतेरेव कर्तृत्वाधिकरणम् ॥

सू० मुख्यो वाऽविप्रतिषेधात् ॥ ३२ ॥

भा० सत्रे तु 'मुख्यः' कुर्य्याद्गृहपतिः। कुतः?। 'अविप्रतिषेधात्',-तस्य कुर्वतः अविप्रतिषेधः, न हि तेन आर्त्विजीनाः पदार्थाः कर्त्तव्याः, ऋत्विजान्तु स्वपदार्थसन्निपाते विप्रतिषेधः स्यात्। एवं सति गृहपतेरर्थवत्त्वं, क्रत्वर्थानि याजमानानि करिष्यति—इति ॥ (१२।४।१३अ०)॥

---

सत्रेऽञ्जनादिसंस्काराणां सर्व्वगामित्वाधिकरणम् ॥

सू० सत्रे गृहपतिरसंयोगाद्धौत्रवत् ॥ ३३ ॥ (पू०) ॥

भा० अथ यानि याजमानानि संस्कारार्थानि कर्माणि, यथा, 'अङ्क्ते* वासः परिधत्ते' इति, तान्यपि सत्रे किं गृहपतिनैव कर्त्तव्यानि, उत, सर्व्वैः?—इति। उच्यते, गृहपतिना कर्त्तव्यानि। कुतः?। 'असंयोगाद्', एवं गृहपतिः—इति समाख्याया अर्थेनासंयोगो न भविष्यति, अर्थवत्ता भविष्यतीत्यर्थः। कथं कृत्वा?। उच्यते, इहानेन गृहशब्देन कर्म्म उच्यते, न शाला, शालायामभिधीयमानायाम्,

---

* 'अभ्यङ्क्ते' इति सा० सो० पु० पाठः। अत्र सर्व्वेष्वेव पुस्तके 'वासः परिधत्ते' इत्यादिपाठः पतितः उद्धृतश्चेति, मन्ये एकमेव एषां प्रतिलिपिकरणाय चादर्शपुस्तकमासीदिति।

अविशेषः स्यात्, सर्वे हि ते शालायाः पतयः। 'ननु च कर्मणोऽपि ते सर्वे एव पतयः'। सत्यमेवं, समाख्यानात् प्रकर्षावगतिर्विज्ञायते, यथा, देवदत्तो मथुरायां ब्राह्मण इति, प्रकर्षश्च कर्मभूयस्त्वाद्वा स्यात्, फलभूयस्त्वाद्वा; तत्र कर्मभूयस्त्वं नोपपद्यते, यत इतरेषां बहुतरं कर्म, फलभूयस्त्वन्तु युज्यते, यजमानसंस्काराणां तस्याधिक्यात्। तस्माद् गृहपतिसमाख्यायाः अर्थवत्त्वात् पुरुषार्थानां 'गृहपतिः' कर्त्तेति। 'हौत्रवत्',—यथा, हौत्रमिति समाख्याया अर्थवत्त्वाद्धोता हौत्रस्य कर्त्ता भवति, एवमिहापि॥

सू० आम्नायवचनाच्च॥३४॥ (हे०)॥

भा० आम्नायिकं वचनं गृहपतेः फलभूयस्त्वे भवति,-'यो वै सत्रे बहूनां यजमानानां गृहपतिः, स सत्रस्य प्रत्येता स हि भूयिष्ठामृद्धिमृध्नोति'-इति, तच्चैतस्मादेव कारणात् स्यात्॥

सू० सर्वे वा तदर्थत्वात्॥३५॥ (सि०)॥

भा० 'सर्वे वा' यजमानाः पुरुषार्थानि कुर्य्युः, न गृहपतिरेव। कुतः?। 'तदर्थत्वात्', सर्वार्थमेव हि कर्म अविशेषेण हि श्रुतं,—'द्वादशाहमृद्धिकामा उपेयुः'—इति, यत्त्वेषां संस्कारैर्न युज्यते, तस्य गुणहीनम् अफलं कर्म भवेदिति तत्राविशेषश्रुतिर्बाध्येत॥

सू० गृहपतिरिति च समाख्या सामान्यात्॥३६॥
(पू०१यु०नि०)॥

भा० यथा गृहपतिः स्वयं कर्म न करोति, अन्ये तस्य कर्मकरा

भवन्ति, एवमस्यापीत्यनेन सामान्येन स्वामित्वप्रकर्षः, न फलप्रकर्षः, फलप्रकर्षाभावात् ॥

'ननु स्वार्थलोभेन यजमानाः क्रत्वर्थं परिहापयेयुः'। अथोच्यते ;—

सू० विप्रतिषेधे परम् ॥ ३७ ॥ (आ०नि०) ॥

भा० यत्र क्रत्वर्थेन पुरुषार्थस्याविप्रतिषेधः, तत्र स्वार्थं करिष्यन्ति, विप्रतिषेधे तु परकीयं क्रत्वर्थं। किङ्कारणम्? । क्रत्वर्थे हि अक्रियमाणे क्रतुरेव न सम्पद्यते, पुरुषार्थे तु हीने पुरुषो विगुणः, अङ्गगुणविरोधे च तादर्थ्यादिति क्रत्वर्थो बलवान्। तस्मात् कर्त्तव्यः ॥

सू० हौत्रे परार्थत्वात् ॥ ३८ ॥ (पू०हू०नि०) ॥

भा० यत्तु,—हौत्रवदिति, हौत्रे परार्थः पुरुषः, न कर्म पुरुषार्थं, तदेकेन केनचित् कर्त्तव्यं, न सर्वैः, तत्र समाख्या नियामिका स्यात्, इह पुनर्गृहपतिरितिसमाख्या निवृत्तिं न शक्नोति कर्त्तुम्, यतोऽन्यथापि युज्यते, अयुज्यमानापि कामम् अनर्थिका स्यात्, नैव निवर्त्तयितुं शक्नुयात्। निवर्त्तकस्य वचनस्याभावात् ॥

सू० वचनं परम् ॥ ३९ ॥ (पू०हे०नि०) ॥

भा० यच्च दर्शनमुपदिष्टं, 'स सर्वस्य प्रत्येता' इति, न तद्दर्शनं, किन्तर्हि?—वचनं तत्, फलभूयस्त्वस्याप्राप्तेः, प्राप्तिपूर्वकं हि दर्शनं भवति ॥ (१२।४।१४ अ०*) ॥

---

* अत्र "याजमानार्त्विज्ययोः किं बलवत् पूर्वमुत्तरम्?"। इत्यादिना चाधिकम् एकमधिकरणं माधवेनाकीर्णि।

ब्राह्मणस्यैवार्त्विज्येऽधिकाराधिकरणम् ॥

सू॰ प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ४१ ॥ (पू॰) ॥

भा॰ आर्त्विज्यं 'सर्ववर्णानां' ब्राह्मण-राजन्य-वैश्यानां 'स्यात्' । कुतः? । 'प्रभुत्वात्',—प्रभवन्ति सर्वे, शक्नुवन्ति कर्त्तुं ; सर्वेऽध्ययनवन्तो विद्वांसश्च, न हि अविद्वान् विहितोऽस्ति, अपापाकरणञ्च सर्वेषां कर्म्म, प्रदर्शनार्थं ब्राह्मणग्रहणमित्युक्तम् ॥

सू॰ स्मृतेर्वा स्यात् ब्राह्मणानाम् ॥ ४२ ॥ (सि॰) ॥

भा॰ 'ब्राह्मणानाम्' एव आर्त्विज्यं स्यात्, न इतरयोर्वर्णयोः । कुतः? । 'स्मृतेः', एवं शिष्टाः स्मरन्ति,—'याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपायाः' इति, स्मृतिश्च प्रमाणमित्युक्तम्,—"अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्" (१ । ३ । ७सू॰)—इति । तस्मात् ब्राह्मणा एव याजयेयुः ॥

सू॰ फलचमसविधानाच्चेतरेषाम् ॥ ४३ ॥ (१यु॰) ॥

भा॰ 'इतरेषां' राजन्यवैश्यानां फलचमसो विधीयते,—'स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिभिः* आहृत्य ताः सम्पिष्य दधनि उन्मृज्य तमस्मै भक्षं प्रकल्पयेत्, न सोमम्' इति, यथा, यदि क्षीरस्यति तस्मै दीयते, तच्च यदि

* स्तिभिरिति सर्वत्र पाठः । अत एव मन्ये,—अस्मदधिगतानां सर्व्वेषाम् पुस्तकानामेकमेव आदर्शपुस्तकमासीदिति ।

वा क्षीराभावो विज्ञायते, यदि वा भोक्तुरक्षीरभोजित्वम्; इहापि सोमं विभक्षयिष्यन्ति फलानि हीयन्ते, तथापि सोमाभावो यदि वा भोक्तुरसोमपत्वं विज्ञायते; तत्र सोमस्तावत् सन्निहितः, तस्मान्न सोमाभावः, भोक्तुस्तु असोमपत्वं विज्ञायते। न च, असोमपाभ्यां शक्यते आर्त्विज्यं कर्त्तुं, नियमात् सोमभक्षस्य; तस्मान्न राजन्यवैश्ययोः आर्त्विज्यम्॥

सू० साम्नाय्येऽप्येवं प्रतिषेधोऽसोमपीथहेतुत्वात्॥ ४४॥ (२यु०)॥

भा० अपि च साम्नाय्ये भक्षं राजन्यवैश्ययोः प्रतिषेधन् असोम-पीथत्वं हेतुमाह,—'न राजन्यो वैश्यो वा साम्नाय्यं पिबेत् असोमपीथो हि एषः' इत्येवं ब्रुवन् सोमपीथाभावं राजन्यवैश्यानां दर्शयति॥

सू० चतुर्द्धाकरणे च निर्देशात्॥ ४५॥ (३यु०)॥

भा० दर्शपूर्णमासयोः पुरोडाशस्य चतुर्द्धाकरणे ब्राह्मणा एव निर्दिश्यन्ते, 'ब्राह्मणानामिदं हविः, सौम्यानां सोमपानां, नेह अब्राह्मणस्यास्ति'-इति, शेषभक्षणार्थं चतुर्द्धाकरणमित्युक्तं, शेषभक्षाश्च ऋत्विजां, यदि च राजन्यवैश्ययोरप्यार्त्विज्यमस्ति, न ब्राह्मणानामेवेदं हविः स्यात्, राजन्यवैश्ययोरपि पक्षे स्यात्, तत्रेदमवधारणम् अनर्थकं भवेत्॥

सू० अन्वाहार्य्ये च दर्शनात्॥ ४६॥ (४यु०)॥

भा० दार्शपौर्णमासिकायाश्च अन्वाहार्य्यदक्षिणायां ब्राह्मणा एव

हृप्यन्ति, 'त एते वै देवा अहुतादो यत् ब्राह्मणा तद्याहरति तानेव तेन प्रीणाति' इति । दक्षिणा च ऋत्विग्भ्यो दीयते, तस्मात् ब्राह्मणानामार्त्विज्यं। यस्मादित्यं स्मृतिः, तान्येतानि दर्शनानि उपोद्वलयन्ति, तस्मादार्त्विज्यं ब्राह्मणानामेव स्यात्, न इतरयोर्वर्णयो-रिति ॥ (३।४।१५) ॥

इति भट्टश्रीशबरस्वामिनः कृतौ मीमांसाभाष्ये द्वादशाध्यायस्य चतुर्थः पादः ।

समाप्तश्चायमध्यायः ॥

समाप्तञ्च भाष्यम् ॥

अथैव शिवम् ॥



# मीमांसादर्शनस्य

## उत्तरार्द्धषट्कस्य

### अधिकरणसूची।

अ

---

## आ

## इ



---

## उ

ऊ



ऋ



ए

## ख

### ग



---

### च



---

### ज

त

## द

| अधिकरणम् | पृष्ठ | पङ्क्ती |
|---|---|---|
|  |

---

### ध

| | | |
|---|---|---|
|  |

---

### न

| | | |
|---|---|---|
|  |

---

## प

## य



---

## र



---

## व

श

त

## द

---

### ध



---

### न

---

प

## फ



## ब

## य



---

## र



---

## व

---

श



---

## ष



---

## स

इत्यधिकरणसूची ।

# मीमांसादर्शनस्य

## उत्तरार्द्धषट्कस्य

### सूत्रसूची ।

#### अ

---

## आ

---

ऊ

## ए

